पद्मासनायैपद्मिन्यैवैष्णव्यैचनमोनमः ॥ ५३ ॥ सर्वसम्पत्स्वरूपायैसर्वदात्र्यैनमोनमः ॥ सुखदायैमोक्षदायैसिद्धिदायैनमोनमः ॥
॥ ५४ ॥ हरिभक्तिप्रदात्र्यैचहर्षदात्र्यैनमोनमः ॥ कृष्णवक्षस्थितायैचकृष्णेशायैनमोनमः ॥५५॥ कृष्णशोभास्वरूपायैरत्नाढ्यायैनमो
नमः ॥ सम्पत्त्यधिष्ठातृदेव्यैमहादेव्यैनमोनमः ॥ ५६ ॥ सस्याधिष्ठातृदेव्यैचसस्यलक्ष्म्यैनमोनमः ॥ नमोबुद्धिस्वरूपायैबुद्धिदायै
नमोनमः ॥ ५७ ॥ वैकुण्ठेचमहालक्ष्मीर्लक्ष्मीःक्षीरोदसागरे ॥ स्वर्गलक्ष्मीरिन्द्रगेहेराजलक्ष्मीर्नृपालये ॥ ५८ ॥ गृहलक्ष्मीश्चगृहिणां
गेहेचगृहदेवता ॥ सुरभिस्सागवांमातादक्षिणायज्ञकामिनी ॥ ५९ ॥ अदितिर्देवमातात्वंकमलाकमलालये ॥ स्वाहात्वंचहविर्दा
नेकव्यदानेस्वधास्मृता ॥ ६० ॥ त्वंहिविष्णुस्वरूपाचसर्वाधारावसुन्धरा ॥ शुद्धसत्त्वस्वरूपात्वंनारायणपरायणा ॥ ६१ ॥
क्रोधहिंसावर्जिताचवरदाचशुभानना ॥ परमार्थप्रदात्वंचहरिदास्यप्रदापरा ॥ ६२ ॥ ययाविनाजगत्सर्वंभस्मीभूतमसारकम् ॥
जीवन्मृतंचविश्वंचशवतुल्यंययाविना ॥ ६३ ॥ सर्वेषांचपरात्वंहिसर्वबान्धवरूपिणी ॥ ययाविनानसंभाष्योबान्धवैर्बान्धवः
सदा ॥ ६४ ॥ त्वयाहीनोबन्धुहीनस्त्वयायुक्तःसबांधवः ॥ धर्मार्थकाममोक्षाणांत्वंचकारणरूपिणी ॥ ६५ ॥ स्तनन्धयानांत्वं
माताशिशूनांशैशवेयथा ॥ तथात्वंसर्वदामातासर्वेषांसर्वविश्वतः ॥ ६६ ॥ त्यक्तस्तनोमातृहीनःसचेज्जीवतिदैवतः ॥ त्वयाहीनोजनः
कोऽपिनजीवत्येवनिश्चितम् ॥ ६७ ॥ सुप्रसन्नस्वरूपात्वंमेप्रसन्नाभवाम्बिके ॥ वैरिग्रहस्तद्विषयंदेहिमह्यंसनातनि ॥ ६८ ॥
वयंयावत्त्वयाहीनाबन्धुहीनाश्चभिक्षुकाः ॥ सर्वसंपद्विहीनाश्चतावदेवहरिप्रिये ॥ ६९ ॥ राज्यंदेहिश्रियंदेहिबलंदेहिसुरेश्वरि ॥
कीर्तिंदेहिधनंदेहिपुत्रान्मह्यंचदेहिवै ॥ ७० ॥ कामंदेहिमतिंदेहिभोगान्देहिहरिप्रिये ॥ ज्ञानंदेहिचधर्मंश्चसर्वसौभाग्यमीप्सितम् ॥
॥ ७१ ॥ सर्वाधिकारमेवंवैप्रभावश्चप्रतापकम् ॥ जयंपराक्रमंयुद्धेपरमैश्वर्य्यमेवच ॥ ७२ ॥ इत्युक्त्वातुमहेन्द्रश्चसर्वैःसुरगणैःसह ॥
ननामसाश्रुनेत्रोयंमूर्ध्नाचैवपुनःपुनः ॥ ७३ ॥ ब्रह्माचशङ्करश्चैवशेषोधर्मश्चकेशवः ॥ सर्वेचक्रुःपरीहारंसुरार्थेचपुनःपुनः ॥ ७४ ॥ देवेभ्य

१ चन्द्रइतिपाठः । २ बुद्धिस्वरूपायैबुद्धिदायैइतिपाठः ।

श्चवरंदत्त्वापुष्पमालांमनोहराम् ॥ केशवायददौलक्ष्मीःसन्तुष्टासुरसंसदि ॥ ७५ ॥ ययुर्देवाश्चसन्तुष्टाःस्वंस्वंस्थानञ्चनारद ॥ ७६ ॥
देवीययौहरेःक्रोडंहृष्टाक्षीरोदशायिनः ॥ ययतुस्तौस्वस्वगृहंब्रह्मेशानौचनारद ॥ दत्त्वाशुभाशिषंतौचदेवेभ्यःप्रीतिपूर्वकम् ॥ ७७ ॥
इदंस्तोत्रंमहापुण्यंत्रिसन्ध्यंयःपठेन्नरः ॥ कुबेरतुल्यःसभवेद्राजराजेश्वरोमहान् ॥ ७८ ॥ सिद्धस्तोत्रंयदिपठेत्सोऽपिकल्पतरुर्नरः ॥
पञ्चलक्षजपेनैवस्तोत्रसिद्धिर्भवेन्नृणाम् ॥ ७९ ॥ सिद्धिःस्तोत्रंयदिपठेन्मासमेकञ्चसंयतः ॥ महासुखीचराजेन्द्रोभविष्यतिनसंशयः ॥
॥ ८० ॥ ॥ नारदउवाच ॥ ॥ पुष्पंदुर्वाससादत्तमस्तिवैयस्यमस्तके ॥ तस्यसर्वापुरःपूजेत्युक्तंपूर्वंत्वयाप्रभो ॥ ८१ ॥ तदेवस्था
पितंपुष्पंगजेन्द्रस्यैवमस्तके ॥ यतोजन्मगणेशस्यसचमत्तोवनंगतः ॥ ८२ ॥ मूर्ध्निच्छिन्नेगणपतेःशनेर्दृष्ट्यापुरामुने ॥ तत्स्कन्धेयोज
यामासहस्तिमस्तंहरिःस्वयम् ॥ ८३ ॥ अधुनोक्तंदेवपद्मंसंपूज्यचपुरन्दरः ॥ पूजयामासलक्ष्मींचक्षीरोदेचसुरैःसह ॥ ८४ ॥ अहोपु
राणवक्तॄणांदुर्बोधंवचनंनृणाम् ॥ सुव्यक्तमस्यसिद्धान्तंवदवेदविदांवर ॥ ८५ ॥ ॥ श्रीनारायणउवाच ॥ ॥ यदाशशापशक्रञ्च
दुर्वासामुनिपुङ्गवः ॥ तदानास्त्येवतज्जन्मपूजाकालेबभूवसः ॥ ८६ ॥ सुचिरंदुःखितादेवावभ्रमुर्ब्रह्मशापतः ॥ पश्चात्प्रापुश्चतांलक्ष्मींवरे
णचहरेर्मुने ॥ ८७ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेलक्ष्म्युपाख्यानेलक्ष्मीपूजाविधानंनामैकोन
चत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ छ ॥ श्रीलक्ष्म्युपाख्यानंसमाप्तम् ॥ ॥ नारदउवाच ॥ ॥ नारायणमहाभागसमश्चैवत्वयाप्रभो ॥
रूपेणचगुणैश्चैवयशसातेजसात्विषा ॥ १ ॥ त्वमेवज्ञानिनांश्रेष्ठःसिद्धानांयोगिनांतथा ॥ तपस्विनांमुनीनांचपरोवेदविदांतथा ॥
महालक्ष्म्याउपाख्यानंविज्ञातंमहदद्भुतम् ॥ २ ॥ अन्यत्किञ्चिदुपाख्यानंनिगूढंवदसाम्प्रतम् ॥ अतीवगोपनीयंयदुपयुक्तञ्चस
र्वतः ॥ अप्रकाश्यंपुराणेषुवेदोक्तंधर्मसंयुतम् ॥ ३ ॥ ॥ श्रीनारायणउवाच ॥ ॥ नानाप्रकारमाख्यानमप्रकाश्यंपुराणतः ॥
श्रुतंकतिविधंगूढमास्तेब्रह्मन्सुदुर्लभम् ॥ ४ ॥ तेषुयत्सारभूतञ्चश्रोतुंकिंवात्वमिच्छसि ॥ तन्मेब्रूहिमहाभागपश्चाद्वक्ष्यामितत्पुनः ॥
॥ ५ ॥ ॥ नारदउवाच ॥ ॥ स्वाहादेवहविर्दानेप्रशस्तासर्वकर्मसु ॥ पितृदानेस्वधाशस्तादक्षिणासर्वतोवरा ॥ ६ ॥ एतासांचरि

तंजन्मफलंप्राधान्यमेवच ॥ श्रोतुमिच्छामितेवक्राद्वेदवेदविदांवर ॥ ७ ॥ ॥ सौतिरुवाच ॥ ॥ नारदस्यवचःश्रुत्वाप्रहस्यमुनि
पुङ्गवः ॥ कथांकथितुमारेभेपुराणोक्तांपुरातनीम् ॥ ८ ॥ ॥ श्रीनारायणउवाच ॥ ॥ सृष्टेःप्रथमतोदेवाश्चाहारार्थंययुःपुरा ॥ ब्रह्मलो
केब्रह्मसभामगम्यांसुमनोहराम् ॥ ९ ॥ गत्वानिवेदनंचक्रुर्मुनेत्वाहारहेतुकम् ॥ ब्रह्माश्रुत्वाप्रतिज्ञायसिषेवेश्रीहरेःपदम् ॥१०॥ यज्ञरूपो
हिभगवान्कलयाचबभूवसः ॥ यज्ञेयद्यद्धविर्दानंदत्तंतेभ्यश्चवेधसा ॥११॥ हविर्ददतिविप्राश्चभक्त्याचक्षत्रियादयः ॥ सुरानैवप्राप्नुवन्ति
तद्दानंमुनिपुङ्गव ॥ १२ ॥ देवाविषण्णास्तेसर्वेतत्सभांचपुनर्ययुः ॥ गत्वानिवेदनंचक्रुराहाराभावहेतुकम् ॥ १३ ॥ ब्रह्माश्रुत्वातुमन
साश्रीकृष्णंशरणंययौ ॥ प्रकृतिंपूजयामासध्यायन्नेवतदाज्ञया ॥ १४ ॥ प्रकृतिःकलयाचैवसर्वशक्तिस्वरूपिणी ॥ बभूवदाहिकाशक्तिर
ग्नेःस्वाहास्वरूपिणी ॥ १५ ॥ ग्रीष्ममध्याह्नमार्त्तण्डप्रभान्यक्कारकारिणी ॥ अतीवसुन्दरीरामारमणीयामनोहरा ॥ १६ ॥ ईषद्धास्यप्र
प्रसन्नास्याभक्तानुग्रहकारिणी ॥ उवाचेतिविधेरग्रेपद्मयोनेवरंवृणु ॥ १७ ॥ विधिस्तद्वचनंश्रुत्वासम्भ्रमात्समुवाचताम् ॥ १८ ॥
॥ ॥ ब्रह्मोवाच ॥ ॥ त्वमग्नेर्दाहिकाशक्तिर्भवपत्नीचसुन्दरी ॥ दग्धुंनशक्तस्स्वहुतंहुताशश्चत्वयाविना ॥ १९ ॥ त्वन्नामोच्चार्य्यमन्त्रा
न्तेयद्दास्यतिहविर्नरः ॥ सुरेभ्यस्तत्प्राप्नुवंतिसुराःसानन्दपूर्वकम् ॥ २० ॥ अग्नेःसम्पत्स्वरूपाचश्रीरूपाचगृहेश्वरी ॥ देवानांपूजिता
शश्वन्नरादीनांभवाम्बिके ॥ २१ ॥ ब्रह्मणश्चवचःश्रुत्वासाविषण्णाबभूवह ॥ तमुवाचस्वयंदेवीस्वाभिप्रायंस्वयम्भुवम् ॥ २२ ॥ स्वाहो
वाच ॥ ॥ अहंकृष्णंभजिष्यामितपसासुचिरेणच ॥ ब्रह्मंस्तदन्यद्यत्किंचित्स्वप्नवद्भ्रमएवच ॥ २३ ॥ विधाताजगतांत्वंचशम्भुर्मृ
त्युञ्जयःप्रभुः ॥ बिभर्तिशेषोविश्वञ्चधर्म्मःसाक्षीचदेहिनाम् ॥ २४ ॥ सर्वाद्यपूज्योदेवानांगणेषुचगणेश्वरः ॥ प्रकृतिःसर्वसूःसर्वैपूजिता
यत्प्रसादतः ॥ २५ ॥ ऋषयोमुनयश्चैवपूजितायंनिषेव्यच ॥ तत्पादपद्मंब्रह्मैक्यभावाद्वैचिन्तयाम्यहम् ॥ २६ ॥ पद्मास्यापाद्ममित्यु
क्त्वापद्मलाभानुसारतः ॥ जगामतपसेपाद्मेपद्मादीशस्यपद्मजा ॥ २७ ॥ तपस्तेपेलक्षवर्षमेकपादेनपाद्मजा ॥ तदाददर्शश्रीकृष्णंनिर्गुणंप्र
कृतेःपरम् ॥ २८ ॥ अतीवकमनीयंचरूपंदृष्ट्वाचसुन्दरी ॥ मूर्च्छांसम्प्रापकामेनकामेशस्यचकामुकी ॥ २९ ॥ विज्ञायतदभिप्रा

यंसर्वज्ञस्तामुवाचसः ॥ स्वक्रोडेचसमुत्थाप्यक्षीणाङ्गींतपसाचिरम् ॥ ३० ॥ ॥ श्रीकृष्णउवाच ॥ ॥ वाराहेचत्वमंशेनममप
त्नीभविष्यसि ॥ नाम्नानाग्नजितीकन्याकान्तेनग्नजितस्यच ॥ ३१ ॥ अधुनाग्नेर्दाहिकात्वंभवपत्नीचभाविनि ॥ मन्त्राङ्गरूपापूताच
मत्प्रसादाद्भविष्यसि ॥ ३२ ॥ वह्निस्त्वांभक्तिभावेनसम्पूज्यचगृहेश्वरीम् ॥ रमिष्यतेत्वयासार्द्धंरामयारमणीयया ॥ ३३ ॥ इत्युक्त्वा
न्तर्दधेदेवोदेवीमाश्वास्यनारद ॥ तत्राजगामसन्त्रस्तोवह्निर्ब्रह्मनिदेशतः ॥ ३४ ॥ ध्यानैश्चसामवेदोक्तैर्ध्यात्वातांजगदम्बिकाम् ॥
सम्पूज्यपरितुष्टावपाणिंजग्राहमन्त्रतः ॥ ३५ ॥ तदादिव्यंवर्षशतंसरेमेरामयासह ॥ अतीवनिर्जनेरम्येसम्भोगसुखदेसदा ॥ ३६ ॥
बभूवगर्भतस्याश्चहुताशस्यैवतेजसा ॥ तद्दधारचसादेवीदिव्यंद्वादशवत्सरम् ॥ ३७ ॥ ततःसुषावपुत्रांश्चरमणीयान्मनोहरान् ॥ दक्षि
णाग्निंगार्हपत्याहवनीयान्क्रमेणच ॥ ३८ ॥ ऋषयोमुनयश्चैवब्राह्मणाःक्षत्रियादयः ॥ स्वाहान्तंमन्त्रमुच्चार्य्यहविर्ददतिनित्यशः ॥ ३९ ॥
स्वाहायुक्तश्चमन्त्रंचयोगृह्णातिप्रशस्तकम् ॥ सर्वसिद्धिर्भवेत्तस्यब्रह्मन्ग्रहणमात्रतः ॥ ४० ॥ विषहीनोयथासर्पोवेदहीनोयथाद्विजः ॥
पतिसेवाविहीनास्त्रीविद्याहीनोयथानरः ॥ ४१ ॥ फलशाखाविहीनश्चयथावृक्षोहिनिंदितः ॥ स्वाहाहीनस्तथामन्त्रोनहुतंफलदायकः
॥ ४२ ॥ परितुष्टाद्विजाःसर्वेदेवाःसंप्रापुराहुतिम् ॥ स्वाहान्तेनैवमन्त्रेणसफलंसर्वकर्मच ॥ ४३ ॥ इत्येवंवर्णितंसर्वंस्वाहोपाख्यानमुत्त
मम् ॥ सुखदंमोक्षदंसारंकिंभूयःश्रोतुमिच्छसि ॥ ४४ ॥ ॥ नारदउवाच ॥ ॥ स्वाहापूजाविधानंचध्यानंस्तोत्रंमुनीश्वर ॥ संपूज्यवह्निस्तु
ष्टावयेनतांवदमेप्रभो ॥ ४५ ॥ नारायणउवाच ॥ ध्यानञ्चसामवेदोक्तंस्तोत्रंपूजाविधानकम् ॥ वदामिश्रूयतांब्रह्मन्सावधानंनिशा
मय ॥ ४६ ॥ सर्वयज्ञारम्भकालेशालग्रामेघटेऽथवा ॥ स्वाहांसंपूज्ययत्नेनयज्ञंकुर्य्यात्फलाप्तये ॥ ४७ ॥ स्वाहांमन्त्राङ्गभूतांचमन्त्र
सिद्धिस्वरूपिणीम् ॥ सिद्धांचसिद्धिदांनॄणांकर्मणांफलदांभजे ॥ ४८ ॥ इतिध्यात्वाचमूलेनदत्त्वापाद्यादिकंनरः ॥ सर्वसिद्धिंलभेत्स्तुत्वामू
लंस्तोत्रंमुनेशृणु ॥ ४९ ॥ ॐह्रींश्रींवह्निजायायैदेव्यैस्वाहेत्यनेनच ॥ यःपूजयेच्चतांदेवींसर्वेष्टंलभतेध्रुवम् ॥ ५० ॥ वह्निरुवाच ॥ स्वाहा

१ पूतांचेतिपाठः ।

द्याप्रकृतेरंशामन्त्रतन्त्राङ्गरूपिणी ॥ मन्त्राणांफलदात्रीचधात्रीचजगतांसती ॥ ५१ ॥ सिद्धिस्वरूपासिद्धाचसिद्धिदासर्वदानृणाम् ॥
हुताशदाहिकाशक्तिस्तत्प्राणाधिकरूपिणी ॥ ५२ ॥ संसारसाररूपाचघोरसंसारतारिणी ॥ देवजीवनरूपाचदेवपोषणकारिणी ॥ ५३ ॥
षोडशैतानिनामानियःपठेद्भक्तिसंयुतः ॥ सर्वसिद्धिर्भवेत्तस्यचेहलोकेपरत्रच ॥ ५४ ॥ नाङ्गहीनोभवेत्तस्यसर्वकर्मसुशोभनम् ॥
अपुत्रोलभतेपुत्रमभार्य्योलभतेप्रियाम् ॥ ५५ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेस्वाहोपाख्याने
स्वाहाजन्मादिकथनंनामचत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ छ ॥ इति स्वाहोपाख्यानंसमाप्तम् ॥ ॥ नारायणउवाच ॥ ॥
शृणुनारदवक्ष्यामिस्वधोपाख्यानमुत्तमम् ॥ पितृणांवैतृप्तिकरंश्राद्धानांफलवर्द्धनम् ॥ १ ॥ सृष्टेरादौपितृगणान्ससर्जजगतांविधिः ॥
चतुरोवैमूर्त्तिमतस्त्रींश्चतेजस्स्वरूपिणः ॥ २ ॥ सप्तदृष्ट्वापितृगणान्सिद्धिरूपान्मनोहरान् ॥ आहारंससृजेतेषांश्राद्धतर्पणपूर्वकम् ॥ ३ ॥
स्नानंतर्पणपर्य्यन्तंश्राद्धान्तंदेवपूजनम् ॥ आह्निकंचत्रिसन्ध्यान्तंविप्राणांचश्रुतौश्रुतम् ॥ ४ ॥ नित्यंनकुर्य्याद्योविप्रस्त्रिसन्ध्यं
श्राद्धतर्पणम् ॥ बलिंवेदध्वनिंसोऽपिविषहीनोयथोरगः ॥ ५ ॥ हरिसेवाविहीनश्चश्रीहरेरनिवेद्यभुक् ॥ भस्मान्तंसूतकंतस्यनकर्मार्हः
सनारद ॥ ६ ॥ ब्रह्माश्राद्धादिकंसृष्ट्वाजगामपितृहेतवे ॥ नप्राप्नुवंतिपितरोददतिब्राह्मणादयः ॥ ७ ॥ सर्वेप्रजग्मुःक्षुधिताविषण्णाब्रह्म
णःसभाम् ॥ सर्वेनिवेदनञ्चक्रुस्तमेवजगतांविधिम् ॥ ८ ॥ ब्रह्माचमानसींकन्यांससृजेतांमनोहराम् ॥ रूपयौवनसम्पन्नांशरच्चन्द्रसम
प्रभाम् ॥ ९ ॥ विद्यावतींगुणवतींमतिरूपवतींसतीम् ॥ श्वेतचम्पकवर्णाभांरत्नभूषणभूषिताम् ॥ १० ॥ विशुद्धांप्रकृतेरंशांसस्मि
तांवरदांशुभाम् ॥ स्वधाभिधानांसुदतींलक्ष्मींलक्षणसंयुताम् ॥ ११ ॥ शतपद्मपदन्यस्तपादपद्मञ्चबिभ्रतीम् ॥ पत्नींपितृणांपद्मास्यां
पद्मजांपद्मलोचनाम् ॥ १२ ॥ पितृभ्यस्तांददौकन्यांतुष्टेभ्यस्तुष्टिरूपिणीम् ॥ ब्राह्मणानांचोपदेशञ्चक्रेवैगोपनीयकम् ॥ १३ ॥
स्वधान्तंमन्त्रमुच्चार्य्यपितृभ्योदेहिचेतिच ॥ क्रमेणतेनविप्राश्चपित्रेदानंददुःपुरा ॥ १४ ॥ स्वाहाशस्तादेवदानेपितृदानेस्वधावरा ॥
सर्वत्रदक्षिणाशस्ताहतोयज्ञस्त्वदक्षिणः ॥ १५ ॥ पितरोदेवताविप्रामुनयोमानवास्तथा ॥ पूजाञ्चक्रुःस्वधांशान्तांतुष्टावपरमा

दरम् ॥ १६ ॥ देवादयश्चसन्तुष्टाःपरिपूर्णमनोरथाः ॥ विप्रादयश्चपितरःस्वधादेवीवरेणच ॥ १७॥ इत्येवकथितंसर्वंस्वधोपाख्यानमुत्त
मम् ॥ सर्वेषांचैतुष्टिकरंकिंभूयःश्रोतुमिच्छसि ॥ १८ ॥ ॥ नारदउवाच ॥ ॥ स्वधापूजाविधानञ्चध्यानंस्तोत्रंमहामुने ॥ श्रोतुमि
च्छामियत्नेनवदवेदविदांवर ॥ १९ ॥ ॥ नारायणउवाच ॥ ॥ तद्ध्यानंस्तवनंब्रह्मन्वेदोक्तंसर्वसम्मतम् ॥ सर्वंजानासिवक्ष्येवै
ज्ञातुमिच्छसिवृद्धये ॥ २० ॥ शरत्कृष्णत्रयोदश्यांमघायांश्राद्धवासरे ॥ स्वधांसंपूज्ययत्नेनततःश्राद्धंसमाचरेत् ॥ २१ ॥ स्वधांना
भ्यर्च्ययोविप्रःश्राद्धंकुर्य्यादहंमतिः ॥ नभवेत्फलभाक्सत्यंश्राद्धतर्पणयोस्तथा ॥ २२ ॥ ब्रह्मणोमानसींकन्यांशश्वत्सुस्थिरयौवनाम् ॥
पूज्यांपितॄणांदेवानांश्राद्धानांफलदांभजे ॥ २३ ॥ इतिध्यात्वाघटेरम्येशालग्रामेथवाशुभे ॥ दद्यात्पाद्यादिकंतस्यैमूलेनेतिश्रुतौश्रुतम् ॥
॥ २४ ॥ ॐह्रींश्रींक्लींस्वधादेव्यैस्वाहेतिचमहामनुम् ॥ समुच्चार्य्यचसंपूज्यस्तुत्वातांप्रणमेद्द्विजः ॥ २५ ॥ स्तोत्रंशृणुमुनिश्रेष्ठब्रह्मपुत्र
विशारद ॥ सर्ववाञ्छाप्रदंनृणांब्रह्मणायत्कृतंपुरा ॥ २६ ॥ ॥ ब्रह्मोवाच ॥ ॥ स्वधोच्चारणमात्रेणतीर्थस्नायीभवेन्नरः ॥ मुच्यतेसर्वपापे
भ्योवाजपेयफलंलभेत् ॥ २७ ॥ स्वधास्वधास्वधेत्येवंयदिवारत्रयंस्मरेत् ॥ श्राद्धस्यफलमाप्नोतिकालतर्पणयोस्तथा ॥ २८ ॥ श्राद्ध
कालेस्वधास्तोत्रंयःशृणोतिसमाहितः ॥ लभेच्छ्राद्धशतानाञ्चपुण्यमेवनसंशयः ॥ २९ ॥ स्वधास्वधास्वधेत्येवंत्रिसन्ध्यंयःपठेन्नरः ॥
प्रियांविनीतांसलभेत्साध्वींपुत्रंगुणान्वितम् ॥ ३० ॥ पितॄणांप्राणतुल्यात्वंद्विजजीवनरूपिणी ॥ श्राद्धाधिष्ठातृदेवीचश्राद्धादीनांफल
प्रदा ॥ ३१ ॥ बहिर्मन्मनसोगच्छपितॄणांतुष्टिहेतवे ॥ संप्रीतयेद्विजातीनांगृहिणांवृद्धिहेतवे ॥ ३२ ॥ नित्यानित्यस्वरूपासिगुणरूपा
सिसुव्रते ॥ आविर्भावस्तिरोभावःसृष्टौचप्रलयेतव ॥३३॥ ॐस्वस्तिचनमःस्वाहास्वधात्वंदक्षिणातथा ॥ निरूपिताश्चतुर्वेदेषट्प्रशस्ता
श्चकर्मिणाम् ॥३४॥ पुरासीत्त्वंस्वधागोपीगोलोकेराधिकासखी ॥ धृतास्वोरसिकृष्णेनयतस्तेनस्वधास्मृता ॥ ३५ ॥ ध्वस्तात्वंराधि
काशापाद्गोलोकाद्विश्वमागता ॥ कृष्णाश्लिष्टातयादृष्टापुरावृन्दावनेवने ॥ ३६ ॥ कृष्णालिङ्गनपुण्येनभूतामेमानसीसुता ॥ अतृप्त
सुरतेतेनचतुर्णांस्वामिनांप्रिया ॥ ३७॥ स्वाहासासुन्दरीगोपीपुरासीद्राधिकासखी ॥ रतौस्वयंकृष्णमाहतेनस्वाहाप्रकीर्त्तिता ॥ ३८॥

कृष्णेनसार्द्धंसुचिरंवसन्तेरासमण्डले ॥ प्रमत्तासुरतेश्लिष्टादृष्टाराधयापुरा ॥ ३९ ॥ तस्याःशापेनसाध्वस्तागोलोकाद्विश्वमागता ॥
कृष्णालिङ्गनपुण्येनसमभूद्वह्निकामिनी ॥४०॥ पवित्ररूपापरमादेवाद्यैर्वन्दितानृभिः ॥ यन्नामोच्चारणेनैवनरोमुच्येतपातकात् ॥ ४१ ॥
यासुशीलाभिधागोपीपुरासीद्राधिकासखी ॥ उवासदक्षिणेक्रोडेकृष्णस्यचमहात्मनः ॥ ४२ ॥ प्रध्वस्तासाचतच्छापाद्गोलोकाद्वि
श्वमागता ॥ कृष्णालिङ्गनपुण्येनसाबभूवचदक्षिणा ॥ ४३ ॥ साप्रेयसीरतौदक्षाप्रशस्तासर्वकर्मसु ॥ उवासदक्षिणेभर्तुर्दक्षिणातेनकी
र्त्तिता ॥ ४४ ॥ गोप्योबभूवुस्तिस्रोवैस्वधास्वाहाचदक्षिणा ॥ कर्मिणांकर्मपूर्णार्थंपुराचैवेश्वरेच्छया ॥ ४५ ॥ इत्येवमुक्त्वासब्रह्माब्रह्म
लोकेचसंसदि ॥ तस्थौचसहसासद्यःस्वधासाविर्बभूवह ॥ ४६ ॥ तदापितृभ्यःप्रददौतामेवकमलाननाम् ॥ तांसंप्राप्ययुयुस्तेच
पितरश्चप्रहर्षिताः ॥ ४७ ॥ स्वधास्तोत्रमिदंपुण्यंयःशृणोतिसमाहितः ॥ सस्नातःसर्वतीर्थेषुवेदपाठफलंलभेत् ॥ ४८ ॥ इति
श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेस्वधोपाख्यानेस्वधोत्पत्तितत्पूजादिकंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ॥ इतिस्वधोपाख्यानंसमाप्तम् ॥ ॥ छ ॥ ॥ नारायणउवाच ॥ ॥ उक्तंस्वाहास्वधाख्यानंप्रशस्तंमधुरंपरम् ॥ वक्ष्या
मिदक्षिणाख्यानंसावधानंनिशामय ॥ १ ॥ गोपीसुशीलागोलोकेपुरासीत्प्रेयसीहरेः ॥ राधाप्रधानासध्रीचीधन्यामान्यामनो
हरा ॥ अतीवसुन्दरीरामासुभगासुदतीसती ॥ २ ॥ विद्यावतीगुणवतीसतीरूपवतीतथा ॥ कलावतीकोमलाङ्गीकान्ताकमल
लोचना ॥ ३ ॥ सुश्रोणीसुस्तनीश्यामान्यग्रोधपरिमण्डला ॥ ईषद्धास्यप्रसन्नास्यारत्नालङ्कारभूषिता ॥ ४ ॥ श्वेतचम्पकवर्णा
भाबिम्बोष्ठीमृगलोचना ॥ कामशास्त्रसुनिष्णाताकामिनीकलहंसगा ॥ ५ ॥ भावानुरक्ताभावज्ञाकृष्णस्यप्रियभामिनी ॥
रसज्ञारसिकारासेरासेशस्यरसोत्सुका ॥ ६ ॥ उवासदक्षिणेक्रोडेराधायाःपुरतःपुरा ॥ संबभूवानम्रमुखोभयेनमधुसूदनः ॥ ७ ॥
दृष्ट्वाराधाञ्चपुरतोगोपीनांप्रवरांवराम् ॥ मानिनींरक्तवदनांरक्तपङ्कजलोचनाम् ॥ ८ ॥ कोपेनकम्पिताङ्गीञ्चकोपनांकोपदर्श
नाम् ॥ कोपेननिष्ठुरंवक्तुमुद्यतांस्फुरिताधराम् ॥ ९ ॥ आगच्छन्तींचवेगेनविज्ञायतदनन्तरम् ॥ विरोधभीतोभगवानन्तर्द्धानं

जगामसः ॥ १० ॥ पलायन्तश्चतंशान्तंसत्त्वाधारंसुविग्रहम् ॥ विलोक्यकम्पितागोपीसुशीलान्तर्दधौभिया ॥ ११ ॥ विलोक्यसङ्कटं तत्रगोपीनांलक्षकोटयः ॥ बद्धाञ्जलिपुटाभीताभक्तिनम्रात्मकन्धराः ॥१२॥ रक्षरक्षेत्युक्तवत्योहेदेवीतिपुनःपुनः ॥ ययुर्भयेनशरणंतस्याश्चरणपङ्कजे ॥ १३ ॥ त्रिलक्षकोट्योगोपाःसुदामादयएवच ॥ युयुर्भयेनशरणंतत्पादाब्जेचनारद ॥ १४ ॥ पलायन्तञ्चकान्तंवैविज्ञायपरमेश्वरी ॥ पलायन्तींसहचरींसुशीलांचशशापसा ॥ १५ ॥ अद्यप्रभृतिगोलोकंसाचेदायातिगोपिका ॥ सद्योगमनमात्रेणभस्मसाच्चभविष्यति ॥ १६ ॥ इत्येवमुक्त्वातत्रैवदेवदेवीश्वरीरुषा ॥ रासेश्वरीरासमध्येरासेशंचाजुहावह ॥ १७ ॥ नालोक्यपुरतःकृष्णंराधाविरहकातरा ॥ युगकोटिसमंमेनेक्षणभेदेनसुव्रता ॥ १८ ॥ हेकृष्णहेप्राणनाथागच्छप्राणाधिकप्रिय ॥ प्राणाधिष्ठातृदेवेहप्राणायान्तित्वयाविना ॥ १९ ॥ स्त्रीगर्वःपतिसौभाग्याद्वर्द्धतेचदिनेदिने ॥ सुखीचेद्धिभवोयस्मात्तंभजेद्धर्मतःसदा ॥ २० ॥ पतिर्बन्धुःकुलस्त्रीणामधिदेवःसदागतिः ॥ परंसम्पत्स्वरूपश्चसुखरूपश्चमूर्त्तिमान् ॥ २१ ॥ धर्मदःसुखदःशश्वत्प्रीतिदःशांतिदःसदा ॥ सम्मानदोमानदश्चमान्योवैमानखण्डनः ॥ २२ ॥ सारात्सारतमः स्वामीबन्धूनांबन्धुवर्द्धनः ॥ नचभर्त्तुःसमोबन्धुःसर्वबन्धुषुदृश्यते ॥ २३ ॥ भरणादेवभर्त्तायंपालनात्पतिरुच्यते ॥ शरीरेशाच्चसस्वामीकामदःकान्तएवच ॥ २४ ॥ बन्धुश्चसुखबन्धाच्चप्रीतिदानात्प्रियःपरः ॥ ऐश्वर्यदानादीशश्चप्राणेशात्प्राणनाथकः ॥२५॥ रतिदानाच्चरमणःप्रियोनास्तिप्रियात्परः ॥ पुत्रस्तुस्वामिनःशुक्राज्जायतेतेनसप्रियः ॥२६॥ शतपुत्रात्परःस्वामीकुलजानांप्रियःसदा ॥ असत्कुलप्रसूतायाकान्तंविज्ञातुमक्षमा ॥ २७ ॥ स्नानञ्चसर्वतीर्थेषुसर्वयज्ञेषुदक्षिणाम् ॥ प्रादक्षिण्यंपृथिव्याश्चसर्वाणिचतपांसिवै ॥ २८ ॥ सर्वाण्येवव्रतादीनिमहादानानियानिच ॥ उपोषणानिपुण्यानियान्यन्यानिचविश्वतः ॥ २९ ॥ गुरुसेवाविप्रसेवादेवसेवादिकञ्चयत् ॥ स्वामिनःपादसेवायाःकलांनार्हन्तिषोडशीम् ॥ ३० ॥ गुरुविप्रेष्टदेवेषुसर्वेभ्यश्चपतिर्गुरुः ॥ विद्यादातायथापुंसांकुलजानांतथाप्रियः ॥३१॥ गोपीत्रिलक्षकोटीनांगोपानांचतथैवच ॥ ब्रह्माण्डानामसंख्यानांतत्रस्थानांतथैवच ॥ ३२ ॥ रमादिगोपकान्तानामीश्वरीयत्प्रसादतः ॥ अहंनजानेतंकान्तंस्त्रीस्वभावोदुरत्ययः ॥ ३३ ॥ इत्युक्त्वाराधिकाकृष्णंतत्र

दध्यौसुभक्तितः ॥ आरात्संप्रापतंतेनविजहारचतत्रवै ॥ २४ ॥ अथसादक्षिणादेवीध्वस्तागोलोकतोमुने ॥ सुचिरञ्चतपस्तप्त्वा
विवेशकमलातनौ ॥ २५ ॥ अथदेवादयः सर्वेयज्ञंकृत्वासुदुष्करम् ॥ नलभन्तेफलंतेषांविषण्णाःप्रययुर्विधिम् ॥ २६ ॥ विधि
र्निवेदनंश्रुत्वादेवादीनांजगत्पतिः ॥ दध्यौसुचिन्तितोभक्त्यातत्प्रत्यादेशमापसः ॥ २७ ॥ नारायणश्चभगवान्महालक्ष्मीश्चदेहतः ॥
मर्त्यलक्ष्मींविनिष्कृष्यब्रह्मणेदक्षिणांददौ ॥ २८ ॥ ब्रह्माददौतांयज्ञायपूर्णार्थंकर्मणांसताम् ॥ यज्ञःसंपूज्यविधिवत्तांतुष्टावरमां
मुदा ॥ २९ ॥ तप्तकांचनवर्णाभांचन्द्रकोटिसमप्रभाम् ॥ अतीवकमनीयांचसुन्दरींसुमनोहराम् ॥ ४० ॥ कमलास्यांको
मलाङ्गींकमलायतलोचनाम् ॥ कमलासनसंपूज्यांकमलाङ्गसमुद्भवाम् ॥ ४१ ॥ वह्निशुद्धांशुकाधानांबिम्बोष्ठींसुदतींसतीम् ॥
बिभ्रतींकबरीभारंमालतीमाल्यभूषितम् ॥ ४२ ॥ ईषद्धास्यप्रसन्नास्यांरत्नभूषणभूषिताम् ॥ ॥ सुवेषाढ्यांचसुस्नातांमुनिमानस
मोहिनीम् ॥ ४३ ॥ कस्तूरीबिन्दुभिःसार्द्धंचन्दनैश्चसुगन्धिभिः ॥ सिन्दूरबिन्दुनात्यन्तंमस्तकाधस्थलोज्ज्वलाम् ॥ ४४ ॥
सुप्रशस्तनितम्बाढ्यांबृहच्छ्रोणिपयोधराम् ॥ कामदेवाधाररूपांकामबाणप्रपीडिताम् ॥ ४५ ॥ तांदृष्ट्वारमणीयाञ्चयज्ञोमूर्च्छा
मवापह ॥ पत्नींतामेवजग्राहविधिबोधितमार्गतः ॥ ४६ ॥ दिव्यंवर्षशतञ्चैवतांगृहीत्वाथनिर्जने ॥ यज्ञोरेमेमुदायुक्तोरामयारमया
सह ॥ ४७ ॥ गर्भंदधारसादेवीदिव्यंद्वादशवत्सरम् ॥ ततःसुषावपुत्रञ्चफलंवैसर्वकर्मणाम् ॥ ४८ ॥ कर्मणांफलदाताचदक्षि
णाकर्मणांसताम् ॥ परिपूर्णेकर्मणिचतत्पुत्रःफलदायकः ॥ ४९ ॥ यज्ञोदक्षिणयासार्द्धंपुत्रेणचफलेनच ॥ कर्मणांफलदाताचेत्येवंवे
दविदोविदुः ॥ ५० ॥ यज्ञश्चदक्षिणांप्राप्यपुत्रंचफलदायकम् ॥ फलंददौचसर्वेभ्यःकर्मठेभ्योयदामुने ॥ ५१ ॥ तदादेवाद
यस्तुष्टाःपरिपूर्णमनोरथाः ॥ स्वस्थानंप्रययुःसर्वेधर्मवक्त्रादिदंश्रुतम् ॥ ५२ ॥ कृत्वाकर्मचकर्तातुतूर्णंदद्याच्चदक्षिणाम् ॥
तत्क्षणंफलमाप्नोतिवेदैरुक्तमिदंमुने ॥ ५३ ॥ कर्ताकर्मणिपूर्णेपितत्क्षणाद्यदिदक्षिणाम् ॥ नदद्याद्ब्राह्मणेभ्यश्चदैवेनाज्ञानतोऽथवा
॥ ५४ ॥ मुहूर्त्तेसमतीतेचद्विगुणासाभवेद्ध्रुवम् ॥ ५५ ॥ एकरात्रेव्यतीतेतुभवेद्रसगुणाचसा ॥ त्रिरात्रेवैदशगुणंसप्ताहेद्विगुणा

ततः ॥ ५६ ॥ मासेलक्षगुणाप्रोक्ताब्राह्मणानांचवर्द्धते ॥ संवत्सरेव्यतीतेतुसात्रिकोटिगुणाभवेत् ॥ ५७ ॥ कर्म्मतद्यजमाना
नांसर्वंवैनिष्फलंभवेत् ॥ स्वब्रह्मस्वापहारीनकर्मार्होऽशुचिर्नरः ॥ ५८ ॥ दरिद्रोव्याधियुक्तश्चतेनपापेनपातकी ॥ तद्गृहाद्या
तिलक्ष्मीश्चशापंदत्त्वासुदारुणम् ॥ ५९ ॥ पितरोनैवगृह्णन्तितद्दत्तंश्राद्धतर्पणम् ॥ एवंसुराश्चतत्पूजांतद्दत्तांपावकाहुतिम् ॥
॥ ६० ॥ दातादददातिनोदानंगृहीतातन्नयाचते ॥ उभौतौनरकंयातच्छिन्नरज्जुर्यथाघटः ॥ ६१ ॥ नार्पयेद्यजमानश्चेद्याचितारंचदक्षि
णाम् ॥ भवेद्ब्रह्मस्वापहारीकुम्भीपाकंव्रजेद्ध्रुवम् ॥ ६२ ॥ वर्षलक्षंवसेत्तत्रयमदूतेनताडितः ॥ ततोभवेत्सचण्डालोव्याधियुक्तोदरि
द्रकः ॥ ६३ ॥ पातयेत्पुरुषान्सप्तपूर्वान्वैपूर्वजन्मनः ॥ इत्येवंकथितंविप्रकिंभूयः श्रोतुमिच्छसि ॥ ६४ ॥ ॥ नारदउवाच ॥ ॥
यत्कर्मदक्षिणाहीनंकोभुङ्क्तेतत्फलंमुने ॥ पूजाविधिंदक्षिणायाःपुरायज्ञकृतंवद ॥ ६५ ॥ ॥ नारायणउवाच ॥ ॥ कर्मणोऽदक्षिण
स्यैवकुतएवफलंमुने ॥ सदक्षिणेकर्मणिचफलमेवप्रवर्त्तते ॥६६॥ यायाकर्मणिसामग्रीबलिर्भुङ्क्तेचतांमुने ॥ बलयेतत्प्रदत्तश्चवामनेनपुरा
मुने ॥ ६७ ॥ अश्रोत्रियंश्राद्धवस्तुचाश्राद्धंदानमेवच ॥ वृषलीपतिविप्राणांपूजाद्रव्यादिकंचयत् ॥ ६८ ॥ ऋत्विजानकृतंयज्ञमशु
चेःपूजनंचयत् ॥ गुरावभक्तस्यकर्मबलिर्भुङ्क्तेनसंशयः ॥ ६९ ॥ दक्षिणायाश्चयद्ध्यानंस्तोत्रंपूजाविधिक्रमम् ॥ तत्सर्वंकाण्वशाखोक्तं
प्रवक्ष्यामिनिशामय ॥ ७० ॥ पुरासंप्राप्यतांयज्ञःकर्मदक्षांचदक्षिणाम् ॥ मुमोहतस्याःरूपेणतुष्टुवेकामकातरः ॥ ७१ ॥ ॥ यज्ञउ
वाच ॥ ॥ पुरागोलोकगोपीत्वंगोपीनांप्रवरापरा ॥ राधासमातत्सखीचश्रीकृष्णप्रेयसीप्रिये ॥ ७२ ॥ कार्त्तिकीपूर्णिमायान्तुरासे
राधामहोत्सवे ॥ आविर्भूतादक्षिणांशात्कृष्णस्यातोहिदक्षिणा ॥ ७३ ॥ पुरात्वश्चसुशीलाख्याशीलेनसुशुभेनच ॥ कृष्णदक्षांशवासा
च्चराधाशापाच्चदक्षिणा ॥ ७४ ॥ गोलोकात्त्वंपरिध्वस्ताममभाग्यादुपस्थिता ॥ कृपांकुरुत्वमेवाद्यस्वामिनंकुरुमांप्रिये ॥ ७५ ॥ कर्तॄ
णांकर्मणांदेवीत्वमेवफलदासदा ॥ त्वयाविनाचसर्वेषांसर्वंकर्मचनिष्फलम् ॥ ७६ ॥ फलशाखाविहीनश्चयथावृक्षोमहीतले ॥ त्वया

१ यच्छ्रद्धमितिपाठः ।

विनातथाकर्मकर्तृणांचनशोभते ॥ ७७ ॥ ब्रह्मविष्णुमहेशाश्चदिक्पालादयएवच ॥ कर्मणश्चफलंदातुंनशक्ताश्चत्वयाविना ॥ ७८ ॥
कर्मरूपीस्वयंब्रह्माफलरूपीमहेश्वरः ॥ यज्ञरूपीविष्णुरहंत्वमेषांसाररूपिणी ॥ ७९ ॥ फलदातापरंब्रह्मनिर्गुणःप्रकृतेःपरः ॥ स्वयंकृष्ण
श्चभगवान्नचशक्तस्त्वयाविना ॥ ८० ॥ त्वमेवशक्तिःकान्तेमेशश्वज्जन्मनिजन्मनि ॥ सर्वकर्मणिशक्तोऽहंत्वयासहवरानने ॥ ८१ ॥ इत्यु
क्त्वातत्पुरस्तस्थौयज्ञाधिष्ठातृदेवकः ॥ तुष्टाबभूवसादेवीभेजेतंकमलाकला ॥ ८२ ॥ इदंचदक्षिणास्तोत्रंयज्ञकालेचयःपठेत् ॥ फलंच
सर्वयज्ञानांलभतेनात्रसंशयः ॥ ८३ ॥ राजसूयेवाजपेयेगोमेधेनरमेधके ॥ अश्वमेधेलाङ्गलेचविष्णुयज्ञेयशस्करे ॥ ८४ ॥ धनदेभूमि
देफलदेपुत्रेष्टौगजमेधके ॥ लोहयज्ञेस्वर्णयज्ञेपटलव्याधिखण्डने ॥ ८५ ॥ शिवयज्ञेरुद्रयज्ञेशक्रयज्ञेचबन्धके ॥ इष्टौवरुणयागेचकन्दु
केवैरिमर्दने ॥ ८६ ॥ शुचियागेधर्मयागेरेचनेपापमोचने ॥ बन्धनेकर्मयागेचमणियागेसुभद्रके ॥८७॥ एतेषांचसमारम्भेइदंस्तोत्रंचयः
पठेत् ॥ निर्विघ्नेनचतत्कर्मसाङ्गंभवतिनिश्चितम् ॥ ८८ ॥ इदंस्तोत्रञ्चकथितंध्यानंपूजाविधानकम् ॥ शालग्रामेघटेवापिदक्षिणांपूजये
त्सुधीः ॥ ८९ ॥ लक्ष्मीदक्षांशसम्भूतांदक्षिणांकमलाकलाम् ॥ सर्वकर्मसुदक्षांचफलदांसर्वकर्मणाम् ॥ ९० ॥ विष्णोःशक्तिस्वरूपांच
सुशीलांशुभदांभजे ॥ ध्यात्वाऽनेनैववरदांसुधीर्मूलेनपूजयेत् ॥ ९१ ॥ दत्त्वापाद्यादिकंदेव्यैवेदोक्तेनचनारद ॥ ॐश्रींक्लींह्रींदक्षिणायै
स्वाहेतिचविचक्षणः ॥ ९२ ॥ पूजयेद्विधिवद्भक्त्यादक्षिणांसर्वपूजिताम् ॥ इत्येवंकथितंसर्वंदक्षिणाख्यानमुत्तमम् ॥ ९३ ॥ सुखदंप्री
तिदंचैवफलदंसर्वकर्मणाम ॥४॥ इदञ्चदक्षिणाख्यानंयःशृणोतिसमाहितः ॥ ९४ ॥ अङ्गहीनञ्चतत्कर्मनभवेद्भारतेभुवि ॥ अपुत्रोलभते
पुत्रंनिश्चितञ्चगुणान्वितम् ॥ ९५ ॥ भार्य्याहीनोलभेद्भार्य्यांसुशीलांसुन्दरींपराम् ॥ वरारोहांपुत्रवतींविनीतांप्रियवादिनीम् ॥ ९६ ॥
पतिव्रतांसुव्रतांचशुद्धांचकुलजांवराम् ॥ विद्याहीनोलभेद्विद्यांधनहीनोधनंलभेत् ॥ ९७ ॥ भूमिहीनोलभेद्भूमिंप्रजाहीनोलभेत्प्रजाः ॥
सङ्कटेबन्धुविच्छेदेविपत्तौबन्धनेतथा ॥ ९८ ॥ मासमेकमिदंश्रुत्वामुच्यतेनात्रसंशयः ॥९९॥ इति श्रीब्रह्मवैवर्त्तमहापुराणेद्वितीयेप्रकृ

१ पाठ्यानि पाठः । २ शत्रुयज्ञेइतिपाठः । ३ पूजाविधिशृण्वितिपाठः ।

तिखण्डेनारदनारायणसंवादेदक्षिणोपाख्यानेदक्षिणोत्पत्तितत्पूजादिविधाननामद्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥ ॥ छ ॥ नारद उवाच ॥ अनेकासाञ्चदेवीनांश्रुतमाख्यानमुत्तमम् ॥ अन्यासांचरितंब्रह्मन्वदवेदविदांवर ॥ १ ॥ ॥ नारायणउवाच ॥ ॥ सर्वासांचरितंविप्रवेदेष्वस्तिपृथक्पृथक्॥ पूर्वोक्तानांचदेवीनांत्वंकासांश्रोतुमिच्छसि॥ १२॥नारदउवाच॥षष्ठीमङ्गलचण्डीचमनसाप्रकृतेःकला॥ उत्पत्तिमासांचरितंश्रोतुमिच्छामितत्त्वतः ॥ ३ ॥ ॥ नारायणउवाच ॥ ॥ षष्ठांशाप्रकृतेर्याचसाचषष्ठीप्रकीर्त्तिता ॥ बालकाधिष्ठातृदेवीविष्णुमायाचबालदा ॥ ४ ॥ मातृकासुचविख्यातादेवसेनाभिधाचसा ॥ प्राणाधिकप्रियासाध्वीस्कन्दभार्य्याचसुव्रता ॥ ॥ ५ ॥ आयुःप्रदाचबालानांधात्रीरक्षणकारिणी ॥ सततंशिशुपार्श्वस्थायोगाद्वैसिद्धियोगिनी ॥ ६ ॥ तस्याःपूजाविधौब्रह्मन्नितिहासविधिंशृणु ॥ यच्छ्रुतंधर्ममुखतोसुखदंपुत्रदंपरम् ॥ ७ ॥ राजाप्रियव्रतश्चासीत्स्वायम्भुवमनोःसुतः ॥ योगीन्द्रोनोद्वहेद्भार्य्यांतपस्यासुरतःसदा ॥ ८ ॥ ब्रह्माज्ञयाचयत्नेनकृतदारोबभूवसः ॥ सुचिरंकृतदारश्चनलेभेतनयंमुने ॥ ९ ॥ पुत्रेष्टियज्ञंतंचापिकारयामासकश्यपः ॥ मालिन्यैतस्यकान्तायैमुनिर्यज्ञचरुंददौ ॥ १० ॥ भुक्त्वाचरुञ्चतस्याश्चसद्योगर्भोबभूवह ॥ दधारतञ्चसादेवीदैवंद्वादशवत्सरम् ॥ ११ ॥ ततःसुषावसाब्रह्मन्कुमारंकनकप्रभम् ॥ सर्वावयवसम्पन्नंमृतमुत्तारलोचनम् ॥ १२ ॥ तंदृष्ट्वारुरुदुःसर्वानार्योविबान्धवस्त्रियः ॥ मूर्च्छामवापतन्मातापुत्रशोकेनसुव्रता ॥ १३ ॥ श्मशानञ्चययौराजागृहीत्वाबालकंमुने ॥ रुरोदतत्रकान्तारेपुत्रंकृत्वास्ववक्षसि ॥ १४ ॥ नोत्सृज्यबालकंराजाप्राणांस्त्यक्तुंसमुद्यतः ॥ ज्ञानयोगंविसस्मारपुत्रशोकात्सुदारुणात् ॥ १५ ॥ एतस्मिन्नन्तरेतत्रविमानंचददर्शह ॥ शुद्धस्फटिकसङ्काशंमणिराजविराजितम् ॥ १६ ॥ तेजसाज्वलितंशश्वच्छोभितंक्षौमवाससा ॥ नानाचित्रविचित्राढ्यंपुष्पमालाविराजितम् ॥ १७ ॥ ददर्शतत्रदेवीञ्चकमनीयांमनोहराम् ॥ श्वेतचम्पकवर्णाभांरम्यसुस्थिरयौवनाम् ॥ १८ ॥ ईषद्धास्यप्रसन्नास्यांरत्नभूषणभूषिताम् ॥ कृपामयींयोगसिद्धांभक्तानुग्रहकारिणीम् ॥ १९ ॥ दृष्ट्वातांपुरतोराजातुष्टावपरमादरात् ॥ चकारपूजनंतस्याविहायभुविबालकम् ॥ २० ॥ पप्रच्छराजातांदृष्ट्वाग्रीष्ममूर्य्यसमप्रभाम् ॥ तेजसाज्वलितांशा

न्तांकान्तांस्कन्दस्यनारद ॥ २१ ॥ ॥ प्रियव्रतउवाच ॥ ॥ कात्वंसुशोभनेकान्तेकस्यकान्तासिसुव्रते ॥ कस्यकन्यावरारोहे
धन्यामान्याचयोषिताम् ॥ २२ ॥ नृपेन्द्रस्यवचःश्रुत्वाजगन्मङ्गलदायिनी ॥ उवाचदेवसेनासादेवरक्षणकारिणी ॥ २३ ॥ देवानां
दैत्यभीतानांपुरासेनावभूवसा ॥ जयंददौचतेभ्यश्चदेवसेनाचतेनसा ॥ २४ ॥ देवसेनोवाच ॥ ब्रह्मणोमानसीकन्यादेवसेनाहमीश्व
री ॥ सृष्ट्वामांमनसोधातादद्दौस्कन्दायभूमिप ॥ २५ ॥ मातृकासुचविख्यातास्कन्दसेनाचसुव्रता ॥ विश्वेषष्ठीतिविख्यातापष्ठां
शाप्रकृतेर्यतः ॥ २६ ॥ पुत्रदाऽहमपुत्रायप्रियदात्रीप्रियायच ॥ धनदाचदरिद्रेभ्यःकर्तृभ्यःशुभकर्मदा ॥ २७ ॥ सुखंदुःखंभ
यंशोकंहर्षंमङ्गलमेवच ॥ सम्पत्तिश्चविपत्तिश्चसर्वंभवतिकर्मणा ॥ २८ ॥ कर्मणावहुपुत्रीचवंशहीनश्चकर्मणा ॥ कर्मणारूपवां
श्चैवरोगीशश्वत्स्वकर्मणा ॥ २९ ॥ कर्मणामृतपुत्रश्चकर्मणाचिरजीविनः ॥ कर्मणागुणवन्तश्चकर्मणाचाङ्गहीनकाः ॥ ३० ॥
तस्मात्कर्मपरंराजन्सर्वेभ्यश्चश्रुतौश्रुतम् ॥ कर्मरूपीचभगवांस्तद्द्वाराफलदोहरिः ॥ ३१ ॥ इत्येवमुक्त्वासादेवीगृहीत्वाबालकं
मुने ॥ महाज्ञानेनसहसाजीवयामासलीलया ॥ ३२ ॥ राजाददर्शतंबालंसस्मितंकनकप्रभम् ॥ देवसेनाचपश्यन्तंनृपमम्बरमे
वच ॥ ३३ ॥ गृहीत्वाबालकंदेवीगगनंगन्तुमुद्यता ॥ पुनस्तुष्टावतांराजाशुष्ककण्ठोष्ठतालुकः ॥ ३४ ॥ नृपस्तोत्रेणसादे
वीपरितुष्टाबभूवह ॥ उवाचतंनृपंब्रह्मन्वेदोक्तंकर्मनिर्मितम् ॥ ३५ ॥ ॥ देवसेनोवाच ॥ ॥ त्रिषुलोकेषुराजात्वंस्वायम्भुवम
नोःसुतः ॥ ममपूजाञ्चसर्वत्रकारयित्वास्वयंकुरु ॥ ३६ ॥ तदादास्यामिपुत्रन्तेकुलपद्मंमनोहरम् ॥ सुव्रतंनामविख्यातंगुणवन्तं
सुपण्डितम् ॥ ३७ ॥ जातिस्मरञ्चयोगीन्द्रंनारायणपरायणम् ॥ शतक्रतुकरंश्रेष्ठंक्षत्रियाणांचवन्दितम् ॥ ३८ ॥
मत्तमातङ्गलक्षाणांधृतवन्तंबलंशुभम् ॥ धन्विनंगुणिनंशुद्धंविदुषांप्रियमेवच ॥ ३९ ॥ योगिनंज्ञानिनञ्चैवसिद्धरूपंतप
स्विनम् ॥ यशस्विनञ्चलोकेषुदातारंसर्वसम्पदाम् ॥ ४० ॥ इत्येवमुक्त्वासादेवीतस्मैतद्बालकंददौ ॥ राजाचतंस्वीचकारत

१ कल्पात्मकमितिपाठः । २ धनिनांगुणिनामितिपाठः ।

त्पूजार्थंश्चसुव्रतः ॥ ४१ ॥ जगामदेवीस्वर्गंञ्चदत्त्वातस्मैशुभंवरम् ॥ आजगाममहाराजास्वगृहंहृष्टमानसः ॥ आगत्यकथया
मासवृत्तान्तंपुत्रहेतुकम् ॥ ४२ ॥ तुष्टाबभूवुःसन्तुष्टानरानार्य्यश्चनारद ॥ मङ्गलंकारयामाससर्वत्रसुतहेतुकम् ॥ देवींचपूजयामास
ब्राह्मणेभ्योधनंददौ ॥ ४३ ॥ राजाचप्रतिमासेषुशुक्लषष्ठ्यांमहोत्सवम् ॥ षष्ठ्यादेव्याश्चयत्नेनकारयामाससर्वतः ॥ ४४ ॥ बालानांसू
तिकागारेषष्ठाहेयत्नपूर्वकम् ॥ तत्पूजांकारयामासचैकविंशतिवासरे ॥ ४५ ॥ बालानांशुभकार्य्येचशुभान्नप्राशनेतथा ॥ सर्वत्रवर्द्ध
यामासस्वयमेवचकारह ॥ ४६ ॥ ध्यानंपूजाविधानंचस्तोत्रंमत्तोनिशामय ॥ यच्छ्रुतंधर्मवक्त्रेणकौथुमोक्तंचसुव्रत ॥ ४७ ॥ शाल
ग्रामेघटेवाथवटमूलेऽथवामुने ॥ भित्त्यांपुत्तलिकांकृत्वापूजयेद्वाविचक्षणः ॥ ४८ ॥ षष्ठांशांप्रकृतेःशुद्धांसुप्रतिष्ठांचसुव्रताम् ॥ सुपुत्र
दांचशुभदांदयारूपांजगत्प्रसूम् ॥ ४९ ॥ श्वेतचम्पकवर्णाभांरत्नभूषणभूषिताम् ॥ पवित्ररूपांपरमांदेवसेनांपरांभजे ॥ ५० ॥ इति
ध्यात्वास्वशिरसिपुष्पंदत्त्वाविचक्षणः ॥ पुनर्ध्यात्वाचमूलेनपूजयेत्सुव्रतांसतीम् ॥ ५१ ॥ पाद्यार्घ्याचमनीयैश्चगन्धधूपप्रदीपकैः ॥
नैवेद्यैर्विविधैश्चापिफलेनचशुभेनच ॥ ५२ ॥ मूलमोंह्रींषष्ठीदेव्यैस्वाहेतिविधिपूर्वकम् ॥ अष्टाक्षरंमहामन्त्रंयथाशक्तिजपेन्नरः ॥ ५३ ॥
ततःस्तुत्वाचनमतेभक्तियुक्तःसमाहितः ॥ स्तोत्रंचसामवेदोक्तंधनपुत्रफलप्रदम् ॥ ५४ ॥ अष्टाक्षरंमहामन्त्रंलक्षधायोजपेन्मुने ॥ सपुत्रं
लभतेनूनमित्याहकमलोद्भवः ॥ ५५ ॥ स्तोत्रंशृणुमुनिश्रेष्ठसर्वेषांचशुभावहम् ॥ वाञ्छाप्रदंचसर्वेषांगूढंवेदेचनारद ॥ ५६ ॥ ॥ प्रिय
व्रतउवाच ॥ ॥ नमोदेव्यैमहादेव्यैसिद्ध्यैशान्त्यैनमोनमः ॥ शुभायैदेवसेनायैषष्ठीदेव्यैनमोनमः ॥ ५७ ॥ वरदायैपुत्रदायैधनदायै
नमोनमः ॥ सुखदायैमोक्षदायैषष्ठीदेव्यैनमोनमः ॥ ५८ ॥ शक्तेःषष्ठांशरूपायैसिद्धायैचनमोनमः ॥ मायायैसिद्धयोगिन्यैषष्ठीदेव्यैनमो
नमः ॥ ५९ ॥ परायैपारदायैचषष्ठीदेव्यैनमोनमः ॥ सारायैसारदायैचपारायैसर्वकर्मणाम् ॥ ६० ॥ बालाधिष्ठातृदेव्यैचषष्ठीदेव्यैनमो
नमः ॥ कल्याणदायैकल्याण्यैफलदायैचकर्मणाम् ॥६१॥ प्रत्यक्षायैचभक्तानांषष्ठीदेव्यैनमोनमः ॥ पूज्यायैस्कन्दकान्तायैसर्वेषांसर्व
कर्मसु ॥ ६२ ॥ देवरक्षणकारिण्यैषष्ठीदेव्यैनमोनमः ॥ शुद्धसत्त्वस्वरूपायैवन्दितायैनृणांसदा ॥ ६३ ॥ हिंसाक्रोधैर्वर्जितायैषष्ठीदेव्यै

नमोनमः ॥ धनंदेहिप्रियांदेहिपुत्रंदेहिसुरेश्वरि ॥ ६४ ॥ धर्मंदेहियशोदेहिषष्ठीदेव्यैनमोनमः ॥ भूमिंदेहिप्रजांदेहिदेहिविद्यांसुपूजिते
॥ ६५ ॥ कल्याणंचजयंदेहिषष्ठीदेव्यैनमोनमः ॥ इतिदेवींचसंस्तूयलेभेपुत्रंप्रियव्रतः ॥ ६६ ॥ यशस्विनंचराजेन्द्रंषष्ठीदेवीप्रसादतः ॥
षष्ठीस्तोत्रमिदंब्रह्मन्यःशृणोतिचवत्सरम् ॥ ६७ ॥ अपुत्रोलभतेपुत्रंवरंसुचिरजीविनम् ॥ वर्षमेकंचयाभक्त्यासंयत्तेदंशृणोतिच ॥
॥ ६८ ॥ सर्वपापाद्विनिर्मुक्तामहावन्ध्याप्रसूयते ॥ वीरपुत्रंचगुणिनंविद्यावन्तंयशस्विनम् ॥ ६९ ॥ सुचिरायुष्मन्तमेवषष्ठीमातृप्रसा
दतः ॥ काकवन्ध्याचयानारीमृतापत्याचयाभवेत् ॥ ७० ॥ वर्षंश्रुत्वालभेत्पुत्रंषष्ठीदेवीप्रसादतः ॥ रोगयुक्तेचबालेचपितामाता
शृणोतिच ॥ ७१ ॥ मासंचमुच्यतेबालःषष्ठीदेवीप्रसादतः ॥ इति श्रीब्रह्म०म०द्वि०प्र०नारदनारायणसं०षष्ठ्युपाख्यानेषष्ठीदेव्युत्प
त्तितत्पूजास्तोत्रादिकथनंनामत्रिचत्वारिंशत्तमोध्यायः ॥ ४३ ॥ ॥ नारायणउवाच ॥ ॥ कथितंषष्ठ्युपाख्यानंब्रह्मपुत्रयथा
गमम् ॥ देवीमङ्गलचण्डीचतदाख्यानंनिशामय ॥ १ ॥ तस्याःपूजादिकंसर्वंधर्मवक्त्राच्चयच्छ्रुतम् ॥ श्रुतिसम्मतमेवेष्टंसर्वेषांविदुषा
मपि ॥ २ ॥ चण्डायावर्त्ततेचण्डीजाग्रतीशत्रुमण्डले ॥ मङ्गलेषुचयादक्षामङ्गलामैवचंडिका ॥ ३ ॥ दुर्गायांविद्यतेचण्डीमङ्गलोऽपि
महीसुते ॥ मङ्गलाभीष्टदेवीयासास्यान्मङ्गलचण्डिका ॥ ४ ॥ मङ्गलोमनुवंशश्चसप्तद्वीपावनीपतिः ॥ तस्यपूज्याभीष्टदेवीतेनमङ्गलचंडि
का ॥ ५ ॥ मूर्त्तिभेदेनसादुर्गामूलप्रकृतिरीश्वरी ॥ कृपारूपातिप्रत्यक्षायोषितामिष्टदेवता ॥ ६ ॥ प्रथमेपूजितासाचशङ्करेणपुरापरा ॥
त्रिपुरस्यवधेघोरेविष्णुनाप्रेरितेनच ॥ ७ ॥ ब्रह्मन्ब्रह्मोपदेशेनदुर्गप्रस्थेचसङ्कटे ॥ आकाशात्पतितेयानेरुपादैत्येनपातिते ॥ ८ ॥ ब्रह्मविष्णू
पदिष्टश्चदुर्गांतुष्टावशङ्करः ॥ साचमङ्गलचण्डीयमभवद्रूपभेदतः ॥ ९ ॥ उवाचपुरतःशम्भोर्भयंनास्तीतितेप्रभो ॥ भगवान्वृषरूपश्च
सर्वेशश्चबभूवह ॥ १० ॥ युद्धशक्तिस्वरूपाहंभविष्यामितदाज्ञया ॥ मयात्मनाचहरिणासहायेनवृषध्वज ॥ ११ ॥ जहिदैत्यञ्चदेवेश
सुराणांपदघातकम् ॥ इत्युक्त्वान्तर्हितादेवीशम्भोःशक्तिर्बभूवसा ॥ १२ ॥ विष्णुदत्तेनशस्त्रेणजघानतमुमापतिः ॥ मुनीन्द्रपतिते
दैत्येसर्वेदेवामहर्षयः ॥ १३ ॥ तुष्टुवुःशंकरंदेवाभक्तिनम्रात्मकन्धराः ॥ सद्यःशिरसिशम्भोश्चपुष्पवृष्टिर्बभूवह ॥ १४ ॥ ब्रह्माविष्णु

श्वसन्तुष्टोददौतस्मैशुभाशिषम् ॥ ब्रह्मविष्णूपदिष्टश्चसुस्नातःशङ्करःशुचिः ॥ १५ ॥ पूजयामासतांशक्तिंदेवींमङ्गलचंडिकाम् ॥ पाद्या
र्घ्याचमनीयैश्चबलिभिर्विविधैरपि ॥ १६ ॥ पुष्पचन्दननैवेद्यैर्भक्त्यानानाविधैर्मुने ॥ छागैर्मेषैश्चमहिषैर्गण्डैर्मायाविभिर्वरैः ॥ १७ ॥
वस्त्रालङ्कारमाल्यैश्चपायसैःपिष्टकैरपि ॥ मधुभिश्चसुधाभिश्चपक्वैर्नानाविधैःफलैः ॥ १८ ॥ सङ्गीतैर्नर्त्तनैर्वाद्यैरुत्सवैःकृष्णकीर्त्तनैः ॥
ध्यात्वामाध्यन्दिनोक्तेनध्यानेनविधिपूर्वकम् ॥ १९ ॥ ददौद्रव्याणिमूलेनमन्त्रेणैवचनारद ॥ ॐह्रींश्रींक्लींसर्वपूज्येदेविमङ्गलचंडिके ॥
ऐंक्रूंफट्स्वाहेत्येवंचाप्येकविंशाक्षरोमनुः ॥ २० ॥ पूज्यःकल्पतरुश्चैवभक्तानांसर्वकामदः ॥ दशलक्षजपेनैवमन्त्रसिद्धिर्भवेन्नृणाम् ॥२१॥
मन्त्रसिद्धिर्भवेद्यस्यसविष्णुःसर्वकामदः ॥ ध्यानञ्चश्रूयतांब्रह्मन्वेदोक्तंसर्वसम्मतम् ॥ २२ ॥ देवींषोडशवर्षीयांरम्यांसुस्थिरयौवनाम् ॥
सर्वरूपगुणाढ्याञ्चकोमलाङ्गींमनोहराम् ॥२३॥ श्वेतचम्पकवर्णाभांचन्द्रकोटिसमप्रभाम् ॥ वह्निशुद्धांशुकाधानांरत्नभूषणभूषिताम् ॥
॥ २४ ॥ बिभ्रतींकबरीभारंमल्लिकामाल्यभूषितम् ॥ बिम्बोष्ठींसुदतींशुद्धांशरत्पद्मनिभाननाम् ॥ २५ ॥ ईषद्धास्यप्रसन्नास्यांसुनीलो
त्पललोचनाम् ॥ जगद्धात्रींश्चदात्रींञ्चसर्वेभ्यःसर्वसम्पदाम् ॥ २६ ॥ संसारसागरेघोरेपीतरूपांवरांभजे ॥ २७ ॥ देव्याश्चध्यानमित्ये
वंस्तवनंश्रूयतांमुने ॥ प्रयतःसङ्कटग्रस्तोयेनतुष्टावशङ्करः ॥ २८ ॥ ॥ शङ्करउवाच ॥ ॥ रक्षरक्षजगन्मातर्देविमङ्गलचण्डिके ॥ संहर्त्री
विपदांराशेर्हर्षमङ्गलकारिके ॥२९॥ हर्षमङ्गलदक्षेचहर्षमङ्गलचण्डिके ॥ शुभेमङ्गलदक्षेचशुभमङ्गलचण्डिके ॥३०॥ मङ्गलेमङ्गलार्हेच
सर्वमङ्गलमङ्गले ॥ सतांमंगलदेदेविसर्वेषांमंगलालये ॥ ३१ ॥ पूज्यामंगलवारेचमंगलाभीष्टदैवते ॥ पूज्येमंगलभूपस्यमनुवंशस्यस
न्ततम् ॥ ३२ ॥ मंगलाधिष्ठातृदेविमंगलानाञ्चमंगले ॥ संसारमंगलाधारेमोक्षमंगलदायिनि ॥ ३३ ॥ सारेचमंगलाधारेपारेत्वंसर्वक
र्मणाम् ॥ प्रतिमंगलवारेचपूज्येत्वंमंगलप्रदे ॥ ३४ ॥ स्तोत्रेणानेनशम्भुश्चस्तुत्वामंगलचण्डिकाम् ॥ प्रतिमंगलवारेचपूजांकृत्वागतः
शिवः ॥ ३५ ॥ देव्याश्चमङ्गलस्तोत्रंयःशृणोतिसमाहितः ॥ तन्मङ्गलंभवेच्छश्वन्नभवेत्तदमङ्गलम् ॥ ३६ ॥ प्रथमेपूजितादेवीशम्भु
नासर्वमंगला ॥ द्वितीयेपूजितादेवीमंगलेनग्रहेणच ॥ ३७ ॥ तृतीयेपूजिताभद्रामंगलेननृपेणच ॥ चतुर्थेमंगलेवारेसुन्दरीभिश्चपू

जिता ॥ पञ्चमेमंगलाकांक्षैर्नरैर्मंगलचण्डिका ॥ ३८ ॥ पूजिताप्रतिविश्वेषुविश्वेशैःपूजितासदा ॥ ततःसर्वत्रसंपूज्यासाबभूवसुरेश्वरी
॥३९॥ देवादिभिश्चमुनिभिर्मनुभिर्मानवैर्मुने ॥ देव्याश्चमंगलस्तोत्रंयःशृणोतिसमाहितः ॥४०॥ तन्मंगलंभवेच्छश्वन्नभवेत्तदमंगलम् ॥
वर्द्धन्तेतत्पुत्रपौत्रामंगलञ्चदिनेदिने ॥ ४१ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेमंगलोपाख्यानेत
त्स्तोत्रादिकथनंनामचतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ ॥ नारायणउवाच ॥ ॥ उक्तंद्वयोरुपाख्यानंब्रह्मपुत्रयथागमम् ॥ श्रूयतांमनसा
ख्यानंयच्छ्रुतंधर्मवक्त्रतः ॥ १ ॥ कन्याभगवतीसाचकश्यपस्यचमानसी ॥ तेनेयंमनसादेवीमनसायाचदीव्यति ॥ २ ॥ मनसाध्याय
तेयावापरमात्मानमीश्वरम् ॥ तेनसामनसादेवीयोगेनैतेनदीव्यति ॥ ३ ॥ आत्मारामाचसादेवीवैष्णवीसिद्धयोगिनी ॥ त्रियुगञ्चतप
स्तप्त्वाकृष्णस्यपरमात्मनः ॥ ४ ॥ जरत्कारुशरीरंच दृष्ट्वायांक्षणमीश्वरः ॥ गोपीपतिर्नामचक्रेजरत्कारुरितिप्रभुः ॥ ५ ॥
वाञ्छितञ्चददौतस्यैकृपयाचकृपानिधिः ॥ पूजांचकारयामासचकारचपुनःस्वयम् ॥ ६ ॥ स्वर्गेचनागलोकेचपृथिव्यांब्रह्मलोकतः ॥
भृशंजगत्सुगौरीसासुन्दरीचमनोहरा ॥ ७ ॥ जगद्गौरीतिविख्यातातेनसापूजितासती ॥ शिवशिष्याचसादेवीतेनशैवीतिकीर्त्तिता
॥ ८ ॥ विष्णुभक्तातीवरम्यावैष्णवीतेननारद ॥ नागानांप्राणरक्षित्रीजनमेजययज्ञके ॥ ९ ॥ नागेश्वरीतिविख्यातासानागभगिनी
तथा ॥ विषंसंहर्त्तुमीशासातेनसाविषहारिणी ॥ १० ॥ सिद्धंयोगंहरात्प्रापतेनासौसिद्धयोगिनी ॥ महाज्ञानञ्चगोप्यंचमृतसञ्जीवि
नींपराम् ॥ ११ ॥ महाज्ञानयुतांतांचप्रवदन्तिमनीषिणः ॥ आस्तीकस्यमुनीन्द्रस्यमातासावैतपस्विनः ॥ १२ ॥ आस्तीकमातावि
ख्याताजरत्कारुरितिस्मसा ॥ प्रियामुनेर्जगत्कारोर्मुनीन्द्रस्यमहात्मनः ॥ १३ ॥ योगिनोविश्वपूज्यस्यजरत्कारोःप्रियाततः ॥ १४ ॥
ॐनमोमनसायै ॥ जरत्कारुर्जगद्गौरीमनसासिद्धयोगिनी ॥ वैष्णवीनागभगिनीशैवीनागेश्वरीतथा ॥ १५ ॥ जरत्कारुप्रियास्ती
कमाताविषहरीतिच ॥ महाज्ञानयुताचैवसादेवीविश्वपूजिता ॥ १६ ॥ द्वादशैतानिनामानिपूजाकालेचयःपठेत् ॥ तस्यनागभयंना
स्तितस्यवंशोद्भवस्यच ॥ १७ ॥ नागभीतेचशयनेनागग्रस्तेचमन्दिरे ॥ नागक्षतेनागदुर्गेनागवेष्टितविग्रहे ॥ १८ ॥ इदंस्तोत्रंपठित्वा

तुमुच्यतेनात्रसंशयः ॥ नित्यंपठेद्यस्तंदृष्ट्वानागवर्गःपलायते ॥ १९ ॥ दशलक्षजपेनैवस्तोत्रसिद्धिर्भवेन्नृणाम् ॥ स्तोत्रंसिद्धंभवेद्यस्य
सविषंभोक्तुमीश्वरः ॥ २० ॥ नागौघंभूषणंकृत्वासभवेन्नागवाहनः ॥ नागासनोनागतल्पोमहासिद्धोभवेन्नरः ॥ २१ ॥ इति श्रीब्रह्मवै
वर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेमनसोपाख्यानेमनसास्तोत्रादिकथनंनामषट्चत्वारिंशत्तमोऽध्यायः॥४६॥छ॥
नारायणउवाच ॥ पूजाविधानंस्तोत्रञ्चश्रूयतांमुनिपुंगव ॥ ध्यानञ्चसामवेदोक्तंदेवीपूजाविधानकम् ॥१॥ श्वेतचम्पकवर्णाभांरत्नभूषणभू
षिताम् ॥ वह्निशुद्धांशुकाधानांनागयज्ञोपवीतिनीम् ॥२॥ महाज्ञानयुतांचैवप्रवरांज्ञानिनांसताम् ॥ सिद्धाधिष्ठातृदेवींचसिद्धांसिद्धिप्रदां
भजे ॥ ३ ॥ इतिध्यात्वाचतांदेवींमूलेनैवप्रपूजयेत् ॥ नैवेद्यैर्विविधैर्दीपैःपुष्पैर्धूपानुलेपनैः ॥ ४ ॥ मूलमन्त्रश्चवेदोक्तोभक्तानांवाञ्छि
तप्रदः ॥ मूलकल्पतरुर्नामसुसिद्धोद्वादशाक्षरः ॥ ५ ॥ ॐ ह्रींश्रींक्लींऐंमानसादेव्यैस्वाहेतिर्कीर्त्तितः ॥ पंचलक्षजपेनैवमन्त्रसिद्धिर्भ
वेन्नृणाम् ॥ ६ ॥ मन्त्रसिद्धिर्भवेद्यस्यससिद्धोजगतीतले ॥ सुधासमंविषंतस्यधन्वन्तरिसमोभवेत् ॥ ७ ॥ ब्रह्मन्नाषाढसंक्रान्त्यांगुडा
शाखासुयत्नतः ॥ आवाह्यदेवींमासान्तंपूजयेद्योहिभक्तितः ॥ ८ ॥ पञ्चम्यांमानसाख्यायांदेव्यैदद्याच्चयोवलिम् ॥ धनवान्पुत्रवांश्चैव
कीर्तिमान्सभवेद्ध्रुवम् ॥ ९ ॥ पूजाविधानंकथितंतदाख्यानंनिशामय ॥ कथयामिमहाभागयच्छ्रुतंधर्म्मवक्त्रतः ॥ १० ॥ पुरानागभ
याक्रान्ताबभूवुर्मानवाभुवि ॥ यान्यान्खादन्तिनागाश्चनतेजीवन्तिनारद ॥ ११ ॥ मन्त्रांश्चससृजेभीतःकश्यपोब्रह्मणार्थितः ॥ वेद
बीजानुसारेणचोपदेशेनवेधसः ॥ १२ ॥ मन्त्राधिष्ठातृदेवींतांमानसांससृजेततः ॥ तपसामनसातेनमानसासाबभूवह ॥ १३ ॥
कुमारीसाचसंभूयचागमच्छङ्करालयम् ॥ भक्त्यासम्पूज्यकैलासेतुष्टुवेचन्द्रशेखरम् ॥ १४ ॥ दिव्यंवर्षसहस्रञ्चतंसिषेवेमुनेःसुता ॥
आशुतोषोमहेशश्चतांचतुष्टोबभूवह ॥ १५ ॥ महाज्ञानंददौतस्यैपाठयामाससामच ॥ कृष्णमन्त्रंकल्पतरुंददावष्टाक्षरंमुने ॥ १६ ॥
लक्ष्मीमायाकामबीजंङेन्तंकृष्णपदंतथा ॥ ॐश्रींह्रींक्लींकृष्णाय ॥ त्रैलोक्यमङ्गलंनामकवचंपूजनक्रमम् ॥ १७ ॥ स्तवनंसर्वपूज्यञ्च ॥१२६॥
ध्यानंभुवनपावनम् ॥ पुरश्चर्य्याक्रमञ्चापिवेदोक्तंसर्वसम्मतम् ॥ १८ ॥ प्राप्यमृत्युञ्जयाज्ज्ञानंपरंमृत्युञ्जयंसती ॥ जगामतपसेसाध्वी

पुष्करंशङ्कराज्ञया ॥ १९ ॥ त्रियुगश्चतपस्तप्त्वाकृष्णस्यपरमात्मनः ॥ सिद्धावभूवसादेवीददर्शपुरतःप्रभुम् ॥ २० ॥ दृष्ट्वाकृशाङ्गींबालाञ्चकृपयाचकृपानिधिः ॥ पूजांचकारयामासचकारचहरिःस्वयम् ॥ २१ ॥ वरंचप्रददौतस्यैपूजितात्वंभवेभव ॥ वरंदत्त्वाचकल्याण्यैसद्यश्चान्तर्दधेविभुः ॥ २२ ॥ प्रथमेपूजितासाचकृष्णेनपरमात्मना ॥ द्वितीयेशङ्करेणैवकश्यपेनसुरेणच ॥ २३ ॥ मनुनामुनिनाचैवब्रह्मणाबादिना ॥ बभूवपूजितासाचत्रिषुलोकेषुसुश्रुता ॥ २४ ॥ जरत्कारुमुनीन्द्रायकश्यपस्तांददौपुरा ॥ अयाचितोमुनिश्रेष्ठोजग्राहब्राह्मणाज्ञया ॥ २५ ॥ कृत्वोद्वाहंमहायोगीविश्रान्तस्तपसाचिरम् ॥ सुष्वापदेव्याजघनेवटमूलेचपुष्करे ॥ २६ ॥ निद्रांजगामसमुनिःस्मृत्वानिद्रेशमीश्वरम् ॥ जगामास्तंदिनकरःसायंकालउपस्थितः ॥ २७ ॥ संचिन्त्यमनसातत्रमनसाचपतिव्रता ॥ धर्मलोपभयेनैवचकारालोचनंसती ॥ २८ ॥ अकृत्वापश्चिमांसन्ध्यांनित्यांचैवद्विजन्मनाम् ॥ ब्रह्महत्यादिकंपापंलभिष्यतिपतिर्मम ॥ २९ ॥ नोपतिष्ठतियःपूर्वांनोपास्तेयश्चपश्चिमाम् ॥ ससर्वदाशुचिर्नित्यंब्रह्महत्यादिकंलभेत ॥ ३० ॥ वेदोक्तमितिसंचिन्त्यबोधयामासतंमुनिम् ॥ सचबुद्धामुनिश्रेष्ठस्तांचुकोपभृशंमुनिः ॥ ३१ ॥ ॥ जरत्कारुरुवाच ॥ ॥ कथंमेसुव्रतेसाध्विनिद्राभङ्गःकृतस्त्वया ॥ व्यर्थंव्रतादिकंतस्यायाभर्त्तुश्चापकारिणी ॥ ३२ ॥ तपश्चानशनंचैवव्रतंदानादिकंचयत् ॥ भर्त्तुरप्रियकारिण्याःसर्वंभवतिनिष्फलम् ॥ ३३ ॥ ययापतिःपूजितश्चश्रीकृष्णःपूजितस्तया ॥ पतिव्रताव्रतार्थंचपतिरूपीहरिःस्वयम् ॥ ३४ ॥ सर्वदानंसर्वयज्ञःसर्वतीर्थनिषेवणम् ॥ सर्वंतपोव्रतंसर्वमुपवासादिकंचयत् ॥ ३५ ॥ सर्वधर्मश्चसत्यंचसर्वदेवप्रपूजनम् ॥ तत्सर्वंस्वामिसेवायाःकलांनार्हन्तिषोडशीम् ॥ ३६ ॥ सुपुण्येभारतेवर्षेपतिसेवांकरोतिया ॥ वैकुण्ठंस्वामिनासार्द्धंसायातिब्रह्मणःपदम् ॥ ३७ ॥ विप्रियंकुरुतेभर्त्तुर्विप्रियंवदतिप्रियम् ॥ असत्कुलप्रजातायातत्फलंश्रूयतांसति ॥ ३८ ॥ कुम्भीपाकंव्रजेत्साचयावच्चन्द्रदिवाकरौ ॥ ततोभवतिचाण्डालीपतिपुत्रविवर्जिता ॥ ३९ ॥ इत्युक्त्वाचमुनिश्रेष्ठोबभूवस्फुरिताधरः ॥ चकम्पेमनसासाध्वीभयेनोवाचतंपतिम् ॥ ॥ ४० ॥ ॥ मनसोवाच ॥ ॥ सन्ध्यालोपभयेनैवनिद्राभंगःकृतस्तव ॥ कुरुशान्तिंमहाभागदुष्टायाममसुव्रत ॥ ४१ ॥

शृंगाराहारनिद्राणांयश्चभंगंकरोतिच ॥ सव्रजेत्कालसूत्रंचस्वामिनश्चविशेषतः ॥ ४२ ॥ इत्युक्त्वामनसादेवीस्वामिनश्चरणा
म्बुजे ॥ पपातभक्त्याभीताचरुरोदचपुनःपुनः ॥ ४३ ॥ कुपितंचमुनिंदृष्ट्वाश्रीसूर्य्यंशप्तुमुद्यतम् ॥ तत्राजगामभगवान्सन्ध्य
यासहनारद ॥ ४४ ॥ तत्रागत्यमुनिश्रेष्ठमवोचद्भास्करःस्वयम् ॥ विनयेनविनीतश्चतयासहयथोचितम् ॥ ४५ ॥ श्रीसूर्य्य
उवाच ॥ ॥ सूर्य्यास्तसमयंदृष्ट्वाधर्मलोपभयेनच ॥ त्वांबोधयामासविप्रनाहमस्तंगतस्तदा ॥ ४६ ॥ क्षमस्वभगवन्ब्रह्मन्मांशप्तुंनो
चितंमुने ॥ ब्राह्मणानांचहृदयंनवनीतसमंसदा ॥ ४७ ॥ तेषांक्षणार्द्धंक्रोधश्चततोभस्मभवेज्जगत् ॥ पुनःस्रष्टुंद्विजःशक्तोनतेजस्वी
द्विजात्परः ॥ ४८ ॥ ब्रह्मणोवंशसम्भूतःप्रज्वलन्ब्रह्मतेजसा ॥ श्रीकृष्णंभावयेन्नित्यंब्रह्मज्योतिःसनातनम् ॥ ४९ ॥ सूर्य्यस्यवचनं
श्रुत्वाद्विजस्तुष्टोबभूवह ॥ सूर्य्योजगामस्वस्थानंगृहीत्वाब्राह्मणाशिषम् ॥ ५० ॥ तत्याजमनसांविप्रःप्रतिज्ञापालनायच ॥ रुदन्तीं
शोकयुक्तांचहृदयेनविदूयता ॥ ५१ ॥ सास्मारगुरुंशम्भुमिष्टदेवंहरिंविधिम् ॥ कश्यपंजन्मदातारंविपत्तौभयकर्शिता ॥ ५२ ॥ तत्रा
जगामभगवान्गोपीशःशम्भुरेवच ॥ विधिश्चकश्यपश्चैवमनसांपारिचिन्तयन् ॥५३॥ सचदृष्ट्वाभीष्टदेवंनिर्गुणंप्रकृतेःपरम ॥ तुष्टावपरया
भक्त्याप्रणनाममुहुर्मुहुः ॥ ५४ ॥ नमश्चकारशम्भुञ्चब्रह्माणंकश्यपंतथा ॥ कथमागमनंत्वत्रेत्येवंप्रश्नंचकारसः ॥ ५५ ॥ ब्रह्मातद्वचनं
श्रुत्वासहसासमयोचितम् ॥ तमुवाचनमस्कृत्यहृषीकेशपदाम्बुजम् ॥ ५६ ॥ यदित्यक्ताधर्मपत्नीधर्मिष्ठामनसासती ॥ कुरुष्वास्यां
सुतोत्पत्तिंधर्मसंस्थापनायवै ॥ ५७ ॥ यतिर्वाब्रह्मचारीवाभिक्षुर्वनचरोऽपिवा ॥ जायायांचसुतोत्पत्तिंकृत्वापश्चाद्भवेन्मुनिः ॥ ५८ ॥
अकृत्वातुसुतोत्पत्तिंविरागीयस्त्यजेत्प्रियाम् ॥ स्रवेत्तपस्तत्पुण्यञ्चचालिन्याश्चयथाजलम् ॥ ५९ ॥ ब्रह्मणोवचनंश्रुत्वाजरत्कारुमु
नीश्वरः ॥ चक्रेतन्नाभिसंस्पर्शंयोगाद्वैमन्त्रपूर्वकम् ॥ ६० ॥ तस्यैशुभाशिषंदत्त्वाययुर्देवामुदान्विताः ॥ मुदान्विताचमनसाजरत्का
रुर्मुदान्वितः ॥ ६१ ॥ मुनेःकरस्पर्शमात्रात्सद्योगर्भोबभूवह ॥ मनसायामुनिश्रेष्ठमुनिश्रेष्ठउवाचताम् ॥ ६२ ॥ ॥ जरत्कारुरु

१ ब्राह्मणोब्रह्मणोवंशे—इतिपाठः ।

वाच ॥ ॥ गर्भेणानेनमनसेतवपुत्रोभविष्यति ॥ जितेन्द्रियाणांप्रवरोधर्मिष्ठोवैष्णवाग्रणी ॥ ६३ ॥ तेजस्वीचतपस्वीचयशस्वी
चगुणान्वितः ॥ वरोवेदविदाञ्चैवयोगिनांज्ञानिनांतथा ॥ ६४ ॥ सचपुत्रोविष्णुभक्तोधार्मिकःकुलमुद्धरेत् ॥ नृत्यन्तिपितरःसर्वेजन्म
मात्रेणवैमुदा ॥ ६५ ॥ पतिव्रतासुशीलायासप्रियाप्रियवादिनी ॥ धर्मिष्ठापुत्रमाताचकुलजाकुलपालिका ॥ ६६ ॥ हरिभक्तिप्रदो
बन्धुस्तदिष्टंयत्सुखप्रदम् ॥ योबन्धच्छित्सचपिताहरेर्वर्त्मप्रदर्शकः ॥ ६७ ॥ सागर्भधारिणीयाचगर्भवासविमोचिनी ॥ विष्णुमन्त्र
प्रदाताचसगुरुर्विष्णुभक्तिदः ॥ ६८ ॥ गुरुश्चज्ञानदाताचतज्ज्ञानंकृष्णभावनम् ॥ आब्रह्मस्तम्बपर्य्यन्तंयतोविश्वंचराचरम् ॥ ६९ ॥
आविर्भूतंतिरोभूतंकिंवाज्ञानंतदन्यतः ॥ वेदजंयोगजंयद्यत्तत्सारंहरिसेवनम् ॥ ७० ॥ तत्त्वानांसारभूतश्चहरेरन्यद्विडम्बनम् ॥ दत्तंज्ञानं
मयातुभ्यंसस्वामीज्ञानदोहियः ॥७१॥ ज्ञानात्प्रमुच्यतेबन्धात्सरिपुर्योहिबन्धदः ॥ विष्णुभक्तियुतंज्ञानंयोददातिहिसोगुरुः ॥ ७२ ॥
सरिपुःशिष्यघातीचयतोबन्धान्नमोचयेत् ॥ जननीगर्भजात्क्लेशाद्यमताडनजात्तथा ॥७३॥ नमोचयेद्यःसकथंगुरुस्तातोहिबान्धवः ॥
परमानन्दरूपञ्चकृष्णमार्गमनश्वरम् ॥ ७४ ॥ नदर्शयेद्यःसकथंकीदृशोबान्धवोनृणाम् ॥ भजसाध्विपरंब्रह्माच्युतंकृष्णञ्चनिर्गुणम् ॥
निर्मूलञ्चपुराकर्मभवेद्यत्सेवयाध्रुवम् ॥ ७५ ॥ मयाच्छलेनत्वंत्यक्तादोषंमेक्षम्यतांप्रिये ॥ क्षमायुतानांसाध्वीनांसत्त्वात्क्रोधोनविद्यते ॥
॥ ७६ ॥ पुष्करेतपसेयामिगच्छदेवियथासुखम् ॥ श्रीकृष्णचरणाम्भोजेध्यानविच्छेदकातरः ॥ ७७ ॥ धनादिषुस्त्रियांप्रीतिःप्रवृत्ति
पथगामिनाम् ॥ श्रीकृष्णचरणांभोजेनिस्पृहाणांमनोरथाः ॥ ७८ ॥ जरत्कारुवचःश्रुत्वामनसाशोककातरा ॥ सासाश्रुनेत्राविनयादु
वाचप्राणवल्लभम् ॥ ७९ ॥ ॥ मनसोवाच ॥ ॥ दोषेणाहंत्वयात्यक्तानिद्राभङ्गेनतेप्रभो ॥ यत्रस्मरामित्वांबन्धोतत्रमामागमि
ष्यसि ॥ ८० ॥ बन्धुभेदःक्लेशतमःपुत्रभेदस्ततःपरः ॥ प्राणेशभेदःप्राणानांविच्छेदात्सर्वतःपरः ॥ ८१ ॥ पतिःपतिव्रतानाञ्चशत
पुत्राधिकःप्रियः ॥ सर्वस्माच्चप्रियःस्त्रीणांप्रियस्तेनोच्यतेबुधैः ॥ ८२ ॥ पुत्रेयथैकपुत्राणांवैष्णवानांयथाहरौ ॥ नेत्रेयथैकनेत्राणांतृषि
तानांयथाजले ॥ ८३ ॥ क्षुधितानांयथान्नेचकामुकानांयथास्त्रियाम् ॥ यथापरस्वेचौराणांयथाजारेकुयोषिताम् ॥ ८४ ॥ विदुषाञ्च

यथाशास्त्रंवणिज्यंवाणिजांयथा ॥ तथाशश्वन्मनःकान्तेसाध्वीनांयोपितांप्रभो ॥८५॥ इत्युक्त्वामनसादेवीपपातस्वामिनःपदे ॥ क्षणञ्च
कारक्रोडेतांकृपयाचकृपानिधिः ॥८६॥ नेत्रोदकेनमनसांस्नापयामासतांमुनिः ॥ साश्रुणाचमुनेःक्रोडंसिषेवेभेदकातरा ॥ ८७ ॥ तदा
ज्ञानेनतौद्वौचविशोकौचबभूवतुः ॥ स्मारंस्मारंपदाम्भोजंकृष्णस्यपरमात्मनः ॥ ८८ ॥ जगामतपसेविप्रःसकान्तांसुप्रबोध्यच ॥ जगा
ममनसाशम्भोःकैलासंमं दिरंगुरोः ॥ ८९ ॥ पार्वतीबोधयामासमनसांशोककर्शिताम् ॥ शिवश्चातीवबोधेनशिवेनचशिवालये॥९०॥
सुप्रशस्तेदिनेसाध्वीसुषुवेमङ्गलेक्षणे ॥ नारायणांशंपुत्रंचज्ञानिनांयोगिनांगुरुम् ॥ ९१ ॥ गर्भस्थितोमहाज्ञानंश्रुत्वाशङ्करवक्रतः ॥
सबभूवमहायोगीयोगिनांज्ञानिनांगुरुः ॥ ९२ ॥ जातकंकारयामासवाचयासासमङ्गलम् ॥ वेदांश्चपाठयामासशिवायचशिवःशिशोः॥
॥ ९३ ॥ रत्नत्रिकोटिलक्षञ्चब्राह्मणेभ्योददौशिवः ॥ पार्वतीचगवांलक्षंरत्नानिविविधानिच ॥९४॥ शम्भुश्चचतुरोवेदान्वेदाङ्गानितरां
स्तथा ॥ बालकंपाठयामासज्ञानंमृत्युञ्जयंपरम् ॥ ९५ ॥ भक्तिरास्तेस्वकान्तेचाभीष्टेदेवेहरौगुरौ ॥ यस्यास्तेनचतत्पुत्रोबभूवास्तीक
एवच ॥ ९६ ॥ जगामतपसेविष्णोःपुष्करंशङ्कराज्ञया ॥ संप्राप्यचमहामन्त्रंतपश्चपरमात्मनः ॥ ९७ ॥ दिव्यंवर्षत्रिलक्षञ्चतपस्तप्त्वा
तपोधनः ॥ आजगाममहायोगीनमस्कर्तुंशिवंप्रभुम् ॥ ९८ ॥ शङ्करञ्चनमस्कृत्यपुरःकृत्वाचबालकम् ॥ साचाजगाममनसाकश्यप
स्याश्रमंपितुः ॥ ९९ ॥ तांसपुत्रांसुतांदृष्ट्वामुदंप्रापप्रजापतिः ॥ शतलक्षञ्चरत्नानांब्राह्मणेभ्योददौमुने ॥ १०० ॥ ब्राह्मणान्भोजया
मासत्वसंख्यान्छ्रेयसेशिशोः ॥ अदितिश्चदितिश्चान्यामुदंप्रापुःपरंतथा ॥१०१॥ सासपुत्राचसुचिरंतस्थौतातालयेतदा ॥ तदीयंपुनरा
ख्यानंवक्ष्येत्वंतन्निशामय ॥ १०२ ॥ अथाभिमन्युतनयेब्रह्मशापःपरीक्षिते ॥ बभूवसहसाब्रह्मन्दैवदोषेणकर्मणा ॥ १०३॥ सप्ताहेसम
तीतेतुतक्षकस्त्वाञ्चदंक्ष्यति ॥ शशापशृङ्गीकौशिक्याजलंसंस्पृश्यचेतिसः ॥ १०४ ॥ राजाश्रुत्वातत्प्रवृत्तिंगङ्गाद्वारंजगामसः ॥ तत्र
तस्थौचसप्ताहंशुश्रुवेधर्मसंहिताम् ॥ १०५ ॥ सप्ताहेसमतीतेतुगच्छन्तंतक्षकंपथि ॥ धन्वन्तरिर्मोचयितुमपश्यद्गन्तुकोनृपम् ॥१०६॥

१ शिवश्चनीवज्ञानेनेतिपाठः ।

तयोर्बभूवसंवादः सुप्रीतिश्चपरस्परम् ॥ धन्वन्तरेर्मणिंश्रेष्ठंतक्षकःस्वेच्छयाददौ ॥ १०७ ॥ सययौतंगृहीत्वातुतुष्टःसंहृष्टमानसः ॥ अप
श्यत्तक्षकस्तूर्णंनृपंमञ्चकसंस्थितम् ॥ १०८ ॥ राजाजगामवैकुण्ठंस्मारंस्मारंहरिंगुरुम् ॥ संस्कारंकारयामासपितुर्वैजनमेजयः ॥
॥ १०९ ॥ राजाचकारयज्ञंचसर्पसत्राभिधंमुने ॥ प्राणांस्तत्याजसर्पाणांसमूहोब्रह्मतेजसा ॥ ११० ॥ सतक्षकश्चभीतश्चमहेन्द्रंशरणं
ययौ ॥ सेन्द्रश्चतक्षकंहन्तुंविप्रवर्गःसमुद्यतः ॥ १११ ॥ अथदेवाश्चमुनयश्चाययुर्मनसान्तिकम् ॥ तांतुष्टावमहेन्द्रश्चसमक्षंभयकातरः ॥
॥ ११२ ॥ तत्रआस्तीकआगत्यमातुर्यज्ञमथाज्ञया ॥ महेन्द्रतक्षकप्राणान्ययाचेभूमिपंवरम् ॥ ११३ ॥ ददौवरंनृपश्रेष्ठःकृपयाब्राह्म
णाज्ञया ॥ यज्ञंसमाप्यविप्रेभ्योदक्षिणांचददौमुदा ॥ ११४ ॥ विप्राश्चमुनयोदेवागत्वाचमनसान्तिकम् ॥ मनसांपूजयामासुस्तुष्टुवुश्च
पृथक्पृथक् ॥ ११५ ॥ शक्रःसंभृतसंभारोभक्तियुक्तःसदाशुचिः ॥ मनसांपूजयामासतुष्टावपरमादरात् ॥ ११६ ॥ उपचारैः
षोडशभिर्बलिंदत्त्वाप्रियंतदा ॥ प्रददौपरितुष्टश्चब्रह्मविष्णुसुराज्ञया ॥ ११७ ॥ संपूज्यमनसांदेवींप्रययुःस्वालयञ्चते ॥ इत्येवं
कथितंसर्वंकिंभूयःश्रोतुमिच्छसि ॥ ११८ ॥ ॥ नारदउवाच ॥ ॥ केनस्तोत्रेणतुष्टावमहेन्द्रोमनसांसतीम् ॥ पूजाविधिक्रमं
तस्याःश्रोतुमिच्छामितत्त्वतः ॥ ११९ ॥ ॥ नारायणउवाच ॥ ॥ सुस्नातःशुचिराचान्तोधृत्वाधौतेचवाससी ॥ रत्नसिंहा
सनेदेवींवासयामासभक्तितः ॥ १२० ॥ स्वर्गगङ्गाजलेनैवरत्नकुम्भस्थितेनच ॥ स्नापयामासमनसांमहेन्द्रोवेदमन्त्रतः ॥ १२१ ॥
वाससीवासयामासवह्निशुद्धेमनोरमे ॥ सर्वांगेचन्दनंलिप्त्वापाद्यार्घ्यंभक्तिसंयुतः ॥ १२२ ॥ गणेशञ्चदिनेशञ्चवह्निंविष्णुंशिवं
शिवाम् ॥ संपूज्यदेवषट्कञ्चपूजयामासतांसतीम् ॥ १२३ ॥ ॐ ह्रींश्रींमनसादेव्यैस्वाहेत्येवञ्चमन्त्रतः ॥ दशाक्षरेणमन्त्रेण
ददौसर्वान्यथोचितम् ॥ १२४ ॥ उपचारान्षोडशकान्भक्तितोदुर्लभान्हरिः ॥ पूजयामासभक्त्याचब्रह्मणाप्रेरितोमुदा ॥ १२५ ॥
वाद्यंनानाप्रकारञ्चवादयामासतत्रवै ॥ बभूवपुष्पवृष्टिश्चनभसोमनसोपरि ॥ १२६ ॥ देवोविप्राज्ञयातत्रब्रह्मविष्णुशिवाज्ञया ॥ तुष्टावसा

१ नम्तकमंस्थितमितिपाठः।

श्रुनेत्रश्रुपुलकांचितविग्रहः ॥ १२७ ॥ ॥ महेन्द्रउवाच ॥ ॥ देवित्वांस्तोतुमिच्छामिसाध्वीनांप्रवरांवराम् ॥ परात्पराञ्चपरमां
नहिस्तोतुंक्षमोऽधुना ॥ १२८ ॥ स्तोत्राणांलक्षणंवेदेस्वभावाख्यानतःपरम् ॥ नक्षमःप्रकृतिंवक्तुंगुणानांतवसुव्रते ॥ १२९ ॥ शुद्धस
त्वस्वरूपात्वंकोपहिंसाविवर्जिता ॥ नचशप्तोमुनिस्तेनत्यक्तयाचत्वयायतः ॥ त्वंमयापूजितासाध्विजननीचयथादितिः ॥ १३० ॥
दयारूपाचभगिनीक्षमारूपायथाप्रसूः ॥ त्वयामेरक्षिताःप्राणापुत्रदाराःसुरेश्वरि ॥ १३१ ॥ अहंकरोमित्वांपूज्यांममप्रीतिश्चवर्द्धते ॥
नित्यंयद्यपिपूज्यात्वंभवेऽत्रजगदंबिके ॥ १३२ ॥ तथापितवपूजांवैवर्द्धयामिपुनःपुनः ॥ येत्वामाषाढसंक्रान्त्यांपूजयिष्यन्तिभक्तितः
॥ १३३ ॥ पञ्चम्यांमनसाख्यायांमासांतेवादिनेदिने ॥ पुत्रपौत्रादयस्तेषांवर्द्धन्तेचधनानिच ॥ १३४ ॥ यशस्विनःकीर्त्तिमन्तो
विद्यावन्तोगुणान्विताः ॥ येत्वांनपूजयिष्यन्तिनिन्दन्त्यज्ञानतोजनाः ॥ १३५ ॥ लक्ष्मीहीनाभविष्यन्तितेषांनागभयंसदा ॥ त्वं
स्वर्गलक्ष्मीःस्वर्गेचवैकुण्ठेकमलाकला ॥ १३६ ॥ नारायणांशोभगवाञ्जरत्कारुर्मुनीश्वरः ॥ तपसातेजसात्वांचमनसाससृजेपिता ॥
॥ १३७ ॥ अस्माकंरक्षणायैवतेनत्वंमनसाभिधा ॥ मनसादेवितुंशक्ताचात्मनासिद्धयोगिनी ॥ १३८ ॥ तेनत्वंमनसादेवीपूजिताव
न्दिताभवे ॥ यांभक्त्यामानसादेवाःपूजयन्त्यनिशंभृशम् ॥ १३९ ॥ तेनत्वांमनसादेवींप्रवदन्तिपुराविदः ॥ सत्त्वरूपाचदेवीत्वंशश्व
त्सत्त्वनिषेवया ॥ १४० ॥ योहियद्भावयेन्नित्यंशतंप्राप्नोतितत्समम् ॥ इन्द्रश्चमनसांस्तुत्वागृहीत्वाभगिनींचताम ॥ १४१ ॥ निर्ज
गामस्वभवनंभूषावासपरिच्छदाम् ॥ पुत्रेणसार्द्धंसादेवीचिरंतस्थौपितुर्गृहे ॥ १४२ ॥ भ्रातृभिःपूजिताशश्वन्मान्यावन्द्याचसर्वतः ॥
गोलोकात्सुरभीब्रह्मंस्तत्रागत्यसुपूजिताम् ॥ १४३ ॥ तांस्नापयित्वाक्षीरेणपूजयामाससादरम् ॥ ज्ञानस्यकथयामासस्वरूपंसर्वदुर्ल
भम् ॥ तदादेवैःपूजितासास्वर्गलोकंपुनर्ययौ ॥ १४४ ॥ इदंस्तोत्रंपुण्यबीजंतांसंपूज्यचयःपठेत् ॥ तस्यनागभयंनास्तितस्यवंशे
भवेच्चयः ॥ १४५ ॥ विषंभवेत्सुधातुल्यंसिद्धस्तोत्रंयदापठेत् ॥ पञ्चलक्षजपेनैवसिद्धस्तोत्रोभवेन्नरः ॥ १४६ ॥ सर्प
शायीभवेत्सोऽपिनिश्चितंसर्पवाहनः ॥ १४७ ॥ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणे द्वितीयेप्रकृतिखण्डे नारदनारायणसंवादेमनसोपा

ख्यानेतदुत्पत्तिपूजास्तोत्रादिकथनंनामषट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ ॥ नारदउवाच ॥ ॥ कावासासुरभीदेवीगोलोका
दागताचया ॥ तज्जन्मचरितंब्रह्मञ्छ्रोतुमिच्छामितत्त्वतः ॥ १ ॥ ॥ नारायणउवाच ॥ ॥ गवामधिष्ठातृदेवीगवामाद्यागवांप्रसूः ॥
गवांप्रधानासुरभीगोलोकेचसमुद्भवा ॥ २ ॥ सर्वादिसृष्टेःकथनंकथयामिनिशामय ॥ बभूवतेनतज्जन्मपुरावृन्दावनेवने ॥ ३ ॥
एकदाराधिकानाथोराधयासहकौतुकात् ॥ गोपाङ्गनापरिवृतःपुण्यंवृन्दावनंययौ ॥ ४ ॥ सहसातत्ररहसिविजहारचकौतुकात् ॥
बभूवक्षीरपानेच्छातदास्वेच्छापरस्यच ॥ ५ ॥ ससृजेसुरभींदेवींलीलयावामपार्श्वतः ॥ वत्सयुक्तांदुग्धवतींवत्सानाञ्चमनोरमाम् ॥
॥ ६ ॥ दृष्ट्वासवत्सांसुरभींरत्नभाण्डेदुदोहसः ॥ क्षीरंसुधातिरिक्तञ्चजन्ममृत्युहरंपरम् ॥ ७ ॥ तदुष्णञ्चपयःस्वादुपपौगोपीपतिःस्व
यम् ॥ सरोबभूवपयसाभाण्डविस्रंसनेनच ॥ ८ ॥ दीर्घेचविस्तृतेचैवपरितःशतयोजनम् ॥ गोलोकेषुप्रसिद्धंतद्रम्यंक्षीरसरोव
रम् ॥ ९ ॥ गोपिकानाञ्चराधायाःक्रीडावापीबभूवसा ॥ रत्नेनरचितातूर्णंभूतावापीश्वरेच्छया ॥ १० ॥ बभूवकामधेनूनांस
हसालक्षकोटयः ॥ तावन्तोहिसवत्साश्चसुरभीलोमकूपतः ॥ ११ ॥ तासांपुत्राश्चपौत्राश्चसंबभूवुरसंख्यकाः ॥ कथिताचगवां
सृष्टिस्तयासंपूरितंजगत् ॥ १२ ॥ पूजांचकारभगवान्सुरभ्याश्चपुरामुने ॥ ततोबभूवतत्पूजात्रिषुलोकेषुदुर्लभा ॥ १३ ॥
दीपान्वितापरदिनेश्रीकृष्णस्याज्ञयाभवे ॥ बभूवसुरभीपूजाधर्म्मवक्त्रादितिश्रुतम् ॥ १४ ॥ ध्यानंस्तोत्रंमूलमन्त्रंयद्यत्पूजावि
धिक्रमम् ॥ वेदोक्तंचमहाभागनिबोधकथयामिते ॥ १५ ॥ ॐसुरभ्यैनमइतिमन्त्रोयंषडक्षरः ॥ सिद्धोलक्षजपेनैवभक्तानांक
ल्पपादपः ॥ १६ ॥ स्थितंध्यानंयजुर्वेदेपूजनंसर्वसम्मतम् ॥ ऋद्धिदांवृद्धिदांचैवमुक्तिदांसर्वकामदाम् ॥ १७ ॥ लक्ष्मीस्व
रूपांपरमांराधासहचरींपराम् ॥ गवामधिष्ठातृदेवींगवामाद्यांगवांप्रसूम् ॥ १८ ॥ पवित्ररूपांपूज्यांचभक्तानांसर्वकामदाम् ॥
ययापूतंसर्वविश्वंतांदेवींसुरभींभजे ॥ १९ ॥ घटेवाधेनुशिरसिबद्धस्तम्भेगवांचवा ॥ शालग्रामेजलेऽग्नौवासुरभींपूजयेद्द्विजः ॥ २० ॥
दीपान्वितापरदिनेपूर्वाह्णेभक्तिसंयुतः ॥ यःपूजयेच्चसुरभींसचपूज्योभवेद्भुवि ॥ २१ ॥ एकदात्रिषुलोकेषुवाराहेविष्णुमायया ॥

क्षीरंजहारसहसाचिन्तिताश्चसुरादयः ॥ २२ ॥ तेगत्वाब्रह्मणोलोकंब्रह्माणंतुष्टुवुस्तदा ॥ तदाज्ञयाचसुरभींतुष्टुवेपाकशासनः ॥
॥ २३ ॥ ॥ महेन्द्रउवाच ॥ ॥ नमोदेव्यैमहादेव्यैसुरभ्यैचनमोनमः ॥ गवांबीजस्वरूपायैनमस्तेजगदम्बिके ॥ २४ ॥
नमोराधाप्रियायैचपद्मांशायैनमोनमः ॥ नमःकृष्णप्रियायैचगवांमात्रेनमोनमः ॥ कल्पवृक्षस्वरूपायैप्रदात्र्यैसर्वसंपदाम् ॥
॥ २५ ॥ श्रीदायैधनदायैचबुद्धिदायैनमोनमः ॥ शुभदायैप्रसन्नायैगोप्रदायैनमोनमः ॥ २६ ॥ यशोदायैसौख्यदायैधर्मज्ञायैनमो
नमः ॥ स्तोत्रश्रवणमात्रेणतुष्टाहृष्टाजगत्प्रसूः ॥ २७ ॥ आविर्बभूवतत्रैवब्रह्मलोकेसनातनी ॥ महेन्द्रायवरंदत्त्वावाञ्छितंसर्वदुर्लभम् ॥
॥ २८ ॥ जगामसाचगोलोकंययुर्देवादयोगृहम् ॥ बभूवविश्वंसहसादुग्धपूर्णंचनारद ॥ २९ ॥ दुग्धाद्घृतंततोयज्ञस्ततःप्रीतिःसुर
स्यच ॥ इदंस्तोत्रंमहापुण्यंभक्तियुक्तश्चयःपठेत् ॥ ३० ॥ सगोमान्धनवांश्चैवकीर्त्तिमान्पुण्यवान्भवेत् ॥ सुस्नातःसर्वतीर्थेषुसर्वयज्ञेषु
दीक्षितः ॥ ३१ ॥ इहलोकेसुखंभुक्त्वायात्यन्तेकृष्णमन्दिरम् ॥ सुचिरंनिवसेत्तत्रकुरुतेकृष्णसेवनम् ॥ ३२ ॥ नपुनर्भवनंतस्यब्र
ह्मपुत्रभवेभवेत् ॥ ३३ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेसुरभ्युपाख्यानेतदुत्पत्तितत्पूजादिकथ
नंनामसप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ नारदउवाच ॥ नारायणमहाभागनारायणपरायण ॥ नारायणांशभगवन्ब्रूहिनारायणीं
कथाम् ॥ १ ॥ श्रुतंसुरभ्युपाख्यानमतीवसुमनोहरम् ॥ गोप्यंसर्वपुराणेषुपुराविद्भिःप्रशंसितम् ॥ २ ॥ अधुनाश्रोतुमिच्छामिराधि
काख्यानमुत्तमम् ॥ तदुत्पत्तिश्चनद्ध्यानंस्तोत्रंकवचमुत्तमम् ॥ ३ ॥ श्रीनारायणउवाच ॥ पुराकैलासशिखरेभगवन्तंसनातनम् ॥
सिद्धेशंसिद्धिदंसर्वस्वरूपंशङ्करंपरम् ॥ ४ ॥ प्रफुल्लवदनंप्रीतंसस्मितंमुनिभिःस्तुतम् ॥ कुमारायप्ररोचन्तंकृष्णस्यपरमात्मनः ॥ ५ ॥
रासोत्सवरसाख्यानंरासमण्डलवर्णनम् ॥ तदाख्यानावसानेचप्रस्तावावसरेसती ॥ ६ ॥ पप्रच्छपार्वतीस्फीतासस्मिताप्राणवल्लभम् ॥
स्तवनंकुर्वतीभीताप्राणेशेनप्रसादिता ॥ ७ ॥ प्रोवाचतंमहादेवंमहादेवीसुरेश्वरी ॥ अपूर्वंराधिकाख्यानंपुराणेषुसुदुर्लभम् ॥ ८ ॥
॥ श्रीपार्वत्युवाच ॥ आगमंनिखिलंनाथश्रुतंसर्वमनुत्तमम् ॥ पाञ्चरात्रादिकंनीतिशास्त्रंयोगश्चयोगिनाम् ॥ ९ ॥ सिद्धानांसिद्धिशास्त्र

श्चनानातन्त्रंमनोहरम् ॥ भक्तानांभक्तिशास्त्रंश्चकृष्णस्यपरमात्मनः ॥ १० ॥ देवीनामपिसर्वासांचरितंत्वन्मुखाम्बुजात् ॥ अधुना
श्रोतुमिच्छामिराधिकाख्यानमुत्तमम् ॥ ११ ॥ श्रुतौश्रुतंप्रशस्तंचराधायाश्चसमासतः ॥ त्वन्मुखात्काण्वशाखायांव्यासेनोक्तांवदाधुना
॥ १२ ॥ आगमाख्यानकालेचभवतास्वीकृतंपुरा ॥ नहीश्वरव्याहृतिश्चमिथ्याभवितुमर्हति ॥ १३ ॥ तदुत्पत्तिश्चतद्ध्यानंनाम्नोमाहा
त्म्यमुत्तमम् ॥ पूजाविधानंचरितंस्तोत्रंकवचमुत्तमम् ॥ १४ ॥ आराधनविधानश्चपूजापद्धतिर्मीप्सिताम् ॥ साम्प्रतंब्रूहिभगवन्मां
भक्तांभक्तवत्सल ॥ १५ ॥ कथंनकथितंपूर्वमागमाख्यानकालतः ॥ पार्वतीवचनंश्रुत्वानम्रवक्रोबभूवसः ॥ १६ ॥ पंचवक्त्रश्चभगवा
न्छुष्ककण्ठोष्ठतालुकः ॥ स्वसत्यभङ्गभीतश्चमौनीभूयविचिन्तयन् ॥ १७ ॥ सस्मारकृष्णंध्यानेनाभीष्टदेवंकृपानिधिम् ॥ तदनुज्ञांच
संप्राप्यस्वार्द्धाङ्गांतामुवाचसः ॥ १८ ॥ निषिद्धोऽहंभगवताकृष्णेनपरमात्मना ॥ आगमारम्भसमयेराधाख्यानप्रसङ्गतः ॥ १९ ॥
मदर्द्धाङ्गस्वरूपात्वंनमद्भिन्नास्वरूपतः ॥ अतोऽनुज्ञांददौकृष्णोमह्यंवक्तुंमहेश्वरि ॥ २० ॥ मदिष्टदेवकान्तायाराधायाश्चरितंसति ॥
अतीवगोपनीयंचसुखदंकृष्णभक्तिदम् ॥ २१ ॥ जानामितदहंदुर्गेसर्वंपूर्वापरंवरम् ॥ यज्जानामिरहस्यंचनतद्ब्रह्माफणी
श्वरः ॥ २२ ॥ नतत्सनत्कुमारश्चनचधर्मःसनातनः ॥ नदेवेन्द्रोमुनीन्द्राश्चसिद्धेन्द्राःसिद्धपुङ्गवाः ॥ २३ ॥ मत्तोबलवतीत्वंचप्राणां
स्त्यक्तुंसमुद्यता ॥ अतस्त्वांगोपनीयंचकथयामिसुरेश्वरि ॥ २४ ॥ शृणुदुर्गेप्रवक्ष्यामिरहस्यंपरमाद्भुतम् ॥ चरितंराधिकायाश्चदुर्लभं
चसुपुण्यदम् ॥ २५ ॥ पुरावृन्दावनेरम्येगोलोकेरासमण्डले ॥ शतशृङ्गैकदेशेचमालतीमल्लिकावने ॥ २६ ॥ रत्नसिंहासनेरम्येतस्थौ
तत्रजगत्पतिः ॥ स्वेच्छामयश्चभगवान्बभूवरमणोत्सुकः ॥ २७ ॥ रिरंसोस्तस्यजगतांपत्युस्तन्मल्लिकावने ॥ इच्छयाचभवेत्सर्वं
तस्यस्वेच्छामयस्यच ॥ २८ ॥ एतस्मिन्नन्तरेदुर्गेद्विधारूपोबभूवसः ॥ दक्षिणाङ्गश्चचश्रीकृष्णोवामार्द्धाङ्गश्चराधिका ॥ २९ ॥
बभूवरमणीरम्यारासेशारमणोत्सुका ॥ अमूल्यरत्नाभरणारत्नसिंहासनस्थिता ॥ ३० ॥ वह्निशुद्धांशुकाधानाकोटिपूर्णशशिप्रभा ॥
तप्तकांचनवर्णाभाराजिताचस्वतेजसा ॥ ३१ ॥ सस्मितासुदतीशुद्धाशरत्पद्मनिभानना ॥ विभ्रतीकबरींरम्यांमालतीमाल्य

मंडिताम् ॥ ३२ ॥ रत्नमालांचदधतीग्रीष्मसूर्य्यसमप्रभाम् ॥ मुक्ताहारेणशुभ्रेणगङ्गाधारानिभेनच ॥ ३३ ॥ संयुक्तंवर्त्तुलोत्तुङ्गसु
मेरुगिरिसन्निभम् ॥ कठिनंसुन्दरंदृश्यंकस्तूरीपत्रचिह्नितम् ॥ ३४ ॥ माङ्गल्यंमङ्गलार्हंचस्तनयुग्मञ्चबिभ्रती ॥ नितम्बश्रोणिभाग
र्त्तानवयौवनसुन्दरी ॥ ३५ ॥ कामातुरांसस्मितांतांददर्शरसिकेश्वरः ॥ दृष्ट्वाकान्तांजगत्कान्तोबभूवरमणोत्सुकः ॥ ३६ ॥
दृष्ट्वाचैनंमुकान्तश्चसादधाररहरेःपुरः ॥ तेनराधासमाख्यातापुराविद्भिर्महेश्वरि ॥ ३७ ॥ राधाभजतितंकृष्णंसचतांचपर
स्परम् ॥ उभयोःसर्वसाम्यंचसदासन्तोवदन्तिच ॥ ३८ ॥ भवनंधावनंरासेस्मरत्यालिङ्गनंजपन् ॥ तेनजल्पतिसङ्केतंतत्र
राधांसईश्वरः ॥ ३९ ॥ राशब्दोच्चारणाद्भक्तोराँतिमुक्तिंसुदुर्लभाम् ॥ धाशब्दोच्चारणाद्दुर्गेधावत्येवहरेःपदम् ॥ ४० ॥
कृष्णवामांशसम्भूताराधारासेश्वरीपुरा ॥ तस्याश्चांशांशकलयाबभूवुर्देवयोषितः ॥ ४१ ॥ राइत्यादानवचनोधाचनि
र्वाणवाचकः ॥ ततोऽवाप्नोतिमुक्तिंचतेनराधाप्रकीर्तिता ॥ ४२ ॥ बभूवगोपीसंघश्चराधायालोमकूपतः ॥ श्रीकृष्णलोमकूपेभ्योबभूवुः
सर्ववल्लवाः ॥ ४३ ॥ राधावामांशभागेनमहालक्ष्मीर्बभूवसा ॥ तस्याधिष्ठातृदेवीसागृहलक्ष्मीर्बभूवसा ॥ ४४ ॥ चतुर्भुजस्यसा
पत्नीदेवीवैकुण्ठवासिनी ॥ तदंशाराजलक्ष्मीश्चराजसम्पत्प्रदायिनी ॥ ४५ ॥ तदंशामर्त्यलक्ष्मीश्चगृहिणांचगृहेगृहे ॥ दीपाधिष्ठातृदे
वीचसाचैवगृहदेवता ॥ ४६ ॥ स्वयंराधाकृष्णपत्नीकृष्णवक्षःस्थलस्थिता ॥ प्राणाधिष्ठातृदेवीचतस्यैवपरमात्मनः ॥ ४७ ॥ आब्रह्म
स्तम्बपर्य्यन्तंसर्वंमिथ्यैवपार्वति ॥ भजसत्यंपरंब्रह्मराधेशंत्रिगुणात्परम् ॥ ४८ ॥ परंप्रधानंपरमंपरमात्मानमीश्वरम् ॥ सर्वाद्यंसर्वपूज्य
ञ्चनिरीहंप्रकृतेःपरम् ॥ ४९ ॥ स्वेच्छामयंनित्यरूपंभक्तानुग्रहविग्रहम् ॥ तद्भिन्नानाञ्चदेवानांप्राकृतंरूपमेवच ॥ ५० ॥ तस्यप्रा
णाधिकाराधाबहुसौभाग्यसंयुता ॥ महाविष्णोःप्रसूःसाचमूलप्रकृतिरीश्वरी ॥ ५१ ॥ मानिनींराधिकांसन्तःसेवन्तेनित्यशस्सदा ॥
सुलभंयत्पदाम्भोजंब्रह्मादीनांसुदुर्लभम् ॥ ५२ ॥ स्वप्नेराधापदाम्भोजंनहिपश्यन्तिवल्लवाः ॥ स्वयंदेवीहरेःक्रोडेछायारूपेणका

१ भगंधारणामितिपाठः । २ यातीतिपाठः ।

मिनी ॥ ५३ ॥ सचद्वादशगोपानांरायाणप्रवरःप्रिये ॥ श्रीकृष्णांशश्चभगवान्विष्णुतुल्यपराक्रमः ॥ ५४ ॥ सुदामशापात्सा देवीगोलोकादागतामहीम् ॥ वृषभानुगृहेजातातन्माताचकलावती ॥ ५५ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादान्तर्गतहरगौरीसंवादेराधोपाख्यानेराधोत्पत्तितत्पूजादिकथनंनामाष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ ॥ ॥ पार्वत्युवाच ॥ ॥ कथंसुदामशापश्चसाचदेवीललाभह ॥ कथंशशापभृत्योहिस्वाभीष्टांदेवकामिनीम् ॥ १ ॥ ॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणुदेविप्रवक्ष्यामिरहस्यंपरमाद्भुतम् ॥ गोप्यंसर्वपुराणेषुशुभदंभक्तिमुक्तिदम् ॥ २ ॥ एकदाराधिकेशश्चगोलोकेरासमण्डले ॥ शतशृङ्गाख्यगिर्य्येकदेशेवृन्दावनेवने ॥ ३ ॥ गृहीत्वाविरजांगोपींसुभाग्यांराधिकासमाम् ॥ क्रीडाश्चकारभगवान्रत्नभूषणभूषितः ॥ ४ ॥ रत्नप्रदीपसंयुक्तेरत्ननिर्माणमण्डले ॥ अमूल्यरत्नखचितमञ्चकेपुष्पतल्पके ॥ ५ ॥ कस्तूरीकुंकुमारक्तेसुचन्दनसुधूपिते ॥ सुगन्धिमालतीमालासमूहपरिमण्डिते ॥ ६ ॥ सुरताद्विरतिर्नास्तिदम्पतीरतिपण्डितौ ॥ तौद्वौपरस्परासक्तौसुखसम्भोगतन्त्रितौ ॥ ७ ॥ मन्वन्तराणांलक्षश्चकालःपरिमितोगतः ॥ गोलोकस्यस्वल्पकालेजन्मादिरहितस्यच ॥ ८ ॥ दूत्यश्चतत्रोज्ञात्वाथजगदुस्तांतुराधिकाम् ॥ श्रुत्वापरमरुष्टासातत्याजहरिमीश्वरी ॥ ९ ॥ प्रबोधिताचसखिभिःकोपरक्तास्यलोचना ॥ विहायरत्नालङ्कारंवह्निशुद्धांशुकेशुभे ॥ १० ॥ क्रीडापद्मश्चसद्रत्नामूल्यदर्पणमुज्ज्वलम् ॥ निर्माज्जयामाससतीसिन्दूरंचित्रपत्रकम् ॥ ११ ॥ प्रक्षाल्यतोयाञ्जलिभिर्मुखरागमलक्तकम् ॥ विस्रस्तकवरीभारामुक्तकेशीप्रकम्पिता ॥ १२ ॥ शुक्लवस्त्रपरीधानाह्रक्षावेशादिवर्जिता ॥ ययौयानान्तिकंतूर्णंप्रियालीभिर्निवारिता ॥ १३ ॥ आजुहावसखीसंघरोपविस्फुरिताधरा ॥ शश्वत्कम्पान्विताङ्गीसागोपीभिःपरिवारिता ॥ १४ ॥ ताभिर्भक्त्यायुताभिश्चकातराभिश्चसंस्तुता ॥ आरुरोहरथंदिव्यममूल्यंरत्ननिर्मितम् ॥ दशयोजनविस्तीर्णंदैर्घ्येनच्छतयोजनम् ॥ १५ ॥ सहस्रचक्रयुक्तंचना

१ रावणोनामःकश्चनवैश्यः।

नाचित्रसमन्वितम् ॥ नानाविचित्रवसनैःसूक्ष्मैःक्षौमैर्विराजितम् ॥ १६ ॥ अमूल्यरत्ननिर्माणदर्पणैःपरिशोभितम् ॥ मणीन्द्र
जालमालाभैःपुष्पमालासहस्रकैः ॥ १७ ॥ सद्रत्नकलशैर्युक्तंरम्यैर्मन्दिरकोटिभिः ॥ त्रिलक्षकोटिभिःसार्द्धंगोपीभिश्चप्रियालि
भिः ॥ १८ ॥ ययौरथेनतेनैवसुमनोमालिनाप्रिये ॥ श्रुत्वाकोलाहलंगोपःसुदामाकृष्णपार्षदः ॥ १९ ॥ कृष्णंकृत्वासावधानंगोपैःसा
र्द्धंपलायितः ॥ भयेनकृष्णःसन्त्रस्तोविहायविरजांसतीम् ॥ २० ॥ स्वप्रेममग्नःकृष्णोऽपितिरोधानंचकारसः ॥ सासतीसमयंज्ञात्वावि
चार्य्यस्वहृदिक्रुधा ॥ २१ ॥ राधाप्रकोपभीताचप्राणांस्तत्याजतत्क्षणम् ॥ विरजालिगणास्तत्रभयविह्वलकातराः ॥ २२ ॥ प्रययुः
शरणंसाध्वींविरजांतत्क्षणंभिया ॥ गोलोकेसासरिद्रूपाजातावैशैलकन्यके ॥ २३ ॥ कोटियोजनविस्तीर्णादीर्घेशतगुणातथा ॥ गोलो
कंवेष्टयामासपरिखेवमनोहरा ॥ २४ ॥ बभूवुःक्षुद्रनद्यश्चतदान्यागोप्यएवच ॥ सर्वानद्यस्तदंशाश्चप्रतिविश्वेषुसुन्दरि ॥ २५ ॥ इमे
सप्तसमुद्राश्चविरजानन्दनाभुवि ॥ अथागत्यमहाभागाराधारासेश्वरीपरा ॥ २६ ॥ नदृष्ट्वाविरजांकृष्णंस्वगृहञ्चपुनर्ययौ ॥ जगामकृष्ण
स्तांराधांगोपालैरष्टभिःसह ॥ २७ ॥ गोपीभिर्द्वारियुक्ताभिर्वारितोपिपुनःपुनः ॥ दृष्ट्वाकृष्णञ्चसादेवीभर्त्सयामासतंतदा ॥२८॥ सुदा
माभर्त्सयामासतांतथाकृष्णसन्निधौ ॥ क्रुद्धाशशापसादेवीसुदामानंसुरेश्वरी ॥ २९ ॥ गच्छत्वमासुरींयोनिंगच्छदूरमतोद्रुतम् ॥ शशा
पतांसुदामाचत्वमितोगच्छभारतम्॥३०॥ भवगोपीगोपकन्यामुख्याभिःस्वाभिरेवच ॥ तत्रतेकृष्णविच्छेदोभविष्यतिशतंसमाः॥३१॥
तत्रभारावतरणंभगवांश्चकरिष्यति ॥ इतिशप्त्वासुदामासौप्रणम्यजननींहरिम् ॥ साश्रुनेत्रोमोहयुक्तस्ततोगंतुंसमुद्यतः ॥ ३२ ॥राधाज
गामतत्पश्चात्साश्रुनेत्रातिविह्वला ॥ वत्सक्वयासीत्युच्चार्य्यपुत्रविच्छेदकातरा ॥३३॥ कृष्णस्तांबोधयामासविद्यया चकृपानिधिः ॥ शीघ्रं
संप्राप्स्यसिसुतंमारुदस्त्वंवरानने ॥ ३४ ॥ सचासुरःशंखचूडोबभूवतुलसीपतिः ॥ मच्छूलभिन्नकायेनगोलोकंवैजगामसः ॥ ३५ ॥
राधाजगामवाराहेगोकुलंभारतंसती ॥ वृषभानोश्चवैश्यस्यसाचकन्यावभूवह ॥ ३६ ॥ अयोनिसम्भवादेवीवायुगर्भाकलावती ॥
सुषुवेमाययावायुंसातत्राविर्बभूवह ॥ ३७ ॥ अतीतेद्वादशाब्देतुदृष्ट्वातांनवयौवनाम् ॥ सार्द्धंरायाणवैश्येनतत्सम्बन्धंचकारसः ॥ ३८ ॥

छायांसंस्थाप्यतद्गेहेसान्तर्द्धानमवापह ॥ बभूवतस्यवैश्यस्यविवाहश्छाययासह ॥ ३९ ॥ गतेचतुर्दशाब्देतुकंसभीतेश्छलेनच ॥
जगामगोकुलंकृष्णःशिशुरूपीजगत्पतिः ॥ ४० ॥ कृष्णमातायशोदायारायाणस्तत्सहोदरः ॥ गोलोकेगोपकृष्णांशःसम्बन्धात्कृ
ष्णमातुलः ॥ ४१ ॥ कृष्णेनसहराधायाःपुण्येवृन्दावनेवने ॥ विवाहंकारयामासविधिनाजगतांविधिः ॥ ४२ ॥ स्वप्नेराधापदाम्भो
जंनहिपश्यन्तिवल्लवाः ॥ स्वयंराधाहरेःक्रोडेछायारायाणमन्दिरे ॥ ४३ ॥ षष्टिवर्षसहस्राणितपस्तेपेपुराविधिः ॥ राधिकाचरणांभो
जदर्शनार्थीचपुष्करे ॥ ४४ ॥ भारावतरणेभूमेर्भारतेनन्दगोकुले ॥ ददर्शतत्पदाम्भोजंतपसस्तत्फलेनच ॥ ४५ ॥ किञ्चित्कालंसवै
कृष्णःपुण्येवृन्दावनेवने ॥ रेमेगोलोकनाथश्चराधयासहभारते ॥ ४६ ॥ ततःसुदामशापेनविच्छेदश्चबभूवह ॥ तत्रभारावतरणंभूमेःकृष्ण
श्चकारसः ॥ ४७ ॥ शताब्देसमतीतेतुतीर्थयात्राप्रसङ्गतः ॥ ददर्शकृष्णंसाराधासचतांचपरस्परम् ॥ ४८ ॥ ततोजगामगोलोकंराध
यासहतत्त्ववित् ॥ कलावतीयशोदाचपर्ययगाद्राधयासह ॥ ४९ ॥ वृषभानुश्चनन्दश्चययौगोलोकमुत्तमम् ॥ सर्वेगोपाश्चगोप्यश्चययुस्ता
याःसमागताः ॥ ५० ॥ छायागोपाश्चगोप्यश्चप्रापुर्मुक्तिंचसन्निधौ ॥ रेमिरेताश्चतत्रैवसार्द्धंकृष्णेनपार्वति ॥ ५१ ॥ षट्त्रिंशल्लक्षको
ट्यश्चगोप्योगोपाश्चतत्समाः ॥ गोलोकंप्रययुर्मुक्ताःसार्धंकृष्णेनराधया ॥ ५२ ॥ द्रोणःप्रजापतिर्नन्दोयशोदातत्प्रियाधरा ॥ संप्रापपूर्वं
तपसापरमात्मानमीश्वरम् ॥ ५३ ॥ वसुदेवःकश्यपश्चदेवकीचादितिःसती ॥ देवमातादेवपिताप्रतिकल्पेस्वभावतः ॥ ५४ ॥ पितॄणांमा
नसीकन्याराधामाताकलावती ॥ वसुदामापिगोलोकाद्वृषभानुःसमाययौ ॥ ५५ ॥ इत्येवंकथितंदुर्गेराधिकाख्यानमुत्तमम् ॥ सम्पत्करं
पापहरंपुत्रपौत्रविवर्धनम् ॥५६॥ श्रीकृष्णश्चद्विधारूपोद्विभुजश्चचतुर्भुजः ॥ चतुर्भुजश्चवैकुण्ठेगोलोकेद्विभुजःस्वयम् ॥५७॥ चतुर्भुजस्य
पत्नीचमहालक्ष्मीःसरस्वती ॥ गङ्गाचतुलसीचैवदेव्योनारायणप्रियाः ॥ ५८ ॥ श्रीकृष्णपत्नीसाराधातदर्द्धाङ्गसमुद्भवा ॥ तेजसा
वयसासाध्वीरूपेणचगुणेनचं ॥ ५९ ॥ आदौराधांसमुच्चार्यपश्चात्कृष्णंवदेद्बुधः ॥ व्यतिक्रमेब्रह्महत्यांलभतेनात्रसंशयः ॥ ६० ॥ कार्त्ति
कीपूर्णिमायाञ्चगोलोकेरासमण्डले ॥ चकारपूजांराधायास्तत्सम्बन्धिमहोत्सवम् ॥ ६१ ॥ सद्रत्नघुटिकायाश्चकृत्वातत्कवचंहरिः ॥ दधा

रकण्ठेवाहौंचदक्षिणेसहगोपकैः ॥६२॥ कृत्वाधानञ्चभक्त्याचस्तोत्रमेतच्चकारसः ॥ राधाचर्वितताम्बूलंचखादमधुसूदनः ॥ ६३ ॥ राधापू
ज्याचकृष्णस्यतत्पूज्योभगवान्प्रभुः ॥ परस्पराभीष्टदेवेभेदकृन्नरकंव्रजेत ॥६४॥ द्वितीयेपूजितासाचधर्मेणब्रह्मणामया ॥ अनन्तवासुकि
भ्यांचरविणाशशिनापुरा ॥ ६५ ॥ महेन्द्रेणचरुद्रैश्चमनुनामानवेनच ॥ सुरेन्द्रैश्चमुनीन्द्रैश्चसर्वविश्वैश्चपूजिता ॥ ६६ ॥ तृतीयेपूजिता
साचसप्तद्वीपेश्वरेणच ॥ भारतेचसुयज्ञेनपुत्रैर्मित्रैर्मुदान्वितैः ॥ ६७ ॥ ब्राह्मणेनाभिशप्तेनदैवदोषेणभूभृता ॥ व्याधिग्रस्तेनहस्तेनदुःखिना
चविदूयता ॥ ६८ ॥ संप्रापराज्यंभ्रष्टश्रीःसचराधावरेणच ॥ स्तोत्रेणब्रह्मदत्तेनस्तुत्वाचपरमेश्वरीम् ॥ ६९ ॥ अभेद्यंकवचंतस्याःकण्ठे
वाहौदधारसः ॥ ध्यात्वाचकारपूजाञ्चपुष्करेशतवत्सरान् ॥ ७० ॥ अन्तेजगामगोलोकंरत्नयानेनभूमिपः ॥ इतितेकथितंसर्वंकिम्भूयः
श्रोतुमिच्छसि ॥ ७१ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादान्तर्गतहरगौरीसंवादेराधोपाख्यानेराधाया
सुदामशापादिकथनंनामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥ ॥ पार्वत्युवाच ॥ ॥ कोवासुयज्ञोनृपतिःकुत्रवंशेवभूवसः ॥
कथंविप्राभिशप्तश्चकथंसंप्रापराधिकाम् ॥ १ ॥ सर्वात्मनश्चकृष्णस्यपत्नीश्रीकृष्णपूजिताम् ॥ कथंविण्मूत्रधारीचसिषेवेपरमेश्वरीम् ॥
॥ २ ॥ षष्टिवर्षसहस्राणितपस्तेपेपुराविधिः ॥ यत्पादाम्भोजरेणूनांलब्धयेपुष्करेविभुः ॥ ३ ॥ कथंददर्शतांदेवींमहालक्ष्मींपुरा
सतीम् ॥ दुर्दर्शामपियुष्माकंदृश्यासाभूत्कथंनृणाम् ॥ ४ ॥ कथंत्रिजगतांधातातस्मैतत्कवचंददौ ॥ ध्यानंपूजाविधिंस्तोत्रंतस्या
व्याख्यातुमर्हसि ॥ ५ ॥ श्रीमहादेवउवाच ॥ स्वायम्भुवोमनुर्देविमनूनामादिरेवच ॥ ब्रह्मात्मजस्तपस्वीचशतरूपापतिःप्रभुः ॥ ६ ॥
उत्तानपादस्तत्पुत्रस्तत्पुत्रोध्रुवएवच ॥ ध्रुवस्यकीर्तिर्विख्यातस्त्रैलोक्येशैलकन्यके ॥ ७ ॥ उत्कलस्तस्यपुत्रश्चनारायणपरायणः ॥
सहस्रंराजसूयानांपुष्करेसचकारह ॥ ८ ॥ सर्वाणिरत्नपात्राणिब्राह्मणेभ्योददौमुदा ॥ अमूल्यरत्नराशीनांसहस्रंतेजसावृतम् ॥ ९ ॥
ब्राह्मणेभ्योददौराजायज्ञान्तेसमहोत्सवे ॥ दृष्ट्वातच्छोभनंयज्ञंविधाताजगतांप्रिये ॥ १० ॥ सुयज्ञंनामनृपतिंचकारसुरसंसदि ॥ सचरा
जासुयज्ञश्चमनुवंशसमुद्भवः ॥ ११ ॥ अन्नदातारत्नदातादातावैसर्वसम्पदाम् ॥ दशलक्षंगवाञ्चैवरत्नशृङ्गपरिच्छदम् ॥ १२ ॥ नित्यं

ददौसविप्रेभ्योमुदायुक्तःसदक्षिणम् ॥ गवांद्वादशलक्षाणांददौनित्यंमुदान्वितः ॥ १३ ॥ सुपक्वानिचमांसानित्राह्मणेभ्यश्चपार्वति ॥ षट्को
टीर्ब्राह्मणानाञ्चभोजयामासनित्यशः ॥ १४ ॥ चोष्यैश्चव्यैर्लेह्यपेयैरतितृप्तंदिनेदिने ॥ विप्रलक्षंसूपकारंभोजयामासतत्परम् ॥ १५ ॥
पूर्णमन्नञ्चसूपाक्तंसगव्यंमांसवर्जितम् ॥ विप्राभोजनकालेचमनुवंशसमुद्भवम् ॥ १६ ॥ नतुष्टुवुःसुयज्ञञ्चतुष्टुवुस्तत्तिपतृंश्वते ॥ दिनेसुयज्ञ
यज्ञान्तेपञ्चत्रिंशल्लक्षकोटयः ॥ १७ ॥ चक्रुःसुभोजनंविप्राश्चातितृप्ताश्चसुन्दरि ॥ गृहीतानिचरत्नानिस्वगृहंवोढुमक्षमाः ॥ १८ ॥ नृप
लेभ्योददुःकिञ्चित्किञ्चित्पथिचतत्यजुः ॥ विप्राणांभोजनान्तेचविप्रान्येभ्योददौनृपः ॥ १९ ॥ तथाप्युर्वरितंतत्रचान्नराशिसहस्रकम् ॥
कृत्वायज्ञंमहाबाहुःसमुवासम्वसंसदि ॥ २० ॥ रत्नेन्द्रसारसंकृतच्छत्रकोटिसमन्विते ॥ रत्नसिंहासनेरम्येपट्टवस्त्रैःसुसंस्कृते ॥ २१ ॥
चन्दनादिसुसंसृष्टैरम्येचन्दनपल्लवैः ॥ शाखायुक्तैःपूर्णकुम्भैरम्भावृक्षैश्चशोभिते ॥ २२ ॥ चन्दनागुरुकस्तूरीघनसिन्दूरसंस्कृते ॥
वसुवासवचन्द्रेन्द्ररुद्रादित्यसमन्विते ॥ २३ ॥ मुनिनारदमन्वादिब्रह्मविष्णुशिवान्विते ॥ एतस्मिन्नन्तरेतत्रविप्रएकःसमाययौ ॥ २४ ॥
रूक्षोमलिनवासाश्चशुष्ककण्ठोष्ठतालुकः ॥ रत्नसिंहासनस्थञ्चमाल्यचन्दनचर्चितम् ॥ २५ ॥ राजानमाशिषञ्चक्रेसस्मितःसम्पुटा
ञ्जलिः ॥ प्रणनामनृपस्तञ्चनोत्तस्थौकिंचिदेवहि ॥ २६ ॥ सभासदश्चनोत्तस्थुर्जहसुःस्वल्पमेवच ॥ मुनिभ्योपिचदेवेभ्योनमस्कृत्य
द्विजोत्तमः ॥ २७ ॥ शशापनृपतिंक्रोधात्तत्रातिष्ठन्निरङ्कुशः ॥ गच्छदूरमतोराज्याद्भ्रष्टश्रीर्भवपामर ॥ २८ ॥ भवाचिरंगलत्कुष्ठीबुद्धिही
नोऽप्युपद्रुतः ॥ इत्युक्त्वाकंपितःक्रोधात्सभास्थान्छप्तुमुद्यतः ॥ २९ ॥ येयत्रजहसुःसर्वेसमुत्तस्थुःसभासदः ॥ सर्वेचक्रुःप्रणामंतंक्रोधं
तत्याजब्राह्मणः ॥ ३० ॥ प्रणम्यागत्यराजातंरुरोदभयकातरः ॥ निस्ससारसभामध्याद्धृदयेनविदूयता ॥ ३१ ॥ ब्राह्मणोगूढरूपीच
प्रज्वलन्ब्रह्मतेजसा ॥ तत्पश्चान्मुनयःसर्वेप्रययुर्भयकातराः ॥ ३२ ॥ हेविप्रतिष्ठतिष्ठेतिसमुच्चार्य्यपुनःपुनः ॥ पुलहश्चपुलस्त्यश्चप्रचे
ताभृगुरंगिराः ॥ ३३ ॥ मरीचिःकश्यपश्चैववसिष्ठःक्रतुरेवच ॥ शुक्रोबृहस्पतिश्चैवदुर्वासालोमशस्तथा ॥ ३४ ॥ गौतमश्चकणादश्चकण्वः
कात्यायनःकठः ॥ पाणिनिर्जाजलिश्चैवऋष्यशृङ्गोविभाण्डकः ॥ ३५ ॥ तैत्तिरिश्चाप्यापिशलिर्मार्कण्डेयोमहातपाः ॥ सनकश्च

सनन्दश्चवोढुःपैलःसनातनः ॥ ३६ ॥ सनत्कुमारोभगवान्नरनारायणावृषी ॥ पराशरोजरत्कारुःसंवर्त्तःकरभस्तथा ॥ ३७ ॥ भरद्वाज
श्चवाल्मीकिरौर्वश्चच्यवनस्तथा ॥ अगस्त्योऽत्रिरुतथ्यश्चसङ्कर्तास्तीकआसुरिः ॥ ३८ ॥ शिलालिर्लाङ्गलिश्चैवशाकल्यःशाकटायनः ॥
गर्गोवत्सःपञ्चशिखोजमदग्निश्चदेवलः ॥ ३९ ॥ जैगीषव्योवामदेवोवालखिल्यादयस्तथा ॥ शक्तिर्दक्षःकर्दमश्चप्रस्कन्नःकपिलस्तथा ॥
॥ ४० ॥ विश्वामित्रश्चकौत्सश्चाप्यृचीकोऽप्यघमर्षणः ॥ एतेचान्येचमुनयःपितरोऽग्निर्हरिप्रियाः[1] ॥४१॥ दिक्पालादेवताःसर्वाविप्रंपश्चा
त्समाययुः॥ब्राह्मणंबोधयामासुर्वासयामासुरीश्वरि ॥ ४२ ॥ समूचुस्तंक्रमेणैवनीतिंर्नीतिविशारदाः ४३ ॥ इति श्रीब्रह्मवैवर्त्तमहापुराणे
द्वितीयेप्रकृतिखण्डेनारदनारायणसंवादान्तर्गतहरगौरीसंवादेराधोपाख्यानेसुयज्ञोपाख्यानंनामपञ्चाशत्तमोऽध्यायः ॥ ५० ॥ छ ॥
श्रीपार्वत्युवाच ॥ किमूचुर्ब्राह्मणंब्रह्मन्ब्राह्मणाब्रह्मणःसुताः ॥ नीतिज्ञानीतिवचनंतन्मांव्याख्यातुमर्हसि ॥ १ ॥ श्रीमहादेवउवाच ॥
सन्तोप्यतंब्राह्मणश्चस्तवेनविनयेनच ॥ क्रमेणवक्तुमारेभेमुनिसंवोवरानने ॥२॥ सनत्कुमारउवाच ॥ त्वत्पश्चादागतालक्ष्मीःकीर्तिःसत्त्वं
यशस्तथा ॥ सुशीलश्चमहैश्वर्यंपितरोऽग्निःसुरास्तथा ॥ ३ ॥ आगतानृपगेहेभ्यःकृत्वाभ्रष्टश्रियंनृपम् ॥ भवतुष्टोद्विजश्रेष्ठचाशुतोपश्च
वाडवः ॥ ४ ॥ ब्राह्मणानान्तुहृदयंकोमलंनवनीतवत् ॥ शुद्धंसुनिर्मलञ्चैवमार्जितंतपसामुने ॥ ५ ॥ क्षमस्वागच्छविप्रेन्द्रशुद्धंकुरुनृपा
लयम् ॥ आशिषंकुरुतस्मैत्वंपवित्रपदरेणुना ॥ ६ ॥ ॥ भृगुरुवाच ॥ ॥ अतिथिर्यस्यभग्नाशोगृहात्प्रतिनिवर्त्तते ॥ पितरस्तस्य
देवाश्चवह्निश्चैवतथैवच ॥ ७ ॥ निराशाःप्रतिगच्छन्तिचातिथेरप्रतिग्रहात् ॥ क्षमस्वागच्छविप्रेन्द्रशुद्धंकुरुनृपालयम् ॥ ८ ॥ स्त्रीघ्नैर्गोघ्नैः
कृतघ्नैश्चब्रह्मघ्नैर्गुरुतल्पगैः ॥ तुल्यदोषोभवत्येतैर्यस्यातिथिरनर्चितः ॥ ९ ॥ ॥ पुलस्त्यउवाच ॥ ॥ पश्यन्तियेवक्रदृष्ट्याचाति
थिंगृहमागतम् ॥ दत्त्वास्वपापंतस्मैतत्पुण्यमादायगच्छति ॥ १० ॥ क्षमस्वनृपदोषञ्चगच्छवत्सयथासुखम् ॥ राजास्वकर्मदोषेणनो
त्तस्थौतत्क्षमांकुरु ॥ ११ ॥ ॥ पुलहउवाच ॥ ॥ राजश्रियाविद्ययावाब्राह्मणंयोऽवमन्यते ॥ विप्रस्त्रिसन्ध्याहीनोयःश्रीहीनः

१ हविःप्रियाःइतिपाठः ।

क्षत्रियोभवेत् ॥ १२ ॥ एकादशीविहीनश्चविष्णुनैवेद्यवञ्चितः ॥ क्षमस्वागच्छविप्रेन्द्रशुद्धंकुरुनृपालयम् ॥ १३ ॥ ॥ क्रतुरुवाच ॥ ॥
ब्राह्मणःक्षत्रियोवापिवैश्योवाशूद्रएवच ॥ दीक्षाहीनोभवेत्सोऽपिब्राह्मणंयोऽवमन्यते ॥ १४ ॥ धनहीनःपुत्रहीनोभार्य्याहीनोभवेद्ध्रु
वम् ॥ क्षमस्वागच्छभगवञ्छुद्धंकुरुनृपालयम् ॥ १५ ॥ ॥ अङ्गिराउवाच ॥ ॥ ज्ञानवान्ब्राह्मणोभूत्वाब्राह्मणंयोऽवमन्यते ॥
वृषवाहोभवेत्सोऽपिभारतेसप्तजन्मसु ॥ १६ ॥ ॥ मरीचिरुवाच ॥ ॥ पुण्यक्षेत्रेभारतेचदेवश्चब्राह्मणंगुरुम् ॥ विष्णुभक्तिविहीन
श्चसभवेद्योऽवमन्यते ॥ १७ ॥ ॥ कश्यपउवाच ॥ ॥ वैष्णवंब्राह्मणंदृष्ट्वायोसत्यमवमन्यते ॥ विष्णुमन्त्रविहीनश्चतत्पूजाविर
तोभवेत् ॥ १८ ॥ ॥ प्रचेताउवाच ॥ ॥ अतिथिंब्राह्मणंदृष्ट्वानाभ्युत्थानंकरोतियः ॥ पितृभक्तिविहीनस्स्यात्सभवेद्भारते
भुवि ॥ १९ ॥ प्राप्नोतिकौञ्चरींयोनिंसमूढःसप्तजन्मसु ॥ शीघ्रंगच्छद्विजश्रेष्ठराज्ञेदेह्याशिषश्शुभाः ॥ २० ॥ ॥ दुर्वासाउवाच ॥ ॥
गुरुंवाब्राह्मणंवापिदेवताप्रतिमामपि ॥ दृष्ट्वाशीघ्रंनप्रणमेत्सभवेत्सूकरोभुवि ॥ २१ ॥ मिथ्यासाक्षीचभवतितथाविश्वासघातकः ॥
क्षमस्वसर्वमस्माकमातिथ्यग्रहणंकुरु ॥ २२ ॥ ॥ राजोवाच ॥ ॥ छलेनकथितोधर्मोयुष्माभिर्मुनिपुङ्गवैः ॥ सर्वंकृत्वाच
विस्पष्टंमांमूढंबोधयन्त्वहो ॥ २३ ॥ स्त्रीघ्नगोघ्नकृतघ्नानांगुरुस्त्रीगामिनान्तथा ॥ ब्रह्मघ्नानाञ्चकोदोषोब्रूतमांयोगिनांवराः ॥
॥ २४ ॥ ॥ वसिष्ठउवाच ॥ ॥ कामतोगोवधेराजन्वर्षंतीर्थंभ्रमेन्नरः ॥ यवयावकभोजीचकरेणचजलंपिबेत् ॥ २५ ॥ तदा
धेनुशतंदिव्यंब्राह्मणेभ्यःसदक्षिणम् ॥ दत्त्वामुच्यतिपापाच्चभोजयित्वाशतंद्विजान् ॥ २६ ॥ प्रायश्चित्तेतुवैचीर्णेसर्वपापात्प्रमुच्यते ॥
पापावशेषाद्भवतिदुःखीचाण्डालएवच ॥ २७ ॥ आतिदेशिकहत्यायांतदर्धंफलमश्नुते ॥ प्रायश्चित्तानुकल्पेनसर्वपापात्प्रमुच्यते ॥
॥ २८ ॥ ॥ शुक्रउवाच ॥ ॥ गोहत्याद्विगुणंपापंस्त्रीहत्यायांभवेद्ध्रुवम् ॥ षष्टिवर्षसहस्राणिकालसूत्रेवसेद्ध्रुवम् ॥ २९ ॥
ततोभवेन्महापापीसूकरःसप्तजन्मसु ॥ ततोभवतिसर्पश्चसप्तजन्मन्यतःशुचिः ॥ ३० ॥ ॥ बृहस्पतिरुवाच ॥ ॥ स्त्रीहत्या
द्विगुणंपापंब्रह्महत्याकृतोभवेत् ॥ लक्षवर्षंमहाघोरेकुम्भीपाकेवसेद्ध्रुवम् ॥ ३१ ॥ ततोभवेन्महापापीविष्टाकीटःशताब्दकम् ॥

ततोभवतिसर्पश्चसप्तजन्मन्यतःशुचिः ॥ ३२ ॥ ॥ गौतमउवाच ॥ ॥ दोषःकृतघ्नेराजेन्द्रब्रह्महत्याचतुर्गुणः ॥ निष्कृतिर्नास्ति
वेदोक्ताकृतघ्नानाञ्चनिश्चितम् ॥ ३३ ॥ ॥ राजोवाच ॥ ॥ लक्षणञ्चकृतघ्नानांवदवेदविदांवर ॥ कृतघ्नःकतिधाप्रोक्तःकेपुकोदो
षएवच ॥ ३४ ॥ ॥ ऋष्यशृङ्गउवाच ॥ ॥ कृतघ्नाःषोडशविधाःसामवेदेनिरूपिताः ॥ सर्वःप्रत्येकदोषेणप्रत्येकंफलम
श्नुते ॥ ३५ ॥ कृतेसत्येचपुण्येचस्वधर्मेतपसिस्थिते ॥ प्रतिज्ञायाञ्चदानेचस्वगोष्ठीपरिपालने ॥ ३६ ॥ गुरुकृत्येदेवकृत्येकाम्य
कृत्येद्विजार्चने ॥ नित्यकृत्येचविश्वासेपरधर्मप्रदानयोः ॥ ३७ ॥ एतान्योहन्तिपापिष्ठःसकृतघ्नइतिस्मृतः ॥ एतेषांसन्ति
लोकाश्चतज्जन्मभिन्नयोनिषु ॥ ३८ ॥ यान्यांश्चनरकांस्तेचयान्तिराजेन्द्रपापिनः ॥ तेतेचनरकाःसन्तियमलोकेसुनिश्चितम् ॥ ३९ ॥
॥ ॥ सुयज्ञउवाच ॥ ॥ केकिंकृत्वाकृतघ्नाश्चकान्कान्गच्छन्तिरौरवान् ॥ प्रत्येकंश्रोतुमिच्छामिवक्तुमर्हसिमेप्रभो ॥ ४० ॥
॥ कात्यायनउवाच ॥ ॥ कृत्वाशपथरूपञ्चसत्यंहन्तिनपालयेत् ॥ सकृतघ्नःकालसूत्रेवसेदेवचतुर्युगम् ॥ ४१ ॥ सप्तजन्मसुकाकश्चसप्त
जन्मसुपेचकः ॥ ततःशूद्रोमहाव्याधिःसप्तजन्मस्वतःशुचिः ॥ ४२ ॥ ॥ श्रीसनन्दनउवाच ॥ ॥ पुण्यंकृत्वावदत्येवकीर्तिवर्द्धनहेतुना ॥
सकृतघ्नस्तप्तसूर्म्यांवसत्येवयुगत्रयम् ॥ ४३ ॥ पञ्चजन्मसुमण्डूकस्त्रिषुजन्मसुकर्कटः ॥ तदामूकोमहाव्याधिर्दरिद्रश्चततःशुचिः ॥ ४४ ॥
॥ ॥ सनातनउवाच ॥ ॥ स्वधर्मंहन्तियोविप्रःसन्ध्यात्रयविवर्जितः ॥ अतर्पयंश्चयत्स्नातिविष्णुनैवेद्यवर्जितः ॥ ४५ ॥
विष्णुपूजाविहीनश्चविष्णुमन्त्रविहीनकः ॥ एकादशीविहीनश्चश्रीकृष्णजन्मदिनेतदा ॥ ४६ ॥ शिवरात्रौचयोभुङ्क्तेश्रीरामनवमीदि
ने ॥ पितृकृत्यादिहीनोयःसकृतघ्नइतिस्मृतः ॥ ४७ ॥ कुम्भीपाकेवसत्येवंयावदिन्द्राश्चतुर्दश ॥ ततश्चाण्डालतांयातिसप्तजन्मसुनिश्चि
तम् ॥ ४८ ॥ शतजन्मनिगृध्रश्चशतजन्मनिसूकरः ॥ ततोभवेद्ब्राह्मणश्चशूद्राणांसूपकारकः ॥ ४९ ॥ ततोभवेज्जन्मसप्तब्राह्मणोवृष
वाहकः ॥ शूद्राणांशवदाहीचभवेत्सप्तसुजन्मसु ॥ ५० ॥ द्विजोभूत्वासप्तजन्मभारतेवृषलीपतिः ॥ भुक्त्वास्वभोगलेशञ्चभ्रमित्वायाया
तिरौरवम् ॥ ५१ ॥ पुनःपुनः पापयोनिंनरकञ्चपुनःपुनः ॥ ततोभवेद्गर्दभश्चमार्जारःपञ्चजन्मसु ॥ ५२ ॥ पञ्चजन्मसुमण्डूकोभवे

च्छुद्धस्ततःक्रमात् ॥ ५३ ॥ सुयज्ञउवाच ॥ शूद्राणांमूपकरणेशूद्राणांशवदाहने ॥ शूद्रान्नभोजनेवापिशूद्रस्त्रीगमनेऽपिच ॥ ५४ ॥
ब्राह्मणानांचकोदोषोवृषाणांवाहनेतथा ॥ एतान्सर्वान्समालोच्यब्रूहिमांनिश्चयंमुने ॥ ५५ ॥ पराशरउवाच ॥ शूद्राणांमूपका
रश्चयोविप्रोज्ञानदुर्बलः ॥ असिपत्रेवसत्येवयुगानामेकसप्ततिः ॥ ५६ ॥ ततोभवेद्गर्दभश्चमूषिकः सप्तजन्मसु ॥ तैलकीटस्सप्तजन्मस्व
तःशुद्धोभवेन्नरः ॥ ५७ ॥ जरत्कारुरुवाच ॥ भृत्यद्वारास्वयंवापियोविप्रोवृषवाहकः ॥ सकृतघ्नइतिख्यातःप्रसिद्धोभारतेनृप ॥ ५८ ॥
ब्रह्महत्यासमंपापंतन्नित्यंवृषताडने ॥ वृषपृष्ठेभारदानात्पापंतद्द्विगुणंभवेत् ॥ ५९ ॥ सूर्य्यातपेवाहयेद्यःक्षुधितंतृषितंवृषम् ॥ ब्रह्म
हत्याशतंपापंलभतेनात्रसंशयः ॥ ६० ॥ अन्नंविष्ठाजलंमूत्रंविप्राणांवृषवाहिनाम् ॥ नाधिकारोभवेत्तेषांपितृदेवार्चनेनृप ॥ ६१ ॥ ला
लाकुण्डेवसत्येवयावच्चन्द्रदिवाकरौ ॥ विष्ठाभक्ष्यंमूत्रजलंतत्रतस्यभवेद्ध्रुवम् ॥ ६२ ॥ त्रिसन्ध्यंताडयेत्तञ्चशूलेनयमकिङ्करः ॥ उल्कां
ददातिमुखतःसूच्याकृन्ततिसन्ततम् ॥ ६३ ॥ षष्टिवर्षसहस्राणिविष्ठायाञ्चकृमिर्भवेत् ॥ ततःकाकोपञ्चजन्मस्वथैवंचकएवच ॥
॥ ६४ ॥ पञ्चजन्मसुगृध्रश्चशृगालःसप्तजन्मसु ॥ ततोदरिद्रःशूद्रश्चमहाव्याधिस्ततःशुचिः ॥ ६५ ॥ भारद्वाज उवाच ॥ शूद्राणांशव
दाहीयःसकृतघ्नइतिस्मृतः ॥ वयःप्रमाणांराजेन्द्रब्रह्महत्यांलभेद्ध्रुवम् ॥ ६६ ॥ तत्तुल्ययोनिभ्रमणात्तत्तुल्यनरकाच्छुचिः ॥ योदो
षोब्राह्मणानांचशूद्राणांशवदाहने ॥ ६७ ॥ तावद्देवभवेद्दोषःशूद्रश्राद्धान्नभोजने ॥ ६८ ॥ विभाण्डक उवाच ॥ पितृश्राद्धेचशूद्राणांभु
ङ्क्तेयोब्राह्मणोऽधमः ॥ सुरापीतीब्रह्मघातीपितृदेवार्चनाद्बहिः ॥ ६९ ॥ मार्कण्डेयउवाच ॥ योदोषोब्राह्मणानाञ्चशूद्रस्त्रीगमनेनृप ॥
अहंवक्ष्यामिवेदोक्तंसावधानंनिशामय ॥ ७० ॥ कृतघ्नानांप्रधानश्चयोविप्रोवृषलीपतिः ॥ कृमिदंष्ट्रेवसेत्सोऽपियावदिन्द्राश्चतुर्दश ॥७१॥
कृमिभक्ष्योभवेद्विप्रोविह्वलोयमकिङ्करैः ॥ प्रतिमांतांतप्तलौहीमाश्लेषयतिनित्यशः ॥ ७२ ॥ ततश्चपुंश्चलीयोनौकृमिर्भवतिनिश्चि
तम् ॥ एवंवर्षसहस्रञ्चततःशूद्रस्ततःशुचिः ॥ ७३ ॥ सुयज्ञउवाच ॥ अन्येषांचकृतघ्नानांवदकर्मफलंमुने ॥ श्लाघ्योमेब्राह्मशापश्चक

१ विद्धश्चेतिपाठः ।

स्यसम्पद्धिनापदम् ॥ ७४ ॥ धन्योऽहंकृतकृत्योऽहंसफलंजीवनंमम ॥ आगतास्तुयतोमुक्तामद्गेहेमुनयःसुराः ॥ ७५ ॥ इति श्रीब्र
ह्मवैवर्त्तेमहापुराणेद्वि० प्र०. नारदनारायणसंवादेनृपमुनिसंवादेराधोपाख्यानेकर्मविपाकोनामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥
॥ श्रीपार्वत्युवाच ॥ अन्येषाञ्चकृतघ्नानांयद्यत्कर्मफलंप्रभो ॥ तेषांकिमूचुर्मुनयोवेदवेदाङ्गपारगाः ॥ १ ॥ श्रीमहेश्वरउवाच ॥ प्रश्नंकुर्वतिराजे
न्द्रेसर्वेषुमुनिषुप्रिये ॥ तत्रप्रवक्तुमारेभेऋषिर्नारायणोमहान् ॥ २ ॥ श्रीनारायणउवाच ॥ स्वदत्तांपरदत्तांवाब्रह्मवृत्तिंहरेत्तुयः ॥ सकृतघ्नइति
ज्ञेयःफलञ्चशृणुभूमिप ॥ ३ ॥ यावन्तोरेणवःसिक्ताविप्राणांनेत्रविन्दुभिः ॥ तावद्वर्षसहस्रञ्चशूलपोतेसतिष्ठति ॥ ४ ॥ तप्ताङ्गारञ्चतद्भ
क्ष्यंपानंचैतत्तमूत्रकम् ॥ तप्तांगारेचशयनंताडितोयमकिङ्करैः ॥ ५ ॥ तदन्तेचमहापापीविष्ठायांजायतेकृमिः ॥ षष्टिवर्षसहस्राणिदेव
मानेनभारते ॥ ६ ॥ ततोभवेद्भूमिहीनःप्रजाहीनश्चमानवः ॥ दरिद्रःकृपणोरोगीशूद्रोनिन्द्यस्ततःशुचिः ॥ ७ ॥ नारदउवाच ॥
हन्तियःपरकीर्त्तिञ्चस्वकीर्त्तिंवानराधमः ॥ सकृतघ्नइतिख्यातस्तत्फलञ्चनिशामय ॥ ८ ॥ अन्धकूपेवसेत्सोऽपियावदिन्द्राश्चतुर्दश ॥
कीटैर्नकुलगृध्रैश्चभक्षितःसततंनृप ॥ ९ ॥ तप्तक्षारोदकंपापीनित्यंपिबतिचैततः ॥ सप्तजन्मस्वतःसर्पःकाकःपञ्चस्वतःशुचिः ॥ १० ॥
॥ देवलउवाच ॥ ब्रह्मस्वंवागुरुस्वंवादेवस्वंवापियोहरेत् ॥ सकृतघ्नइतिज्ञेयोमहापापीचभारते ॥ ११ ॥ अवटोदेवसेत्सोऽपियावदि
न्द्राश्चतुर्दश ॥ ततोभवेत्सुरापीसततःशूद्रस्ततःशुचिः ॥ १२ ॥ जैगीषव्यउवाच ॥ पितृमातृगुरूंश्चापिभक्तिहीनोनपालयेत् ॥
वाचापिताडयेत्तांश्चसकृतघ्नइतिस्मृतः ॥ वाचाचताडयेन्नित्यंस्वामिनंकुलटाचया ॥ १३ ॥ साकृतघ्नीतिविख्याताभारतेपापिनीवरा ॥
वह्निकुण्डंमहाघोरंतौप्रयातस्सुनिश्चितम् ॥ १४ ॥ तत्रवह्नौवसत्येवयावच्चन्द्रदिवाकरौ ॥ ततोभवेज्जलौकाश्चसप्तजन्मस्वतःशुचिः ॥ १५ ॥
॥ वाल्मीकिरुवाच ॥ यथातरुषुवृक्षत्वंसर्वत्रनजहातिच ॥ तथाकृतघ्नताराजन्सर्वपापेषुवर्त्तते ॥ १६ ॥ मिथ्यासाक्ष्यंयोददातिकामात्क्रो
धात्तथाभयात् ॥ सभायांपाक्षिकंवक्तिसकृतघ्नइतिस्मृतः ॥ १७ ॥ पुण्यमात्रंचापिराजन्योहन्तिसकृतघ्नकः ॥ सर्वत्रापिचसर्वेषांपुण्य
हानौकृतघ्नता ॥ १८ ॥ मिथ्यासाक्ष्यंपाक्षिकंवाभारतेवक्तियोनृप ॥ यावदिन्द्रसहस्रञ्चसर्पकुण्डेवसेद्ध्रुवम् ॥ १९ ॥ सन्ततंवेष्टितः

सर्पैर्भीतोवैभक्षितस्तथा ॥ भुङ्क्तेचसर्वविण्मूत्रंयमदूतेनताडितः ॥ २० ॥ कृकलासोभवेत्तत्रभारतेसप्तजन्मसु ॥ सप्तजन्मसुमण्डूकः
पितृभिःसप्तभिःसह ॥ २१ ॥ ततोभवेद्वैवृक्षश्चमहारण्येतुशाल्मलिः ॥ ततोभवेन्नरोमूकस्ततःशूद्रस्ततःशुचिः ॥ २२ ॥ आस्तीकउ
वाच ॥ गुर्वङ्गनानांगमनेमातृगामीभवेन्नरः ॥ नराणांमातृगमनेप्रायश्चित्तंनविद्यते ॥ २३ ॥ भारतेचनृपश्रेष्ठयोदोषोमातृगामिनाम् ॥
ब्राह्मणीगमनेचैवशूद्राणांतावदेवहि ॥ २४ ॥ ब्राह्मण्यास्तावदेवस्याद्दोषःशूद्रेणमैथुने ॥ कन्यानांपुत्रपत्नीनांश्वश्रूणांगमनेतथा ॥ २५ ॥
सगर्भभ्रातृपत्नीनांभगिनीनांतथैवच ॥ दोषंवक्ष्यामिराजेन्द्रयदाहकमलोद्भवः ॥२६॥ यःकरोतिमहापापीचैताभिःसहमैथुनम् ॥ जीवन्मृ
तोभवेत्सोऽपिचंडालोऽस्पृश्यएवच॥२७॥नाधिकारोभवेत्तस्यसूर्य्यमण्डलदर्शने॥शालग्रामंतज्जलञ्चतुलस्याश्चदलंजलम् ॥२८॥ सर्वती
र्थंजलञ्चैवविप्रपादोदकंतथा ॥ स्प्रष्टुञ्चनैवशक्नोतिविट्तुल्यःपातकीनरः ॥२९॥ देवंगुरुंब्राह्मणञ्चनमस्कर्त्तुंनचार्हति ॥ विष्ठाधिकंतदन्न
ञ्चजलंमूत्राधिकन्तथा ॥ ३० ॥ देवताःपितरोविप्रानैवगृह्णन्तिभारते ॥ भवेत्तदङ्गवातेनतीर्थमङ्गारवाहनम् ॥ ३१ ॥ सप्तरात्रंह्युपवसेदेव
स्पर्शात्तथाद्विजः ॥ भाराक्रान्ताचपृथिवीतद्भारंवोढुमक्षमा ॥३२॥ तत्पापात्पतितोदेशःकन्याविक्रयिणोयथा ॥ तत्स्पर्शाच्चतदालापा
च्छय्यनाश्रयभोजनात् ॥ ३३ ॥ नृणांचतत्समंपापंभवत्येवनसंशयः ॥ कुम्भीपाकेवसेत्सोऽपियावद्वैब्रह्मणःशतम् ॥ ३४ ॥ दिवानिशंभ्र
मेत्तत्रचक्रावर्त्तंनिरन्तरम् ॥ दग्धोवाग्निशिखाभिश्चयमदूतैश्चताडितः ॥ ३५ ॥ एवंनित्यंमहापापीभुङ्क्तेनिरययातनाम् ॥ विष्ठाहारश्च
सर्वत्रकुम्भीपाकेथपातितः ॥ ३६ ॥ गतेप्राकृतिकेघोरेमहतिप्रलयेतथा ॥ पुनःसृष्टेःसमारम्भेतद्विधोवाभवेत्पुनः ॥ ३७ ॥ षष्टिवर्ष
सहस्राणिविष्ठायांचकृमिर्भवेत् ॥ ततोभवतिचण्डालोभार्य्याहीनोनपुंसकः ॥ ३८ ॥ सप्तजन्मसुशूद्रश्चगलत्कुष्ठीनपुंसकः ॥ ततो
भवेद्ब्राह्मणश्चाप्यन्धःकुष्ठीनपुंसकः ॥ ३९ ॥ लब्ध्वैवंसप्तजन्मानिमहापापीभवेच्छुचिः ॥ ४० ॥ मुनयऊचुः ॥ इत्येवंकथितंसर्वमस्मा
भिर्वोयथागमम् ॥ एभिस्तुल्योभवेद्दोषोऽप्यतिथीनांपराभवे ॥ ४१ ॥ प्रणामंकुरुविप्रेन्द्रंगृहंप्रापयनिश्चितम् ॥ संपूज्यब्राह्मणंयत्ना
द्गृहीत्वाब्राह्मणाशिषम् ॥ ४२ ॥ वनंगच्छमहाराजतपस्यांकुरुसत्वरम् ॥ ब्रह्मशापैर्विनिर्मुक्तःपुनरेवागमिष्यसि ॥ ४३ ॥ इत्युक्त्वा

मुनयः सर्वेययुस्तूर्णंस्वमन्दिरम् ॥ सुराश्चापिचराजानोबन्धुवर्गाश्चपार्वति ॥ ४४ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारद
नारायणसंवादेहरगौरीसंवादेराधोपाख्यानेसुयज्ञोपाख्यानेकर्मविपाकोनामद्विपञ्चाशत्तमोऽध्यायः ॥५२॥ ॥छ॥ ॥ श्रीपार्वत्युवाच ॥ ॥
गतेषुमुनिसंघेषुश्रुत्वाकर्मफलंनृणाम् ॥ किञ्चकारनृपश्रेष्ठोब्रह्मशापेनविह्वलः ॥ १ ॥ अतिथिर्ब्राह्मणोवापिकिञ्चकारतदाप्रभो ॥
जगामनृपगेहंवानवातद्वक्तुमर्हसि ॥ २ ॥ ॥ महेश्वरउवाच ॥ ॥ गतेषुमुनिसंघेषुनिन्दाग्रस्तोनराधिपः ॥ प्रेरितश्चव
सिष्ठेनधर्मिष्ठेनपुरोधसा ॥ ३ ॥ पपातदण्डवद्भूमौपादयोर्ब्राह्मणस्यच ॥ त्यक्तामन्युंद्विजश्रेष्ठोददौतस्मैशुभाशिषम ॥ ४ ॥
सस्मितंब्राह्मणंदृष्ट्वात्यक्तमन्युंकृपामयम् ॥ उवाचनृपतिश्रेष्ठःसाश्रुनेत्रःकृताञ्जलिः ॥ ५ ॥ ॥ राजोवाच ॥ ॥ कुत्रवंशे
भवाञ्जातःकिंनामभवतःप्रभो ॥ किंनामवापितब्रूहिक्ववासःकथमागतः ॥ ६ ॥ विप्ररूपीस्वयंविष्णुर्गूढःकपटमानुषः ॥
साक्षात्समूर्तिमानग्निःप्रज्वलन्ब्रह्मतेजसा ॥ ७ ॥ कोवागुरुस्तेभगवन्निष्टदेवश्चभारते ॥ तवेषःकथमयंज्ञानपूर्णस्यसाम्प्रतम् ॥
॥ ८ ॥ गृहाणराज्यंनिखिलमैश्वर्य्यंकोशमेवच ॥ स्वभृत्यंकुरुमेपुत्रंमाञ्चदासींस्त्रियंमुने ॥ ९ ॥ सप्तसागरसंयुक्तांसप्तद्वीपां
वसुन्धराम् ॥ अष्टादशोपद्वीपाढ्यांसशैलवनशोभिताम् ॥ १० ॥ मयाभृत्येनशाधित्वंराजेन्द्रोभवभारते ॥ रत्नेन्द्रसारखचितेतिष्ठ
सिंहासनेवरे ॥ ११ ॥ नृपस्यवचनंश्रुत्वाजहासमुनिपुङ्गवः ॥ उवाचपरमंतत्त्वमज्ञातंसर्वदुर्लभम् ॥ १२ ॥ ॥ अतिथिरुवाच ॥ ॥
मरीचिर्ब्रह्मणःपुत्रस्तत्पुत्रःकश्यपःस्वयम् ॥ कश्यपस्यसुताःसर्वेप्रापुर्देवत्वमीप्सितम् ॥ १३ ॥ तेषुत्वष्टामहाज्ञानीचकारपरमंतपः ॥
दिव्यंवर्षसहस्रञ्चपुष्करेदुष्करंतपः ॥ १४ ॥ सिषेवेब्राह्मणार्थञ्चदेवदेवंहरिंपरम् ॥ नारायणाद्वरंप्रापविप्रंतेजस्विनंसुतम ॥ १५ ॥ ततो
बभूवतेजस्वीविश्वरूपस्तपोधनः ॥ पुरोधसंचकारेन्द्रोवाक्पतौतंकुधागते ॥ १६ ॥ मातामहेभ्योदैत्येभ्योदत्तवन्तंघृताहुतिम् ॥ चिच्छे
दतंशुनासीरोब्राह्मणंमातुराज्ञया ॥१७॥ विश्वरूपस्यतनयोविरूपोमत्पितानृप ॥ अहञ्चसुतपानामविरागीकाश्यपोद्विजः ॥ १८ ॥ ॥१३६॥

१ मातामहः-इतिपाठः ।

महादेवोममगुरुर्विद्याज्ञानमनुप्रदः ॥ अभीष्टदेवःसर्वात्माश्रीकृष्णःप्रकृतेःपरः ॥ १९ ॥ तच्चिन्तयामिपादाब्जंनमेवाञ्छास्ति
सम्पदि ॥ सालोक्यसार्ष्टिसारूप्यसामीप्यंराधिकापतेः ॥२०॥ तेनदत्तंनगृह्णामिविनातत्सेवनंशुभम् ॥ ब्रह्मत्वममरत्वंवामन्येऽहंजल
विम्बवत् ॥२१॥ भक्तिव्यवहितंमिथ्याभ्रममेवतुनश्वरम् ॥ इन्द्रत्वंवामनुत्वंवासौरत्वंवानराधिप॥२२॥नमन्येजलरेखेतिनृपत्वंकेनगण्य
ते ॥ श्रुत्वासुयज्ञयज्ञेतेमुनीनांगमनंनृप ॥ २३ ॥ लालसांविष्णुभक्तिंतेसंप्रापयितुमागतः ॥ केवलानुगृहीतस्त्वंनहिशप्तोमयाधुना ॥२४॥
समुद्धृतश्चपतितोघोरेनिम्नेभवार्णवे ॥ नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ २५ ॥ तेपुनन्त्युरुकालेनकृष्णभक्ताश्चदर्शनात् ॥
राजन्निर्गम्यतांगेहाद्देहिराज्यंसुतायच ॥२६॥ पुत्रेन्यस्यप्रियांसाध्वींगच्छवत्सवनंद्रुतम् ॥ब्रह्मादिस्तम्बपर्य्यन्तंसर्वंमिथ्यैवभूमिप ॥२७॥
श्रीकृष्णंभजराधेशंपरमात्मानमीश्वरम् ॥ ध्यानसाध्यंदुराराध्यंब्रह्मविष्णुशिवादिभिः ॥२८॥ आविर्भूतैस्तिरोभूतैःप्राकृतैःप्रकृतेःपरम् ॥
ब्रह्मास्रष्टाहरिःपाताहरःसंहारकारकः ॥ २९ ॥ दिक्पालाश्चदिगीशाश्चभ्रमन्त्येवास्यमायया ॥ यदाज्ञयावातिवायुःसूर्योदिनपतिःसदा ॥
॥ ३० ॥ निशापतिःशशीशश्वत्सस्यसुस्निग्धताकरः ॥ कालेनमृत्युःसर्वेषांसर्वविश्वेषुवैभवेत् ॥ ३१ ॥ कालेवर्षतिशक्रश्चदहत्यग्निश्च
कालतः ॥ भीतवद्रिश्वशास्ताचप्रजासंयमनोयमः ॥ ३२ ॥ कालःसंहरतेकालेकालेसृजतिपातिच ॥ स्वदेशेवैसमुद्रश्चस्वदेशेवैवसुन्धरा
॥ ३३ ॥ स्वदेशेपर्वताश्चैवस्वाःपातालाःस्वदेशतः ॥ स्वर्लोकाःसप्तराजेन्द्रसप्तद्वीपावसुन्धरा ॥ ३४ ॥ शैलसागरसंयुक्ताःपातालाः
सप्तचैवहि ॥ ब्रह्माण्डमेभिर्लोकैश्चडिम्बाकारंजलप्लुतम् ॥ ३५ ॥ सन्त्येवप्रतिविश्वाण्डेब्रह्मविष्णुशिवादयः ॥ सुरानराश्चनागाश्चगन्धर्वा
राक्षसादयः ॥ ३६ ॥ आपातालाद्ब्रह्मलोकपर्य्यन्तंडिम्बरूपकम् ॥ इदमेवतुविश्वाण्डमुत्तमंकृत्रिमंनृप ॥३७॥ नाभिपद्मेविराड्विष्णोः
क्षुद्रस्यजलशायिनः ॥ स्थितंयथापद्मवीजंकर्णिकायाञ्चपङ्कजे ॥३८॥ एवंसोऽपिशयानस्स्याज्जलतल्पेसुविप्लुते॥ ध्यायत्येवमहायो
गीप्राकृतःप्रकृतेःपरम् ॥ ३९ ॥ कालभीतश्चकालेशंकृष्णमात्मानमीश्वरम् ॥ महाविष्णोर्लोमकूपसाधारःसोऽस्तिविस्तृते ॥ कूपेषुलो
म्नांप्रत्येकमेवंविश्वानिसन्तिवै ॥ ४० ॥ महाविष्णोर्गात्रलोम्नांब्रह्माण्डानाञ्चभूमिप ॥ संख्यांकर्त्तुंनशक्नोतिकृष्णोऽप्यन्यस्यका

कथा ॥ ४१ ॥ महाविष्णुःप्राकृतिकःसोऽपिडिम्बोद्भवःसदा ॥ भवेत्कृष्णेच्छयाडिम्बःप्रकृतेर्गर्भसम्भवः ॥ ४२ ॥ सर्वाधारोमहान्वि
ष्णुःकालभीतःसशङ्कितः ॥ कालेशंध्यायतिस्वैरंकृष्णमात्मानमीश्वरम् ॥ ४३ ॥ एवञ्चसर्वविश्वस्थाब्रह्मविष्णुशिवादयः ॥ महान्विराट्
क्षुद्रविराट्सर्वेप्राकृतिकाःसदा ॥ ४४ ॥ सासर्वबीजरूपाचमूलप्रकृतिरीश्वरी ॥ कालेलीनाचकालेशंकृष्णेतंध्यातिस्मसा ॥ ४५ ॥
एवंसर्वेकालभीताःप्रकृतिःप्राकृतास्तथा ॥ आविर्भूतास्तिरोभूताःकालेनपरमात्मनि ॥ ४६ ॥ इत्येवंकथितंसर्वंमहाज्ञानंसुदुर्ल
भम् ॥ शिवेनगुरुणादत्तंकिंभूयःश्रोतुमिच्छसि ॥ ४७ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादान्त
र्गतहरगौरीसंवादेराधोपाख्यानेसुयज्ञोपाख्यानेसुयज्ञंप्रत्यतिथ्युपदेशोनामत्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ राजोवाच ॥ ॥
कुत्राधारोमहाविष्णोःसर्वाधारस्यतस्यच ॥ कालभीतस्यकतिचकालमायामुनीश्वर ॥ १ ॥ क्षुद्रस्यकतिचित्कालंब्रह्मणःप्रकृते
स्तथा ॥ मनोरिन्द्रस्यचन्द्रस्यसूर्य्यस्यायुस्तथैवच ॥ २ ॥ अन्येषांवैजनानाञ्चप्राकृतानांपरंवयः ॥ वेदोक्तंसुविचार्य्यञ्चवदवे
दविदांवर ॥३॥ विश्वानामूर्ध्वभागेचकस्स्याद्ब्रह्मलोकएवसः ॥ कथयस्वमहाभागसन्देहच्छेदनंकुरु ॥४॥ ॥ मुनिरुवाच ॥ गोलोकोनृपवि
श्वानांविस्तृतश्चनभस्समः ॥ तथानित्यंडिम्बरूपश्श्रीकृष्णेच्छासमुद्भवः ॥ ५ ॥ जलेनपरिपूर्णश्चकृष्णस्यमुखविन्दुना ॥ सृष्ट्यु
न्मुखस्यादिसर्गेपरिश्रान्तस्यखेलतः ॥ ६ ॥ प्रकृत्यासहयुक्तस्यकलयानिजयानृप ॥ तत्राधारोमहाविष्णोर्विश्वाधारस्यविस्तृ
तः ॥ ७ ॥ प्रकृतेर्गर्भसंयुक्तडिम्बोद्भूतस्यभूमिप ॥ सुविस्तृतेजलाधारेशयानश्चमहाविराट् ॥ ८ ॥ राधेश्वरस्यकृष्णस्यषोडशांशः
प्रकीर्त्तितः ॥ दूर्वादलश्यामरूपःसस्मितश्चचतुर्भुजः ॥ ९ ॥ वनमालाधरःश्रीमाञ्छोभितःपीतवाससा ॥ ऊर्ध्वंनभसितंद्विष्णो
र्नित्यवैकुण्ठएवच ॥ १० ॥ आत्माकाशसमोनित्योविस्तृतश्चन्द्रबिम्ववत् ॥ ईश्वरेच्छासमुद्भूतोनिर्लक्ष्यश्चनिराश्रयः ॥११॥ आकाश
वत्सुविस्तारोरत्नौघैश्चविनिर्मितः ॥ तत्रनारायणःश्रीमान्वनमालीचतुर्भुजः ॥ १२ ॥ लक्ष्मीसरस्वतीगङ्गातुलसीपतिरीश्वरः ॥

१ संभूतइतिपाठः । २ संविष्टोनित्यवैकुण्ठएवचेतिपाठः ।

सुनन्दनन्दकुमुदपार्षदादिभिरावृतः ॥ १३ ॥ सर्वेशःसर्वसिद्धेशोभक्तानुग्रहविग्रहः ॥ श्रीकृष्णश्चद्विधाभूतोद्विभुजश्चचतुर्भुजः ॥ १४ ॥
चतुर्भुजश्चवैकुण्ठेगोलोकेद्विभुजःस्वयम् ॥ ऊर्ध्ववैकुण्ठलोकाच्चपंचाशत्कोटियोजनात् ॥ १५ ॥ गोलोकोवर्त्तुलाकारोवरिष्ठस्सर्वलोक
तः ॥ अमूल्यरत्नखचितैर्मन्दिरैश्चविभूषितः ॥ १६ ॥ रत्नेन्द्रसारखचितैःस्तम्भसोपानचित्रितैः ॥ मणीन्द्रदर्पणासक्तैःकपाटैःक
लशोज्ज्वलैः १७ ॥ नानाचित्रविचित्रैश्चशिबिरैश्चविराजितः ॥ कोटियोजनविस्तीर्णोदैर्घ्येशतगुणस्तथा ॥ विरजासरिदाकीर्णश्शत
शृङ्गैस्सुवेष्टितः ॥ १८ ॥ सरिदर्धप्रमाणेनदैर्घ्येणचततेनच ॥शैलार्द्धपरिमाणेनयुक्तोवृन्दावनेनच ॥ १९ ॥ तदर्द्धमानविलसद्रासमण्ड
लमण्डितः ॥ सरिच्छैलवनादीनांमध्येगोलोकएवच ॥ २० ॥ यथापङ्कजमध्येचकर्णिकासुमनोहरा ॥ तत्रगोगोपगोपीभिर्गोपीशोरा
समण्डले ॥ २१ ॥ रासेश्वर्य्याराधिकयासंयुक्तःसन्ततंनृप ॥ द्विभुजोमुरलीहस्तःशिशुर्गोपालरूपधृक् ॥ २२ ॥ वह्निशुद्धांशुकाधानो
रत्नभूषणभूषितः ॥ चन्दनोक्षितसर्वाङ्गोरत्नमालाविराजितः ॥ २३ ॥ रत्नसिंहासनस्थश्चरत्नच्छत्रेणशोभितः ॥ तथासप्रियगोपालैः
सेवितःश्वेतचामरैः ॥ २४ ॥ भूषिताभिश्चगोपीभिर्मालाचन्दनचर्चितः ॥ सस्मितःसकटाक्षाभिःसुवेषाभिश्चवीक्षितः ॥ २५ ॥
कथितोलोकविस्तारोयथाशक्तियथागमम् ॥ यथाश्रुतंशम्भुवक्त्रात्कालमानंनिशामय ॥ २६ ॥ पात्रंषट्पलसंभूतंगभीरंचतुरङ्गुलम् ॥
॥ २७ ॥ स्वर्णमाषकृतच्छिद्रंदण्डैश्चचतुरङ्गुलैः ॥ यावज्जलप्लुतंपात्रंतत्कालंदण्डमेवच ॥ २८ ॥ दण्डद्वयंमुहूर्त्तंचयामस्तस्य
चतुष्टयम् ॥ वासरश्चाष्टभिर्यामैःपक्षस्तैर्दशपञ्चभिः ॥ २९ ॥ मासोद्वाभ्यांचपक्षाभ्यांवर्षंद्वादशमासकैः ॥ मासेनवैनराणांचपितृणांत
दहर्निशम् ॥ ३० ॥ कृष्णपक्षेदिनंप्रोक्तंशुक्लेरात्रिःप्रकीर्त्तिता ॥ वत्सरेणनराणांचदेवानांचदिवानिशम् ॥ ३१ ॥ अयनंह्युत्तरमहो
रात्रिर्वैदक्षिणायनम् ॥ युगकर्मानुरूपंचनरादीनांवयोनृप ॥ ३२ ॥ प्रकृतेःप्राकृतानांचब्रह्मादीनांनिशामय ॥ कृतंत्रेताद्वापरंचकलिश्चे
तिचतुर्युगम् ॥ ३३ ॥ दिव्यैर्द्वादशसाहस्रैःसावधानंनिशामय ॥ चत्वारित्रीणिचद्व्येकंसहस्राणिकृतादिकम् ॥ ३४ ॥ तेषांचसन्ध्या
सन्ध्यांशौद्वेसहस्रेप्रकीर्त्तिते ॥ त्रिचत्वारिंशकैर्लक्षैस्सविंशतिसहस्रकैः ॥ ३५ ॥ चतुर्युगंपरिमितंनरमानक्रमेणच ॥ लक्षैश्चसप्तदशभि

स्साष्टविंशसहस्रकैः ॥ ३६ ॥ कृतंयुगंनृमानेनसंख्याविद्धिःप्रकीर्त्तितम् ॥ सहस्रैष्षणवतिभिर्लक्षैर्द्वादशभिस्सह ॥ ३७ ॥ त्रेतायुगंपरि
मितंकालविद्भिःप्रकीर्त्तितम् ॥ अष्टलक्षैस्सहमितंचतुष्षष्टिसहस्रकम् ॥ ३८ ॥ परिमाणंद्वापरस्यसंख्याविद्भिरितीरितम् ॥ सद्वात्रिंशत्सह
स्रैश्चचतुर्लक्षैश्चवत्सरैः ॥ नृमानाद्वैकलियुगंविदुःकालविदोबुधाः ॥ ३९ ॥ तत्रसप्तचवाराश्चैतिथयःषोडशस्मृताः ॥ दिवारात्र्यश्चपक्षौ
द्वौमासोवर्षंचनिर्मितम् ॥ ४० ॥ तथाभ्रमतितच्चक्रमेवमेवचतुर्युगम् ॥ तथायुगानिगजेन्द्रतथामन्वन्तराणिच ॥ ४१ ॥ मन्वन्तरन्तु
दिव्यानांयुगानामेकसप्ततिः ॥ एवंक्रमाद्भ्रमन्त्येवमनवश्चचतुर्दश ॥ ४२ ॥ पञ्चविंशतिसाहस्रंपष्टचन्तशतपञ्चकम् ॥ नरमानंयुगंचैव
परंमन्वन्तरंस्मृतम् ॥ ४३ ॥ आख्यानंचमनूनांचधर्मिष्ठानांनराधिप ॥ यच्छ्रुतंशिववक्त्रेणतत्त्वंमत्तोनिशामय ॥ ४४ ॥ आद्योमनुर्ब्रह्म
पुत्रःशतरूपापतिव्रता ॥ धर्मिष्ठानांवरिष्ठश्चगरिष्ठोमनुषुप्रभुः ॥ ४५ ॥ स्वायम्भुवःशम्भुशिष्योविष्णुव्रतपरायणः ॥ जीवन्मुक्तो
महाज्ञानीभवतःप्रपितामहः ॥ ४६ ॥ राजसूयसहस्रंचचक्रेवैनर्मदातटे ॥ त्रिलक्षमश्वमेधंचत्रिलक्षंनरमेधकम् ॥ ४७ ॥ गोमेधंच
चतुर्लक्षंविधिवन्महदद्भुतम् ॥ ब्राह्मणानांत्रिकोटीश्चभोजयामासनित्यशः ॥ ४८ ॥ पञ्चलक्षगवांमांसैःसुपक्वैर्घृतसंस्कृतैः ॥
चर्व्यैश्चोष्यैर्लेह्यपेयैर्मिष्टद्रव्यैःसुदुर्लभैः ॥ ४९ ॥ अमूल्यरत्नलक्षंचदशकोटिसुवर्णकम् ॥ स्वर्णशृङ्गयुतंदिव्यंगवांलक्षंसुपूजितम् ॥ ५० ॥
वह्निशुद्धानिवस्त्राणिमुनीन्द्राणांचलक्षकम् ॥ भूमिंचसर्वसस्याढ्यांगजेन्द्राणांचलक्षकम् ॥ त्रिलक्षमश्वरत्नंचशातकुम्भविभूषितम् ॥
॥ ५१ ॥ सहस्ररथरत्नंचशिविकालक्षमेवच ॥ त्रिकोटिस्वर्णपात्राणिसान्नसजलमीप्सितम् ॥ त्रिकोटिस्वर्णभृङ्गारश्चकर्पूरादिसुवासि
तम् ॥ ५२ ॥ ताम्बूलंसुविचित्रंचत्रिकोटिस्वर्णतल्पकम् ॥ रत्नेन्द्रखचितैर्मञ्चैरचितैर्विश्वकर्मणा ॥ ५३ ॥ वह्निशुद्धांशुकैश्चित्रै
राजितंमाल्यजालकैः ॥ नित्यंददौब्राह्मणेभ्योविष्णुप्रीत्याशिवाज्ञया ॥ ५४ ॥ संप्राप्यशंकराज्ज्ञानंकृष्णमन्त्रंसुदुर्लभम् ॥ संप्राप्य
कृष्णदास्यंचगोलोकंवैजगामसः ॥ ५५ ॥ दृष्ट्वामुक्तंस्वपुत्रंचप्रहृष्टोभूत्प्रजापतिः ॥ तुष्टावशंकरंतुष्टःससृजेन्यंमनुंविधिः ॥ ५६ ॥
यतःस्वयम्भुपुत्रोयमतःस्वायम्भुवोमनुः ॥ स्वारोचिषोमनुश्चैवद्वितीयोवह्निनन्दनः ॥ ५७ ॥ राजावदान्योधर्मिष्ठःस्वायम्भुवसमोमहा

न् ॥ प्रियव्रतसुतावन्यौद्वौमनूधर्मिणांवरौ ॥ ५८ ॥ तौतृतीयौचतुर्थौचवैष्णवौतापसोत्तमौ ॥ तौचशङ्करशिष्यौचकृष्णभक्तिपराय णौ ॥ ५९ ॥ धर्मिष्ठानांवरिष्ठश्चरैवतःपंचमोमनुः ॥ षष्ठश्चचाक्षुषोज्ञेयोविष्णुभक्तिपरायणः ॥ ६० ॥ श्राद्धदेवःसूर्य्यसुतोवैष्णवःसप्त मोमनुः ॥ सावर्णिःसूर्य्यतनयोवैष्णवोमनुरष्टमः ॥ ६१ ॥ नवमोदक्षसावर्णिर्विष्णुव्रतपरायणः ॥ दशमोब्रह्मसावर्णिर्ब्रह्म ज्ञानविशारदः ॥ ६२ ॥ ततश्चधर्मसावर्णिर्मनुरेकादशःस्मृतः ॥ धर्मिष्ठश्चवरिष्ठश्चवैष्णवव्रततत्परः ॥ ६३ ॥ ज्ञानीचरुद्रसावर्णि र्मनुश्चद्वादशःस्मृतः ॥ धर्मात्मादेवसावर्णिर्मनुरेवंत्रयोदशः ॥ ६४ ॥ चतुर्दशोमहाज्ञानीचन्द्रसावर्णिरेवच ॥ यावदायुर्मनूनांस्या दिन्द्राणांतावदेवहि ॥ ६५ ॥ चतुर्दशेन्द्रावच्छिन्नंब्रह्मणोदिनमुच्यते ॥ तावतीब्रह्मणोरात्रिःसाचब्राह्मीनिशानृप ॥ ६६ ॥ काल रात्रिश्चसाज्ञेयावेदेषुपरिकीर्त्तिता ॥ ब्रह्मणोवासरेराजन्क्षुद्रकल्पःप्रकीर्त्तितः ॥ ६७ ॥ सप्तकल्पेचिरंजीवीमार्कण्डेयोमहातपाः ॥ ब्रह्म लोकादधःसर्वेलोकादग्धाश्चतत्रवै ॥ ६८ ॥ उत्थितेनैवसहसासङ्कर्षणमुखाग्निना ॥ चन्द्रार्कब्रह्मपुत्राश्चब्रह्मलोकंगताध्रुवम् ॥ ६९ ॥ ब्रह्मरात्रिव्यतीतेतुपुनश्चससृजेविधिः ॥ तस्यांब्रह्मनिशायाञ्चक्षुद्रःप्रलयउच्यते ॥ ७० ॥ देवाश्चमनवश्चैवतत्रदग्धानरादयः ॥ एवं त्रिंशद्दिवारात्रैर्ब्रह्मणोमासएवच ॥ ७१ ॥ वर्षंद्वादशमासैश्चब्रह्मसम्बन्धिचैवहि ॥ एवंपञ्चदशाब्देतुगतेचब्रह्मणोनृप ॥ दैनंदिनस्तु प्रलयोवेदेषुपरिकीर्त्तितः ॥ ७२ ॥ मोहरात्रिश्चसाप्रोक्तावेदविद्भिःपुरातनैः ॥ तत्रसर्वेप्रणष्टास्स्युश्चन्द्रार्कादिदिगीश्वराः ॥ ७३ ॥ आदित्यावसवोरुद्रामनवोमानवादयः ॥ ऋषयोमुनयश्चैवगन्धर्वाराक्षसादयः ॥ ७४ ॥ मार्कण्डेयोलोमशश्चपेचकश्चिरजीवि नः ॥ इन्द्रद्युम्नश्चनृपतिश्चाकूपारश्चकच्छपः ॥ ७५ ॥ नाडीजंघोबकश्चैवसर्वेनष्टाश्चतत्रवै ॥ ब्रह्मलोकादधःसर्वेलोकानागाल यास्तथा ॥ ७६ ॥ ब्रह्मलोकंययुःसर्वेब्रह्मपुत्रादयस्तथा ॥ गतेदैनंदिनेब्रह्मालोकांश्चससृजेपुनः ॥ ७७ ॥ एवंशताब्दपर्य्य न्तंपरमायुःप्रजापतेः ॥ ब्रह्मणश्चनिपातेस्यान्महाकल्पोभवेन्नृप ॥ ७८ ॥ प्रकीर्त्तितामहारात्रिःसैवचेहपुरातनैः ॥ ब्रह्मणश्चनिपा

१ कुर्वमितिपाठः ।

तेचब्रह्माण्डौघोजलप्लुतः ॥ ७९ ॥ वेदमाताचसावित्रीवेदाधर्म्मादयस्तथा ॥ सर्वेप्रणष्टामृत्युश्चप्रकृतिश्चशिवंविना ॥ ८० ॥ नाराय
णेप्रलीनाश्चविश्वस्थावैष्णवास्तथा ॥ कालाग्निरुद्रःसंहर्त्तासर्वरुद्रगणैःसह ॥ ८१ ॥ मृत्युञ्जयेमहादेवेप्रलीनःसतमोगुणः ॥ ब्रह्मणश्च
निपातेननिमेषःप्रकृतेर्भवेत् ॥ ८२ ॥ नारायणस्यशम्भोश्चमहाविष्णोश्चनिश्चितम् ॥ निमेषान्तेपुनःसृष्टिर्भवेत्कृष्णेच्छयानृप ॥
॥ ८३ ॥ कृष्णोनिमेषरहितोनिर्गुणःप्रकृतेःपरः ॥ सगुणानांनिमेषश्चकालसंख्यावयोमितः ॥ ८४ ॥ निर्गुणस्यचनित्यस्यचाद्य
न्तरहितस्यच ॥ निमेषाणांसहस्रेणप्रकृतेर्दण्डउच्यते ॥ ८५ ॥ षष्टिदण्डात्मिकातस्यावासरश्चप्रकीर्त्तितः ॥ त्रिंशद्रात्रिंदिनैर्मासोवर्ष
द्वादशमासकैः ॥ ८६ ॥ एवंगतेशताब्देचश्रीकृष्णेप्रकृतेर्लयः ॥ प्रकृत्यांचप्रलीनायांश्रीकृष्णेप्राकृतोलयः ॥ ८७ ॥ सर्वान्संहृत्यसा
चैकामहाविष्णोःप्रसूश्चया ॥ कृष्णवक्षसिलीनाचमूलप्रकृतिरीश्वरी ॥ ८८ ॥ सन्तोवदन्तितांदुर्गांविष्णुमायांसनातनीम् ॥ सर्वशक्ति
स्वरूपांचपरांनारायणींसतीम् ॥ ८९ ॥ बुद्ध्यधिष्टातृदेवींचश्रीकृष्णस्यैवनिर्गुणाम् ॥ यन्मायामोहिताश्चैवब्रह्मविष्णुशिवादयः ॥
॥ ९० ॥ वैष्णवास्तांमहालक्ष्मींपरांराधांवदन्तिते ॥ अर्द्धाङ्गांचमहालक्ष्मीःप्रियानारायणस्यच ॥ ९१ ॥ प्राणाधिष्ठातृदे
वींचप्रेम्णाप्राणाधिकांवराम् ॥ स्थिरप्रेममयींशक्तिंनिर्गुणांनिर्गुणस्यच ॥ ९२ ॥ नारायणश्चशम्भुश्चसंहृत्यस्वगणान्बहून् ॥ शुद्ध
सत्त्वस्वरूपीश्रीकृष्णेलीनश्चनिर्गुणे ॥ ९३ ॥ गोपागोप्यश्चगावश्चसवत्साश्चनराधिप ॥ सर्वेलीनाःप्रकृत्यांचप्रकृतिःपरमेश्वरे ॥
॥ ९४ ॥ महाविष्णौविलीनाश्चतेसर्वेक्षुद्रविष्णवः ॥ महाविष्णुःप्रकृत्याञ्चसाचैवंपरमात्मनि ॥ ९५ ॥ प्रकृतिर्योगनिद्राचश्रीकृष्णनयन
द्वये ॥ अधिष्ठानञ्चकारैवंमाययाचेश्वरेच्छया ॥ ९६ ॥ प्रकृतेर्वासरोयावन्मितःकालःप्रकीर्त्तितः ॥ तावद्वृन्दावनेनिद्राकृष्णस्यपरमा
त्मनः ॥ ९७ ॥ अमूल्यरत्नतल्पेचवह्निशुद्धांशुकार्चिते ॥ गन्धचन्दनमाल्यौघवाय्वादिसुरभीकृते ॥ ९८ ॥ पुनःप्रजागरेतस्यसर्वसृ
ष्टिर्भवेत्पुनः ॥ एवंसर्वेप्राकृताश्चश्रीकृष्णंनिर्गुणंविना ॥ ९९ ॥ तद्वन्दनंतत्स्मरणंतस्यध्यानंतदर्चनम् ॥ कीर्त्तनंतद्गुणानाञ्चमहापात

१ शाक्ता--इतिपाठः ।

कनाशनम् ॥ १०० ॥ एतत्तेकथितंसर्वंयन्मृत्युञ्जयाच्छ्रुतम् ॥ यथागमंमहाराजकिंभूयःश्रोतुमिच्छसि ॥ १०१ ॥ ॥ सुयज्ञउवाच ॥
कालाग्निरुद्रोविश्वानांसंहर्त्ताचतमोगुणः ॥ ब्रह्मणोऽन्तेविलीनश्चसत्त्वंमृत्युञ्जयेशिवे ॥ १०२ ॥ शिवोलीनोनिर्गुणेचश्रीकृष्णेप्राकृतेलये ॥
कथंतवगुरोर्नाममृत्युञ्जयइतिश्रुतम् ॥ १०३ ॥ कथंप्रसूर्महाविष्णोर्मूलप्रकृतिरीश्वरी ॥ असंख्यानिचविश्वानिसन्तितस्यैवयस्यलोमसु ॥
॥ १०४ ॥ ॥ सुतपाउवाच ॥ ॥ ब्रह्मणोऽन्तेमृत्युकन्याप्रणष्टाजलविम्बवत् ॥ संहर्त्रीसर्वलोकानांब्रह्मादीनांनराधिप ॥ १०५ ॥
कतिधामृत्युकन्यानांब्रह्मणांकोटिशोलये ॥ कालेनलीनःशम्भुश्चसत्त्वरूपेचनिर्गुणे ॥ १०६ ॥ मृत्युकन्याजिताशश्वच्छिवेनगुरुणा
मम ॥ नमृत्युनाजितःशम्भुःकल्पेकल्पेश्रुतोश्रुतम् ॥ १०७ ॥ शम्भुर्नारायणस्यैवप्रकृतेश्चनराधिप ॥ नित्यानांलीनतानित्येतन्मा
यानतुवास्तवी ॥ १०८ ॥ स्वयंपुमान्निर्गुणश्चकालेनसगुणःस्वयम् ॥ स्वयंनारायणःशम्भुर्मायया प्रकृतिःस्वयम् ॥ १०९ ॥
तदंशस्तत्समःशश्वद्यथावह्नेःस्फुलिङ्गवत् ॥ येयेचब्रह्मणासृष्टारुद्रादित्यादयस्तथा ॥ ११० ॥ कल्पेकल्पेजितास्तेतेनश्वरामृत्युक
न्यया ॥ नशिवोब्रह्मणासृष्टःसत्योनित्यःसनातनः ॥ १११ ॥ कतिधाब्रह्मणांपातोयन्निमेषेणभूमिप ॥ अथादिसर्गेश्रीकृष्णःप्रकृ
त्याश्चजगद्गुरुः ॥ ११२ ॥ चकारवीर्य्याधानञ्चपुण्येवृन्दावनेवने ॥ तद्गर्भांशसमुद्भूतारासेरासेश्वरीपरा ॥ ११३ ॥ गर्भंद
धारसाराधायावद्वैब्रह्मणोवयः ॥ ततःसुषावसाडिम्भंगोलोकेरासमण्डले ॥ ११४ ॥ चुकोपडिम्भंसादृष्ट्वाहृदयेनविदूयता ॥
तड्डिम्भंप्रेरयामासतदधोविश्वगोलके ॥ ११५ ॥ त्यक्त्वापत्यंमहादेवीरुरोदचमुहुर्मुहुः ॥ कृष्णस्तांबोधयामासमहायोगेनयोग
वित् ॥ ११६ ॥ बभूवतस्माड्डिम्भाच्चसर्वाधारोमहाविराट् ॥ ११७ ॥ ॥ सुयज्ञउवाच ॥ ॥ अद्यमेसफलंजन्मजीवनं
सार्थकंमम ॥ शापोमेवररूपश्चाप्यभवद्भक्तिकारणम् ॥ ११८ ॥ सुदुर्लभाहरेर्भक्तिःसर्वमङ्गलमङ्गला ॥ नतस्याश्चसमंविप्रवेदोक्तं
भक्तिपञ्चकम् ॥ ११९ ॥ यथाभक्तिर्ममभवेच्छ्रीकृष्णेपरमात्मनि ॥ सुदुर्लभाचसर्वेषांतत्कुरुष्वमहामुने ॥ १२० ॥ नह्य
म्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ तेपुनन्त्युरुकालेनकृष्णभक्ताश्चदर्शनात् ॥ १२१ ॥ सर्वेषामाश्रमाणाञ्चद्विजातेर्जाति

रुत्तमा ॥ स्वधर्मनिरताश्चैवतेषुश्रेष्ठश्चभारते ॥ १२२ ॥ कृष्णमन्त्रोपासकश्चकृष्णभक्तिपरायणः ॥ नित्यंनैवेद्यभोजीचतत
श्रेष्ठोमहान्शुचिः ॥ १२३ ॥ त्वंवैष्णवद्विजश्रेष्ठंमहाज्ञानार्णवंपरम् ॥ संप्राप्यशिवशिष्यश्चकंयामिशरणंमुने ॥ १२४ ॥
अधुनाहंगलत्कुष्ठीतवशापान्महामुने ॥ कथंतपस्यामशुचिर्नाधिकारीकरोमिच ॥ १२५ ॥ ॥ सुतपाउवाच ॥ ॥ हरिभ
क्तिप्रदात्रीसाविष्णुमायासनातनी ॥ साचयाननुगृह्णातितेभ्योभक्तिंददातिच ॥ १२६ ॥ यांश्चमायामोहयतितेभ्यस्तांनददा
तिच ॥ करोतिवञ्चनांतेषांनश्वरेणधनेनच ॥ १२७ ॥ कृष्णप्रेममयींशक्तिंप्राणाधिष्ठातृदेवताम् ॥ भजराधांनिर्गुणांतांप्रदा
त्रींसर्वसम्पदाम् ॥ १२८ ॥ शीघ्रंयास्यसिगोलोकंतदनुग्रहसेवया ॥ सासेविताश्रीकृष्णेनसर्वाराध्येनपूजिता ॥ १२९ ॥
ध्यानसाध्यंदुराराध्यंभक्ताःसंसेव्यनिर्गुणम् ॥ सुचिरेणचगोलोकंप्रयान्तिवहुजन्मतः ॥ १३० ॥ कृपामयींचसंसेव्यभक्ताया
न्त्यचिरेणवै ॥ साप्रसूश्चमहाविष्णोःसर्वसम्पत्स्वरूपिणी ॥ १३१ ॥ सहस्रवर्षपर्य्यन्तंविप्रपादोदकंपिव ॥ कामदेवस्वरूप
श्चरोगहीनोभविष्यसि ॥ १३२ ॥ विप्रपादोदकक्लिन्नायावत्तिष्ठतिमेदिनी ॥ तावत्पुष्करपत्रेषुपिवन्तिपितरोजलम् ॥ १३३ ॥ पृथि
व्यांयानितीर्थानितानितीर्थानिसागरे ॥ सागरेयानितीर्थानिविप्रपादेषुतानिच ॥ १३४ ॥ विप्रपादोदकञ्चैवपापव्याधिविनाशनम् ॥
सर्वतीर्थोदकसमंभुक्तिमुक्तिप्रदंशुभम ॥ १३५ ॥ विप्रोमानवरूपीचदेवदेवोजनार्दनः ॥ विप्रेणदत्तंद्रव्यञ्चभुञ्जतेसर्वदेवताः ॥ १३६ ॥
इत्येवमुक्त्वाविप्रश्चगृहीत्वातस्यपूजनम् ॥ जगामगृहमित्युक्त्वात्वायास्येवत्सरान्तरे ॥ १३७ ॥ भक्त्याचवुभुजेराजाविप्रपादोदकंशिवं ॥
विप्रांश्चपूजयामासभोजयामासवत्सरम् ॥१३८॥ संवत्सरेव्यतीतेतुनिर्मुक्तोव्याधितोनृपः ॥ आजगाममुनिश्रेष्ठःसुतपाःकश्यपाग्रणीः ॥
॥ १३९ ॥ राधापूजाविधानञ्चस्तोत्रञ्चकवचंमनुम् ॥ ध्यानञ्चसामवेदोक्तंददौतस्मैनृपायसः ॥ १४० ॥ राजन्निर्गम्यतांशीघ्रमित्युक्त्वा
तपसेमुनिः ॥ जगामस्वालयाद्दुर्गंनिर्जगामत्वरन्नृपः ॥ १४१ ॥ रुरुदुर्बान्धवाःसर्वेत्रिरात्रंशोकमूर्च्छिताः ॥ भार्य्याश्चतत्यजुःप्राणान्पु ॥१४१॥
त्रोराजावभूवह ॥ १४२ ॥ सुयज्ञःपुष्करंगत्वाचक्रेवैदुष्करंतपः ॥ दिव्यंवर्षशतंराजाजजापपरमंमनुम् ॥ १४३ ॥ तदाददर्शगगनेरथ

स्थांपरमेश्वरीम् ॥ सतद्दर्शनमात्रेणनिष्पापश्चबभूवह ॥ १४४ ॥ तत्याजमानुषंदेहंदिव्यांमूर्त्तिंदधारह ॥ सादेवीतेनयानेनरत्नेन्द्रैर्नि
र्मितेनच ॥ १४५ ॥ नृपंनीत्वाचगोलोकंनत्रचैषाययौतदा ॥ राजाददर्शगोलोकंनद्याविरजयावृतम् ॥ १४६॥ वेष्टितंपर्वतेनैवशतशृङ्गे
नचारुणा ॥ श्रीवृन्दावनसंयुक्तंरासमण्डलमण्डितम् ॥ १४७ ॥ गोगोपगोपीनिकरैःशोभितंपरिसेवितैः ॥ रत्नेन्द्रसारखचितैर्मन्दिरैःसु
मनोहरैः ॥ १४८ ॥ नानाचित्रविचित्रैश्चराजितंपरिशोभितम् ॥ सतत्रिंशद्भिरार्क्रीडैःकल्पवृक्षसमन्वितैः ॥ १४९ ॥ पारिजातद्रुमाकीर्णं
वेष्टितंकामधेनुभिः ॥ आकाशवत्सुविस्तार्णंवर्त्तुलंचन्द्रविम्ववत् ॥ १५० ॥ अत्यूर्ध्वमपिवैकुण्ठात्पञ्चाशत्कोटियोजनम् ॥ शून्येस्थि
तंनिराधारंध्रुवमेवेश्वरेच्छया ॥ १५१ ॥ आत्माकाशसमंनित्यमस्माकञ्चसुदुर्लभम् ॥ अहंनारायणोऽनन्तोब्रह्माविष्णुर्महान्विराट् ॥
॥१५२॥ धर्मश्चुद्रविराट्संवोगङ्गालक्ष्मीःसरस्वती ॥ त्वंविष्णुमायासावित्रीतुलसीचगणेश्वरः ॥१५३॥ सनत्कुमारःस्कन्दश्चनरनाराय
णवृषी ॥ कपिलोदक्षिणायज्ञोब्रह्मपुत्राश्चयोगिनः ॥ १५४ ॥ पवनोवरुणश्चन्द्रःसूर्य्योरुद्रोहुताशनः ॥ कृष्णमन्त्रोपासकाश्चभारतस्था
श्चवैष्णवाः ॥ १५५ ॥ एभिर्दृष्टश्चगोलोकोनान्यैर्दृष्टःकदाचन ॥ निरामयेचतत्रैवरत्नसिंहासनेस्थितम् ॥ १५६ ॥ रत्नमालाकिरीटैश्चभू
षितंरत्नभूषणैः ॥ सुनिर्मलैःपीतवस्त्रैःवह्निशुद्धैर्विराजितम् ॥ १५७ ॥ चन्दनोक्षितसर्वाङ्गंकिशोरंगोपरूपिणम् ॥ नवीननीरदश्यामश्वे
तपङ्कजलोचनम् ॥ १५८ ॥ शरत्पार्वणचन्द्रास्यमीषद्धास्यंमनोहरम् ॥ द्विभुजंमुरलीहस्तंभक्तानुग्रहविग्रहम् ॥१५९॥ स्वेच्छामयंपरं
ब्रह्मनिर्गुणंप्रकृतेःपरम् ॥ ध्यानसाध्यंदुराराध्यमस्माकञ्चसुदुर्लभम् ॥ १६० ॥ प्रियैर्द्वादशगोपालैःसेवितंश्वेतचामरैः ॥ वीक्षितंगोपि
कावृन्दैःसस्मितैःसुमनोहरैः ॥ १६१ ॥ पीडितैःकामवाणैश्चशश्वत्सुस्थिरयौवनैः ॥ वह्निशुद्धांशुकाधानैरत्नभूषणभूषितैः ॥ १६२ ॥
रासमण्डलमध्यस्थंश्रीकृष्णञ्चपरात्परम् ॥ ददर्शराजातत्रैवराधयादर्शितंतदा ॥ १६३ ॥ स्तुतंचतुर्भिर्वेदैश्चमूर्तिमद्भिर्मनोहरैः ॥
रागिणीनाञ्चरागाणामतीवसुमनोहरम् ॥ १६४ ॥ श्रुतवन्तञ्चसङ्गीतंयन्त्रवक्रोत्थितंशिवे ॥ नित्ययाचसनातन्याप्रकृत्याचसहत्वया
॥ १६५ ॥ शश्वत्पूजितपादाब्जमखण्डतुलसीदलैः ॥ कस्तूरीकुङ्कुमाक्तैश्चगन्धचन्दनचर्चितैः ॥ १६६ ॥ दूर्वाभिरक्षताभिश्चपारिजा

तप्रसूनकैः ॥ निर्मलैर्विरजातोयैर्दत्तार्घ्यैरतिशोभितम् ॥ १६७ ॥ सुप्रसन्नंस्वतन्त्रञ्चसर्वकारणकारणम् ॥ सर्वेषांचान्तरात्मानं सर्वेशंसर्वजीवनम् ॥ १६८ ॥ सर्वाधारंपरंपूज्यंब्रह्मज्योतिःसनातनम् ॥ सर्वसम्पत्स्वरूपञ्चदातारंसर्वसम्पदाम् ॥ १६९ ॥ सर्वमङ्गलरूपञ्चसर्वमङ्गलकारणम् ॥ सर्वमङ्गलदंसर्वमङ्गलानांचमङ्गलम् ॥ १७० ॥ तंदृष्ट्वानृपतिस्त्रस्तोह्यवरुह्यरथात्त्वरन् ॥ साश्रुनेत्रःपुलकितोमूर्ध्नासप्रणनामच ॥ १७१ ॥ परमात्माददौतस्मैस्वदास्यञ्चशुभाशिषम् ॥ स्वभक्तिंनिश्चलांसत्यामस्माकंच सुदुर्लभाम् ॥ १७२ ॥ राधावरुह्यस्वरथात्कृष्णवक्षस्युवाससा ॥ गोपीभिःसुप्रियाभिश्चसेविताश्वेतचामरैः ॥ १७३ ॥ सम्भाषिताश्रीकृष्णेनसस्मितेनचपूजिता ॥ समुत्थितेनसहसाभक्त्यावैसम्भ्रमेणच ॥ १७४ ॥ आदौराधांसमुच्चार्य्यपश्चात्कृष्णंचमाधवम् ॥ प्रवदन्तिचवेदेषुवेदविद्भिःपुरातनैः ॥ १७५ ॥ विपर्य्ययंयेवदन्तियेनिन्दन्तिजगत्प्रसूम् ॥ कृष्णप्राणाधिकांप्रेममयींशक्तिंच राधिकाम् ॥ १७६ ॥ तेपच्यंतेकालसूत्रेयावच्चन्द्रदिवाकरम् ॥ भवन्तिस्त्रीपुत्रहीनारोगिणःशतजन्मसु ॥ १७७ ॥ इत्येवंकथितंदुर्गे राधिकाख्यानमुत्तमम् ॥ सात्वंसतीभगवतीवैष्णवीचसनातनी ॥ १७८ ॥ नारायणीविष्णुमायामूलप्रकृतिरीश्वरी ॥ माययामां पृच्छसित्वंसर्वज्ञासर्वरूपिणी ॥ १७९ ॥ स्त्रीजातिष्वधिदेवीचपराजातिस्मरावरा ॥ कथितंराधिकाख्यानंकिंभूयःश्रोतुमिच्छसि ॥ ॥ १८० ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयप्रकरणेनारदनारायणसंवादेहरगौरीसंवादेराधाख्यानेसुयज्ञाख्यानेसुतपःसुयज्ञसंवादेसुयशसोगोलोकप्राप्तिर्नामचतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ छ ॥ ॥ इतिसुयज्ञोपाख्यानंसमाप्तम् ॥ ॥ श्रीपार्वत्युवाच ॥ ॥ श्रीकृष्णस्यस्थितेमन्त्रेचान्येषामीश्वरस्यवः ॥ कथंजग्राहराधायामन्त्रंवैवैष्णवोनृपः ॥ १ ॥ किंविधानञ्चकिंध्यानंकिंस्तोत्रंकवचञ्चकिम् ॥ कंमन्त्रञ्चददौराज्ञेतांपूजापद्धतिंवद ॥ २ ॥ श्रीमहेश्वरउवाच ॥ हेविप्रकंभजामीतिप्रश्नंकुर्वतिराजनि ॥ शीघ्रंप्राप्नोमि गोलोकंकस्याराधनतोमुने ॥ ३ ॥ इत्युक्तवन्तंराजेन्द्रमुवाचब्राह्मणोत्तमः ॥ तत्सेवयाचतल्लोकंप्राप्स्यसेबहुजन्मतः ॥ ४ ॥ तंत्प्राणाधिष्ठातृदेवींभजराधांपरात्पराम् ॥ कृपामयीप्रसादेनशीघ्रंप्राप्नोतितत्पदम् ॥ ५ ॥ इत्युक्काराधिकामन्त्रंददौतस्मैषडक्षरम् ॥ ॐराधेति

चतुर्थ्यन्तंवह्निजायान्तमेवच ॥ ६ ॥ प्राणायामंभूतशुद्धिंमन्त्रन्यासंतथैवच ॥ कराङ्गन्यासमेवञ्चध्यानंसर्वंसुदुर्लभम् ॥ ७ ॥ स्तो
त्रञ्चकवचंतञ्चशिक्षयामासभक्तितः ॥ राजातेनक्रमेणैवजजापपरमंमनुम् ॥ ८ ॥ ध्यानञ्चसामवेदोक्तंमङ्गलानाञ्चमङ्गलम् ॥
कृष्णस्तांपूजयामासपुराध्यानेनयेनच ॥ ९ ॥ श्वेतचम्पकवर्णाभांकोटिचन्द्रसमप्रभाम् ॥ शरत्पार्वणचन्द्रास्यांशरत्पङ्कजलोचनाम् ॥
सुश्रोणींसुनितम्बाञ्चपक्वबिम्बाधरांवराम् ॥ १० ॥ मुक्तापङ्क्तिप्रतिनिधिदन्तपङ्क्तिमनोहराम् ॥ ईषद्धास्यप्रसन्नास्यांभक्तानुग्रहकारि
काम् ॥ वह्निशुद्धांशुकाधानांरत्नमालाविभूषिताम् ॥ ११ ॥ रत्नकेयूरवलयांरत्नमञ्जीररञ्जिताम् ॥ रत्नकुंडलयुग्मेनविचित्रेणविराजि
ताम् ॥ सूर्य्यप्रभाप्रतिकृतिगण्डस्थलविराजिताम् ॥ १२ ॥ अमूल्यरत्नखचितग्रैवेयकविभूषिताम् ॥ सद्रत्नसारखचितकिरीटमुकुटो
ज्ज्वलाम् ॥ रत्नाङ्गुलीयसंयुक्तांरत्नपाशकशोभिताम् ॥ १३ ॥ बिभ्रतींकबरीभारंमालतीमाल्यशोभिताम् ॥ रूपाधिष्ठातृदे
वीञ्चमत्तवारणगामिनीम् ॥ १४ ॥ गोपीभिःसुप्रियाभिश्चसेवितांश्वेतचामरैः ॥ कस्तूरीबिन्दुभिःसार्द्धमधश्चन्दनबिन्दुना ॥ १५ ॥
सिन्दूरबिन्दुनाचारुसीमन्ताधःस्थलोज्ज्वलाम् ॥ नित्यंसुपूजितांभक्त्याकृष्णेनपरमात्मना ॥ १६ ॥ कृष्णसौभाग्यसंयुक्तांकृष्ण
प्राणाधिकांवराम् ॥ कृष्णप्राणाधिदेवीञ्चनिर्गुणाञ्चपरात्पराम् ॥ १७ ॥ महाविष्णुविधात्रीञ्चप्रदात्रींसर्वसम्पदाम् ॥ कृष्णभक्ति
प्रदांशान्तांमूलप्रकृतिमीश्वरीम् ॥ १८ ॥ वैष्णवींविष्णुमायांचकृष्णप्रेममयींशुभाम् ॥ रासमण्डलमध्यस्थांरत्नसिंहासनस्थिता
म् ॥ रासेरासेश्वरयुतांराधांरासेश्वरींभजे ॥ १९ ॥ ध्यात्वापुष्पंमूर्ध्निदत्त्वापुनर्ध्यायेज्जगत्प्रभुम् ॥ दद्यात्पुष्पंपुनर्ध्यात्वाचोपचा
राणिषोडश ॥ २० ॥ आसनंवसनंपाद्यमर्घ्यंगन्धानुलेपनम् ॥ धूपंदीपंसुपुष्पंचस्नानीयंरत्नभूषणम् २१ ॥ नानाप्रकारनैवे
द्यंताम्बूलंवासितंजलम् ॥ मधुपर्कंरत्नतल्पमुपचाराणिषोडश ॥ २२ ॥ प्रत्येकंवेदमन्त्रेणदत्तंभक्त्याचभूभृता ॥ मन्त्रांश्चश्रूयतांदु
र्गेवेदोक्तान्सर्वसम्मतान् ॥ २३ ॥ रत्नसारविकारंचनिर्मितंविश्वकर्म्मणा ॥ वरंसिंहासनंरम्यंराधेपूजासुगृह्यताम् ॥ २४ ॥ अमू

१ सिद्धचारणैः-इतिपाठः ।

ल्यरत्नखचितममूल्यंसूक्ष्ममेवच ॥ वह्निशुद्धंनिर्म्मलंचवसनंदेविगृह्यताम् ॥ २५ ॥ सद्रत्नसारपात्रस्थंसर्वतीर्थोदकंशुभम ॥
पादप्रक्षालनार्थंचराधेपाद्यंचगृह्यताम् ॥ २६ ॥ दक्षिणावर्त्तशंखस्थंसद्दूर्वापुष्पचन्दनम ॥ पूतंयुक्तंतीर्थतोयैराधेऽर्घ्यंप्रतिगृह्यताम् ॥
॥ २७ ॥ पार्थिवद्रव्यसंभूतमतीवसुरभीकृतम् ॥ मङ्गलार्हंपवित्रंचराधेगन्धंगृहाणमे ॥ २८ ॥ श्रीखण्डचूर्णंसुस्निग्धंकस्तूरीकुङ्कु
मान्वितम् ॥ सुगन्धयुक्तंदेवेशिगृह्यतामनुलेपनम् ॥ २९ ॥ वृक्षनिर्यासमंयुक्तंपार्थिवद्रव्यसंयुतम् ॥ अग्निखण्डशिखाजातंधूपंदेविगृहा
णमे ॥ ३० ॥ अन्धकारेभयहरममूल्यमणिशोभितम् ॥ रत्नप्रदीपंशोभाढ्यंगृहाणपरमेश्वरि ॥ ३१ ॥ पारिजातप्रसूनंचगन्धच
न्दनचर्चितम् ॥ अतीवशोभनंरम्यंगृह्यतांपरमेश्वरि ॥ ३२ ॥ सुगन्धामलकीचूर्णंसुस्निग्धंसुमनोहरम् ॥ विष्णुतैलसमायुक्तंस्ना
नीयंदेविगृह्यताम् ॥ ३३ ॥ अमूल्यरत्नखचितंकेयूरवलयादिकम् ॥ शंखसुशोभनंराधेगृह्यतांभूषणंमम ॥ ३४ ॥ कालदेशोद्भवं
पक्वफलंवैलड्डुकादिकम् ॥ परमान्नंचमिष्टान्नंनैवेद्यंदेविगृह्यताम् ॥ ३५ ॥ ताम्बूलंचवरंरम्यंकर्पूरादिसुवासितम् ॥ सर्वभोगा
धिकंस्वादुताम्बूलंदेविगृह्यताम् ॥ ३६ ॥ अशनंरत्नपात्रस्थंसुस्वादुसुमनोहरम् ॥ मयानिवेदितंभक्त्यागृह्यतांपरमेश्वरि ॥ ३७ ॥
रत्नेन्द्रसारखचितंवह्निशुद्धांशुकान्वितम् ॥ पुष्पचन्दनचर्चाढ्यंपर्य्यङ्कंदेविगृह्यताम् ॥ ३८ ॥ एवंसंपूज्यदेवींतांदद्यात्पुष्पाञ्जलि
त्रयम् ॥ यत्नेनपूजयेद्देवींनायिकाश्चव्रतेव्रती ॥ ३९ ॥ प्रागादिक्रमयोगेनदक्षिणावर्त्ततःप्रिये ॥ भक्त्यापंचोपचारेणसुप्रियाःपरिचा
रिकाः ॥ ४० ॥ मालावतींपूर्वकोणेवह्निकोणेचमाधवीम् ॥ दक्षिणेरत्नमालांचसुशीलांनैर्ऋतेसतीम् ॥ ४१ ॥ पश्चिमेवैशशिक
लांपारिजातांचमारुते ॥ पद्मावतीमुत्तरेचाथैशान्यांसुन्दरींतथा ॥ ४२ ॥ यूथिकामालतीपद्ममालादद्याद्व्रतेव्रती ॥ परिहारंचकुरुते
सामवेदोक्तमेवच ॥ ४३ ॥ त्वंदेवीजगतांमाताविष्णुमायासनातनी ॥ कृष्णप्राणाधिदेवीचकृष्णप्राणाधिकाशुभा ॥ ४४ ॥
कृष्णप्रेममयीशक्तिःकृष्णेसौभाग्यरूपिणी ॥ कृष्णभक्तिप्रदेराधेनमस्तेमङ्गलप्रदे ॥ ४५ ॥ अद्यमेसफलंजन्मजीवनंसार्थकंमम ॥ पूजि
तासिमयासाचयाश्रीकृष्णेनपूजिता ॥ ४६ ॥ कृष्णवक्षसियाराधासर्वसौभाग्यसंयुता ॥ रासेरासेश्वरीरूपावृन्दावृन्दावनेवने ॥ ४७ ॥

कृष्णप्रियाचगोलोकेतुलसीकाननेतुया ॥ चम्पावतीकृष्णसङ्गक्रीडाचम्पककानने ॥ ४८ ॥ चन्द्रावलीचन्द्रवनेशतशृंगेसतीतिच ॥
विरजादर्पहन्त्रीचविरजातटकानने ॥ ४९ ॥ पद्मावतीपद्मवनेकृष्णाकृष्णसरोवरे ॥ भद्राकुञ्जकुटीरेचकाम्यावैकाम्यकेवने ॥ ५० ॥
वैकुण्ठेचमहालक्ष्मीर्वाणीनारायणोरसि ॥ क्षीरोदसिन्धुकन्याचमर्त्येलक्ष्मीर्हरिप्रिया ॥ ५१ ॥ सर्वस्वर्गेस्वर्गलक्ष्मीर्देवदुःखविना
शिनी ॥ सनातनीविष्णुमायादुर्गाशङ्करवक्षसि ॥ ५२ ॥ सावित्रीवेदमाताचकलयाब्रह्मवक्षसि ॥ कलयाधर्म्मपत्नीत्वंनरनारायण
प्रभोः ॥ ५३ ॥ कलयातुलसीत्वञ्चगङ्गाभुवनपावनी ॥ लोमकूपोद्भवागोप्यःकलांशारोहिणीरतिः ॥५४॥ कलाकलांशरूपाचशतरू
पाशचीदितिः ॥ अदितिर्देवमाताचत्वत्कलांशाहरिप्रिया ॥ ५५ ॥ देव्यश्चमुनिपत्न्यश्चत्वत्कलाकलयाशुभे ॥ कृष्णभक्तिंकृष्णदास्यं
देहिमेकृष्णपूजिते ॥ ५६ ॥ एवंकृत्वापरीहारंस्तुत्वाचकवचंपठेत् ॥ पुराकृतंस्तोत्रमेतद्भक्तिदास्यप्रदंशुभम् ॥ ५७ ॥ एवंनित्यंपूजये
द्योविष्णुतुल्यःसभारते ॥ जीवन्मुक्तश्चपूतश्चगोलोकंयातिनिश्चितम् ॥ ५८ ॥ कार्त्तिकीपूर्णिमायाञ्चराधांयःपूजयेच्छिवे ॥ एवं
क्रमेणप्रत्यब्दंराजसूयफलंलभेत् ॥ ५९ ॥ परमैश्वर्य्ययुक्तस्स्यादिहलोकेसपुण्यवान् ॥ सर्वपापाद्विनिर्मुक्तोयात्यन्तेविष्णुमन्दिरम् ॥
॥ ६० ॥ आदावेवंक्रमेणैवरासेवृन्दावनेवने ॥ स्तुतासापूजिताराधाश्रीकृष्णेनपुरासती ॥ ६१ ॥ संपूजिताद्वितीयेचधात्रात्वेवंक्रमेणच ॥
त्वद्वरेणचसंप्राप्यविधातावेदमातरम् ॥ ६२ ॥ नारायणोमहालक्ष्मींप्रापसंपूज्यभारतीम् ॥ गङ्गाञ्चतुलसींचैवपरांभुवनपावनीम् ॥६३॥
विष्णुःक्षीरोदशायीचप्रापसिन्धुसुतांतथा ॥ मृतायांदक्षकन्यायांमयाकृष्णाज्ञयापुरा ॥ ६४ ॥ त्वत्सेवदुर्गासम्प्राप्तापूजितापुष्करेचसा ॥
अदितिंकश्यपःप्रापचन्द्रःसंप्रापरोहिणीम् ॥ ६५ ॥ कामोरतिञ्चसंप्रापधर्मोमूर्त्तिपतिव्रताम् ॥ देवाश्चमुनयश्चैवयांसंपूज्यप्रतिव्रताम् ॥
॥ ६६ ॥ संप्रापुर्यद्वरेणैवधर्मकामार्थमोक्षकम् ॥ एवंपूजाविधानञ्चकथितञ्चस्तवंशृणु ॥ ६७ ॥ श्रीमहेश्वरउवाच ॥ एकदामानिनी
राधाबभूवागोचराप्रभोः ॥ संसक्तस्यतुलस्यांचगोप्याश्चतुलसीवने ॥ ६८ ॥ सासंहृत्यस्वमूर्त्तीश्चकलाःसर्वाश्चलीलया ॥ सर्वेबभूवु

१ चन्द्रावती—इतिपाठः। २ नारायणेवने-इतिपाठः ।

दैवताश्चब्रह्मविष्णुशिवादयः ॥ ६९ ॥ भ्रष्टैश्वर्य्याश्चनिःश्रीकाभार्य्याहीनाह्युपद्रुताः ॥ तेचसर्वेसमालोच्यश्रीकृष्णंशरणंययुः ॥ ७० ॥
तेषांस्तोत्रेणसन्तुष्टःस्नात्वासंपूज्यतांशुचिः ॥ तुष्टावपरमात्मासमर्वेषांराधिकांसतीम् ॥ ७१ ॥ ॥ श्रीकृष्णउवाच ॥ ॥
एवमेवप्रियोऽहंतेप्रमोदश्चैवतेमयि ॥ सुव्यक्तमव्यक्तापञ्चवचनंतेवरानने ॥ ७२ ॥ हेकृष्णत्वंममप्राणाजीवात्मेतिचसन्ततम् ॥ यद्ब्रूहिनि
त्यंप्रेम्णात्वंसांप्रतंतद्गतंद्रुतम् ॥ ७३ ॥ तस्मात्सर्वमलीकन्तेवचनंजगदंबिके ॥ क्षुरधारश्चहृदयंस्त्रीजातीनांचसर्वतः ॥ ७४ ॥ अस्मा
कंवचनंसत्यंयद्ब्रवीमिचतद्ध्रुवम् ॥ पञ्चप्राणाधिदेवीत्वंराधाप्राणाधिकेतिमे ॥ ७५ ॥ शक्तोनरक्षितुंत्वांचयांतिप्राणास्त्वयाविना ॥
विनाधिष्ठातृदेवींचकोवाकुत्रचजीवति ॥ ७६ ॥ महाविष्णोश्चमातात्वंमूलप्रकृतिरीश्वरी ॥ सगुणात्वञ्चकलयानिर्गुणास्वयमेवतु ॥
॥ ७७ ॥ ज्योतीरूपानिराकाराभक्तानुग्रहविग्रहा ॥ भक्तानांरुचिवैचित्र्यान्नानामूर्त्तीश्चबिभ्रती ॥ ७८ ॥ महालक्ष्मीश्चवैकुण्ठेभारती
चसतांप्रसूः ॥ पुण्यक्षेत्रेभारतेचसतीत्वंपार्वतीतथा ॥ ७९ ॥ तुलसीपुण्यरूपाचगङ्गाभुवनपावनी ॥ ब्रह्मलोकेचसावित्रीकलयात्वंव
सुन्धरा ॥ ८० ॥ गोलोकेराधिकात्वञ्चसर्वगोपालकेश्वरी ॥ त्वयाविनाहंनिर्जीवोह्यशक्तःसर्वकर्म्मसु ॥ ८१ ॥ शिवःशक्तस्त्वयाश
क्त्याशवाकारस्त्वयाविना ॥ वेदकर्त्तास्वयंब्रह्मावेदमात्रात्वयासह ॥ ८२ ॥ नारायणस्त्वयालक्ष्म्याजगत्पाताजगत्पतिः ॥ फलंददाति
यज्ञश्चत्वयादक्षिणयासह ॥ ८३ ॥ बिभर्त्तिसृष्टिंशेषश्चत्वांकृत्वामस्तकेभुवम् ॥ बिभर्त्तिगङ्गारूपांत्वांमूर्ध्निगङ्गाधरःशिवः ॥ ८४ ॥ शक्ति
मच्चजगत्सर्वंशवरूपंत्वयाविना ॥ वक्तासर्वस्त्वयावाण्यामूतोमूकस्त्वयाविना ॥ ८५ ॥ यथामृदाघटंकर्त्तुंकुलालःशक्तिमान्सदा ॥
सृष्टिंस्रष्टुंतथाहञ्चप्रकृत्याचत्वयासह ॥ ८६ ॥ त्वयाविनाजडश्चाहंसर्वत्रचनशक्तिमान् ॥ सर्वशक्तिस्वरूपात्वंत्वमागच्छममान्तिकम् ॥
॥ ८७ ॥ वह्नौत्वंदाहिकाशक्तिर्नाग्निःशक्तस्त्वयाविना ॥ शोभास्वरूपाचन्द्रेत्वंत्वांविनानससुन्दरः ॥ ८८ ॥ प्रभारूपाहिसूर्य्येत्वं
त्वांविनानसभानुमान् ॥ नकामःकामिनीबन्धुस्त्वयारत्याविनाप्रिये ॥ ८९ ॥ इत्येवंस्तवनंकृत्वातांसंप्रापजगत्प्रभुः ॥ देवाबभूवुः
सश्रीकाःसभार्य्याःशक्तिसंयुताः ॥ ९० ॥ सस्त्रीकञ्चजगत्सर्वंसमभूच्छैलकन्यके ॥ गोपीपूर्णश्चगोलोकोह्यभवत्तत्प्रसादतः ॥ ९१ ॥

राजाजगामगोलोकमितिस्तुत्वाहरिप्रियाम् ॥ श्रीकृष्णेनकृतंस्तोत्रंराधायायःपठेन्नरः ॥ ९२ ॥ कृष्णभक्तिश्चतद्दास्यंसंप्राप्नोतिनसंश
यः ॥ स्त्रीविच्छेदेयःशृणोतिमासमेकमिदंशुचिः ॥ ९३ ॥अचिराल्लभतेभार्य्यांसुशीलांसुन्दरींसतीम् ॥ भार्य्याहीनोभाग्यहीनोवर्षमेकं
शृणोतियः ॥ ९४ ॥ अचिराल्लभतेभार्य्यांसुशीलांसुन्दरींसतीम् ॥ पुरामयाचत्वंप्राप्तास्तोत्रेणानेनपार्वति ॥ ९५ ॥ मृतायांदक्षकन्या
यामाज्ञयापरमात्मनः ॥ स्तोत्रेणानेनसंप्राप्तासावित्रीब्रह्मणापुरा ॥ ९६ ॥ पुरादुर्वाससःशापान्निःश्रीकेदेवतागणे ॥ स्तोत्रेणानेनदेवै
स्तैःसंप्राप्ताश्रीःसुदुर्लभा ॥ ९७ ॥ शृणोतिवर्षमेकञ्चपुत्रार्थीलभतेसुतम् ॥ महाव्याधीरोगमुक्तोभवेत्स्तोत्रप्रसादतः ॥ ९८ ॥ कार्त्ति
कीपूर्णिमायांतुतांसंपूज्यपठेत्तुयः ॥ अचलांश्रियमाप्नोतिराजसूयफलंलभेत् ॥ ९९ ॥ नारीशृणोतिचेत्स्तोत्रंस्वामिसौभाग्यसंयुता ॥
भक्त्याशृणोतियःस्तोत्रंबन्धनान्मुच्यतेध्रुवम् ॥ १०० ॥ नित्यंपठतियोभक्त्याराधांसंपूज्यभक्तितः ॥ सप्रयातिचगोलोकंनिर्मुक्तोभ
वबन्धनात् ॥ १०१ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेहरगौरीसंवादेश्रीराधिकोपाख्यानेराधा
पूजास्तोत्रादिकथनंनामपञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ छ ॥ ॥ श्रीपार्वत्युवाच ॥ ॥ पूजाविधानंस्तोत्रञ्चश्रुतमत्यद्भु
तंमया ॥ अधुनाकवचंब्रूहिश्रोष्यामित्वत्प्रसादतः ॥ १ ॥ ॥ श्रीमहेश्वरउवाच ॥ ॥ शृणुवक्ष्यामिहेदुर्गेकवचंपरमाद्भुतम् ॥
पुरामह्यंनिगदितंगोलोकेपरमात्मना ॥ २ ॥ अतिगुह्यंपरंतत्त्वंसर्वमन्त्रौघविग्रहम् ॥ यद्धृत्वापठनाद्ब्रह्मासंप्राप्तोवेदमातरम् ॥
॥ ३ ॥ यद्धृत्वाहंतवस्वामीसर्वमातासुरेश्वरी ॥ नारायणश्चयद्धृत्वामहालक्ष्मीमवापसः ॥ ४ ॥ यद्धृत्वापरमात्माचनिर्गुणःप्रकृ
तेःपरः ॥ बभूवशक्तिमान्कृष्णःसृष्टिंकर्त्तुंपुराविभुः ॥ ५ ॥ विष्णुःपाताचयद्धृत्वासंप्राप्तस्सिन्धुकन्यकाम् ॥ शेषोबिभर्त्तिब्रह्माण्डंमूर्ध्नि
सर्षपवद्यतः ॥ ६ ॥ प्रत्येकंलोमकूपेपुब्रह्माण्डानिमहान्विराट् ॥ बिभर्तिधारणाद्यस्यसर्वाधारोबभूवसः ॥ ७ ॥ यद्धारणाच्चपठनाद्ध
र्म्मःसाक्षीचसर्वतः ॥ यद्धारणात्कुवेरश्चधनाध्यक्षश्चभारते ॥ ८ ॥ इन्द्रःसुराणामीशश्चपठनाद्धारणाद्विभुः ॥ नृपाणांमनुरीशश्चपठ
नाद्धारणात्प्रभुः ॥ ९ ॥ श्रीमांश्चन्द्रश्चयद्धृत्वाराजसूयंचकारसः ॥ स्वयंसूर्य्यस्त्रिलोकेशःपठनाद्धारणाद्धरिः ॥ १० ॥ यद्धृत्वा

पठनादग्निर्जगत्पूतंकरोतिच ॥ यद्धृत्वावातिवातोऽयंपुनातिभुवनत्रयम् ॥ ११ ॥ यद्धृत्वाचस्वतन्त्रोहिमृत्युश्चरतिजन्तुषु ॥ त्रिसप्त
कृत्वानिःक्षत्रांचकारचवसुन्धराम् ॥ १२ ॥ जामदग्न्यश्चरामश्चपठनाद्धारणात्प्रभू ॥ पपौसमुद्रंयद्धृत्वापठनात्कुम्भसम्भवः ॥ १३ ॥
सनत्कुमारोभगवान्यद्धृत्वाज्ञानिनांगुरुः ॥ जीवन्मुक्तौचसिद्धौचनरनारायणावृषी ॥ १४ ॥ यद्धृत्वापठनात्सिद्धोवसिष्ठोब्रह्मपुत्रकः ॥
सिद्धेशःकपिलोयस्माद्यस्माद्दक्षःप्रजापतिः ॥ १५ ॥ यस्माद्भृगुश्चमांद्रेष्टिकूर्म्मःशेषंविभर्त्तिच ॥ सर्वाधारोयतोवायुर्वरुणः पवनो
यतः ॥ १६ ॥ ईशानोदिक्पतिश्चैवयमःशास्तायतःशिवे ॥ कालःकालाग्निरुद्रश्चसंहर्त्ताजगतांयतः ॥ १७ ॥ यद्धृत्वागौतमःसिद्धः
कश्यपश्चप्रजापतिः ॥ वसुदेवसुतंप्रापचैकांशेनतुतत्कलाम् ॥ १८ ॥ पुरास्वजायाविच्छेदेदुर्वासामुनिपुङ्गवः ॥ संप्रापरामःसीताञ्च
रावणेनहृतांपुरा ॥ १९ ॥ पुरानलश्चसंप्रापदमयन्तींयतः सतीम् ॥ शंखचूडोमहावीरोदैत्यानामीश्वरोयतः ॥ २० ॥ वृषोवहतिमां
दुर्गेयतोहिगरुडोहरिम् ॥ एवंसंप्रापसंसिद्धिंसिद्धाश्चमुनयःपुरा ॥ २१ ॥ यद्धृत्वाचमहालक्ष्मीःप्रदात्रीसर्वसम्पदाम् ॥ सरस्वतीसतांश्रेष्ठा
यतःक्रीडावतीरतिः ॥ २२ ॥ सावित्रीवेदमाताचयतःसिद्धिमवाप्नुयात् ॥ सिन्धुकन्यामर्त्यलक्ष्मीर्यतोविष्णुमवापसा ॥२३॥ यद्धृ
त्वातुलसीपूतागङ्गाभुवनपावनी ॥ यद्धृत्वासर्वसस्याढ्यासर्वाधारावसुन्धरा ॥ २४ ॥ यद्धृत्वामनसादेवीसिद्धावैविश्वपूजिता ॥ यद्धृत्वादे
वमाताचविष्णुंपुत्रमवापसा ॥ २५ ॥ पतिव्रताचयद्धृत्वालोपामुद्राप्यरुन्धती ॥ लेभेचकपिलंपुत्रंदेवहूतीयतःसती ॥ २६ ॥ प्रियव्र
तोत्तानपादौसुतौप्रापचतत्प्रसूः ॥ त्वन्माताचापिसंप्रापत्वांदेवींगिरिजांयतः ॥२७॥ एवंसर्वेसिद्धगणाःसर्वैश्वर्य्यमवाप्नुयुः ॥ श्रीजगन्म
ङ्गलस्यास्यकवचस्यप्रजापतिः ॥२८॥ ऋषिश्छन्दोऽस्यगायत्रीदेवीरासेश्वरीस्वयम् ॥ श्रीकृष्णभक्तिसंप्राप्तौविनियोगःप्रकीर्त्तितः ॥
॥ २९ ॥ शिष्यायकृष्णभक्तायब्राह्मणायप्रकाशयेत् ॥ शठायपरशिष्यायदत्त्वामृत्युमवाप्नुयात् ॥ ३० ॥ राज्यंदेयंशिरोदेयंनदेयंकव
चंप्रिये ॥ कण्ठेधृतमिदंभक्त्याकृष्णेनपरमात्मना ॥३१॥ मयादृष्टश्चगोलोकेब्रह्मणाविष्णुनापुरा ॥ ॐराधेतिचतुर्थ्यन्तंवह्निजायान्त

१ मुराः-इतिपाठः । २ देवोरासेश्वर-इतिपाठः ।

मेवच ॥ ३२ ॥ कृष्णेनोपासितोमन्त्रःकल्पवृक्षःशिरोऽवतु ॥ ॐह्रींश्रींराधिकाङेन्तंवह्निजायान्तमेवच ॥ ३३ ॥ कपालंनेत्रयुग्म
ञ्चश्रोत्रयुग्मंसदाऽवतु ॥ ॐऐंह्रींश्रींराधिकायैवह्निजायान्तमेवच ॥ ३४ ॥ मस्तकंकेशसंघांश्चमन्त्रराजःसदाऽवतु ॥ ओंरांराधा
चतुर्थ्यन्तंवह्निजायान्तमेवच ॥ ३५ ॥ सर्वसिद्धिप्रदःपातुकपोलंनासिकांमुखम् ॥ क्लींश्रीकृष्णप्रियाङेन्तंकण्ठंपातुनमोऽन्तकम् ॥
॥ ३६ ॥ ओंरांरासेश्वरीङेन्तंस्कन्धंपातुनमोऽन्तकम् ॥ ओंरांरासविलासिन्यैस्वाहापृष्ठंसदावतु ॥ ३७ ॥ वृन्दावनंविलासिन्यैस्वाहा
वक्षःसदावतु ॥ तुलसीवनवासिन्यैस्वाहापातुनितम्बकम् ॥ ३८ ॥ कृष्णप्राणाधिकाङेन्तंस्वाहान्तंप्रणवादिकम् ॥ पादयुग्मञ्चसर्वाङ्गं
सन्ततंपातुसर्वतः ॥ ३९ ॥ प्राच्यांरक्षतुसाराधावह्नौकृष्णप्रियावतु ॥ दक्षेरासेश्वरीपातुगोपीशानैर्ऋतेऽवतु ॥ ४० ॥ पश्चिमेनिर्गुणा
पातुवायव्येकृष्णपूजिता ॥ उत्तरेसन्ततंपातुमूलप्रकृतिरीश्वरी ॥ ४१ ॥ सर्वेश्वरीसदैशान्यांपातुमांसर्वपूजिता ॥ जलेस्थलेचान्तरिक्षे
स्वप्नेजागरणेतथा ॥ ४२ ॥ महाविष्णोश्चजननीसर्वतःपातुसन्ततम् ॥ कवचंकथितंदुर्गेश्रीजगन्मङ्गलंपरम् ॥ ४३ ॥ यस्मैकस्मैनदा
तव्यंगुह्याद्गुह्यतरंपरम् ॥ तवस्नेहान्मयाख्यातंप्रवक्तव्यंनकस्यचित् ॥ ४४ ॥ गुरुमभ्यर्च्यविधिवद्वस्त्रालङ्कारचन्दनैः ॥ कण्ठेवादक्षिणे-
बाहौधृत्वाविष्णुसमोभवेत् ॥ ४५ ॥ शतलक्षजपेनैवसिद्धञ्चकवचंभवेत् ॥ यदिस्यात्सिद्धकवचोनदग्धोवह्निनाभवेत् ॥ ४६ ॥ एतस्मा
त्कवचाद्दुर्गेराजादुर्य्योधनःपुरा ॥ विशारदोजलस्तम्भेवह्निस्तम्भेचनिश्चितम् ॥ ४७ ॥ मयासनत्कुमारायपुरादत्तञ्चपुष्करे ॥ सूर्य्य
पर्वणिमेरौचससान्दीपनयेददौ ॥ ४८ ॥ बलायतेनदत्तंचददौदुर्य्योधनायसः ॥ कवचस्यप्रसादेनजीवन्मुक्तोभवेन्नरः ॥ ४९ ॥ नित्यं
पठतिभक्त्येदंतन्मन्त्रोपासकश्चयः ॥ विष्णुतुल्योभवेन्नित्यंराजसूयफलंलभेत् ॥ ५० ॥ स्नानेनसर्वतीर्थानांसर्वदानेनयत्फलम् ॥ सर्व
व्रतोपवासेनपृथिव्याश्चप्रदक्षिणैः ॥ ५१ ॥ सर्वयज्ञेषुदीक्षायांनित्यंवैसत्यरक्षणे ॥ नित्यंश्रीकृष्णसेवायांकृष्णनैवेद्यभक्षणे ॥ ५२ ॥ पाठे
चतुर्णां वेदानांयत्फलञ्चलभेन्नरः ॥ तत्फलंलभतेनूनंपठनात्कवचस्यच ॥ ५३ ॥ राजद्वारेश्मशानेचसिंहव्याघ्रान्वितेवने ॥ दावाग्नौसंक

---

१ वृन्दावनविलासिन्यैस्वाहापातुनितंबकम् । तुलसीवनवासिन्यैस्वाहावाहुंसदावतु—इतिपाठः ।

टैचैवदस्युचौरान्वितेभये ॥ ५४ ॥ कारागारेविपद्ग्रस्तेघोरेचदृढबन्धने ॥ व्याधियुक्तोभवेन्मुक्तोधारणात्कवचस्यच ॥ ५५ ॥ इत्येत
त्कथितंदुर्गेतवैवेदंमहेश्वरि ॥ त्वमेवसर्वरूपामांमायापृच्छसिमायया ॥ ५६ ॥ श्रीनारायणउवाच ॥ इत्युक्त्वाराधिकाख्यानंस्मारंस्मार
श्चमाधवम् ॥ पुलकाङ्कितसर्वाङ्गःसाश्रुनेत्रोबभूवसः ॥ ५७ ॥ नकृष्णसदृशोदेवोनगङ्गासदृशीसरित् ॥ नपुष्करात्परंतीर्थंनवर्णोब्राह्म
णात्परः ॥ ५८ ॥ परमाणोःपरंसूक्ष्मंमहाविष्णोःपरोमहान् ॥ नभःपरञ्चविस्तीर्णंयथानास्त्येवनारद ॥ ५९ ॥ यथानवैष्णवाज्ज्ञा
नीयोगीन्द्रःशङ्करात्परः ॥ कामक्रोधलोभमोहाजितास्तेनैवनारद ॥ ६० ॥ स्वप्नेजागरणेशश्वत्कृष्णध्यानरतःशिवः ॥ यथाकृ
ष्णस्तथाशम्भुर्नभेदोमाधवेशयोः ॥ ६१ ॥ यथाशम्भुर्वैष्णवेषुयथादेवेषुमाधवः ॥ तथेदंकवचंवत्सकवचेषुप्रशस्तकम् ॥ ६२ ॥
शिशब्दोमङ्गलार्थश्चवकारोदातृवाचकः ॥ मङ्गलानांप्रदातायःसशिवःपरिकीर्त्तितः ॥ ६३ ॥ नराणांसन्ततंविश्वेशंकल्याणंकरोतियः ॥
कल्याणंमोक्षइत्युक्तंसएवंशङ्करःस्मृतः ॥ ६४ ॥ ब्रह्मादीनांसुराणाञ्चमुनीनांवेदवादिनाम् ॥ तेषांचमहतांदेवोमहादेवःप्रकीर्तितः ॥
॥ ६५ ॥ महतीपूजिताविश्वेमूलप्रकृतिरीश्वरी ॥ तस्यादेवःपूजितश्चमहादेवःसचस्मृतः ॥ ६६ ॥ विश्वस्थानाञ्चसर्वेषांमहता
मीश्वरःस्वयम् ॥ महेश्वरञ्चतेनेमंप्रवदन्तिमनीषिणः ॥ ६७ ॥ हेब्रह्मपुत्रधन्योऽसियद्गुरुश्चमहेश्वरः ॥ श्रीकृष्णभक्तिदाता
योभवान्पृच्छतिमाञ्चकिम् ॥ ६८ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेराधिकोपाख्याने
तन्मन्त्रादिकथनंनामषट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ छ ॥ इतिराधोपाख्यानम् ॥ नारदउवाच ॥ सर्वाख्यानंश्रुतंब्रह्म
न्नतीवपरमाद्भुतम् ॥ अधुनाश्रोतुमिच्छामिदुर्गोपाख्यानमुत्तमम् ॥ १ ॥ दुर्गानारायणीशानाविष्णुमायाशिवासती ॥ नित्यासत्या
भगवतीशर्वाणीसर्वमङ्गला ॥ २ ॥ अम्बिकावैष्णवीगौरीपार्वतीचसनातनी ॥ नामानिकौथुमोक्तानिसर्वेषांशुभदानिच ॥ ३ ॥
अर्थंषोडशनाम्नांचसर्वेषामीप्सितंवरम् ॥ ब्रूहिवेदविदांश्रेष्ठवेदोक्तंसर्वसम्मतम् ॥ ४ ॥ केनवापूजितासादौद्वितीयेकेनवापुरा ॥ तृतीयेवा

---

१ रिपुग्रस्ते इतिपाठः ।

चतुर्थेवाकेनसर्वत्रपूजिता ॥ ५ ॥ नारायणउवाच ॥ अर्थंषोडशनाम्नाञ्चविष्णुर्वेदेचकारसः ॥ ज्ञात्वापुनःपृच्छसित्वंकथयामियथा गमम् ॥ ६ ॥ दुर्गोदैत्येमहाविघ्नेभवबन्धेचकर्म्मणि ॥ शोकेदुःखेचनरकेयमदण्डेचजन्मनि ॥ ७ ॥ महाभयेऽतिरोगेचाप्याशब्दो हन्तृवाचकः ॥ एतान्हन्त्येवयादेवीसादुर्गापरिकीर्त्तिता ॥ ८ ॥ यशसातेजसारूपैर्नारायणसमागुणैः ॥ शक्तिर्नारायणस्ये यंतेननारायणीस्मृता ॥ ९ ॥ ईशानःसर्वसिद्ध्यर्थेचाशब्दोदातृवाचकः ॥ सर्वसिद्धिप्रदात्रीयासापीशानाप्रकीर्त्तिता ॥ १० ॥ सृष्टा मायापुरासृष्टौविष्णुनापरमात्मना ॥ मोहितंमायया विश्वंविष्णुमायाप्रकीर्तिता ॥ ११ ॥ शिवेकल्याणरूपाचशिवदाचशिवप्रिया[1]॥ प्रियेदातरिचाशब्दोशिवातेनप्रकीर्तिता ॥ १२ ॥ सद्बुद्ध्यधिष्ठातृदेवीविद्यमानायुगेयुगे ॥ पतिव्रतासुशीलाचसासतीपरिकीर्तिता ॥ ॥ १३ ॥ यथानित्योहिभगवान्नित्याभगवतीतथा ॥ स्वमाययातिरोभूतातत्रेशेप्राकृतेलये ॥ १४ ॥ आब्रह्मस्तम्बपर्य्यन्तंसर्वंमिथ्यैव कृत्रिमम् ॥ दुर्गासत्यस्वरूपासाप्रकृतिर्भगवान्यथा ॥ १५ ॥ सिद्धैश्वर्यादिकंसर्वंयस्यामस्तियुगेयुगे ॥ सिद्धादिकेभगोज्ञेयस्तेनसा भगवतीस्मृता ॥ १६ ॥ सर्वान्मोक्षंप्रापयतिजन्ममृत्युजरादिकम् ॥ चराचरांश्चविश्वस्थाञ्छर्वाणीतेनकीर्त्तिता ॥ १७ ॥ मङ्गलंमोक्ष वचनंचाशब्दोदातृवाचकः ॥ सर्वान्मोक्षान्याददातिसैवस्यात्सर्वमङ्गला ॥ १८ ॥ हर्षेसम्पदिकल्याणेमङ्गलंपरिकीर्तितम् ॥ तान्ददाति चसर्वेभ्यस्तेनसासर्वमङ्गला ॥ १९ ॥ अम्बेतिमातृवचनोवन्दनेपूजनेसदा ॥ पूजितावन्दितामाताजगतांतेनसांबिका ॥ २० ॥ विष्णु भक्ताविष्णुरूपाविष्णोःशक्तिस्वरूपिणी ॥ सृष्टौचविष्णुनासृष्टावैष्णवीतेनकीर्तिता ॥ २१ ॥ गौरःपीतेचनिर्लिप्तेपरेब्रह्मणिनिर्म्मले[2]॥ तस्यात्मनःशक्तिरियंगौरीतेनप्रकीर्तिता ॥ २२ ॥ गुरुःशम्भुश्चसर्वेषांतस्यशक्तिःप्रियासती ॥ गुरुःकृष्णश्चतन्मायागौरीतेनप्रकी र्त्तिता ॥ २३ ॥ तिथिभेदेपर्वभेदेकल्पभेदेन्यभेदके ॥ ख्यातौतेषुचविख्यातापार्वतीतेनकीर्तिता ॥ २४ ॥ महोत्सवविशेषेचपर्वन्निति सुकीर्तिता ॥ तस्याधिदेवीयासाचपार्वतीपरिकीर्त्तिता ॥ २५ ॥ पर्वतस्यसुतादेवीसाविर्भूताचपर्वते ॥ पर्वताधिष्ठातृदेवीपार्वतीतेनकी

---

१ वेगेचेतिपाठः । २ सर्वभेदे—इतिपाठः ।

र्त्तिता ॥ २६ ॥ सर्वकालेसनाप्रोक्तोविस्तृतेचतर्नातिच ॥ सर्वत्रसर्वकालेचविद्यमानासनातनी ॥ २७ ॥ अर्थःषोडशनाम्नाञ्चकीर्त्तित
श्चमहामुने ॥ यथागमंत्वंवेदोक्तोपाख्यानंचनिशामय ॥ २८ ॥ प्रथमेपूजितासाचकृष्णेनपरमात्मना ॥ वृन्दावनेचसृष्ट्यादौगोलोके
रासमण्डले ॥ २९ ॥ मधुकैटभभीतेनब्रह्मणासाद्वितीयतः ॥ त्रिपुरप्रेरितेनैवतृतीयेत्रिपुरारिणा ॥ ३० ॥ भ्रष्टश्रियामहेन्द्रेणशापाद्दुर्वा
ससःपुरा ॥ चतुर्थेपूजितादेवीभक्त्याभगवतीसती ॥ ३१ ॥ तदामुनीन्द्रैःसिद्धेन्द्रैर्देवैश्चमुनिपुङ्गवैः ॥ पूजितासर्वविश्वेषुसमभूत्सर्वतः
सदा ॥३२॥ तेजस्सुसर्वदेवानांसाविर्भूतापुरामुने ॥ सर्वेदेवाददुस्तस्यैशस्त्राण्याभरणानिच ॥ ३३ ॥ दुर्गादयश्चदैत्याश्चनिहतादुर्गया
तया ॥ दत्तंस्वराज्यंदेवेभ्योवरञ्चयदभीप्सितम् ॥ ३४ ॥ कल्पान्तरेपूजितासासुरथेनमहात्मना ॥ राज्ञाचमेधशिष्येणमृन्मय्याञ्चसरि
त्तटे ॥ ३५ ॥ मेषादिभिश्चमहिषैःकृष्णसारैश्चमण्डकैः ॥ छागैरिक्षुसुकूष्माण्डैःपक्षिभिर्बलिभिर्मुने ॥ ३६ ॥ वेदोक्तांश्चैवदत्त्वैवमुप
चारांस्तुषोडश ॥ ध्यात्वाचकवचंधृत्वासंपूज्यचविधानतः ॥ ३७ ॥ राजाकृत्वापरीहारंवरंप्रापयथेप्सितम् ॥ मुक्तिंसंप्रापवैश्यश्चसं
पूज्यचसरित्तटे ॥ ३८ ॥ तुष्टावराजावैश्यश्चसाश्रुनेत्रःकृताञ्जलिः ॥ ससर्जमृन्मयींतांवैगर्भीरेनिर्मलेजले ॥ ३९ ॥ मृन्मयींतामदृष्ट्वाच
जलधौतांनराधिपः ॥ रुरोदचतदावैश्यस्ततःस्थानान्तरंययौ ॥ ४० ॥ त्यक्त्वादेहञ्चवैश्यस्तुपुष्करेदुष्करंतपः ॥ ४१ ॥ कृत्वाजगाम
गोलोकंदुर्गादेवीवरेणसः ॥ राजाययौस्वराज्यञ्चपूज्योनिष्कण्टकंबली ॥ ४२ ॥ भोगञ्चभुभुजेभूपःषष्टिवर्षसहस्रकम् ॥ भार्यांस्व
राज्यंसंन्यस्यपुत्रेवैकालयोगतः ॥ ४३ ॥ मनुर्बभूवसावर्णिस्तप्त्वावैपुष्करेतपः ॥ इत्येवंकथितंवत्ससमासेनयथागमम् ॥ ४४ ॥
दुर्गाख्यानंमुनिश्रेष्ठकिंभूयःश्रोतुमिच्छसि ॥ ४५ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेद्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेदुर्गो
पाख्यानेदुर्गादिनामव्युत्पत्त्यादिकथनंनामसप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ नारदउवाच ॥ ॥ कस्यवंशोद्भवोराजासुरथो
धर्म्मिणांवरः ॥ कथंसंप्रापवैज्ञानंमेधसोज्ञानिनांवरात् ॥ १ ॥ कस्यवंशोद्भवोब्रह्मन्मेधसोमुनिसत्तम ॥ बभूवकुत्रसंवादोनृपस्यमुनि
नासह ॥ २ ॥ सख्यंबभूवकुत्रास्यवाप्रभोनृपवैश्ययोः ॥ व्यासेनश्रोतुमिच्छामिवदवेदविदांवर ॥ ३ ॥ ॥ नारायणउवाच ॥ ॥ अत्रि

श्चब्रह्मणःपुत्रस्तस्यपुत्रोनिशाकरः ॥ स चकृत्वाराजसूयंद्विजराजोबभूवह ॥ ४ ॥ गुरुपत्न्यांचतारायांतस्याभूच्चबुधःसुतः ॥ बुधपुत्रस्तु
चैत्रश्चतत्पुत्रःसुरथःस्मृतः ॥ ५ ॥ ॥ नारदउवाच ॥ ॥ गुरुपत्न्याश्चतारायांममभूत्तत्सुतःकथम् ॥ अहोव्यतिक्रमंब्रूहिवेदस्यचमहा
मुने ॥ ६ ॥ ॥ नारायणउवाच ॥ ॥ सम्पन्नमत्तोमहाकामीव्यचरज्जाह्नवीतटे ॥ तारांसुरगुरोःपत्नींधर्म्मिष्ठाञ्चपतिव्रताम् ॥ ७ ॥ सुस्नातां
सुन्दरींरम्यांपीनोन्नतपयोधराम् ॥ सुश्रोणींसुनितम्बाढ्यांमध्यक्षीणांमनोहराम् ॥ ८ ॥ सुदतींकोमलांगींञ्चनवयौवनसंयुताम् ॥
सूक्ष्मवस्त्रपरीधानांरत्नभूषणभूषिताम् ॥ ९ ॥ कस्तूरीबिन्दुनासार्द्धमधश्चन्दनबिन्दुना ॥ सिन्दूरबिन्दुनाचारुफालमध्यस्थलोज्ज्व
लाम् ॥ १० ॥ वायुनाधोवस्त्रहीनांसकामांरक्तलोचनाम् ॥ शरत्पार्वणचन्द्रास्यांपक्वबिम्बाधरांवराम् ॥ ११ ॥ सस्मितांन
म्रवक्रांचलज्जयाचन्द्रदर्शनात् ॥ गच्छतींस्वगृहंहर्षान्मत्तवारणगामिनीम् ॥ १२ ॥ तांदृष्ट्वामन्मथाक्रान्तश्चन्द्रोलज्जांजहौमुने ॥
पुलकाङ्कितसर्वांगःसकामस्तामुवाचसः ॥ १३ ॥ ॥ चन्द्रउवाच ॥ ॥ योषिच्छ्रेष्ठेक्षणंतिष्ठवरिष्ठेरसिकासुच ॥ सुविदग्धेविद
ग्धानांमनोहरसिसन्ततम् ॥ १४ ॥ निषेव्यप्रकृतिंजन्मसहस्रंकामसागरे ॥ तपःफलेनत्वांप्रापबृहच्छ्रोणींबृहस्पतिः ॥ १५ ॥ अहो
तपस्विनासार्द्धमविदग्धेनवेधसा ॥ योजितात्वंरसवतीशश्वत्कामातुरावरा ॥ १६ ॥ किंवासुखञ्चविज्ञातमविज्ञेषुसमागमे ॥ विद
ग्धायाविदग्धेनसङ्गमःसुखसागरः ॥ १७ ॥ कामेनकामिनीत्वञ्चदग्धासिव्यर्थमीश्वरि ॥ कर्मणावात्मदोषाद्वाकोजानातिमनः
स्त्रियाः ॥ १८ ॥ दिनेदिनेवृथायातिदुर्लभंनवयौवनम् ॥ नवीनयौवनस्थायावृद्धेनस्वामिनातव ॥ १९ ॥ शश्वत्तपस्याशुक्तश्चकृष्ण
मात्मानमीप्सितम् ॥ स्वप्नेजागरणेवापिध्यायन्नास्तेबृहस्पतिः ॥ २० ॥ सर्वकामरसज्ञात्वंनिष्कामंकाममीप्सितम् ॥ ध्यायन्तीक
मुकीशश्वद्यूनांशृङ्गारमात्मनि ॥ २१ ॥ अन्यश्चत्वन्मनःकामोभिन्नंत्वद्भर्तुरीप्सितम् ॥ ययोश्चभिन्नौविषयौकाप्रीतिःसङ्गमेतयोः ॥
॥ २२ ॥ वासन्तीपुष्पतल्पेचगन्धचन्दनचर्चिते ॥ मोदस्वमांगृहीत्वात्वंवसन्तेमाधवीवने ॥ २३ ॥ सुगन्धयुत्फुल्लकुसुमेनिर्जनेच
न्दनेवने ॥ भवतीयुवतीभाग्यवतीतत्रैवमोदताम् ॥ २४ ॥ चन्दनेचम्पकवनेशीतचंपकवायुना ॥ रम्येचम्पकतल्पेचक्रीडांकुरुमया

सह ॥ २५ ॥ इत्युक्त्वामदनोन्मत्तोमदनाधिकसुन्दरः ॥ पपातचरणेदेव्यामन्दोमन्दाकिनीतटे ॥ २६ ॥ निरुद्धमार्गाच
न्द्रेणशुष्ककण्ठोष्ठतालुका ॥ अभीतोवाचकोपेनरक्तपङ्कजलोचना ॥ २७ ॥ ॥ तारोवाच ॥ ॥ धिक्त्वांचन्द्रनृणंमन्येपरस्त्री
लम्पटंशठम् ॥ अत्रेरभाग्यात्त्वंपुत्रोव्यर्थन्तेजन्मजीवनम् ॥ २८ ॥ अरेकृत्वाराजसूयमात्मानंमन्यसेबली ॥ बभूवपुण्यंतेव्यर्थंविप्रस्त्री
षुचयन्मनः ॥ २९ ॥ यस्यचित्तंपरस्त्रीषुसोऽशुचिःसर्वकर्मसु ॥ नकर्मफलभाक्पापीनिन्द्योविश्वेषुसर्वतः ॥ ३० ॥ सतीत्वंमेनाश
यसियक्ष्मग्रस्तोभविष्यसि ॥ अत्युच्छ्रितोनिपतनंप्राप्नोतीतिश्रुतौश्रुतम् ॥ ३१ ॥ दुष्टानांदर्पहाकृष्णोदर्पंतेनिहनिष्यति ॥ त्यजमां
म तरंवत्ससत्यंतेशंभविष्यति ॥ ३२ ॥ इत्युक्त्वातारकासाध्वीरुरोदचमुहुर्मुहुः ॥ चकारसाक्षिणंधर्मंसूर्यंवायुंहुताशनम् ॥ ३३ ॥
ब्रह्माणंपरमात्मानमाकाशंपवनंधराम् ॥ दिनंरात्रिंचसन्ध्याश्चसर्वंसुरगणंमुने ॥ ३४ ॥ तारकावचनंश्रुत्वानभीतःसचुकोपह ॥ करेधृ
त्वारथेतूर्णंस्थापयामाससुन्दरीम् ॥ ३५ ॥ रथंचचालयामासमनोयायीमनोहरम् ॥ मनोहरांगृहीत्वातांसचरेमेमनोहरम् ॥ ३६ ॥
विस्पन्दकेसुरवनेचन्दनेपुष्पभद्रके ॥ पुष्करेचनदीतीरेपुष्पितेपुष्पकानने ॥ ३७ ॥ सुगन्धिपुष्पतल्पेचपुष्पचन्दनवायुना ॥ निर्ज
नेमलयद्रोण्यांस्निग्धचन्दनचर्चिते ॥ ३८ ॥ शैलेशैलेनदेनद्यांशृङ्गारंकुर्वतोस्तयोः ॥ गतंवर्षशतंहर्षान्मुहूर्त्तमिवनारद ॥ ३९ ॥ बभूव
शरणापन्नोभीतोदैत्येषुचन्द्रमाः ॥ तेजस्विनितथाशुक्रेनेपाश्चबलिनांगुरौ ॥ ४० ॥ अभयञ्चददौतस्मैकृपयाभृगुनन्दनः ॥ गुरुंजह्रास
देवानांसुविपक्षंबृहस्पतिम् ॥ ४१ ॥ सभायांजहसुर्दृष्ट्वाबलिनोदितिनन्दनाः ॥ अभयञ्चददुस्तस्मैभीतायचकलङ्किने ॥ ४२ ॥
सतीसतीत्वध्वंसेनपापिष्ठचन्द्रमण्डले ॥ बभूवशशरूपश्चकलङ्कंनिर्मलेमलम् ॥ ४३ ॥ उवाचतंमहाभीतंशुक्रोवेदविदांवरः ॥ हितं
तथ्यंवेदयुक्तंपरिणामसुखावहम् ॥ ४४ ॥ ॥ शुक्रउवाच ॥ ॥ त्वमहोब्रह्मणःपौत्रोऽप्यत्रेर्भगवतःसुतः ॥ दुर्नीतंकर्मतेपुत्रनीचवन्नय
शस्करम् ॥ ४५ ॥ राजसूयस्यसुफलेनिर्मलेकीर्त्तिमण्डले ॥ सुधाराशौसुराबिन्दुरूपमङ्कमुपार्जितम् ॥ ४६ ॥ त्यजदेवगुरोःपत्नींप्रसू
मित्रमहासतीम् ॥ धर्मिष्ठस्यवरिष्ठस्यब्राह्मणानांबृहस्पतेः ॥ ४७ ॥ शम्भोःसुराणामीशस्यगुरुपुत्रस्यवेधसः ॥ पौत्रस्याङ्गिरसे

॥१४८॥

नित्यंज्वलतोब्रह्मतेजसा ॥ ४८ ॥ शत्रोरपिगुणावाच्यादोषावाच्यागुरोरपि ॥ इतिसद्वंशजातानांस्वभावश्चसतामपि ॥ ४९ ॥
सशत्रुर्मेसुरगुरुःपरोविश्वेनिशाकर ॥ तथापिसहजाख्यानंवर्णितंधर्मसंसदि ॥ यत्रलोकाश्चधर्मिष्ठास्तत्रधर्मःसनातनः ॥ ५० ॥
यतोधर्मस्ततःकृष्णोयतःकृष्णस्ततोजयः ॥ गौरेकंपश्चचव्याघ्रीसिंहीसप्तप्रसूयते ॥ ५१ ॥ हिंसकाःप्रलयंयान्तिधर्मोरक्षतिधार्मि
कम् ॥ देवाश्चगुरवोविप्राःशक्तायद्यपिरक्षितुम् ॥ ५२ ॥ तथापिनहिरक्षन्तिधर्मघ्नंपापिनंजनम् ॥ कुलटाविप्रपत्नीनांगमनेसुरवि
प्रयोः ॥ ५३ ॥ ब्रह्महत्याषोडशांशपातकंचभवेद्ध्रुवम् ॥ तासामुपस्थितानांचगमनेतच्चतुर्थकम् ॥ ५४ ॥ विप्रपत्नीसतीनांचगमनंचैव
लेनचेत् ॥ ब्रह्महत्याशतपापंभवेदेवश्रुतौश्रुतम् ॥ ५५ ॥ धर्म्मंचरमहाभागब्राह्मणींत्यजसाम्प्रतम् ॥ कृत्वानुतापंपापाच्चनिवृत्तिस्तुमहा
फला ॥ ५६ ॥ उपायेनचतेपापंदूरीभूतंभवेन्ननु ॥ शरणागतभीतस्यमयिदेवस्यधर्मतः ॥ ५७ ॥ शस्त्रहीनंचभीतंचदीनंचशर
णार्थिनम् ॥ योनरक्षत्यधर्मिष्ठःकुम्भीपाकेवसेद्ध्रुवम् ॥ ५८ ॥ राजसूयशतानांचरक्षितालभतेफलम् ॥ परमैश्वर्य्ययुक्तश्चधर्मेणसभवे
दिह ॥ ५९ ॥ इत्युक्त्वादैत्यगुरुःस्वर्गेमन्दाकिनीतटे ॥ स्नात्वातंस्नापयामासविष्णुपूजांचकारसः ॥ ६० ॥ विष्णुपादाब्जजाते
नतन्नैवेद्यंशुभप्रदम् ॥ गङ्गोदकेनपुण्येनभोजयामासचन्द्रकम् ॥ ६१ ॥ क्रोडेकृत्वातुतंभीतंलज्जितंपापकर्म्मणा ॥ कुशहस्तस्तमित्यू
चेस्मारंस्मारंहरिंमुने ॥ ६२ ॥ शुक्रउवाच ॥ यद्यस्ति[१]मेतपःसत्यंसत्यंपूजाफलंहरे ॥ सत्यंव्रतफलंचैवसत्यंसत्यवचःफलम् ॥ ६३ ॥
तीर्थस्नानफलंसत्यंसत्यंदानफलंयदि ॥ उपवासफलंसत्यंपापान्मुक्तोभवान्भवेत् ॥ ६४ ॥ विप्रंत्रिसन्ध्याहीनंयाविष्णुपूजाविही
नकम् ॥ तन्नाप्नोतुमहाघोरंचन्द्रपापंसुदारुणम् ॥ ६५ ॥ स्वभार्य्यांवंचनंकृत्वायःप्रयातिपरस्त्रियम् ॥ सयातुनरकंघोरंचन्द्रपापेन
पातकी ॥ ६६ ॥ वाचावाताडयेत्कान्तंदुश्शीलादुर्मुखाचया ॥ सायुगंचन्द्रपापेनयातुलालामुखंध्रुवम् ॥ ६७ ॥ अनैवेद्यंवृथान्नंचय
श्चभुङ्क्तेहरेर्द्विजः ॥ सयातुकालंसूत्रंचचन्द्रपापाच्चतुर्युगम् ॥ ६८ ॥ अम्बुवाच्यंभूखननंयःकरोतिनराधमः ॥ चन्द्रपापाद्युगशतंका

१ यद्यस्तीतिपाठः ।

लमूत्रंसगच्छतु ॥ ६९ ॥ स्वकान्तंवंचयित्वाचयायातिपरपूरुषम् ॥ सायातुवह्निकुण्डंचचन्द्रपापाच्चतुर्युगम् ॥ ७० ॥ कीर्त्तिंकरोति
रजसापरकीर्त्तिविलुप्यच ॥ सयुगंचन्द्रपापेनकुम्भीपाकञ्चगच्छतु ॥ ७१ ॥ पितरंमातरंभार्य्यायोनपुष्णातिपातकी ॥ स्वगुरुंचन्द्र
पापेनयातुचण्डालतांध्रुवम् ॥ ७२ ॥ कुलटान्नमवीरान्नमृतुस्नातान्नमेवच ॥ योऽश्नातिचन्द्रपापञ्चयातुतंपापिनंध्रुवम् ॥ ७३ ॥
सयातुतेनपापेनकुम्भीपाकंचतुर्युगम् ॥ तस्मादुत्तीर्य्यचाण्डालींयोनिमाप्नोतिपातकी ॥ ७४ ॥ दिवमेयोग्राम्यधर्ममहापापीकरोतिच ॥
योगच्छेत्कामतःकामीगुर्विणींवारजस्वलाम् ॥ ७५ ॥ तंयातुचन्द्रपापञ्चमहाघोरञ्चपापिनम् ॥ सयातुतेनपापेनकालमूत्रंचतुर्युगम् ॥
॥ ७६ ॥ मुखंश्रोणींस्तनञ्चापियःपश्यतिपरस्त्रियाः ॥ कामतःकामदग्धश्चयातुतंचन्द्रकल्मषम् ॥ ७७ ॥ सयातुलालाभक्ष्यञ्चचन्द्र
पापाच्चतुर्युगम् ॥ तस्मादुत्तीर्य्यभवतुचाण्डालोन्धोनपुंसकः ॥ ७८ ॥ कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषुच ॥ मांसंमसूरंलकुचंय
श्चभुङ्क्तेरवेर्दिने ॥ ७९ ॥ कुरुतेग्राम्यधर्मञ्चयातुतंचन्द्रकिल्विषम् ॥ चतुर्युगंकालमूत्रंतेनपापेनगच्छतु ॥ ८० ॥ तस्मादुत्तीर्य्यचा
ण्डालींयोनिमाप्नोतिपातकी ॥ सप्तजन्मसुसद्रोगीदरिद्रःकुब्जएवच ॥ ८१ ॥ एकादश्यांचयोभुङ्क्तेकृष्णजन्माष्टमीदिने ॥ शिवरात्रौम
हापापीयातुतंचन्द्रपातकम् ॥ ८२ ॥ सयातुकुम्भीपाकञ्चयावदिन्द्राश्चतुर्दश ॥ तेनपापेनचाप्नोतुचाण्डालींयोनिमेवच ॥ ८३ ॥
ताम्रस्थंदुग्धमाध्वीकमुच्छिष्टेघृतमेवच ॥ नारिकेलोदकंकांस्येदुग्धंसलवणंतथा ॥ ८४ ॥ पीतशेषजलंचैवभुक्तशेषंतथौदनम् ॥
असकृच्चौदनंभुङ्क्तेसूर्य्येनास्तंगतेद्विजः ॥ ८५ ॥ तंयातुचन्द्रपापञ्चदुर्निवारञ्चदारुणम् ॥ सयातुतेनपापेनचान्धकूपंचतुर्युगम् ॥
॥ ८६ ॥ स्वकन्याविक्रयीविप्रोदेवलोवृषवाहकः ॥ शूद्राणांशवदाहीचतेषांवैसूपकारकः ॥ ८७ ॥ अश्वत्थतरुघातीच
विष्णुवैष्णवनिन्दकः ॥ तंयातुचन्द्रपापञ्चदारुणंपापिनंभृशम् ॥ ८८ ॥ सयातुतस्मात्पापाच्चतप्तसूर्मीञ्चपातकी ॥ शश्वद्दग्धोभव
तुसयावदिन्द्राश्चतुर्दश ॥ ८९ ॥ तस्मादुत्तीर्य्यचाण्डालींयोनिमाप्नोतिपातकी ॥ सप्तजन्मसुचाण्डालोवृषभःपञ्चजन्मसु ॥ ९० ॥
गर्दभोजन्मशतकंसूकरस्सप्तजन्मसु ॥ तीर्थध्वांक्षस्सप्तसुवैविट्कृमिःपञ्चजन्मसु ॥ जलौकाजन्मशतकंशुचिर्भवतुतत्परम् ॥ ९१ ॥

वृथामांसंचयोभुङ्क्तेस्वार्थंपाकान्नमेवच ॥ तददत्तंमहापापीप्राप्नुयाच्चन्द्रपातकम् ॥ ९२ ॥ सयातुचन्द्रपापेनचासिपत्रंचतुर्युगम् ॥
ततोभवतुसर्पश्चपशुस्स्यात्सप्तजन्मसु ॥ ९३ ॥ विप्रोवार्द्धुषिकोयोहियोनिजीवीचिकित्सकः ॥ हरेर्नाम्नांचविक्रेतायश्चवास्वाङ्ग
विक्रयी ॥ ९४ ॥ स्वधर्मकथकश्चैवयश्चस्वात्मप्रशंसकः ॥ मषीजीवीधावकश्चकुलटापोष्यएवच ॥ ९५ ॥ तंयातुचन्द्रपापश्च
चन्द्रोभवतुविज्वरः ॥ सयातुतेनपापेनशूलप्रोतंसुदारुणम् ॥ ९६ ॥ तत्रविद्धोभवतुसयावदिन्द्राश्चतुर्दश ॥ ततोदरिद्रोरोगीचदी
क्षाहीनोनरःपशुः ॥ ९७ ॥ लाक्षामांसरसानांचतिलानांलवणस्यच ॥ अश्वानांचैवलौहानांविक्रेतानरघातकः ॥ ९८ ॥ विप्रः
कुलालःचौरश्चयातुतंचन्द्रपातकम् ॥ सयातुतेनपापेनक्षुरधारंसुदुःसहम् ॥९९॥ तत्रच्छिन्नोभवतुसयावदिन्द्रसहस्रकम् ॥ तस्मादुर्त्ती
र्य्यसभवेत्सृगालःसप्तजन्मसु ॥१००॥ सप्तजन्मसुमार्जारोमहिषोजन्मपञ्चकम् ॥ सप्तजन्मसुभल्लूकःकुक्कुरस्सप्तजन्मसु ॥ १०१ ॥ मत्स्य
श्चंजन्मशतकंकर्कटीजन्मपञ्चकम् ॥ गोधिकाजन्मशतकंगर्दभःसप्तजन्मसु ॥१०२॥ सप्तजन्मसुमण्डूकस्ततस्यान्मानवोऽधमः ॥ चर्म्म
कारश्चरजकस्तैलकारश्चवर्द्धकिः ॥१०३॥ नाविकःशवजीवीचव्याधश्चस्वर्णकारकः ॥ कुम्भकारोलोहकारस्ततःक्षत्रस्ततोद्विजः॥१०४॥
इतिचन्द्रंशुचिंकृत्वासमुवाचतुतारकाम् ॥ त्यक्त्वाचन्द्रंमहासाध्विगच्छकान्तमितिद्विजः ॥ १०५ ॥ प्रायश्चित्तंविनापूतात्वमेवंशुद्धमा
नसा ॥ अकामायावलिष्टेननस्त्रीजारेणदुष्यति ॥ १०६ ॥ इत्येवमुक्त्वाशुक्रश्चचन्द्रंवातारकांसतीम् ॥ सस्मितांसस्मितंचैवचकारचशुभा
शिषः॥१०७॥ इतिश्री०ब्र०वै०महा०पु०प्रकृतिख०द्विती०नारदनारायणसं० दुर्गोपाख्यानेताराचन्द्रयोर्दोषनिवारणंनामाष्टपञ्चाशत्त
मोऽध्यायः ॥५८॥ ॥ नारदउवाच ॥ बृहस्पतिःकिञ्चकारतारकाहरणान्तरे ॥ कथंसंप्रापतांसाध्वींतन्मेव्याख्यातुमर्हसि ॥१॥ श्रीनारा
यणउवाच ॥ दृष्ट्वाविलम्बंतारायाः स्नान्त्याश्चापिगुरुःस्वयम् ॥ प्रस्थापयामासशिष्यमन्वेषार्थंचजाह्नवीम् ॥ २ ॥ शिष्योगत्वाचतद्वृत्तं
ज्ञात्वावैलोकवक्त्रतः ॥ रुदन्नुवाचस्वगुरुंतारकाहरणंमुने ॥ ३ ॥ श्रुत्वासुरगुरुर्वार्त्तांशशिनाचप्रियांहृताम् ॥ मुहूर्त्तंप्रापमूर्च्छांचततःसं

१ जन्मपंचकमिति पाठः । २ आलुश्च जन्मशतकं कुक्कुटीचेतिपाठः ।

प्राप्यचेतनाम् ॥ ४ ॥ रुरोदोच्चैःसशिष्यश्चहृदयेनविदूयता ॥ शोकेनलज्जयाविष्टोविललापमुहुर्मुहुः ॥ ५ ॥ उवाचशिष्यान्सम्बोध्य नीतिंचश्रुतिसम्मताम् ॥ साश्रुनेत्रःसाश्रुनेत्राञ्छोकार्तःशोककर्शितान् ॥ ६ ॥ ॥ बृहस्पतिरुवाच ॥ हेवत्साःकेनशप्तोऽहनजानेकारणं परम् ॥ दुःखंधर्म्मविरुद्धोयःसम्प्राप्नोतिनसंशयः ॥ ७ ॥ यस्यनास्तिसतीभार्य्यागृहेषुप्रियवादिनी ॥ अरण्यंतेनगंतव्यंयथारण्यंतथागृहम् ॥८॥ भावानुरक्तावनिताहृतायस्यचशत्रुणा॥अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥९॥ सुशीलासुन्दरीभार्य्यागतायस्यगृहादहो॥ अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥ १० ॥ दैवेनापहृतायस्यपतिसाध्यापतिव्रता ॥ अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥११॥ यस्यमातागृहेनास्तिगृहिणीवासुशासिता ॥ अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥१२॥ प्रियाहीनंगृहंयस्यपूर्णंद्रविणबन्धुभिः ॥ अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥१३॥ भार्य्याशून्यावनसमाःसभार्य्याश्चगृहागृहाः ॥ गृहिणीचगृहंप्रोक्तंनगृहंगृहमुच्यते ॥ १४ ॥ अशुचिःस्त्रीविहीनश्चदैवेपित्र्येचकर्मणि ॥ यदह्नाकुरुतेकर्मनतस्यफलभाग्भवेत ॥१५॥ दाहिकाशक्तिहीनश्चयथामन्दोहुताशनः ॥ प्रभाहीनोयथासूर्य्यःशोभाहीनोयथाशशी ॥ १६ ॥ शक्तिहीनोयथाजीवोयथाचात्मातनुंविना ॥ विनाधारंयथाधेयोयथेशःप्रकृतिंविना ॥१७॥ नचशक्तोयथायज्ञः फलदोदक्षिणांविना ॥ कर्मणांचफलंदातुंसामग्रीमूलमेवच ॥१८॥ विनास्वर्णंस्वर्णकारोयथाशक्तःस्वकर्मणि ॥ यथाशक्तःकुलालश्चमृत्तिकांचविनाद्विजाः ॥ १९ ॥ तथागृहीनशक्तश्चसततंसर्वकर्मणि ॥ गृहाधिष्ठातृदेवींचस्वशक्तिगृहिणींविना ॥२०॥ भार्य्यामूलाःक्रियाः सर्वाभार्य्यामूलागृहास्तथा ॥ भार्य्यामूलंसुखंसर्वंगृहस्थानांगृहेसदा ॥ २१ ॥ भार्य्यामूलःसदाहर्षोभार्य्यामूलंचमङ्गलम् ॥ भार्य्यामूलंचसंसारोभार्य्यामूलंचसौरभम् ॥ २२ ॥ यथारथश्चरथिनांगृहिणांचतथागृहम् ॥ सारथिस्तुयथातेषांगृहिणांचतथाप्रिया ॥ २३ ॥ सर्वरत्नप्रधानाचस्त्रीरत्नंदुष्कुलादपि ॥ गृहीतासागृहस्थेनेत्याहकमलोद्भवः ॥ २४ ॥ यथाजलंविनापद्मंपद्मंशोभांविनायथा ॥ तथैवपुंसांस्वगृहंगृहिणांगृहिणींविना ॥ २५ ॥ इत्येवमुक्त्वास गुरुः प्रविवेश गृहंमुहुः ॥ गृहाद्बहिर्निस्ससारभूयोभूयः शुचा

१ चटंचमृत्तिकांविनाइतिपाठः । २ चसुखंश्चेतिपाठः । ३ सौरत्नमितिपाठः ।

न्वितः ॥ २६ ॥ मुहुर्मुहुश्चमूर्च्छांचचेतनांसमवापसः ॥ भूयोभूयोरुरोदोच्चैःस्मारंस्मारंप्रियागुणान् ॥ २७ ॥ अथान्तरेमहाज्ञानीज्ञानि
भिश्चप्रबोधितः ॥ सच्छिष्यैर्मुनिभिश्चान्यैःपुरन्दरगृहंययौ ॥ २८ ॥ सगुरुःपूजितस्तेनचातिथ्येनमरुत्वता ॥ तमुवाचस्ववृत्तान्तंह
दिशल्यमिवाप्रियम् ॥ २९ ॥ बृहस्पतिवचःश्रुत्वारक्तपङ्कजलोचनः ॥ तमुवाचमहेन्द्रश्चकोपप्रस्फुरिताधरः ॥ ३० ॥ ॥ महेन्द्र
उवाच ॥ ॥ दूतानांलक्षसहस्रञ्चजागर्कर्मणिगच्छतु ॥ अतीवनिपुणंदक्षंतत्त्वप्राप्तिनिमित्तकम् ॥ ३१ ॥ यत्रास्तिपातकीचन्द्रोमन्मा
त्रातारयासह ॥ गच्छामितत्रसन्नद्धःसर्वैर्देवगणैःसह ॥ ३२ ॥ त्यजचिन्तांमहाभागसर्वंभद्रंभविष्यति ॥ भद्रबीजंदुर्गमिदंकस्य
सम्पद्विपद्विना ॥ ३३ ॥ इत्युक्त्वाचशुनासीरोदूतानाञ्चसहस्रकम् ॥ तूर्णंप्रस्थापयामासतत्कर्मनिपुणंमुने ॥ ३४ ॥ तेदूतावै
वर्षशतंययुर्निर्जनमेवच ॥ मुदुर्लंघ्यञ्चविश्वेषुभ्रमित्वाशक्रमाययुः ॥ ३५ ॥ चन्द्रश्चशुक्रभवनेतंप्रपन्नंचविज्वरम् ॥ दृष्ट्वासतारकं
भीतंकथयामासुरीश्वरम् ॥ ३६ ॥ इतिश्रुत्वाशुनासीरोनतवक्त्रोबृहस्पतिम् ॥ उवाचशोकसन्तप्तोहृदयेनविदूयता ॥ ३७ ॥
॥ ॥ महेन्द्रउवाच ॥ ॥ शृणुनाथप्रवक्ष्यामिपरिणामसुखावहम ॥ भयंत्यजमहाभागसर्वंभद्रंभविष्यति ॥ ३८ ॥ त्वयानहि
जितःशुक्रोनमयादितिनन्दनः ॥ एतदालोच्यचन्द्रश्चजगामशरणंकविम् ॥ ३९ ॥ गच्छशीघ्रंब्रह्मलोकमस्माभिःसार्द्धमेवच ॥
ब्रह्मणःसहयास्यामःकैलासेशङ्करंवयम् ॥ ४० ॥ इत्युक्त्वातुमहेन्द्रश्चसन्तप्तोगुरुणासह ॥ जगामब्रह्मलोकञ्चसुखदृश्यंनिरामयम् ॥
॥ ४१ ॥ तत्रदृष्ट्वाचब्रह्माणंननामगुरुणासह ॥ प्रोवाचसर्ववृत्तान्तंदेवानामीश्वरंपरम् ॥ ४२ ॥ महेन्द्रवचनंश्रुत्वा हसितवक्त्रकमलो
द्भवः ॥ हितंतथ्यंनीतिसारमुवाचविनयान्वितः ॥ ४३ ॥ ब्रह्मोवाच ॥ योददातिपरस्मैचदुःखमेवचसर्वतः ॥ तस्मैददातिदुःखञ्च
शास्ताकृष्णःसनातनः ॥ ४४ ॥ अहंस्रष्टाचसृष्टेश्चपाताविष्णुःसनातनः ॥ यथारुद्रश्चसंहर्त्तादातिचशिवंशिवः ॥ ४५ ॥
निरन्तरंसर्वसाक्षीधर्मोऽपिसर्वकारणम ॥ सर्वेदेवाविषयिणःकृष्णाज्ञापरिपालकाः ॥ ४६ ॥ बृहस्पतिरुतथ्यश्चसंवर्त्तश्चजितेन्द्रियः ॥

१ कैलासशंकरालयमिति पाठः ।

त्रयश्चांगिरसःपुत्रावेदवेदाङ्गपारगाः ॥ ४७ ॥ संवर्त्तायश्कनिष्ठायनचकिञ्चिद्ददौगुरुः ॥ सवभूवतपस्वीचकृष्णंध्यायतिचेश्वरम् ॥ ४८ ॥
मध्यमस्योतथ्यकस्यसतींभार्य्यांचगुर्विणीम् ॥ जहारकामतस्तांचभ्रातृजायामकामुकीम् ॥ ४९ ॥ योहरेद्भ्रातृजायांचकामीका
मादकामुकीम् ॥ ब्रह्महत्यासहस्रंचलभतेनात्रसंशयः ॥ ५० ॥ सयातिकुम्भीपाकञ्चयावच्चन्द्रदिवाकरम् ॥ भ्रातृजायापहारीचमातृ
गामीभवेन्नरः ॥ ५१ ॥ तस्मादुत्तीर्य्यपापीचविष्ठायांजायतेकृमिः ॥ वर्षकोटिसहस्राणितत्रस्थित्वाचपातकी ॥ ५२ ॥ ततोभ
वेन्महापापीवर्षकोटिसहस्रकम् ॥ पुंश्चलीयोनिगतेचकृमिश्चैवपुरन्दर ॥ ५३ ॥ गृध्रकोटिसहस्राणिशतजन्मानिकुक्कुरः ॥ भ्रातृजायापह
रणाच्छतजन्मानिसूकरः ॥ ५४ ॥ ददातियोनदायश्चबलिष्ठोदुर्बलायच ॥ सयातिकुम्भीपाकञ्चयावच्चन्द्रदिवाकरम् ॥ ५५ ॥
माभुङ्क्तंक्षीयतेकर्म्मकल्पकोटिशतैरपि ॥ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभम् ॥ ५६ ॥ जगद्गुरोःशिवस्यापिगुरुपुत्रोबृहस्पतिः ॥
ज्ञातंकरोतुवृत्तान्तमीश्वरंबलिनांवरम् ॥ ५७ ॥ सर्वेसमूहादेवानांसन्नद्धाश्चसवाहनाः ॥ मध्यस्थामुनयश्चैवसन्तुवैनर्मदातटे ॥ ५८ ॥
पश्चादहञ्चयास्यामिपुण्यंतन्नर्म्मदातटम् ॥ गुरुस्तद्गुरुपुत्रोपिशीघ्रंयातुशिवालयम् ॥ ५९ ॥ महेन्द्रउवाच ॥ कथंवावेदकर्त्तुश्चसि
द्धानांयोगिनांगुरोः ॥ मृत्युञ्जयस्यशम्भोश्चगुरुपुत्रोबृहस्पतिः ॥ ६० ॥ अङ्गिरास्तवपुत्रश्चतत्पुत्रश्चबृहस्पतिः ॥ त्वत्तोज्ञानीमहादेवः
कथंशिष्योगुरोःपितुः ॥ ६१ ॥ ब्रह्मोवाच ॥ कथेयमतिगुप्ताचपुराणेषुपुरन्दर ॥ इमांपुराप्रवृत्तिंचकथयामिनिशामय ॥ ६२ ॥
मृतवत्साकर्म्मदोषाद्भार्य्याचाङ्गिरसःपुरा ॥ व्रतंचकारसाचैवंकृष्णस्यपरमात्मनः ॥ ६३ ॥ व्रतंपुंसवनंनामवर्षमेकंचकारसा ॥
सनत्कुमारोभगवान्कारयामासतांव्रतम् ॥ ६४ ॥ तदागत्यचगोलोकात्परमात्माकृपामयः ॥ स्वेच्छामयंपरंब्रह्मभक्तानुग्रहविग्रहः ॥
॥ ६५ ॥ सुव्रतांचसलक्ष्मीकांतामुवाचकृपानिधिः ॥ प्रणतांसाश्रुनेत्रांचविनीतांचतयास्तुतः ॥ ६६ ॥ श्रीकृष्णउवाच ॥ गृहाणे
दंव्रतफलंममतेजस्समन्वितम् ॥ भुंक्ष्वमद्वरतः पुत्रिभविष्यतिमदंशतः ॥ ६७ ॥ पतिर्गुरुश्चदेवानांमहतांज्ञानिनांवरः ॥ पुत्रस्तेभविता
साध्विमद्वरेणबृहस्पतिः ॥ ६८॥ मद्वरेणभवेद्योहिसचमद्वरपुत्रकः ॥ त्वद्गर्भेममपुत्रोऽयंचिरजीवीभविष्यति ॥ ६९ ॥ वरजोवीर्य्यजश्चैव

क्षेत्रजः पालकस्तथा ॥ विद्यामन्त्रसुतौचैवगृहीतः सप्तमः सुतः ॥ ७० ॥ इत्युक्त्वाराधिकानाथः स्वलोकंचजगामसः ॥ ॥ श्रीकृष्ण
वरपुत्रोऽयंज्ञानीश्वरगुरुः स्वयम् ॥ मृत्युञ्जयंमहाज्ञानंशिवायप्रददौपुरा ॥ ७१ ॥ दिव्यंवर्षत्रिलक्षञ्चतपश्चक्रेहिमालये ॥ स्वयो
गज्ञानमखिलंतेजस्स्वात्मसमंपरम् ॥ स्वशक्तिंविष्णुमायांचस्वांशंवैवाहनंवृषम् ॥ ७२ ॥ स्वशूलञ्चस्वकवचंस्वमन्त्रंद्वादशाक्षरम् ॥
कृपामयः स्तुतस्तेनश्रीकृष्णश्चपरात्परः ॥ शिवलोकेशिवासाचविष्णुमायाशिवप्रिया ॥ ७३ ॥ शक्तिर्नारायणस्यैयंसाविर्भूतासनात
नी ॥ तेजस्सुसर्वदेवानांसाविर्भूतासनातनी ॥ ७४ ॥ जघानदैत्यनिकरंदेवेभ्यः प्रददौपदम् ॥ कल्पान्तेदक्षकन्याचसामूलप्रकृतिः स
ती ॥ ७५ ॥ पितृयज्ञेतनुंत्यक्त्वायोगाद्वैसिद्धयोगिनी ॥ बभूवशैलकन्यासामासाध्वीवैभर्तृनिन्दया ॥ ७६ ॥ कालेनकृष्णतपसाशङ्करंप्राप
सुन्दरी ॥ श्रीकृष्णोहिगुरुः शम्भोः परमात्मापरात्परः ॥ ७७ ॥ कृष्णस्यवरपुत्रोऽयंस्वयमेवबृहस्पतिः ॥ अतोहेतोः सुरगुरुर्गुरुपुत्रः शिवस्य
च ॥ ७८ ॥ इत्येवंकथितंसर्वमतिगुह्यंपुरातनम् ॥ इतिप्रधानसम्बन्धः श्रुतश्चकथितोमया ॥ ७९ ॥ पारंपरिकमन्यञ्चकथयामिनिशाम
य ॥ दुर्वासागरुडश्चैवशङ्करांशः प्रतापवान् ॥ ८० ॥ शिष्यौचाङ्गिरसस्तौद्वौगुरुपुत्रोऽथवाततः ॥ प्राणाधिकायांसत्यांचमृतायां
दक्षशापतः ॥ ८१ ॥ स्वज्ञानंस्वंचभगवान्विसस्मारस्वमोहतः ॥ स्मरणंकारयामासकृष्णेनप्रेरितोऽङ्गिराः ॥ ८२ ॥ अतोहे
तोर्गुरुश्चैवंसत्सुतस्स्याच्छिवस्यसः ॥ शीघ्रंगच्छतुकैलासंस्वयमेवबृहस्पतिः ॥ ८३ ॥ त्वंगच्छतत्रसन्नद्धः सदेवोनर्म्मदातटम् ॥
इत्युक्त्वाजगतांधाताविरराममचनारद ॥ ८४ ॥ गुरुर्ययौचकैलासंमहेन्द्रोनर्म्मदातटम् ॥ ८५ ॥ इति श्रीब्रह्मवैवर्तेमहापुराणे
द्वितीयेप्रकृतिखण्डेनारदनारायणसंवादेदुर्गोपाख्यानेबृहस्पतेःकैलासगमनंनामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ छ ॥ ॥
॥ ॥ नारदउवाच ॥ ॥ नारायणमहाभागवेदवेदाङ्गपारग ॥ निपीतञ्चमहाख्यानंत्वन्मुखेन्दुविनिस्सृतम् ॥ १ ॥ अधुनाश्रोतु
मिच्छामिकिमुवाचबृहस्पतिः ॥ शिवञ्चगत्वाकैलासंदातारंसर्वसम्पदाम् ॥ २ ॥ जगत्कर्त्ताविधाताचकिंवातंप्रत्युवाचसः ॥ एतत्सर्वं
समालोच्यवदवेदविदांवर ॥ ३ ॥ ॥ नारायणउवाच ॥ ॥ शीघ्रंगत्वाचकैलासंप्रदृष्टःश्रीशङ्करंगुरुः ॥ प्रणम्यतस्थौपुरतोलज्जाव

नतकन्धरः ॥ ४ ॥ दृष्ट्वागुरुसुतंशम्भुरुदतिष्ठत्कुशासनात् ॥ आलिङ्गनंददौतस्मैशीघ्रंमाङ्गलिकाशिषः ॥ ५ ॥ स्वासनेवासयित्वा
वैपप्रच्छकुशलंवचः ॥ उवाचमधुरंवाक्यंभीतंतंलज्जितंशिवः ॥ ६ ॥ ॥ श्रीशङ्कर उवाच ॥ ॥ कथमेवंविधस्त्वञ्चदुःखीमलिन
विग्रहः ॥ साश्रुनेत्रोलज्जितश्चभ्रातस्तत्कारणंवद ॥ ७ ॥ किंवातपस्याहीनातेमन्ध्याहीनाऽथवामुने ॥ किंवाश्रीकृष्णसेवाम्माविहीना
दैवदोषतः ॥ ८ ॥ किंवागुरौभक्तिहीनोऽभीष्टदेवेऽथवागुरौ ॥ किंवानरक्षितुंशक्तःप्रपन्नंशरणागतम् ॥ ९ ॥ किंवाऽतिथिस्तेविमुखःकिं
वापोष्याबुभुक्षिताः ॥ किंवास्वतन्त्राह्रीवातेकिंवापुत्रोऽवचस्करः ॥ १० ॥ सुशासितोनशिष्योवाकिंभृत्याश्चोत्तरप्रदाः ॥ किंवाते
विमुखालक्ष्मीःकिंवारुष्टोगुरुस्तव ॥ ११ ॥ गरिष्ठश्चवरिष्ठश्चशश्वत्सन्तुष्टमानसः ॥ गुरुस्तववसिष्ठश्चप्रेष्ठःश्रेष्ठःसतामहो ॥ १२ ॥
किंवारुष्टोऽभीष्टदेवःकिंवारुष्टाश्चवाडवाः ॥ किंवारुष्टावैष्णवाश्चकिंवातेप्रबलोरिपुः ॥ १३ ॥ किंवातेबन्धुविच्छेदोविग्रहोबलिनासह ॥
किंवापदंपरग्रस्तंकिंवाबन्धुधनञ्चवा ॥ १४ ॥ केनतेवाकृतानिन्दाखलैर्वापापिभिर्मुने ॥ केनवात्वंपरित्यक्तोबान्धवेनप्रियेणवा ॥
॥ १५ ॥ बन्धुस्त्यक्तस्त्वयाकिंवावैराग्येणकुधाथवा ॥ किंवातीर्थेनहिस्नातंनदत्तंपुण्यवासरे ॥ १६ ॥ गुरुनिन्दाबन्धुनिन्दाखलव
क्राच्छ्रुताथवा ॥ गुरुनिन्दाहिसाधूनांमरणादतिरिच्यते ॥१७॥ असद्वंशप्रजातानांखलानांनिन्दनंतथा ॥ दोश्शील्यमेवमसतांशश्वन्ना
रकिणामिह ॥ १८ ॥ परप्रशंसकाःसन्तःपुण्यवन्तोहिभारते ॥ शश्वन्मङ्गलयुक्ताश्चराजन्तेमनसासदा ॥ १९ ॥ पुत्रेयशसितोयेचसमृ
द्धेचपराक्रमे ॥ ऐश्वर्य्येवाप्रतापेचप्रजाभूमिधनेषुच ॥ २० ॥ वचनेषुचबुद्धौचस्वभावेचचरित्रतः ॥ आचारेव्यवहारेचज्ञायतेहृदयं
नृणाम् ॥ २१ ॥ यादृग्येषाञ्चहृदयंतादृक्तेषाञ्चमङ्गलम् ॥ यादृग्येषांपूर्वपुण्यंतादृक्तेषाञ्चमानसम् ॥ २२ ॥ इत्युक्त्वाचमहादेवोवि
ररामस्वसंसदि ॥ तमुवाचमहावक्तास्वयमेवबृहस्पतिः ॥ २३ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ अकथ्यमेववृत्तान्तंकथयामिकिमी
श्वर ॥ लोकाःकर्मवशान्नित्यंनानाजन्मसुयत्कृतम् ॥ २४ ॥ स्वकर्मणांफलंभुङ्क्तेजन्तुर्जन्मनिजन्मनि ॥ नहिनष्टञ्चतत्कर्मविनाभो

१ [illegible] ।

गाश्चभारते ॥ २५ ॥ सुखंदुःखंभयंशोकंनराणांभारतप्रभो ॥ केचिद्वदन्तिहिभवेत्स्वकृतेनचकर्मणा ॥ २६ ॥ केचिद्वदन्तिदैवेनस्व
भावेनेतिकेचन ॥ त्रिविधागतयोह्यस्यवेदवेदाङ्गपारग ॥ २७ ॥ स्वयश्चकर्मजनकःकर्मैवदेवकारणम् ॥ स्वभावोजायतेनृणांस्वात्म
नःपूर्वकर्मणः ॥ २८ ॥ स्वकर्मणाश्चसर्वेषांजन्तूनांप्रतिजन्मनि ॥ सुखंदुःखंभयंशोकंस्वात्मनश्चप्रजायते ॥ २९ ॥ स्वकर्मफलभो
क्ताचजीवोहिसगुणःसदा ॥ आत्मभोजयितासाक्षीनिर्गुणःप्रकृतेःपरः ॥ ३० ॥ सएवात्मासर्वसेव्यःसर्वेषांचफलप्रदः ॥ सर्वसृज
तिदेवश्चस्वभावंकर्मचैवहि ॥ ३१ ॥ कर्मणाचनृणांलज्जाप्रशंसाचप्रफुल्लता ॥ लज्जावीजश्चवृत्तान्तंतथापिकथयामिते ॥ ३२ ॥
इत्युक्त्वासर्ववृत्तान्तमवोचत्तंबृहस्पतिः ॥ श्रुत्वावभूवनम्रास्योगौरीशोलज्जयातदा ॥ ३३ ॥ जपमालाकराद्भ्रष्टाकोपाविष्टस्यशूलिनः ॥
बभूवसद्यःकम्पश्चरक्तपङ्कजलोचने ॥ ३४ ॥ संहर्त्तुरीशोरुद्रस्यविष्णोःपातुःसखाशिवः ॥ स्रष्टुस्तुत्यश्चमान्यश्चस्वात्मनःपरमात्मनः ॥
॥ ३५ ॥ निर्गुणस्यचकृष्णस्यप्रकृतीशस्यनारद ॥ कोपात्प्रवक्तुमारेभेशुष्ककण्ठोष्ठतालुकः ॥ ३६ ॥ ॥ शिवउवाच ॥ ॥ शिवम
स्तुचसाधूनांवैष्णवानांसतामिह ॥ अवैष्णवानाममतामशिवश्चपदेपदे ॥ ३७ ॥ ददातिवैष्णवेभ्यश्चयोदुःखंसुस्थितोजनः ॥ श्रीकृष्ण
स्तस्यसंहर्त्ताविघ्नस्तस्यपदेपदे ॥ ३८ ॥ अवैष्णवानांहृदयंनहिशुद्धंसदामलम् ॥ श्रीकृष्णमन्त्रस्मरणंमनोनैर्मल्यकारणम् ॥ ३९ ॥
भिद्यतेहृदयग्रन्थिश्छिद्यन्तेसर्वसंशयाः ॥ विष्णुमन्त्रोपासनयाक्षीयतेकर्मतन्नृणाम ॥ ४० ॥ अहोश्रीकृष्णदासानांकःस्वभावःसुनि
र्मलः ॥ हृतभार्य्यमूर्च्छितश्चनशशापरिपुंगुरुः ॥ ४१ ॥ गुरुर्यस्यवरिष्ठश्चक्रोधहीनश्चधार्मिकः ॥ शतपुत्रघ्नमप्येनंनशशापरिपुंमुनिः ॥
॥ ४२ ॥ निश्श्वासाद्वैसुरगुरोर्भ्रातुर्ममबृहस्पतेः ॥ भस्मीभूतोनिमेषेणशतचन्द्रोभवेद्ध्रुवम् ॥ ४३ ॥ तथापितंनोशशापधर्म्मभङ्ग
भयेनच ॥ तपस्याहीयतेशत्रुःकोपाविष्टस्यनित्यशः ॥ ४४ ॥ अहोह्यत्रेरसत्पुत्रःपरस्त्रीलुब्धकःशठः ॥ तपस्विनोवैष्णवस्यब्रह्म
पुत्रस्यधीमतः ॥ ४५ ॥ धर्मिष्ठाब्रह्मणःपुत्रावैष्णवाब्राह्मणास्तथा ॥ केचिद्देवाद्विजादैत्याःपौत्राश्चत्रिविधामताः ॥ ४६ ॥ येसा

१ स्रष्टुःश्रेष्ठस्येतिपाठः ।

त्त्विकाब्राह्मणास्तेदेवाराजसिकास्तथा ॥ दैत्यास्तामसिकारौद्राबलिष्ठाश्चोद्धताःसदा ॥ ४७ ॥ स्वधर्मनिरताविप्रानारायणपरा
यणाः ॥ शैवाःशाक्ताश्चतेदेवादैत्याःपूजाविवर्जिताः ॥ ४८ ॥ मुमुक्षवोविष्णुभक्ताब्राह्मणादास्यलिप्सवः ॥ ऐश्वर्य्यलिप्सवोदेवाश्चा
सुरास्तामसास्तथा ॥ ४९ ॥ ब्राह्मणानांस्वधर्मश्चकृष्णस्याच्चर्चनमीप्सितम् ॥ निष्कामानांनिर्गुणस्यपरस्यप्रकृतेरपि ॥ ५० ॥ यत्राह्म
णावैष्णवाश्चस्वतन्त्राःपरमंपदम् ॥ यान्त्यन्योपासकाश्चान्यैःसार्द्धंश्चप्राकृतलये ॥ ५१ ॥ वर्णानांब्राह्मणाःश्रेष्ठाःसाधवोवैष्णवायदि ॥
विष्णुमन्त्रविहीनेभ्योद्विजेभ्यःश्वपचोवरः ॥ ५२ ॥ परिपक्वाविपक्वावावैष्णवाःसाधवश्चते ॥ सततंपातितांश्चैवविष्णुचक्रंसुदर्शनम् ॥
॥ ५३ ॥ यथावह्नौशुष्कतृणंभस्मीभूतंभवेत्सदा ॥ तथापापंवैष्णवेषुकाष्ठानीवहुताशने ॥ ५४ ॥ गुरुवक्त्राद्विष्णुमन्त्रोयस्यकर्णेप्रवे
क्ष्यति ॥ तंवैष्णवंमहापूतंप्रवदन्तिमनीषिणः ॥५५॥ पुंसांशतंपितॄणाञ्चशतंमातामहस्यच ॥ स्वसोदरांश्चजननीमुद्धरन्त्येववैष्णवाः ॥
॥ ५६ ॥ गयायांपिण्डदानेनपिण्डदाःपिण्डभोजिनम् ॥ समुद्धरन्तिपुंसाञ्चवैष्णवाश्चशतंशतम् ॥ ५७ ॥ यन्त्रग्रहणमात्रेणजीवन्मु
क्तोभवेन्नरः ॥ यमस्तस्मान्महाभीतोवैनतेयादिवोरगः ॥ ५८ ॥ पुनन्त्येवहितीर्थानिगङ्गादीनिचभारते ॥ कृष्णमन्त्रोपासकाश्चस्पर्श
मात्रेणवाक्पते ॥ ५९ ॥ पापानिपापिनांतीर्थेयावन्तिप्रभवन्तिच ॥ नश्यन्तितानिसर्वाणिवैष्णवस्पर्शमात्रतः ॥ ६० ॥ कृष्णमन्त्रो
पासकानांरजसापादपद्मयोः ॥ सद्योमुक्ताःपातकेभ्यःकृत्स्नापूतावसुन्धरा ॥ ६१ ॥ वायुश्चपवनोवह्निःसूर्य्यःसर्वपुनातिच ॥ एतेपूता
वैष्णवानांस्पर्शमात्रेणलीलया ॥ ६२ ॥ अहंब्रह्माचशेषश्चधर्मःसाक्षीचकर्म्मणाम् ॥ एतेहृष्टाश्चवाञ्छन्तिवैष्णवानांसमागमम् ॥
॥ ६३ ॥ फलंकर्मानुरूपेणसर्वेषांभारतेभवेत् ॥ नभवेत्तद्वैष्णवेचसिद्धधान्येयथाङ्कुरम् ॥ ६४ ॥ हन्तितेषांकर्म्मपूर्वंभक्तानांभक्त
वत्सलः ॥ कृपयास्वपदंतेभ्योददात्येवकृपानिधिः ॥ ६५ ॥ तेजस्विनांचप्रवरंवैष्णवंभृगुनन्दनम् ॥ सचन्द्रोदुर्बलोभीतःशुक्रंचशरणं
ययौ ॥ ६६ ॥ सुदर्शनोबलिष्ठंचशुक्रंजेतुंनशक्तिमान् ॥ तथापिचोद्धरिष्यामितारांमन्त्रेणयद्गुरोः ॥ ६७ ॥ भजसत्यंपरंब्रह्मकृष्ण
मात्मानमीश्वरम् ॥ सुप्रसन्नेभगवतिपत्नींप्राप्स्यसिलीलया ॥ ६८ ॥ मन्त्रंतस्यप्रदास्यामिभ्रातःकल्पतरुंपरम् ॥ कोटिजन्माघ

निघ्नंचसर्वमङ्गलकारणम् ॥ ६९ ॥ ब्रह्मादिस्तम्बपर्य्यन्तंनश्वरंजलबिम्बवत् ॥ शरणंयाहिगोविन्दंपरमात्मानमीश्वरम् ॥ तावद्भवे
च्छाभोगेच्छास्त्रीसुखेच्छानृणामिह ॥ ७० ॥ यावद्गुरुमुखाम्भोजान्नप्राप्नोतिमनुंहरेः ॥ संप्राप्यदुर्लभंमन्त्रंवितृष्णोहिभवेन्नरः ॥ ७१ ॥
इन्द्रत्वममरत्वंचनहिवाञ्छन्तिवैष्णवाः ॥ नहिवाञ्छन्तिमोक्षंचदास्यंभक्तिंविनाहरेः ॥ ७२ ॥ भक्तिनिर्मथनंभक्तोमोक्षंनोवाञ्छति
प्रभोः ॥ ज्ञानंमृत्युञ्जयत्वंचसर्वसिद्धिंतदीप्सितम् ॥ ७३ ॥ वाक्सिद्धिंचैवयातृत्वंभक्तानांनहिवांछितम् ॥ भक्तिंविहायकृष्णस्यविषयं
योहिवांछिति ॥ ७४ ॥ विषमत्ति सुधां त्यक्त्वावंचितोविष्णुमायया ॥ अहंब्रह्माचविष्णुश्चधर्मोऽनन्तश्चकश्यपः ॥ ७५ ॥
कपिलश्चकुमारश्चनरनारायणावृषी ॥ स्वायम्भुवोमनुश्चैवप्रह्लादश्चपराशरः ॥ ७६ ॥ भृगुःशुक्रश्चदुर्वासावसिष्ठःक्रतुरङ्गिराः ॥
बलिश्चवालखिल्याश्चवरुणश्चहुताशनः ॥ ७७ ॥ वायुःसूर्य्यश्चगरुडोदक्षोगणपतिःस्वयम् ॥ एतेपराभक्तवराःकृष्णस्यपरमा
त्मनः ॥ ७८ ॥ येचतस्यकलाःश्रेष्ठास्तेतद्भक्तिपरायणाः ॥ इत्युक्त्वाशङ्करस्तस्मैददौकल्पतरुंमनुम् ॥ ७९ ॥ लक्ष्मीमाया
कामबीजंङेन्तंकृष्णपदंमुने ॥ परंपूजाविधानंचस्तोत्रंचकवचंमुने ॥ ८० ॥ तत्पुरश्चरणंध्यानंशुद्धेमन्दाकिनीतटे ॥ गुरुःसंप्रा
प्यतंमन्त्रंशङ्कराच्चजगद्गुरोः ॥ ८१ ॥ विषण्णोहिभवात्पश्चाचवभूवतमुवाचह ॥ ८२ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ आज्ञांकुरुजगन्ना
थयामितप्तुंहरेस्तपः ॥ नागतिष्ठतुनत्रैवनतयामेप्रयोजनम् ॥ ८३ ॥ पश्यामिविषतुल्यश्चसर्वंनश्वरमीश्वर ॥ श्रीकृष्णंशरणंया
मिसत्यंनित्यश्चनिर्गुणम् ॥ ८४ ॥ ॥ श्रीमहादेवउवाच ॥ परस्त्रीसंप्रियंत्यक्त्वानप्रशंस्यंतपोमुने ॥ सम्भावितस्यदुश्चर्चामरणाद
तिरिच्यते ॥ ८५ ॥ पुरोगच्छमहाभागतमेतंनर्मदातटम् ॥ यत्रब्रह्मादयोदेवास्तत्राहंयामिसत्वरम् ॥ ८६ ॥ शिवस्यवचनंश्रुत्वाययौसु
रगुरुःस्वयम् ॥ आययौचमहाभागःशङ्करोनर्मदातटम् ॥ ८७ ॥ सगणंशङ्करंदृष्ट्वाप्रसन्नवदनेक्षणम् ॥ प्रणेमुर्देवताःसर्वामनवोमुनय
स्तथा ॥ ८८ ॥ ननामशम्भुः शिरसाविष्णुञ्चकमलोद्भवम् ॥ ददौविष्णुर्महेशायप्रेम्णालिङ्गनमासनम् ॥ ८९ ॥ एतस्मिन्नन्तरेतत्रचाऽ

१ दृष्ट्वास्त्रीमहेशायेतिपाठः ।

गमच्चबृहस्पतिः ॥ प्रणनाममहादेवविष्णुञ्चकमलोद्भवम् ॥९०॥ सूर्य्यंधर्ममनन्तञ्चनरंमांचमुनीश्वरान् ॥ स्वगुरुंपितरंभक्त्याचावसत्तत्र
संसदि ॥ ९१ ॥ सच्चिन्त्यमनसायुक्तिमूचेतत्रचसंसदि ॥ स्वयंविष्णुश्चभगवान्ब्रह्माणंचन्द्रशेखरम् ॥ ९२ ॥ ॥ विष्णुरुवाच ॥ युवां
चमुनयश्चैवसमुद्रपुलिनंद्रुतम् ॥ शुक्रंकश्चिच्चमध्यस्थंप्रस्थापयितुमर्हथ ॥ ९३ ॥ विग्रहेणैवविषमंभविष्यतिनसंशयः ॥ सदाशिषासुर
गुरुस्तारांप्राप्स्यतिनिश्चितम् ॥ ९४ ॥ सुरैःस्तुतश्चसन्तुष्टःशुक्राचार्य्योभविष्यति ॥ सुरैःशुक्रोहिनजितःकृष्णचक्रेणरक्षितः ॥ ९५ ॥
युवाभ्यांप्रार्थ्यमानोऽहंयुवयोःस्तवनेनच ॥ श्वेतद्वीपादागतोऽस्मिपरितुष्टःस्तवेनच ॥ शुक्राश्रमसमीपर्णसर्वागच्छन्तुदेवताः ॥ ९६ ॥
रिपुर्बलिष्ठःस्तोत्रेणवशीभूतइतिश्रुतिः ॥ इत्युक्त्वाजगतांनाथस्तत्रैवान्तरधीयत ॥ ९७ ॥ स्तुतोब्रह्मादिभिर्देवैःप्रणतैःपरिपूजितः ॥
गतेचजगतांनाथेश्वेतद्वीपंचनारद ॥९८॥ चिन्तिताश्चसुराःसर्वेविषण्णमनसस्तथा ॥ मुनीन्देवांश्चसंबोध्यब्रह्मावैतत्रसंसदि ॥९९॥
उवाचनीतिसारंतत्सम्मतंशङ्करस्यसः ॥ १०० ॥ ॥ ब्रह्मोवाच ॥ ॥ ममशम्भोश्चधर्मस्यविष्णोर्वासर्वसाक्षिणः ॥ अस्माकञ्चस
मःस्नेहोदैत्येदेवेचपुत्रकाः ॥ १०१ ॥ दैत्यानांचगुरुंशुक्रंप्रपन्नश्चनिशाकरः ॥ नजितश्चसुरैःशुक्रःपूजितोदितिनन्दनैः ॥ १०२ ॥ तार
हेतोरहंयामिशुक्रस्यभवनंसुराः ॥ सर्वेसमुद्रपुलिनंयान्तुविष्णोर्निदेशतः ॥ १०३ ॥ इत्युक्त्वाजगतांधाताचागमच्छुक्रसन्निधिम् ॥
प्रययुर्देवताविप्राःसमुद्रपुलिनंमुने ॥१०४॥ इति श्रीब्रह्मवैवर्त्तेम०प्र०प्र०नारदनारायणसंवादेश्रीकृष्णोपदिष्टतारोद्धरणोपायज्ञानंनाम
षष्टितमोऽध्यायः ॥ ६० ॥ ॥ नारदउवाच ॥ ॥ ततःपरंकिंरहस्यंवभूवासुरदेवयोः ॥ श्रोतुमिच्छामिभगवन्परंकौतूहलंमम ॥ १ ॥
॥ ॥ नारायणउवाच ॥ ॥ ब्रह्माजगामनिलयंशुक्रस्यचमहात्मनः ॥ नानादैत्यगणाकीर्णंरत्नमण्डपभूषितम् ॥ २ ॥ पञ्चा
शत्कोटिभिःशिष्यैःपरीतंब्रह्मवादिभिः ॥ सप्तभिःपरिखाभिश्चवेष्टितंदुर्गमेवच ॥ ३ ॥ रक्षितंरक्षकगणैर्दैत्यैश्चशतकोटिभिः ॥
पद्मरागैर्विरचितैःप्राकारैःपरिशोभितम् ॥ ४ ॥ ददर्शजगतांधातासभायांभृगुनन्दनम् ॥ स्तुतंमुनिगणैर्दैत्यैरत्नसिंहासनस्थि
तम् ॥ ५ ॥ जपन्तंपरमंब्रह्मकृष्णमात्मानमीश्वरम् ॥ कोटिसूर्य्यप्रभंशश्वज्ज्वलन्तंब्रह्मतेजसा ॥ ६ ॥ दृष्ट्वापौत्रंप्रभायुक्तंविधाता

हृष्टमानसः ॥ आत्मानंकृतिनंमेनेपुत्रंपौत्रञ्चनारद ॥ ७ ॥ दृष्ट्वापितामहंशुक्रोधातारंजगतांप्रभुम् ॥ उत्थायसहसाभीतःप्रणनाम
कृताञ्जलिः ॥ ८ ॥ आदायपूजयामासचोपचारांस्तुषोडश ॥ तुष्टावपरयाभक्त्यासम्भ्रमेणयथागमम् ॥ ९ ॥ विप्रामन्त्रप्रदातारं
दातारंसर्वसम्पदाम् ॥ स्वकर्म्मणांचफलदंसर्वेषांविश्वतोवरम् ॥ १० ॥ शुक्रस्यस्तवनेनैवसन्तुष्टोजगतांपतिः ॥ अवरुह्यरथात्तूर्ण
मवसत्तत्रसंसदि ॥ ११ ॥ शुक्रेणशिरसोदत्तरत्नसिंहासनेवरे ॥ नेजमाज्वलितेरम्येनिर्म्मितेविश्वकर्म्मणा ॥ १२ ॥ शुक्रः
प्रणम्यब्रह्माणंकुमारंशकुनंक्रतुम् ॥ वसिष्ठञ्चमरीचिञ्चसनन्दञ्चसनातनम् ॥ १३ ॥ कपिलंचैवपंचशिखंवोढुंमंगिरसंमुने ॥ धर्मं
साञ्चनरंभक्त्याप्रणनामकृताञ्जलिः ॥ १४ ॥ प्रत्येकंपूजयामाससादरञ्चयथोचितम् ॥ सिंहासनेषुरत्नेषुवासयामासधार्मिकः ॥
॥ १५ ॥ प्रहृष्टवदनाःसर्वेप्रणेमुर्दितिनन्दनाः ॥ ऋषिसंघाश्चधातारंतुष्टुवुश्चयथागमम् ॥ १६ ॥ सर्वान्संस्तूयसकविरुवाचस
म्पुटाञ्जलिः ॥ साश्रुनेत्रःसपुलकःप्रणतोविनयान्वितः ॥ १७ ॥ ॥ शुक्रउवाच ॥ ॥ अद्यमेसफलंजन्मजीवितंचसुजीवितम् ॥
स्वयंविधाताभगवान्साक्षाद्दृष्टःस्वमन्दिरे ॥ १८ ॥ साक्षाद्दृष्टाश्चतत्पुत्राभगवन्तःसनातनाः ॥ तुष्टःकृष्णोऽद्यमामेवपरमात्मापरात्परः
॥ १९ ॥ कृतार्थंकर्त्तुमीशाशांयुष्माकंस्वागतंशिशुम् ॥ स्वात्मारामेषुकुशलंप्रश्नमेवंविडम्बनम् ॥ २० ॥ पवित्रंकर्त्तुमीशामांहेतुरागम
नेवः ॥ अपरंब्रूथकिंवापिशास्तनःकरवामिकिम् ॥ २१ ॥ ॥ ब्रह्मोवाच ॥ ॥ उद्विग्नश्चिरविच्छेदात्त्वांपौत्रंद्रष्टुमागतः ॥ विच्छे
दःपुत्रपौत्राणांमरणादतिरिच्यते ॥ २२ ॥ कुशलंतेमुनिश्रेष्ठपुत्रयोश्चापियोषितः ॥ कुशलंतेस्वधर्माणांकाम्यानांतपसामपि ॥ २३ ॥
दिनेदिनेऽपरिच्छिन्नंश्रीकृष्णार्चनमीप्सितम् ॥ स्वगुरोःसेवनंनित्यमविच्छिन्नंभवेत्तव ॥ २४ ॥ गुर्विष्टयोःपूजनञ्चसर्वमङ्गलकारणम् ॥
पापाधिरोगशोकघ्नंपुण्यहर्षप्रदंशुभम् ॥ २५ ॥ अभीष्टदेवःसन्तुष्टोगुरौतुष्टेनृणामिह ॥ इष्टदेवेचसन्तुष्टेसन्तुष्टाःसर्वदेवताः ॥ २६ ॥
गुरुर्विप्रःसुरोरुष्टोयेषांपातकिनामिह ॥ तेषाञ्चकुशलंनास्तिविघ्नस्तस्यपदेपदे ॥ २७ ॥ तुष्टश्चसततंवत्सश्रीकृष्णःप्रकृतेःपरः ॥
सर्वान्तरात्माभगवांस्तवभक्त्याचनिर्गुणः ॥ २८ ॥ तवतुष्टोगुरुरहंविधाताजगतामपि ॥ मयितुष्टेहरिस्तुष्टोहरौतुष्टेतुदेवताः ॥ २९ ॥

साम्प्रतं शृणु मे भीम तवागमन कारणम् ॥ प्रेषितस्य सुराणाञ्च विश्वसंहर्त्तुरेव च ॥ ३० ॥ शिवस्य गुरुपुत्रस्य साध्वीं तारां बृहस्पतेः ॥ अपहृ
त्य निशानाथस्त्वमेव शरणागतः ॥ ३१ ॥ शम्भुर्धर्मश्च सूर्य्यश्च शक्रोऽनन्तश्च पुत्रक ॥ आदित्या वसवो रुद्रा दिक्पालाश्च दिग्गजाः ॥
॥ ३२ ॥ युद्धाय यान्ति सन्नद्धास्त्रिस्रः कोटयश्च देवताः ॥ नागाः किम्पुरुषाश्चैव यक्षराक्षसगुह्यकाः ॥ ३३ ॥ भूताः प्रेताः पिशाचाश्च कू
ष्माण्डा ब्रह्मराक्षसाः ॥ किन्नराश्चैव गन्धर्वाः समुद्रपुलिनेऽधुना ॥ ३४ ॥ तारकामय संग्रामे मध्यस्थोऽहं सुतैः सह ॥ देहि तारां रणं किं वा त्य
ज चन्द्रश्च कामिनम ॥ ३५ ॥ ॥ शुक्र उवाच ॥ आगच्छन्तु सुराः सर्वे सन्नद्धा रणदुर्मदाः ॥ योऽस्ति विना महेशश्च सर्वेषाञ्च गुरुः परम् ॥
॥ ३६ ॥ ॥ दैत्या ऊचुः ॥ उभयेषां गुरुः शम्भुर्मान्यो वन्द्यश्च सर्वदा ॥ धर्मश्च साक्षी सर्वेषां त्वमेव च पितामह ॥ ३७॥ अन्यांश्च तृणतुल्यांश्च
न हि मन्यामहे वयम् ॥ आगच्छन्तु च योत्स्यामो व्रजब्रह्मि जगद्गुरो ॥ ३८ ॥ कृपया गुरुपुत्रस्य यद्यायाति महेश्वरः ॥ आग्नेयास्त्रं प्रयोक्ष्यामः
पश्चाद्योत्स्यामहे प्रभो ॥ ३९ ॥ ॥ ब्रह्मोवाच ॥ ॥ कालाग्निरुद्रः संहर्त्ता विश्वस्य बलिनां वरः ॥ त्वत्सार्धं तेन सार्द्धञ्च को वा युद्धं करिष्यति ॥
॥ ४० ॥ भद्रकाली जगन्माता खड्गखर्परधारिणी ॥ तया दुर्द्धर्षया सार्द्धं को वा युद्धं करिष्यति ॥ ४१ ॥ सा सहस्रभुजा देवी मुण्डमाला
विभूषणा ॥ योजनायतवक्त्रा च दशयोजनविस्तृता ॥ ४२ ॥ सततालप्रमाणाश्च यस्या दन्ता भयानकाः ॥ क्रोशप्रमाणजिह्वा च महालो
लाभयङ्करी ॥ ४३ ॥ अतीव रौद्राः सन्नद्धा भीमाः शङ्करकिङ्कराः ॥ अतिभीमा भैरवाश्च नन्दी च रणकर्कशः ॥ ४४ ॥ शिवस्य पार्षदाः
सर्वे महाबलपराक्रमाः ॥ वीरभद्रादयः शूराः कोटिसूर्य्यसमप्रभाः ॥ ४५ ॥ सहस्रमूर्धः शेषस्य फणामण्डलभूषणम् ॥ विश्वं सर्षपतुल्यं
च को वा योद्धा च तत्समः ॥ ४६ ॥ कालाग्निरुद्रः संहर्त्ता यस्य शम्भोश्च किङ्कराः ॥ शूलिनस्त्रिपुरघ्नस्य ज्वलतो ब्रह्मतेजसा ॥ ४७ ॥
यस्य पाशुपतास्त्रेण दुर्निवार्य्येण पुत्रकाः ॥ भस्मीभूतं भवेद्विश्वं दैत्यानां चैव का कथा ॥ ४८ ॥ यस्य शूलेन भिन्नश्च शंखचूडः प्रतापवान् ॥
सुदामा पार्षदवरः कृष्णस्य परमात्मनः ॥ ४९ ॥ त्रिकोटिसूर्य्यसदृशस्तेजस्वी परमाद्भुतः ॥ राधाकवचकण्ठश्च सर्वदैत्यजनेश्वरः ॥
॥ ५० ॥ मधुकैटभयोर्हन्ता हिरण्यकशिपोश्च यः ॥ स च विष्णुः समायाति श्वेतद्वीपात्स्वयं प्रभुः ॥ ५१ ॥ इत्युक्त्वा जगतां धाता विरराम

चसंसदि ॥ प्रहस्योवाचदैतयोदानवानामधीश्वरः ॥ ५२ ॥ ॥ प्रह्लादउवाच ॥ ॥ नमस्तुभ्यंजगद्धातःसर्वेषांप्राक्तनेश्वर ॥
सर्वपूज्यःसर्वनाथःकिंवक्ष्यामितवाग्रतः ॥ ५३ ॥ हिरण्यकशिपोर्हन्तामधुकैटभयोश्चयः ॥ साकलायस्यकृष्णस्यपरिपूर्णतमस्यच ॥
॥ ५४ ॥ सर्वान्तगत्मनस्तस्यचक्रंनामसुदर्शनम् ॥ अस्माकंलोकमस्मांश्चतद्राक्षस्यतिदुस्सहम् ॥ ५५ ॥ ततोनवलवान्स्छ
स्भुर्नचपाशुपतंविधे ॥ नचकालीनशेषश्चनचरुद्रादयःसुराः ॥ ५६ ॥ यस्यलोमसुविश्वानिनिखिलानिजगत्पते ॥ सर्वाधा
रस्यचविभोःस्थूलात्स्थूलतरस्यच ॥ ५७ ॥ षोडशांशो भगवतः स चैव हिमहान्विराट् ॥ अनन्तोनहितत्स्थूलोनका
लीन्नहतीततः ॥ ५८ ॥ आगच्छन्तुसुराःसर्वेयुद्धंकुर्वन्तुसाम्प्रतम् ॥ न विभेमि शरेभ्यश्च नचपाशुपताद्भगत ॥ ५९ ॥
नमस्तस्मैभगवतेशिवायशिवरूपिणे ॥ नमोऽनन्तायसाधुभ्योवैष्णवेभ्यःप्रजापते ॥ ६० ॥ श्रीकृष्णस्यप्रसादेननिर्भयोऽ
हंनिरामयः ॥ नमेस्वात्मवलंब्रह्मंस्तद्बलंयत्प्रभोर्वलम् ॥ ६१ ॥ स्वपापेनमृतस्तातोपुरावैविष्णुनिन्दया ॥ निर्वन्धाच्छंखचूड
श्चदर्पाच्चमधुकैटभौ ॥ ६२ ॥ त्रिपुरःकिङ्करोऽस्माकंवीरत्वेननगण्यते ॥ तथापि प्रेरितस्तेन सरथस्थो महेश्वरः ॥ ६३ ॥
इत्युक्त्वादानवश्रेष्ठोविरराम चसंसदि ॥ उवाचजगतांधातापुनरेवचनारद ॥ ६४ ॥ ॥ ब्रह्मोवाच ॥ विनाशकारणंयुद्धमुभयोर्दैत्यदे
वयोः ॥ सुप्रीत्याचरणंवत्ससर्वमङ्गलकारणम् ॥ ६५ ॥ तारांभिक्षांदेहिमह्यंभिक्षुकायचवैधसे ॥ विमुखेभिक्षुकेराजन्गृहस्थः
सर्वपापभाक् ॥ ६६ ॥ ॥ सनत्कुमारउवाच ॥ स्वकीर्तिरक्षराजेन्द्रसिंहस्त्वंसुरदैत्ययोः ॥ यस्यभिक्षुर्जगद्धातातस्यकीर्तिश्चकाकथा
॥ ६७ ॥ ॥ सनातनउवाच ॥ ॥ नजितस्त्वंसुरेन्द्रैश्चब्रह्मेशानपुरोगमैः ॥ रक्षितःकृष्णचक्रेणवैष्णवःपुण्यवाञ्छुचिः ॥ ६८ ॥
॥ ॥ सनन्दनउवाच ॥ . ॥ यस्येष्टदेवःसर्वात्माश्रीकृष्णःप्रकृतेःपरः ॥ गुरुश्चवैष्णवःशुक्रःसचकेनजितोमहान् ॥ ६९ ॥ ॥ सन
कउवाच ॥ ॥ पुण्यवान्नजितःकेनजितःपापीस्वपातकैः ॥ पुण्यदीपोननिर्वातिपाषण्डेनैववायुना ॥ ७० ॥ ॥ ऋषयऊचुः ॥ ॥
देहितारांमहाभागचन्द्रप्राणाधिकंगुरोः ॥ स्वकीर्तिरक्षसुचिरंप्रार्थयामःपुनःपुनः ॥ ७१ ॥ ॥ प्रह्लादउवाच ॥ ॥ स्थितेमदीश्वरे

साक्षाद्वह्निभृत्योविराजते ॥ कर्त्तारंवह्निमन्त्रार्थंगुरुंशुक्रंसतांवरम् ॥ ७२ ॥ शिष्याणामाधिपत्येचसाधूनांगुरुरीश्वरः ॥ गुरोःसमर्पितंपूर्वं
सर्वैश्वर्यंमुनीश्वरे ॥ ७३ ॥ वयंभृत्याश्चपोष्याश्चसर्वेगुरोःपरिचारकाः ॥ तेचशिष्याःकुशलिनोगुर्वाज्ञांपालयन्तिये ॥ ७४ ॥ प्रह्लादस्य
वचःश्रुत्वाचकारप्रार्थनांकविम् ॥ ददौशुक्रश्चतारांतांचन्द्रश्चमलिनंमुने ॥ ७५ ॥ दत्त्वातारांविधुंशुक्रःप्रणनामविधेःपदे ॥ नमस्कृत्य
मुनिभ्यश्चप्रणतःस्वपुरंययौ ॥ ७६ ॥ प्रह्लादःसगणोभक्त्यानमस्कृत्यविधेःपदे ॥ प्रत्येकंचमुनिगणान्प्रणतःस्वगृहंययौ ॥ ७७ ॥
ब्रह्मादृष्ट्वातारांचप्रगतांस्वपदेसतीम् ॥ लज्जयानम्रवक्त्रांचरुदतींगुर्विणींमुने ॥ ७८ ॥ चन्द्रश्चप्रगतंधाताक्रोडेसंस्थाप्यमायया ॥
उवाचमलिनांतारांकातरांचकृपामयः ॥ ७९ ॥ तारेत्यजभयंमत्तःभयंकिंतेमयिस्थिते ॥ सौभाग्ययुक्तास्वपतौभविष्यसिवरेणमे ॥
॥ ८० ॥ दुर्बलाबलिनाग्रस्तानिष्कामानच्युताभवेत् ॥ प्रायश्चित्तेनशुद्धासानस्त्रीजारेणदुष्यति ॥ ८१ ॥ सकामाकामतोजारंभजते
स्वसुखेनच ॥ प्रायश्चित्तान्नशुद्धासास्वामिनापरिवर्जिता ॥ ८२ ॥ कुम्भीपाकेपच्यतेसायावच्चन्द्रदिवाकरम् ॥ अन्नंविष्ठाजलंमूत्रंस्प
र्शनंसर्वपापदम् ॥ ८३ ॥ पापीयस्याश्चतस्याश्चसाधुभिःपरिवर्जितम् ॥ कस्यगर्भंवदशुभेगच्छवत्सेगुरोर्गृहम् ॥ ८४ ॥ त्यजलज्जां
महाभागेसर्वंचप्राक्तनाद्भवेत् ॥ ब्रह्मणोवचनंश्रुत्वातमुवाचसतीतदा ॥ ८५ ॥ चन्द्रस्यगर्भंहेतातविभर्म्यंगस्वकर्मणा ॥ सर्वेमेसाक्षिणः
सन्तिदुर्बलायाःप्रजापते ॥ ८६ ॥ यदाजग्राहचन्द्रोमांदयाहीनश्चदुर्मतिः ॥ इत्युक्त्वातारकादेवीसुषावकनकप्रभम् ॥ ८७ ॥ कुमा
रंसुन्दरंतप्तज्वलन्तंब्रह्मतेजसा ॥ गृहीत्वातनयंचन्द्रोनत्वाब्रह्माणमीश्वरम् ॥ ८८ ॥ जगामसस्वभवनंब्रह्मासिन्धुतटंययौ ॥ साध्वीं
तारांचगुरवेदेवेभ्योऽप्यभयंददौ ॥ ८९ ॥ आशिषंशम्भुधर्माभ्यांदत्त्वालोकंययौविधिः ॥ देवाययुःस्वभवनंस्वगृहंचबृहस्पतिः ॥
॥ ९० ॥ भावानुरक्तवनितांप्राप्यसंहृष्टमानसः ॥ तारकागर्भसंभूतःसएवचबुधःस्वयम् ॥ ९१ ॥ तेजस्वीसद्गुणोब्रह्मंश्चन्द्रस्यतनयो
महान् ॥ सएवनन्दनवनेचित्रांसंप्राप्यनिर्जने ॥ ९२ ॥ घृताच्यागर्भसंभूतांकुबेरस्यचरेतसा ॥ दृष्ट्वाचनिर्जनेरम्यांकन्यांकमललो
चनाम् ॥ ९३ ॥ अतीवयौवनस्थांचबालांषोडशवार्षिकीम् ॥ गान्धर्वेणविवाहेनतांजग्राहविधोःसुतः ॥ ९४ ॥ तस्यामथायंरहसि

धरःश्यामोभूषितोरत्नभूषणैः ॥ तथासम्भृतसम्भारोरत्नयानेननारद ॥ १३ ॥ सनकश्चसनन्दश्चकपिलश्चसनातनः ॥ आसुरिश्च
क्रतुर्हंसोवोढुःपञ्चशिखोऽरुणिः ॥ १४ ॥ यतिश्चसुमतिश्चैववसिष्ठश्चसहानुगः ॥ पुलहश्चपुलस्त्यश्चाप्यत्रिश्चभृगुरंगिराः ॥ १५ ॥
अगस्त्यश्चप्रचेताश्चदुर्वासाश्च्यवनस्तथा ॥ मरीचिःकश्यपःकण्वोजरत्कारुश्चगौतमः ॥ १६ ॥ बृहस्पतिरुतथ्यश्चसंवर्तःसौभरिस्तथा ॥
जाबालिर्जमदग्निश्चजैगीषव्यश्चदेवलः ॥ १७ ॥ गोकामुखोवक्ररथःपारिभद्रःपराशरः ॥ विश्वामित्रोवामदेवऋष्यशृंगोविभाण्डकः ॥
॥ १८ ॥ मार्कण्डेयोमृकण्डुश्चपुष्करोलोमशस्तथा ॥ कौत्सोवत्सश्चदक्षश्चबालाग्निरघमर्षणः ॥ १९ ॥ कात्यायनःकणादश्चपाणिनिः
शाकटायनः ॥ शङ्कुरापिशलिश्चैवशाकल्यःशंखएवच ॥ २० ॥ एतेचान्येचबहवःसशिष्यामुनयोमुने ॥ आवाञ्चधर्म्मपुत्रौचनर
नारायणौसमौ ॥ २१ ॥ दिक्पालाश्चतथादेवायक्षगन्धर्वकिन्नराः ॥ आजग्मुःपर्वताःसर्वेसगणाःपार्वतीव्रते ॥ २२ ॥ हिमालयःशैल
राजःसापत्यश्चसभार्य्यकः ॥ सगणःसानुगश्चैवरत्नभूषणभूषितः॥ २३ ॥ तथासम्भृतसम्भारोनानाद्रव्यसमन्वितः ॥ मणिमाणिक्यरत्ना
निव्रतेयोग्यानियानिच ॥ २४ ॥ नानाप्रकारवस्तूनिजगत्यांदुर्लभानिच ॥ लक्षञ्चगजरत्नानामश्वरत्नंत्रिलक्षकम् ॥ २५ ॥
दशलक्षंगवांरत्नंशतलक्षंसुवर्णकम् ॥ रुचकानांहीरकाणांस्पर्शानाञ्चतथैवच ॥ २६ ॥ मुक्तानांचचतुर्लक्षंकौस्तुभानांसहस्रकम् ॥
सुस्वादुनानाद्रव्याणां लक्षभाराणिकौतुकी ॥ अनन्तरत्नप्रभवआजगामसुताव्रते ॥ २७ ॥ ब्राह्मणामनवःसिद्धानागाविद्याधरा
स्तथा ॥ संन्यासिनोभिक्षुकाश्चबन्दिनःपार्वतीव्रते ॥ २८ ॥ विद्याधरीनर्त्तकीचनर्त्तकाऽप्सरसांगणाः ॥ नानाविधावाद्य
भाण्डाआजग्मुःशिवमन्दिरम् ॥ २९ ॥ कैलासराजमार्गंचचन्दनेनसुसंस्कृतम् ॥ आम्रपल्लवसूत्राढ्यंकदलीस्तम्भशोभितम् ॥
॥ ३० ॥ दूर्वाधान्यफलैःपर्णलाजपुष्पैर्विभूषितम् ॥ निर्मितंपद्मरागेणददृशुस्तेगणामुदा ॥ ३१ ॥ उच्चैःसिंहासनेष्वेते
पूजिताःशङ्करेणच ॥ कैलासवासिनःसर्वेपरमानन्दसंयुताः ॥ ३२ ॥ दानाध्यक्षः शुनासीरः कुबेरः कोशरक्षकः ॥

१ गोकामुखश्चक्रकरइतिपाठः । २ प्रस्कण्वइतिपाठः ।

आदेष्टाचस्वयंसूर्य्यः परिवेष्टाजलाधिपः ॥ २३ ॥ दध्नांनद्यः सहस्राणिदुग्धानांचतथैवच ॥ सहस्राणिघृतानांचगुडानांचशता
नि च ॥ २४ ॥ माध्वीकानांसहस्राणितैलानांचशतानिच ॥ लक्षाणिचैवतक्राणांबभूवुः पार्वतीव्रते ॥ २५ ॥ पीयूषाणांचकुम्भा
निशतलक्षाणिनारद ॥ मिष्टान्नानांशर्कराणांबभूवुर्लक्षराशयः ॥ यवगोधूमचूर्णानांघृताक्तानांचनारद ॥ २६ ॥ स्वस्तिकानांचपूर्णा
नांबभूवुर्लक्षराशयः ॥ गुडसंस्कृतलाजानांबभूवुःकोटिराशयः ॥ २७ ॥ शालीनांपृथुकानांचराशीनांदशकोटयः ॥ वरतण्डुलराशी
नांमुनेसंख्यानविद्यते ॥ २८ ॥ स्वर्णरौप्यप्रवालानांमणीनांचमहामुने ॥ बभूवुःपर्वतास्तत्रकैलासेपार्वतीव्रते ॥ २९ ॥ पायसंपिष्टकं
चैवशाल्यन्नंसुमनोहरम् ॥ चकारलक्ष्मीःपाकंचव्यञ्जनंघृतसंस्कृतम् ॥ ४० ॥ बुभुजेदेवर्षिगणैःशिवोनारायणेनच ॥ बभूवुर्ल
क्षविप्राश्चपरिवेषणकारकाः ॥ ४१ ॥ ताम्बूलञ्चददौतेभ्यःकर्पूरादिसुवासितम् ॥ रत्नसिंहासनस्थेभ्योविप्रलक्षाःसुदक्षकाः ॥ ४२ ॥
रत्नसिंहासनस्थंचविष्णुंक्षीरोदशायिनम् ॥ सेव्यमानंपार्षदैश्चसस्मितैःश्वेतचामरैः ॥४३॥ ऋषिभिस्स्तूयमानंचसिद्धैर्देवगणैस्तथा ॥
विद्याधरीणांनृत्यानिपश्यन्तंमस्मितंमुदा ॥ ४४ ॥ गन्धर्वाणांचसङ्गीतंश्रुतवन्तंमनोहरम् ॥ पप्रच्छशङ्करोब्रह्मन्ब्रह्मेशंप्रीतिपूर्वकम् ॥
॥ ४५ ॥ ब्रह्मणाप्रेरितोयुक्तंव्रतंकर्त्तव्यमीप्सितम् ॥ देवर्षिगणपूर्णायांसभायांसंपुटाञ्जलिः ॥ ४६ ॥ ॥ श्रीमहादेवउवाच ॥ ॥
मदीयंवचनंनाथश्रीनिवासशृणुप्रभो ॥ तपस्स्वरूपतपसांकर्मणाञ्चफलप्रद ॥ ४७ ॥ व्रतानांजपयज्ञानांपूजानांसर्वपूजित ॥ सर्वेषांबीज
रूपेणवाञ्छाकल्पतरोहरे ॥ ४८ ॥ सुपुण्यंचव्रतंकर्त्तुंब्रह्मन्निच्छतिपार्वती ॥ पुत्रार्थिनीसाशोकार्त्ताहृदयेनविदूयता ॥ ४९ ॥ रतिभङ्गे
कृतेदेवैर्व्यर्थवीर्य्यशुचार्दिता ॥ प्रबोधितामयासाध्वीविविधैर्वचनामृतैः ॥ ५० ॥ सत्पुत्रंस्वामिसौभाग्यंसुव्रतायाचतेव्रते ॥ ताभ्यां
विनानसन्तुष्टास्वप्राणांस्त्यक्तुमिच्छति ॥ ५१ ॥ पुरात्यक्तास्वदेहश्चपितृयज्ञेचमानिनी ॥ मन्निन्दयाहिमवतिपुनर्जन्मललाभसा ॥
॥ ५२ ॥ सर्वंजानासिवृत्तान्तंसर्वज्ञंत्वांवदामिकिम् ॥ दीनांतांवदतत्त्वज्ञपरिणामशुभप्रदाम् ॥ ५३ ॥ दुर्निवार्य्यश्चसर्वेशस्त्रीस्वभाव
श्चापलः ॥ दुस्त्याज्यंयोगिभिःसिद्धैरस्माभिश्चतपस्विभिः ॥ ५४ ॥ जितेन्द्रियैर्जितक्रोधैःस्त्रीरूपंमोहकारणम् ॥ सर्वमायाकरण्डञ्च

कामवर्द्धनकारणम् ॥ ५५ ॥ ब्रह्मास्त्रंकामदेवस्यदुर्भेद्यंजयकारणम् ॥ सुनिर्मितञ्चविधिनासर्वाद्यंविधिपूर्वकम् ॥५६॥ मोक्षद्वारकपा
टश्चहरिभक्तिनिरोधनम् ॥ संसारबन्धनस्तम्भरज्जुरूपमकृन्तनम् ॥ ५७ ॥ वैराग्यनाशबीजञ्चशश्वद्रागविवर्द्धनम् ॥ पत्तनंसाहसा
नाञ्चदोषाणामालयंसदा ॥ ५८ ॥ अप्रत्ययानांक्षेत्रञ्चस्वयंकपटमूर्तिमत् ॥ अहङ्काराश्रयंशश्वद्विषकुम्भंसुधामुखम् ॥ ५९ ॥ सर्वं
रसाध्यमानञ्चदुराराध्यंचसर्वदा ॥ स्वकार्य्यसाध्याचाराढ्यंकलहाङ्कुरकारणम् ॥ ६० ॥ सर्वंनिवेदितंब्रह्मन्कर्त्तव्यंवक्तुमर्हसि ॥
कार्य्यंसर्वंपरामर्शैपरिणामसुखावहम् ॥ ६१ ॥ ॥ श्रीनारायणउवाच ॥ ॥ इत्येवमुक्त्वाभगवान्निरीक्ष्यब्रह्मणोमुखम् ॥ विरराम
सभामध्येस्तुत्वाचकमलापतिम् ॥ ६२ ॥ शङ्करस्यवचःश्रुत्वाप्रहस्यजगदीश्वरः ॥ हितंचनीतिवचनंप्रवक्तुमुपचक्रमे ॥ ६३ ॥
॥ ॥ श्रीविष्णुरुवाच ॥ ॥ सुपुण्यकव्रतंसारंसतीसन्तानहेतवे ॥ स्वामिसौभाग्यबीजंचपत्नीतिकर्त्तुमिच्छति ॥ ६४ ॥ सर्वासा
ध्यंदुराराध्यंसर्वकामफलप्रदम् ॥ सुखदंसुखसारंचमोक्षदंपार्वतीश्वर ॥ ६५ ॥ आत्मासाक्षिस्वरूपश्चज्योतीरूपःसनातनः ॥ निराश्र
यश्चनिर्लिप्तोनिरुपाधिर्निरामयः ॥ ६६ ॥ भक्तप्राणश्चभक्तेशोभक्तानुग्रहकारकः ॥ दुराराध्योहियोऽन्येषांभक्तानामतिसाधकः ॥
॥ ६७ ॥ भक्त्यधीनोहिभगवान्सर्वसिद्धोहिनिष्फलः ॥ तेयस्यचकलाःपुंसोब्रह्मविष्णुमहेश्वराः ॥ ६८ ॥ महान्विराड्यदंशश्चनि
र्लिप्तःप्रकृतेःपरः ॥ अव्ययोनिग्रहश्चोग्रोभक्तानुग्रहविग्रहः ॥ ६९ ॥ उग्रग्रहोग्रहाणांचग्रहनिग्रहकारकः ॥ त्रिकोटिजन्ममध्येचनसा[1]
ध्योभवताविना ॥ ७० ॥ लब्ध्वाहिभारतेजन्महरिभक्तिंलभेन्नरः ॥ सेवनंक्षुद्रदेवानांकृत्वासप्तसुजन्मसु ॥ ७१ ॥ सूर्य्यमन्त्रमवाप्नोति
केवलंसतदाशिषा ॥ सूर्य्यमन्त्रंसमाराध्यत्रिषुजन्मसुभारते ॥ ७२ ॥ प्राप्नोतिशैवंमन्त्रंचसर्वदंमानवोमुदा ॥ संसेव्यपरयाभक्त्यात्वा
मेवंसप्तजन्मसु ॥ ७३ ॥ प्राप्नोतिमायामन्त्रंचत्वत्पदाब्जप्रसादतः ॥ शतंजन्मसुचाराध्यमायांनारायणींपराम् ॥ ७४ ॥ नाराय
णकलांसेव्यांसमवाप्नोतिमानवः ॥ कलांनिषेव्यवर्षेऽत्रपुण्यक्षेत्रेसुदुर्लभे ॥ ७५ ॥ कृष्णभक्तिमवाप्नोतिभक्तसंसर्गहैतुकीम् ॥ संप्राप्य

१ त्रिकोटिजन्मसाध्यश्चनसाध्योभारतंविनेतिपाठः ।

भक्तिंनिष्पक्कांश्रामंश्रामंचभारते ॥ ७६ ॥ प्राप्नोतिपरिपक्कांचभक्तिंभक्तनिषेवया ॥ तदाभक्तप्रसादेनदेवानामाशिषाशिव ॥ श्रीकृष्ण
मन्त्रंप्राप्नोतिनिर्वाणफलदंपरम् ॥ ७७ ॥ कृष्णव्रतंकृष्णमन्त्रंसर्वकामफलप्रदम् ॥ कृष्णतुल्योभवेद्भक्तश्चिरंकृष्णनिषेवया ॥ ७८ ॥
महतिप्रलयेपातःसर्वेषांवैसुनिश्चितम् ॥ नपातःकृष्णभक्तानांसाधूनामविनाशिनाम् ॥ ७९ ॥ अविनाशिनिगोलोकेमोदन्तेकृष्ण
किङ्कराः ॥ हसन्तितेसुनिश्चिन्तादेवान्ब्रह्मादिकाञ्छिव ॥ ८० ॥ त्वंसंहर्त्ताचसर्वेषांनभक्तानांमहेश्वर ॥ मायामोहयतेसर्वा
न्भक्तान्नकृपयामम ॥ ८१ ॥ मायानारायणीमातासर्वेषांकृष्णभक्तिदा ॥ नकृष्णभक्तिंप्राप्नोतिविनामायानिषेवणम् ॥ ८२ ॥ साच
नारायणीमायामूलप्रकृतिरीश्वरी ॥ कृष्णप्रियाकृष्णभक्ताकृष्णतुल्याविनाशिनी ॥ ८३ ॥ साचतेजस्स्वरूपाचस्वेच्छाविग्रहधा
रिणी ॥ आविर्भूताचदेवानांतेजसासुरनिग्रहे ॥ ८४ ॥ निहत्यदैत्यसंघांश्चदक्षपत्न्यांचभारते ॥ ललाभदक्षस्तपसाजन्मचानेकजन्मनः ॥
॥ ८५ ॥ त्यक्त्वादेहंपितुर्यज्ञेसासतीतवनिन्दया ॥ जगामदेवीगोलोकंकृष्णशक्तिःसनातनी ॥ ८६ ॥ गृहीत्वाविग्रहंतस्यागुणरूपाश्र
यंपरम् ॥ श्रामंश्रामंभारतेत्वंविषण्णोऽभूःपुराहर ॥ ८७ ॥ प्रबोधितोमयात्वंचश्रीशैलेषुसरित्तटे ॥ ललाभजन्मसाशैलकान्तायाम
चिरेणच ॥ ८८ ॥ करोतुपुण्यकंसाध्वीसुव्रतासुव्रतंशिवा ॥ राजसूयसहस्राणांपुण्यंशङ्करपुण्यके ॥ ८९ ॥ राजसूयसहस्राणांव्रतेय
त्रधनव्ययः ॥ नसाध्यंसर्वसाध्वीनांव्रतमेतत्त्रिलोचन ॥ ९० ॥ स्वयंभूतेशनाथस्त्वंपुण्यकस्यप्रभावतः ॥ पार्वतीगर्भजातश्चवरः
पुत्रोभविष्यति ॥ ९१ ॥ स्वयंदेवगणानांसयस्मादीशःकृपानिधिः ॥ गणेशइतिविख्यातोभविष्यतिजगत्त्रये ॥ ९२ ॥ यस्यस्म
रणमात्रेणविघ्ननाशोभवेद्ध्रुवम् ॥ जगतांहेतुनानेनविघ्ननिघ्नाभिधोविभुः ॥ ९३ ॥ नानाविधानिद्रव्याणियस्माद्येयानिपुण्यके ॥
भुक्त्वालम्बोदरत्वश्चतेनलम्बोदरःस्मृतः ॥ ९४ ॥ शनिदृष्ट्याशिरश्छेदाद्गजवक्त्रेणयोजितः ॥ गजाननःशिशुस्तेनसर्वेषांसर्वसिद्धिदः ॥
॥ ९५ ॥ दंतभंगःपरशुनापर्शुरामस्यवैयतः ॥ हेतुनातेनविख्यातश्चैकदन्ताभिधःशिशुः ॥ ९६ ॥ पूज्यश्चसर्वदेवानामस्माकंजगतां
विभुः ॥ सर्वाग्रेपूजनन्तस्यभवितामद्वरेणवै ॥९७॥ पूजाग्रुसर्वदेवानामग्रेसंपूज्यतंजनः ॥ पूजाफलमवाप्नोतिनिर्विघ्नेनवृथान्यथा ॥९८॥

गणेशंचदिनेशंचविष्णुंशम्भुंहुताशनम् ॥ दुर्गामेतान्सन्निषेव्यपूजयेद्देवतान्तरम् ॥ ९९ ॥ गणेशपूजनेविघ्नंनिर्मूलंजगतां
भवेत् ॥ निर्व्याधिःसूर्य्यपूजायांशुचिःश्रीविष्णुपूजने ॥ १०० ॥ मोक्षश्चपापनाशश्चयशश्चैश्वर्यमुत्तमम् ॥ तत्त्वज्ञानंसुतृप्तीनांबीजं
शंकरपूजनात् ॥ १०१ ॥ स्वबुद्धिशुद्धिजननंकीर्त्तितंवह्निपूजनम् ॥ विधिसंस्कृतवह्नेस्तुपूजातोज्ञानतोमृतिः ॥ १०२ ॥ दाताभो
क्ताचभवतिशंकराग्निनिषेवणात् ॥ हरिभक्तिप्रदश्चैवपरंदुर्गार्चनंशिवम् ॥ १०३ ॥ विपरीतंत्रिजगतामेतेषांपूजनंविना ॥ एवंक्रमोमहा
देवकल्पेकल्पेऽस्तिनिश्चितम् ॥ १०४ ॥ एतेशश्वद्द्रियमानानित्याःसृष्टिपरायणाः ॥ आविर्भावतिरोभावौचैवतेषामीश्वरेच्छया ॥
॥ १०५ ॥ इत्युक्त्वाश्रीहरिस्तत्रविरराम सभातले ॥ प्रहृष्टादेवताविप्राःपार्वत्यासहशंकरः ॥ १०६ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृती
येगणेशखण्डेनारदनारायणसंवादेव्रताज्ञाग्रहणंनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ नारायणउवाच ॥ ॥ हरेराज्ञांसमादायहरःसंहृष्टमानसः ॥
उवाचपार्वतींप्रीत्याहरिसंलापमङ्गलम् ॥१॥ शिवाज्ञाञ्चसमादायशिवासंहृष्टमानसा ॥ वाद्यञ्चवादयामासमङ्गलंमङ्गलव्रते ॥२॥ सुस्ना
तासुदतीशुद्धाबिभ्रतीधौतवाससी ॥ संस्थाप्यरत्नकलशंशुक्लधान्योपरिस्थिरम् ॥ ३ ॥ आम्रपल्लवसंयुक्तंफलाक्षतसुशोभितम् ॥ चन्द
नागुरुकस्तूरीकुङ्कुमेनविराजितम् ॥ ४ ॥ रत्नासनस्थारत्नाढ्यारत्नोद्भवसुतासती ॥ रत्नसिंहासनस्थांश्चसंपूज्यमुनिपुङ्गवान् ॥ ५ ॥
रत्नसिंहासनस्थञ्चसंपूज्यसुपुरोहितम् ॥ चन्दनागुरुकस्तूरीरत्नभूषणभूषितम् ॥ ६ ॥ संस्थाप्यपुरतोभक्त्यादिक्पालान्रत्नभूषितान् ॥
देवान्नरांश्चनागांश्चसमर्च्यविधिबोधितम् ॥ ७ ॥ समर्च्यपरयाभक्त्याब्रह्मविष्णुमहेश्वरान् ॥ चन्दनागुरुकस्तूरीकुङ्कुमेनविराजितान् ॥
॥ ८ ॥ वह्निशुद्धैस्सुवस्त्रैश्चसद्रत्नैर्भूषणैस्तथा ॥ पूजाद्रव्यैश्चविविधैःपूजितान्पुण्यकेमुने ॥ समारंभेव्रतंदेवीस्वस्तिवाचनपूर्वकम् ॥ ९ ॥
आवाह्याभीष्टदेवंतंश्रीकृष्णंमङ्गलेघटे ॥ भक्त्याददौक्रमेणैवचोपचारांस्तुषोडश ॥ १० ॥ यानिव्रतेविधेयानिदेयानिविविधानिच ॥
प्रददौतानिसर्वाणिप्रत्येकंफलदानिच ॥ ११ ॥ व्रतोक्तमुपहारञ्चदुर्लभंभुवनत्रये ॥ तच्चसर्वंददौभक्त्यासुव्रतेसुव्रतासती ॥ १२ ॥
दत्त्वाद्रव्याणिसर्वाणिवेदमन्त्रेणसासती ॥ होमञ्चकारयामासत्रिलक्षंतिलसर्पिषा ॥ ब्राह्मणान्भोजयामासपूजयित्वातिथींस्तथा ॥१३॥

भोजयामाससादेवीसुव्रतेसुव्रतासती ॥ प्रत्यहंसविधानञ्चचक्रेसापूर्णवत्सरम् ॥ १४ ॥ समाप्तिदिवसेविप्रस्तामुवाचपुरोहितः ॥
सुव्रतेसुव्रतेमह्यंदेहित्वंपतिदक्षिणाम् ॥ १५ ॥ इति तद्वचनंश्रुत्वाविलप्यसुरसंसदि ॥ मूर्च्छांप्रापमहामायामायामोहितचेतसा ॥ १६ ॥
तांचतेमूर्च्छितांदृष्ट्वाप्रहस्यमुनिपुंगवाः ॥ शङ्करंप्रेषयामासब्रह्माविष्णुश्चनारद ॥ १७ ॥ संप्रार्थितःसभासद्भिःशिवांबोधयितुंतदा ॥
शिवःसमुद्यमञ्चक्रेप्रवक्तुंवदतांवरः ॥ १८ ॥ ॥ श्रीमहादेवउवाच ॥ ॥ उत्तिष्ठभद्रेभद्रंतेभविष्यतिनसंशयः ॥ साम्प्रतंचेतनंकृत्वा
मदीयंवचनंशृणु ॥ १९ ॥ शिवःशिवांतामित्युक्त्वाशुष्ककण्ठौष्ठतालुकाम् ॥ वक्षसिस्थापयामासकारयामासचेतनाम् ॥ २० ॥ हितं
सत्यंमितंसर्वंपरिणामसुखावहम् ॥ यशस्करञ्चफलदंप्रवक्तुमुपचक्रमे ॥२१॥ शृणुदेविप्रवक्ष्यामियद्वेदेननिरूपितम् ॥ सर्वसम्मतमिष्टञ्च
धर्मार्थंधर्म्मसंसदि ॥२२॥ सर्वेषांकर्म्मणांदेविसारभूताचदक्षिणा ॥ यशोदाफलदानित्यंधर्मिष्ठेधर्म्मकर्म्मणि ॥ २३ ॥ दैवंवापैतृकंवापि
नित्यंनैमित्तिकंप्रिये ॥ यत्कर्म्मदक्षिणाहीनंतत्सर्वंनिष्फलंभवेत् ॥ दाताचकर्म्मणातेनकालसूत्रंव्रजेद्ध्रुवम् ॥ २४ ॥ अथा
न्तेदैन्यमाप्नोतिशत्रुणापरिपीडितः ॥ दक्षिणाविप्रमुद्दिश्यतत्कालंतुनदीयते ॥ २५ ॥ तन्मुहूर्त्तेव्यतीतेतुदक्षिणाद्विगुणाभवेत् ॥
चतुर्गुणादिनातीतेपक्षेशंतगुणाभवेत् ॥२६॥ मासेपञ्चशतघ्नास्यात्षण्मासेतच्चतुर्गुणा ॥ संवत्सरेव्यतीतेतुकर्म्मतन्निष्फलंभवेत् ॥ २७ ॥
दाताचनरकंयातियावद्वर्षसहस्रकम् ॥ पुत्रपौत्रधनैश्वर्य्यंक्षयमाप्नोतिपातकात् ॥ धर्मोनष्टोभवेत्तस्यधर्म्महीनेचकर्म्मणि ॥ २८ ॥
॥ श्रीविष्णुरुवाच ॥ ॥ रक्षस्वधर्मंधर्मिष्ठेधर्मज्ञेधर्मकर्मणि ॥ सर्वेषांचभवेद्रक्षास्वधर्मपरिपालने ॥२९॥ ॥ ब्रह्मोवाच ॥ ॥
यश्चकेननिमित्तेननधर्मंपरिरक्षति ॥ धर्मेनष्टेचधर्मज्ञेतस्यकर्त्ताविनश्यति ॥ ३० ॥ ॥ धर्मउवाच ॥ ॥ मांरक्षयत्नतःसाध्विप्रदाय
पतिदक्षिणाम् ॥ मयिस्थितेमहासाध्विसर्वंभद्रंभविष्यति ॥ ३१ ॥ ॥ देवाऊचुः ॥ ॥ धर्मंरक्षमहासाध्विकुरुपूर्णंव्रतंसति ॥ वयंतव
व्रतेपूर्णेकुर्मस्त्वांपूर्णमानसाम् ॥ ३२ ॥ ॥ मुनयऊचुः ॥ ॥ कृत्वासाध्विपूर्णहोमंदेहिविप्रायदक्षिणाम् ॥ स्थितेष्वस्मासुधर्मज्ञेकि

सर्वमितिपाठः ।

मभद्रंभविष्यति ॥ ३३ ॥ ॥ सनत्कुमारउवाच ॥ शिवेशिवंदेहिमह्यंनचेद्व्रतफलंत्यज ॥ सुचिरंसंचितस्यापिस्वात्मनस्तपसः
फलम् ॥ ३४ ॥ कर्मण्यदक्षिणेसाध्वियागस्याहंतुतत्फलम् ॥ प्राप्स्यामियजमानस्यसंपूर्णकर्मणःफलम् ॥३५॥ ॥ पार्वत्युवाच ॥ ॥
किंकर्म्मणामेदेवेशाःकिंमेदक्षिणयामुने ॥ किंपुत्रेणचधर्मेणयत्रभर्त्ताचदक्षिणा ॥ ३६ ॥ वृक्षार्चनेफलंकिंवैयदिभूमिर्नचार्च्यते ॥ गते
चकारणेकार्य्यंकुतःसस्यंकुतःफलम् ॥ ३७ ॥ प्राणास्त्यक्ताःस्वेच्छयाचेद्देहैस्स्यात्किंप्रयोजनम् ॥ दृष्टिशक्तिविहीनेनचक्षुषाकिंप्रयोज
नम् ॥ ३८ ॥ शतपुत्रसमः स्वामीसाध्वीनांचसुरेश्वराः ॥ यदिभर्त्ताव्रतेदेयःकिंव्रतेनसुतेनवा ॥ ३९ ॥ भर्त्तुर्वंशश्चतनयः केवलंभर्तृ
मूलकः ॥ यत्रमूलंभवेद्ध्वस्तंतद्वाणिज्यश्चनिष्फलम् ॥ ४० ॥ ॥ श्रीविष्णुरुवाच ॥ ॥ पुत्रादपिपरःस्वामीधर्मश्चस्वामिनःपरः ॥ नष्टे
धर्मेचधर्मिष्ठेस्वामिनाकिंसुतेनवा ॥४१॥ ॥ ब्रह्मोवाच ॥ ॥ स्वामिनश्चपरोधर्मोधर्मात्सत्यञ्चसुव्रते ॥ सत्यंसंकल्पितंकर्मनतुभ्रष्टंकुरु
व्रतम् ॥ ४२ ॥ ॥ पार्वत्युवाच ॥ ॥ निरूपितश्चवेदेषुस्वशब्दोधनवाचकः ॥ तद्यस्यास्तीतिसस्वामीविदज्ञशृणुमद्वचः ॥ ४३ ॥
तस्यदातासदास्वामीनचस्वस्वामितांलभेत् ॥ अहोऽव्यवस्थाभवतांवेदज्ञानामबोधतः ॥ ४४ ॥ ॥ धर्म्मउवाच ॥ ॥ पत्नींविनान्यं
स्वंसाध्विस्वामिनंदातुमक्षमा ॥ दम्पतीध्रुवमेकांगौद्वयोर्दानेद्वकौसमौ ॥४५॥ ॥पार्वत्युवाच॥ ॥ पितादादातिजामात्रेसचगृह्णातितत्सु
ताम् ॥ नश्रुतंविपरीतञ्चश्रुतौश्रुतिपरायणाः ॥ ४६ ॥ ॥ देवाऊचुः ॥ ॥ बुद्धिस्वरूपात्वंदुर्गेबुद्धिमन्तोवयंत्वया ॥ वेदज्ञेवेदवा
देषुकेवात्वांजेतुमीश्वराः ॥ ४७ ॥ निरूपितापुण्यकेतुव्रतेस्वामीचदक्षिणा ॥ श्रुतौश्रुतोयःसधर्म्मोविपरीतोह्यधर्मकः ॥ ४८ ॥
॥ ॥ पार्वत्युवाच ॥ ॥ केवलंवेदमाश्रित्यकःकरोतिविनिर्णयम् ॥ बलवाँल्लौकिकोवेदाल्लोकाचारश्चकस्त्यजेत् ॥ ४९ ॥ वेदेप्रकृतिपुं
सोश्चगरीयान्पुरुषोध्रुवम् ॥ निबोधतसुराःप्राज्ञाबालाहंकथयामिकिम् ॥ ५० ॥ ॥ बृहस्पतिरुवाच ॥ ॥ नपुमांसंविनासृष्टिर्नसा
ध्विप्रकृतिंविना ॥ श्रीकृष्णश्चद्वयोःस्रष्टासमौप्रकृतिपूरुषौ ॥ ५१ ॥ ॥ पार्वत्युवाच ॥ ॥ सर्वस्रष्टाचयःकृष्णःसोंशेनसगुणःपुमान् ॥
पुमान्गरीयान्प्रकृतेस्तथैवनततश्वसा ॥ ५२ ॥ एतस्मिन्नन्तरेदेवामुनयस्तत्रसंसदि ॥ रत्नेंद्रसाररचितमाकाशेददृशूरथम् ॥ ५३ ॥

पार्षदैस्संपरिवृतंयुतंश्यामैश्चतुर्भुजैः ॥ वनमालापरिवृतैरत्नभूषणभूषितैः ॥ अवरुह्यमुदायानादाजगामसभातलम् ॥ ५४ ॥
तुष्टुवुस्तंसुरेन्द्रास्तेदेवंवैकुण्ठवासिनम् ॥ शंखचक्रगदापद्मधरमीशश्चतुर्भुजम् ॥ ५५ ॥ लक्ष्मीसरस्वतीकान्तंशान्तंतंसुमनोहरम् ॥
सुखदृश्यमभक्तानामदृश्यंकोटिजन्मभिः ॥ ५६ ॥ कोटिकन्दर्पलावण्यंकोटिचन्द्रसमप्रभम् ॥ अमूल्यरत्नरचितचारुभूषणभूषितम् ॥
॥ ५७ ॥ सेव्यंब्रह्मादिदेवैश्चसेवकैःसततंस्तुतम् ॥ तद्वासासंपरिप्रच्छन्नैर्वेष्टितश्चसुरर्पिभिः ॥ ५८ ॥ वासयामासतंतेचरत्नसिंहासने
वरे ॥ तंप्रणेमुश्चशिरसाब्रह्मशक्तिशिवादयः ॥ ५९ ॥ सम्पुटाञ्जलयःसर्वेपुलकाञ्चाश्रुलोचनाः ॥ ६० ॥ सस्मितस्तांश्चपप्रच्छसर्वंमधु
रयागिरा ॥ प्रबोधितःसुबोधज्ञःप्रवक्तुमुपचक्रमे ॥ ६१ ॥ ॥ श्रीनारायणउवाच ॥ ॥ सहबुद्ध्याबुधिमन्तोनवक्तुमुचितंसुराः ॥
सर्वेशक्त्याययाविश्वेशक्तिमन्तोहिजीविनः ॥ ६२ ॥ ब्रह्मादितृणपर्य्यन्तंसर्वंप्राकृतिकंजगत् ॥ सत्यंसत्यंविनामांचमयाशक्तिःप्रका
शिता ॥ ६३ ॥ आविर्भूताचसामत्तःसृष्टौदेवीमदिच्छया ॥ तिरोहिताचसाशेषेसृष्टिसंहरणेमयि ॥ ६४ ॥ प्रकृतिःसृष्टिकर्त्रीचसर्वेषां
जननीपरा ॥ ममतुल्याचमन्मायातेननारायणीस्मृता ॥ ६५ ॥ सुचिरंतपसातप्तंशंभुनाध्यायताचमाम् ॥ तेनतस्मैमयादत्तातपसांफ
लरूपिणी ॥ ६६ ॥ व्रतञ्चलोकशिक्षार्थमस्यानस्वार्थमेवच ॥ स्वयंव्रतानांतपसांफलदात्रीजगत्त्रये ॥ ६७ ॥ मायया मोहिताः
सर्वेकिमस्यावास्तवंव्रतम् ॥ साध्यमस्याव्रतफलंकल्पेकल्पेपुनःपुनः ॥ ६८ ॥ सुरेश्वरामदंशाश्चब्रह्मशक्तिमहेश्वराः ॥ कलाःक
लांशरूपाश्चजीविनश्चसुरादयः ॥ ६९ ॥ मृदाविनाघटंकर्त्तुंकुलालश्चयथाऽक्षमः ॥ विनास्वर्णंस्वर्णकारःकुण्डलंकर्त्तुमक्षमः ॥ ७० ॥
विनाशक्त्यानथाहञ्चस्वसृष्टिंकर्तुमक्षमः ॥ शक्तिप्रधानासृष्टिश्चसर्वदर्शनसम्मता ॥ ७१ ॥ अहमात्माहिनिर्लिप्तोऽदृश्यःसाक्षीचदेहि
नाम् ॥ देहाःप्राकृतिकाःसर्वेनश्वराःपाञ्चभौतिकाः ॥ ७२ ॥ अहंनित्यःशरीरीचभानुर्विग्रहविग्रहः ॥ सर्वाधारासाप्रकृतिःसर्वात्माहं
जगत्सुच ॥ ७३ ॥ अहमात्मामनोब्रह्माज्ञानरूपोमहेश्वरः ॥ पञ्चप्राणाःस्वयंविष्णुर्बुद्धिःप्रकृतिरीश्वरी ॥ ७४ ॥ मेधानिद्रादयश्चैताः

१ भानुमान्भानुविग्रहइतिपाठः ।

सर्वाश्चप्रकृतेःकलाः ॥ साचशैलेन्द्रकन्यैषात्विवितिवेदेनिरूपितम् ॥ ७५ ॥ अहंगोलोकनाथश्चवैकुण्ठेशःसनातनः ॥ गोपीगोपैःपरिवृ
तस्तत्रैवद्विभुजः स्वयम् ॥ चतुर्भुजोऽत्रदेवेशोलक्ष्मीशःपार्षदैर्वृतः ॥ ७६ ॥ ऊर्ध्वंपरश्चवैकुण्ठात्पञ्चाशत्कोटियोजने ॥ ममाश्रयश्चगो
लोकेयत्राहंगोपिकापतिः ॥ ७७ ॥ व्रताराध्यस्सद्विभुजःसचतत्फलदायकः ॥ यद्रूपंचिन्तयेद्योहितच्चतत्फलदायकः ॥ ७८ ॥
व्रतंपूर्णंकुरुशिवेशिवंदत्त्वाचदक्षिणाम् ॥ पुनःसमुचितंमूल्यंदत्त्वानाथंग्रहीष्यसि ॥ ७९ ॥ विष्णुदेहायथागावोविष्णुदेहस्तथाशिवः ॥
द्विजायदत्त्वागोमूल्यंगृहाणस्वामिनंशुभे ॥ ८० ॥ यज्ञपत्नींयथादातुंक्षमःस्वामीसदैवतु ॥ तथास्वामिनंदातुमीश्वरीतिश्रुतेर्मतम् ॥
॥ ८१ ॥ इत्युक्त्वासभामध्ये तत्रैवान्तरधीयत ॥ हृष्टास्तेसाचसंहृष्टादक्षिणांदातुमुद्यता ॥ ८२ ॥ कृत्वाशिवापूर्णहोमंसाशिवंदक्षि
णांददौ ॥ स्वस्तीत्युक्त्वाचजग्राहकुमारोदेवसंसदि ॥ ८३ ॥ उवाचदुर्गासंत्रस्ताशुष्ककण्ठौष्ठतालुका ॥ कृताञ्जलिपुटाविप्रंहृदयेन
विदूयता ॥ ८४ ॥ पार्वत्युवाच ॥ गोमूल्यंमत्पतिसममितिवेदेनिरूपितम् ॥ गवांलक्षंप्रयच्छामिदेहिमत्स्वामिनंद्विज ॥ ८५ ॥
तदादास्यामिविप्रेभ्योदानानिविविधानिच ॥ आत्महीनोहिदेहश्चकर्म्माकिंकर्तुमीश्वरः ॥ ८६ ॥ ॥ सनत्कुमारउवाच ॥ ॥
गवांलक्षेणमेदेविवल्गुनाकिंप्रयोजनम् ॥ दत्तस्यामूल्यरत्नस्यगवांप्रत्यर्पणेनच ॥ ८७ ॥ स्वस्यस्वस्यस्वयंदातालोकःसर्वोजगत्त्रये ॥
कर्त्तुरेवेप्सितंकर्मभवेत्किंवापरेच्छया ॥ ८८ ॥ दिगम्बरंपुरःकृत्वाभ्रमिष्यामिजगत्त्रयम् ॥ बालकानांबालिकानांसमूहस्मितकारणम् ॥
॥ ८९ ॥ इत्युक्त्वाब्रह्मणःपुत्रोगृहीत्वाशङ्करंमुने ॥ सन्निधौवासयामासतेजस्वीदेवसंसदि ॥ ९० ॥ दृष्ट्वाशिवंगृह्यमाणंकुमारेणचपार्वती ॥
समुद्यतातनुंत्यक्तुंशुष्ककण्ठौष्ठतालुका ॥ ९१ ॥ विचिन्त्यमनसासाध्वीत्येवमेवदुरत्ययम् ॥ नदृष्टोऽभीष्टदेवश्चनचप्राप्तंफलंव्रते ॥
॥ ९२ ॥ एतस्मिन्नन्तरेदेवाःपार्वतीसहितास्तदा ॥ सद्योददृशुराकाशेतेजसांनिकरंपरम् ॥ ९३ ॥ कोटिसूर्य्यप्रभोर्ध्वञ्चप्रज्वलन्तं
दिशोदश ॥ कैलासशैलंपुरतःसर्वदेवादिभिर्युतम् ॥ ९४ ॥ सर्वाश्रयंगणाच्छन्नंविस्तीर्णमण्डलाकृतिम् ॥ तच्चदृष्ट्वाभगवतस्तुष्टुवुस्ते
क्रमेणच ॥ ९५ ॥ विष्णुरुवाच ॥ ॥ ब्रह्माण्डानिचसर्वाणियल्लोमविवरेषुच ॥ सोऽयंतेषोडशांशश्चकेवयंयोमहाविराट् ॥ ९६ ॥

॥ ब्रह्मोवाच ॥ ॥ वेदोपयुक्तंदृश्यंयत्प्रत्यक्षंद्रष्टुमीश्वर ॥ स्तोतुंतद्वर्णितुमहंशक्तःकिंस्तौमितत्परः ॥ ९७ ॥ ॥ श्रीमहादेव
उवाच ॥ ॥ ज्ञानाधिष्ठातृदेवोऽहंस्तौमिज्ञानपरश्चकिम् ॥ सर्वानिर्वचनीयंतंत्वांचस्वेच्छामयंविभुम् ॥ ९८ ॥ ॥ धर्मउवाच ॥ ॥
अदृश्यमवतारेषुयद्दृश्यंसर्वजन्तुभिः ॥ किंस्तौमितेजोरूपन्तद्भक्तानुग्रहविग्रहम् ॥ ९९ ॥ ॥ देवाऊचुः ॥ ॥ केवयंत्वत्कलांशाश्च
किंवात्वांस्तोतुमीश्वराः ॥ स्तोतुंनशक्तावेदायंनचशक्तासरस्वती ॥ १०० ॥ ॥ मुनयऊचुः ॥ ॥ वेदान्पठित्वाविद्वांसोवयंकिंवेदकार
णम् ॥ स्तोतुमीशानवाणीचत्वांवाङ्मनसयोःपरम् ॥ १०१ ॥ ॥ सरस्वत्युवाच ॥ ॥ वागधिष्ठातृदेवींमांवदन्तेवेदवादिनः ॥
किञ्चिन्नशक्तात्वांस्तोतुमहोवाङ्मनसोःपरम् ॥ १०२ ॥ ॥ सावित्र्युवाच ॥ ॥ वेदप्रसूरहंनाथसृष्टात्वत्कलयापुरा ॥ किंस्तौमिस्त्री
स्वभावेनसर्वकारणकारणम् ॥ १०३ ॥ ॥ लक्ष्मीरुवाच ॥ ॥ त्वदंशविष्णुकान्ताहंजगत्पोषणकारिणी ॥ किंस्तौमित्वत्कला
सृष्टाजगतांबीजकारणम् ॥ १०४ ॥ ॥ हिमालयउवाच ॥ ॥ हसन्तिसन्तोमांनाथकर्मणास्थावरंपरम् ॥ स्तोतुंसमुद्यतं
क्षुद्रःकिंस्तौमिस्तोतुमक्षमः ॥ १०५ ॥ क्रमेणसर्वेतंस्तुत्वादेवाविरम्मुर्मुने ॥ देव्यश्चमुनयसर्वेपार्वतीस्तोतुमुद्यता ॥ १०६ ॥ धौतव
स्त्राजटाभारंबिभ्रतीसुव्रताव्रते ॥ प्रेरितापरमात्मानंव्रताराध्यंशिवेनच ॥ १०७ ॥ ज्वलदग्निशिखारूपातेजोमूर्तिमतीसती ॥ तपसां
फलदामाताजगतांसर्वकर्मणाम् ॥ १०८ ॥ पार्वत्युवाच ॥ ॥ कृष्णजानासिमांभद्रनाहंत्वांज्ञातुमीश्वरी ॥ केवाजानन्तिवेद
ज्ञावेदावावेदकारकाः ॥ १०९ ॥ त्वदंशास्त्वांनजानन्तिकथंज्ञास्यन्तितेकलाः ॥ त्वञ्चापितत्त्वंजानासिकिमन्येज्ञातुमीश्व
राः ॥ ११० ॥ सूक्ष्मात्सूक्ष्मतमोऽव्यक्तःस्थूलात्स्थूलतमोमहान् ॥ विश्वस्त्वंविश्वरूपश्चविश्वबीजंसनातनः ॥ १११ ॥ कार्य्यंत्वं
कारणंत्वञ्चकारणानांचकारणम् ॥ तेजस्स्वरूपोभगवान्निराकारोनिराश्रयः ॥ ११२ ॥ निर्लिप्तोनिर्गुणःसाक्षीस्वात्मारामःपरात्परः ॥
प्रकृतीशोविराड्बीजंविराड्रूपस्त्वमेवच ॥ सगुणस्त्वंप्राकृतिकःकलयासृष्टिहेतवे ॥ ११३ ॥ प्रकृतिस्त्वंपुमांस्त्वञ्चवेदाऽन्योनक्कचि
द्भवेत् ॥ जीवस्त्वंसाक्षिणोभोगीस्वात्मनःप्रतिबिम्बकम् ॥ ११४ ॥ कर्मत्वंकर्मबीजंत्वंकर्मणांफलदायकः ॥ ध्यायन्तियोगिनस्तेज

स्त्वदीयमशरीरियत् ॥ केचिच्चतुर्भुजंशान्तंलक्ष्मीकान्तंमनोहरम् ॥ ११५ ॥ वैष्णवाश्चैवसाकारंकमनीयंमनोहरम् ॥ शंखचक्रगदा
पद्मधरंपीताम्बरंपरम् ॥ ११६ ॥ द्विभुजंकमनीयञ्चकिशोरंश्यामसुन्दरम् ॥ शान्तंगोपाङ्गनाकान्तंरत्नभूषणभूषितम् ॥ ११७ ॥
एवंतेजस्विनंभक्ताःसेवन्तेसन्ततंमुदा ॥ ध्यायन्तियोगिनोयत्तत्कुतस्तेजस्विनंविना ॥ ११८ ॥ तत्तेजोविभ्रतांदेवदेवानांतेजसा
पुरा ॥ आविर्भूतासुराणाञ्चवधायब्रह्मणास्तुता ॥ ११९ ॥ नित्यातेजस्स्वरूपाहंधृत्वावैविग्रहंविभो ॥ स्त्रीरूपंकमनीयञ्चविधायसमु
पस्थिता ॥ १२० ॥ माययातवमायाहंमोहयित्वासुरान्पुरा ॥ निहत्यसर्वाञ्छैलेन्द्रमगमंतंहिमालयम् ॥ १२१ ॥ ततोऽहंसंस्तुतादेवै
स्तारकाक्षेणपीडितैः ॥ अभवंदक्षजायायांशिवस्त्रीभवजन्मनि ॥ १२२ ॥ त्यक्त्वादेहंदक्षयज्ञेशिवाहंशिवनिन्दया ॥ अभवंशैलजाया
यांशैलाधीशस्यकर्मणा ॥ १२३ ॥ अनेकतपसाप्रान्तःशिवश्चात्रापिजन्मनि ॥ पाणिंजग्राहमेयोगीप्रार्थितोब्रह्मणाविभुः ॥ १२४ ॥
शृङ्गारजश्चतत्तेजोनालभंदेवमायया ॥ स्तौमित्वामेवतेनेशपुत्रदुःखेनदुःखिता ॥ १२५ ॥ व्रतेभवद्विधंपुत्रंलब्धुमिच्छामिसाम्प्रतम् ॥
देवेनविहितावेदसाङ्गेस्वस्वामिदक्षिणा ॥ १२६ ॥ श्रुत्वासर्वंकृपासिन्धोकृपांमेकर्तुमर्हसि ॥ इत्युक्त्वापार्वतीतत्रविररामचनारद ॥
॥ १२७ ॥ भारतेपार्वतीस्तोत्रंयःशृणोतिसुसंयतः ॥ सत्पुत्रंलभतेनूनंविष्णुतुल्यपराक्रमम् ॥ १२८ ॥ संवत्सरंहविष्याशीहरिमभ्य
र्च्यभक्तितः ॥ सुपुण्यकव्रतफलंलभतेनात्रसंशयः ॥ १२९ ॥ विष्णुस्तोत्रमिदंब्रह्मन्सर्वसम्पत्तिवर्द्धनम् ॥ सुखदंमोक्षदंसारंस्वामिसौभा
ग्यवर्द्धनम् ॥ १३० ॥ सर्वसौन्दर्य्यबीजञ्चयशोराशिविवर्द्धनम् ॥ हरिभक्तिप्रदंतत्त्वज्ञानबुद्धिसुखप्रदम् ॥ १३१ ॥ इति श्रीब्रह्मवैव
र्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेपुण्यकव्रतेपतिदानेपार्वतीकृतंश्रीकृष्णस्तोत्रकथनंनामसप्तमोऽध्यायः ॥ ७ ॥
॥ ॥ नारायणउवाच ॥ ॥ पार्वत्याःस्तवनंश्रुत्वाश्रीकृष्णःकरुणानिधिः ॥ स्वरूपंदर्शयामाससर्वादृश्यंसुदुर्लभम् ॥ १ ॥
स्तुत्वादेवीव्रतपराकृष्णसंलग्नमानसा ॥ ददर्शतेजसांमध्येस्वरूपंसर्वमोहनम् ॥ २ ॥ सद्रत्नसाररचितेहीरकेणपरिष्कृते ॥ युक्ते
माणिक्यमालाभीरत्नपूर्णेमनोरमे ॥ ३ ॥ पीतांशुकंवह्निशुद्धंवरंवंशकरंपरम् ॥ वनमालागलंश्यामंरत्नभूषणभूषितम् ॥ ४ ॥

किशोरवयसंचित्रवेषंवेचन्दनाङ्कितम् ॥ चारुस्मितास्यमीडयंतच्छारदेन्दुविनिन्दकम् ॥ ५ ॥ मालतीमाल्यसंयुक्तंकेकिपिच्छा
वचूडकम् ॥ गोपाङ्गनापरिवृतंराधावक्षस्थलोज्ज्वलम् ॥ ६ ॥ कोटिकन्दर्पलावण्यलीलाधाममनोहरम् ॥ अतीवहृष्टंसर्वैष्टंभक्ता
नुग्रहकारकम् ॥ ७ ॥ दृष्ट्वारूपंरूपवतीपुत्रंतदनुरूपकम् ॥ मनसावरयामासवरंसंप्राप्यतत्क्षणम् ॥ ८ ॥ वरंदत्त्वावरेशस्तुयत्र
न्मनसिवाञ्छितम् ॥ दत्त्वाभीष्टंसुरेभ्यश्चतत्तेजोऽन्तरधीयत ॥ ९ ॥ कुमारंबोधयित्वातुदेवदेव्यैदिगम्बरम् ॥ ददुर्निरुपमंतत्रप्र
हृष्टायैकृपान्विताः ॥ १० ॥ ब्राह्मणेभ्योददौदुर्गारत्नानिविविधानिच ॥ सुवर्णानिचभिक्षुभ्योवन्दिभ्योविश्वनन्दिता ॥
॥ ११ ॥ ब्राह्मणान्भोजयामासदेवान्वैपर्वतांस्तथा ॥ शङ्करंपूजयामासचोपहारैरनुत्तमैः ॥ १२ ॥ दुन्दुभिंवादयामासकारया
मासमङ्गलम् ॥ सङ्कीर्तिंगापयामासहरिसम्बन्धिसुन्दरम् ॥ १३ ॥ व्रतंसमाप्यसादुर्गादत्त्वादानानिसस्मिता ॥ सर्वांश्चभोज
यित्वातुबुभुजेस्वामिनासह ॥ १४ ॥ ताम्बूलञ्चवरंरम्यंकर्पूरादिसुवासितम् ॥ क्रमात्प्रदायसर्वेभ्योबुभुजेतेनकौतुकात् ॥ १५ ॥
पयःफेननिभांशय्यांरम्यांसद्रत्नमञ्चके ॥ पुष्पचंदनसंयुक्तांकस्तूरीकुङ्कुमान्विताम् ॥ रहसिस्वामिनासार्द्धंसुष्वापपरमेश्वरी ॥
॥ १६ ॥ कैलासस्यैकदेशेचरम्येचन्दनकानने ॥ सुगन्धिकुसुमाढ्येनवायुनासुरभीकृते ॥ १७ ॥ भ्रमरध्वनिसंयुक्तेपुंस्कोकिल
रुताश्रये ॥ व्यहार्षीत्सासुरसिकातत्रतेनसहाम्बिका ॥ १८ ॥ रेतःपतनकालेचसविष्णुर्विष्णुमायया ॥ विधायविप्ररूपन्तदाजगामर
तेर्गृहम् ॥ १९ ॥ जटावन्तंविनातैलंकुचैलंभिक्षुकंमुने ॥ अतीवशुक्लदशनंतृष्णयापरिपीडितम् ॥ २० ॥ अतीवकृशगात्रञ्चबिभ्रत्तिल
कमुज्ज्वलम् ॥ बहुकाकुस्वरंदीनंदैन्यात्कुत्सितमूर्तिमत् ॥ २१ ॥ आजुहावमहादेवमतिवृद्धोऽन्नयाचकः ॥ दण्डावलम्बनंकृत्वारति
द्वारेऽतिदुर्बलः ॥ २२ ॥ .॥ ब्राह्मणउवाच ॥ ॥ किङ्करोषिमहादेवरक्षमांशरणागतम् ॥ सप्तरात्रिव्रतेऽतीतेपारणाकांक्षिणंक्षुधा ॥
॥ २३ ॥ किङ्करोषिमहादेवहेतातकरुणानिधे ॥ पश्यवृद्धंजराग्रस्तंतृषयापरिपीडितम् ॥ २४ ॥ मातरुत्तिष्ठमेऽन्नंत्वंप्रयच्छाद्यशिवं
जलम् ॥ अनन्तरत्नोद्भवजेरक्षमांशरणागतम् ॥ २५ ॥ मातर्मातर्जगन्मातरेहिनाहंस्थितोबहिः ॥ सीदामितृषयाकस्मात्स्थितायामा

त्ममातरि ॥ २६ ॥ इतिकाकुस्वरंश्रुत्वाशिवस्योत्तिष्ठतोमुने ॥ पपातवीर्य्यंशय्यायांनयोनौप्रकृतेस्तदा ॥ २७ ॥ उत्तस्थौपार्वतीत्र
स्तासूक्ष्मवस्त्रंपिधायच ॥ आजगामबहिर्द्वारंपार्वत्यासहशङ्करः ॥ २८ ॥ ददर्शब्राह्मणंदीनंजरयापरिपीडितम् ॥ वृद्धंलुलितगात्रञ्चवि
भ्रतंदण्डमाननम् ॥ २९ ॥ तपस्विनमशान्तञ्चशुष्ककण्ठौष्ठतालुकम् ॥ कुर्वन्तंपरयाभक्त्याप्रणामंस्तवनंतयोः ॥ ३० ॥ श्रुत्वातद्व
चनंतत्रनीलकण्ठःसुधोपमम् ॥ उवाचपरयाप्रीत्याप्रसन्नस्तंप्रहस्यच ॥ ३१ ॥ ॥ शङ्करउवाच ॥ गृहंतेकुत्रविप्रर्षेवदवेदविदांवर ॥
किन्नामभवतः क्षिप्रंज्ञातुमिच्छामिसाम्प्रतम् ॥ ३२ ॥ पार्वत्युवाच ॥ ॥ आगतोसिकुतोविप्रममभाग्यादुपस्थितः ॥ अद्यमेस
फलंजन्मब्राह्मणोमद्गृहेऽतिथिः ॥ ३३ ॥ अतिथिःपूजितोयेनत्रिजगत्तेनपूजितम् ॥ तत्रैवाधिष्ठितादेवाब्राह्मणागुरवोद्विज ॥ ३४ ॥
तीर्थान्यतिथिपादेषुशश्वत्तिष्ठन्तिनिश्चितम् ॥ तत्पादधौततोयेनमिश्रितानिलभेद्गृही ॥ ३५ ॥ सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः ॥
अतिथिःपूजितोयेनस्वात्मशक्त्यायथोचितम् ॥ ३६ ॥ महादानानिसर्वाणिकृतानितेनभूतले ॥ अतिथिःपूजितोयेनभारतेभक्ति
पूर्वकम् ॥ ३७ ॥ नानाप्रकारपुण्यानिवेदोक्तानिचयानिवै ॥ अन्येचातिथिसेवायाःकलांनार्हन्तिषोडशीम् ॥ ३८ ॥ अपूजितोऽ
तिथिर्यस्यभवनाद्विनिवर्त्तते ॥ पितृदेवाग्नयःपश्चाद्गुरवोयान्त्यपूजिताः ॥ ३९ ॥ यानिकानिचपापानिब्रह्महत्यादिकानिच ॥
तानिसर्वाणिलभतेनाभ्यर्च्यातिथिमीप्सितम् ॥ ४० ॥ ॥ ब्राह्मणउवाच ॥ ॥ जानासिवेदान्वेदज्ञेवेदोक्तंकुरुपूजनम् ॥ क्षुत्तृड्
भ्यांपीडितोमातर्वचनञ्चश्रुतोश्रुतम् ॥ ४१ ॥ व्याधियुक्तोनिराहारोयदावाऽनशनव्रती ॥ मनोरथेनोपहारंभोक्तुमिच्छतिमानवः ॥
॥ ४२ ॥ ॥ पार्वत्युवाच ॥ ॥ भोक्तुमिच्छसिकिंविप्रत्रैलोक्येचसुदुर्लभम् ॥ दास्यामिभोक्तुंत्वामद्यमज्जन्मसफलंकुरु ॥
॥ ४३ ॥ ॥ ब्राह्मणउवाच ॥ व्रतंसुव्रतयासर्वमुपहारंसमाहृतम् ॥ नानाविधंमिष्टमिष्टंभोक्तुंश्रुत्वासमागतः ॥ ४४ ॥ सुव्रतेत
वपुत्रोऽहमग्रेमांपूजयिष्यसि ॥ दत्त्वामिष्टानिवस्तूनित्रैलोक्येदुर्लभानिच ॥ ४५ ॥ ताताःपञ्चविधाःप्रोक्तामातरोविविधाःस्मृताः ॥ 
पुत्रःपञ्चविधःसाध्विकथितोवेदवादिभिः ॥ ४६ ॥ विद्यादातान्नदाताचभयत्राताचजन्मदः ॥ कन्यादाताचवेदोक्तानराणांपितरः

स्मृताः ॥ ४७ ॥ गुरुपत्नीगर्भधात्रीस्तनदात्रीपितुःस्वसा ॥ स्वसामातुःसपत्नीचपुत्रभार्य्यान्नदायिका ॥ ४८ ॥ भृत्यःशिष्यश्चपोष्यश्च
वीर्य्यजःशरणागतः ॥ धर्मपुत्राश्चचत्वारोवीर्य्यजोधनभागिति ॥ ४९ ॥ क्षुत्तृड्भ्यांपीडितोमातर्वृद्धोऽहंशरणागतः ॥ साम्प्रतंतव
वन्ध्यायाअनाथःपुत्रएवच ॥ ५० ॥ पिष्टकंपरमान्नञ्चसुपक्वानिफलानिच ॥ नानाविधानिपिष्टानिकालदेशोद्भवानिच ॥ ५१ ॥
पक्वान्नंस्वस्तिकंक्षीरमिक्षुमिक्षुविकारजम् ॥ घृतंदधिचशाल्यन्नंघृतपक्वञ्चव्यञ्जनम् ॥ ५२ ॥ लड्डुकानितिलानाञ्चमृष्टान्नैः सगु
डानिच ॥ ममाज्ञातानिवस्तूनिसुधयातुल्यकानिच ॥ ५३ ॥ ताम्बूलञ्चवरंरम्यंकर्पूरादिसुवासितम् ॥ जलंसुनिर्म्मलंस्वादुद्रव्या
ण्येतानिवासितम् ॥ ५४ ॥ द्रव्याणियानिभुक्तामेचारुलम्बोदरंभवेत् ॥ अनन्तरत्नोद्भवजेनानिमञ्चंप्रदास्यसि ॥ ५५ ॥
स्वामीतेत्रिजगत्कर्त्ताप्रदातासर्वसम्पदाम् ॥ महालक्ष्मीस्वरूपात्वंसर्वैश्वर्य्यप्रदायिनी ॥ ५६ ॥ रत्नसिंहासनंरम्यममूल्यंरत्न
भूषणम् ॥ वह्निशुद्धांशुकंचारुप्रदास्यसिसुदुर्लभम् ॥ ५७ ॥ सुदुर्लभंहरेर्मन्त्रंहरौभक्तिंदृढांसति ॥ हरिप्रियाहरेःशक्तिस्त्वमे
वसर्वदास्थिरा ॥ ५८ ॥ ज्ञानंमृत्युञ्जयंनामदातृशक्तिंसुखप्रदाम् ॥ सर्वसिद्धिञ्चकिंमातर्देयंस्वसुतायच ॥ ५९ ॥ मनःसुनि
र्मलंकृत्वाधर्मेतपसिसन्ततम् ॥ ॥ श्रेष्ठसर्वंकरिष्यामिनकामेजन्महेतुके ॥ ६० ॥ स्वकामात्कुरुतेकर्मकर्मणोभोगएवच ॥ भोगौ
शुभाशुभौज्ञेयौनॄहेतुसुखदुःखयोः ॥ ६१ ॥ दुःखंनकस्माद्भवतिसुखंवाजगदम्बिके ॥ सर्वस्वकर्मणोभोगस्तेनतद्विरतोबुधः ॥ ६२ ॥
कर्मनिर्मूलयन्त्येवसन्तोहिसततंमुदा ॥ हरिभावनबुद्ध्यानत्तपसाभक्तमञ्जनः ॥ ६३ ॥ इन्द्रियद्रव्यसंयोगसुखंविध्वंसनावधि ॥
हरिसंलापरूपञ्चसुखंनत्सर्वकालिकम् ॥ ६४ ॥ हरिस्मरणशीलानांनायुर्यातिसतांसति ॥ नतेषामीश्वरःकालोनचमृत्युञ्जयोध्रुवम् ॥
॥ ६५ ॥ चिरंजीवन्तितेभक्ताभारतेचिरजीविनः ॥ सर्वसिद्धिंचविज्ञायस्वच्छन्दंसर्वगामिनः ॥ ६६ ॥ जातिस्मराह
रेर्भक्ताजानतेकोटिजन्मनः ॥ कथयन्तिकथांजन्मलभन्तेस्वेच्छयामुदा ॥ ६७ ॥ परंपुनन्तितेपूतास्तीर्थानिस्वीयलीलया ॥
पुण्यक्षेत्रेऽत्रसेवायैपरार्थंचभ्रमन्तिते ॥ ६८ ॥ वैष्णवानांपदस्पर्शात्सद्यःपूतावसुन्धरा ॥ कालंगोदोहमात्रंतुतीर्थंयत्रवसन्तिते ॥ ६९ ॥

गुरोरास्याद्विष्णुमन्त्रः श्रुतौयस्यप्रविश्यति ॥ तंवैष्णवंतीर्थपूतंप्रवदन्तिपुराविदः ॥ ७० ॥ पुरुषाणांशतंपूर्वमुद्धरंतिशतंपरम् ॥ लील
याभारतेभक्तयासोदरान्मातरंतथा ॥ ७१ ॥ मातामहानांपुरुषान्दशपूर्वान्दशापरान् ॥ मातुःप्रसूमुद्धरन्तिदारुणाद्यमताडनात् ॥
॥ ७२ ॥ भक्तदर्शनमाश्लेषंमानवाःप्राप्नुवन्तिये ॥ तेयाताःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षिताः ॥ ७३ ॥ नलिप्ताःपातकैर्भक्तासन्ततंहरिमा
नसाः ॥ यथाग्नयःसर्वभक्ष्यायथाद्रव्येषुवायवः ॥ ७४ ॥ त्रिकोटिजन्मनामन्तेप्राप्नोतिजन्ममानवम् ॥ प्राप्नोतिभक्तसंगंसमानुपेको
टिजन्मतः ॥ ७५ ॥ भक्तसंगाद्भवेद्भक्तेरंकुरोर्जीवितःसति ॥ अभक्तदर्शनादेवसचप्राप्नोतिशुष्कताम् ॥ ७६ ॥ पुनःप्रफुल्लतांयाति
वैष्णवालापमात्रतः ॥ अंकुरश्चाविनाशीचवर्द्धतेप्रतिजन्मनि ॥ ७७ ॥ तत्तरोर्वर्द्धमानस्यहरिदास्यंफलंसति ॥ परिणामेभक्तिपाके
पार्षदश्चभवेद्धरेः ॥ ७८ ॥ महतिप्रलयेनाशोनभवेत्तस्यनिश्चितम् ॥ सर्वसृष्टेश्चसंहारेब्रह्मलोकस्यवेधसः ॥ ७९ ॥ तस्मान्नारायणे
भक्तिंदेहिमामम्बिकेसदा ॥ नभवेद्विष्णुभक्तिश्चविष्णुमायेत्वयाविना ॥ ८० ॥ तद्रन्तंलोकशिक्षार्थंस्वतपस्तवपूजनम् ॥ सर्वेषांफल
दात्रीत्वंनित्यरूपासनातनी ॥ ८१ ॥ गणेशरूपःश्रीकृष्णःकल्पेकल्पेतवात्मजः ॥ त्वत्क्रोडमागतःक्षिप्रमित्युक्त्वान्तरधीयत ॥ ८२ ॥
कृत्वान्तर्धानमीशश्चबालरूपंविधायसः ॥ जगामपार्वतीतल्पंमन्दिराभ्यन्तरस्थितम् ॥ ८३ ॥ तल्पस्थेशिववीर्य्येचमिश्रितःसब
भूवह ॥ ददर्शगेहशिखरंप्रसूतेबालकेयथा ॥ ८४ ॥ शुद्धचम्पकवर्णाभःकोटिचन्द्रसमप्रभः ॥ सुखदृश्यःसर्वजनैश्चक्षूरश्मिविवर्द्धकः॥
॥ ८५ ॥ अतीवसुन्दरतनुःकामदेवविमोहनः ॥ मुखंनिरुपमंबिभ्रच्छारदेन्दुविनिन्दकम् ॥ ८६ ॥ सुन्दरेलोचनेबिभ्रच्चारुपद्मवि
निन्दके ॥ ओष्ठाधरपुटंबिभ्रत्पक्वबिम्बविनिन्दकम् ॥ ८७ ॥ कपालंचकपोलंचपरमंसुमनोहरम् ॥ नासाग्रंरुचिरंबिभ्रद्खगेन्द्रचंचु
विनिन्दकम् ॥ ८८ ॥ त्रैलोक्येवैनिरुपमंसर्वांगंबिभ्रदुत्तमम् ॥ शयानःशयनेरम्येप्रेरयन्हस्तपादकम् ॥ ८९ ॥ इति श्रीब्रह्मवैवर्त्ते
महापुराणेतृतीयेगणेशखण्डेनारदनारायणसंवादेगणेशोत्पत्तिवर्णनंनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ नारायणउवाच ॥ ॥
हरौतिरोहितेशर्वाणीदुर्गाशङ्करस्तदा ॥ ब्राह्मणान्वेषणंकृत्वाबभ्रामपरितोमुने ॥ १ ॥ ॥ पार्वत्युवाच ॥ ॥ अयेविप्रेन्द्राति

वृद्धक्कगतोऽसिक्षुधातुरः ॥ हेतातदर्शनंदेहिप्राणान्वैरक्षमेविभो ॥ २ ॥ शिवशीघ्रंसमुत्तिष्ठब्राह्मणान्वेपणंकुरु ॥ क्षणमुन्मनसोरे
पगतःप्रत्यक्षमावयोः ॥ ३ ॥ अगृहीत्वागृहात्पूजांगृहिणोऽतिथिरीश्वर ॥ यदियातिक्षुधार्त्तश्चतस्यकिंजीवनंवृथा ॥ ४ ॥
पितरस्तन्नगृह्णंतिपिण्डदानञ्चतर्पणम् ॥ तस्याहुतिंनगृह्णातिवह्निःपुष्पंजलंसुराः ॥ ५ ॥ हव्यंपुष्पंजलंद्रव्यमशुचेश्चसुरासमम् ॥
अमेध्यसदृशःपिण्डःस्पर्शनंपुण्यनाशनम् ॥ ६ ॥ एतस्मिन्नन्तरेतत्रवाग्बभूवाशरीरिणी ॥ कैवल्ययुक्तासादुर्गांतांशुश्रावशुचातुरा ॥
॥ ७ ॥ शान्ताभवजगन्मातस्स्वसुतंपश्यमन्दिरे ॥ कृष्णंगोलोकनाथंतंपरिपूर्णतमंपरम् ॥ ८ ॥ सुपुण्यकव्रततरोःफलरूपं
सनातनम् ॥ यत्तेजोयोगिनःशश्वद्ध्यायन्तिसन्ततंमुदा ॥ ९ ॥ ध्यायन्तिवैष्णवादेवाब्रह्मविष्णुशिवादयः ॥ यस्यपूज्यस्य
सर्वाग्रेकल्पेकल्पेचपूजनम् ॥ १० ॥ यस्यस्मरणमात्रेणसर्वविघ्नोविनश्यति ॥ पुण्यराशिस्वरूपश्चस्वसुतंपश्यमन्दिरे ॥ ११ ॥
कल्पेकल्पेध्यायसियंज्योतीरूपंसनातनम् ॥ पश्यत्वंमुक्तिदंपुत्रंभक्तानुग्रहविग्रहम् ॥ १२ ॥ तववाञ्छापूर्णबीजंतपःकल्पतरोः
फलम् ॥ सुन्दरंस्वसुतंपश्यकोटिकन्दर्पनिन्दकम् ॥ १३ ॥ नायंविप्रःक्षुधार्त्तश्चविप्ररूपीजनार्दनः ॥ किंवाविलापंकुरुषेक्क
वावृद्धःक्कचातिथिः ॥ सरस्वतीत्त्येवमुक्त्वाविरराम चनारद ॥ १४ ॥ त्रस्ताश्रुत्वाकाशवाणींजगामस्वालयंसती ॥ ददर्शबालंपर्य्यं
केशयानंसस्मितंमुदा ॥ १५ ॥ पश्यन्तंगेहशिखरंशतचन्द्रसमप्रभम् ॥ स्वप्रभापटलेनैवद्योतयन्तंमहीतलम् ॥ १६ ॥
कुर्वन्तंभ्रमणंतल्पेपश्यन्तंस्वेच्छयामुदा ॥ उमेतिशब्दंकुर्वन्तंरुदन्तंतंस्तनार्थिनम् ॥ १७ ॥ दृष्ट्वातदद्भुतंरूपंत्रस्ताशङ्करसन्निधिम् ॥
गत्वासोवाचगिरिशंसर्वमङ्गलमङ्गला ॥ १८ ॥ ॥ पार्वत्युवाच ॥ ॥ गृहमागच्छसर्वेशतपसांफलदायकम् ॥ कल्पेकल्पेध्यायसियंतं
पश्यागत्यमन्दिरम् ॥ १९ ॥ शीघ्रंपुत्रमुखंपश्यपुण्यबीजंमहोत्सवम् ॥ पुन्नामनरकत्राणंकारणंभवतारणम् ॥ २० ॥ स्नानञ्चस
र्वतीर्थेषुसर्वयज्ञेषुदीक्षणम् ॥ पुत्रसंदर्शनस्यास्यकलांनार्हतिषोडशीम् ॥ २१ ॥ सर्वदानेनयत्पुण्यंक्ष्माप्रदक्षिणतश्चयत् ॥ पुत्रदर्शन
पुण्यस्यकलांनार्हतिषोडशीम् ॥ २२ ॥ सर्वैस्तपोभिर्यत्पुण्यंयदेवानशनैर्व्रतैः ॥ सत्पुत्रोद्भवपुण्यस्यकलांनार्हतिषोडशीम् ॥ २३ ॥

यद्विप्रभोजनैः पुण्यंयद्देवसुरसेवनैः ॥ सत्पुत्रप्राप्तिपुण्यस्यकलांनार्हतिषोडशीम् ॥ २४ ॥ पार्वत्यावचनंश्रुत्वाशिवःसंहृष्टमानसः ॥
आजगामस्वभवनंक्षिप्रंवैकान्तयासह ॥ ददर्शतल्पेस्वसुतंतप्तकाञ्चनसन्निभम् ॥ २५ ॥ हृदयस्थश्चयद्रूपंतदेवातिमनोहरम् ॥ दुर्गा
तल्पात्समादायकृत्वावक्षसितंसुतम् ॥ चुचुम्बानन्दजलधौनिमग्नासेत्युवाचतम् ॥ २६ ॥ संप्राप्यामूल्यरत्नंत्वांपूर्णमेवसनातनम् ॥
यथामनोदरिद्रस्यसहसाप्राप्यसद्धनम् ॥ २७ ॥ कान्तेसुचिरमायातेप्रोषितेयोषितोयथा ॥ मानसंपरिपूर्णञ्चबभूवचतथामम ॥ २८ ॥
सुचिरंगतमायान्तमेकपुत्रायथासुतम् ॥ दृष्ट्वातुष्टायथावत्सतथाहमपिसाम्प्रतम् ॥ २९ ॥ सद्रत्नंसुचिरंभ्रष्टंप्राप्यहृष्टोयथाजनः ॥
अनावृष्टौसुवृष्टिश्चसंप्राप्याहंतथासुतम् ॥ ३० ॥ यथासुचिरमन्धानांस्थितानाञ्चनिराश्रये ॥ चक्षुस्सुनिर्म्मलंप्राप्यमनःपूर्णंतथैवमे ॥
॥ ३१ ॥ दुस्तरेसागरेघोरेपतितस्यचसंकटे ॥ अनौकस्यप्राप्यनौकांमनःपूर्णंतथामम ॥ ३२ ॥ तृष्णयाशुष्ककण्ठानांसुचिराच्च
सुशीतलम् ॥ सुवासितंजलंप्राप्यमनःपूर्णंतथामम ॥ ३३ ॥ दावाग्निपतितानाञ्चस्थितानांचनिराश्रये ॥ निरग्निमाश्रयंप्राप्यमनःपूर्णं
तथामम ॥ ३४ ॥ चिरंबुभुक्षितानाञ्चव्रतोपोषणकारिणाम् ॥ ३५ ॥ सदन्नंपुरतोदृष्ट्वामनःपूर्णंतथामम ॥ इत्युक्त्वापार्वतीतत्र
क्रोडेकृत्वास्वबालकम् ॥ ३६ ॥ प्रीत्यास्तनंददौतस्मैपरमानन्दमानसा ॥ क्रोडेचकारभगवान्बालकंहृष्टमानसः ॥ ३७ ॥
चुचुंबगंडेवदोकंयुयुजेचाशिषंमुदा ॥ ३८ ॥ इति श्रीब्रह्मवैवर्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेबालगणेशदर्शनंनाम
नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ नारायणउवाच ॥ ॥ तौदम्पतीबहिर्गत्वापुत्रमङ्गलहेतवे ॥ विविधानिचरत्नानिद्विजे
भ्योददतुर्मुदा ॥ १ ॥ बन्दिभ्योभिक्षुकेभ्यश्चदानानिविविधानिच ॥ नानाविधानिवाद्यानिवादयामासशङ्करः ॥ २ ॥ हिमालयश्च
रत्नानांददौलक्षंद्विजातये ॥ सहस्रंचगजेन्द्राणामश्वानांचत्रिलक्षकम् ॥ ३ ॥ दशलक्षंगवांचैवपञ्चलक्षंसुवर्णकम् ॥ मुक्तामाणिक्यर
त्नानिमणिश्रेष्ठानियानिच ॥ ४ ॥ अन्यान्यपिचदानानिवस्त्राण्याभरणानिच ॥ सर्वाण्यमूल्यरत्नानिक्षीरोदोत्पत्तिकानिच ॥
॥ ५ ॥ ब्राह्मणेभ्योददौविष्णुःकौस्तुभंकौतुकान्वितः ॥ ब्रह्माविशिष्टदानानिविप्राणांवाञ्छितानिच ॥ सुदुर्लभानिसृष्टौचब्राह्मणेभ्योद

दौमुदा ॥ ६ ॥ धर्मः सूर्य्यश्च शक्रश्च देवाश्च मुनयस्तथा ॥ गन्धर्वाः पर्वता देव्यो ददुर्दानं क्रमेण च ॥ ७ ॥ माणिक्यानां सहस्राणि रत्नानां
च शतानि च ॥ शतानि कौस्तुभानां च हीरकाणां शतानि च ॥ ८ ॥ हरिद्रर्णमणीन्द्राणां सहस्राणि मुदान्विताः ॥ ९ ॥ गवां रत्नानि ल
क्षाणि गजरत्नसहस्रकम् ॥ अमूल्यान्यन्यरत्नानि श्वेतवर्णानि कौतुकात् ॥ १० ॥ शतलक्षं सुवर्णानां वह्निशुद्धांशुकानि च ॥ ब्राह्मणे
भ्यो ददौ ब्रह्मा तत्र क्षीरोदधिर्मुदा ॥ ११ ॥ हारञ्चामूल्यरत्नानां त्रिषु लोकेषु दुर्लभम् ॥ अतीव निर्मलं सारं सूर्य्यभानुविनिन्दकम् ॥
॥ १२ ॥ परिष्कृतश्च माणिक्यैर्हीरकैश्च विराजितम् ॥ रम्यं कौस्तुभमध्यस्थं ददौ देवी सरस्वती ॥ १३ ॥ त्रैलोक्यसारं हारञ्च सद्रत्नगण
निर्मितम् ॥ भूषणानि च सर्वाणि सा सावित्री ददौ मुदा ॥ १४ ॥ लक्षं सुवर्णलोष्टानां धनानि विविधानि च ॥ शतान्यमूल्यरत्नानां कुवेरश्च
ददौ मुदा ॥ १५ ॥ दानानि दत्त्वा विप्रेभ्यस्ते सर्वे ददृशुः शिशुम् ॥ परमानन्दसंयुक्ताः शिवपुत्रोत्सवे मुने ॥ १६ ॥ भारं वोढुमशक्ताश्च त्रा
ह्मणा वन्दिनस्तथा ॥ स्थायं स्थायञ्च गच्छन्तो धनानि पथिकातराः ॥ १७ ॥ कथयन्ति कथाः सर्वे विश्रान्ताः पूर्वदायिनाम् ॥ वृद्धाः शृ
ण्वन्ति मुदिता युवानो भिक्षुका मुने ॥ १८ ॥ विष्णुः प्रमुदितस्तत्र वादयामास दुन्दुभिम् ॥ सङ्गीतं पाययामास कारयामास नर्तनम् ॥
वेदांश्च पाठयामास पुराणानि च नारद ॥ १९ ॥ मुनीन्द्रानानयामास पूजयामास तान्मुदा ॥ आशिषं दापयामास कारयामास मङ्गलम् ॥
सार्द्धं देवैश्च देवीभिर्ददौ तस्मै शुभाशिषः ॥ २० ॥ ॥ विष्णुरुवाच ॥ ॥ शिवेन तुल्यं ज्ञानन्ते परमायुश्च बालक ॥ पराक्रमे मया तुल्यः
सर्वसिद्धीश्वरो भव ॥ २१ ॥ ॥ ब्रह्मोवाच ॥ ॥ यशसा ते जगत्पूर्णं सर्वपूज्यो भवाचिरम् ॥ सर्वेषां पुरतः पूजा भवत्वति सुदुर्लभा ॥
॥ २२ ॥ ॥ धर्म्म उवाच ॥ ॥ मया तुल्यः सुधर्मिष्ठो भवान्भवतु दुर्लभः ॥ सर्वज्ञश्च दयायुक्तो हरिभक्तो हरेः समः ॥ २३ ॥ महादे
व उवाच ॥ ॥ दाता भव मया तुल्यो हरिभक्तश्च बुद्धिमान् ॥ विद्यावान्पुण्यवाञ्छान्तो दान्तश्च प्राणवल्लभ ॥ २४ ॥ ॥ लक्ष्मीरु
वाच ॥ ॥ मम स्थितिश्च गेहे ते देहे भवतु शाश्वती ॥ पतिव्रता मया तुल्या शान्ता कान्ता मनोहरा ॥ २५ ॥ ॥ सरस्वत्युवाच ॥ ॥

१ अश्वरत्नानीति पाठः ।

मयातुल्यासुकविताधारणाशक्तिरेवच ॥ स्मृतिर्विवेचनाशक्तिर्भवत्वतितरांसुत ॥ २६ ॥ ॥ सावित्र्युवाच ॥ ॥ वत्साहंवेदजन
नीवेदज्ञानीभवाचिरम् ॥ मन्मन्त्रजपशीलश्चप्रवरोवेदवादिनाम् ॥ २७ ॥ ॥ हिमालयउवाच ॥ ॥ श्रीकृष्णेतिमतिःशश्वद्भक्ति
र्भवतुशाश्वती ॥ श्रीकृष्णतुल्योगुणवान्भवकृष्णपरायणः ॥ २८ ॥ ॥ मेनकोवाच ॥ ॥ समुद्रतुल्योगाम्भीर्य्येकामतुल्यश्चरूप
वान् ॥ श्रीयुक्तःश्रीपतिसमोधर्म्मेधर्मसमोभव ॥ २९ ॥ ॥ वसुन्धरोवाच ॥ ॥ क्षमाशीलोमयातुल्यःशरण्यःसर्वरत्नवान् ॥
निर्विघ्नोविघ्ननिघ्नश्चभववत्सशुभाश्रयः ॥ ३० ॥ ॥ पार्वत्युवाच ॥ ॥ ताततुल्यमहायोगीसिद्धसिद्धिप्रदःशुभः ॥ मृत्युञ्जयश्च
भगवान्भवत्वतिविशारदः ॥ ३१ ॥ ऋषयोमुनयःसिद्धासर्वेयुयुजुराशिषः ॥ ब्राह्मणावन्दिनश्चैवयुयुजुःसर्वमङ्गलम् ॥ ३२ ॥ सर्वं
तेकथितंवत्ससर्वमङ्गलमङ्गलम् ॥ गणेशजन्मकथनंसर्वविघ्नविनाशनम् ॥ ३३ ॥ इमंसुमङ्गलाध्यायंयःशृणोतिसुखंयतः ॥ सर्वमङ्गल
संयुक्तःसभवेन्मङ्गलालयः ॥ ३४ ॥ अपुत्रोलभतेपुत्रमधनोलभतेधनम् ॥ कृपणोलभतेसत्त्वंशश्वत्सम्पत्प्रदायिच ॥ ३५ ॥
भार्य्यार्थीलभतेभार्य्यांप्रजार्थीलभतेप्रजाम् ॥ आरोग्यंलभतेरोगीसौभाग्यंदुर्भगालभेत् ॥ ३६ ॥ भ्रष्टपुत्रंनष्टधनंप्रोषितश्चप्रियंल
भेत् ॥ शोकाविष्टःसदानन्दंलभतेनात्रसंशयः ॥ ३७ ॥ यत्पुण्यंलभतेमर्त्योगणेशाख्यानकश्रुतौ ॥ तत्फलंलभतेनूनमध्यायश्रवणा
न्मुने ॥ ३८ ॥ अयश्चमङ्गलाध्यायोयस्यगेहेचतिष्ठति ॥ सदामङ्गलसंयुक्तःसभवेन्नात्रसंशयः ॥ ३९ ॥ यात्राकालेचपुण्या
हेयःशृणोतिसमाहितः ॥ सर्वाभीष्टंसलभतेश्रीगणेशप्रसादतः ॥ ४० ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयगणेशखण्डेनारदनाराय
णसंवादेगणेशोद्भवमंगलंनामदशमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ ॥ नारायणउवाच ॥ ॥ हरिस्तमाशिषंकृत्वारत्नसिं
हासनेवरे ॥ देवैश्चमुनिभिःसार्द्धमवसत्तत्रसंसदि ॥ १ ॥ दक्षिणेशंकरस्तस्यवामेब्रह्माप्रजापतिः ॥ पुरतोजगतांसाक्षीधर्मोधर्मवतां
वरः ॥ २ ॥ तथाधर्मसमीपेचसूर्य्यःशक्रःकलानिधिः ॥ देवाश्चमुनयोब्रह्मन्नृषुःशैलाःसुखासने ॥ ३ ॥ ननर्त्तनर्त्तकश्रेणीजगुर्गन्धर्व
किन्नराः ॥ श्रुतिसारंश्रुतिसुखंतुष्टुवुःश्रुत योहरिम् ॥ ४ ॥ एतस्मिन्नन्तरेतत्रद्रष्टुंशङ्करनन्दनम् ॥ आजगाममहायोगीसूर्य्यपुत्रः

शनैश्वरः ॥ ५ ॥ अत्यन्तनम्रवदनईषन्मुदितलोचनः ॥ अन्तर्बहिःस्मरन्कृष्णंकृष्णैकगतमानसः ॥ ६ ॥ तपःफलाशीते
जस्वीज्वलदग्निशिखोपमः ॥ अतीवसुन्दरःश्यामःपीताम्बरधरोवरः ॥ ७ ॥ प्रणम्यविष्णुंब्रह्माणंशिवंधर्मंरविंसुरान् ॥ मुनीन्द्रा
न्बालकंद्रष्टुंजगामतदनुज्ञया ॥ ८ ॥ प्रधानद्वारमासाद्यशिवतुल्यपराक्रमम् ॥ द्वास्थंत्रैशूलहस्तञ्चविशालाक्षमुवाचह ॥ ९ ॥
॥ ॥ शनैश्वरउवाच ॥ ॥ शिवाज्ञयाशिशुंद्रष्टुंयामिशंकरकिंकर ॥ विष्णुप्रमुखदेवानांमुनीनामनुरोधतः ॥ १० ॥ आज्ञां
देहिचमांगन्तुंपार्वतीसन्निधिंबुध ॥ पुनर्यामिशिशुंदृष्ट्वाविपर्यासक्तमानसः ॥ ११ ॥ ॥ विशालाक्षउवाच ॥ ॥ आज्ञावहोन
देवानांनाहंशंकरकिंकरः ॥ मार्गंदातुंनशक्तोऽहंविनामन्मातुराज्ञया ॥ १२ ॥ इत्युक्त्वाभ्यन्तरंभ्येत्यप्रेरितःसशिवाज्ञया ॥ ददौ
मार्गंग्रहेशायविशालाक्षोमुदाततः ॥ १३ ॥ शनिरभ्यन्तरंगत्वाचानमन्नम्रकन्धरः ॥ रत्नसिंहासनस्थाञ्चपार्वतींसस्मितांमुदा ॥
॥ १४ ॥ सखिभिःपञ्चभिःशश्वत्सेवितांश्वेतचामरैः ॥ सखिदत्तञ्चताम्बूलमुपभुज्यसुवासितम् ॥ १५ ॥ वह्निशुद्धांशुकाधानां
रत्नभूषणभूषिताम् ॥ पश्यन्तींनर्त्तकीनृत्यंपुत्रंधृत्वाचवक्षसि ॥ १६ ॥ नतंसूर्य्यसुतंदृष्ट्वादुर्गासंभाष्यसत्वरम् ॥ शुभाशिषंददौ
तस्मैपप्रच्छतन्मङ्गलंशुभम् ॥ १७ ॥ ॥ पार्वत्युवाच ॥ ॥ कथमानम्रवक्त्रस्त्वंश्रोतुमिच्छामिसाम्प्रतम् ॥ किंनपश्यसिमांसाधोवा
लकंवाग्रहेश्वर ॥ १८ ॥ ॥ शनिरुवाच ॥ ॥ सर्वेस्वकर्मणासाध्विभुञ्जतेतपसःफलम् ॥ शुभाशुभञ्चयत्कर्मकोटिकल्पेनं
लुप्यते ॥ १९ ॥ कर्मणाजायतेजन्तुर्ब्रह्मेन्द्राय्यमन्दिरे ॥ कर्मणानरगेहेषुपश्वादिषुचकर्मणा ॥ २० ॥ कर्मणानरकंयातिवैकुण्ठंया
तिकर्मणा ॥ स्वकर्म्मणाचराजेन्द्रोभृत्यश्चापिस्वकर्मणा ॥ २१ ॥ कर्मणासुन्दरःशश्वद्व्याधियुक्तःस्वकर्मणा ॥ कर्मणाविषयीमा
तर्निर्लिप्तश्चस्वकर्मणा ॥ २२ ॥ कर्मणाधनवाँल्लोकोदैन्ययुक्तःस्वकर्मणा ॥ कर्मणासत्कुटुम्बीचकर्मणाबन्धुकण्टकः ॥ २३ ॥
सुभार्य्यश्चसुपुत्रश्चसुखीशश्वत्स्वकर्मणा ॥ अपुत्रकश्चकुस्त्रीकोनिस्त्रीकश्चस्वकर्मणा ॥ २४ ॥ इतिहासञ्चातिगोप्यंशृणुशङ्करव
ल्लभे ॥ अकथ्यंजननीपार्श्वेलज्जाजनककारणम् ॥ २५ ॥ आबाल्यात्कृष्णभक्तोऽहंकृष्णध्यानैकमानसः ॥ तपस्यासुरतश्शश्वद्विषये

पिरतःसदा ॥ २६ ॥ पितादद्दौविवाहेतुकन्याञ्चित्ररथस्यच ॥ अतितेजस्विनीशश्वत्तपस्यासुरतासती ॥ २७ ॥ एकदासात्वृतुस्नातासुवेषंस्वविधायच ॥ रत्नालङ्कारसंयुक्तामुनिमानसमोहिनी ॥ २८ ॥ हरेःपादंध्यायमानंपश्यन्तीमदमोहिता ॥ मत्समीपंसमागत्यसस्मितालोललोचना ॥ २९ ॥ शशापमामपश्यन्तमृतुनाशाच्चकोपतः ॥ बाह्यज्ञानविहीनञ्चध्यानसंलग्नमानसम् ॥ ३० ॥ नदृष्टाहंत्वयायेननकृतञ्चृतुरक्षणम् ॥ त्वयादृष्टंचयद्वस्तुमूढसर्वंविनश्यति ॥ ३१ ॥ अहंचविरतोध्यानात्तोषयंस्तांतदासतीम् ॥ शापंमोक्तुंनशक्तासापश्चात्तापमवापह ॥ ३२ ॥ तेनमातर्नपश्यामिकिञ्चिद्वस्तुस्वचक्षुषा ॥ ततःप्रकृतिनम्रास्यःप्राणिहिंसाभयादहम् ॥ ॥ ३३ ॥ शनैश्वरवचःश्रुत्वाचाहसत्पार्वतीमुने ॥ उच्चैःप्रजहसुःसर्वानर्त्तकीकिन्नरीगणाः ॥ ३४ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेशनिपार्वतीसंवादेशनेरधोदृष्टौकारणकथनंनामैकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ ॥ ॥ नारायणउवाच ॥ ॥ दुर्गातद्वचनंश्रुत्वासस्माग्रहरिमीश्वरम् ॥ ईश्वरेच्छावशीभूतंजगदेवेत्युवाचह ॥ १ ॥ साचदेवीदैववशाशनिंप्रोवाचकौतुकात् ॥ पश्यमांमच्छिशुमितिनिषेकःकेनवार्य्यते ॥ २ ॥ पार्वत्यावचनंश्रुत्वाशनिर्मेनेहृदास्वयम् ॥ पश्यामिकिंनपश्यामिपार्वतीसुतमित्यहो ॥ यदिबालोमयादृष्टस्तस्यविघ्नोभवेद्ध्रुवम् ॥ ३ ॥ अन्यथासुप्रशस्तंचपुरतःस्वात्मरक्षणम् ॥ इत्येवमुक्त्वाधर्मिष्ठोधर्मंकृत्वातुसाक्षिणम् ॥ बालंद्रष्टुंमनश्चक्रेनतुतन्मातरंशनिः ॥ ४ ॥ विषण्णमानसःपूर्वंशुष्ककण्ठौष्ठतालुकः ॥ सव्यलोचनकोणेनददर्शचशिशोर्मुखम् ॥ ५ ॥ शनेश्चदृष्टिमात्रेणचिच्छेदेमस्तकंमुने ॥ चक्षुर्निमीलयामासतस्थौनम्राननःशनिः ॥ ॥ ६ ॥ तस्थौचपार्वतीक्रोडेतत्सर्वांगंसलोहितम् ॥ विवेशमस्तकंकृष्णेगत्वागोलोकमीप्सितम् ॥ ७ ॥ मूर्च्छांसंप्रापसादेवीविलप्यचभृशंमुहुः ॥ मत्तेवंचपृथिव्यान्तुकृत्वावक्षसिबालकम् ॥ ८ ॥ विस्मितास्तेसुराःसर्वेचित्रपुत्तलिकायथा ॥ देव्यश्चशैलागन्धर्वाःसर्वेकैलासवासिनः ॥ ९ ॥ तान्सर्वान्मूर्च्छितान्दृष्ट्वारुह्यगरुडंहरिः ॥ जगामपुष्पभद्रांसचोत्तरस्यांदिशिस्थिताम् ॥ १० ॥

१ मृतेवेतिपाठः ।

पुष्पभद्रानदीतीरेह्यपश्यत्काननेस्थितम् ॥ गजेन्द्रंनिद्रितंतत्रशयानंहस्तिनीयुतम् ॥ ११ ॥ तथोदक्छिरसंरम्यंमूर्च्छितंसुरतश्रमात् ॥
परितःशावकान्कृत्वापरमानन्दमानसम ॥ १२ ॥ शीघ्रंसुदर्शनेनैवचिच्छेदतच्छिरोमुदा ॥ स्थापयामासगरुडेरुधिराक्तंमनोहरम् ॥
॥ १३ ॥ गजच्छिन्नाङ्गविक्षेपात्प्रबोधंप्राप्यहस्तिनी ॥ शावकान्बोधयामासचाशुभंवदतीतदा ॥ रुरोदशावकैःसार्द्धंसाविलप्यशुचा
तुरा ॥ १४ ॥ तुष्टावकमलाकान्तंशान्तंसस्मितमीश्वरम् ॥ शंखचक्रगदापद्मधरंपीताम्बरंपरम् ॥ गरुडस्थंजगत्कान्तंभ्रामयन्तंसुद
र्शनम् ॥ १५ ॥ निषेकंखण्डितुंशक्तंनिषेकजनकंविभुम् ॥ निषेकभोगदातारंभोगनिस्तारकारणम् ॥ १६ ॥ प्रभुस्तत्स्तवनात्तुष्टस्त
स्यैविप्रवरंददौ ॥ मुण्डात्तुण्डंपृथक्कृत्ययुयुजेऽन्यगजस्यच ॥ १७ ॥ जीवयामासतंतत्रब्रह्मज्ञानेनसर्ववित् ॥ सर्वाङ्गेयोजयामासगजस्य
चरणाम्बुजम ॥ १८ ॥ त्वंजीवाकल्पपर्यन्तंपरिवारैःसमंगज ॥ इत्युक्त्वाचमनोयायीकैलासंह्याजगामसः ॥ १९ ॥ आहृत्यपार्वतीह
स्ताद्बालंकृत्वास्ववक्षसि ॥ रुचिरंतच्छिरस्सम्यग्योजयामासबालके ॥ २० ॥ ब्रह्मस्वरूपोभगवान्ब्रह्मज्ञानेनलीलया ॥ जीवयामा
सतंशीघ्रंहुङ्कारोच्चारणेनच ॥ २१ ॥ पार्वतींबोधयित्वातुकृत्वाक्रोडेचतंशिशुम् ॥ बोधयामासतांकृष्णआध्यात्मिकविबोधनैः ॥ २२ ॥
॥ विष्णुरुवाच ॥ ॥ ब्रह्मादिकीटपर्यन्तंफलंभुंक्तेस्वकर्मणः ॥ जगद्बुद्धिस्वरूपासित्वंनजानासिकिंशिवे ॥ २३ ॥ कल्पकोटिश
तभोगीजीविनांतत्स्वकर्मणा ॥ उपस्थितोभवेन्नित्यंप्रतियोनौशुभाशुभैः ॥ २४ ॥ इन्द्रःस्वकर्मणाकीटयोनौजन्मलभेत्सति ॥ कीटश्चा
पिभवेदिन्द्रःपूर्वकर्मफलेनवै ॥ २५ ॥ सिंहोऽपिमक्षिकांहन्तुमक्षमःप्राक्तनंविना ॥ मशकोहस्तिनंहन्तुंक्षमःस्वप्राक्तनेनच ॥ २६ ॥ सुखं
दुःखंभयंशोकमानन्दंकर्मणःफलम्॥ सुकर्मणःसुखंहर्षमितरेपापकर्मणः॥२७॥इहैवकर्मणोभोगःपरत्रचशुभाशुभैः॥कर्मोपार्जनयोग्यश्च
पुण्यक्षेत्रञ्चभारतम् ॥२८॥ कर्मणःफलदाताचविधाताचविधेरपि ॥ मृत्योर्मृत्युःकालकालोनिषेकस्यनिषेककृत् ॥२९॥ संहर्तुरपिसंहर्त्ता
पातुःपातापरात्परः ॥ गोलोकनाथःश्रीकृष्णःपरिपूर्णतमःस्वयम् ॥ ३० ॥ वयंयस्यकलाःपुंसोब्रह्मविष्णुमहेश्वराः ॥ महाविराड्यदंशश्च
यल्लोमविवरेजगत् ॥ ३१ ॥ कलांशांशाःकेऽपितद्धर्मेकलांशांशाश्चकेचन ॥ चराचरंजगत्सर्वंतत्रतस्थौविनायकः ॥ ३२ ॥ श्रीविष्णोर्वच

नंश्रुत्वापरितुष्टाचपार्वती ॥ स्तनंददौचशिशवेतंप्रणम्यगदाधरम् ॥ ३३ ॥ तुष्टावपार्वतीतुष्टाप्रेरिताशङ्करेणच ॥ कृताञ्जलिपुटाभक्त्या
विष्णुंतंकमलापतिम् ॥ ३४ ॥ आशिषंयुयुजेविष्णुःशिशुश्चशिशुमातरम् ॥ ददौगलेबालकस्यकौस्तुभञ्चस्वभूषणम् ॥ ३५॥ ब्रह्मादर्दौ
स्वमुकुटंधर्मोरत्नभूषणम् ॥ क्रमेणदेव्योरत्नानिददुःसर्वेयथोचितम् ॥ ३६ ॥ तुष्टावतंमहादेवश्चात्यंतंहृष्टमानसः ॥ देवाश्चमुनयः
शैलागन्धर्वाःसर्वयोषितः ॥ ३७ ॥ दृष्ट्वाशिवःशिवाचैवबालकंमृतजीवितम् ॥ ब्राह्मणेभ्योददौतत्रकोटिरत्नानिनारद ॥ ३८ ॥
अश्वानाञ्चगजानाञ्चसहस्राणिशतानिच ॥ बन्दिभ्यःप्रददौतत्रबालकेमृतजीविते ॥ ३९ ॥ हिमालयश्चसंहृष्टोहृष्टादेवाश्चतत्रवै ॥
ददुर्दानानिविप्रेभ्योवन्दिभ्यःसर्वयोषितः ॥ ४० ॥ ब्राह्मणान्भोजयामासकारयामासमङ्गलम् ॥ वेदांश्चपाठयामासपुराणानिरमा
पतिः ॥ ४१ ॥ शनिंसंलज्जितंदृष्ट्वापार्वतीकोपशालिनी ॥ शशापचसभामध्येऽप्यङ्गहीनोभवेतिच ॥ ४२ ॥ दृष्ट्वाशप्तंशनिंसूर्य्यः
कश्यपश्चयमस्तथा ॥ तेऽतिरुष्टाःसमुत्तस्थुर्गामुकाःशङ्करालयात् ॥ ४३ ॥ रक्ताक्षास्तेरक्तमुखाःकोपप्रस्फुरिताधराः ॥ तांधर्मसाक्षिणं
कृत्वाविष्णुंसंशप्तुमुद्यताः ॥ ४४ ॥ ब्रह्मातान्बोधयामासविष्णुनाप्रेरितःसुरैः ॥ रक्तास्यांपार्वतीञ्चैवकोपप्रस्फुरिताधराम् ॥ ४५ ॥
ब्रह्माणमूचुस्तेतत्रक्रमेणसमयोचितम् ॥ भीरवोदेवताःसर्वेमुनयःपर्वतास्तथा ॥ ४६ ॥ ॥ कश्यपउवाच ॥ ॥ दुर्दृष्टोऽयंप्राक्त
नेनपत्नीशापेनसर्वदा ॥ बालंददर्शयत्नेनतस्यवैमातुराज्ञया ॥ ४७ ॥ ॥ श्रीसूर्य्यउवाच ॥ ॥ तंधर्मसाक्षिणंकृत्वासूनोर्वैमातुरा
ज्ञया ॥ यत्पुत्रोऽतिप्रयत्नेनह्यपश्यत्पार्वतीसुतम् ॥ ४८ ॥ यथानिरपराधेनमत्पुत्रंसाशशाप ह ॥ तत्पुत्रस्याङ्गभङ्गश्चभविष्यतिनसं
शयः ॥ ४९ ॥ ॥ यमउवाच ॥ ॥ प्रदायस्वयमाज्ञाञ्चशशापेयंस्वयंकथम् ॥ त्वयंशपामःकोऽधर्मोजिवांसोश्चविहिंसने ॥ ५० ॥
॥ ॥ ब्रह्मोवाच ॥ ॥ शशापपार्वतीरुष्टास्त्रीस्वभावाच्चचापलात् ॥ सर्वेषांवचनेनैवक्षन्तुमर्हन्तुसाधवः ॥ ५१ ॥ दुर्गेदत्त्वात्वमाज्ञांच
पुत्रदर्शनहेतवे ॥ कथंशपसिनिर्दोषमतिथिंत्वद्गृहागतम् ॥ ५२ ॥ इत्युक्त्वाशनिमादायबोधयित्वाचपार्वतीम् ॥ तांतंसमर्पणंचक्रेशाप
मोचनहेतवे ॥ ५३ ॥ बभूवपार्वतीतुष्टाब्रह्मणोवचनान्मुने ॥ शान्ताःबभूवुस्तेतत्रदिनेशयमकश्यपाः ॥ ५४ ॥ उवाचपार्वतीतत्रसन्तु

ष्टातंशनैश्चरम् ॥ प्रसादिताशिवेनैवब्रह्मणापरिसेविता ॥ ५५ ॥ ॥ पार्वत्युवाच ॥ ॥ ग्रहराजोभवशनेमद्वरेणहरिप्रियः ॥ चिर
जीवीचयोगीन्द्रोहरिभक्तस्यकाविपत् ॥ ५६ ॥ अद्यप्रभृतिनिर्विघ्नाहरौभक्तिर्दृढास्तुते ॥ शापोऽमोघस्ततोमेद्यकिञ्चित्खञ्जोभविष्य
सि ॥ ५७ ॥ इत्युक्त्वापार्वतीतुष्टाबालंधृत्वाचवक्षसि ॥ उवासयोषितांमध्येतस्मैदत्त्वाशुभाशिषः ॥ ५८ ॥ शनिर्जगामदेवानांसमीपं
हृष्टमानसः ॥ प्रणम्यभक्त्यातांब्रह्मन्नम्बिकांजगदम्बिकाम् ॥ ५९ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायण
संवादेशनिकृतगणेशदर्शनतज्जातगणेशशिरःपतनविष्णुकृतगणेशशिरोयोजनशनिशापादिकथनंनामद्वादशोऽध्यायः ॥ १२ ॥
॥ ॥ नारायणउवाच ॥ ॥ अथविष्णुःशुभेकालेदेवैश्चमुनिभिःसह ॥ पूजयामासतंबालमुपहारैरनुत्तमैः ॥ १ ॥ सर्वाग्रे
तवपूजाचमयादत्तासुरोत्तम ॥ सर्वपूज्यश्चयोगीन्द्रोभवत्सेत्युवाचतम् ॥ २ ॥ वनमालांददौतस्मैब्रह्मज्ञानञ्चमुक्तिदम् ॥ सर्व
सिद्धिंप्रदायैवचकारात्मसमंहरिः ॥ ३ ॥ ददौद्रव्याणिचाह्रणिचोपचारांश्चषोडश ॥ नामभिःस्तवनंचक्रेमुनिभिश्चसमंसुरैः ॥
॥ ४ ॥ विघ्नेशश्चगणेशश्चहेरम्बश्चगजाननः ॥ लम्बोदरश्चैकदन्तःशूर्पकर्णोविनायकः ॥ ५ ॥ एतान्यष्टौचनामानिसर्वसि
द्धिप्रदानिच ॥ आशिषंदापयामासचानयामासतान्मुनीन् ॥ ६ ॥ सिद्धासनंददौधर्मस्तस्मैब्रह्माकमण्डलुम् ॥ शङ्करोयोग
पट्टञ्चतत्त्वज्ञानंसुदुर्लभम् ॥ ७ ॥ रत्नसिंहासनंशक्रःसूर्य्यश्चमणिकुण्डले ॥ माणिक्यमालांचन्द्रश्चकुबेरश्चकिरीटकम् ॥ ८ ॥ वह्निशु
द्धञ्चवसनंददौतस्मैहुताशनः ॥ रत्नच्छत्रञ्चवरुणोवायूरत्नाङ्गुलीयकम् ॥ ९ ॥ क्षीरोदोद्भवसद्रत्नरचितंवलयंवरम् ॥ मञ्जीरञ्चापिकेयूरं
ददौपद्मालयामुने ॥ १० ॥ कण्ठभूषाञ्चसावित्रीभारतीहारमुज्ज्वलम् ॥ क्रमेणसर्वदेवाश्चदेव्यश्चयौतकंददुः ॥ ११ ॥ मुनयःपर्वताश्चैव
रत्ननिविविधानिच ॥ वसुन्धराददौतस्मैवाहनायचमूषकम् ॥ १२ ॥ क्रमेणदेवादेव्यश्चमुनयःपर्वतादयः ॥ गन्धर्वाःकिन्नरायक्षाम
नवोमानवास्तथा ॥ १३ ॥ नानाविधानिद्रव्याणिस्वादूनिमधुराणिच ॥ पूजाञ्चक्रुश्चतेसर्वेक्रमाद्वैभक्तिपूर्वकम् ॥ १४ ॥

१ भूषणंददुःइतिपाठः ।

पार्वतीजगतांमातास्मेराननसरोरुहा ॥ रत्नसिंहासनेपुत्रंवासयामासनारद ॥ १५ ॥ सर्वतीर्थोदकैरत्नकलशावर्जितैस्तुतैः ॥
स्नापयामासवेदोक्तमन्त्रेणमुनिभिस्तदा ॥ अग्निशुद्धेचवसनेददौतस्मैसतीमुदा ॥ १६ ॥ गोदावर्युदकैःपाद्यमर्घ्यंगङ्गोदके
नच ॥ दूर्वाभिरक्षतापुष्पैश्चंदनेनसमन्वितम् ॥ १७ ॥ पुष्करोदकमानीयपुनराचमनीयकम् ॥ मधुपर्कंरत्नपात्रैरासवंशर्करा
न्वितम् ॥ १८ ॥ स्नानीयंविष्णुतैलंचस्वर्वैद्याभ्यांविनिर्मितम् ॥ अमूल्यरत्नरचितचारुभूषाकदम्बकम् ॥ १९ ॥ पारिजातप्रसूना
नामन्येषांशतकानिच ॥ मालतीचंपकादीनांपुष्पाणिविविधानिच ॥ पूजार्हाणिचपत्राणितुलसीसहितानिच ॥ २० ॥ चन्दना
गुरुकस्तूरीकुङ्कुमानिचसादरम् ॥ रत्नप्रदीपनिकरंधूपश्चपरितोददौ ॥ २१ ॥ नैवेद्यंचप्रियश्चैवतिललड्डुकपर्वतान् ॥ यवगोधूमचूर्णानां
लड्डुकानांचपर्वतान् ॥ २२ ॥ पक्वान्नानांपर्वतांश्चसुस्वादुसुमनोहरान् ॥ पर्वतान्स्वस्तिकानांचसुस्वादुशर्करान्वितान् ॥ २३ ॥
गुडाक्तानांचलाजानांपृथुकानांचपर्वतान् ॥ शाल्यन्नानांपिष्टकानांपर्वतान्व्यञ्जनैःसह ॥ पयोभृत्कलशानांचलक्षाणिप्रददौमुदा ॥
॥ २४ ॥ लक्षाणिदधिपूर्णानांकलशानांचपूजने ॥ मधुभृत्कलशानांचत्रिलक्षाणिचसुन्दरी ॥ २५ ॥ सर्पिस्सुवर्णकुम्भानांपंचलक्षा
णिसादरम् ॥ दाडिमानांश्रीफलानामसंख्यानिफलानिच ॥ २६ ॥ खर्जूराणांकपित्थानांजम्बूनांविविधानिच ॥ आम्राणांपनसानां
चकदलीनांचनारद ॥ फलानिनारिकेलानामसंख्यानिददौमुदा ॥ २७ ॥ अन्यानिपरिपक्वानिकालदेशोद्भवानिच ॥ ददौतानिमहा
भागस्वादूनिमधुराणिच ॥ २८ ॥ स्वच्छंसुनिर्मलंचैवकर्पूरादिसुवासितम् ॥ गङ्गाजलंचपानार्थंपुनराचमनीयकम् ॥ २९ ॥ ताम्बूलं
चवरंरम्यंकर्पूरादिसुवासितम् ॥ सुवर्णपात्रशतकंभक्ष्यपूर्णंचनारद ॥ ३० ॥ शैलेश्वरीशैलराजःशैलजःशैलराजजः ॥ शैलराजप्रिया
मात्याःपुपूजुःशैलजातमजम् ॥ ३१ ॥ ॐ-श्रींह्रींक्लींगणेश्वरायब्रह्मरूपायचारवे ॥ सर्वसिद्धिप्रदेशायविघ्नेशायनमोनमः ॥ ३२ ॥
इत्यनेनैवमन्त्रेणदत्त्वाद्रव्याणिभक्तितः ॥ सर्वेप्रमुदितास्तत्रब्रह्मविष्णुशिवादयः ॥३३॥ द्वात्रिंशदक्षरोमालामन्त्रोऽयंसर्वकामदः ॥ धर्मा
र्थकाममोक्षाणांफलदःसर्वसिद्धिदः ॥३४॥ पंचलक्षजपेनैवमन्त्रसिद्धिस्तुमन्त्रिणः ॥ मन्त्रसिद्धिर्भवेद्यस्यसचविष्णुश्चभारते ॥ ३५ ॥

महावाग्मीमहासिद्धिःसर्वसिद्धिसमन्वितः ॥ ३६ ॥ वाक्पातगुरुतायाततस्य
विघ्नानिचपलायन्तेतन्नामस्मरणेनच ॥ महावाग्मीमहासिद्धिःसर्वसिद्धिसमन्वितः ॥ नानाविधानिवाद्यानि
साक्षात्सुनिश्चितम् ॥ महाकवीन्द्रोगुणवान्विदुषांचगुरोर्गुरुः ॥ ३७ ॥ संपूज्यानेनमन्त्रेणदेवाआनन्दसंयुताः ॥ नानाविधानिवाद्यानि
सकलात्सुनिश्चितम् ॥ महाकवीन्द्रोगुणवान्विदुषांचगुरोर्गुरुः ॥ दददुर्दानानितेभ्यश्चवन्दिभ्यश्चविशेषतः ॥ ३९ ॥ ॥
वादयामासुरुत्सवे ॥ ३८ ॥ ब्राह्मणान्भोजयामासुः कारयामासुरुत्सवम् ॥ ददुर्दानानितेभ्यश्चवन्दिभ्यश्चविशेषतः ॥ ३९ ॥ ॥
॥ नारायणउवाच ॥ ॥ अथविष्णुःसभामध्येतंसम्पूज्यगणेश्वरम् ॥ तुष्टावपरयाभक्त्यासर्वविघ्नविनाशकम् ॥ ४० ॥ ईशत्वांस्तो
तुमिच्छामिब्रह्मज्योतिःसनातनम् ॥ नैववर्णयितुंशक्तोस्म्यनुरूपमनीहकम् ॥ ४१ ॥ प्रवरंसर्वदेवानांसिद्धानांयोगिनांगुरुम् ॥ सर्वस्व
रूपंसर्वेशंज्ञानराशिस्वरूपिणम् ॥ ४२ ॥ अव्यक्तमक्षरंनित्यंसत्यमात्मस्वरूपिणम् ॥ वायुतुल्यंचनिर्लिप्तंचाक्षतंसर्वसाक्षिणम् ॥
॥ ४३ ॥ संसारार्णवपारेचमायापोतंसुदुर्लभे ॥ कर्णधारस्वरूपञ्चभक्तानुग्रहकारकम् ॥ ४४ ॥ वरंवरेण्यंवरदंवरदानामपीश्वरम् ॥
सिद्धंसिद्धिस्वरूपञ्चसिद्धिदंसिद्धिसाधनम् ॥ ४५ ॥ ध्यानातिरिक्तंध्येयंचध्यानासाध्यञ्चधार्मिकम् ॥ धर्मस्वरूपंधर्मज्ञंधर्माधर्म
फलप्रदम् ॥ ४६ ॥ बीजंसंसारवृक्षाणामङ्कुरञ्चतदाश्रयम् ॥ स्त्रीपुंनपुंसकानाञ्चरूपमेतदतीन्द्रियम् ॥ ४७ ॥ सर्वाद्यमग्रपूज्यंचसर्व
पूज्यंगुणार्णवम् ॥ स्वेच्छयासगुणंब्रह्मनिर्गुणंस्वेच्छयापुनः ॥ ४८ ॥ स्वयंप्रकृतिरूपञ्चप्राकृतंप्रकृतेःपरम् ॥ त्वांस्तोतुमक्षमोऽनन्तः
सहस्रवदनैरपि ॥ ४९ ॥ नक्षमःपंचवक्त्रश्चनक्षमश्चतुराननः ॥ सरस्वतीनशक्ताचनशक्तोऽहंतवस्तुतौ ॥ नशक्ताश्चचतुर्वेदाःकेवातेवे
दवादिनः ॥ ५० ॥ इत्येवंस्तवनंकृत्वामुनीशसुरसंसदि ॥ सुरेशश्चसुरैःसार्द्धंविरराममरमापतिः ॥ ५१ ॥ इदंविष्णुकृतंस्तोत्रंगणेशस्य
चयःपठेत् ॥ सायंप्रातश्चमध्याह्नेभक्तियुक्तःसमाहितः ॥ ५२ ॥ तद्विघ्ननाशंकुरुतेविघ्नेशःसततंमुने ॥ वर्द्धतेसर्वकल्याणंकल्याणजनकः
सदा ॥ ५३ ॥ यात्राकालेपठित्वायोयातितद्भक्तिपूर्वकम् ॥ तस्यसर्वाभीष्टसिद्धिर्भवत्येवनसंशयः ॥ ५४ ॥ तेनदृष्टञ्चदुस्स्वप्नंसुस्वप्नमुप
जायते ॥ कदापिनभवेत्तस्यग्रहपीडाचदारुणा ॥ ५५ ॥ भवेद्विनाशःशत्रूणांबन्धूनाञ्चापिवर्द्धनम् ॥ शश्वद्विघ्नविनाशश्चशश्वत्सम्पद्वि
वर्द्धनम् ॥ ५६ ॥ स्थिराभवेद्गृहेलक्ष्मीःपुत्रपौत्रविवर्द्धनम् ॥ सर्वैश्वर्यमिहप्राप्यह्यन्तेविष्णुपदंलभेत ॥ ५७ ॥ फलञ्चापिचतीर्थानां

 यज्ञानांयद्ग्रहेद्ध्रुवम् । महतांसर्वदानानांतद्गणेशप्रसादतः ॥ ५८ ॥ ॥ नारदउवाच ॥ ॥ श्रुतंस्तोत्रंगणेशस्यपूजनञ्चमनोहरम् ॥ 
 कवचंश्रोतुमिच्छामिसाम्प्रतंभवतारणम् ॥ ५९ ॥ ॥ नारायणउवाच ॥ ॥ पूजायांसुनिवृत्तायांसभामध्येशनैश्वरः ॥ उवाच
विष्णुंसर्वेषांतारकंजगतांगुरुम् ॥ ६० ॥ ॥ शनैश्वरउवाच ॥ ॥ सर्वदुःखविनाशायपापप्रशमनायच ॥ कवचंविघ्ननिघ्नस्यवद 
वेदविदांवर ॥ ६१ ॥ बभूवनोविवादश्चशक्त्यावैमाययासह ॥ तद्विघ्नप्रशमार्थंचकवचंधारयाम्यहम् ॥ ६२ ॥ ॥ श्रीविष्णुरुवाच ॥
विनायकस्यकवचंत्रिषुलोकेषुदुर्लभम् ॥ सुगोप्यञ्चपुराणेषुदुर्लभंचागमेषुच ॥ ६३ ॥ उक्तंकौथुमशाखायांसामवेदेमनोहरम् ॥
कवचंविघ्ननाथस्यसर्वविघ्नहरंपरम् ॥ ६४ ॥ राज्यंदेयंशिरोदेयंप्राणादेयाश्चसूर्यज ॥ एवम्भूतञ्चकवचंनदेयंप्राणसङ्कटे ॥
॥ ६५ ॥ आविर्भावस्तिरोभावःस्वेच्छयायस्यमायया ॥ नित्योऽयमेकदन्तश्चकवचंचास्यवत्सक ॥ ६६ ॥ पूजास्यनित्यास्तोत्रंच
कल्पेकल्पेऽस्तिसन्ततम् ॥ अस्यैवजन्मनःपूर्वंमुनयश्चसिषेविरे ॥ ६७ ॥ यथामदवतारेषुजन्मविग्रहधारणम् ॥ तथागणेश्वरस्या
पिजन्मशैलसुतोदरे ॥ ६८ ॥ यद्धृत्वामुनयःसर्वेजीवन्मुक्ताश्चभारते ॥ निःशङ्काश्चसुराःसर्वेशत्रुपक्षविमर्दकाः ॥ ६९ ॥ कवचंवि
भ्रतांमृत्युर्नभियायातिसन्निधिम् ॥ नायुर्व्ययोनाशुभञ्चब्रह्माण्डेनपराजयः ॥ ७० ॥ दशलक्षजपेनैवसिद्धंतुकवचंभवेत् ॥ योभवे
त्सिद्धकवचोमृत्युंजेतुंसचक्षमः ॥ ७१ ॥ सुसिद्धकवचोवाग्मीचिरंजीवीमहीतले ॥ सर्वत्रविजयीपूज्योभवेद्ग्रहणमात्रतः ॥ ७२ ॥
मालामन्त्रमिमंपुण्यंकवचंमङ्गलंशुभम् ॥ बिभ्रतांसर्वपापानिप्रणश्यन्तिसुनिश्चितम् ॥ ७३ ॥ भूतप्रेतपिशाचाश्चकूष्माण्डाब्रह्म
राक्षसाः ॥ डाकिनीयोगिनीयक्षवेतालाभैरवादयः ॥ ७४ ॥ बालग्रहाग्रहाश्चैवक्षेत्रपालादयस्तथा ॥ वर्मणःशब्दमात्रेणपलायन्तेचभी
रवः ॥ ७५ ॥ आधयोव्याधयश्चैवशोकाश्चैवभयावहाः ॥ नयान्तिसन्निधिंतेषांगरुडस्ययथोरगाः ॥ ७६ ॥ ऋजवेगुरुभक्तायस्वशिष्या
यप्रकाशयेत् ॥ खलायपरशिष्यायदत्त्वामृत्युमवाप्नुयात् ॥ ७७ ॥ संसारमोहकस्यास्यकवचस्यप्रजापतिः ॥ ऋषिश्छन्दश्चबृह 
तीदेवोलम्बोदरःस्वयम् ॥ धर्मार्थकाममोक्षेषुविनियोगःप्रकीर्त्तितः ॥ ७८ ॥ सर्वेषांकवचानांचसारभूतमिदंमुने ॥ ॐगंहुंश्री

गणेशायस्वाहामेपातुमस्तकम् ॥ द्वात्रिंशदक्षरोमन्त्रोललाटंमेसदावतु ॥ ७९ ॥ ॐ ह्रींक्लींश्रींगमितिवैसततंपातुलोचनम् ॥ तालुकं
पातुविघ्नेशःसततंधरणीतले ॥ ८० ॥ ॐ ह्रींश्रींक्लींमितिपरंसन्ततंपातुनासिकाम् ॥ ओंगौंगंशूर्पकर्णायस्वाहापात्वधरंमम ॥ दन्तां
श्चतालुकांजिह्वांपातुमेषोडशाक्षरः ॥ ८१ ॥ ॐ लंश्रींलम्बोदरायेतिस्वाहागण्डंसदावतु ॥ ॐ क्लींह्रींविघ्ननाशायस्वाहाकर्णंसदावतु ॥
॥ ८२ ॥ ॐ–श्रींगंगजाननायेतिस्वाहास्कन्धंसदावतु ॥ ॐ ह्रींविनायकायेतिस्वाहापृष्ठंसदावतु ॥ ८३ ॥ ॐ क्लींह्रीमितिकङ्कालं
पातुवक्षःस्थलंपरम् ॥ करौपादौसदापातुसर्वांगंविघ्ननाशकृत् ॥ ८४ ॥ प्राच्यांलम्बोदरःपातुचाग्नेय्यांविघ्ननायकः ॥ दक्षिणेपातुविघ्नेे
शोनैर्ऋत्यांतुगजाननः ॥ ८५ ॥ पश्चिमेपार्वतीपुत्रोवायव्यांशंकरात्मजः ॥ कृष्णस्यांशश्चोत्तरेचपरिपूर्णतमस्यच ॥ ८६ ॥ ऐशान्या
मेकदन्तश्चहेरम्बःपातुचोर्द्ध्वतः ॥ अधोगणाधिपःपातुसर्वपूज्यश्चसर्वतः ॥ स्वप्नेजागरणेचैवपातुमांयोगिनांगुरुः ॥ ८७ ॥ इतिते
कथितंवत्ससर्वमन्त्रौघविग्रहम् ॥ संसारमोहनंनामकवचंपरमाद्भुतम् ॥ ८८ ॥ श्रीकृष्णेनपुरादत्तंगोलोकेरासमण्डले ॥ वृन्दावनेवि
नीतायमह्यंदिनकरात्मज ॥ ८९ ॥ मयादत्तश्चतुभ्यञ्चयस्मैकस्मैनदास्यसि ॥ परंवरंसर्वपूज्यंसर्वसंकटतारणम् ॥ ९० ॥ गुरुमभ्यर्च्य
विधिवत्कवचंधारयेत्तुयः ॥ कण्ठेवादक्षिणेबाहौसोऽपिविष्णुर्नसंशयः ॥ ९१ ॥ अश्वमेधसहस्राणिवाजपेयशतानिच ॥ ग्रहेन्द्रकवच
स्यास्यकलांनार्हन्तिषोडशीम् ॥ ९२ ॥ इदंकवचमज्ञात्वायोभजेच्छंकरात्मजम् ॥ शतलक्षप्रजप्तोऽपिनमन्त्रःसिद्धिदायकः ॥ ९३ ॥
इति श्रीब्रह्मवैवर्त्तेसंसारमोहनंनामकवचम् ॥ दत्त्वेदंसूर्य्यपुत्रायविरराममुरेश्वरः ॥ परमानन्दसंयुक्तादेवास्तस्थुःसमीपतः ॥ ९४ ॥
इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेगणेशपूजास्तवकवचकथनंनामत्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥
॥ ॥ नारायणउवाच ॥ ॥ देवास्तस्यांसभायांतेसर्वेसंहृष्टमानसाः ॥ गन्धर्वामुनयःशैलाःपश्यन्तःसुमहोत्सवम् ॥ १ ॥ एत
स्मिन्नन्तरेदुर्गास्मेराननसरोरुहा ॥ उवाचविष्णुंप्रणतादेवेशंतत्रसंसदि ॥ २ ॥ ॥ पार्वत्युवाच ॥ ॥ त्वंपातासर्वजगतांनाथनाहं
जगद्बहिः ॥ कथंमत्स्वामिनोवीर्य्यंममोत्वंरक्षितंप्रभो ॥ ३ ॥ रतिभङ्गेकृतेदेवैर्ब्रह्मणाप्रेरितैस्त्वया ॥ भूमौनिपतितंवीर्य्यंकेनदेवेन

र्निर्हृतम् ॥ ४ ॥ सर्वेदेवास्त्वत्पुरतस्तदन्विष्यन्तुसादरम् ॥ अराजकंकथमिदंतिष्ठतित्वयिराजनि ॥ ५ ॥ पार्वतीवचनंश्रुत्वा
प्रहस्यजगदीश्वरः ॥ उवाचदेववर्गेचमुनिवर्गेचतिष्ठति ॥ ६ ॥ ॥ श्रीविष्णुरुवाच ॥ ॥ देवाःशृणुतमद्वाक्यंपार्वतीवचनंश्रुतम् ॥
शिवस्यामोघवीर्य्यंयत्तत्पुराकेननिर्हृतम् ॥ ७ ॥ सभामानयतक्षिप्रंनचेद्दण्डमिहार्हथ ॥ सकोराजानशास्तायःप्रजाबाध्यश्च
पाक्षिकः ॥ ८ ॥ विष्णोस्तद्वचनंश्रुत्वासमालोच्यपरस्परम् ॥ ऊचुःसर्वेशिवावाक्यैस्त्रासिताःपुरतोहरेः ॥ ९ ॥ ॥ ब्रह्मोवाच ॥ ॥
तद्वीर्य्यंनिर्हृतंयेनपुण्यभूमौचभारते ॥ सवञ्चितोभवत्वत्रपुण्याहेपुण्यकर्मणि ॥ १० ॥ ॥ श्रीमहादेवउवाच ॥ ॥ मद्वीर्य्यंनिर्हृतंयेनपुण्य
भूमौचभारते ॥ सवञ्चितोभवत्वत्रसेवनेपूजनेतव ॥ ११ ॥ ॥ यमउवाच ॥ ॥ सवञ्चितोभवत्वत्रशरणागतरक्षणे ॥ एकादशीव्रतेचैवतद्वीर्य्यं
येननिर्हृतम् ॥ १२ ॥ ॥ इन्द्रउवाच ॥ ॥ तद्वीर्य्यंनिर्हृतंयेनपापिनांपापमोचने ॥ भवत्वत्रयशोलुप्तन्तत्पुण्यंकर्मसन्ततम् ॥ १३ ॥
॥ वरुणउवाच ॥ ॥ भवत्वत्रकलौजन्मवर्षेस्याद्भारतेहरे ॥ शूद्रयाजकपत्न्याश्चगर्भंतद्येननिर्हृतम् ॥ १४ ॥ ॥ कुबेरउवाच ॥ ॥
न्यासहारीसभवतुविश्वासघ्नश्चमित्रहा ॥ सत्यघ्नश्चकृतघ्नश्चतद्वीर्य्यंयेननिर्हृतम् ॥ १५ ॥ ॥ ईशानउवाच ॥ ॥ परद्रव्यापहारीच
सभवत्वत्रभारते ॥ नरघातीगुरुद्रोहीतद्वीर्य्यंयेननिर्हृतम् ॥ १६ ॥ ॥ रुद्राऊचुः ॥ ॥ तेमिथ्यावादिनःसन्तुभारतेपारदारिकाः ॥
गुरुनिन्दारताःशश्वत्तद्वीर्य्यंयैश्चनिर्हृतम् ॥ १७ ॥ ॥ कामदेवउवाच ॥ ॥ कृत्वाप्रतिज्ञांयोमूढोनसम्पालयतेभ्रमात् ॥ भाजनंत
स्यपापस्यसभवेद्येनतद्धृतम् ॥ १८ ॥ स्वर्वैद्यावूचतुः ॥ मातुःपितुर्गुरोश्चैवस्त्रीपुत्राणांचपोषणे ॥ भवेतांवञ्चितौतौचयाभ्यांवीर्य्यंचत
द्धृतम् ॥ १९ ॥ ॥ सर्वेदेवाऊचुः ॥ ॥ मिथ्यासाक्ष्यप्रदातारोभवन्त्वत्रचभारते ॥ अपुत्रिणोदरिद्राश्चयैश्चवीर्य्यंहितद्धृतम् ॥
॥ २० ॥ ॥ देवपत्न्यऊचुः ॥ ॥ तानिन्दंतुस्वभर्त्तारंगच्छन्तुपरपूरुषम् ॥ सन्तुबुद्धिविहीनाश्चयाभिर्वीर्य्यंहितद्धृतम् ॥ २१ ॥
देवानांवचनंश्रुत्वादेवीनांचहरिःस्वयम् ॥ कर्मणांसाक्षिणंधर्मंसूर्य्यंचन्द्रंहुताशनम् ॥ २२ ॥ पवनंपृथिवींतोयंसन्ध्येरात्रिंदिवंमुने ॥
उवाचजगतांकर्त्तापाताशास्ताजगत्त्रये ॥ २३ ॥ ॥ श्रीविष्णुरुवाच ॥ ॥ देवैर्ननिर्हृतंवीर्य्यंतदेतत्केननिर्हृतम् ॥ तदमोघंभ

गवतोमहेशस्यजगद्गुरोः ॥ २४ ॥ यूयंचसाक्षिणोविश्वेसततंसर्वकर्मणाम् ॥ युष्माभिर्निर्हृतंकिंवाकिम्भूतंवक्तुमर्हथ ॥ २५ ॥
ईश्वरस्यवचःश्रुत्वासभायांकम्पिताश्चते ॥ परस्परंसमालोच्यक्रमेणोचुःपुरोहरेः ॥ २६ ॥ ॥ श्रीधर्मउवाच ॥ ॥ रतेरुत्तिष्ठतो
वीर्य्यंपपातवसुधातले ॥ मयाज्ञातममोघंतच्छङ्करस्यप्रकोपतः ॥ २७ ॥ ॥ क्षितिरुवाच ॥ ॥ वीर्य्यंवोढुमशक्ताहंतद्वह्नौन्यक्षि
पंपुरा ॥ अनीवदुर्वहंब्रह्मन्नवलांक्षन्तुमर्हसि ॥ २८ ॥ ॥ अग्निरुवाच ॥ ॥ वीर्य्यंवोढुमशक्तोऽहंन्यक्षिपंशरकानने ॥ दुर्व
लस्यजगन्नाथकिंयशःकिंचपौरुषम् ॥ २९ ॥ ॥ वायुरुवाच ॥ ॥ शरेषुपतितंवीर्य्यंसद्योवालोवभूवह ॥ अतीवसुन्दरोविष्णो
स्वर्णरेखानदीतटे ॥ ३० ॥ ॥ श्रीसूर्य्यउवाच ॥ ॥ रुदन्तंवालकंदृष्ट्वागममस्ताचलंप्रति ॥ प्रेरितःकालचक्रेणनिशिसंस्थातुम
क्षमः ॥ ३१ ॥ ॥ चन्द्रउवाच ॥ ॥ रुदन्तंवालकंप्राप्यगृहीत्वाकृत्तिकागणः ॥ जगामस्वालयंविष्णोगच्छन्वदरिकाश्रमात ॥
॥ ३२ ॥ ॥ जलमुवाच ॥ ॥ अमुंरुदन्तमानीयस्तनंदत्त्वास्तनार्थिने ॥ वर्द्धयामासुरीशस्यतंताःसूर्य्याधिकप्रभम्[१] ॥ ३३ ॥
॥ ॥ सन्ध्येऊचतुः ॥ ॥ अधुनाकृत्तिकानांचषण्णांतत्पोष्यपुत्रकः ॥ तन्नामचक्रुस्ताःप्रेम्णाकार्त्तिकेयइतिस्वयम ॥ ३४ ॥
॥ ॥ रात्रिरुवाच ॥ ॥ नचक्रुर्वालकंताश्चलोचनानामगोचरम् ॥ प्राणेभ्योऽपिप्रेमपात्रंयःपोष्टातस्यपुत्रकः ॥ ३५ ॥ ॥ दिन
मुवाच ॥ यानियानिचवस्तूनित्रैलोक्येदुर्लभानिच ॥ प्रशंसितानिस्वादूनिभोजयामासुरेवतम् ॥ ३६ ॥ तेषांतद्वचनंश्रुत्वास
न्तुष्टोमधुसूदनः ॥ तेसर्वेहरिमित्यूचुःसभायांहृष्टमानसाः ॥ ३७ ॥ पुत्रस्यवार्त्तांसम्प्राप्यपार्वतीहृष्टमानसा ॥ कोटिरत्नानिवि
प्रेभ्योददौवहुधनानिच ॥ ददौसर्वाणिविप्रेभ्योवासांसिविविधानिच ॥ ३८ ॥ लक्ष्मीःसरस्वतीमेनासावित्रीसर्वयोषितः ॥ विष्णुश्च
सर्वदेवाश्चब्राह्मणेभ्योददुर्धनम् ॥ ३९ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणेशखण्डेनारदनारायणसंवादेकार्त्तिकेयजन्मकथनं
नामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ नारायणउवाच ॥ ॥ पुत्रस्यवार्त्तांसम्प्राप्यपार्वत्यासहशङ्करः ॥ प्रेरितो

१ सूर्य्यप्रभंप्रभोइतिपाठः ।

विष्णुनादेवैर्मुनिभिःपर्वतैर्मुने ॥ १ ॥ दूतान्प्रस्थापयामाससमहाबलपराक्रमान् ॥ वीरभद्रंविशालाक्षंशंकुकर्णकबन्धकम् ॥ २ ॥
नन्दीश्वरंमहाकालंवज्रदन्तंभगन्दरम् ॥ गोधामुखंदधिमुखंज्वलदग्निशिखोपमम् ॥ ३ ॥ लक्षञ्चक्षेत्रपालानांभूतानाञ्चत्रिलक्षकम् ॥
वेतालानांचतुर्लक्षंयक्षाणांपञ्चलक्षकम् ॥ ४ ॥ कुष्माण्डानाञ्चतुर्लक्षंत्रिलक्षंब्रह्मरक्षसाम् ॥ डाकिनीनाञ्चतुर्लक्षंयोगिनीनांत्रिलक्ष
कम् ॥ ५ ॥ रुद्रांश्चभैरवांश्चैवशिवतुल्यपराक्रमान् ॥ अन्यांश्चविकृताकारानसंख्यानपिनारद ॥ ६ ॥ तेसर्वेशिवदूताश्चनानाशस्त्रा
स्त्रपाणयः ॥ कृत्तिकानाञ्चभवनंवेष्टयामासुरुज्ज्वलम् ॥ ७ ॥ दृष्ट्वातान्कृत्तिकाःसर्वाभयविह्वलमानसाः ॥ कार्त्तिकेयंचजगदुर्ज्वलन्तं
ब्रह्मतेजसा ॥ ८ ॥ ॥ कृत्तिकाऊचुः ॥ ॥ वत्ससैन्यान्यसंख्यानिवेष्टयामासुरालयम् ॥ नजानीमोवयंकस्यकरालानिचबा
लक ॥ ९ ॥ ॥ कार्त्तिकेयउवाच ॥ ॥ भयंत्यजतकल्याण्योभयंकिंवोमयिस्थिते ॥ दुर्निवार्य्यःकर्मपाकोमातरःकेनवार्य्यते ॥
॥ १० ॥ एतस्मिन्नन्तरेतत्रसेनानीर्नन्दिकेश्वरः ॥ पुरतःकार्त्तिकेयस्यतिष्ठंस्तासामुवाचह ॥ ११ ॥ ॥ नन्दिकेश्वरउवाच ॥ ॥
भ्रातःप्रवृत्तिंशृणुमेमातुश्चापिशुभावहाम् ॥ प्रेषितस्यसुरेन्द्रस्यसंहर्तुःशङ्करस्यच ॥ १२ ॥ कैलासेसर्वदेवाश्चब्रह्मविष्णुशिवादयः ॥
सभायांतिवसन्तश्चगणेशोत्सवमङ्गलम् ॥ १३ ॥ शैलेन्द्रकन्यातंविष्णुंजगतांपरिपालकम् ॥ मंवोध्यकथयामासतवान्वेषणकारणम् ॥
॥ १४ ॥ पप्रच्छदेवान्विष्णुस्तान्क्रमेणावाप्तिहेतवे ॥ प्रत्युत्तरंददुस्तेतुप्रत्येकञ्चयथोचितम् ॥ १५ ॥ त्वमत्रकृत्तिकास्थानेकथयामा
सुरीश्वरम् ॥ सर्वेधर्मादयोदेवाधर्माधर्मस्यसाक्षिणः ॥ यावभूवरहःक्रीडापार्वतीशिवयोःपुरा ॥ १६ ॥ दृष्टस्यचसुरैःशम्भोर्वीर्य्यंभूमौ
पपातह ॥ भूमिस्तदक्षिपद्वह्नौवह्निश्चशरकानने ॥ ततोलब्धःकृत्तिकाभिस्त्वभिर्गच्छसाम्प्रतम् ॥ १७ ॥ तत्राभिषेकंविष्णुश्चकारिष्य
तिसुरैःसह ॥ शस्त्रंलब्ध्वाखिलंदेवतारकंसंहनिष्यसि ॥ पुत्रस्त्वंविश्वसंहर्त्तुस्त्वांगोप्तुंनक्षमाइमाः ॥ १८ ॥ नाग्निंगोप्तुंयथाशक्तः
शुष्कवृक्षःस्वकोटरे ॥ दीप्तिमांस्त्वञ्चविश्वेषुतासांगेहेषुशोभसे ॥ यथापतन्महाकूपेद्विजराजोनराजते ॥ १९ ॥ करोपिजगदालोकंना
च्छन्नोऽस्याङ्गतेजसा ॥ यथासूर्य्यःकराच्छन्नोनभवेत्पूरुषस्यच ॥ २० ॥ विष्णुस्त्वञ्चजगद्व्यापीनामांव्याप्योऽसिशाम्भव ॥ यथान

केषांव्याप्यश्चतत्सर्वंव्यापकंनभः ॥ २१ ॥ योगीन्द्रोनानुलितस्त्वंभोगीचपरिपोषणे ॥ नैवलिप्तोयथात्माचकर्म्मभोगेषुजीविनाम् ॥
॥ २२ ॥ विश्वाधारस्त्वमीशश्चनामृतेसम्भवेत्स्थितिः ॥ सागरस्ययथानद्यांसरितामाश्रयस्यच ॥ २३ ॥ नहिसर्वेश्वरावासःसम्भवे
त्कृत्तिकालये ॥ गरुडस्ययथावासःक्षुद्रेचचटकोदरे ॥ २४ ॥ त्वाश्चदेवानजानन्तिभक्तानुग्रहविग्रहम् ॥ गुणानांतेजसांराशिंयथाज्ञान
मयोगिनः ॥ २५ ॥ त्वामनिर्वचनीयश्चकथंजानन्तिकृत्तिकाः ॥ यथापरांहरेर्भक्तिमभक्तामूढचेतसः ॥ २६ ॥ भ्रातर्येयंनजान
न्तितेतंकुर्वन्त्यनादरम् ॥ नाद्रियन्ते यथाभेकास्त्वेकावासंचपंकजम् ॥ २७ ॥ ॥ कार्तिकेयउवाच ॥ ॥ भ्रातःसर्वं जाना
मिज्ञानंत्रैकालिकञ्चयत् ॥ ज्ञानीत्वंकाप्रशंसातेयतोमृत्युञ्जयाश्रितः ॥ २८ ॥ कर्मणाजन्मयेषांवायासुयासुचयोनिषु ॥ तासुतेनि
र्वृतिंभ्रातर्नाप्नुवन्तिचसन्ततम् ॥ २९ ॥ येयत्रसन्तिसन्तोवामूढावाकर्मभोगतः ॥ तेऽपितंवहुमन्यन्तेमोहिताविष्णुमायया ॥ ३० ॥
साम्प्रतंजगतांमाताविष्णुमायासनातनी ॥ सर्वाद्याविष्णुमायाचसर्वदाविष्णुमङ्गला ॥ ३१ ॥ शैलेन्द्रपत्नीगर्भेसाचालभज्जन्मभारते ॥
दारुणञ्चतपस्तप्त्वासम्प्रापच्छङ्करंपतिम् ॥ ३२ ॥ ब्रह्मादितृणपर्य्यन्तंसर्वंमिथ्यैवकृत्रिमम् ॥ सर्वेकृष्णोद्भवाःकालेविलीनास्तत्रकेव
लम् ॥ ३३ ॥ कल्पेकल्पेजगन्मातामातामेप्रतिजन्मनि ॥ यज्जन्ममाययाबद्धोनित्यःसृष्टिविधावहम् ॥ ३४ ॥ प्रकृतेरुद्भवास्सर्वं
जगत्यांसर्वयोषितः ॥ काश्चिदंशाःकलाःकाश्चित्कलांशांशेनकाश्चन ॥ ३५ ॥ कृत्तिकाज्ञानवत्यश्चयोगिन्यःप्रकृतेःकलाः ॥ स्तनैश्च
संवर्द्धितोऽहमुपहारेणसन्ततम् ॥ ३६ ॥ तासामहंपोष्यपुत्रोमदम्बाःपोषणादिमाः ॥ तस्याश्चप्रकृतेःपुत्रोगतस्त्वत्स्वामिवीर्य्यतः ॥
॥ ३७ ॥ नगर्भजोऽहंशैलेन्द्रकन्यायानन्दिकेश्वर ॥ साचमेधर्मतोमातातथेमाःसर्वसम्मताः ॥ ३८ ॥ स्तनदात्रीगर्भधात्रीभक्ष्यदात्री
गुरुप्रिया ॥ अभीष्टदेवपत्नीचपितुःपत्नीचकन्यका ॥ ३९ ॥ सगर्भकन्याभगिनीपुत्रपत्नीप्रियाप्रसूः ॥ मातुर्मातापितुर्मातासोदर
स्यप्रियातथा ॥ ४० ॥ मातुःपितुश्चभगिनीमातुलानीतथैवच ॥ जनानांवेदविहितामातरःषोडशस्मृताः ॥ ४१ ॥ इमाश्चसर्वसिद्धि
ज्ञाःपरमैश्वर्य्यसंयुताः ॥ नक्षुद्राब्रह्मणःकन्यास्त्रिषुलोकेषुपूजिताः ॥४२॥ विष्णुनाप्रेरितस्त्वञ्चशम्भोःपुत्रसमोमहान् ॥ गच्छयामित्व

नासार्द्धंद्रक्ष्यामिसुरसंचयम् ॥ ४३ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणेशखण्डेनारदनारायणसंवादेनन्दिकार्त्तिकेयसंवादोना
मपञ्चदशोऽध्यायः ॥ १५ ॥ . ॥ छ ॥ ॥ नारायणउवाच ॥ ॥ इत्येवमुक्तातंशीघ्रंबोधयित्वाचकृत्तिकाः ॥ उवाचकिंचिद्यु
क्तञ्चवचनंशङ्करात्मजः ॥ १ ॥ ॥ कार्त्तिकेयउवाच ॥ ॥ यास्यामिशंकरस्थानंद्रक्ष्यामिसुरसञ्चयम् ॥ मातरंबन्धुवर्गांश्चा
प्यज्ञांमेदत्तमातरः ॥ २ ॥ दैवाधीनंजगत्सर्वंजन्मकर्मशुभावहम् ॥ संयोगश्चवियोगश्चनचदैवात्परंबलम् ॥ ३ ॥ कृष्णायत्तञ्च
तद्दैवंसचदैवात्परस्ततः ॥ भजन्तिंसततंसन्तः परमात्मानमीश्वरम् ॥ ४ ॥ दैवंवर्द्धयितुंशक्तःक्षयंकर्तुंम्वलीलया ॥ नदैववद्ध
स्तद्भक्तश्चाविनाशीतितिनिर्णयः ॥ ५ ॥ तस्माद्भजतगोविन्दंमोहंत्यजतदुःखदम् ॥ सुखदंमोक्षदंसारंजन्ममृत्युभयापहम् ॥ ६ ॥
परमानन्दजननंमोहजालनिकृन्तनम् ॥ शश्वद्भजन्तियत्सर्वेब्रह्मविष्णुशिवादयः ॥ ७ ॥ कोऽहंभवान्धोयुष्माकंकावायूयंसमा
त्मिकाः ॥ तत्कर्मस्रोतसांसर्वेपुञ्जीभूतश्चफेनवत् ॥ ८ ॥ संश्लेषंवावियोगंवासर्वमीश्वरचिन्तया ॥ ब्रह्माण्डमीश्वराधीनंनस्व
तन्त्रंविदुर्बुधाः ॥ ९ ॥ जलबुद्बुदवत्सर्वमनित्यञ्चजगत्त्रयम् ॥ मायामनित्येकुर्वन्तिमाययामूढचेतसः ॥ १० ॥ सन्तस्तत्रनलिप्य
न्तेवायुवत्कृष्णचेतसः ॥ तस्मान्मोहंपरित्यज्यचाज्ञांमेदत्तमातरः ॥ ११ ॥ इत्येवमुक्त्वातानत्वासार्द्धंशङ्करपार्षदैः ॥ यात्राञ्चकारभग
वान्मनसाश्रीहरिंस्मरन् ॥ १२ ॥ एतस्मिन्नन्तरेतत्रददर्शरथमुत्तमम् ॥ विश्वकर्मकृतंरम्यंहीरकेणविराजितम् ॥ १३ ॥ सद्रत्नसार
रचितंमाणिक्येनविराजितम् ॥ पारिजातप्रसूनानांमालाजालैश्चशोभितम् ॥ १४ ॥ मणीन्द्रदर्पणैःश्वेतचामरैरतिदीपितम् ॥ क्रीडार्हं
मन्दिरैरम्यैश्चित्रितैश्चित्रितंवरम् ॥ १५ ॥ शतचक्रंसुविस्तीर्णंमनोयायिमनोहरम् ॥ प्रस्थापितंचपार्वत्यावेष्टितंपार्षदैर्वरैः ॥ १६ ॥
समारुहन्तंयानंताह्यदयेनविदूयता ॥ सहसाचेतनांप्राप्यमुक्तकेश्यःशुचातुराः ॥ १७ ॥ दृष्ट्वाचस्वपुरस्स्कन्दंस्तंभिताश्चातिशोकतः ॥
उन्मत्ताइवतत्रैववरुरुदुर्मगिरेभिरेभिया ॥ १८ ॥ ॥ कृत्तिकाऊचुः ॥ ॥ किंकुर्मःक्वचयास्यामोवयंवत्सत्वदाश्रयाः ॥ विहायास्मा ॥१८७॥
न्क्वयासित्वंनायंधर्मस्तवाधुना ॥ १९ ॥ स्नेहेनवर्द्धितोऽस्माभिःपुत्रोऽस्माकंस्वधर्मतः ॥ नायंधर्मोमातृवर्गानुरक्तःसुतस्त्य

जेत् ॥ २० ॥ इत्युक्त्वा कृत्तिकाः सर्वाः कृत्वावक्षसितंसुतम् ॥ पुनर्मूर्च्छामवापुस्ताः सुतविच्छेददारुणम् ॥ २१ ॥ कुमारोबोधयित्वाताः
अध्यात्मवचनेन वै ॥ ताभिश्चपार्षदैः सार्द्धमारुरोहरथंमुने ॥ २२ ॥ पूर्णकुम्भंद्विजंवेश्यांशुक्लधान्यानिदर्पणम् ॥ दध्याज्यंमधुलाजां
श्चपुष्पंदूर्वाक्षतान्सितान् ॥ २३ ॥ वृषंगजेन्द्रंतुरगंज्वलदग्निंसुवर्णकम् ॥ पूर्णंचपरिपक्वानिफलानिविविधानिच ॥२४॥ पतिपुत्रवतीं
नारींप्रदीपंमणिमुत्तमम् ॥ मुक्तांप्रसूनमालांचसद्योमांसञ्चचन्दनम् ॥ २५ ॥ ददर्शैतानिवस्तूनिमङ्गलानिपुरोमुने ॥ शृगालंनकुलं
कुम्भंशवंवामेशुभावहम् ॥ २६ ॥ राजहंसंमयूरंचखञ्जनंचशुकंपिकम् ॥ पारावतंशंखचिह्नंचक्रवाकञ्चमङ्गलम् ॥ २७ ॥ कृष्णसारंच
सुरभिंचमरींश्वेतचामरम् ॥ धेनुंचवत्ससंयुक्तांपताकांदक्षिणेशुभाम् ॥ २८ ॥ नानाप्रकारवाद्यंचाप्यश्रौषीन्मङ्गलध्वनिम् ॥ मनोहरं
चसङ्गीतंघण्टाशंखध्वनिंतथा ॥२९॥ दृष्ट्वाश्रुत्वामङ्गलंसह्यगमत्तातमन्दिरम् ॥ क्षणेनानन्दयुक्तश्चमनोयायिरथेनच ॥ ३० ॥ कुमारः
प्राप्यकैलासंन्यग्रोधाक्षयमूलके ॥ क्षणंतस्थौकृत्तिकाभिः पार्षदप्रवरैः सह ॥ ३१ ॥ पार्वतीमङ्गलंकृत्वाराजमार्गमनोहरम् ॥ पद्मरागै
रिन्द्रनीलैः संस्कृतंपरितः पुरम् ॥ ३२ ॥ रम्भास्तम्भसमूहैश्चपट्टसूत्रांशुकैस्तथा ॥ श्रीखण्डपल्लवैर्युक्तंपूर्णकुम्भैः सुशोभितम् ॥ ३३ ॥
पूर्णकुम्भजलैर्व्याप्तंसिक्तंचन्दनवारिभिः ॥ असंख्यरत्नदीपैश्चमणिराजैर्विराजितम् ॥ ३४ ॥ नटनर्त्तकवेश्यानामुत्सवैः संकुलंसदा ॥
वन्दिभिर्विप्रवर्गैश्चदूर्वापुष्पकरैर्युतम् ॥ ३५ ॥ पतिपुत्रवतीभिश्चसाध्वीभिश्चसमन्वितम् ॥ लक्ष्मींसरस्वतींदुर्गांसावित्रींतुलसींरतिम् ॥
॥ ३६ ॥ अरुन्धतीमहल्यांचदितिंतारांमनोरमाम् ॥ अदितिंशतरूपांचशचींसन्ध्यांचरोहिणीम् ॥ ३७ ॥ अनसूयांतथास्वाहांसंज्ञांवरु
णकामिनीम् ॥ आकूतिंचप्रसूतिंचदेवहूतिंचमेनकाम् ॥ ३८ ॥ तामकपाटलामेकपर्णांमैनाककामिनीम् ॥ वसुन्धरांचमनसांपुरस्कृ
त्यसमाययौ ॥ ३९ ॥ रम्भातिलोत्तमामेनाघृताचीमोहिनीशुभा ॥ उर्वशीरत्नमालाचसुशीलाललिताकला ॥ ४० ॥ कदम्बमालासु
रसावनमालाचसुन्दरी ॥ एताश्चान्याश्चबहवोविप्रेन्द्राप्सरसाङ्गणाः ॥ ४१ ॥ सङ्गीतनर्त्तनपराः सस्मितावेषसंयुताः ॥ करतालकराः
सर्वाजग्मुरानन्दपूर्वकम् ॥ ४२ ॥ देवाश्चमुनयः शैलागन्धर्वाः किन्नरास्तथा ॥ सर्वेययुः प्रमुदिताः कुमारस्यानुमज्जने ॥ ४३ ॥ नानाप्र

कारवाद्यैश्चरुद्रैर्वापार्षदैःसह ॥ भैरवैःक्षेत्रपालैश्चययौसार्द्धंमहेश्वरः ॥ ४४ ॥ अथशक्तिधरोहृष्टोदृष्ट्वारात्पार्वतींतदा ॥ अवरुह्यरथात्तूर्णं
शिरसाप्रणनामह ॥ ४५ ॥ तंपद्मप्रमुखंदेवीगणंचमुनिकामिनीम् ॥ शिवश्चपरयाभक्त्यासर्वान्संभाष्ययत्नतः ॥४६॥ कार्त्तिकेयंशि
वादृष्ट्वाक्रोडेकृत्वाचुचुम्बच ॥ शङ्करश्चसुराःशैलादेव्योवैशैलयोषितः ॥ ४७ ॥ पार्वतीप्रमुखादेव्यस्तथादेवश्चशङ्करः ॥ शैलाश्चमुनयः
सर्वेददुस्तस्मैशुभाशिषः ॥ ४८ ॥ कुमारःसगणैःसार्द्धमागत्यचशिवालयम् ॥ ददर्शतंसभामध्येविष्णुंक्षीरोदशायिनम् ॥४९॥ रत्नसिं
हासनस्थश्चरत्नभूषणभूषितम् ॥ धर्मब्रह्मेन्द्रचन्द्रार्कवह्निवाय्वादिभिर्युतम् ॥ ५० ॥ ईषद्धास्यंप्रसन्नास्यंभक्तानुग्रहकारकम् ॥ स्तुतंमुनी
न्द्रैर्देवेन्द्रैःसेवितंश्वेतचामरैः ॥५१॥ तंदृष्ट्वाजगतांनाथंभक्तिनम्रात्मकन्धरः ॥ पुलकान्वितसर्वाङ्गःशिरसाप्रणनामह ॥५२॥ विधिंधर्मञ्च
देवांश्चमुनीन्द्रांश्चमुदान्वितान् ॥ प्रणनामपृथक्तत्रप्रापतेभ्यश्शुभाशिषः ॥५३॥ पृथक्संभाष्यसर्वांश्चाप्युवासकनकासने ॥ ददौधनानि
विप्रेभ्यःपार्वत्यासहशङ्करः ॥ ५४ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेकार्त्तिकेयागमनंनामषोडशो
ध्यायः ॥१६॥ नारायणउवाच ॥ ॥ अथविष्णुर्जगत्कान्तोहृष्टःकृत्वाशुभक्षणम् ॥ रत्नसिंहासनेरम्येवासयामासषण्मुखम् ॥१॥ नाना
विधानिवाद्यानिकांस्यतालादिकानिच ॥ नानाविधानियन्त्राणिवादयामासकौतुकात् ॥ २ ॥ वेदमन्त्राभिषिक्तैश्चसर्वतीर्थोदपूर्णकैः ॥
सद्रत्नकुम्भशतकैःस्नापयामासतंमुदा ॥ ३ ॥ सद्रत्नसारखचितंकिरीटंमङ्गलाङ्गदे ॥ अमूल्यरत्नखचितभूषणानिबहूनिच ॥ ४ ॥
वह्निशुद्धांशुकेदिव्येक्षीरोदार्णवसम्भवम् ॥ कौस्तुभंवनमालांचतस्मैचक्रंददौमुदा ॥ ५ ॥ ब्रह्माददौयज्ञसूत्रंवेदान्वैवेदमातरम् ॥
सन्ध्यामन्त्रंकृष्णमन्त्रस्तोत्रश्चकवचंहरेः ॥ ६ ॥ कमण्डलुंचब्रह्मास्त्रंविद्यांवैवैरिमर्दिनीम् ॥ धर्मोधर्ममतिंदिव्यांसर्वजीवदयांददौ ॥
॥ ७ ॥ परंमृत्युञ्जयंज्ञानंसर्वशास्त्रावबोधनम् ॥ शश्वत्सुखप्रदंतत्त्वज्ञानञ्चसुमनोहरम् ॥ ८ ॥ योगतत्त्वंसिद्धितत्त्वंब्रह्मज्ञानंसुदुर्ल
भम् ॥ शूलंपिनाकंपरशुंशक्तिंपाशुपतंधनुः ॥ संहारास्त्रविनिक्षेपंतत्संहारंददौशिवः ॥ ९ ॥ श्वेतच्छत्रंरत्नमालांददौतस्मैजलेश्वरः ॥
गजेन्द्रञ्चहयेन्द्रंचसुधाकुम्भंसुधानिधिः ॥ १० ॥ मनोयायिरथंसूर्य्यःसन्नाहञ्चमनोरमम् ॥ यमदण्डंयमश्चैवमहाशक्तिंहुताशनः ॥

नानाशस्त्राण्युपायानिसर्वेदेवाददुर्मुदा ॥ ११ ॥ कामशास्त्रंकामदेवोददौतस्मैमुदान्वितः ॥ क्षीरोदोऽमूल्यरत्नानिविशिष्टेरत्ननूपुरे ॥
॥ १२॥ पार्वतीसस्मिताहृष्टापरमानन्दमानसा ॥ महाविद्यांसुशीलांचविद्यांमेधांदयांस्मृतिम् ॥ १३ ॥ बुद्धिंसुनिर्मलांशान्तितुष्टिंपुष्टिं
क्षमांधृतिम् ॥ सुदृढांचहरौभक्तिंहरिदास्यंददौमुदा ॥ १४ ॥ प्रजापतिर्देवसेनांरत्नभूपणभूपिताम् ॥ सुविनीतांसुशीलांचसुन्द
रींसुमनोहराम् ॥ १५ ॥ ददौतस्मैवेदमन्त्रैर्विवाहविधिनास्वयम् ॥ यांवदन्तिमहाषष्ठींपण्डिताःशिशुपालिकाम् ॥ १६ ॥
अभिषिच्यकुमारञ्चसर्वेदेवाययुर्गृहम् ॥ मुनयश्चैवगन्धर्वाःप्रणम्यजगदीश्वरान् ॥ १७ ॥ नारायणञ्चब्रह्माणंधर्मंतुष्टावशङ्करः ॥ प्रणना
महरितातंधर्ममालिङ्ग्यनारद ॥ १८ ॥ प्रीत्याययौचशैलेन्द्रःसगणःशङ्करार्चितः ॥ येयेतत्रागताःसर्वेययुरानन्दपूर्वकम् ॥ १९ ॥
परमानन्दसंयुक्तोदेव्यासहमहेश्वरः ॥ कालान्तरेचतान्सर्वान्पुनरानीयशङ्करः ॥ पुष्टिंददौविवाहेनगणेशायमहात्मने ॥ २० ॥ सुता
भ्यांसगणैःसार्द्धंपार्वतीहृष्टमानसा ॥ सिषेवेस्वामिनःपादपद्मंसासर्वकामदम् ॥ २१ ॥ इत्येवंकथितंसर्वंकुमारस्याभिषेचनम् ॥
विवाहःपूजनंतस्यगणेशस्यविवाहकम् ॥ २२ ॥ पार्वतीपुत्रलाभश्चदेवानांचसमागमः ॥ कातेमनसिवाञ्छास्तिकिंभूयःश्रोतुमि
च्छसि ॥ २३ ॥ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेकुमारगणेशविवाहकुमाराभिषेककथनं
नामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥ ॥ नारदउवाच ॥ ॥ नारायणमहाभागवेदवेदाङ्गपारग ॥ पृच्छामित्वामहं
किंचिदतिसन्देहवान्यतः ॥ १ ॥ सुतस्यत्रिदशेशस्यशंकरस्यमहात्मनः ॥ विघ्ननिघ्नस्ययद्विघ्नमीश्वरस्यकथंप्रभो ॥ २ ॥
परिपूर्णतमःश्रीमान्परमात्मापरात्परः ॥ गोलोकनाथःस्वांशेनपार्वतीतनयःस्वयम् ॥ ३ ॥ अहोभगवतस्तस्यमस्तकच्छेदनं
विभो ॥ ग्रहदृष्ट्याग्रहेशस्यकथंमेवक्तुमर्हसि ॥ ४ ॥ ॥ नारायणउवाच ॥ ॥ सावधानंशृणुब्रह्मन्नितिहासंपुरातनम् ॥
विघ्नेशस्यबभूवेदंविघ्नंयेनचनारद ॥ ५ ॥ एकदाशंकरःसूर्य्यंजघानपरमक्रुधा ॥ सुमालिमालिहन्तारंशूलेनबहुवत्सलः ॥ ६ ॥
श्रीसूर्य्योऽमोघशूलेनाशनितुल्येनतेजसा ॥ जहौसचेतनांसद्योरथाच्चनिपपातह ॥ ७ ॥ ददर्शकश्यपःपुत्रंमृतमुत्तानलोचनम् ॥

कृत्वावक्षसितंशोकाद्विललापभृशंमुहुः ॥ ८ ॥ हाहाकारंसुराश्चकुर्विलेपुर्भयकातराः ॥ अन्तीभूतंजगत्सर्वंबभूवतमसावृतम् ॥
॥ ९ ॥ निष्प्रभंतनयंदृष्ट्वाचाशपत्कश्यपःशिवम् ॥ तपस्वीब्रह्मणःपौत्रःप्रज्वलन्ब्रह्मतेजसा ॥ १० ॥ मत्पुत्रस्ययथावक्षश्छिन्नं
शूलेनतेऽद्यवै ॥ त्वत्पुत्रस्यशिरश्छिन्नंभविष्यतिनसंशयः ॥ ११ ॥ शिवश्चगलितक्रोधःक्षणेनैवाशुतोषकः ॥ ब्रह्मज्ञानेनतम्सू
र्य्यंजीवयामासतत्क्षणात् ॥ १२ ॥ ब्रह्मविष्णुमहेशानामंशश्चत्रिगुणात्मकः ॥ सूर्य्यश्चचेतनांप्राप्यसमुत्तस्थौःपितुःपुरः ॥ १३ ॥
ननामपितरंभक्त्याशंकरंभक्तवत्सलः ॥ विज्ञायशम्भोःशापश्चकश्यपंसचुकोपह ॥ १४ ॥ विषयान्नैवजग्राहकोपेनैवमुवाचह ॥ विषयां
श्चपरित्यज्यभजेश्रीकृष्णमीश्वरम् ॥ १५ ॥ सर्वंतुच्छमनित्यञ्चनश्वरंचेश्वरंविना ॥ विहायमङ्गलंसत्यंविद्वान्नेच्छेदमङ्गलम् ॥ १६ ॥
देवैश्चप्रेरितोब्रह्मासमागत्यससम्भ्रमः ॥ बोधयित्वारविंतत्रयुयोजविषयेष्वजः ॥ १७ ॥ तस्मैदत्त्वाशिषश्शम्भुर्ब्रह्माचस्वालयं
मुदा ॥ जगामकश्यपश्चैवस्वराशिरविरेवच ॥ १८ ॥ अथमालीसुमालीचव्याधिग्रस्तौबभूवतुः ॥ श्वित्रौगलितसर्वाङ्गौशक्तिहीनौ
तप्रभौ ॥ १९ ॥ तावुवाचस्वयंब्रह्मायुवाञ्चभजतांरविम् ॥ सूर्य्यकोपेनमलिनौयुवामेवंहतप्रभौ ॥ २० ॥ सूर्य्यस्यकवचंस्तोत्रंसर्वंपूजा
विधिंविधिः ॥ जगामकथयित्वातौब्रह्मलोकंसनातनः ॥ २१ ॥ ततस्तौपुष्करंगत्वासिषेवातेरविंमुने ॥ स्नात्वात्रिकालंभक्त्याचजप
न्तौमन्त्रमुत्तमम् ॥ २२ ॥ ततःसूर्य्याद्वरंप्राप्यनिजरूपौबभूवतुः ॥ इत्येवंकथितंसर्वंकिम्भूयःश्रोतुमिच्छसि ॥ २३ ॥ इति श्रीब्रह्म
वैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेविघ्नेशविग्रकथनंनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ ७ ॥ ॥ नारद
उवाच ॥ ॥ किंस्तोत्रंकवचंनाथब्रह्मणालोकसाक्षिणा ॥ दानवाभ्यांपुरादत्तंसूर्य्यस्यपरमात्मनः ॥ १ ॥ किंवापूजाविधानंवाकिं
मन्त्रंव्याधिनाशनम् ॥ सर्वंचास्यमहाभागतन्मेत्वंवक्तुमर्हसि ॥ २ ॥ ॥ सूतउवाच ॥ ॥ नारदस्यवचःश्रुत्वाभगवान्करुणा
निधिः ॥ स्तोत्रञ्चकवचंमन्त्रंसूचेतत्पूजनक्रमम् ॥ ३ ॥ ॥ नारायणउवाच ॥ ॥ शृणुनारदवक्ष्यामिसूर्य्यपूजाविधेःक्रमम् ॥
स्तोत्रञ्चकवचंसर्वंपापव्याधिविमोचकम् ॥ ४ ॥ सुमालिमालिनौदैत्यौव्याधिग्रस्तौबभूवतुः ॥ विधिंसस्मरतुःस्तोत्रंशिवमन्त्रप्रदाय

कम् ॥ ५ ॥ ब्रह्मागत्वाचवैकुण्ठंपप्रच्छकमलापतिम् ॥ शिवंतत्रैवसंपश्यन्वसन्तंहरिसन्निधौ ॥ ६ ॥ ॥ ब्रह्मोवाच ॥ ॥ सुमा
लिमालिनौदैत्यौव्याधिग्रस्तौबभूवतुः ॥ कउपायोवदहरेतयोर्व्याधिविनाशने ॥ ७ ॥ ॥ विष्णुरुवाच ॥ ॥ कृत्वासूर्य्यस्य
सेवाञ्चपुष्करेपूर्णवत्सरम् ॥ व्याधिहन्तुर्मदंशस्यतौचमुक्तौभविष्यतः ॥ ८ ॥ ॥ शङ्करउवाच ॥ ॥ सूर्य्यस्तोत्रंचकवचंमन्त्रंकल्प
तरुंपरम् ॥ देहिताभ्यांजगत्कान्तव्याधिहन्तुर्महात्मनः ॥ ९ ॥ आरात्सम्पत्प्रदातारौसर्वदाताहरिःस्वयम् ॥ व्याधिहन्तादिनकरो
यस्ययोर्विषयोविधे ॥ १० ॥ तयोस्तुमन्त्रंसंप्राप्यययौदैत्यगृहंविधिः ॥ तदाप्रणम्यतंदृष्ट्वातस्मैददतुरासनम् ॥ ११ ॥ तावुवाचस्वयं
ब्रह्मारोगग्रस्तौदयानिधिः ॥ स्तब्धावाहाररहितौपूयदुर्गन्धसंयुतौ ॥ १२ ॥ ॥ ब्रह्मोवाच ॥ ॥ गृहीत्वाकवचंस्तोत्रंमन्त्रंपूजा
विधिक्रमम् ॥ गत्वाहिपुष्करंवत्सौभजथः प्रणतौरविम् ॥ १३ ॥ ॥ तावूचतुः ॥ ॥ भजावःकेनविधिनाकेनमन्त्रेणवाविधे ॥
किंस्तोत्रंकवचंकिंवातदावाभ्यांवदाधुना ॥ १४ ॥ ॥ ब्रह्मोवाच ॥ ॥ कृत्वात्रिकालंस्नानञ्चमन्त्रेणानेनभास्करम् ॥ संसेव्य
भास्करंभक्त्यानीरुजौचभविष्यथः ॥ १५ ॥ ॐ ह्रींनमोभगवतेसूर्य्यायपरमात्मनेस्वाहा ॥ इत्यनेनचमन्त्रेणसावधानंदिवाकरम् ॥
संपूज्यभक्त्यादत्त्वावैचोपहारांस्तुषोडश ॥ एवंसंवत्सरंयावद्ध्रुवंमुक्तौभविष्यथः ॥ १६ ॥ अपूर्वंकवचंतस्ययुवाभ्यांप्रददाम्यहम् ॥
यद्दत्तंगुरुणापूर्वमिन्द्रायप्रीतिपूर्वकम् ॥ १७ ॥ तत्सहस्रभगाङ्गायशापेनगौतमस्यच ॥ अहल्याहरणेनैवपापयुक्तायसङ्कटे ॥ १८ ॥
॥ ॥ बृहस्पतिरुवाच ॥ ॥ इंद्रशृणुप्रवक्ष्यामिकवचंपरमाद्भुतम् ॥ यद्धृत्वामुनयःपूताजीवन्मुक्ताश्चभारते ॥ १९ ॥ कवचंबिभ्रतो
व्याधिर्नभियायातिसन्निधिम् ॥ यथादृष्ट्वावैनतेयंपलायन्तेभुजङ्गमाः ॥ २० ॥ शुद्धायगुरुभक्तायस्वशिष्यायप्रकाशयेत् ॥ खलाय
परशिष्यायदत्त्वामृत्युमवाप्नुयात् ॥ २१ ॥ जगद्विलक्षणस्यास्यकवचस्यप्रजापतिः ॥ ऋषिश्छन्दश्चगायत्रीदेवोदिनकरःस्वयम ॥
व्याधिप्रणाशेसौन्दर्य्येविनियोगःप्रकीर्त्तितः ॥ २२ ॥ सद्योरोगहरंसारंसर्वपापप्रणाशनम् ॥ ॐ क्लींह्रींश्रींश्रीसूर्य्यायस्वाहामेपातुम

१ आवामितिपाठः ।

स्तकम् ॥ २३ ॥ आष्टादशाक्षरोमन्त्रःकपालंमेसदावतु ॥ ॐ ह्रींह्रींश्रींश्रींसूर्य्यायस्वाहामेपातुनासिकाम् ॥ २४ ॥ चक्षुर्मेपातु
सूर्य्यश्चतारकाश्चविकर्त्तनः ॥ भास्करोमेऽधरंपातुदन्तान्दिनकरःसदा ॥ २५ ॥ प्रचण्डःपातुगण्डंमेमार्त्तण्डःकर्णमेवच ॥
मिहिरश्चसदास्कन्धेजंघेपूपासदावतु ॥ २६ ॥ वक्षःपातुरविःशश्वन्नाभिंसूर्य्यःस्वयंसदा ॥ कङ्कालंमेसदापातुसर्वदेवनमस्कृतः ॥
॥ २७ ॥ करौपातुसदाब्रध्नःपातुपादौप्रभाकरः ॥ विभाकरोमेसर्वांगंपातुसन्ततमीश्वरः ॥ २८ ॥ इतितेकथितंवत्सकवचंसुम
नोहरम् ॥ जगद्विलक्षणंनामत्रिजगत्सुसुदुर्लभम् ॥ २९ ॥ पुरादत्तश्चमनवेपुलस्त्येनतुपुष्करे ॥ मयादत्तश्चतुभ्यंतद्यस्मैकस्मैनदेहि
भोः ॥ ३० ॥ व्याधितोमुच्यसेत्वंचकवचस्यप्रसादतः ॥ भवानरोगीश्रीमांश्चभविष्यतिनसंशयः ॥ ३१ ॥ लक्षवर्षहविष्येण
यत्फलंलभतेनरः ॥ तत्फलंलभतेनूनंकवचस्यास्यधारणात् ॥ ३२ ॥ इदंकवचमज्ञात्वायोमूढोभास्करंयजेत् ॥ दशलक्ष
प्रजप्तोऽपिमन्त्रसिद्धिर्नजायते ॥ ३३ ॥ ॥ ब्रह्मोवाच ॥ ॥ धृत्वेदंकवचंवत्सौकृत्वाचस्तवनंरवेः ॥ युवांव्याधिविनिर्मुक्तौ
निश्चितंतुभविष्यथः ॥ ३४ ॥ स्तवनंसामवेदोक्तंसूर्य्यस्यव्याधिमोचनम् ॥ सर्वपापहरंसारंधनारोग्यकरंपरम् ॥ ३५ ॥
॥ ॥ ब्रह्मोवाच ॥ ॥ तंब्रह्मपरमंधामज्योतीरूपंसनातनम् ॥ त्वामहंस्तोतुमिच्छामिभक्तानुग्रहकारकम् ॥ ३६ ॥
त्रैलोक्यलोचनंलोकनाथंपापविमोचनम् ॥ तपसांफलदातारंदुःखदंपापिनांसदा ॥ ३७ ॥ कर्मानुरूपफलदंकर्म
बीजंदयानिधिम् ॥ कर्मरूपंक्रियारूपमरूपंकर्मबीजकम् ॥ ३८ ॥ ब्रह्मविष्णुमहेशानामंशञ्चत्रिगुणात्मकम् ॥ व्या
धिदंव्याधिहन्तारंशोकमोहभयापहम् ॥ सुखदंमोक्षदंसारंभक्तिदंसर्वकामदम् ॥ ३९ ॥ सर्वेश्वरंसर्वरूपंसाक्षिणंसर्वकर्मणाम् ॥
प्रत्यक्षंसर्वलोकानामप्रत्यक्षंमनोहरम् ॥ ४० ॥ शश्वद्रसहरंपश्चाद्रसदंसर्वसिद्धिदम् ॥ सिद्धिस्वरूपंसिद्धेशंसिद्धानांपरमंगुरुम् ॥
॥ ४१ ॥ स्तवराजमिदंप्रोक्तंगुह्याद्गुह्यतरंपरम् ॥ त्रिसन्ध्यंयःपठेन्नित्यंव्याधिभ्यस्संप्रमुच्यते ॥ ४२ ॥ आन्ध्यंकुष्ठञ्चदारिद्र्यंरोगःशो ॥१९०॥
कोभयंकलिः ॥ तस्यनश्यतिविश्वेशश्रीसूर्य्यकृपयाध्रुवम ॥ ४३ ॥ महाकुष्ठीचगलितोचक्षुर्हीनोमहाव्रणी ॥ यक्ष्मग्रस्तोमहाशूलीना

नाव्याधियुतोऽपिवा ॥ ४४ ॥ मासंकृत्वाहविष्यान्नंश्रुत्वानोमुच्यतेध्रुवम् ॥ स्नानञ्चसर्वतीर्थानांलभतेनात्रसंशयः ॥ ४५ ॥ पुष्करं
गच्छतंशीघ्रंभास्करंभजतंसुतौ ॥ इत्येवमुक्त्वासविधिर्जगामस्वालयंमुदा ॥ ४६ ॥ तौनिषेव्यदिनेशंतंनीरुजौमंवभूवतुः ॥ इत्येवंकथि
तंवत्सकिम्भूयःश्रोतुमिच्छसि ॥ ४७ ॥ सर्वविघ्नहरंसारंविघ्नेशंविघ्ननाशनम् ॥ स्तोत्रेणानेनतंस्तुत्वामुच्यतेनात्रसंशयः ॥ ४८ ॥
इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेविघ्नकारणकथनंनामैकोनविंशतितमोऽध्यायः ॥ १९ ॥ छ ॥
नारदउवाच ॥ हरेरंशसमुत्पन्नोहरितुल्योभवान्धिया ॥ तेजसाविक्रमेणैवमत्प्रश्नंश्रोतुमर्हसि ॥ १ ॥ विघ्ननिघ्नस्ययद्विघ्नंश्रुतंतत्परमा
द्भुतम् ॥ तद्विघ्नकारिणश्चैवविश्वकारणवक्त्रतः ॥ २ ॥ अधुनाश्रोतुमिच्छामिपरंसन्देहभञ्जनम् ॥ त्रैलोक्यनाथतनयेगजास्यायोज
नार्थकम् ॥ ३ ॥ स्थितेष्वन्येषुबहुषुजन्तुष्वब्जभुवःपते ॥ सुप्राणिनांसुरूपेषुनानारूपेषुरूपिणाम् ॥ ४ ॥ श्रीनारायणउवाच ॥
गजास्ययोजनायाश्चकारणंशृणुनारद ॥ गोप्यंसर्वपुराणेषुवेदेषुचसुदुर्लभम् ॥ ५ ॥ तारणंसर्वदुःखानांकारणंसर्वसम्पदाम् ॥ हारणं
विपदांचैवरहस्यंपापमोचनम् ॥ ६ ॥ महालक्ष्म्याश्चचरितंसर्वमङ्गलमङ्गलम् ॥ सुखदंमोक्षदञ्चैवचतुर्वर्गफलप्रदम् ॥ ७ ॥ शृणुतात
प्रवक्ष्येऽहमितिहासंपुरातनम् ॥ रहस्यंपाद्मकल्पस्यपुरातातमुखाच्छ्रुतम् ॥ ८ ॥ एकदैवमहेन्द्रश्चपुष्पभद्रांनदींययौ ॥ महासम्पन्मदो
न्मत्तःकामीराजश्रियान्वितः ॥ ९ ॥ तत्तीरेऽतिरहःस्थानेपुष्पोद्यानेमनोहरे ॥ अतीवदुर्गमेऽरण्येसर्वजन्तुविवर्जिते ॥ १० ॥ भ्रमर
ध्वनिसंयुक्तेपुंस्कोकिलरुतश्रवे ॥ सुगन्धिपुष्पसंश्लिष्टवायुनासुरभीकृते ॥ ११ ॥ ददर्शरम्भांतत्रैवचन्द्रलोकात्समागताम् ॥ सुरतश्र
मविश्रान्तिकामुर्कांकामकामुकीम् ॥ १२ ॥ इच्छन्तीमीप्सितांक्रीडांगच्छन्तींमदनाश्रमम् ॥ एकाकिनीमुन्मस्कांमन्मथोद्गतमान
साम् ॥ १३ ॥ सुश्रोणींसुदतींश्यामांबिम्बाधरसरोरुहाम् ॥ बृहन्नितम्बभारार्त्तांमत्तवारणगामिनीम् ॥ १४ ॥ सस्मितास्यशरच्चन्द्रां
सुकटाक्षञ्चबिभ्रतीम् ॥ बिभ्रतींकबरींरम्यांमालतीमाल्यशोभिताम् ॥ १५ ॥ वह्निशुद्धांशुकधरांरत्नभूषणभूषिताम् ॥ कस्तूरीबिन्दुना
सार्द्धंसिन्दूरंबिभ्रतींमुदा ॥ १६ ॥ नीलोत्पलदलश्यामकज्जलोज्ज्वललोचनाम् ॥ मणिकुण्डलयुग्माढ्यगण्डस्थलविराजिताम् ॥ १७ ॥

अत्युन्नतंसुकठिनंपत्रराजिविराजितम् ॥ सुखदंरसिकानांचस्तनयुग्मंचबिभ्रतीम् ॥ १८ ॥ सर्वशोभांसुवेषाढ्यांसुभगांसुर
तोत्सुकाम् ॥ प्राणाधिकांचदेवानांस्वच्छांस्वच्छन्दगामिनीम् ॥ १९ ॥ वरामप्सरसांरम्यामनीवस्थिरयौवनाम् ॥ गुणरूपवतींशान्तां
मुनिमानसमोहिनीम् ॥ २० ॥ दृष्ट्वातामतिवेषाढ्यांतत्कटाक्षेणपीडितः ॥ इन्द्रोऽनीन्द्रियचापल्यात्प्रवक्तुमुपचक्रमे ॥ २१ ॥ ॥
इन्द्रउवाच ॥ ॥ क्वगच्छसिवरारोहेक्वगताभिमनोहरे ॥ मयादृष्टाहिसुचिरात्कल्याणिसुभगेधुना ॥ २२ ॥ तवान्वेषणकर्त्ताहंश्रुत्वा
वाचिकमग्रतः ॥ त्वयासक्तमनाश्चास्मिनान्यांगणयामिच ॥ २३ ॥ सुत्रापितजलार्थीयः किमिच्छेत्पङ्किलंजलम् ॥ पङ्कंनेच्छेच्चन्द
नार्थीपंकजार्थीनचोत्पलम् ॥ २४ ॥ सुधार्थीनसुरामिच्छेद्दुग्धार्थीनाविलंजलम् ॥ सुगन्धिपुष्पशायीयोह्यस्त्रतल्पंनचेच्छति ॥
॥ २५ ॥ स्वर्गीचनरकंनेच्छेत्सुभोगीदुष्टभोजनम् ॥ पण्डितैःसहसंवासीनेच्छेत्स्त्रीमन्निधिंनरः ॥ विहायरत्नाभरणंकोऽपी
च्छेल्लोहभूषणम् ॥ २६ ॥ त्वांनाश्लिष्यमहाविज्ञांकोमूढोगन्तुमिच्छति ॥ विहायगङ्गांकोविज्ञोनदीमन्यांचवांछति ॥ २७ ॥
इन्द्रियैश्चेन्द्रियरतिंवर्द्धयन्तींपदेपदे ॥ वरंप्रार्थयितारश्चप्राणिनश्चसुखार्थिनः ॥ २८ ॥ इत्येवमुक्त्वाभगवानवरुह्यगजेश्वरात् ॥
कामयुक्तश्चपुरतस्तस्थौतस्याश्चनारद ॥ २९ ॥ श्रुत्वातद्वचनंरम्भामहाशृंगारलोलुपा ॥ जहाससानम्रवदनापुलकाञ्चितविग्रहा ॥
॥ ३० ॥ स्मेराननकटाक्षेणस्तनोर्वोर्दर्शनेनच ॥ नर्मोक्तिगर्भवाक्येनचाहरत्तस्यचेतनाम् ॥ ३१ ॥ मितंसारंसुमधुरंसु
स्निग्धंकोमलंप्रियम् ॥ पुरुषायत्तबीजश्चप्रवक्तुमुपचक्रमे ॥ ३२ ॥ ॥ रम्भोवाच ॥ ॥ यास्यामिवांछितंयत्र
प्रश्नेनतवकिंफलम् ॥ नाहंसन्तोषजननीधूर्त्तानांदुष्टमित्रता ॥ ३३ ॥ यथामधुकरोलोभात्सर्वपुष्पासवंलभेत् ॥ स्वादु
यत्रातिरिक्तंसतत्रतिष्ठतिसन्ततम् ॥ ३४ ॥ तथैवकामुको लोकेभ्रमेद्भ्रमरवत्सदा ॥ चाञ्चल्यात्महिकास्वेववायुवद्रसमाहरेत् ॥ ३५ ॥
सुपुमानङ्गवत्स्त्रीणांयथाशाखाश्चशाखिषु ॥ कामुकीकाकवल्लोलःफलंभुक्त्वाप्रयातिच ॥ ३६ ॥ स्वकार्य्यमुद्धरेद्यावत्तावद्भास
प्रयोजनम् ॥ स्थितिःकार्य्यानुरोधेनयथाकाष्ठेहुताशनः ॥ ३७ ॥ यावत्तडागेतोयानितावत्प्रादांसितेषुच ॥ शोषारम्भेचततो

यानियान्तिस्थानान्तंपुनः ॥ ३८ ॥ त्वंदेवानामीश्वरोऽसिकामिनीनांचवांछितः ॥ पुमांसंरसिकंशश्वद्वांछन्तिरसिकाःसुखा
त् ॥ ३९ ॥ युवानंरसिकंशान्तंसुवेषंसुन्दरंप्रियम् ॥ गुणिनंधनिनंस्वच्छंकान्तमिच्छतिकामिनी ॥ ४० ॥ दुश्शीलंरोगि
णंवृद्धंरतिशक्तिवियोजितम् ॥ अदातारमविज्ञञ्चनैववांछन्तिय पितः ॥ ४१ ॥ कामुकानचवाञ्छन्तित्वामेवंगुणसागरम् ॥ तवाज्ञा
कारिणींदासींगृहाणात्रयथासुखम् ॥ ४२ ॥ इत्युक्त्वासस्मितासाचनंपपौवक्रचक्षुषा ॥ कामाग्निदग्धाविगलल्लज्जातस्थौसमी
पतः ॥ ४३ ॥ ज्ञात्वाभावंस्मरत्तीयाःस्मरशास्त्रविशारदः ॥ गृहीत्वातांपुष्पतल्पेविजहाररतयासह ॥ ४४ ॥ चुचुम्बरहसि
प्रौढांनग्नांचसुभगांवराम् ॥ पक्वबिम्बाधरोष्ठींचसुदत्याचुंबितस्तया ॥ ४५ ॥ नानाप्रकारश्शृङ्गाराद्विपरीतादिकान्मुने ॥ सुखी
बभूवतस्यांवैश्शृङ्गारोमूर्त्तिमानिव ॥ ४६ ॥ तौकामाहितचित्तौनोबुबुधातेदिवानिशम् ॥ अन्योन्यगतचित्तौचकामार्तौज्ञानव
र्जितौ ॥ ४७ ॥ सचकृत्वास्थलेक्रीडांतयासहसुरेश्वरः ॥ ययौजलविहारार्थंपुष्पभद्रानदीजलम् ॥ ४८ ॥ सचकारजलक्री
डांतयासहमुदाक्षणम् ॥ जलात्स्थलेस्थलात्तोयेविजहारपुनःपुनः ॥ ४९ ॥ एतस्मिन्नन्तरेतेनवर्त्मनामुनिपुङ्गवः ॥ सशिष्योया
तिदुर्वासावैकुण्ठाच्छङ्करालयम् ॥ ५० ॥ तञ्चदृष्ट्वामुनीन्द्रञ्चदेवेन्द्रःस्वच्छमानसः ॥ ननामागत्यसहसाददौतस्मैसचाशिषः ॥
॥ ५१ ॥ पारिजातप्रसूनंयद्दत्तंनारायणेनवै ॥ तच्चदत्तंमहेन्द्रायमुनीन्द्रेणमहात्मना ॥ ५२ ॥ दत्त्वापुष्पंमहाभागस्तमुवाचकृ
पानिधिः ॥ माहात्म्यंतस्ययत्किंचिदपूर्वंमुनिसत्तमः ॥ ५३ ॥ ॥ दुर्वासाउवाच ॥ ॥ सर्वविघ्नहरंपुष्पंनारायणनिवेदितम् ॥
मूर्ध्नीदंयस्यदेवेन्द्रजयस्तस्यैवसर्वतः ॥ ५४ ॥ पुरःपूजाचसर्वेषांदेवानामग्रणीर्भवेत् ॥ तच्छायेवमहालक्ष्मीर्नजहातिकदापितम् ॥
॥ ५५ ॥ ज्ञानेनतेजसाबुद्ध्याविक्रमेणबलेनच ॥ सर्वदेवाधिकःश्रीमान्हरितुल्यपराक्रमः ॥ ५६ ॥ भक्त्यामूर्ध्निनगृह्णातियोऽहङ्कारेण
पामरः ॥ नैवेद्यञ्चहरेरेवसभ्रष्टश्रीःस्वजातिभिः ॥ इत्युक्त्वाशङ्करांशश्चययगमच्छङ्करालयम् ॥ ५७ ॥ तत्सरम्भांतिकेतिष्ठञ्चिक्षेपगजम

१ अविचारगमितिपाठः ।

स्तके ॥ तेनभ्रष्टश्रियंदृष्ट्वासाजगामसुरालयम् ॥ ५८ ॥ पुंश्चलीयोग्यमिच्छन्तीनापरंचञ्चलाधमा ॥ देवराजंपरित्यज्यगजराजोमहा
बली ॥ ५९ ॥ प्रविवेशमहारण्यंतंनिक्षिप्यस्वतेजसा ॥ तत्रैवकारिणींप्राप्यमत्तःसंबुभुजेबलात् ॥ ६० ॥ सातोबभूववशगायोषिज्जातिः
सुखार्थिनी ॥ तयोर्बभूवापत्यांनांनिवहस्तत्रकानने ॥ ६१ ॥ हरिस्तन्मस्तकंछित्त्वायोजयामासबालके ॥ इत्येवंकथितंवत्सकिंभू
यःश्रोतुमिच्छसि ॥ गजास्ययोजनायाश्चकारणंपापनाशनम् ॥ ६२ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनाराय
णसंवादेगणपतेर्गजास्ययोजनाहेतुकथनंनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ नारदउवाच ॥ ॥ तेदेवाब्रह्मशापेननिः
श्रीकाःकेनवाप्रभो ॥ बभूवुस्तद्रहस्यञ्चगोपनीयंसुदुर्लभम् ॥ १ ॥ कथंवाप्रापुरेतेतांकमलांजगतांप्रसूम् ॥ किञ्चकारमहेन्द्रश्चतद्भवा
न्वक्तुमर्हसि ॥ २ ॥ ॥ नारायणउवाच ॥ ॥ गजेन्द्रेणपराभूतोरम्भयाचसुमन्दधीः ॥ भ्रष्टश्रीर्दैन्ययुक्तश्चसजगामामरावतीम् ॥
॥ ३ ॥ तांददर्शनिरानन्दोनिरानन्दांपुरींमुने ॥ दैन्यग्रस्तांबन्धुहीनांवैरिवर्गैःसमाकुलाम् ॥ ४ ॥ इतिश्रुत्वादूतमुखाज्जगामगुरुमन्दि
रम् ॥ तेनदेवगणैःसार्द्धंजगामब्रह्मणःसभाम् ॥ ५ ॥ नत्वाननामतंशक्रःसुरैःसार्द्धंतथागुरुः ॥ तुष्टावत्वेदवाक्यैश्चस्तोत्रेणापिचसंयतः ॥
॥ ६ ॥ प्रवृत्तिंकथयामासवाक्पतिस्तंप्रजापतिम् ॥ श्रुत्वाब्रह्मानम्रवक्त्रःप्रवक्तुमुपचक्रमे ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ ॥ मत्प्रपौत्रोऽसिदेवे
न्द्रशश्वद्भ्राजन्श्रियाज्वलन् ॥ लक्ष्मीसमःशचीभर्त्तापरस्त्रीलोलुपःसदा ॥ ८ ॥ गौतमस्याभिशापेनभगाङ्गःसुरसंसदि ॥ पुनर्लज्जावि
हीनस्त्वंपरस्त्रीरतिलोलुपः॥९॥यःपरस्त्रीषुनिरतस्तस्यश्रीर्वाकुतोयशः ॥ सचनिन्द्यःपापयुक्तःशश्वत्सर्वसभासुच ॥१०॥ नैवेद्यंश्रीहरेरे
वदत्तंदुर्वाससाचते ॥ गजमूर्ध्नित्वयान्यस्तंरम्भयाऽऽहृतचेतसा ॥११॥ क्वसारम्भासर्वभोग्याक्वाधुनात्वंश्रियाहृतः ॥ सर्वसौख्यप्रदात्रीत्वां
गतात्यक्त्वाक्षणेनसा ॥ १२ ॥ वेश्यासश्रीकमिच्छन्तीनिःश्रीकंनचचञ्चला ॥ नवंनवंप्रार्थयन्तीपरिनिन्द्यपुरातनम् ॥ १३ ॥ यद्गतं
तद्गतंवत्सनिष्पन्नंननिवर्त्तते ॥ भजनारायणंभक्त्यापद्मायाःप्राप्तिहेतवे ॥ १४ ॥ इत्युक्त्वातंजगत्स्रष्टुःस्तोत्रञ्चकवचंददौ ॥ नारायण ॥१९२॥
स्यमन्त्रञ्चनारायणपरायणः ॥ १५ ॥ सतैःसार्द्धञ्चगुरुणाह्यजपन्मन्त्रमीप्सितम् ॥ गृहीत्वाकवचंतेनपर्यष्टौत्पुष्करेहरिम् ॥ १६ ॥

वर्षमेकंनिराहारोभारतेपुण्यदेशुभे ॥ सिषेवेकमलाकान्तंकमलाप्राप्तिहेतवे ॥ १७ ॥ आगत्यतंहरिस्तस्मैवाञ्छितञ्चवरंददौ ॥ लक्ष्मी
स्तोत्रञ्चकवचंमन्त्रमैश्वर्य्यवर्द्धनम् ॥ १८ ॥ दत्त्वाजगामवैकुण्ठमिन्द्रःक्षीरोदमेवच ॥ गृहीत्वाकवचंस्तुत्वाप्रापपद्मालयांमुने ॥
॥ १९ ॥ सुरेश्वरोऽरिंजित्वावैह्यलभच्चामरावतीम् ॥ प्रत्येकञ्चसुराःसर्वेस्वालयंप्रापुरीप्सितम् ॥ २० ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणे
तृतीयेगणपतिखण्डेनारदनारायणसंवादेशक्रलक्ष्मीप्राप्तिर्नामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ नारदउवाच ॥ ॥
आविर्भूयहरिस्तस्मैकिंस्तोत्रंकवचंददौ ॥ महालक्ष्म्याश्चलक्ष्मीशस्तन्मेब्रूहितपोधन ॥ १ ॥ ॥ नारायणउवाच ॥ ॥ पुष्करेच
तपस्तप्त्वाविररामसुरेश्वरः ॥ आविर्बभूवतत्रैवक्लिष्टंदृष्ट्वाहरिःस्वयम् ॥ २ ॥ तमुवाचहृषीकेशोवरंवृणुयथेप्सितम् ॥ सचवव्रेवरंलक्ष्मी
मीशस्तस्मैददौमुदा ॥ ३ ॥ वरंदत्त्वाहृषीकेशःप्रवक्तुमुपचक्रमे ॥ हितंसत्यञ्चसारंचपरिणामसुखावहम् ॥ ४ ॥ ॥ श्रीमधुसूदन
उवाच ॥ ॥ गृहाणकवचंशक्रसर्वदुःखविनाशनम् ॥ परमैश्वर्य्यजनकंसर्वशत्रुविमर्दनम् ॥ ५ ॥ ब्रह्मणेचपुरादत्तंविष्टपेचजलप्लुते ॥
यद्धृत्वाजगतांश्रेष्ठःसर्वैश्वर्य्ययुतोविधिः ॥ ६ ॥ बभूवुर्मनवःसर्वेसर्वैश्वर्य्ययुतायतः ॥ सर्वैश्वर्य्यप्रदस्यास्यकवचस्यऋषिर्विधिः ॥ ७ ॥
पङ्क्तिश्छन्दश्चसादेवीस्वयंपद्मालयावरा ॥ सिद्ध्यैश्वर्य्यसुखेष्वेवविनियोगःप्रकीर्त्तितः ॥ यद्धृत्वाकवचंलोकःसर्वत्रविजयीभवेत् ॥
॥ ८ ॥ मस्तकंपातुमेपद्माकण्ठंपातुहरिप्रिया ॥ नासिकांपातुमेलक्ष्मीःकमलापातुलोचने ॥ ९ ॥ केशान्केशवकान्ताचकपालंकम
लालया ॥ जगत्प्रसूर्गण्डयुग्मंस्कन्धंसम्पत्प्रदासदा ॥ १० ॥ ॐश्रींकमलवासिन्यैस्वाहापृष्ठंसदावतु ॥ ॐह्रींश्रींपद्मालयायैस्वाहावक्षः
सदावतु ॥ पातुश्रीर्ममकङ्कालंबाहुयुग्मञ्चतेनमः ॥ ११ ॥ ॐह्रींश्रींलक्ष्म्यैनमःपादौपातुमेसंततञ्चिरम् ॥ ॐह्रींश्रींनमःपद्मायैस्वाहा
पातुनितम्बकम् ॥ १२ ॥ ॐश्रींमहालक्ष्म्यैस्वाहासर्वाङ्गंपातुमेसदा ॥ ॐह्रींश्रींक्लींमहालक्ष्म्यैस्वाहामांपातुसर्वतः ॥ १३ ॥ इति ते क
थितंवत्ससर्वसम्पत्करंपरम् ॥ सर्वैश्वर्य्यप्रदंनामकवचंपरमाद्भुतम् ॥ १४ ॥ गुरुमभ्यर्च्यविधिवत्कवचंधारयेत्तु यः ॥ कण्ठेवादक्षिणे
बाहौससर्वविजयीभवेत् ॥ १५ ॥ महालक्ष्मीर्गृहंतस्यनजहातिकदाचन ॥ तस्यच्छायेवसततंसाचजन्मनिजन्मनि ॥ १६ ॥ इदं कवच

मज्ञात्वाभजेल्लक्ष्मींसमन्दधीः ॥ शतलक्षप्रजापेपिनमन्त्रःसिद्धिदायकः ॥ १७ ॥ ॥ नारायणउवाच ॥ ॥ दत्त्वातस्मैचकवचं
मन्त्रंवैषोडशाक्षरम् ॥ सन्तुष्टश्चजगन्नाथोजगतांहितकारणम् ॥ १८ ॥ ॐह्रींश्रींक्लींनमोमहालक्ष्म्यैस्वाहा ॥ ददौतस्मैचकृपयाचेन्द्रा
यचमहामुने ॥ १९ ॥ ध्यानञ्चसामवेदोक्तंगोपनीयंसुदुर्लभम् ॥ सिद्धैर्मुनीन्द्रैर्दुष्प्राप्यंध्रुवंसिद्धिप्रदंशुभम् ॥ २० ॥ श्वेतचम्पकवर्णा
भांशतचन्द्रसमप्रभाम् ॥ वह्निशुद्धांशुकाधानांरत्नभूषणभूषिताम् ॥ २१ ॥ ईषद्धास्यप्रसन्नास्यांभक्तानुग्रहकारिकाम् ॥ सहस्रदलपद्म
स्थांस्वस्थाञ्चसुमनोहराम् ॥ २२ ॥ शान्ताञ्चश्रीहरेःकान्तांतांभजेज्जगतांप्रसूम् ॥ २३ ॥ ध्यानेनानेनदेवेन्द्रोध्यात्वालक्ष्मींमनोहराम् ॥
भक्त्यासंपूज्यतस्यैचचोपचारांस्तुषोडश ॥ २४ ॥ स्तुत्वानेनस्तवेनैववक्ष्यमाणेनवासव ॥ नत्वावरंगृहीत्वाचलभिष्यसिचनिर्वृतिम् ॥
॥ २५ ॥ स्तवनंशृणुदेवेन्द्रमहालक्ष्म्याःसुखप्रदम् ॥ कथयामिसुगोप्यञ्चत्रिषुलोकेषुदुर्लभम् ॥ २६ ॥ ॥ नारायणउवाच ॥ ॥ देवित्वां
स्तोतुमिच्छामिनक्षमाःस्तोतुमीश्वराः ॥ बुद्धेरगोचरांसूक्ष्मांतेजोरूपांसनातनीम् ॥ अनिर्वाच्यगुणाढ्याञ्चकोवानिर्वक्तुमीश्वरः ॥ २७ ॥
स्वेच्छामयींनिराकारांभक्तानुग्रहविग्रहाम् ॥ स्तौमिवाङ्मनसापारांकिंवाऽहंजगदम्बिके ॥ २८ ॥ परांचतुर्णांवेदानांपारबीजंभवार्णवे ॥
सर्वसस्याधिदेवींचसर्वासामपिसम्पदाम् ॥२९॥ योगिनांचैवयोगानांज्ञानानांज्ञानिनांतथा ॥ वेदानांवैवेदविदांजननींवर्णयामिकिम् ॥
॥ ३० ॥ ययाविनाजगत्सर्वमबीजंनिष्फलंध्रुवम् ॥ यथास्तनंधयानांचविनामात्रासुखंभवेत् ॥ ३१ ॥ प्रसीदजगतांमातारक्षास्मान
तिकातरान् ॥ वयंत्वच्चरणाम्भोजेप्रपन्नाःशरणंगताः ॥ ३२ ॥ नमःशक्तिस्वरूपायैजगन्मात्रेनमोनमः ॥ ज्ञानदायैबुद्धिदायैसर्वदायैनमो
नमः ॥ ३३ ॥ हरिभक्तिप्रदायिन्यैमुक्तिदायैनमोनमः ॥ सर्वज्ञायैसर्वदायैमहालक्ष्म्यैनमोनमः ॥ ३४ ॥ कुपुत्राःकुत्रचित्सन्तिन
कुत्रापिकुमातरः ॥ कुत्रमातापुत्रदोषंतंविहायचगच्छति ॥ ३५ ॥ स्तनन्धयेभ्यइवमेहेमातर्देहिदर्शनम् ॥ कृपांकुरुकृपासिन्धोत्वम
स्मान्भक्तवत्सले ॥ ३६ ॥ इत्येवंकथितंवत्सपद्मायाश्चशुभावहम् ॥ सुखदंमोक्षदंसारंशुभदंसम्पदःप्रदम् ॥ ३७ ॥ इदंस्तोत्रंमहापुण्यं

१ नक्षमाःस्तोतुमित्यपि पाठः ।

पूजाकालेचयःपठेत् ॥ महालक्ष्मीर्गृहंतस्यनजहातिकदाचन ॥ २८ ॥ इत्युक्त्वाश्रीहरिस्तत्रतत्रैवान्तरधीयत ॥ देवोजगामक्षीरोदंसु
रैःसार्द्धंतदाज्ञया ॥ २९ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेलक्ष्मीस्तवकवचपूजाकथनंनामद्वा
विंशतितमोऽध्यायः ॥ २२ ॥ ॥ छ ॥ ॥ नारायणउवाच ॥ ॥ इन्द्रश्चगुरुणासार्द्धंसुरैस्संहृष्टमानसः ॥ जगामशीघ्रंपद्मायै
तीरंक्षीरपयोनिधेः ॥ कवचञ्चगलेबद्ध्वामद्रत्नगुटिकान्वितम् ॥ मनसास्तवनंदिव्यंस्मारंस्मारंपुनःपुनः ॥ १ ॥ तेसर्वेभक्तियुक्ता
श्चतुष्टुवुःकमलालयाम् ॥ साश्रुनेत्राश्चदीनाश्चभक्तिनम्रात्मकन्धराः ॥ २ ॥ सातेपांस्तवनंश्रुत्वासद्यःसाक्षाद्बभूवह ॥ सहस्रदलपद्म
स्थाशतचन्द्रसमप्रभा ॥ ३ ॥ जगद्व्याप्तंसुप्रभयाजगन्मात्रंययामुने ॥ तानुवाचजगद्धात्रीहितंसारंयथोचितम् ॥ ४ ॥ ॥ श्रीमहाल
क्ष्मीरुवाच ॥ ॥ वत्सानेच्छामिवोगेहान्गन्तुंनैवंक्षमाधुना ॥ भ्रष्टान्दृष्ट्वाब्रह्मशापाद्बिभेमिब्रह्मशापतः ॥ ५ ॥ प्राणामेब्राह्मणाःस
र्वेशश्वत्पुत्राधिकंप्रियाः ॥ विप्रदत्तञ्चयत्किञ्चिदुपर्जाव्यंसदैवच ॥ ६ ॥ विप्राब्रुवन्तुमांतुष्टायास्यामिभवदाज्ञया ॥ नमेपूजांध्रुवंकर्तुं
क्षमास्तेचतपस्विनः ॥ ७ ॥ गुरुभिर्ब्राह्मणैर्देवैर्भिक्षुभिर्वैष्णवैस्तथा ॥ यद्भाग्यंभवद्दैवात्तेशप्ताःसन्तितैस्सदा ॥ ८ ॥ नारायणश्चभग
वान्बिभेतिब्रह्मशापतः ॥ सर्वबीजञ्चभगवान्सर्वेशश्चसनातनः ॥ ९ ॥ एतस्मिन्नन्तरेब्रह्मन्ब्राह्मणाहृष्टमानसाः ॥ आजग्मुःसस्मिताः
सर्वेज्वलन्तोब्रह्मतेजसा ॥ १० ॥ अङ्गिराश्चप्रचेताश्चक्रतुश्चभृगुरेवच ॥ पुलहश्चपुलस्त्यश्चमरीचिश्चात्रिरेवच ॥ ११ ॥ सनकश्चसन
न्दश्चतृतीयश्चसनातनः ॥ सनत्कुमारोभगवान्साक्षान्नारायणात्मकः ॥ १२ ॥ कपिलश्चासुरिश्चैववोढुःपञ्चशिखस्तथा ॥ दुर्वासाः
कश्यपोऽगस्त्योगौतमःकण्वएवच ॥ १३ ॥ और्वःकात्यायनश्चैवकणादःपाणिनिस्तथा ॥ मार्कण्डेयोलोमशश्चवसिष्ठोभगवान्स्वयम्
॥ १४ ॥ ब्राह्मणाविविधैर्द्रव्यैःपूजयामासुरीश्वरीम् ॥ देवाश्चारण्यनैवेद्यैरुपहारेणभक्तितः ॥ १५ ॥ स्तुत्वामुनीन्द्रास्तांभक्त्याचक्रुरा
राधनंमुदा ॥ आगच्छदेवभवनंमर्त्यञ्चजगदम्बिके ॥ १६ ॥ तेपांतद्वचनंश्रुत्वातानुवाचजगत्प्रसूः ॥ परितुष्टागामुकीचनिर्भयाब्राह्म
णाज्ञया ॥ १७ ॥ ॥ श्रीमहालक्ष्मीरुवाच ॥ ॥ गृहान्यास्यामिदेवानांयुष्माकंचाज्ञयाद्विजाः ॥ येपांगेहंनगच्छामिशृणुध्वंभार

ब्र. वै.
॥१९४॥

तेषुच ॥ १८ ॥ स्थिरगपुण्यवतांगेहेसुनीतिपथवेदिनाम् ॥ गृहस्थानांनृपाणांवापुत्रवत्पालयामितान् ॥ १९ ॥ यंयंरुष्टोगुरुर्देवोमाता
तातश्चबान्धवाः ॥ अतिथिःपितृलोकश्चयामितस्यनमन्दिरम् ॥ २० ॥ मिथ्यावादीचयःशश्वदनध्यायीचयःसदा ॥ सत्त्वहीनश्चदु
श्शीलोनगेहंतस्ययाम्यहम् ॥ २१ ॥ सत्यहीनःस्थाप्यहारीमिथ्यासाक्ष्यप्रदायकः ॥ विश्वासघ्नःकृतघ्नोयोयामितस्यनमन्दिरम् ॥
॥ २२ ॥ चिन्ताग्रस्तोभयग्रस्तःशत्रुग्रस्तोऽतिपातकी ॥ ऋणग्रस्तोऽतिकृपणोनगेहंयामिपापिनाम् ॥ २३ ॥ दीक्षाहीनश्चशोकार्त्तो
मन्दधीःस्त्रीजितःसदा ॥ नयाम्यपिकदागेहंपुंश्चल्याःपतिपुत्रयोः ॥ २४ ॥ योदुर्वाक्कलहाविष्टःकलिःशश्वद्यदालये ॥ स्त्रीप्रधानागृहेय
स्ययामितस्यनमन्दिरम् ॥ २५ ॥ यत्रनास्तिहरेःपूजातदीयगुणकीर्त्तनम् ॥ नोत्सुकस्तत्प्रशंसायांयामितस्यनमन्दिरम् ॥ २६ ॥
कन्यान्नवेदविक्रेतानरघातीचहिंसकः ॥ नरकागारसदृशंयामितस्यनमन्दिरम् ॥ २७ ॥ मातरंपितरंभार्यांगुरुपत्नींगुरुंसुतम् ॥ अना
थांभगिनींकन्यामनन्याश्रयबान्धवान् ॥ २८ ॥ कार्पण्याद्योनपुष्णातिसञ्चयंकुरुतेसदा ॥ तद्गेहान्नरकागारान्यामितान्नमुनीश्वराः ॥
॥ २९ ॥ दशनंवसनंयस्यसमलंरूक्षमस्तकम् ॥ विकृतोग्रासहासोचयामितस्यनमन्दिरम् ॥ ३० ॥ मूत्रंपुरीषमुत्सृज्ययस्तत्पश्यति
मन्दधीः ॥ यःशेतेस्निग्धपादेनयामितस्यनमन्दिरम् ॥ ३१ ॥ अधौतपादशायीयोनग्नःशेतेऽतिनिद्रितः ॥ सन्ध्याशायीदिवाशायी
यामितस्यनमन्दिरम् ॥ ३२ ॥ मूर्ध्नितैलंपुरोदत्त्वायोऽन्यदङ्गमुपस्पृशेत् ॥ ददातिपश्चाद्गात्रेवायामितस्यनमन्दिरम् ॥ ३३ ॥ दत्त्वा
तैलंमूर्ध्निगात्रेविण्मूत्रंयःसमुत्सृजेत् ॥ प्रणमेदाहरेत्पुष्पंयामितस्यनमन्दिरम् ॥ ३४ ॥ तृणंछिनत्तिनखरैर्नखैर्विलिखेन्महीम् ॥
गात्रेपादेमलंयस्ययामितस्यनमन्दिरम् ॥ ३५ ॥ स्वदत्तांपरदत्तांवाब्रह्मवृत्तिंसुरस्यच ॥ योहरेज्ज्ञानशीलश्चयामितस्यनमन्दिरम् ॥
॥ ३६ ॥ यत्कर्मदक्षिणाहीनंकुरुतेमूढधीःशठः ॥ सपापीपुण्यहीनश्चयामितस्यनमन्दिरम् ॥ ३७ ॥ मन्त्रविद्योपजीवीचग्रामयाजी
चिकित्सकः ॥ सूपकृद्देवलश्चैवयामितस्यनमन्दिरम् ॥ ३८ ॥ विवाहंधर्मकार्यंवायोनिहन्तिचकोपतः ॥ दिवामैथुनकारीयोया
मितस्यनमन्दिरम् ॥ ३९ ॥ इत्युक्त्वासामहालक्ष्मीरन्तर्द्धानंजगामह ॥ ददौदृष्टिंचदेवानांगृहेमर्त्येचनारद ॥ ४० ॥ तांप्रणम्यसुराः

ग. खं. ३
अ० २३.
॥१९४॥

सर्वेमुनयश्चमुदान्विताः ॥ प्रजग्मुःस्वालयंशीघ्रंशत्रुत्यक्तंसुहृद्युतम् ॥ ४१ ॥ नेदुर्दुन्दुभयःस्वर्गेबभूवुःपुष्पवृष्टयः ॥ प्रापुर्देवाःस्वराज्यं चनिश्चलांकमलांमुने ॥ ४२ ॥ इत्येवंकथितंवत्सलक्ष्मीचरितमुत्तमम् ॥ सुखदंमोक्षदंसारंकिंपुनःश्रोतुमिच्छसि ॥ ४३ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेगणपतेर्गजास्यत्वकारणलक्ष्मीब्राह्मणविरोधादिलक्ष्मीचरित्रकथनंनाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ नारदउवाच ॥ ॥ नारायणमहाभागहरेरंशसमुद्भव ॥ सर्वंश्रुतंत्वत्प्रसादाद्गणेशचरितंशुभम् ॥ १ ॥ दन्तद्वययुतंवक्रंगजराजस्यबालके ॥ विष्णुनायोजितंब्रह्मन्नेकन्दतः कथंशिशुः ॥ २ ॥ कुतोगतोऽस्यदन्तोऽन्यस्तद्भवान्वक्तुमर्हति ॥ सर्वेश्वरस्त्वंसर्वज्ञःकृपावान्भक्तवत्सलः ॥ ३ ॥ ॥ सूतउवाच ॥ ॥ नारदस्यवचःश्रुत्वास्मेराननसरोरुहः ॥ एकदन्तस्यचरितंप्रवक्तुमुपचक्रमे ॥ ४ ॥ ॥ नारायणउवाच ॥ ॥ शृणुनारदवक्ष्येऽहमितिहासंपुरातनम ॥ एकदन्तस्यचरितंसर्वमङ्गलमङ्गलम् ॥ ५ ॥ एकदाकार्त्तवीर्य्यश्चजगाममृगयांमुने ॥ मृगान्निहत्यबहुलान्परिश्रान्तोबभूवसः ॥ ६ ॥ निशामुखेदिनेऽतीतेनत्रतस्थौवनेनृपः ॥ जमदग्न्याश्रमाभ्याशेचोपोष्यानीकसंयुतः ॥ ७ ॥ प्रातःसरोवरेगजास्नातःशुचिरलंकृतः ॥ तदात्रेयेनदत्तञ्चब्रह्मजपञ्चक्तितोमनुम् ॥ ८ ॥ मुनिर्ददर्शराजानंशुष्ककण्ठौष्ठतालुकम् ॥ प्रीत्यादरेणमृदुलंपप्रच्छकुशलंमुनिः ॥ ९ ॥ ननामसम्भ्रमाद्राजामुनिंसूर्य्यसमप्रभम् ॥ सचतस्मैददौप्रीत्याप्रणतायशुभाशिषः ॥ १० ॥ वृत्तान्तंकथयामासराजाचानशनादिकम् ॥ संभ्रमेणैवमुनिनात्रस्तोराजानिमन्त्रितः ॥ ११ ॥ विज्ञाप्यतंमुनिश्रेष्ठःप्रययौस्वालयंमुदा ॥ एतद्वृत्तंकामधेनुंकथयामासभीतवत् ॥ ॥ १२ ॥ उवाचसामुनिंभीतंभयंकिंतेमयिस्थिते ॥ जगद्भोजयितुंशक्तस्त्वंमयाकोनृपोमुने ॥ १३ ॥ राजभोजनयोग्यार्हंयद्द्रव्यंप्रयाचसे ॥ सर्वंतुभ्यंप्रदास्यामित्रिपुलोकेषुदुर्लभम् ॥ १४ ॥ सौवर्णानिवराण्याणिपात्राणिविविधानिच ॥ भोजनार्हाण्यसंख्यानिपाकपात्राणियानिच ॥ १५ ॥ पात्राणिस्वादुपूर्णानिप्रददौमुनयेचसा ॥ नानाविधानिस्वादूनिपरिपक्वफलानिच ॥ १६ ॥ पनसाम्रश्रीफलानिनारिकेलादिकानिच ॥ राशीभूतान्यसंख्यानिस्वादुलड्डुकराशयः ॥ १७ ॥ यवगोधूमचूर्णानांभक्ष्याणिविविधानिच ॥

पक्वान्नानांपर्वतांश्चपरमान्नस्यकन्दरान् ॥ १८ ॥ दुग्धानाञ्चघृतानाञ्चनदीर्दध्नांददौमुदा ॥ शर्कराणांतथाराशिंमोदकानाञ्चपर्वतान् ॥
॥ १९ ॥ पृथुकानांसुशीलानांपर्वतान्प्रददौमुदा ॥ ताम्बूलंचददौपूर्णंकर्पूरादिसुवासितम् ॥ २० ॥ नृपयोग्यंकौतुकाचसुन्दरंवस्त्रभूप
णम् ॥ मुनिःसम्भृतसम्भारोदत्त्वाद्रव्यंमनोहरम् ॥ २१ ॥ भोजयामासराजानंससैन्यमपिलीलया ॥ यद्यत्सुदुर्लभंवस्तुपरिपूर्णंनृप
श्वरः ॥ २२ ॥ जगामविस्मयंराजादृष्ट्वापात्राण्युवाचह ॥ ॥ राजोवाच ॥ ॥ द्रव्याण्येतानिसचिवदुर्लभान्यश्रुतानिच ॥ २३ ॥
ममासाध्यानिसहसाक्वागतान्यवलोकय ॥ नृपाज्ञयाचसचिवःसर्वंदृष्ट्वामुनेर्गृहे ॥ २४ ॥ राजानंकथयामासवृत्तान्तंमहदद्भुतम् ॥
॥ ॥ सचिवउवाच ॥ ॥ दृष्टंसर्वंमहाराजनिबोधमुनिमन्दिरम् ॥ २५ ॥ वह्निकुण्डंयज्ञकाष्ठकुशपुष्पफलान्वितम् ॥ कृष्ण
चर्मस्रुवस्रुग्भिःशिष्यसंघैश्चसङ्कुलम् ॥ २६ ॥ तैजसाधारसम्यादिसर्वसम्पद्विवर्जितम् ॥ वृक्षचर्मपरीधानादृष्टाःसर्वेजटाधराः ॥
॥ २७ ॥ गृहैकदेशेदृष्टासाकपिलैकामनोहरा ॥ चार्वङ्गीचन्द्रवर्णाभारक्तपङ्कजलोचना ॥ २८ ॥ ज्वलन्तीतेजसातत्रपूर्णचन्द्रसम
प्रभा ॥ सर्वसम्पद्गुणाधारासाक्षादिवहरिप्रिया ॥ २९ ॥ इत्येवंबोधितोराजादुर्बुद्धिःसचिवाज्ञया ॥ मुनिंययाचेतांधेनुंनिबद्धःकालपा
शतः ॥ ३० ॥ किंवापुण्यञ्चकाबुद्धिकःकालःसर्वतोबली ॥ पुण्यवान्बुद्धिमान्दैवाद्राजेन्द्रोयाचतद्विजम् ॥ ३१ ॥ पुण्यात्प्रजायते
कर्मपुण्यरूपञ्चभारते ॥ पापात्प्रजायतेकर्मपापरूपंभयावहम् ॥ ३२ ॥ पुण्यात्कृत्वास्वर्गभोगंजन्मपुण्यस्थलेनृणाम् ॥ पापाद्दुःखाच्च
नरकंकुत्सितंजन्मजीविनाम् ॥ ३३ ॥ जीविनांनिष्कृतिर्नास्तिस्थितेकर्मणिनारद ॥ तेनकुर्वन्तिसन्तश्चसन्ततंकर्मणःक्षयम् ॥३४॥
साविद्यातत्तपोज्ञानंसगुरुःसचबान्धवः ॥ सामातासपितापुत्रस्तत्क्षयंकारयेत्तुयः ॥ ३५ ॥ जीविनांदारुणोरोगःकर्मभोगःशुभाशुभः ॥
भक्तवैद्यस्तंनिहन्तिकृष्णभक्तिरसायनात् ॥ ३६ ॥ मायाददातितांभक्तिंप्रतिजन्मनिसेविता ॥ परितुष्टाजगद्धात्रीभक्तेभ्योबुद्धि
दायिनी ॥ ३७ ॥ परापरमभक्तायमायायस्मैददातिच ॥ मायांतस्मैमोहयितुंनविवेकंकदाचन ॥ ३८ ॥ मायाविमोहितोराजामुनि
मानीययत्नतः ॥ उवाचविनयाद्भक्त्याकृताञ्जलिपुटोमुदा॥३९॥ ॥ राजोवाच ॥ ॥ देहिभिक्षांकल्पतरोकामधेनुञ्चकामदाम् ॥ मह्यंभ

त्कार्यंभक्तेशभक्तानुग्रहकारक ॥ ४० ॥ युष्मद्विधानांदातॄणामदेयंनास्तिभारते ॥ दधीचिर्देवताभ्यश्चददौस्वास्थिपुराश्रुतम् ॥ ४१ ॥
भ्रूभङ्गलीलामात्रेणतपोराशेतपोधन ॥ समूहंकामधेनूनांस्रष्टुंशक्तोऽसिभारते ॥ ४२ ॥ ॥ मुनिरुवाच ॥ ॥ अहोव्यतिक्रमंरा
जन्त्रवीषिशठवञ्चक ॥ दानंदास्यामिविप्रोऽहंक्षत्रियायकथंनृप ॥ ४३ ॥ कृष्णेनदत्तागोलोकेब्रह्मणेपरमात्मना ॥ कामधेनुरियंयज्ञेन
देयाप्राणतःप्रिया ॥ ४४ ॥ ब्रह्मणाभृगवेदत्ताप्रियपुत्रायभूमिप ॥ मह्यंदत्ताचभृगुणाकपिलापैतृकीमम ॥ ४५ ॥ गोलोकजाकाम
धेनुर्दुर्लभाभुवनत्रये ॥ लीलामात्रात्कथमहंकपिलांस्रष्टुमीश्वरः ॥ ४६ ॥ नाहंगोपालिकोमूढस्तुल्यानोत्थापितोबुधः ॥ क्षणेनभस्मसा
त्कर्तुंक्षमोऽहमतिथिंविना ॥ ४७ ॥ गृहंगच्छगृहंगच्छमेकोपंनैववर्द्धय ॥ पुत्रदारादिकंपश्यदैवबाधितपामर ॥ ४८ ॥ मुनेस्तद्वचनं
श्रुत्वाचुकोपसनराधिपः ॥ नत्वामुनिंसैन्यमध्यंप्रययौविधिबाधितः ॥ ४९ ॥ गत्वासैन्यमकाशंसकोपप्रस्फुरिताधरः ॥ किङ्करा
न्प्रेषयामासधेनुमानयितुंबलात् ॥ ५० ॥ कपिलासन्निधिंगत्वारुरोदमुनिपुङ्गवः ॥ कथयामासवृत्तान्तंशोकेनहतचेतनः ॥ ५१ ॥
रुदन्तंब्राह्मणंदृष्ट्वासुरभिस्तमुवाचह ॥ साक्षाल्लक्ष्मीस्वरूपासाभक्तानुग्रहकारिका ॥ ५२ ॥ ॥ सुरभिरुवाच ॥ ॥ इन्द्रोवापालि
कोवापिवस्तुस्वंदातुमीश्वरः ॥ शास्तापालयितादातास्ववस्तूनाञ्चमन्ततम् ॥ ५३ ॥ स्वेच्छयाचेन्नृपेन्द्रायमांददासितपोधन ॥ तेनसा
र्द्धंगमिष्यामिस्वेच्छयाचतवाज्ञया ॥ ५४ ॥ अथवानददासित्वंनगमिष्यामितेगृहात् ॥ मत्तोदत्तेनसैन्येनदूरीकुरुनृपंद्विपम् ॥ ५५ ॥
कथंरोदिषिसर्वज्ञमायामोहितचेतनः ॥ संयोगश्चवियोगश्चकालसाध्योनचात्मनः ॥५६॥ त्वंवाकोमेतवाहंकासम्बन्धःकालयोजितः ॥
यावदेवहिसम्बन्धोममत्वंतावदेवहि ॥ ५७ ॥ मनोजानातियद्द्रव्यमात्मीयंचेतिकेवलम् ॥ दुःखञ्चतस्यविच्छेदाद्यावत्स्वत्वञ्चतत्रवै ॥
॥ ५८ ॥ इत्युक्त्वाकामधेनुश्चसुपावविविधानिच ॥ शस्त्राण्यस्त्राणिसैन्यानिसूर्यतुल्यप्रभाणिच ॥ ५९ ॥ निर्गताःकपिलावक्त्रात्त्रिको
टयःखड्गधारिणाम् ॥ विनिस्सृतानासिकायाःशूलिनःपञ्चकोटयः ॥ ६० ॥ विनिस्सृतालोचनाभ्यांशतकोटिधनुर्द्धराः ॥ कपाला
न्निसृतावीरास्त्रिकोटचोदण्डधारिणाम् ॥ ६१ ॥ वक्षस्स्थलान्निस्सृताश्चत्रिकोटिश्शक्तिधारिणाम् ॥ शतकोटचोगदाहस्ताःपृष्ठदेशाद्वि

॥ विनिर्गतागुह्य
निर्गताः ॥ ६२ ॥ विनिस्सृताःपादतलाद्राद्यभाण्डाःसहस्रशः ॥ जंघादेशान्निस्सृताश्चत्रिकोटचोराजपुत्रकाः ॥ ६३ ॥ ... ॥ ६४ ॥ मुनिः
देशात्रिकोटिम्लेच्छजातयः ॥ दत्त्वासैन्यानिकपिलामुनयेचाभयंददौ ॥ युद्धंकुर्वन्तुसैन्यानित्वंनयाहीत्युवाचह ॥ ६४ ॥ मुनिः
देशात्रिकोटिम्लेच्छजातयः ॥ दत्त्वासैन्यानिकपिलामुनयेचाभयंददौ ॥ युद्धंकुर्वन्तुसैन्यानित्वंनयाहीत्युवाचह ॥ ६४ ॥ मुनिः
सम्भृतसम्भारैर्हर्षयुक्तोबभूवह ॥ नृपेणप्रेरितोभृत्योनृपंसर्वमुवाचह ॥ ६५ ॥ कपिलासैन्यवृत्तान्तमात्मवर्गपराजयम् ॥ तच्छ्रुत्वानृप
शार्दूलस्त्रस्तःकातरमानसः ॥ दूतान्संप्रेष्यसैन्यानिचाजहारस्वदेशतः ॥ ६६ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेना
रदनारायणसंवादएकदन्तत्वहेतुप्रश्नप्रसङ्गेजमदग्निकार्त्तवीर्ययुद्धारंभवर्णनंनामचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ नाराय
णउवाच ॥ ॥ हरिंस्मरन्कार्तवीर्य्योहृदयेनविदूयता ॥ दूतंप्रस्थापयामासकुपितोमुनिसन्निधिम् ॥ १ ॥ युद्धंदेहिमुनिश्रेष्ठकिंवाधेनु
स्ववाञ्छिताम् ॥ मह्यंभृत्यायातिथयेसुविचार्य्ययथोचितम् ॥ २ ॥ दूतस्यवचनंश्रुत्वाजहासमुनिपुङ्गवः ॥ हितंसत्यंनीतिसारंसर्वंदूत
मुवाचह ॥३॥ मुनिरुवाच ॥ ॥ दृष्टोनृपोनिराहारःसमानीतोमयागृहम् ॥ विविधश्चयथाशक्त्याभोजितश्चयथोचितम् ॥४॥ कपिलांया
चनेराजाममप्राणाधिकांप्रियाम् ॥ तांदातुमक्षमोदूतयुद्धंदास्यामिनिश्चितम् ॥ ५ ॥ मुनेस्तद्वचनंश्रुत्वादूतःसर्वमुवाचह ॥ नृपेन्द्रश्चम
नामध्येसन्नाहैस्संयुतंभिया ॥ ६ ॥ मुनिश्चकपिलामाहमाम्प्रतंकिङ्करोम्यहम् ॥ कर्णधारंविनानौकानथासैन्यंविनामया ॥७॥ कपिला
चददौतस्मैशस्त्राणिविविधानिच ॥ युद्धशास्त्रोपदेशश्चसन्धानश्चोपयोगिकम् ॥ ८ ॥ जयंभवतुतेविप्रयुद्धेजेष्यसिनिश्चितम् ॥ तवमृत्युर्न
भवितासत्यमस्त्रंविनामुने ॥ ९ ॥ नृपेणसार्द्धंतेयुद्धमयुक्तंब्राह्मणस्यच ॥ दत्तात्रेयस्यशिष्येणव्यर्थंश्चशक्तिधारिणा ॥ इत्युक्ताकपिलाब्रह्म
न्विरराममनस्विनी ॥ १० ॥ मुनिर्मनस्वीसैन्यश्चसज्जीकृत्यततोमुने ॥ गृहीत्वासर्वसैन्यश्चसजगामरणाजिरम् ॥ ११ ॥ राजाजगा
मयुद्धायननामसुनिपुङ्गवम् ॥ उभयोःसैन्ययोर्युद्धंबभूवबहुदुष्करम् ॥ १२ ॥ राजसैन्यंजितंसर्वंकपिलासेनयाबलात् ॥ विचित्रंचरथंरा
ज्ञोबभंजेलीलयारणे ॥ १३ ॥ धनुश्चिच्छेदसज्यंतत्सामेनाकापिलीमुदा ॥ नृपेन्द्रःकापिलेयानिजेतुंसैन्यानिचाक्षमः ॥ १४ ॥ सैन्या
नितंशस्त्रवृष्टयाचान्यस्तशस्त्रश्चकारह ॥ शरवृष्ट्याशस्त्रवृष्टयाराजामूर्च्छामवापह ॥ १५ ॥ किञ्चिच्छिष्टंबलंराज्ञःकिंचिदेवपलायितम् ॥

मुनीन्द्रोमूर्च्छितंदृष्ट्वानृपेन्द्रमतिथिंमुने ॥ १६ ॥ कृपानिधिश्चकृपयातत्सैन्यंसञ्जहारच ॥ गत्वासैन्यंविलीनञ्चकपिलायांचकृत्रिमम् ॥
॥ १७ ॥ नृपायमुनिनाशीघ्रंदत्ताश्चरणरेणवः ॥ आशीर्वादंप्रदत्तञ्चजयोऽस्त्वितिकृपालुना ॥ कमण्डलुजलंप्रोक्ष्यजीवयामासतं
नृपम् ॥ १८ ॥ सराजाचेतनांप्राप्यसमुत्थायरणाजिरात् ॥ मूर्ध्नाननामभक्त्याचमुनिश्रेष्ठंकृतांजलिः ॥ १९ ॥ मुनिःशुभाशिषंदत्त्वा
राजानंत्वालिलिङ्गसः ॥ पुनस्तंस्नापयित्वाचभोजयामासयत्नतः ॥ २० ॥ नवनीतंहिहृदयंब्राह्मणानांतुसन्ततम् ॥ अन्येषांक्षुरधा
रासमसाध्यंदारुणंसदा ॥ उवाचतंमुनिश्रेष्ठोगृहंगच्छधराधिप ॥ २१ ॥ ॥ राजोवाच ॥ ॥ रणंदेहिमहाबाहोधर्म्मंकिंवामयेप्सि
ताम् ॥ २२ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेजमदग्निकार्तवीर्यार्जुनयुद्धवर्णनंनामपञ्चविंशतित
मोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ नारायणउवाच ॥ ॥ हरिंस्मरन्मुनिश्रेष्ठोवाक्यंश्रुत्वाचभूभृतः ॥ हितंसत्यंनीतिसारंप्रवक्तुमु
पचक्रमे ॥ १ ॥ ॥ मुनिरुवाच ॥ ॥ गृहंगच्छमहाभागरक्षधर्मंसनातनम् ॥ सर्वसम्पत्स्थिराशश्वत्स्थितेधर्मेसुनिश्चितम् ॥ २ ॥
त्वांचदृष्ट्वानिराहारंसमानीयगृहंनृप ॥ तवपूजामकरवंयथाशक्तिविधानतः ॥ ३ ॥ साम्प्रतंमूर्छितंदृष्ट्वापादरेणुंशुभाशिषम् ॥ अददां
चेतयांचक्रेवक्तुमेवोचितंनच ॥ ४ ॥ नृपस्तद्वचनंश्रुत्वाप्रणम्यमुनिपुङ्गवम् ॥ रथमन्यंसमारुरोहयुद्धंदेहीत्युवाचह ॥ ५ ॥ मुनिःकृत्वा
चसन्नाहंतंयोद्धुमुपचक्रमे ॥ राजातंयुयुधेतत्रकोपेनाहतचेतनः ॥ ६ ॥ कपिलादत्तशस्त्रेणन्यस्तशस्त्रंचकारतम् ॥ कपिलादत्तयाशक्त्या
पुनर्मूर्च्छामवापच ॥ ७ ॥ पुनश्चचेतनांप्राप्यराजाराजीवलोचनः ॥ मुनिनायुयुधेतत्रकोपेनपुनरेवच ॥ ८ ॥ आग्नेयंयोजयामाससम
रेनृपपुङ्गवः ॥ मुनिर्निर्वापयामासवारुणेनचलीलया ॥ ९ ॥ नृपेन्द्रोवारुणास्त्रञ्चचिक्षेपसमरेमुनौ ॥ वायव्यास्त्रेणसमुनिःशमयामास
लीलया ॥ १० ॥ वायव्यास्त्रंनृपश्रेष्ठश्चिक्षेपसमरेतदा ॥ गान्धर्वेणमुनिश्रेष्ठःशमयामासतत्क्षणम् ॥ ११ ॥ नागास्त्रञ्चनृपश्रेष्ठश्चिक्षेप
रणमूर्द्धनि ॥ गारुडेनमुनिश्रेष्ठोनिजघानक्षणान्मुदा ॥ १२ ॥ माहेश्वरंमहास्त्रञ्चशतसूर्य्यसमप्रभम् ॥ चिक्षेपनृपतिश्रेष्ठोद्योतयन्तं
दिशोदश ॥ १३ ॥ वैष्णवास्त्रेणदिव्येनत्रिलोकव्यापकेनच ॥ मुनिर्निर्वापयामासबहुयत्नेननारद ॥ १४ ॥ मुनिर्नारायणास्त्रञ्चचि

क्षि[illegible]मन्त्रपूर्वकम् ॥ शस्त्रंदृष्ट्वामहाराजोननामशरणंययौ ॥ १५ ॥ ऊर्ध्वंचभ्रमणंकृत्वाक्षणंदीप्त्वादिशोदश ॥ प्रलयाग्निसमंतत्रस्वय
मन्तरधीयत ॥ १६ ॥ जृम्भणास्त्रंचसमुनिश्चिक्षेपरणमूर्द्धनि ॥ निद्रांप्रापत्तेनराजासुप्त्वापचमृतोयथा ॥ १७ ॥ दृष्ट्वानृपंनिद्रितंतं
चार्द्धचन्द्रेणतत्क्षणम् ॥ चिच्छेदसारथिंयानंधनुर्बाणंमुनिस्तदा ॥ १८ ॥ मुकुटंचक्षुरप्रेणच्छत्रंसन्नाहमेवच ॥ अस्त्रंतूणंवाजिगणंवि
विधेनचभूभृतः १९ ॥ मुनिस्तत्सचिवान्सर्वान्नागास्त्रेणैवलीलया ॥ निबध्यस्थापयामासप्रहस्यसमरस्थले ॥ २० ॥ मुनिस्तंत्रोधया
मासमुमन्त्रेणैवलीलया ॥ निबद्धसर्वामात्यानांदर्शयामासभूमिपम् ॥ २१ ॥ दर्शयित्वानृपंतांश्चमोचयामासतत्क्षणम् ॥ नृपेन्द्रमाशिषं
कृत्वागृहंगच्छेत्युवाचह ॥ २२ ॥ राजाकोपात्समुत्थायशूलमुद्यम्ययत्नतः ॥ चिक्षेपतंमुनिश्रेष्ठंमुनिःशक्त्याजघानतम् ॥ २३ ॥ एत
स्मिन्नन्तरेब्रह्मासमागत्यरणस्थलम् ॥ सप्रीतिंजनयामाससुनीत्याचपरम्परम् ॥२४॥ मुनिर्ननामब्रह्माणंमनुपुत्रश्चरणस्थले ॥ राजान
त्वाविधिंचर्षिस्वपुरंप्रययौतदा ॥२५॥ मुनिर्ययौस्वाश्रमंचस्वलोकंकमलोद्भवः ॥ इत्येवंकथितंकिंचिदपरंकथयामिते ॥२६॥ इति श्रीब्र
ह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेजमदग्निकार्तवीर्ययुद्धोपशमवर्णनंनामषड्विंशतितमोऽध्यायः ॥२६॥ नाराय
णउवाच ॥ ॥ हरिंस्मृत्वागृहंगत्वाराजाविस्मितमानसः ॥ आजगाममहारण्येजमदग्न्याश्रमंपुनः ॥१॥ रथानांचचतुर्लक्षंरथिनांदश
लक्षकम् ॥ अश्वेन्द्राणांगजेन्द्राणांपदातीनामसंख्यकम् ॥ २ ॥ राजेन्द्राणांमहस्रंचमहाबलपराक्रमम् ॥ महासमृद्धियुक्तश्चत्रैलोक्यंजे
तुमीश्वरः ॥ ३ ॥ सर्वतोवेष्टयामासजमदग्न्याश्रमंमुदा ॥ रथस्थोवर्मयुक्तश्चकार्त्तवीर्य्यार्जुनःस्वयम् ॥ ४ ॥ सैन्यशब्दैर्वाद्यशब्दैर्म
हाकोलाहलैर्मुने ॥ जमदग्न्याश्रमस्थाश्चमूर्च्छामापुर्भयेनच ॥५॥ कुटींप्रविश्यबलवान्गृहीत्वाकपिलांशुभाम् ॥ पुरंगन्तुम्मनश्चक्रेदुर्बु
द्धिरसदाश्रयः ॥ ६ ॥ समुत्तस्थौमुनिश्रेष्ठोगृहीत्वासशरंधनुः ॥ एकाकीमुक्तगात्रश्चधेनुंनत्वाहरिंस्मरन् ॥ ७ ॥ आश्रमस्थाञ्जनान्स
र्वान्समाश्वास्यचयत्नतः ॥ आजगामरणस्थानंनिश्शंकोनृपतेःपुरः ॥ ८ ॥ निर्ममेशरजालंचसमुनिर्मन्त्रपूर्वकम् ॥ आच्छादयत्स्वा
श्रमंतैर्मानवंवर्मणायथा ॥ ९ ॥ अपरंशरजालंचनिर्ममेमुनिपुङ्गवः ॥ तैर्वारयामाससर्वंसैन्यंयथाक्रमम् ॥ १० ॥ मुनिनाशरजाले

नसर्वसैन्यंसमावृतम् ॥ तानिसर्वाणिगुप्तानियथापत्राणिपञ्जरे ॥ ११ ॥ राजादृष्ट्वामुनिश्रेष्ठमवरुह्यरथात्पुरः ॥ सार्द्धंनृपेन्द्रैर्भक्त्याच
प्रणनामकृताञ्जलिः ॥ १२ ॥ नत्वारुरोहयानंसमुनेःप्राप्यशुभाशिषः ॥ आरुह्यचनृपश्रेष्ठःस्वयानंहृष्टमानसः ॥ १३ ॥ नृपैःसार्द्धंनृप
श्रेष्ठश्चिक्षेपमुनिपुङ्गवे ॥ अस्त्रंशस्त्रंगदांशक्तिंजवानक्रीडयामुनिः ॥ मुनिश्चिक्षेपदिव्यास्त्रंचिच्छिदेलीलयानृपः ॥ १४ ॥ शूलञ्चिक्षेप
नृपतिस्तञ्जघानतदामुनिः ॥ अपरंशरजालंचनिर्ममेमुनिपुङ्गवः ॥ १५ ॥ शस्त्रौघैर्दुर्निवार्य्यैश्चखण्डंखण्डंचकारसः ॥ निबद्धाश्शर
जालेननचशक्ताःपलायितुम् ॥ १६ ॥ जृम्भणास्त्रेणमुनिनातेचसर्वेविजृम्भिताः ॥ हस्त्यश्वरथपादातसहितंसर्वसैन्यकम् ॥ १७ ॥
राजानंनिद्रितंदृष्ट्वानजघानमुनीश्वरः ॥ गृहीत्वाकपिलांहृष्टोरुदन्तींशोकमूर्च्छिताम् ॥ बोधयित्वापुरःकृत्वास्वाश्रमंगन्तुमुद्यतः ॥
॥ १८ ॥ एतस्मिन्नन्तरेराजाचेतनांप्राप्यनारद ॥ निवारयामाससमुनिंगृहीत्वासशरंधनुः ॥ १९ ॥ जगामकपिलात्रस्तास्वस्थानञ्च
रणाजिरात् ॥ मुनिश्चतस्थौनिश्शङ्कोगृहीत्वासशरंधनुः ॥ २० ॥ ब्रह्मास्त्रञ्चनृपश्रेष्ठःसचिक्षेपमुनौतदा ॥ ब्रह्मास्त्रेणमुनीन्द्रस्यसद्योनि
र्वाणतांगतम् ॥ २१ ॥ दिव्यास्त्रेणमुनिश्रेष्ठोनृपस्यसशरंधनुः ॥ रथञ्चसारथिंचैवचिच्छिदेवर्मदुर्वहम् ॥ २२ ॥ अथराजामहाक्रुद्धोदद
र्शस्वसमीपतः ॥ दत्तेनदत्तांशक्तिंतामेकपूरुषघातिनीम् ॥ २३ ॥ जग्राहनत्वादत्तंतंसनत्वाशक्तिमुल्बणाम् ॥ चूर्णयामासतत्रैवशतसू
र्य्यसमप्रभाम् ॥ २४ ॥ यत्तेजःसर्वदेवानांतेजोनारायणस्यच ॥ शम्भोश्चब्रह्मणश्चैवमायायाश्चैवनारद ॥ २५ ॥ तत्रैवावाहयामासस
योगीमन्त्रपूर्वकम् ॥ तेजसाद्योतयामासगगनंचदिशोदश ॥ २६ ॥ दृष्ट्वाक्षिपन्तींतांदेवाहाहाकारेणचुक्रुशुः ॥ आकाशस्थाश्चसमरंप
श्यन्तोदुःखिताहृदा ॥ २७ ॥ चिक्षेपतांचूर्णयित्वाकार्त्तवीर्य्यार्जुनःस्वयम् ॥ सद्यःपपातसाशक्तिर्ज्वलन्तीमुनिवक्षसि ॥ २८ ॥
विदार्य्यागेमुनेःशक्तिर्जगामहरिसन्निधिम् ॥ दत्तायहरिणादत्ताशक्तिश्चास्त्रनिर्णयेतदा ॥ २९ ॥ मूर्च्छांसम्प्राप्यसमुनिःप्राणांस्तत्याजत
त्क्षणम् ॥ तेजोऽम्बरेभ्रमित्वाचब्रह्मलोकंजगामह ॥ ३० ॥ युद्धेमुनिंमृतंदृष्ट्वारुरोदकपिलामुहुः ॥ हेतातताततेत्युच्चार्य्यगोलोकंसाज
गामह ॥ ३१ ॥ सर्वंसाकथयामासगोलोकेकृष्णमीश्वरम् ॥ रत्नसिंहासनस्थंतंगोपैर्गोपीभिरावृतम् ॥ ३२ ॥ कृष्णेनब्रह्मणेदत्ताब्रह्म

णाभृगद्देपुरा ॥ साप्रीत्यापुष्करेब्रह्मन्भृगुणाजमदग्नये ॥ ३३ ॥ नत्वाचकामधेनूनांसमूहंसाजगामह ॥ तदश्रुविन्दुनामर्त्त्यैरत्नसंघो
बभूवह ॥ ३४ ॥ अथराजातंनिहत्यबोधयित्वास्वसैन्यकम् ॥ प्रायश्चित्तंविनिर्वर्त्यजगामस्वपुरंमुदा ॥ ३५ ॥ प्राणनाथंमृतंश्रुत्वाज
गामरेणुकासती ॥ मुनिंवक्षसिसंस्थाप्यक्षणंमूर्च्छामवापसा ॥ ३६ ॥ ततःसाचेतनांप्राप्यनरुरोदपतिव्रता ॥ एहिवत्सभृगोरामरामरा
मेत्युवाचह ॥ ३७ ॥ आजगामभृगुस्तूर्णंक्षणाद्वैपुष्करादहो ॥ ननाममातरंभक्त्यामनोयायीचयोगवित् ॥ ३८ ॥ दृष्ट्वारामोमृतंतातं
तंशोकार्त्तांजननींसतीम् ॥ आकर्ण्यरणवृत्तान्तंप्रयान्तींकपिलांशुचा ॥ ३९ ॥ विललापभृशंतत्रहेतातजननीतिच ॥ चितांचकारयो
गीन्द्रश्चन्दनैराज्यसंयुताम् ॥ ४० ॥ रेणुकारामभादायतूर्णंकृत्वास्ववक्षसि ॥ चुचुम्बगण्डेशिरसिहगेदोच्चैर्भृशंमुहुः ॥ ४१ ॥ रामरा
ममहावाहोक्वयामित्वांविहायच ॥ वत्सवत्सेतिकृत्वैवंविललापभृशंमुहुः ॥ ४२ ॥ मत्प्राणाधिकहेवत्समदीयंवचनंशृणु ॥ पित्रोःशेष
क्रियांकृत्वायायायुद्धंनपुत्रक ॥ ४३ ॥ गृहेतिष्ठसुखंवत्सतपस्यांकुरुशाश्वतीम् ॥ समरेनैवसुखदंदारुणैःक्षत्रियैःसह ॥ ४४ ॥ मातुर्वच
नमश्रुत्वाप्रतिज्ञांतांचकारह ॥ त्रिस्सप्तकृत्वोनिर्भूपांकरिष्यामिध्रुवंमहीम् ॥ ४५ ॥ कार्तवीर्य्यंहनिष्यामिलीलयाक्षत्रियाधमम् ॥
पितॄंश्चतर्पयिष्यामिक्षत्रियक्षतजैस्तथा ॥ ४६ ॥ इत्युदीर्य्यपुरोमातुर्विललापमुहुर्मुहुः ॥ हितंतथ्यंनीतिसारंबोधयामासमा
तरम् ॥ ४७ ॥ ॥ रामउवाच ॥ ॥ पितुःशासनहन्तारंपितुर्वधविधायकम् ॥ योनहन्तिमहामूढोरौरवंसव्रजेद्ध्रुवम् ॥
॥ ४८ ॥ अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः ॥ क्षेत्रदारापहारीचपितृवन्धुविहिंसकः ॥ ४९ ॥ सततंमन्दकारीचनिन्दकः
कटुजल्पकः ॥ एकादशैतेपापिष्ठावधार्हावेदसम्मताः ॥ ५० ॥ द्विजानांद्रविणादानंस्थानान्निर्वासनंसति ॥ वपनंताडनञ्चैववधमाहु
र्मनीषिणः ॥ ५१ ॥ एतस्मिन्नन्तरेतत्राजगामभृगुःस्वयम् ॥ अतित्रस्तोमनस्वीचहृदयेनविदूयता ॥ ५२ ॥ दृष्ट्वातंरेणुकारा
मौविनतौसंबभूवतुः ॥ सताबुवाचवेदोक्तंपरलोकहितायच ॥ ५३ ॥ ॥ भृगुरुवाच ॥ ॥ मद्वंशजातोज्ञानीत्वंकथंविलपसेसुत ॥
जलबुद्बुदवत्सर्वंसंसारेचचराचरम् ॥ ५४ ॥ सत्यसारंसत्यबीजंकृष्णंचिन्तयपुत्रक ॥ यद्गतंतद्गतंवत्सगतंनैवागमिष्यति ॥ ५५ ॥

यद्भवेत्तद्भवत्येवभवितायद्भविष्यति ॥ पूर्वार्जितंस्वीयकर्मफलंकेननिवार्य्यते ॥ ५६ ॥ भूतंभव्यंभविष्यंचयत्कृष्णेननिरूपितम् ॥
निरूपितंयत्तत्कर्म केनवत्सनिवार्य्यते ॥ ५७ ॥ मायाबीजंमायिनाञ्चशरीरंपाञ्चभौतिकम् ॥ संकेतपूर्वकंनामप्रातःस्वप्नसमंसुत ॥
॥ ५८ ॥ क्षुधानिद्रादयाशान्तिःक्षमाकान्त्यादयस्तथा ॥ यान्तिप्राणामनोज्ञानंप्रयातेपरमात्मनि ॥ ५९ ॥ बुद्धिश्चशक्तयःसर्वारा
जेन्द्रमिवकिङ्कराः ॥ सर्वंतमनुगच्छन्तितंकृष्णंभजयत्नतः ॥ ६० ॥ केवाकेषाञ्चपितरःकेवाकेषांसुताःसुत ॥ कर्मोर्मिप्रेरिताःसर्वेभ
वाब्धौदुस्तरेपरम् ॥ ६१ ॥ ज्ञानिनोमारुदन्त्येवमारोदीःपुत्रसाम्प्रतम् ॥ रोदनाश्रुप्रपतनान्मृतानांनरकंध्रुवम् ॥ ६२ ॥ संकेता
ख्योच्चारणेनयद्रुदन्तिचबान्धवाः ॥ शतवर्षंरुदित्वातंप्राप्नुवन्तिननिश्चितम् ॥ पार्थिवांशश्चपृथिवीगृह्णात्यस्थित्वचादिकम् ॥ ६३ ॥
तोयांशश्चतथातोयंशून्यांशंगगनंतथा ॥ वाय्वंशश्चतथावायुस्तेजस्तेजांशकंतथा ॥ ६४ ॥ सर्वेविलीनाःसर्वेषुकोवाऽऽयास्यतिरोदनात् ॥
नामश्रुतियशःकर्मकथामात्रावशेषितः ॥ ६५ ॥ वेदोक्तञ्चैवयत्कर्मकुरुतत्पारलौकिकम् ॥ सचबन्धुःसुपुत्रश्चपरलोकहिताययः ॥
॥ ६६ ॥ भृगोस्तद्वचनंश्रुत्वाशोकंतत्याजतत्क्षणम् ॥ रेणुकाचमहासाध्वीतंवक्तुमुपचक्रमे ॥ ६७ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणे
तृतीयेगणपतिखण्डेनारदनारायणसंवादेजमदग्निसंहारपरशुरामप्रतिज्ञादिवर्णनंनामसप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥ छ ॥ ॥
॥ रेणुकोवाच ॥ ब्रह्मन्ननुगमिष्यामिप्राणनाथस्यसाम्प्रतम् ॥ ऋतोश्चतुर्थदिवसेमृतोऽयंचाद्यमानदः ॥ १ ॥ कर्त्तव्याकाव्यवस्थात्रवदवे
दविदांवर ॥ त्वमागतोमेसहसापुण्येनकतिजन्मनाम् ॥ २ ॥ ॥ भृगुरुवाच ॥ ॥ अहोपुण्यवतोभर्तुरनुगच्छमहासति ॥ चतुर्थ
दिवसंशुद्धंस्वामिनःसर्वकर्मसु ॥ ३ ॥ शुद्धाभर्त्तुश्चतुर्थेऽह्निनशुद्धादैवपित्र्ययोः ॥ दैवेकर्मणिपित्र्यचपञ्चमेऽह्निविशुद्ध्यति ॥ ४ ॥ व्याल
ग्राहीयथाव्यालंविलादुद्धरतेबलात् ॥ तद्वत्स्वामिनमादायसाध्वीस्वर्गंप्रयातिच ॥ ५ ॥ मोदतेस्वामिनातत्रयावदिन्द्राश्चतुर्दश ॥
अतऊर्ध्वंकर्मभोगंभुंक्ष्वसाध्विशुभाशुभम् ॥ ६ ॥ सपुत्रोभक्तिदातायःसाचस्त्रीयानुगच्छति ॥ सबन्धुर्दानदातायःसशिष्योगुरुमर्च

१ क्षुन्निद्रातृड्दयाशान्तिरितिपाठः ।

येत् ॥ ७ ॥ सोऽभीष्टदेवोयोरक्षेत्सराजापालयेत्प्रजाः ॥ सचस्वामीप्रियांधममतिंदातुमिहेश्वरः ॥ ८ ॥ सगुरुर्धर्मदातायोहरिभक्ति
प्रदायकः ॥ एतेप्रशंस्यावेदेषुपुराणेषुचनिश्चितम् ॥ ९ ॥ ॥ रेणुकोवाच ॥ ॥ गन्तुंस्वस्वामिनासार्द्धंकाशक्ताभागतेमुने ॥
कावाप्यशक्तानारीषुतन्मेब्रूहितपोधन ॥ १० ॥ भृगुरुवाच ॥ ॥ बालापत्याश्चगार्भिण्योह्यदृष्टऋतवस्तथा ॥ रजस्वलाचकुलटाग
लितव्याधिसंयुता ॥ ११ ॥ पतिसेवाविहीनायाह्यभक्ताकटुभाषिणी ॥ एतागच्छन्तिचेद्दैवान्नकान्तंप्राप्नुवन्तिताः ॥ १२ ॥ संस्कृताग्निं
पुरोदत्त्वाचितासुशयितंपतिम् ॥ कान्तास्तमनुगच्छन्तिकान्ताश्चेत्प्राप्नुवन्तिताः ॥ १३ ॥ अनुगच्छन्तियाःकान्तंतमेवप्राप्नुवन्तिताः ॥
सार्द्धंकृत्वापुण्यभोगंदिविजन्मनिजन्मनि ॥ १४ ॥ इयंतेकथितासाध्विव्यवस्थागृहिणांध्रुवम् ॥ तीर्थज्ञानमृतानांचवैष्णवानांगतिं
शृणु ॥ १५ ॥ यासाध्वीवैष्णवंकान्तंयत्रयत्रानुगच्छति ॥ प्रयातिस्वामिनासार्द्धं वैकुण्ठेहरिसन्निधिम् ॥ १६ ॥ विशेषोनास्तिभक्ता
नांतीर्थेवान्यत्रनारद ॥ मरणेनफलंतुल्यंमुक्तानांकृष्णभाविनाम् ॥ १७ ॥ तयोःपातोनास्तितस्मान्महतिप्रलयेसति ॥ नारायणंतं
भजेतपुमाँस्त्रीकमलालयाम् ॥ १८ ॥ तीर्थज्ञानमृतश्चापिवैकुण्ठंयातिनिश्चितम् ॥ सभार्योमोदतेतत्रयावद्वैब्रह्मणःशतम् ॥ १९ ॥
इत्युक्त्वारेणुकांतत्रजामदग्न्यमुवाचह ॥ वेदोक्तंवचनंसर्वंसभृगुःसमयोचितम् ॥ २० ॥ एहिवत्समहाभागत्यजशोकममङ्गलम् ॥
उत्तानंकुरुतातश्चदक्षिणाशिरसंभृगो ॥ २१ ॥ वस्त्रंयज्ञोपवीतश्चनूतनंपरिधापय ॥ अनश्रुनयनोभूत्वासन्तिष्ठन्दक्षिणामुखः ॥
॥ २२ ॥ अरणीसंभवाग्निश्चगृहाणप्रीतिपूर्वकम् ॥ पृथिव्यांयानितीर्थानिसर्वेषांस्मरणंकुरु ॥ २३ ॥ गयादीनिचतीर्थानियेचपुण्याः
शिलोच्चयाः ॥ कुरुक्षेत्रश्चगङ्गाश्चयमुनाश्चसरिद्वराम् ॥ २४ ॥ कौशिकींचन्द्रभागाश्चसर्वपापप्रणाशिनीम् ॥ गण्डकीमथकाशीश्चप
नसांसरयूंतथा ॥ २५ ॥ पुष्पभद्राश्चभद्राश्चनर्मदाश्चसरस्वतीम् ॥ गोदावरीश्चकावेरींस्वर्णरेखांचपुष्करम् ॥ २६ ॥ रैवतंचवराहंच
श्रीशैलंगन्धमादनम् ॥ हिमालयंचकैलासंसुमेरुंरत्नपर्वतम् ॥ २७ ॥ वाराणसींप्रयागश्चपुण्यंवृन्दावनंवनम् ॥ हरिद्वारंचबदरीं
स्मारंस्मारंपुनःपुनः ॥ २८ ॥ चन्दनागरुकस्तूरीसुगन्धिकुसुमंतथा ॥ प्रदायवाससाच्छाद्यस्थापयैनंचितोपरि ॥ २९ ॥

कर्णाक्षिनासिकास्येत्वंशलाकांचहिरण्मयीम् ॥ कृत्वानिर्मन्थनंतातविप्रेभ्योदेहिसादरम् ॥ ३० ॥ सतिलंताम्रपात्रंचधेनुंचर जतंतथा ॥ सदक्षिणंसुवर्णंचदत्त्वाग्निंदेह्यकातरः ॥ ३१ ॥ ॐकृत्वादुष्कृतंकर्म्मजानतावाप्यजानता ॥ मृत्युकालवशंप्राप्यन रंपंचत्वमागतम् ॥ ३२ ॥ धर्माधर्मसमायुक्तंलोभमोहसमावृतम् ॥ दहसर्वाणिगात्राणिदिव्यांल्लोकान्सगच्छतु ॥ ३३ ॥ इमंमन्त्रंप ठित्वातुतातंकृत्वाप्रदक्षिणम् ॥ मन्त्रेणानेनदेह्यग्निंजनकायहरिंस्मरन् ॥ ३४ ॥ ॐअस्मत्कुलेत्वंजातोऽसित्वदीयोजायतांपुनः ॥ असौस्वर्गायलोकायस्वाहेतिवदसाम्प्रतम् ॥ ३५ ॥ अग्निंदेहिशिरःस्थानेहेभृगोभ्रातृभिःसह ॥ तच्चकारभृगुःसर्वंसगोत्रैराज्ञयाभृगोः ॥ ॥ ३६ ॥ अथपुत्रंरेणुकासाकृत्वातत्रस्ववक्षसि ॥ उवाचकिंचिद्वचनंपरिणामसुखावहम् ॥ ३७ ॥ अविरोधोभवाब्धौचसर्वमङ्गलमङ्ग लम् ॥ विरोधोनाशबीजंचसर्वोपद्रवकारणम् ॥ ३८ ॥ अकर्त्तव्योविरोधोवैदारुणैःक्षत्रियैःसह ॥ प्रतिज्ञाचैवकर्त्तव्यामदीयेवचने श्रुते ॥ ३९ ॥ आलोच्यब्रह्मणासार्द्धंभृगुणादिव्यमन्त्रिणा ॥ यथोचितंचकर्त्तव्यंसद्भिरालोचनंशुभम् ॥ ४० ॥ इत्युक्त्वातंपरित्यज्य कान्तंकृत्वास्ववक्षसि ॥ सासुष्वापचितायांचपश्यन्तीतंहरिस्मृतिः ॥ ४१ ॥ वह्निंददौचितायांचसरामोभ्रातृभिःसह ॥ भ्रातृभिःपितृ शिष्यैश्चसार्द्धंसविललापच ॥ ४२ ॥ रामरामेतिरामेतिवाक्यमुच्चार्य्यसासती ॥ पुरस्ताज्जामदग्न्यस्यभस्मीभूताबभूवसा ॥ ४३ ॥ भर्त्तुर्नामसमाकर्ण्यतत्राजग्मुर्हरेश्वराः ॥ रथस्थाःश्यामवर्णाश्चसर्वेचारुचतुर्भुजाः ॥ ४४ ॥ शंखचक्रगदापद्मधारिणोवनमालिनः ॥ किरीटनःकुण्डलिनःपीतकौशेयवाससः ॥ ४५ ॥ रथेकृत्वारेणुकांतांगत्वातेब्रह्मणःपदम् ॥ जमदग्निंसमादायप्रजग्मुर्हरिसन्निधिम् ॥ ॥ ४६ ॥ तौदम्पतीचवैकुण्ठेतस्थतुर्हरिसन्निधौ ॥ [१]कृत्वादास्यंहरेःशश्वत्सर्वमङ्गलमङ्गलम् ॥ ४७ ॥ अथरामोब्राह्मणैश्चभृगुणा सहनारद ॥ पित्रोःशेषक्रियांकृत्वाब्राह्मणेभ्योधनंददौ ॥ ४८ ॥ गोभूहिरण्यवासांसिदिव्यशय्यांमनोरमाम् ॥ सुवर्णाधारसहितांजल मन्नंचचन्दनम् ॥ ४९ ॥ रत्नदीपंरौप्यशैलंसुवर्णासनमुत्तमम् ॥ सुवर्णाधारसहितंताम्बूलञ्चसुवासितम् ॥ ५० ॥ छत्रञ्चपादुकेचैवफ

१ सुकृतमितिपाठः ।

ब्राह्मणेभ्योधनंदत्त्वाब्रह्मलोकंजगामसः ॥५१॥ ददर्शब्रह्मलोकंसशातकुम्भ
लंमाल्यंमनोहरम् ॥ फलंमूलादिकञ्चैवमिष्टान्नञ्चमनोहरम् ॥ ५२ ॥ ददर्शतत्रब्रह्माणंज्वलन्तंब्रह्मतेजसा ॥ रत्नसिंहासनस्थञ्चरत्नभूषणभू
विनिर्मितम् ॥ स्वर्णप्राकारसंयुक्तंस्वर्णस्तम्भैर्विभूषितम् ॥ ५२ ॥ ददर्शतत्रब्रह्माणंज्वलन्तंब्रह्मतेजसा ॥ रत्नसिंहासनस्थञ्चरत्नभूषणभू
षितम् ॥ ५३ ॥ सिद्धैस्तपश्चान्द्रायणैःऋषीन्द्रैःपरिवेष्टितम् ॥ विद्याधरीणांनृत्यञ्चपश्यन्तंसस्मितंमुदा ॥ ५४ ॥ सङ्गीतमुपशृण्वन्तं
गीयमानञ्चगायकैः ॥ चन्दनागरुकस्तूरीकुंकुमेनविराजितम् ॥ ५५ ॥ तपसांफलदातारंदातारंसर्वसम्पदाम् ॥ धातारंसर्वजगतांक
र्त्तारंचेश्वरंपरम् ॥ ५६ ॥ परिपूर्णतमंब्रह्मजपन्तंकृष्णमीश्वरम् ॥ गुह्ययोगंप्रवोचंतंपृच्छन्तंशिष्यमण्डलम् ॥ ५७ ॥ दृष्ट्वातमव्ययंभ
क्त्याप्रणनामभृगुःपुरः ॥ उच्चैश्चरोदनंकृत्वास्ववृत्तान्तमुवाचह ॥ ५८ ॥ ॥ भृगुरुवाच ॥ ॥ ब्रह्मंस्त्वद्वंशजातोऽहंजमदग्निसुतो
विधे ॥ पितामहस्त्वमस्माकंसर्वज्ञंकथयामिकिम् ॥ ५९ ॥ मृगयामागतंभूपंपितामेचोपवासिनम् ॥ पारणांकारयामासकपिलाद
त्तवस्तुना ॥ ६० ॥ सराजाकपिलालोभात्कार्त्तवीर्य्यार्जुनःस्वयम् ॥ घातयामासमत्तातमित्युक्त्वोच्चैरुरोदसः ॥ ६१ ॥ निरुध्य
बाष्पंसपुनरुवाचकरुणानिधिः ॥ मातामेऽनुगतासाध्वीमांविहायजगद्गुरो ॥ ६२ ॥ अधुनाहमनाथश्चत्वंमेमातापितागुरुः ॥
कर्त्तापालयितादातापाहिमांशरणागतम् ॥ ६३ ॥ आगतोऽहंतवसभांप्रमातुर्मातुराज्ञया ॥ उपायेनजगन्नाथमद्वैरिहननंकुरु ॥ ६४ ॥
सराजासचधर्मिष्ठःसदयालुर्यशस्करः ॥ सपूज्यःसस्थिरश्रीश्चयोदीनंपरिपालयेत् ॥ ६५ ॥ धनिदीनौसमंदृष्ट्वायःप्रजांनचपालयेत् ॥
तद्देहाद्यातिरुष्टाश्रीःसभवेद्भ्रष्टराज्यकः ॥ ६६ ॥ श्रुत्वाविप्रवटोर्वाक्यंकरुणासागरोविधिः ॥ दत्त्वाशुभाशिषंतस्मैवासयामासव
क्षसि ॥ ६७ ॥ श्रुत्वाभृगोःप्रतिज्ञाञ्चविस्मितश्चतुराननः ॥ अतीवदुष्करांघोरांबहुजीवविघातिनीम् ॥ ६८ ॥ कर्मणातद्भवेत्सर्वमि
तिकृत्वातुमानसे ॥ उवाचजामदग्न्यंतंपरिणामसुखावहम् ॥ ६९ ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रतिज्ञादुष्करावत्सबहुजीवविघाति
नी ॥ सृष्टिरेषाभगवतःसम्भवेदीश्वरेच्छया ॥ ७० ॥ सृष्टिःसृष्टामयापुत्रक्लेशेनेश्वराज्ञया ॥ सृष्टिलुप्तौप्रतिज्ञातेदारुणाऽकरुणापरा ॥
॥ ७१ ॥ त्रिस्सप्तकृत्वोनिर्भूपांकर्त्तुमिच्छसिमेदिनीम् ॥ एकक्षत्रियदोषेणनजातिंहन्तुमिच्छसि ॥ ७२ ॥ ब्रह्मक्षत्रियविट्शूद्रैर्नित्या

सृष्टिश्चतुर्विधैः ॥ आविर्भूतातिरोभूताहरेरेवपुनःपुनः ॥ ७३ ॥ अन्यथात्वत्प्रतिज्ञाचभविताप्राक्तनेनते ॥ बह्वायासेनतेकार्य्यसिद्धि
र्भवितुमर्हति ॥ ७४ ॥ शिवलोकंगच्छवत्सशङ्करंशरणंव्रज ॥ पृथिव्यांबहवोभूपाःसन्तिशङ्करकिङ्कराः ॥ ७५ ॥ विनाज्ञयामहेशस्य
कोवातान्हतुमीश्वरः ॥ बिभ्रतःकवचंदिव्यंशक्तेवैशङ्करस्यच ॥ ७६ ॥ उपायंकुरुयत्नेनजयबीजंशुभावहम् ॥ उपायतःसमा
रब्धाःसर्वेसिद्धयन्त्युपक्रमाः ॥ ७७ ॥ श्रीकृष्णमन्त्रकवचग्रहणंकुरुशङ्करात् ॥ दुर्लभंवैष्णवंतेजःशैवंशाक्तंविजेष्यति ॥ ७८ ॥ गुरु
स्तेजगतांनाथःशिवोजन्मनिजन्मनि ॥ मन्त्रोमत्तोनयुक्तस्तेयोयुक्तःसभवेद्द्विधिः ॥७९॥ कर्मणालभ्यतेमन्त्रःकर्मणालभ्यतेगुरुः॥ स्वय
मेवोपतिष्ठन्तेयेयेषांतेषुतेध्रुवम् ॥ ८० ॥ त्रैलोक्यविजयंनामगृहीत्वाकवचंवरम् ॥ त्रिस्सप्तकृत्वोनिर्भूपांकरिष्यसिमहींभृगो ॥ ८१ ॥
दिव्यंपाशुपतंतुभ्यंदातादास्यतिशङ्करः ॥ तेनदत्तेनमन्त्रेणक्षत्रसंघंविजेष्यसि ॥ ८२ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपति
खण्डेनारदनारायणसंवादेभृगोर्ब्रह्मलोकगमनेब्रह्मोक्तोपायवर्णनंनामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ नारायण
उवाच ॥ ॥ ब्रह्मणोवचनंश्रुत्वाप्रणम्यचजगद्गुरुम् ॥ स्फीतस्तस्माद्वरंप्राप्यशिवलोकंजगामसः ॥ १ ॥ लक्षयोजनमूर्ध्वंश्चब्रह्मलोका
द्विलक्षणम् ॥ अनिर्वाच्यसुशोभाढ्यंवाय्वाधारंमनोहरम् ॥ २ ॥ वैकुण्ठंदक्षिणेयस्यगौरीलोकश्चवामतः ॥ यदधोध्रुवलोकश्चसर्वलो
कात्परःस्मृतः ॥ ३ ॥ तेषामूर्ध्वंचगोलोकःपञ्चाशत्कोटियोजनः ॥ अतऊर्ध्वंनलोकश्चसर्वोपरिचसस्मृतः ॥ ४ ॥ मनोयायीसयोगी
न्द्रःशिवलोकंददर्शह ॥ उपमानोपमेयाभ्यांरहितंमहदद्भुतम् ॥ ५ ॥ योगीन्द्राणांवरेण्यैश्चसिद्धविद्याविशारदैः ॥ कोटिकल्पतपःपूतैः
पुण्यवद्भिर्निषेवितम् ॥ ६ ॥ वेष्टितंकल्पवृक्षाणांसमूहैर्वाञ्छितप्रदैः ॥ समूहैःकामधेनूनामसंख्यानांविराजितम् ॥ ७ ॥ पारिजातत
रूणांचवनराजिविराजितम् ॥ पुष्पोद्यानायुतैर्युक्तंसदाचातिसुशोभितम् ॥ ८ ॥ मणीन्द्रसाररचितैःशोभितैर्मणिवेदिभिः ॥ राज
मार्गशतैर्दिव्यैःसर्वतःपरिभूषितम् ॥ ९ ॥ मणीन्द्रसारनिर्माणशतकोटिगृहैर्युतम् ॥ नानाचित्रविचित्राढ्यैर्मणीन्द्रकलशोज्ज्वलैः ॥
॥ १० ॥ तन्मध्यदेशेरम्येचददर्शशङ्करालयम ॥ मणीन्द्रसाररचितप्राकारंसुमनोहरम् ॥ ११ ॥ अत्यूर्ध्वमम्बरस्पर्शिक्षीरनीरनिभं

परम् ॥ षोडशद्वारसंयुक्तंशोभितंशतमन्दिरैः ॥ १२ ॥ अमूल्यरत्नरचितैरत्नसोपानभूषितैः ॥ रत्नस्तम्भकपाटैश्चहीरकेणपरिष्कृतैः ॥ १३ ॥ माणिक्यजालमालाभिःसद्रत्नकलशोज्ज्वलैः ॥ नानाविचित्रचित्रेणचित्रितैःसुमनोहरैः ॥ १४ ॥ आलयस्यपुरस्तत्रसिंहद्वारंददर्शसः ॥ रत्नेन्द्रसारखचितकपाटैश्चविराजितैः ॥ १५ ॥ शोभितंवेदिकाभिश्चवाह्याभ्यन्तरतःसदा ॥ रचिताभिःपद्मरागैर्महामरकतैर्गृहम् ॥ १६ ॥ नानाप्रकारचित्रेणचित्रितंसुमनोहरम् ॥ करालरूपावद्राक्षीद्वारपालौभयङ्करौ ॥ १७ ॥ महाकरालदन्तास्यौविरक्तौरक्तलोचनौ ॥ दग्धशैलप्रतीकाशौमहावलपराक्रमौ ॥ १८ ॥ विभूतिभूषितांगौचव्याघ्रचर्माम्बरौवरौ ॥ पिङ्गलाक्षौविशालाक्षौजटिलौचत्रिलोचनौ ॥ १९ ॥ त्रिशूलपट्टिशधरौज्वलन्तौब्रह्मतेजसा ॥ तौदृष्ट्वामनसाभीतस्त्रस्तःकिञ्चिदुवाचह ॥ २० ॥ विनयेनविनीतश्चदुर्विनीतौमहावलौ ॥ आत्मनःसर्ववृत्तान्तंकथयामासतत्पुरः ॥ २१ ॥ विप्रस्यवचनंश्रुत्वाकृपायुक्तौवभूवतुः ॥ गृहीत्वाज्ञाश्वरद्वाराशंकरस्यमहात्मनः ॥२२॥ प्रवेष्टुमाज्ञांददतुरीश्वरानुचरौवरौ ॥ भृगुस्तदाज्ञामादायप्रविवेशहरिंस्मरन् ॥ २३ ॥ प्रत्येकंषोडशद्वारेददर्शसुमनोहराः ॥ द्वारपालैर्नियुक्ताश्चनानाचित्रविचित्रिताः ॥ २४॥ दृष्ट्वातामहदाश्चर्य्यादपश्यच्छूलिनःसभाम् ॥ नानासिद्धगणाकीर्णांमहर्षिगणसेविताम् ॥ २५ ॥ पारिजातसुगन्धाढ्यवायुनासुरभीकृताम् ॥ ददर्शतत्रदेवेशंशङ्करंचन्द्रशेखरम् ॥ २६ ॥ त्रिशूलपट्टिशधरंव्याघ्रचर्माम्बरंपरम् ॥ विभूतिभूषिताङ्गंतंनागयज्ञोपवीतिनम् ॥ रत्नसिंहासनस्थश्चरत्नभूषणभूषितम् ॥ २७ ॥ महाशिवंशिवकरंशिवबीजंशिवाश्रयम् ॥ आत्मारामंपूर्णकामंसूर्य्यकोटिसमप्रभम् ॥२८॥ ईषद्धास्यंप्रसन्नास्यंभक्तानुग्रहकातरम् ॥ शश्वज्ज्योतिस्स्वरूपञ्चलोकानुग्रहविग्रहम् ॥ २९ ॥ धृतवन्तंजटाजालंदक्षकन्यासमन्वितम् ॥ तपसांफलदातारंदातारंसर्वसम्पदाम् ॥ ३० ॥ शुद्धस्फटिकसङ्काशंपञ्चवक्रंत्रिलोचनम् ॥ गुह्यंब्रह्मप्रवोचन्तंशिष्येभ्यस्तत्त्वमुद्रया ॥ ३१ ॥ स्तूयमानञ्चयोगीन्द्रैःसिद्धेन्द्रैःपरिसेवितम् ॥ पार्षदप्रवरैश्शश्वत्सेवितंश्वेतचामरैः ॥ ३२ ॥ ध्यायमानंपरंब्रह्मपरिपूर्णतमंपरम् ॥ स्वेच्छामयंगुणातीतंजरामृत्युहरंपरम् ॥ ३३ ॥ ज्योतीरूपञ्चसर्वाद्यंश्रीकृष्णंप्रकृतेःपरम् ॥ ध्यायन्तंपरमानन्दंपुलकांचितविग्रहम् ॥ सुस्वरंसाश्रुनेत्रंतमुद्गायन्तंगुणार्णवम् ॥ ३४ ॥

भूतेन्द्रैर्वैरुद्रगणैःक्षेत्रपालैश्चवेष्टितम् ॥ मूर्ध्नाननामपरशुरामोदृष्ट्वातमादरात् ॥ ३५ ॥ तद्वामेकार्तिकेयंचदक्षिणेचगणेश्वरम् ॥
नन्दीश्वरंमहाकालंवीरभद्रंचतत्पुरः ॥ अङ्केददर्शकान्तांतांगौरींशैलेन्द्रकन्यकाम् ॥ ३६ ॥ ननामसर्वान्मूर्ध्नाचभक्त्याचपरयामुदा ॥
दृष्ट्वाहरंपरंतोपात्स्तोतुंसमुपचक्रमे ॥ ३७ ॥ सगद्गदपदंदीनस्साश्रुनेत्रोऽतिकातरः ॥ कृताञ्जलिपुटःशान्तःशोकार्त्तःशोकनाशनम् ॥
॥३८॥ ॥ परशुरामउवाच ॥ ॥ ईशत्वांस्तोतुमिच्छामिसर्वथास्तोतुमक्षमः ॥ अक्षराक्षयबीजंचकिंवास्तौमिनिरीहकम् ॥३९॥ नयो
जनांकर्तुमीशोदेवेशंस्तौमिमूढधीः ॥ वेदानशक्तायंस्तोतुकस्त्वांस्तोतुमिहेश्वरः ॥ ४० ॥ वाग्बुद्धिमनसांदूरंसारात्सारंपरात्परम् ॥
ज्ञानमात्रेणसाध्यंचसिद्धंसिद्धैर्निषेवितम् ॥ ४१ ॥ यमाकाशमिवाद्यन्तमध्यहीनंतथाऽव्ययम् ॥ विश्वतन्त्रमतन्त्रञ्चस्वतन्त्रंतन्त्रबीज
कम् ॥ ४२ ॥ ध्यानासाध्यंदुराराध्यमतिसाध्यंकृपानिधिम् ॥ त्राहिमांकरुणासिन्धोदीनबन्धोऽतिदीनकम् ॥ ४३ ॥ अद्यमेसफलं
जन्मजीवितंचसुजीवितम् ॥ स्वप्नेप्यदृष्टंभक्तैश्चाधुनापश्यामिचक्षुषा ॥ ४४ ॥ शक्रादयःसुरगणाःकलयायम्यसम्भवाः ॥ चराचराः
कलांशेनतंनमामिमहेश्वरम् ॥ ४५ ॥ स्त्रीरूपंक्लीवरूपंचपौरुषंचबिभर्तियः ॥ सर्वाधारंसर्वरूपंतंनमामिमहेश्वरम् ॥ ४६ ॥ यंभास्कर
स्वरूपंचशशिरूपंहुताशनम् ॥ जलरूपंवायुरूपंतंनमामिमहेश्वरम् ॥ ४७ ॥ अनन्तविश्वसृष्टीनांसंहर्त्तारंभयङ्करम् ॥ क्षणेनलीलामा
त्रेणतंनमामिमहेश्वरम् ॥ ४८ ॥ यःकालःकालकालश्चकलिर्बीजंचकालजः ॥ अजःप्रजश्चयःसर्वस्तंनमामिमहेश्वरम् ॥ ४९ ॥
इत्येवमुक्त्वासभृगुःपपातचरणाम्बुजे ॥ आशिषंचददौतस्मैसुप्रसन्नोबभूवसः ॥ ५० ॥ जामदग्न्यकृतंस्तोत्रंयःपठेद्भक्तिसंयुतः ॥ सर्व
पापविनिर्मुक्तःशिवलोकंसगच्छति ॥ ५१ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेपरशुरामस्यकैलास
गमनंनामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ शङ्करउवाच ॥ ॥ कस्त्वंवटोकस्यपुत्रःक्ववासःस्तववनंकथम् ॥
किंवातेऽहंकरिष्यामिवाञ्छितंवदसाम्प्रतम् ॥ १ ॥ ॥ पार्वत्युवाच ॥ ॥ शोकाकुलंत्वांपश्यामिविमनस्कंसुविस्मितम् ॥
वयसातिशिशुंशान्तंगुणेनगुणिनांवरम् ॥ २ ॥ ॥ भृगुरुवाच ॥ ॥ जमदग्निसुतोऽहञ्चभृगुवंशसमुद्भवः ॥ रेणुकाम्बामेपरशुरामो

हंनामतःप्रभो ॥ ३ ॥ कीर्णोहिमांदयासिन्धोविद्यापण्येनकिङ्करम् ॥ त्वामीशशरणापन्नंरक्षमांदीनवत्सल ॥ ४ ॥ मृगयामागतंभूपं
पितामेत्त्रोपवासिनम् ॥ चकातिथ्यमानीयकपिलादत्तवस्तुना ॥ ५ ॥ राजातंकपिलालोभाद्घातयामासमन्दधीः ॥ कपिलातं
मृतंदृष्ट्वागोलोकञ्चजगाममा ॥ ६ ॥ मातानुगमनंचक्रेह्यनाथोऽहंचसाम्प्रतम् ॥ त्वंमेपिताशिवामातारक्षमांपुत्रवत्प्रभो ॥ ७ ॥ मयाकृ
ताप्रतिज्ञाचशोकेनैवातिदुष्करा ॥ त्रिस्सप्तकृत्वोनिर्भूपांकरिष्यामिमहीमिति ॥ ८ ॥ कार्त्तवीर्य्यंहनिष्यामिसमरेतातघातकम् ॥
इत्येतत्परिपूर्णंमेभगवान्कर्त्तुमर्हति ॥ ९ ॥ ब्राह्मणस्यवचःश्रुत्वादृष्ट्वादुर्गामुखंहरः ॥ बभूवानम्रवक्त्रश्चसाचशुष्कौष्ठतालुका ॥
॥ १० ॥ ॥ पार्वत्युवाच ॥ ॥ तपस्विन्विप्रपुत्रस्त्वंनिर्भूपांकर्तुमिच्छसि ॥ त्रिस्सप्तकृत्वःकोपेनसाहसस्तेमहान्वटो ॥ ११ ॥
हन्तुमिच्छसिनिःशस्त्रःसहस्रार्जुनमीश्वरम् ॥ भ्रूभङ्गलीलयायस्यरावणस्यपराजयः ॥ १२ ॥ तस्मैप्रदत्तंदत्तेनश्रीहरेःकवचंवटो ॥
शक्तिरव्यर्थरूपाचययातेहिंसितःपिता ॥ १३ ॥ हरेर्म्मन्त्रंसंस्तवनंयःपठेच्चदिवानिशम् ॥ कोवाशक्नोतितंहन्तुंनपश्यामीहभूतले ॥
॥ १४ ॥ अयेविप्रगृहंगच्छकिङ्करिष्यतिशङ्करः ॥ अन्येभूपाश्चमद्भृत्याःकाभीस्तेषांमयिस्थिते ॥ १५ ॥ ॥ काल्युवाच ॥ ॥
अयेविप्रवटोजाल्मनिर्भूपान्कर्तुमिच्छसि ॥ यथाहिवामनश्चन्द्रंकरेणाहर्तुमिच्छति ॥ १६ ॥ कृतयज्ञान्महापुण्यान्महाबलपराक्र
मान् ॥ दिगम्बरसहायेनमद्भृत्यान्हन्तुमिच्छसि ॥ १७ ॥ सतयोर्वचनंश्रुत्वारुरोदोच्चैश्चशोकतः ॥ सहसापुरतस्तेषांप्राणांस्त्यक्तुंस
मुद्यतः ॥ १८ ॥ विप्रस्यरोदनंश्रुत्वाशङ्करःकरुणानिधिः ॥ पश्यन्दुर्गाञ्चकालींचज्ञात्वाशयमथोविभुः ॥ १९ ॥ तयोरनुमतिंप्राप्य
सर्वेशोभक्तवत्सलः ॥ जमदग्निसुतंसद्यःप्रवक्तुमुपचक्रमे ॥ २० ॥ ॥ शंकरउवाच ॥ ॥ अद्यप्रभृतिहेवत्सत्वंमेपुत्रसमोमहान् ॥
दास्यामिमन्त्रंगुह्यंतेत्रिषुलोकेषुदुर्ल्लभम् ॥ २१ ॥ एवंभूतञ्चकवचंदास्यामिपरमाद्भुतम् ॥ लीलयामत्प्रसादेनकार्त्तवीर्य्यंहनिष्यसि ॥
॥ २२ ॥ त्रिस्सप्तकृत्वोनिर्भूपांकरिष्यसिमहींद्विज ॥ जगत्तेयशसापूर्णंभविष्यतिनसंशयः ॥ २३ ॥ इत्युक्त्वाशंकरस्तस्मैददौमन्त्रं
सुदुर्लभम् ॥ त्रैलोक्यविजयंनामकवचंपरमाद्भुतम् ॥ २४ ॥ स्तवंपूजाविधानञ्चपुरश्चरणपूर्वकम् ॥ मन्त्रसिद्धेरनुष्ठानं

यथावन्नियमक्रमम् ॥ २५ ॥ सिद्धिस्थानंकालसंख्यंकथयामासनारद ॥ वेदंवेदाङ्गादिकंचपाठयामासतत्क्षणम् ॥ २६ ॥
नागपाशंपाशुपतंब्रह्मास्त्रञ्चसुदुर्लभम् ॥ नारायणास्त्रमाग्नेयंवायव्यंवारुणंतथा ॥ २७ ॥ गान्धर्वंगारुडंचैवजृम्भणास्त्रंतथैवच ॥
गदांशक्तिंचपरशुंशूलमव्यर्थमुत्तमम् ॥ २८ ॥ नानाप्रकारशस्त्रास्त्रमन्त्रञ्चविधिपूर्वकम् ॥ शस्त्रास्त्राणांचसंहारंतूणीचाक्षयसायकौ
॥ २९ ॥ आत्मरक्षणसन्धानंसंग्रामविजयक्रमम् ॥ मायायुद्धञ्चविविधंहुंकारंमन्त्रपूर्वकम् ॥ ३० ॥ रक्षणञ्चस्वसैन्यानां
परसैन्यविमर्दनम् ॥ नानाप्रकारमतुलमुपायंरणसंकटे ॥ संहारेमोहिनींविद्यांददौमृत्युहरांहरः ॥ ३१ ॥ स्थित्वाचिरंगुरो
र्वासेसर्वविद्यांविबोध्यसः ॥ तीर्थंकृत्वांमन्त्रसिद्धिंतांश्चनत्वाजगामसः ॥ ३२ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारद
नारायणसंवादेपरशुरामस्यशिवदत्तास्त्रशस्त्रादिप्राप्तिवर्णनंनामत्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥ नारदउवाच ॥ ॥
भगवञ्छ्रोतुमिच्छामिकिंमन्त्रंभगवान्हरः ॥ कृपयादात्परशुरामायस्तोत्रंचवर्मच ॥ १॥ कोवास्यमन्त्रस्याराध्यःकिंफलंकवचस्यच ॥
स्तवनस्यफलंकिंवातद्भवान्वक्तुमर्हति ॥ २ ॥ ॥ नारायणउवाच ॥ ॥ मन्त्राराध्योहिभगवान्परिपूर्णतमःस्वयम् ॥ गोलोक
नाथः श्रीकृष्णोगोपगोपीश्वरःप्रभुः ॥ ३ ॥ त्रैलोक्यविजयंनामकवचंपरमाद्भुतम् ॥ स्तवराजंमहापुण्यंभूतियोगसमुद्भवम् ॥ ४ ॥
मन्त्रकल्पतरुंनामसर्वकामफलप्रदम् ॥ ददौपरशुरामायरत्नपर्वतसन्निधौ ॥ ५ ॥ स्वयंप्रभानदीतीरेपारिजातवनान्तरे ॥ आश्रमे
लोकदेवस्यमाधवस्यचसन्निधौ ॥ ६ ॥ ॥ महादेवउवाच ॥ ॥ वत्सागच्छमहाभागभृगुवंशसमुद्भव ॥ पुत्राधिकोऽसिप्रेम्णामे
कवचग्रहणंकुरु ॥ ७ ॥ शृणुरामप्रवक्ष्यामिब्रह्माण्डेपरमाद्भुतम् ॥ त्रैलोक्यविजयंनामश्रीकृष्णस्यजयावहम् ॥ ८ ॥ श्रीकृष्णेनपु
रादत्तंगोलोकेराधिकाश्रमे ॥ रासमण्डलमध्येचमह्यंवृन्दावनेवने ॥ ९ ॥ अतिगुह्यतरंतत्त्वंसर्वमन्त्रौघविग्रहम् ॥ पुण्यात्पुण्यतरञ्चैव
परंस्नेहाद्ददामिते ॥ १० ॥ यद्धृत्वापठनाद्देवीमूलप्रकृतिरीश्वरी ॥ शुम्भंनिशुम्भंमहिषंरक्तबीजंजघानह ॥ ११ ॥ यद्धृत्वाहञ्चजगतां
संहर्त्तासर्वतत्त्ववित् ॥ अवध्यंत्रिपुरंपूर्वंदुरन्तमपिलीलया ॥ १२ ॥ यद्धृत्वापठनाद्ब्रह्मासमृजेसृष्टिमुत्तमाम् ॥ यद्धृत्वाभगवाञ्छेषोवि

॥ यद्धृत्वाकूर्मराजश्चशेषंधत्तेहिलीलया ॥ यद्धृत्वाभगवान्वायुर्विश्वाधारोविभुःस्वयम् ॥ १४ ॥ यद्धृत्वावरु
धत्तेविश्वमेवच ॥ १३ ॥ यद्धृत्वाकूर्मराजश्चशेषंधत्तेहिलीलया ॥ यद्धृत्वाभगवान्वायुर्विश्वाधारोविभुःस्वयम् ॥ १४ ॥ यद्धृत्वावरु
णःसिद्धःकुवेरश्चधनेश्वरः ॥ यद्धृत्वापठनादिन्द्रोदेवानामधिपःस्वयम् ॥ १५ ॥ यद्धृत्वाभातिभुवनेतेजोराशिःस्वयंरविः ॥ यद्धृत्वा
पठनाच्चन्द्रोमहाबलपराक्रमः ॥ १६ ॥ अगस्त्यःसागरान्सप्तयद्धृत्वापठनात्पपौ ॥ चकारतेजसाजीर्णंदैत्यंवातापिसंज्ञकम् ॥ १७॥
यद्धृत्वापठनाद्देवीसर्वाधारावसुन्धरा ॥ यद्धृत्वापठनात्पूतागङ्गाभुवनपावनी ॥ १८ ॥ यद्धृत्वाजगतांसाक्षीधर्मोधर्मभृतांवरः ॥ सर्व
विद्याधिदेवीसायच्चधृत्वासरस्वती ॥ १९ ॥ यद्धृत्वाजगतांलक्ष्मीरन्नदात्रीपरात्परा ॥ यद्धृत्वापठनाद्वेदान्सावित्रीसासुपावच ॥ २० ॥
वेदाश्चधर्म्मवक्तारोयद्धृत्वापठनाद्भृगो ॥ यद्धृत्वापठनाच्छुद्धस्तेजस्वीहव्यवाहनः ॥ सनत्कुमारोभगवान्यद्धृत्वाज्ञानिनांवरः ॥
॥ २१ ॥ दातव्यंकृष्णभक्तायसाधवेचमहात्मने ॥ शठायपरशिष्यायदत्त्वामृत्युमवाप्नुयात् ॥ २२ ॥ त्रैलोक्यविजयस्यास्यकव
चस्यप्रजापतिः ॥ ऋषिश्छन्दश्चगायत्रीदेवोरासेश्वरःस्वयम् ॥ २३ ॥ त्रैलोक्यविजयप्राप्तौविनियोगःप्रकीर्त्तितः ॥ परात्परञ्चकवचं
त्रिषुलोकेषुदुर्लभम् ॥ २४ ॥ प्रणवोमेशिरःपातुश्रीकृष्णायनमःसदा ॥ पायात्कपालंकृष्णायस्वाहापञ्चाक्षरःस्मृतः ॥ २५ ॥
कृष्णेतिपातुनेत्रेचकृष्णस्वाहेतितारकम् ॥ हरयेनमइत्येवंभ्रूलतांपातुमेसदा ॥ २६ ॥ ॐगोविंदायस्वाहेतिनासिकांपातुसन्ततम् ॥
गोपालायनमोगण्डौपातुमेसर्वतःसदा ॥ २७ ॥ ॐ–नमोगोपाङ्गनेशायकर्णौपातुसदामम ॥ ॐकृष्णायनमःशश्वत्पातुमेऽधरयु
ग्मकम् ॥ २८ ॥ ॐगोविन्दायस्वाहेतिदन्तौघंमेसदावतु ॥ पातुकृष्णायदन्ताधोदन्तोर्ध्वंक्लींसदावतु ॥ २९ ॥ ॐश्रीकृष्णाय
स्वाहेतिजिह्विकांपातुमेसदा ॥ रासेश्वरायस्वाहेतितालुकंपातुमेसदा ॥ ३० ॥ राधिकेशायस्वाहेतिकण्ठंपातुसदामम ॥ नमो
गोपाङ्गनेशायवक्षःपातुसदामम ॥ ३१ ॥ ॐगोपेशायस्वाहेतिस्कन्धंपातुसदामम ॥ नमःकिशोरवेषायस्वाहापृष्ठंसदावतु ॥
॥ ३२ ॥ उदरंपातुमेनित्यंमुकुन्दायनमःसदा ॥ ॐ–ह्रींक्लींकृष्णायस्वाहेतिकरौपादौसदामम ॥ ३३ ॥ ॐविष्णवेनमो
बाहुयुग्मंपातुसदामम ॥ ॐह्रींभगवतेस्वाहानखरंपातुमेसदा ॥ ३४ ॥ ॐनमोनारायणायेतिनखरन्ध्रंसदावतु ॥ ॐ ह्रींह्रींप

ञ्जनाभायनाभिंपातुसदामम ॥ ३५ ॥ ॐसर्वेशायस्वाहेतिकङ्कालंपातुमेसदा ॥ ॐगोपीरमणायस्वाहानितम्बंपातुमेसदा ॥
॥ ३६ ॥ ॐ–गोपीरमणनाथायपादौपातुसदामम ॥ ॐह्रींक्लींरसिकेशायस्वाहासर्वंसदावतु ॥ ३७ ॥ ॐकेशवायस्वाहेतिमम
केशान्सदावतु ॥ नमःकृष्णायस्वाहेतिब्रह्मरन्ध्रंसदावतु ॥ ३८ ॥ ॐमाधवायस्वाहेतिमेलोमानिसदावतु ॥ ॐह्रींश्रींरसिकेशाय
स्वाहासर्वंसदावतु ॥ ३९ ॥ परिपूर्णतमःकृष्णःप्राच्यांमांसर्वदावतु ॥ स्वयंगोलोकनाथोमामाग्नेय्यांदिशिरक्षतु ॥ ४० ॥ पूर्णब्रह्मस्वरू
पश्चदक्षिणेमांसदावतु ॥ नैर्ऋत्यांपातुमांकृष्णःपश्चिमेपातुमांहरिः ॥ ४१ ॥ गोविन्दःपातुमांशश्वद्वायव्यांदिशिनित्यशः ॥ उत्तरेमांस
दापातुरसिकानांशिरोमणिः ॥ ४२ ॥ ऐशान्यांमांसदापातुवृन्दावनविहारकृत ॥ वृन्दावतीप्राणनाथःपातुमामूर्ध्वदेशतः ॥ ४३ ॥ सदै
वमाधवः पातुवलिहारीमहावलः ॥ जलेस्थलेचान्तरिक्षेनृसिंहःपातुमांसदा ॥ ४४ ॥ स्वप्नेजागरणेशश्वत्पातुमांमाधवःसदा ॥ सर्वा
न्तरात्मानिर्लिप्तःपातुमांसर्वतोविभुः ॥ ४५ ॥ इतितेकथितंवत्ससर्वमन्त्रौघविग्रहम् ॥ त्रैलोक्यविजयंनामकवचंपरमाद्भुतम् ॥ ४६ ॥
मयाश्रुतंकृष्णवक्त्रात्प्रवक्तव्यंनकस्यचित् ॥ गुरुमभ्यर्च्यविधिवत्कवचंधारयेत्तुयः ॥ ४७ ॥ कण्ठेवादक्षिणेबाहौसोऽपिविष्णुर्नसंशयः ॥
सचभक्तोवसेद्यत्रलक्ष्मीर्वाणीवसेत्ततः ॥ ४८ ॥ यदिस्यात्सिद्धकवचोजीवन्मुक्तोभवेत्तुसः ॥ निश्चितंकोटिवर्षाणांपूजायाःफलमाप्नु
यात् ॥ ४९ ॥ राजसूयसहस्राणिवाजपेयशतानिच ॥ अश्वमेधायुतान्येवनरमेधायुतानिच ॥ ५० ॥ महादानानियान्येवप्रादक्षिण्यंभु
वस्तथा ॥ त्रैलोक्यविजयस्यास्यकलांनार्हन्तिषोडशीम् ॥ ५१ ॥ व्रतोपवासनियमंस्वाध्यायाध्ययनंतपः ॥ स्नानञ्चसर्वतीर्थेषुनास्या
र्हन्तिकलामपि ॥ ५२ ॥ सिद्धित्वममरत्वञ्चदासत्वंश्रीहरेरपि ॥ यदिस्यात्सिद्धकवचःसर्वंप्राप्नोतिनिश्चितम् ॥ ५३ ॥ सभवेत्सिद्ध
कवचोदशलक्षंजपेत्तुयः ॥ योभवेत्सिद्धकवचःसर्वज्ञःसभवेद्ध्रुवम् ॥ ५४ ॥ इदंकवचमज्ञात्वाभजेत्कृष्णंसुमन्दधीः ॥ कोटिकल्पंप्र
जप्तोऽपिनमन्त्रःसिद्धिदायकः ॥ ५५ ॥ गृहीत्वाकवचंवत्समहींनिःक्षत्रियांकुरु ॥ त्रिस्सप्तकृत्वानिश्शंकःसदानन्दोहिलीलया ॥
॥ ५६ ॥ राज्यंदेयंशिरोदेयंप्राणादेयाश्चपुत्रक ॥ एवंभूतञ्चकवचंनदेयंप्राणसंकटे ॥ ५७ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीये

गणपतिखण्डेनारदनारायणसंवादेपरशुरामायश्रीकृष्णकवचप्रदानंनामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ छ ॥ भृगुरुवाच ॥ ॥
सम्प्राप्तंकवचंनाथशश्वत्सर्वाङ्गरक्षणम् ॥ सुखदंमोक्षदंसारंशत्रुसंहारकारणम् ॥ १ ॥ अधुनाभगवन्मन्त्रंस्तोत्रंपूजाविधिंप्रभो ॥
देहिमह्यमनाथायशरणागतपालक ॥ २ ॥ ॥ महादेवउवाच ॥ ॥ ॐ श्रींनमःश्रीकृष्णायपरिपूर्णतमायच ॥ मन्त्रेषुमन्त्रराजो
ऽयंमहान्सप्तदशाक्षरः ॥ ३ ॥ सिद्धोऽयंपंचलक्षेणजपेनमुनिपुङ्गव ॥ तद्दशांशंचहवनंतद्दशांशाभिषेचनम् ॥ तर्पणंतद्दशांशंचतद्दशां
शंचमार्जनम् ॥ सुवर्णानाञ्चशतकंपुरश्चरणदक्षिणा ॥ ४ ॥ मन्त्रसिद्धस्यपुंसश्चविश्वंकरतलंमुने ॥ शक्तःपातुंसमुद्रांश्चविश्वंसंहर्त्तु
मीश्वरः ॥ ५ ॥पांचभौतिकदेहेनवैकुण्ठङ्गन्तुमीश्वरः ॥ तस्यसंस्पर्शमात्रेणपदपङ्कजरेणुना ॥ पूतानिसर्वतीर्थानिसद्यःपूतावसुन्धरा ॥
॥ ६ ॥ ध्यानंचसामवेदोक्तंशृणुमन्मुखतोमुने ॥ सर्वेश्वरस्यकृष्णस्यभक्तिमुक्तिप्रदायिच ॥ ७ ॥ नवीनजलदश्यामंनीलेन्दीवरलो
चनम् ॥ शरत्पार्वणचन्द्रास्यमीषद्धास्यंमनोहरम् ॥ ८ ॥ कोटिकन्दर्पलावण्यलीलाधाममनोहरम् ॥ रत्नसिंहासनस्थंतंरत्नभूषणभूषि
तम् ॥ ९ ॥ चन्दनोक्षितसर्वाङ्गंपीताम्बरधरंवरम् ॥ वीक्ष्यमाणंचगोपीभिःसस्मिताभिश्चसन्ततम् ॥ १० ॥ प्रफुल्लमालतीमालावन
मालाविभूषितम् ॥ दधतङ्कुन्दपुष्पाढ्यांचूडांचन्द्रकचर्चिताम् ॥ ११ ॥ प्रभांक्षिपन्तींनभसश्चन्द्रतारान्वितस्यच ॥ रत्नभूषितसर्वाङ्गं
राधावक्षःस्थलस्थितम् ॥ १२ ॥ सिद्धेन्द्रैश्चमुनीन्द्रैश्चदेवेन्द्रैःपरिसेवितम् ॥ ब्रह्मविष्णुमहेशैश्चश्रुतिभिश्चस्तुतंभजे ॥ १३ ॥ ध्यानेना
नेनतंध्यात्वाचोपचारांस्तुषोडश ॥ दत्त्वाभक्त्याचसंपूज्यसर्वज्ञत्वंलभेत्पुमान् ॥ १४ ॥ अर्घ्यंपाद्यञ्चासनञ्चवसनंभूषणंतथा ॥
गामर्घ्यंमधुपर्कञ्चयज्ञसूत्रमनुत्तमम् ॥ १५ ॥ धूपदीपौचनैवेद्यंपुनराचमनीयकम् ॥ नानाप्रकारपुष्पाणिताम्बूलञ्चसुवासितम् ॥
॥ १६ ॥ मनोहरंदिव्यतल्पंकस्तूर्यगरुचन्दनैः ॥ भक्त्याभगवतेदेयंमाल्यंपुष्पाञ्जलित्रयम् ॥ १७ ॥ ततःषडङ्गंसम्पूज्यपश्चात्सम्पूज
येद्गणम् ॥ श्रीदामानंसुदामानंवसुदामानमेवच ॥ १८ ॥ हरिभानुंचन्द्रभानुंसूर्य्यभानुंसुभानुकम् ॥ पार्षदप्रवरान्सप्तपूजयेद्भक्ति
भावतः ॥ १९ ॥ गोपीश्वरींराधिकांचमूलप्रकृतिमीश्वरीम् ॥ कृष्णशक्तिंकृष्णपूज्यांपूजयेद्भक्तिपूर्वकम् ॥ २० ॥ गोपगोपीगणंशान्तं
मांब्रह्माणञ्चपार्वतीम् ॥ लक्ष्मींसरस्वतींपृथ्वींसर्वंदेवंमपार्षदम् ॥ २१ ॥ देवषट्कंसमभ्यर्च्यपुनःपञ्चोपचारतः ॥ पश्चाद्देवंक्रमेणैव

श्रीकृष्णंपूजयेत्सुधीः ॥ २२ ॥ गणेशश्चदिनेशश्चवह्निंविष्णुंशिवंशिवाम् ॥ देवषट्कंसमभ्यर्च्यचेष्टदेवश्चपूजयेत् ॥ २३ ॥ गणेशंविघ्न
नाशायव्याधिनाशायभास्करम् ॥ आत्मनःशुद्धयेवह्निंश्रीविष्णुंमुक्तिहेतवे ॥ २४ ॥ ज्ञानायशङ्करंदुर्गांपरमैश्वर्य्यहेतवे ॥ सम्पूजनेफ
लमिदंविपरीतमपूजने ॥ २५ ॥ ततःकृत्वापरीहारमिष्टदेवश्चभक्तितः ॥ स्तोत्रश्चसामवेदोक्तंपठेद्भक्त्या च तच्छृणु ॥ २६ ॥
महादेवउवाच ॥ ॥ परंब्रह्मपरंधामपरंज्योतिःसनातनम् ॥ निर्लिप्तंपरमात्मानंनमाम्यखिलकारणम् ॥ २७ ॥ स्थूलात्स्थूलतमंदेवं
सूक्ष्मात्सूक्ष्मतमंपरम् ॥ सर्वदृश्यमदृश्यश्चस्वेच्छाचारंनमाम्यहम् ॥ २८ ॥ साकारश्चनिराकारंसगुणंनिर्गुणंप्रभुम् ॥ सर्वाधारश्चसर्वंच
स्वेच्छारूपंनमाम्यहम् ॥ २९ ॥ अतीवकमनीयंचरूपंनिरुपमंविभुम् ॥ करालरूपमत्यन्तंबिभ्रतंप्रणमाम्यहम् ॥ ३० ॥ कर्म्मणः
कर्म्मरूपंतंसाक्षिणंसर्वकर्मणः ॥ फलंचफलदातारंसर्वरूपं नमाम्यहम ॥ ३१ ॥ स्रष्टा पाताचसंहर्त्ताकलयामूर्तिभेदतः ॥ नानामूर्तिः
कलांशेनयःपुमांस्तंनमाम्यहम ॥ ३२ ॥ स्वयंप्रकृतिरूपश्चमाययाचस्वयंपुमान् ॥ तयोःपरंस्वयंशश्वत्तंनमामिपरात्परम् ॥ ३३ ॥
स्त्रीपुन्नपुंसकंरूपंयोबिभर्तिस्वमायया ॥ स्वयंमायास्वयंमायीयोदेवस्तंनमाम्यहम् ॥ ३४॥ तारकंसर्वदुःखानांसर्वकारणकारणम् ॥ धारकं
सर्वविश्वानांसर्ववीजंनमाम्यहम् ॥ ३५ ॥ तेजस्विनांरविर्योहिसर्वजातिषुब्राह्मणः ॥ नक्षत्राणांचयश्चन्द्रस्तंनमामिजगत्प्रभुम् ॥ ३६ ॥
रुद्राणांवैष्णवानांचज्ञानिनांयोहिशंकरः ॥ नागानांयोहिशेषश्चतंनमामिजगत्पतिम् ॥ ३७ ॥ प्रजापतीनांयोब्रह्मासिद्धानांकपिलः
स्वयम् ॥ सनत्कुमारोमुनिषुतंनमामिजगद्गुरुम ॥ ३८ ॥ देवानांयोहिविष्णुश्चदेवीनांप्रकृतिःस्वयम् ॥ स्वायम्भुवोमनूनांयोमानवेषुच
वैष्णवः ॥ नारीणांशतरूपाचबहुरूपंनमाम्यहम् ॥ ३९ ॥ ऋतूनांयोवसन्तश्चमासानांमार्गशीर्षकः ॥ एकादशीतिथीनांचनमाम्यखिल
रूपिणम् ॥ ४० ॥ सागरःसरितांयश्चपर्वतानांहिमालयः ॥ वसुन्धरासहिष्णूनांतंसर्वंप्रणमाम्यहम् ॥ ४१ ॥ पत्राणांतुलसीपत्रंदारु
रूपेषुचन्दनम् ॥ वृक्षाणांकल्पवृक्षोयस्तंनमामिजगत्पतिम् ॥ ४२ ॥ पुष्पाणांपारिजातश्चसस्यानांधान्यमेवच ॥ अमृतंभक्ष्यवस्तूनां
नानारूपंनमाम्यहम् ॥ ४३ ॥ ऐरावतोगजेन्द्राणांवैनतेयश्चपक्षिणाम् ॥ कामधेनुश्चधेनूनांसर्वरूपंनमाम्यहम् ॥ ४४ ॥ तैजसानांसु

वर्णंचधान्यानांयवएवच ॥ यःकेसरीपशूनांचवररूपंनमाम्यहम् ॥ ४५ ॥ यक्षाणांचकुबेरोयोग्रहाणांचबृहस्पतिः ॥ दिक्पालानांमहेन्द्र श्चतंनमामिपरंवरम् ॥ ४६ ॥ वेदसंघश्चशास्त्राणांपंडितानांसरस्वती ॥ अक्षराणामकारोयस्तंप्रधानंनमाम्यहम् ॥ ४७ ॥ मन्त्राणां विष्णुमन्त्रश्चतीर्थानांजाह्नवीस्वयम् ॥ इन्द्रियाणांमनोयोहिसर्वश्रेष्ठंनमाम्यहम् ॥ ४८ ॥ सुदर्शनंचशस्त्राणांव्याधीनांवैष्णवोज्वरः ॥ तेजसांब्रह्मतेजश्चवरेण्यंतंनमाम्यहम् ॥ ४९ ॥ बलंयोवैबलवतांमनोवैशीघ्रगामिनाम् ॥ कालःकलयतांयोहितंनमामिविलक्षणम् ॥ ॥ ५० ॥ ज्ञानदातागुरूणांचमातृरूपश्चबन्धुषु ॥ मित्रेषुजन्मदातायस्तंसारंप्रणमाम्यहम् ॥ ५१ ॥ शिल्पिनांविश्वकर्मायःकाम देवश्चरूपिणाम् ॥ पतिव्रताचपत्नीनांनमस्यंतंनमाम्यहम् ॥ ५२ ॥ प्रियेषुपुत्ररूपोयोनृपरूपोनरेषुच ॥ शालग्रामश्चयन्त्राणांतंवि शिष्टंनमाम्यहम् ॥५३॥ धर्म्मःकल्याणबीजानांवेदानांसामवेदकः ॥ धर्म्माणांसत्यरूपोयोविशिष्टंतंनमाम्यहम् ॥ ५४ ॥ जलेशैत्यस्व रूपोयोगन्धरूपश्चभूमिषु ॥ शब्दरूपश्चगगनेतंप्रणम्यंनमाम्यहम् ॥ ५५ ॥ क्रतूनांराजसूयोयोगायत्रीछन्दसांचयः ॥ गन्धर्वाणांचि त्ररथस्तंगरिष्ठंनमाम्यहम् ॥ ५६ ॥ क्षीरस्वरूपोगव्यानांपवित्राणांचपावकः ॥ पुण्यदानांचयःस्तोत्रंतंनमामिशुभप्रदम् ॥ ५७ ॥ तृणानांकुशरूपोयोव्याधिरूपश्चवैरिणाम् ॥ गुणानांशान्तरूपोयश्चित्ररूपंनमाम्यहम् ॥ ५८ ॥ तेजोरूपोज्ञानरूपःसर्वरूपश्चयो महान् ॥ सर्वानिर्वचनीयंचतंनमामिस्वयंविभुम् ॥ ५९ ॥ सर्वाधारेषुयोवायुर्यथात्मानित्यरूपिणाम् ॥ आकाशोव्यापकानांयोव्या पकंतं नमाम्यहम् ॥ ६० ॥ वेदानिवर्चनीयं यन्नस्तोतुंपंडितःक्षमः ॥ यदनिर्वचनीयंचकोवातत्स्तोतुमीश्वरः ॥ ६१ ॥ वेदा नशक्तायंस्तोतुंजडीभूतासरस्वती ॥ तंचवाङ्मनसाऽपारंकोविद्वान्स्तोतुमीश्वरः ॥ ६२ ॥ शुद्धतेजस्स्वरूपंचभक्तानुग्रहविग्रहम् ॥ अतीवकमनीयंचश्यामरूपंनमाम्यहम् ॥ ६३ ॥ द्विभुजंमुरलीवक्त्रंकिशोरंसस्मितंमुदा ॥ शश्वद्गोपाङ्गनाभिश्चवीक्ष्यमाणंनमा म्यहम् ॥ ६४ ॥ राधयादत्तताम्बूलंभुक्तवन्तंमनोहरम् ॥ रत्नसिंहासनस्थंचतमीशंप्रणमाम्यहम् ॥ ६५ ॥ रत्नभूषणभूषाढ्यं सेवितंश्वेतचामरैः ॥ पार्षदप्रवरैर्गोपकुमारैस्तंनमाम्यहम् ॥ ६६ ॥ वृन्दावनान्तरेरम्येरासोल्लाससमुत्सुकम् ॥ रासमण्डलमध्य

स्थंनमामिरसिकेश्वरम् ॥ ६७ ॥ शतशृङ्गेमहाशैलेगोलोकेरत्नपर्वते ॥ विरजापुलिनेरम्येप्रणमामिविहारिणम् ॥ ६८ ॥ परिपूर्ण तमंशान्तंराधाकान्तंमनोहरम् ॥ सत्यंब्रह्मस्वरूपंचनित्यंकृष्णंनमाम्यहम् ॥ ६९ ॥ श्रीकृष्णस्यस्तोत्रमिदंत्रिसन्ध्यंयःपठेन्नरः ॥ धर्मार्थकाममोक्षाणांसदाताभारते भवेत् ॥ ७० ॥ हरिदास्यं हरौभक्तिंलभेत्स्तोत्रप्रसादतः ॥ इहलोकेजगत्पूज्योविष्णुतुल्योभवे द्ध्रुवम् ॥ ७१ ॥ सर्वसिद्धेश्वरः शान्तोऽप्यन्तेयातिहरेःपदम् ॥ तेजसायशसाभातियथासूर्य्योमहीतले ॥ ७२ ॥ जीवन्मुक्तः कृष्णभक्तःसभवेन्नात्रसंशयः ॥ अरोगीगुणवान्विद्वान्पुत्रवान्धनवान्सदा ॥ ७३ ॥ षडभिज्ञोदशबलोमनोयायीभवेद्ध्रुवम् ॥ सर्वज्ञःसर्व दश्चैवसदातासर्वसम्पदाम् ॥ कल्पवृक्षसमःशश्वद्भवेत्कृष्णप्रसादतः ॥ ७४ ॥ इत्येवंकथितंस्तोत्रंवत्सत्वंगच्छपुष्करम् ॥ तत्रकृत्वामन्त्र सिद्धिंपश्चात्प्राप्स्यसिवाञ्छितम् ॥७५॥ त्रिस्सप्तकृत्वोनिर्भूपांकुरुपृथ्वींयथासुखम् ॥ ममाशिषामुनिश्रेष्ठश्रीकृष्णस्यप्रसादतः ॥७६॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेस्तवप्रदानंनामद्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ ॥ ॥ नारायणउवाच ॥ ॥ शिवंप्रणम्यसभृगुर्दुर्गांकालींमुदान्वितः ॥ गत्वापुष्करतीर्थञ्चमन्त्रसिद्धिंचकारह ॥ १ ॥ सबभूवनि राहारोमासंभक्तिसमन्वितः ॥ ध्यायन्कृष्णपदाम्भोजंवायुरोधञ्चकारसः ॥ २ ॥ ददर्शचक्षुरुन्मील्यगगनंतेजसावृतम् ॥ दिशोदश द्योतयन्तंसमाच्छन्नदिवाकरम् ॥ ३ ॥ तेजोमण्डलमध्यस्थंरत्नयानंददर्शह ॥ ददर्शतत्रपुरुषमत्यन्तंसुन्दरंवरम् ॥ ४ ॥ ईषद्धास्यप्र सन्नास्यंभक्तानुग्रहकारकम् ॥ प्रणम्यदण्डवन्मूर्ध्नावरंवव्रेतमीश्वरम् ॥ ५ ॥ त्रिस्सप्तकृत्वोनिर्भूपांकरिष्यामिमहीमिति ॥ पदारविन्देसु दृढांतांभक्तिमनपायिनीम् ॥ ६ ॥ दास्यंसुदुर्लभंशश्वत्त्वत्पादाब्जेचदेहिमे ॥ कृष्णस्तस्मैवरंदत्त्वातत्रैवान्तरधीयत ॥ ७ ॥ भृगुःप्रण म्यभवनंतज्जगामपरात्परम् ॥ पस्पन्ददक्षिणाङ्गञ्चपरंमङ्गलसूचकम् ॥ ८ ॥ वाञ्छाप्रतीतिजननंसुस्वप्नञ्चददर्शह ॥ मनःप्रसन्नंस्फीतञ्च तद्बभूवदिवानिशम् ॥ संभाष्यस्वजनंसर्वंगृहेतस्थौमुदान्वितः ॥ ९ ॥ स्वशिष्यान्पितृशिष्यांश्चभ्रातृवर्गांश्चबान्धवान् ॥ आनीयानीय विविधान्मन्त्रांश्चसचकारह ॥ १० ॥ पौर्वापर्य्यस्ववृत्तान्तंतानेवोक्ताशुभक्षणे ॥ तैरेवसार्द्धंबलवान्बभूवगमनोन्मुखः ॥ ११ ॥

ददर्शमङ्गलंरामः शुश्रावजयसूचकम् ॥ बुबुधेमनसासर्वंस्वजयंवैरिसंक्षयम् ॥ १२ ॥ यात्राकालेचपुरतः शुश्रावसहसामुनिः ॥
हरिशब्दंसिंहशब्दंघण्टादुन्दुभिवादनम् ॥ १३ ॥ आकाशवाणीसङ्गीतंजयस्तेभवितेतिच ॥ नवेङ्गितश्चकल्याणंमेघशब्दंजयावहम् ॥
॥ १४ ॥ चकारयात्रांभगवाञ्छ्रुत्वैवंविविधंशुभम् ॥ ददर्शपुरतोविप्रवन्दिदेवज्ञभिक्षुकान् ॥ १५ ॥ ज्वलत्प्रदीपंदधतींपतिपुत्रव
तींसतीम् ॥ पुरोददर्शस्मेरास्यांनानाभूषणभूषिताम् ॥ १६ ॥ शवंशिवांपूर्णकुम्भंचाषश्चनकुलन्तथा ॥ गच्छन्ददर्शरामश्चयात्रामङ्ग
लसूचकम् ॥ १७ ॥ कृष्णसारंगजंसिंहंतुरङ्गंगण्डकंद्विपम् ॥ चमरींराजहंसश्चचक्रवाकंशुकंपिकम् ॥ १८ ॥ मयूरंखञ्जनंचैवशंखचि
ल्लंचकोरकम् ॥ पारावतंबलाकश्चकारण्डंचातकंचटम् ॥ १९ ॥ सौदामनींशक्रचापंसूर्य्यंसूर्य्यप्रभांशुभाम् ॥ सद्योमांसंसर्जीवश्चम
त्स्यंशंखंसुवर्णकम् ॥ २० ॥ माणिक्यंरजतंमुक्तांमणीन्द्रश्चप्रवालकम् ॥ दधिलाजाञ्छुक्लधान्यंशुक्लपुष्पश्चकुङ्कुमम् ॥ २१ ॥
पर्णंपताकांछत्रश्चदर्पणंश्वेतचामरम् ॥ धेनुंवत्सप्रयुक्ताश्चरथस्थंभूमिपंतथा ॥ २२ ॥ दुग्धमाज्यंतथापूगममृतंपायसन्तथा ॥
शालग्रामंपक्वफलंस्वस्तिकंशर्करांमधु ॥ २३ ॥ मार्ज्जारश्चवृषेन्द्रश्चमेषंपर्वतमृषिकम् ॥ मेघाच्छन्नस्यचरवेरुदयंचन्द्रमण्डलम् ॥
॥ २४ ॥ कस्तूरींव्यजनंतोयंहरिद्रांतीर्थमृत्तिकाम् ॥ सिद्धार्थंसर्षपंदूर्वांविप्रबालश्चबालिकाम् ॥ २५ ॥ मृगंदृश्यांपदृपदंचकर्पूरंपी
तवाससम् ॥ गोमूत्रंगोपुरीषश्चगोधूलिंगोपदाङ्कितम् ॥ २६ ॥ गोष्ठंगवांवर्त्मरम्यांगोशालांगोगतिंशुभाम् ॥ भूषणंदेवमूर्तिंच
ज्वलदग्निंमहोत्सवम् ॥ २७ ॥ ताम्रश्चस्फटिकंवंद्यंसिन्दूरंमाल्यचन्दनम् ॥ गन्धश्चहीरकंरत्नंददर्शदक्षिणेशुभम् ॥ २८ ॥
सुगन्धिवायोराघ्राणंप्रापविप्राशिषंशुभाम् ॥ २९ ॥ इत्येवंमङ्गलंज्ञात्वाप्रययौसमुदान्वितः ॥ अस्तंगतेदिनकरेनर्म्मदातीरसन्नि
धौ ॥ ३० ॥ तत्राक्षयवटंदिव्यंददर्शसुमनोहरम् ॥ अत्यूर्ध्वंविस्तृतमतिपुण्याश्रमपदंपरम् ॥ ३१ ॥ पौलस्त्यतपसःस्थानंसुग
न्धिमरुदन्वितम् ॥ कार्त्तवीर्य्यार्जुनाभ्याशेतत्रतस्थौगणैःसह ॥ ३२ ॥ सुष्वापपुष्पशय्यायांकिङ्करैःपरिसेवितः ॥ निद्रांय
यौपरिश्रान्तःपरमानन्दसंयुतः ॥ ३३ ॥ निशातीतेचसभृगुश्चारुस्वप्नंददर्शह ॥ नचिन्तितंयन्मनसावायुपित्तकफंविना ॥ ३४ ॥

गजाश्वशैलप्रासादगोवृक्षफलितेषुच ॥ आरुह्यमाणमात्मानंरुदन्तंकृमिभक्षितम् ॥ ३५ ॥ आरुह्यमाणमात्मानंनौकायांचन्दनोक्षि
तम् ॥ धृतवन्तंपुष्पमालांशोभितंपीतवाससा ॥ ३६ ॥ विण्मूत्रोक्षितसर्वाङ्गंवसापूयसमन्वितम् ॥ वीणांवरांवादयन्तमात्मान
ञ्चददर्शह ॥ ३७ ॥ विस्तीर्णपद्मपत्रैश्चस्वंददर्शसरित्तटे ॥ दध्याज्यमधुसंयुक्तंभुक्तवन्तंचपायसम् ॥ ३८ ॥ भुक्तवन्तंचता
म्बूलंलभन्तंब्राह्मणाशिषम् ॥ फलपुष्पप्रदीपञ्चपश्यन्तंस्वं ददर्श ह ॥ ३९ ॥ परिपक्वफलं क्षीरमुष्णान्नंशर्करान्वितम् ॥
स्वस्तिकंभुक्तवन्तंस्वंददर्शचपुनःपुनः ॥ ४० ॥ जलौकसावृश्चिकेनमीनेनभुजगेनच ॥ भक्षितंभीतमात्मानंपलायन्तंददर्शसः ॥
॥ ४१ ॥ ततोददर्शचात्मानंमण्डलंचन्द्रसूर्य्ययोः ॥ पतिपुत्रवतींनारींपश्यन्तंसस्मितंद्विजम् ॥ ४२ ॥ सुवेषयाकन्यकयास
स्मितेनद्विजेनच ॥ ददर्शश्लिष्टमात्मानंतुष्टेनपरितुष्टया ॥ ४३ ॥ फलितंपुष्पितंवृक्षंदेवताप्रतिमांनृपम् ॥ गजस्थञ्चरथस्थञ्चपश्य
न्तंस्वंददर्शह ॥ ४४ ॥ पीतवस्त्रपरीधानांरत्नालङ्कारभूषिताम् ॥ विशन्तींब्राह्मणीं गेहंपश्यन्तंस्वंददर्शह ॥ ४५ ॥ शंखञ्चस्फटिकं
श्वेतमालांमुक्तांचचन्दनम् ॥ सुवर्णंरजतंरत्नंपश्यन्तंस्वंददर्शह ॥ ४६ ॥ गजंवृषञ्चसर्पञ्चश्वेतञ्चश्वेतचामरम ॥ नीलोत्पलंदर्पणञ्चभा
र्गवोवैददर्शह ॥ ४७ ॥ रथस्थंनवरत्नाढ्यंमालतीमाल्यभूषितम् ॥ रत्नसिंहासनस्थंस्वंभृगुःस्वप्नेददर्शह ॥ ४८ ॥ पद्मश्रेणींपूर्णकुम्भंद
धिलाजान्वृतंमधु ॥ पर्णच्छत्रंच्छत्रिणञ्चभृगुःस्वप्नेददर्शह ॥ ४९ ॥ बकपंक्तिंहंसपंक्तिंकन्यापंक्तिंव्रतान्विताम् ॥ पूजयन्तींवटंशुभ्रंभृगुः
स्वप्नेददर्शह ॥ ५० ॥ मण्डपस्थंद्विजगणंपूजयन्तंहरंहरिम् ॥ जयोऽस्त्वित्युक्तवन्तंतंभृगुःस्वप्नेददर्शह ॥ ५१ ॥ सुधावृष्टिंपर्णवृष्टिंफल
वृष्टिञ्चशाश्वतीम् ॥ पुष्पचन्दनवृष्टिञ्चभृगुःस्वप्नेददर्शह ॥ ५२ ॥ सद्योमांसंजीवमत्स्यंमयूरंश्वेतखञ्जनम् ॥ सरोवरञ्चतीर्थानिभृगुःस्वप्ने
ददर्शह ॥ ५३ ॥ पारावतंशुकंचापंशंखचिल्लञ्चचातकम् ॥ व्याघ्रंसिंहञ्चसुरभींभृगुःस्वप्नेददर्शह ॥ ५४ ॥ गोरोचनांहरिद्राञ्चशुक्लधान्या
चलंवरम् ॥ ज्वलदग्निंतथादूर्वांभृगुःस्वप्नेददर्शह ॥ ५५ ॥ देवालयसमूहञ्चशिवलिङ्गञ्चपूजितम् ॥ अर्चितांमृन्मयींशैवींभृगुःस्वप्नेदद
र्शह ॥ ५६ ॥ यवगोधूमचूर्णानांभक्ष्याणिविविधानिच ॥ भृगुर्ददर्शस्वप्नेचबुभुजेचपुनःपुनः ॥ ५७ ॥ दिव्यवस्त्रपरीधानारत्नभूषण

भूषिताः ॥ अगम्यागमनंस्वप्नेचकारभृगुनन्दनः ॥ ५८ ॥ ददर्शनर्त्तकींवेश्यांरुधिरञ्चसुरांपपौ ॥ रुधिरोक्षितसर्वाङ्गःस्वप्नेचभृगुनन्दनः
॥ ५९ ॥ पक्षिणांपीतवर्णानांमानुषाणाञ्चनारद ॥ मांसानिबुभुजेरामोहृष्टःस्वप्नेऽरुणोदये ॥ ६० ॥ अकस्मान्निगडैर्बद्धंक्षतंशस्त्रेण
स्त्वंपुनः ॥ दृष्ट्वाचबुबुधेप्रातःसमुत्तस्थौहरिंस्मरन् ॥ ६१ ॥ अतीवहृष्टःस्वप्नेनप्रातःकृत्यञ्चकारसः ॥ मनसाबुबुधेसर्वंविजेष्यामिरिपुं
ध्रुवम् ॥ ६२ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदनारायणसंवादेत्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ ॥ छ ॥
नारायणउवाच ॥ ॥ सप्रातराह्निकंकृत्वासमालोच्यचतैःसह ॥ दूतंप्रस्थापयामासकार्त्तवीर्य्याश्रमंभृगुः ॥ १ ॥ सदूतःशीघ्रमा
गत्यवसन्तंराजसंसदि ॥ वेष्टितंसचिवैःसार्द्धमुवाचनृपतीश्वरम् ॥ २ ॥ ॥ रामदूतउवाच ॥ नर्म्मदातीरसान्निध्येन्यग्रोधाक्षयमूलके ॥
सभृगुर्भ्रातृभिःसार्द्धंतत्रत्वंगन्तुमर्हसि ॥ ३ ॥ युद्धंकुरुमहाराजज्ञातिभिर्ज्ञातिभिःसह ॥ त्रिस्सप्तकृत्वोनिर्भूपांकरिष्यतिमहीमिति ॥
॥ ४ ॥ इत्युक्त्वारामदूतश्चाप्यगच्छद्रामसन्निधिम् ॥ राजाविधायसन्नाहंसमरंगन्तुमुद्यतः ॥५॥ गच्छन्तंसमरंदृष्ट्वाप्राणेशंसामनोरमा ॥
तमेववारयामासवासयामाससन्निधौ ॥ ६ ॥ राजामनोरमांदृष्ट्वाप्रसन्नवदनेक्षणः ॥ तामुवाचसभामध्येवाक्यंमानसिकंमुने ॥ ७ ॥
कार्त्तवीर्य्यार्जुनउवाच ॥ ॥ मामेवाह्वयतेकान्तेजमदग्निसुतोमहान् ॥ सतिष्ठन्नर्म्मदातीरेरणायभ्रातृभिःसह ॥ ८ ॥ सम्प्राप्यशङ्कर
च्छन्नंमन्त्रञ्चकवचंहरेः ॥ त्रिस्सप्तकृत्वोनिर्भूपांकर्त्तुमिच्छतिमेदिनीम् ॥ ९ ॥ आन्दोलयंतिमेप्राणामनःसंक्षुभितंमुहुः ॥ शश्वत्स्फुरति
वामांगंदृष्टंस्वप्नंशृणुप्रिये ॥ १० ॥ तैलाभ्यङ्गितमात्मानमपश्यंगर्दभोपरि ॥ ओढपुष्पस्यमाल्यंचबिभ्रतंरक्तचन्दनम् ॥ ११ ॥
रक्तवस्त्रपरीधानंलोहालङ्कारभूषितम् ॥ क्रीडन्तंचहसन्तञ्चनिर्वाणाङ्गारराशिना ॥१२॥ भस्माच्छन्नांचपृथिवींजपापुष्पान्वितांसति ॥
रहितंचन्द्रसूर्य्याभ्यांरक्तसन्ध्यान्वितंनभः ॥ १३॥ मुक्तकेशांचनृत्यन्तींविधवांछिन्ननासिकाम् ॥ रक्तवस्त्रपरीधानामपश्यंचाट्टहासि
नीम् ॥ १४ ॥ सशरामग्निरहितांचितांभस्मसमन्विताम ॥ भस्मवृष्टिमसृग्वृष्टिमग्निवृष्टिमपीश्वरि ॥ १५ ॥ पक्वतालफला
कीर्णांपृथिवीमस्थिसंयुताम् ॥ अपश्यंकर्परौघंचछिन्नकेशनखान्वितम् ॥ १६ ॥ पर्वतंलवणानांचराशीभूतंकपर्दकम ॥ चूर्णानाञ्चै

वतैलानामहंशंकन्दरंनिशि ॥ १७ ॥ अहंशंपुष्पितंवृक्षमशोककरवीरयोः ॥ तालवृक्षश्चफलितंतत्रचैवपतत्फलम् ॥ १८ ॥
स्वकरात्पूर्णकलशःपपातचबभञ्जच ॥ इत्यपश्यंचगगनात्सम्पतच्चन्द्रमण्डलम् १९ ॥ अपश्यमम्बरात्सूर्य्यमण्डलसम्पतद्भुवि ॥
उल्कापातंधूमकेतुंग्रहणञ्चन्द्रसूर्य्ययोः ॥ २० ॥ विकृताकारपुरुषंविकटास्यंदिगम्बरम् ॥ आगच्छन्तञ्चाग्रतस्तमपश्यञ्चभयान
कम् ॥ २१ ॥ बालाद्वादशवर्षीयावस्त्रभूषणभूषिता ॥ संरुष्टायातिमद्गेहादित्यपश्यमहंनिशि ॥ २२ ॥ आज्ञां त्वं देहिग
जेन्द्रत्वद्गेहाद्यामिकाननम् ॥ वदन्तिवंमामितिचनिश्यपश्यमहंशुचा ॥ २३ ॥ रुष्टोविप्रोमांशपतेसंन्यासीचतथागुरुः ॥
भित्तौपुत्तलिकाश्चित्रानृत्यन्तीश्चददर्शह ॥ २४ ॥ चञ्चलानांचगृध्राणांकाकानांनिकरैःसदा ॥ पीडितंमहिषाणांचस्वमपश्य
महंनिशि ॥ २५ ॥ पीडितंतैलयन्त्रेणभ्रामितंतैलकारिणा ॥ दिगम्बरान्पाशहस्तानपश्यमहमीश्वरि ॥ २६ ॥ नृत्य
न्तिगायकाःसर्वेगानंगायन्तिमेगृहे ॥ विवाहंपरमानन्दमित्यपश्यमहंनिशि ॥ २७ ॥ रमणंकुर्वतोलोकान्केशाकेशिचकुर्वतः ॥
अहंशंममरंरात्रौकाकानांचशुनामपि ॥ २८ ॥ मोटकानिचपिण्डानिश्मशानंशवसंयुतम् ॥ रक्तवस्त्रंशुक्लवस्त्रमपश्यंनिशिकामिनि ॥
॥ २९ ॥ कृष्णाम्बराकृष्णवर्णानग्नाविमुक्तकेशिनी ॥ विधवाश्लिष्यतिचमामपश्यंनिशिशोभने ॥ ३० ॥ नापितोमुण्डतेमुण्डंश्म
श्रुश्रेणींचमेप्रिये ॥ वक्षःस्थलञ्चनखरमित्यपश्यमहंनिशि ॥ ३१ ॥ पादुकाचर्मरज्जूनामपश्यंराशिमुल्बणम् ॥ चक्रंभ्रमन्तंभूमौच
कुलालस्येतिसुन्दरि ॥ ३२ ॥ वात्ययाघूर्णमानञ्चशुष्कवृक्षंसमुत्थितम् ॥ घूर्णमानंकबन्धंवैचापश्यंनिशिसुव्रते ॥ ३३ ॥ ग्रथि
तांमुण्डमालांचघूर्णमानांचवात्यया ॥ अतीवघोरदशनामप्यपश्यमहंवरे ॥ ३४ ॥ भूतप्रेतामुक्तकेशावमन्तश्चहुताशनम् ॥ मांभीष
यन्तिसततमित्यपश्यमहंनिशि ॥ ३५ ॥ दग्धजीवंदग्धवृक्षंव्याधिग्रस्तंनरंपरम् ॥ अङ्गहीनञ्चवृषलमप्यपश्यमहंनिशि ॥ ३६ ॥
गेहपर्वतवृक्षाणांसहसापतनंपरम् ॥ मुहुर्मुहुर्वज्रपातमप्यपश्यमहंनिशि ॥ ३७ ॥ कुक्कुराणांसृगालानांरोदनञ्चमुहुर्मुहुः ॥ गृहेगृहेच
नियतमपश्यंसर्वतोनिशि ॥ ३८ ॥ अधश्शिरस्तूर्द्ध्वपादंमुक्तकेशंदिगम्बरम् ॥ भूमौभ्रमन्तंगच्छन्तंचाप्यपश्यमहंनरम् ॥ ३९ ॥

विकृताकारशब्दंचग्रामादौदेवगोदनम् ॥ प्रातःश्रुत्वैवावबुद्धःकउपायोवदाधुना ॥ ४० ॥ नृपतेर्वचनंश्रुत्वाहृदयेनविदूयता ॥ सगद्गदं
चरुदतीतमुवाचनृपेश्वरम् ॥ ४१ ॥ ॥ मनोरमोवाच ॥ ॥ हेनाथरमणश्रेष्ठश्रेष्ठःसर्वमहीभृताम् ॥ प्राणातिरेकप्राणेशशृणुवाक्यं
शुभावहम् ॥ ४२ ॥ नारायणांशोभगवान्जामदग्न्योमहाबली ॥ सृष्टिसंहर्तुरीशस्यशिष्योऽयंजगतःप्रभोः ॥ ४३ ॥ त्रिःसप्तकृत्वो
निर्भूपांकरिष्यामिमहीमिति ॥ प्रतिज्ञायस्यरामस्यतेनसार्द्धंरणंत्यज ॥ ४४ ॥ पापिनंरावणंजित्वाशूरंत्वमपिमन्यसे ॥ सत्वयानजि
तोनाथस्त्वपापेनपराजितः ॥ ४५ ॥ योनरक्षतिधर्म्मंचतस्यकोरक्षिताभुवि ॥ सनश्यतिस्वयंमूढोजीवन्नपिमृतोहिसः ॥ ४६ ॥
शुभाशुभस्यसततंसाक्षीधर्म्मस्यकर्म्मणः ॥ आत्मारामःस्थितःस्वान्तःमृढस्त्वंनहिपश्यसि ॥ ४७ ॥ पुत्रदारादिकंयद्यत्सर्वैश्वर्य्यं
सुधर्म्मिणाम् ॥ जलबुद्बुदवत्सर्वमनित्यंनश्वरंनृप ॥ ४८ ॥ संसारस्वप्नसदृशंमत्वासन्तोऽत्रभारते ॥ ध्यायन्तिसततंधर्म्मंतपःकुर्वंति
भक्तितः ॥ ४९ ॥ दत्तेनदत्तंयज्ज्ञानंतत्सर्वंविस्मृतंत्वया ॥ अस्तिचेद्विप्रहिंसायांकुबुद्धेत्वन्मनःकथम् ॥ ५० ॥ सुखार्थंमृगयांगत्वा
तत्रोपोष्यद्विजाश्रमे ॥ भुक्तामिष्टमपूर्वंश्चहतोविप्रोनिरर्थकम् ॥ ५१ ॥ गुरुविप्रसुराणांचयःकरोतिपराभवम् ॥ अभीष्टदेवस्तंरुष्टोवि
पत्तिस्तस्यसन्निधौ ॥ ५२ ॥ स्मरणंकुरुराजेन्द्रदत्तात्रेयपदाम्बुजम् ॥ गुरौभक्तिश्चसर्वेषांसर्वविघ्नविनाशिनी ॥ ५३ ॥ गुरुदेवंसमभ्य
र्च्यतंभृगुंशरणंव्रज ॥ विप्रेदेवेप्रसन्नेचक्षत्रियाणांनहिक्षतिः ॥ ५४ ॥ विप्रस्यकिंकरोभूपोवैश्योभूपस्यभूमिप ॥ सर्वेषांकिङ्कराःशूद्रा
ब्राह्मणस्यविशेषतः ॥ ५५ ॥ अयशःशरणंशश्वत्क्षत्रियस्यचक्षत्रिये ॥ महद्यशस्तच्छरणंगुरुदेवद्विजेषुच ॥ ५६ ॥ ब्राह्मणंभजराजे
न्द्रगरीयांसंसुरादपि ॥ ब्राह्मणेपरितुष्टेचसन्तुष्टाःसर्वदेवताः ॥ ५७ ॥ इत्येवमुक्काराजेन्द्रंक्रोडेकृत्वामहासती ॥ मुहुर्मुहुर्मुखंदृष्ट्वाविल
लापरुरोदच ॥ ५८ ॥ क्षणंतिष्ठमहाराजपुनरेवमुवाचसा ॥ स्नानंकुरुमहाराजभोजयिष्यामिवाञ्छितम् ॥ ५९ ॥ चन्दनागुरुकस्तूरी
कर्पूरैःकुङ्कुमैर्युतम् ॥ अनुलेपंकरिष्यामिसर्वांगेतवसुन्दर ॥ ६० ॥ क्षणंसिंहासनेतिष्ठक्षणंवक्षसिमेप्रभो ॥ सभायांपुष्परचितेतल्पे
पश्यामिशोभनम् ॥ ६१ ॥ शतपुत्राधिकःप्रेम्णासतीनांवैपतिर्नृप ॥ निरूपितोभगवतावेदेषुहरिणास्वयम् ॥ ६२ ॥ मनोरमावचः

श्रुत्वाराजापरमपंडितः ॥ बोधयामासतांराज्ञींददौप्रत्युत्तरंपुनः ॥ ६३ ॥ कार्त्तवीर्य्यार्जुनउवाच ॥ शृणुकान्तेप्रवक्ष्यामिश्रुतंसर्वंत्वयेरि
तम् ॥ शोकार्त्तानांचवचनंनप्रशंस्यंसभासुच ॥ ६४ ॥ सुखंदुःखंभयंशोकःकलहःप्रीतिरेवच ॥ कर्मभोगार्हकालेनसर्वंभवतिसुन्दरि ॥
॥ ६५ ॥ कालोददातिराजत्वंकालोमृत्युंपुनर्भवम् ॥ कालःसृजतिसंसारंकालःसंहरतेपुनः ॥६६॥ करोतिपालनंकालःकालरूपीजना
र्दनः ॥ कालस्यकालःश्रीकृष्णोविधातुर्विधिरेवच ॥ ६७ ॥ संहर्त्तुर्वापिसंहर्त्तापातुःपाताचकर्मकृत् ॥ सकर्मणांकर्मरूपीददातितपसां
फलम् ॥ कःकेनहन्यतेजन्तुःकर्मणावैविनासति ॥ ६८ ॥ स्रष्टासृजतिसृष्टिंचसंहर्त्तासंहरेत्पुनः ॥ पातापातिचभूतानियस्याज्ञांपरिपा
लयेत् ॥ ६९ ॥ यस्याज्ञयावातिवातःसन्ततंभयविह्वलः ॥ शश्वत्सञ्चरतेमृत्युःसूर्य्यस्तपतिसन्ततम् ॥ ७० ॥ वर्षतीन्द्रोदहत्यग्निःका
लोभ्रमतिभीतवत् ॥ तिष्ठन्तिस्थावराःसर्वेचरन्तिसततंचराः ॥ ७१ ॥ वृक्षाश्चपुष्पिताःकालेफलिताःपल्लवान्विताः ॥ शुष्यन्तिका
लतःकालेवर्द्धन्तेचतदाज्ञया ॥ ७२ ॥ आविर्भूतातिरोभूतासृष्टिरेवतदाज्ञया ॥ तस्याज्ञयाभवेत्सर्वंनकिञ्चित्स्वेच्छयानृणाम् ॥ ७३ ॥
नारायणांशोभगवाञ्जामदग्न्योमहाबलः ॥ त्रिस्सप्तकृत्वोनिर्भूपांकरिष्यतिमहीमिति ॥ ७४ ॥ प्रतिज्ञाविफलातस्यनभवेत्तुकदाचन ॥
निश्चितंतस्यवध्योऽहमितिजानामिसुव्रते ॥ ७५ ॥ ज्ञात्वासर्वंभविष्यंचशरणंयामितत्कथम् ॥ प्रतिष्ठितानांचाकीर्त्तिर्मरणादतिरि
च्यते ॥ ७६ ॥ इत्येवमुक्त्वाराजेन्द्रःसमरंगन्तुमुद्यतः ॥ वाद्यञ्चवादयामासकारयामासमङ्गलम् ॥ ७७ ॥ शतकोटिर्नृपाणांचराजेन्द्रा
णांत्रिलक्षकम् ॥ अक्षौहिणीनांशतकंमहाबलपराक्रमम् ॥ ७८ ॥ अश्वानांचगजानांचपदातीनांतथैवच ॥ असंख्यकंरथानांचगृहीत्वा
गन्तुमुद्यतः ॥ ७९ ॥ बभूवस्तिमितासाध्वीदृष्ट्वातंगमनोन्मुखम् ॥ धृतवन्तश्चसन्नाहमक्षयंसशरंधनुः ॥ ८० ॥ क्रीडागारेक्षणंतस्थौ
कृत्वाकान्तंस्ववक्षसि ॥ पश्यन्तीतन्मुखाम्भोजंचुचुम्बचमुहुर्मुहुः ॥ ८१ ॥ इति श्रीब्रह्मवैवर्त्तेमहापुराणेतृतीयेगणपतिखण्डेनारदना
रायणसंवादेचतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ ॥ छ ॥ ॥ नारायणउवाच ॥ ॥ मनोरमाप्राणनाथंक्षणंकृत्वास्ववक्षसि ॥
भविष्यंमनसाचक्रेयद्यत्स्वामिमुखाच्छ्रुतम् ॥ १ ॥ पुत्रांश्चपुरतःकृत्वाबान्धवांश्चस्वकिङ्करान् ॥ सस्मारस्माहरिपदंमेनेसत्यंभवेन्मुने ॥ २ ॥

योगेनभित्त्वाषट्चक्रंवायुंसंस्थाप्यमूर्द्धनि ॥ ब्रह्मरन्ध्रस्थकमलेसहस्रदलसंयुते ॥ ३ ॥ स्वान्तमाकृष्यविषयाज्जलबुद्बुदसन्नि
भात ॥ संस्थाप्यब्रह्मज्ञानेनलोलंब्रह्मणिनिष्कले ॥ ४ ॥ द्विविधंकर्मसंन्यस्यनिर्मूलमपुनर्भवम् ॥ तत्रप्राणांश्चतत्याजतच्चप्राणा
धिकंप्रियम् ॥ ५ ॥ सराजातांमृतांदृष्ट्वाविललापरुरोदच ॥ सन्नाहंसंपरित्यज्यकृत्वावक्षस्युवाचताम् ॥ ६ ॥ ॥ राजोवाच ॥ ॥
मनोरमेसमुत्तिष्ठनयाम्यामिरणाजिरम् ॥ सचेतनामांपश्येतिविलपन्तंमुहुर्मुहुः ॥ ७ ॥ मनोरमेसमुत्तिष्ठमयासार्द्धंगृहंव्रज ॥
नकरिष्यामिसमरंभृगुणासहभामिनि ॥ ८ ॥ मनोरमेसमुत्तिष्ठश्रीशैलंव्रजसुन्दरि ॥ तत्रक्रीडांकरिष्यामित्वयासार्द्धंयथापुरा ॥
॥ ९ ॥ मनोरमेसमुत्तिष्ठव्रजगोदावरींप्रिये ॥ जलक्रीडांकरिष्यामित्वयासार्द्धंयथापुरा ॥ १० ॥ मनोरमेसमुत्तिष्ठनन्दनंव्रजसुन्दरि
पुष्पभद्रानदीतीरेविहरिष्यामिनिर्जने ॥ ११ ॥ मनोरमेसमुत्तिष्ठमलयंव्रजसुन्दरि ॥ त्वयासार्द्धंगमिष्येहंतत्रचन्दनकानने ॥ १२ ॥
शीतेनगन्धयुक्तेनवायुनासुरभीकृते ॥ भ्रमरध्वनिसंयुक्तेपुंस्कोकिलरुतश्रिते ॥ १३ ॥ चन्दनागुरुकस्तूरीकुङ्कुमालेपनंकुरु ॥ चन्द
नोक्षितमर्वाङ्गंपश्यमांसस्मितेसति ॥ १४ ॥ सुधातुल्यंसुमधुरंवचनंरचयप्रिये ॥ कुटिलभ्रूविकारञ्चकथनंकुरुपेऽधुना ॥ १५ ॥
नृपस्यरोदनंश्रुत्वावाग्बभूवाशरीरिणी ॥ स्थिरोभवमहाराजकुरुषेरोदनंकथम् ॥ १६ ॥ त्वंमहाज्ञानिनांश्रेष्ठोदत्तात्रेयप्रसादतः ॥
जलबुद्बुदवत्सर्वंसंसारंपश्यशोभनम् ॥१७॥ कमलांशाचसासाध्वीजगामकमलालयम् ॥ त्वमेवगच्छवैकुण्ठंरणंकृत्वारणाजिरे ॥ १८ ॥
इत्येवंवचनंश्रुत्वाजहौशोकंनराधिपः ॥ ततश्चन्दनकाष्ठेनचितांदिव्याञ्चकारह ॥ १९ ॥ संस्काराग्निंकारयित्वापुत्रद्वाराददाहताम् ॥
नानाविधानिरत्नानिब्राह्मणेभ्योददौमुदा ॥ २० ॥ नानाविधानिदानानिवस्त्राणिविविधानिच ॥ मनोरमायाःपुण्येनब्राह्मणे
भ्योददौमुदा ॥ २१ ॥ भुज्यतांभुज्यतांशश्वद्दीयतांदीयतामिति ॥ शब्दोबभूवसर्वत्रकार्त्तवीर्य्याश्रमेमुने ॥ २२ ॥ कोपे
षुस्वाधिकारेषुस्थितंयद्यद्धनंतदा ॥ मनोरमायाःपुण्येनब्राह्मणेभ्योददौमुदा ॥ २३ ॥ राजाजगामसमरंहृदयेनविदूयता ॥ सार्द्धं
सैन्यसमूहैश्चवाद्यभाण्डैरसंख्यकैः ॥ २४ ॥ ददर्शामङ्गलंराजापुरोवर्त्मनिवर्त्मनि ॥ ययौतथापिसमरंनाजगामगृहंपुनः ॥ २५ ॥

मुक्तकेशींछिन्ननासांरुदतींचदिगम्बराम् ॥ कृष्णवस्त्रपरीधानामपरांविधवामपि ॥ २६ ॥ मुखदुष्टांयोनिदुष्टांव्याधियुक्तांश्चकुट्टि
नीम् ॥ पतिपुत्रविहीनांचडाकिनींपुंश्चलींतथा ॥ २७ ॥ कुम्भकारंतैलकारंव्याधंसर्पोपजीविनम् ॥ कुचैलमतिरूक्षा
ङ्गंनग्नंकाषायवासिनम् ॥ २८ ॥ वसाविक्रयिणश्चैवकन्याविक्रयिणन्तथा ॥ चितादग्धंशवंभस्मनिर्वाणाङ्गारमेवच ॥ २९ ॥
सर्पक्षतंनरंसर्पंगोधांचशशकंविषम् ॥ श्राद्धपाकश्चपिण्डश्चमोटकश्चतिलांस्तथा ॥ ३० ॥ देवलंवृषवाहश्चशूद्रश्राद्धान्नभोजिन
म् ॥ शूद्रान्नपाचकंशूद्रयाजकंग्रामयाजकम् ॥ ३१ ॥ कुशपुत्तलिकांचैवशवदाहनकारिणम् ॥ शून्यकुम्भंभग्नकुम्भंतैलंलवणम
स्थिच ॥ ३२ ॥ कार्पासंकच्छपंचूर्णंकुक्कुरंशब्दकारिणम् ॥ दक्षिणेचसृगालश्चकुर्वन्तंभैरवंरवम् ॥ ३३ ॥ कपर्दकश्चक्षौरश्च
च्छिन्नकेशंनखंमलम् ॥ कलहश्चविलापश्चतथातत्कारिणंजनम् ॥ ३४ ॥ अमङ्गलंरुदन्तश्चरुदन्तंशोककारिणम् ॥ ३५ ॥ मिथ्या
साक्ष्यप्रदातारंचौरश्चनरघातिनम् ॥ पुंश्चलीपतिपुत्रौचपुंश्चल्योदनभोजिनम् ॥ ३६ ॥ देवतागुरुविप्राणांवस्तुवित्तापहारिणम् ॥ दत्ता
पहारिणंदस्युंहिंसकंमूचकंखलम् ॥३७॥ पितृमातृविरक्तश्चद्विजाश्वत्थविघातिनम् ॥ सत्यघ्नश्चकृतघ्नंचस्थाप्यस्याप्यपहारिणम् ॥३८॥
विप्रमित्रद्रोहमेवंक्षतंविश्वासघातकम् ॥ गुरुदेवद्विजानांचनिन्दकंस्वाङ्गघातकम् ॥ ३९ ॥ जीवानांघातकंचैवस्वाङ्गहीनंचनिर्दयम् ॥
व्रतोपवासहीनंचदीक्षाहीनंनपुंसकम् ॥ ४० ॥ गलितव्याधिगात्रश्चकाणंबधिरमेवच ॥ पुल्कसंछिन्नलिङ्गश्चसुरामत्तंसुरांतथा ॥ ४१ ॥
क्षितंवमन्तंरुधिरंमहिषंगर्दभंतथा ॥ मूत्रंपुरीषंश्लेष्माणंरूक्षिणंनृकपालकम् ॥ ४२ ॥ चण्डवातंरक्तवृष्टिंसार्धंवृक्षपातनम् ॥ वृकंचसू
करंगृध्रंश्येनंकंकंचभल्लुकम् ॥ ४३ ॥ पाशंचशुष्ककाष्ठंचवायसंगन्धकंतथा ॥ ४४ ॥ प्रतिग्राहिब्राह्मणश्चतन्त्रमन्त्रोपजीविनम् ॥
वैद्यंचरक्तपुष्पंचाप्यौषधंतुपमेवच ॥४५॥ कुवार्तांमृतवार्तांचविप्रशापंचदारुणम् ॥ दुर्गन्धिवातंदुश्शब्दंराजापश्यत्सवर्त्मनि ॥ ४६ ॥
मनश्चकुत्सितंप्राणाःक्षुभिताश्चनिरन्तरम् ॥ वामाङ्गस्पन्दनंदेहजाड्यंराज्ञोबभूवह ॥ ४७ ॥ तथापिराजानिश्शङ्कोददर्शसमराङ्गणम् ॥
सर्वसैन्यसमायुक्तःप्रविवेशरणाजिरम् ॥ ४८ ॥ अवरुह्यरथात्तूर्णंदृष्ट्वाचपुरतोभृगुम् ॥ ननामदण्डवद्भूमौराजेन्द्रैःसहभक्तितः ॥ ४९ ॥

न्निर्वक्तुं च कः क्षमः ॥ यस्य संभावनीयं यद्गुणरूपं निरंजनम् ॥ ६४ ॥ तदतिरिक्तं स्तवनं किमहं स्तौमि निर्गुणम् ॥ ब्रह्मादीनामिदं स्तोत्रं षट्श्लोकोक्तं महामुने ॥ ६५ ॥ पठित्वा मुच्यते दुर्गाद्वांछितं च लभेन्नरः ॥ देवानां स्तवनं श्रुत्वा तानुवाच हरिः स्वयम् ॥ ६६ ॥ गोलोकं यात यूयं च यामि पश्चाच्छ्रिया सह ॥ नरनारायणौ तौ द्वौ श्वेतद्वीपनिवासिनौ ॥ ६७ ॥ एते यास्यंति गोलोकं तथा देवी सरस्वती ॥ अनंता[1] मम माया च कार्तिकेयो गणाधिपः ॥ सावित्री वेदमाता च पश्चाद्यास्यंति निश्चितम् ॥ ६८ ॥ तत्राहं द्विभुजः कृष्णो गोपीभी राधया सह ॥ अत्राहं कमलायुक्तः सुनंदादिभिरावृतः ॥ ६९ ॥ नारायणश्च कृष्णोऽहं श्वेतद्वीपनिवासकृत् ॥ ममैवैताः[2] कलाः सर्वे देवा ब्रह्मादयः स्मृताः ॥ ७० ॥ कलाकलांशकलया सुरासुरनरादयः ॥ गोलोकं यात यूयं च कार्यसिद्धिर्भविष्यति ॥ ७१ ॥ वयं पश्चाद्गमिष्यामः सर्वेषामिष्टसिद्धये ॥ इत्युक्त्वा वै सभामध्ये विरराम हरिः स्वयम् ॥ ७२ ॥ प्रणम्य देवताः सर्वा जग्मुर्गोलोकमद्भुतम् ॥ विचित्रं परमं धाम जरामृत्युहरं परम् ॥ ७३ ॥ ऊर्ध्वं वैकुंठतो गम्यं पंचाशत्कोटियोजनम् ॥ वायुना धार्यमाणं च निर्मितं स्वेच्छया विभोः ॥ ७४ ॥ तमनिर्वचनीयं च देवास्ते गमनोत्सुकाः ॥ ते मनोयायिनः सर्वे संप्रापुर्विरजातटम् ॥ ७५ ॥ दृष्ट्वा देवाः सरित्तीरं विस्मयं परमं ययुः ॥ शुद्धस्फटिकसंकाशं सुविस्तीर्णं मनोहरम् ॥ ७६ ॥ मुक्तामाणिक्यपरममणिरत्नाकरान्वितम् ॥ कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितम् ॥ ७७ ॥ प्रवालांकुरमुद्भूतं कुत्रचित्सुमनोहरम् ॥ परमामूल्यसद्रत्नाकरराजिविभूषितम् ॥ ७८ ॥ विधेरदृश्यमाश्चर्यं निधिश्रेष्ठाकरान्वितम् ॥ पद्मरागेंद्रनीलाना माकरं कुत्रचिन्मुने ॥ ७९ ॥ कुत्रचिच्च मरकताकरश्रेणीसमन्वितम् ॥ स्यमंतकाकरं कुत्र कुत्रचिद्रुचकाकरम् ॥ ८० ॥ अमूल्यपीत वर्णाभं मणिश्रेण्याकरान्वितम् ॥ रत्नाकरं कुत्रचिच्च कुत्रचित्कौस्तुभाकरम् ॥ ८१ ॥ कुत्र निर्वचनीयानां मणीनामाकरं परम् ॥ कुत्रचित्कुत्रचिद्रम्यविहारस्थलमुत्तमम् ॥ ८२ ॥ दृष्ट्वा तु परमाश्चर्यं जग्मुस्तत्पारमीश्वराः ॥ ददृशुः पर्वतश्रेष्ठं शतशृंगं मनोर

१ अनंतः—इ० पा० । २ ममैवामी—इ० पा० ।

मम् ॥ ८३ ॥ पारिजाततरूणां च वनराजिविराजितम् ॥ कल्पवृक्षैः परिवृतं वेष्टितं कामधेनुभिः ॥ ८४ ॥ कोटियोजनमूर्ध्वं च दैर्घ्यं दशगुणोत्तरम् ॥ शैलप्रस्थपरिमितं पंचाशत्ककोटियोजनम् ॥८५॥ प्राकाराकारमस्यैव शिखरे रासमंडलम् ॥ दशयोजनविस्तीर्णं वर्तुलाकारमुत्तमम् ॥ ८६ ॥ पुष्पोद्यानसहस्रेण पुष्पितेन सुगंधिना ॥ संकुलेन मधुव्राणां समूहेन समन्वितम् ॥ ८७ ॥ सुरतद्रव्यसंयुक्तै राजितं रतिमंदिरैः ॥ रत्नमंडपकोटीनां सहस्रेण समन्वितम् ॥ ८८ ॥ रत्नसोपानयुक्तेन सद्रत्नकलशेन च ॥ हरिन्मणीनां स्तंभेन शोभितेन च शोभितम् ॥ ८९ ॥ सिंदूरवर्णमणिभिः परितः खचितेन च ॥ इन्द्रनीलैर्मध्यगतैर्मंडितेन मनोहरैः ॥९०॥ रत्नप्राकारसंयुक्तमणिभेदैर्विराजितम् ॥ द्वारैः कपाटसंयुक्तैश्चतुर्भिश्च विराजितम् ॥ ९१ ॥ रज्जुग्रंथिसमायुक्तं रसालपल्लवान्वितैः ॥ परितः कदलीस्तंभसमूहैश्च समन्वितम् ॥ ९२ ॥ शुक्लधान्यपर्णजालफलदूर्वांकुरान्वितम् ॥ चंदनागरुकस्तूरीकुंकुमद्रवचर्चितम् ॥ ९३ ॥ वेष्टितं गोपकन्यानां समूहैः कोटिशो मुने ॥ रत्नालंकारसंयुक्तै रत्नमालाविराजितैः ॥ ९४ ॥ रत्नकंकणकेयूररत्ननूपुरभूषितैः ॥ रत्नकुंडलयुग्मेन गंडस्थलविराजितैः ॥ ९५ ॥ रत्नांगुलीयललितैर्हस्तांगुलिविराजितैः ॥ रत्नपाशकवृन्दैश्च विराजितपदांगुलैः ॥ ९६ ॥ भूषितै रत्नभूषाभिः सद्रत्नमुकुटोज्ज्वलैः ॥ गजेंद्रमुक्तालंकारैर्नासिकामध्यराजितैः ॥ ९७ ॥ सिंदूरबिंदुना सार्द्धमलकाधःस्थलोज्ज्वलैः ॥ चारुचंपकवर्णाभैश्चंदनद्रवचर्चितैः ॥ ९८ ॥ पीतवस्त्रपरीधानैर्बिंबाधरमनोहरैः ॥ शरत्पार्वणचन्द्राणां प्रभां मुष्णन्मुखोज्ज्वलैः ॥ ९९ ॥ शरत्प्रफुल्लपद्मानां शोभामोषणलोचनैः ॥ कस्तूरीपत्रिकायुक्तै रेखाक्तकज्जलोज्ज्वलैः ॥ १०० ॥ प्रफुल्लमालतीमालाजालैः कबरशोभितैः ॥ मधुलुब्धमधुव्राणां समूहैश्चापि संकुलैः ॥ चारुणा गमनेनैव गजखंजनगंजनैः ॥ १०१ ॥ वक्रभ्रूभंगसंयोगश्लक्ष्णस्मितसमन्वितैः ॥ पक्वदाडिमबीजाभदंतपंक्तिविराजितैः ॥ १०२ ॥ खगेंद्रचंचुशोभाढ्यनासिकोन्नतभूषितैः ॥ गजेंद्रगंडयुग्माभस्तनभारनतैरिव ॥ १०३ ॥ नितंबकठिनश्रोणीपीनभारभरानतैः ॥

१ षट्कैश्च पदांगुलिविराजितैः—इ०पा० । २ प्रभाजुष्टमुखोज्ज्वलैः—इ०पा० । ३ मोचनैः—इ०पा० ।

कंदर्पशरचेष्टाभिर्जर्जरीभूतमानसैः ॥ १०४ ॥ दर्पणैः पूर्णचंद्रास्यसौंदर्यदर्शनोत्सुकैः ॥ राधिकाचरणांभोजसेवासक्तम नोरथैः॥ १०५ ॥सुंदरीणां समूहैश्च रक्षितं राधिकाज्ञया ॥ क्रीडासरोवराणां च लक्षैश्च परिवेष्टितम् ॥ १०६ ॥ श्वेतरक्तैर्लोहि तैश्च वेष्टितैः पद्मराजितैः ॥ सुकूजद्भिर्मधुव्राणां समूहैः संकुलैः सदा ॥ १०७ ॥ पुष्पोद्यानसहस्रेण पुष्पितेन सम न्वितम् ॥ कोटिकुंजकुटीरैश्च पुष्पशय्यासमन्वितैः ॥ १०८ ॥ भोगद्रव्यसकर्पूरतांबूलवस्त्रसंयुतैः ॥ रत्नप्रदीपैः परितः श्वेतचामरदर्प णैः ॥ ॥ १०९ ॥ विचित्रपुष्पमालाभिः शोभितैः शोभितं मुने ॥ तं रासमंडपं दृष्ट्वा जग्मुस्ते पर्वताद्बहिः ॥ ११० ॥ ततो विचक्षणं रम्यं ददृशुः सुंदरं वनम् ॥ वनं वृंदावनं नाम राधामाधवयोः प्रियम् ॥ १११ ॥ क्रीडास्थानं तयोरेव कल्पवृक्षचयान्वितम् ॥ विर जातीरनीराक्तैः कंपितं मंदवायुभिः ॥ ११२ ॥ कस्तूरीयुक्तपत्राब्जैः पुष्पौघैः सुरभीकृतम् ॥ नवपल्लवसंसक्तपरपुष्टरुतैर्युतम् ॥ ११३॥ कुत्र हेलिकदंबानां कदंबैः.कमनीयकम् ॥ मंदाराणां चंपकानां चन्दनानां तथैव च॥ ११४॥ सुगंधिकुसुमानां च गंधेन सुरभीकृतम् ॥ आम्राणां नागरंगाणां पनसानां तथैव च ॥ ११५ ॥ तालानां नारिकेलानां वृंदैर्वृंदारकं वनम् ॥ जंबूनां बदरीणां च खर्जूराणां विशे षतः ॥ ११६ ॥ गुर्वाकाम्रातकानां च जंबीराणां च नारद ॥ कदलीनां श्रीफलानां दाडिमानां मनोहरैः ॥ ११७ ॥ सुपक्कफलसंयुक्तैः समूहैश्च विराजितम् ॥ पिप्पलीनां च शालानामश्वत्थानां तथैव च ॥ ११८ ॥ निंबानां शाल्मलीनां च तिंतिडीनां च शोभनैः ॥ अन्येषां तरुभेदानां संकुलैः संकुलं सदा ॥ ११९ ॥ परितः कल्पवृक्षाणां वृन्दैर्वृन्दैर्विराजितम् ॥ मल्लिकामालतीकुंदकेतकीमाधवी लताः ॥ १२० ॥ एतासां च समूहैश्च यूथिकाभिः समन्वितम् ॥ चारुकुंजकुटीरैस्तैः पंचाशत्कोटिभिर्मुने ॥ १२१ ॥ रत्नप्रदीपदी पैश्च धूपेन सुरभीकृतैः ॥ शृंगारद्रव्ययुक्तैश्च वासितैर्गंधवायुभिः ॥ १२२ ॥ चंदनाक्तैः पुष्पतल्पैर्मालाजालसमन्वितैः ॥ मधुलुब्धम धुव्राणां कलशब्दैश्च शब्दितम् ॥ १२३ ॥ रत्नालंकारशोभाढ्यैर्गोपीवृंदैश्च वेष्टितम् ॥ पंचाशत्कोटिगोपीभी रक्षितं राधिका

१ वृन्दावनम् ० पा० । २ पियालानाम् इ० पा० ।

ज्ञया ॥१२४॥ द्वात्रिंशत्काननं तत्र रम्यं रम्यं मनोहरम् ॥ वृदावनाभ्यतरितं निर्जनस्थानमुत्तमम् ॥ १२५ ॥ सुपक्कमधुरस्वादुफलैर्वृं
दारकं मुने ॥ गोष्ठानां च गवां चैव समूहैश्च समन्वितम् ॥ १२६ ॥ पुष्पोद्यानसहस्रेण पुष्पितेन सुगंधिना ॥ मधुलुब्धमधुव्राणां
समूहेन समन्वितम् ॥ ॥ १२७ ॥ पंचाशत्कोटिगोपीनां विलासैश्च विराजितम् ॥ श्रीकृष्णतुल्यरूपाणां सद्रत्नगुंठितैर्वरैः ॥ १२८॥
दृष्ट्वा वृदावनं रम्यं ययुर्गोलोकमीश्वराः ॥ परितो वर्तुलाकारं कोटियोजनविस्तृतम् ॥ १२९ ॥ रत्नप्राकारसंयुक्तं चतुर्द्वारान्वितं
मुने ॥ गोपानां च समूहैश्च द्वारपालैः समन्वितम् ॥१३०॥ आश्रमै रत्नखचितैर्नानाभोगसमन्वितैः ॥ गोपीनां कृष्णभृत्यानां पंचा
शत्कोटिभिर्युतम् ॥१३१॥ भक्तानां गोपवृन्दानामाश्रमैः शतकोटिभिः ॥ ततोऽधिकसुविस्तीर्णैः सद्रत्नग्रथितैर्युतम् ॥१३२॥ आश्रमैः
पार्षदानां च ततोऽधिकविलक्षणैः ॥ अमूल्यरत्नरचितैः संयुक्तं दशकोटिभिः ॥ १३३ ॥ पार्षदप्रवराणां च श्रीकृष्णरूपधारिणाम् ॥
आश्रमैः कोटिभिर्युक्तं सद्रत्नेन विनिर्मितैः ॥ १३४ ॥ राधिकाशुद्धभक्तानां गोपीनामाश्रमैर्वरैः ॥ सद्रत्नरचितैर्द्रव्यैर्द्वात्रिंशत्कोटिभिर्यु
तम् ॥१३५॥ तासां च किंकरीणां च भवनैः सुमनोहरैः ॥ मणिरत्नादिरचितैः शोभितं दशकोटिभिः ॥१३६॥ शतजन्मतपःपूता भक्ता
ये भारते भुवि ॥ हरिभक्तिपरा ये च कर्मनिर्वाणकारकाः ॥१३७॥ स्वप्ने ज्ञाने हरेर्ध्याने विविष्टमानसा मुने ॥ राधाकृष्णेति कृष्णेति
प्रजपंतो दिवानिशम् ॥ १३८ ॥ तेषां श्रीकृष्णभक्तानां निवासैः सुमनोहरैः ॥ सद्रत्नमणिनिर्माणैर्नानाभोगसमन्वितैः ॥ १३९ ॥
पुष्पशय्यापुष्पमालाश्वेतचामरशोभितैः ॥ रत्नदर्पणशोभाढ्यैर्हरिन्मणिसमर्पितैः ॥ १४० ॥ अमूल्यरत्नकलशसमूहान्वितशेखरैः ॥
सूक्ष्मवस्त्राभ्यंतरितैः संयुक्तं शतकोटिभिः ॥ १४१ ॥ देवास्तमद्भुतं दृष्ट्वा कियद्दूरं ययुर्मुदा ॥ तत्राक्षयवटं रम्यं ददृशुर्जगदीश्वराः ॥
॥ १४२ ॥ पंचयोजनविस्तीर्णमूर्ध्वं तद्द्विगुणं मुने ॥ सहस्रस्कंधसंयुक्तशाखासंस्थासमन्वितम् ॥ १४३ ॥ रक्तपक्वफलाकीर्णं शोभितं
रत्नवेदिभिः ॥ कृष्णस्वरूपांस्तन्मूले ददृशुर्बालभाञ्छिशून् ॥ १४४ ॥ पीतवस्त्रपरीधानान्क्रीडासक्तमनोहरान् ॥ चन्दनोक्षितसर्वां

१ वृन्दावनम्–इ० पा०। २ ग्रथितैः–इ० पा०। ३ प्रबलान्–इ० पा०।

गात्ररत्नभूषणभूषितान् ॥ १४५ ॥ ददृशुस्तत्र देवेशाः पार्षदप्रवरान्हरेः ॥ ततोऽविदूरे ददृशू राजमार्गं मनोहरम् ॥ १४६ ॥ सिंदूराका
रमणिभिः परितो रचितं मुने ॥ इंद्रनीलैः पद्मरागैर्हीरकै रुचकैस्तथा ॥ १४७ ॥ निर्मितैर्वेदिभिर्युक्तं परितो रत्नमंडपम् ॥ चंदनागुरु
कस्तूरीकुंकुमद्रवचर्चितम् ॥ १४८ ॥ दधिपूर्णलाजफलपुष्पदूर्वांकुरान्वितम् ॥ सूक्ष्मसूत्रग्रंथियुक्तश्रीखंडपल्लवान्वितम् ॥ १४९ ॥
रंभास्तंभसमूहैश्च कुङ्कुमाक्तैर्विराजितम् ॥ सद्रत्नमंडलघटैः फलशाखासमन्वितैः ॥ १५० ॥ सिंदूरकुङ्कुमाक्तैश्च गंधचंदनचर्चितैः ॥
भूषितैः पुष्पमालाभिः पादपैः परिभूषितम् ॥ १५१ ॥ गोपिकानां समूहैश्च क्रीडासक्तैश्च वेष्टितम् ॥ बहुमूल्येन रत्नेनं
रत्नसोपाननिर्मितान् ॥ १५२ ॥ वह्निशौचांशुकै रम्यैः श्वेतचामरदर्पणैः ॥ रत्नतल्पविचित्रैश्च पुष्पमाल्यैर्विराजितान् ॥ १५३ ॥
षोडशद्वारसंयुक्तान्द्वारपालैश्च रक्षितान् ॥ परितः परिखायुक्तान्रत्नप्राकारवेष्टितान् ॥ १५४ ॥ चंदनागुरुकस्तूरीकुंकुमद्रवचर्चि
तान् ॥ गृहान्मनोरमान्दृष्ट्वा ते देवा गमनोत्सुकाः ॥ १५५ ॥ जग्मुः शीघ्रं कियद्दूरं ददृशुः सुंदरं ततः ॥ आश्रमं राधिका
याश्च रासेश्वर्याश्च नारद ॥ १५६ ॥ देवाधिदेव्या गोपीनां वरायाश्चारुनिर्मितम् ॥ प्राणाधिकायाः कृष्णस्य रम्यद्रव्यमनोहरम्
॥ १५७ ॥ सर्वानिर्वचनीयं च पंडितैर्न निरूपितम् ॥ सुचारुवर्तुलाकारं षट्गव्यूतिप्रमाणकम् ॥ १५८ ॥ शतमंदिरसंयुक्तं
ज्वलितं रत्नतेजसा ॥ अमूल्यरत्नसाराणां चयैर्विरचितं वरम् ॥ १५९ ॥ दुर्लंघ्याभिर्गभीराभिः परिखाभिः सुशोभितम् ॥
कल्पवृक्षैः परिवृतं पुष्पोद्यानशतांतरम् ॥ १६० ॥ सुमूल्यरत्नखचितप्राकारैः परिवेष्टितम् ॥ सद्रत्नवेदिकायुक्तैर्युक्तं द्वारैश्च
सप्तभिः ॥ १६१ ॥ संयुक्तं रत्नचित्रैश्च विचित्रैर्वर्तुलं मुने ॥ प्रधानसप्तद्वारेभ्यः क्रमशः क्रमशो मुने ॥ १६२ ॥ सर्वतोऽपि
ततस्तत्र षोडशद्वारसंयुतम् ॥ देवा दृष्ट्वा च प्राकारं सहस्रधनुरुच्छ्रितम् ॥ १६३ ॥ सद्रत्नक्षुद्रकलशसमूहैः सुमनोहरैः ॥
प्रदीप्तं तेजसा रम्यं परमं विस्मयं ययुः ॥ १६४ ॥ ततः प्रदक्षिणीकृत्य कियद्दूरं ययुर्मुदा ॥ पुरतो गच्छतां तेषां पश्चाद्भूत
स्तदाश्रमः ॥ १६५ ॥ गोपानां गोपिकानां च ददृशुश्चाश्रमान्परान् ॥ अमूल्यरत्नरचिताञ्छतकोटिमितान्मुने ॥ १६६ ॥

दर्शंदर्शं च परितो गोपानां सर्वमाश्रमम् ॥ गोपिकानां चापरं वा रम्यं रम्यं नवं नवम् ॥ १६७ ॥ गोलोकं निखिलं दृष्ट्वा
पुलकांगं ययुः सुराः ॥ तदेव वर्तुलाकारं रम्यं वृंदावनं वनम् ॥ १६८ ॥ ददृशुः शतशृंगं च तद्बहिर्विरजानदीम् ॥ विरजां
तां ययुर्देवा ददृशुः शून्यमेव च ॥ १६९ ॥ वाय्वाधारं च गोलोकं सद्रत्नमयमद्भुतम् ॥ ईश्वरेच्छाविनिर्माणं राधिकाज्ञा
नुबंधनात् ॥ १७० ॥ युक्तं सहस्रैः सरसां केवलं मंगलालयम् ॥ नृत्यं च ददृशुस्तत्र देवाश्च सुमनोहरम् ॥ १७१ ॥ सुतानं
चारुसंगीतं राधाकृष्णगुणान्वितम् ॥ श्रुत्वैव गीतपीयूषं मूर्च्छामापुः सुरा मुने ॥ १७२ ॥ क्षणेन चेतनां प्राप्य ते देवाः कृष्ण
मानसाः ॥ ददृशुः परमाश्चर्यं स्थानेस्थाने मनोहरम् ॥ १७३ ॥ ददृशुर्गोपिकाः सर्वा नानावेषविधायिकाः ॥ काश्चिन्मृदंग
हस्ताश्च काश्चिद्वीणाकरा. वराः ॥ १७४ ॥ काश्चिच्चामरहस्ताश्च करतालकराः पराः ॥ काश्चिद्यंत्रवाद्यहस्ता रत्ननूपुरशोभिताः
॥ १७५ ॥ सद्रत्नकिंकिणीजालशब्देन शब्दिता वराः ॥ काश्चिन्मस्तककुंभाश्च नृत्यभेदमनोरथाः ॥ १७६ ॥ पुंवेषनायिकाः
काश्चित्काश्चित्तासां च नायिकाः ॥ कृष्णवेषधराः काश्चिद्राधावेषधराः पराः ॥ १७७ ॥ काश्चित्संयोगविरताः काश्चिदालिं
गने रताः ॥ क्रीडासक्ताश्च ता दृष्ट्वा सस्मिता जगदीश्वराः ॥ १७८ ॥ प्रगच्छंतः कियद्दूरं ददृशुश्चाश्रमान्बहून् ॥ राधासखी
नां गेहांश्च प्रधानानां च नारद ॥ १७९ ॥ रूपेणैव गुणेनैव वेषेण यौवनेन च ॥ सौभाग्येनैव वयसा सदृशीनां च तत्र वै
॥ १८० ॥ त्रयस्त्रिंशद्वयस्याश्च राधिकायाश्च गोपिकाः ॥ वेषानिर्वचनीयाश्च तासां नामानि च शृणु ॥ १८१ ॥ सुशीला
च शशिकला यमुना माधवी रती ॥ कदंबमाला कुंती च जाह्नवी च स्वयंप्रभा ॥ १८२ ॥ चंद्रमुखी च सावित्री गायत्री
सुमुखी सुखा ॥ पद्मालया पारिजाता गौरी च सर्वमंगला ॥ १८३ ॥ कालिका कमला दुर्गा भारती च सरस्वती ॥ गंगां
बिका मधुमती चंपा पर्णा च सुंदरी ॥ १८४ ॥ कृष्णप्रिया सती चैव नंदिनी नंदनेति च ॥ एताः समानाः सद्रत्नरचिता

१ पद्ममुखी सावित्री च सुधामुखी ॥ शुभा पद्मा—इ० पा० ।

राधिकाप्रियाः ॥ १८५ ॥ एतासां समरूपाणां रत्नधातुविचित्रितान् ॥ नानाप्रकारचित्रेण चित्रितान्सुमनोहरान् ॥ १८६ ॥
अमूल्यरत्नकलशसमूहैः शिखरोज्ज्वलान् ॥ सद्रत्नरचितान्शुभ्रानाश्रमान्ददृशुस्तथा ॥ १८७ ॥ ब्रह्मांडाद्बहिरूर्ध्वं च नास्ति
लोकस्तदूर्ध्वकः ॥ ऊर्ध्वं शून्यमयं सर्वं तदंता सृष्टिरेव च ॥ १८८ ॥ रसातलेभ्यः सप्तभ्यो नास्त्यधः सृष्टिरेव च ॥ तदधश्च जलं
ध्वांतमगंतव्यमदृश्यकम् ॥ ब्रह्मांडांतं तद्बहिश्च सर्वं मत्तो निशामय ॥ १८९ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे
नारायणनारदसंवादे गोलोकवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीनारायण उवाच ॥ ॥ गोलोकं निखिलं दृष्ट्वा देवास्ते
हृष्टमानसाः ॥ पुनराजग्मू राधायाः प्रधानद्वारमेव च ॥ १ ॥ सद्रत्नमणिनिर्माणं वेदिकायुग्मसंयुतम् ॥ हरिद्राकारमणिना
वज्रसंमिश्रितेन च ॥ २ ॥ अमूल्यरत्नरचितकपाटेन विभूषितम् ॥ द्वारे नियुक्तं ददृशुर्वीरभानुमनुत्तमम् ॥ ३ ॥ रत्नसिंहासन
स्थं च रत्नाभरणभूषितम् ॥ पीतवस्त्रपरीधानं सद्रत्नमुकुटोज्ज्वलम् ॥ ४ ॥ द्वारं चित्रविचित्रेण विचित्रं परमाद्भुतम् ॥ सर्वं निवेदनं
चक्रुर्देवा दौवारिकं मुदा ॥ ५ ॥ तानुवाच द्वारपालो निःशंकं त्रिदशेश्वरान् ॥ नाहं विनाज्ञया गंतुं दातुं सांप्रतमीश्वरः ॥ ६ ॥
किंकरान्प्रेषयामास श्रीकृष्णस्थानमेव च ॥ हरेरनुज्ञां संप्राप्य ददौ गंतुं सुरान्मुने ॥ ७ ॥ तं संभाष्य ययुर्देवा द्वितीयं द्वारमु
त्तमम् ॥ ततोऽधिकं विचित्रं च सुंदरं सुमनोहरम् ॥ ८ ॥ द्वारे नियुक्तं ददृशुश्चंद्रभानुं च नारद ॥ किशोरं श्यामलं चारु
स्वर्णवेत्रधरं वरम् ॥ ९ ॥ रत्नसिंहासनस्थं च रत्नभूषणभूषितम् ॥ गोपानां च समूहेन पंचलक्षेण शोभितम् ॥ १० ॥ तं
संभाष्य ययुर्देवास्तृतीयं द्वारमुत्तमम् ॥ ततोऽतिसुन्दरं चित्रं ज्वलन्तं मणितेजसा ॥ ११ ॥ द्वारे नियुक्तं ददृशुः सूर्यभानुं च नारद ॥
द्विभुजं मुरलीहस्तं किशोरं श्यामसुन्दरम् ॥ १२ ॥ मणिकुण्डलयुग्मेन कपोलस्थलराजितम् ॥ रत्नदंडकरं श्रेष्ठं प्रेष्यं राधे
शयोः परम् ॥ १३ ॥ नवलक्षेण गोपानां वेष्टितं च नृपेंद्रवत् ॥ तं संभाष्य ययुर्देवाश्चतुर्थं द्वारमेव च ॥ १४ ॥ तेभ्यो विलक्षणं रम्यं
सुदीप्तं मणितेजसा ॥ अत्यद्भुतविचित्रेण भूषितं सुमनोहरम् ॥ १५ ॥ द्वारे नियुक्तं ददृशुर्वसुभानुं व्रजेश्वरम् ॥ किशोरं सुन्दरवरं

मणिदण्डकरं परम् ॥ १६ ॥ रत्नसिंहासनस्थं च रत्नभूषणभूषितम् ॥ पक्वबिंबाधरोष्ठं च सस्मितं सुमनोहरम् ॥ १७ ॥ तं संभाष्य ययुर्देवाः पञ्चमं द्वारमेव च ॥ वज्रभित्तिस्थितैश्चित्रविचित्रैर्ज्वलितं परम् ॥ १८ ॥ द्वारपालं च ददृशुर्देवभानुं च तत्र वै ॥ चारुसिंहासनस्थं च रत्नभूषणभूषितम् ॥ १९ ॥ मयूरपिच्छचूडं च रत्नमालाविभूषितम् ॥ कदंबपुष्पसंसक्तसद्रत्नकुण्डलोज्ज्वलम् ॥ २० ॥ चंदनागरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥ नृपेंद्रवरतुल्यं च दशलक्षप्रजान्वितम् ॥ २१ ॥ तं वेत्रपाणिं संभाष्य ययुर्देवा मुदान्विताः ॥ विलक्षणं द्वारषट्कं चित्रराजिविराजितम् ॥ २२ ॥ वज्रभित्तियुग्मयुक्ते पुष्पमाल्यविभूषिते ॥ द्वारे नियुक्तं ददृशुः शुक्रभानुं व्रजेश्वरम् ॥ २३ ॥ नानालंकारशोभाढ्यं दशलक्षप्रजान्वितम् ॥ श्रीखंडपल्लवासक्तकपोलं कुण्डलोज्ज्वलम् ॥ २४ ॥ तूर्णं सुरास्तं संभाष्य ययुर्द्वारं च सप्तमम् ॥ नानाप्रकारचित्रं च षड्भ्यश्चातिविलक्षणम् ॥ २५ ॥ द्वारे नियुक्तं ददृशू रत्नभानुं हरेः प्रियम् ॥ चंदनोक्षितसर्वांगं पुष्पमालाविभूषितम् ॥ भूषितं भूषणै रम्यैर्मणिरत्नमनोहरैः ॥ २६ ॥ गोपेंद्रैर्दशलक्षैश्च राजेंद्रमिव राजितम् ॥ रत्नसिंहासनस्थं च स्मेराननसरोरुहम् ॥ २७ ॥ तं वेत्रहस्तं संभाष्य जग्मुर्देवेश्वरा मुदा ॥ विचित्रमष्टमं द्वारं सप्तभ्योपि विलक्षणम् ॥ २८ ॥ दौवारिकं ते ददृशुः सुपार्श्वं सुमनोहरम् ॥ सस्मितं सुन्दरवरं श्रीखण्डतिलकोज्ज्वलम् ॥ २९ ॥ बन्धुजीवाधरोष्ठं च रत्नकुण्डलमंडितम् ॥ सर्वालंकारशोभाढ्यं रत्नदण्डधरं वरम् ॥ ३० ॥ गोपेंद्रैर्दशलक्षैश्च किशोरैश्च समन्वितम् ॥ ततः शीघ्रं ययुर्देवा नवमं द्वारमीप्सितम् ॥ ३१ ॥ वज्रसद्रत्नरचितं चतुर्वेदसमन्वितम् ॥ अपूर्वचित्ररचितमालाजालैर्विराजितम् ॥ ३२ ॥ द्वारपालं च ददृशुः सुबलं ललिताकृतिम् ॥ नानाभूषणशोभाढ्यं भूषणार्हं मनोहरम् ॥ ३३ ॥ वज्रैर्द्वादशलक्षैश्च संयुक्तं सुमनोहरम् ॥ तं दण्डहस्तं सम्भाष्य सुरा द्वारांतरं ययुः ॥ ३४ ॥ विशिष्टं दशमद्वारं दृष्ट्वा ते विस्मयं ययुः ॥ सर्वानिर्वचनीयं चाप्यदृष्टमश्रुतं मुने ॥ ३५ ॥ ददृशुर्द्वारपालं च सुदामानं च सुन्दरम् ॥ अनिर्वचनीयरूपं कृष्णतुल्यं मनोह



१ युक्तं च- इ० पा० । २ भूषाढ्यम्-इ० पा० । ३ विस्मिताः सुरा-इ० पा० ।

रम् ॥ ३६ ॥ गोपविंशतिलक्षाणां समूहैः परिवारितम् ॥ तं दण्डहस्तं दृष्ट्वैव जग्मुर्द्वारांतरं सुराः ॥ ३७ ॥ द्वारमेकादशाख्यं च सुचित्रं महदद्भुतम् ॥ द्वारपालं च तत्रस्थं श्रीदामानं व्रजेश्वरम् ॥ ३८ ॥ राधिकापुत्रतुल्यं च पीतवस्त्रेण भूषितम् ॥ अमूल्यरत्नरचितरत्नसिंहासनस्थितम् ॥ ३९ ॥ अमूल्यरत्नभूषाभिर्भूषितं सुमनोहरम् ॥ चन्दनागुरुकस्तूरीकुंकुमेन विराजितम् ॥ ४० ॥ गण्डस्थलकपोलार्हसद्रत्नकुण्डलोज्ज्वलम् ॥ सद्रत्नश्रेष्ठरचितविचित्रमुकुटोज्ज्वलम् ॥ ४१ ॥ प्रफुल्लमालतीमालाजालैः सर्वांगभूषितम् ॥ कोटिगोपैः परिवृतं राजेन्द्राधिकमुज्ज्वलम् ॥ ४२ ॥ तं संभाष्य ययुर्द्वारं द्वादशाख्यं सुरा मुदा ॥ अमूल्यरत्नरचितवेदिकाभिः समन्वितम् ॥ ४३ ॥ सर्वेषां दुर्लभं चित्रमदृश्यमश्रुतं मुने ॥ वज्रभित्तिस्थितं चित्रं सुन्दरं सुमनोहरम् ॥ ४४ ॥ द्वारे नियुक्ता ददृशुर्देवा गोपांगना वराः ॥ नवयौवनसंपन्ना रत्नाभरणभूषिताः ॥ ४५ ॥ पीतवस्त्रपरीधानाः कबरीभारभूषिताः ॥ सुगंधिमालतीमालाजालैः सर्वांगभूषिताः ॥ ४६ ॥ रत्नकंकणकेयूररत्ननूपुरभूषिताः ॥ रत्नकुंडलयुग्मेन गण्डस्थलविराजिताः ॥ ४७ ॥ चन्दनागुरुकस्तूरीकुंकुमद्रवचार्चिताः ॥ पीनश्रोणीभरानम्रा नितंबाभारपीडिताः ॥ ४८ ॥ गोपीनां शतकोटीनां श्रेष्ठाः प्रेष्ठा हरेरपि ॥ गोपीश्च कोटिशो दृष्ट्वा सुरास्ते विस्मयं ययुः ॥ ४९ ॥ संभाष्य ता मुदा युक्ता ययुर्द्वारांतरं मुने ॥ ततश्च क्रमशो विप्र त्रिषु द्वारेषु तत्र वै ॥ ५० ॥ गोपांगनानां श्रेष्ठाश्च ददृशुः सुमनोहराः ॥ वराणां च वरा रम्या[1] धन्या मान्याश्च शोभनाः ॥ ५१ ॥ सर्वाः सौभाग्ययुक्ताश्च राधिकायाः प्रियाश्च ताः ॥ भूषिता भूषणै रम्यैः प्रोद्भिन्ननवयौवनाः[2] ॥ ५२ ॥ एवं द्वारत्रयं दृष्ट्वा स्वभ्रमाज्ञानाद्भुताश्रुतम्[3] ॥ अदृश्यमतिरम्यं चाप्यनिरूप्यं विचक्षणैः ॥ ५३ ॥ तास्ताः संभाष्य देवास्ते विस्मिता ययुरीश्वराः ॥ राधिकाभ्यंतरं द्वारं षोडशाख्यं मनोहरम् ॥ ५४ ॥ सर्वासां च प्रधानं च गोप्यं गोपांगनागणैः ॥ त्रयस्त्रिंशद्वयस्यानां निकरैर्वेष्टितं मुने ॥ ५५ ॥ तेषामनिर्वचनीयैर्नानागुणसमन्वितैः ॥ रूपयौवनसंपन्नै रत्नालंकारभूषितैः ॥ ५६ ॥ रत्नकंकणके

१ रम्भ—इ० पा० । २ रूपयौवनसंपन्नाः—इ० पा० । ३ सुज्ञानादद्भुताश्रयम्—इ० पा० ।

यूररत्ननूपुरभूषितैः ॥ सद्रत्नाककिंणीजालैर्मध्यदेशविभूषितैः ॥ ५७ ॥ रत्नकुंडलयुग्मेन गंडस्थलविराजितैः ॥ प्रफुल्लमालतीमालाजालैर्वक्षस्थलोज्ज्वलैः ॥ ५८ ॥ शरत्पार्वणपद्मानां प्रभां मुष्णन्मुखेंदुभिः ॥ पारिजातप्रसूनानां मालाजालेन वेष्टितैः ॥ ॥ ५९ ॥ पक्वबिंबाधरोष्ठैश्च स्मेराननसरोरुहैः ॥ पक्वदाडिमबीजाभिः शोभितैर्दंतपंक्तिभिः ॥ ६० ॥ चारुचंपकवर्णाभिर्मध्यस्थलकृशैर्मुने ॥ गजमौक्तिकयुक्ताभिर्नासिकाभिर्विराजितैः ॥ ६१ ॥ खगेंद्रचारुचंचूनां शोभामुष्णाभिरेव च ॥ गजेंद्रगंडकठिनस्तनभारभरानतैः ॥ ६२ ॥ पीनश्रोणिभरार्तैश्च मुकुंदपदमानसैः ॥ निमेषरहिता देवा द्वारं च ददृशुश्च ताः ॥६३॥ सद्रत्नमणिरत्नैश्च वेदिकायुग्मशोभितम् ॥ हरिन्मणीनां स्तंभानां समूहैः संयुतं सदा ॥ ६४ ॥ सिंदूराकारमणिभिर्मध्यस्थलविराजितैः ॥ पारिजातप्रसूनानां मालाजालैर्विभूषितम् ॥ ६५ ॥ तत्संस्पर्शैर्गंधवाहैः सर्वत्र सुरभीकृतम् ॥ दृष्ट्वा तत्परमाश्चर्यं राधिकाभ्यंतरं सुराः ॥ ६६ ॥ श्रीकृष्णचरणांभोजदर्शनैकमनोरथाः ॥ ताः संभाष्य ययुः शीघ्रं पुलकांचितविग्रहाः ॥ ६७ ॥ भक्त्युद्रेकादश्रुपूर्णाः किंचिन्नम्रात्म[1]कंधराः ॥ आरात्ते ददृशुर्देवा राधिकाभ्यंतरं वरम् ॥ ६८ ॥ मंदिराणां च मध्यस्थं चतुःशालं मनोहरम् ॥ अमूल्यरत्नसाराणां सारेण रचितं परम् ॥ ६९ ॥ नानारत्नमणिस्तंभैर्वज्रयुक्तैश्च भूषितम् ॥ पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥ ७० ॥ मुक्तासमूहैर्माणिक्यैः श्वेतचामरदर्पणैः ॥ अमूल्यरत्नसाराणां कलशैर्भूषितं मुने ॥ ७१ ॥ पट्टसूत्रग्रंथियुक्तश्रीखंडपल्लवान्वितैः ॥ मणिस्तंभसमूहैश्च रम्यप्रांगणभूषितम् ॥ ७२ ॥ चंदनागुरुकस्तूरीकुंकुमद्रवसंयुतम् ॥ शुक्लधान्यशुक्लपुष्पप्रवालफलतंडुलैः ॥ ७३ ॥ पर्णदूर्वाक्षतैर्लाजैर्निर्मंछनविभूषितैः ॥ फलयुक्तै रत्नकुंभैः सिंदूरकुंकुमान्वितैः ॥ ७४ ॥ पारिजातप्रसूनानां मालायुक्तैर्विराजितम् ॥ प्रसूनाक्तैर्गंधवाहैः सर्वत्र सुरभीकृतम् ॥ ७५ ॥ सर्वानिर्वचनीयं च यद्द्रव्यमनिरूपितम् ॥ ब्रह्मांडे दुर्लभं यद्यद्वस्तुभिस्तैर्विराजितम् ॥ ७६ ॥ पारिजातप्रसूनानां मालाजालैः सुशोभितम ॥ रत्नशय्यासु ललिताः सूक्ष्मवस्त्रपरिच्छदाः ॥ ७७ ॥ कोटिशो

1 नम्रास्य-इ० पा० ।

रत्नकुंभाश्च रत्नपात्राणि नारद ॥ अमूल्यानि च चारूणि तैस्तैरेव विभूषितम् ॥७८॥ नानाप्रकारवाद्यानां कलनादैर्निनादितम् ॥ स्वर
यंत्रैश्च वीणाभिर्गोपीसंगीतसुश्रुतम् ॥ ७९ ॥ मोहितं वाद्यशब्दैश्च मृदंगानां च नारद ॥ गोपानां कृष्णतुल्यानां समूहैः परिवारितम् ॥
॥८०॥ राधासखीनां गोपीनां वृंदैर्वृंदैर्विराजितम् ॥ राधाकृष्णगुणोद्रेकपदसंगीतसुश्रुतम् ॥८१॥एवमभ्यंतरं दृष्ट्वा बभूवुर्विस्मिताः सुराः॥
शुश्रुवुर्मधुरं गीतं ददृशुर्नृत्यमुत्तमम् ॥८२॥ तत्र तस्थुः सुराः सर्वे ध्यानैकतानमानसाः ॥ रत्नसिंहासनं रम्यं ददृशुस्त्रिदशेश्वराः॥८३॥
धनुःशतप्रमाणं च परितो वर्तुलाकृतिम् ॥ सद्रत्नक्षुद्रकलशसमूहैश्च समन्वितम् ॥८४॥ चित्रपुत्तलिकापुष्पचित्रकाननभूषितम् ॥ तत्र
तेजःसमूहं च सूर्यकोटिसमप्रभम् ॥ ८५ ॥ प्रभया ज्वलितं ब्रह्मन्नाश्चर्यमहदद्भुतम् ॥ सप्ततालप्रमाणं तद्व्याप्तमूर्ध्वं समन्ततः ॥८६॥
तेजोमुषं च सर्वेषां महाश्रमविवर्जितम् ॥ सर्वव्यापि सर्वबीजं चक्षूरोधकरं परम् ॥८७॥ दृष्ट्वा तेजःस्वरूपं च ते देवा ध्यानतत्पराः ॥
प्रणेमुः परया भक्त्या भक्तिनम्रात्मकंधराः ॥ ८८ ॥ परमानन्दसंयोगादश्रुपूर्णविलोचनाः ॥ पुलकांकितसर्वांगा वांछापूर्णमनोर
थाः ॥ ८९ ॥ नत्वा तेजःस्वरूपं च तमीशं त्रिदशेश्वराः ॥ तत्रोत्थाय ध्यानयुक्ताः प्रतस्थुस्तेजसः पुरः ॥ ९० ॥ ध्यात्वैवं जगतां
धाता बभूव संपुटांजलिः ॥ दक्षिणे शंकरं कृत्वा वामे धर्मं च नारद ॥ ९१ ॥ भक्त्युद्रेकात्प्रतुष्टाव ध्यानैकतानमानसः ॥ परात्परं
गुणातीतं परमात्मानमीश्वरम् ॥ ९२ ॥ ॥ ब्रह्मोवाच ॥ ॥ वरं वरेण्यं वरदं वरदानां च कारणम् ॥ कारणं सर्वभूतानां तेजो
रूपं नमाम्यहम् ॥ ९३ ॥ मंगलं मंगलानां च मंगलं मंगलप्रदम् ॥ समस्तमंगलाधारं तेजोरूपं नमाम्यहम् ॥ ९४ ॥ स्थितं सर्वत्र
निर्लिप्तमात्मरूपं परात्परम् ॥ निरीहमवितर्क्यं च तेजोरूपं नमाम्यहम् ॥ ९५ ॥ सगुणं निर्गुणं ब्रह्म ज्योतीरूपं सनातनम् ॥
साकारं च निराकारं तेजोरूपं नमाम्यहम् ॥ ९६ ॥ तमनिर्वचनीयं च व्यक्तमव्यक्तमेककम् ॥ स्वेच्छामयं सर्वरूपं तेजोरूपं नमा
म्यहम् ॥ ९७ ॥ गुणत्रयविभागाय रूपत्रयधरं परम् ॥ कलया ते कृताः सर्वे किं जानन्ति श्रुतेः परम् ॥ ९८ ॥ सर्वाधारं सर्व

१ सुराः—इ० पा० ।

रूपं सर्वबीजमबीजकम् ॥ सर्वांतकमनन्तं च तेजोरूपं नमाम्यहम् ॥ ९९ ॥ लक्ष्यं षड्गुणरूपं च वर्णनीयं विचक्षणैः ॥ किं वर्ण यामि लक्ष्यं च तेजोरूपं नमाम्यहम् ॥ १०० ॥ अशरीरं विग्रहवदिंद्रियं यदतींद्रियम् ॥ यदसाक्षि सर्वसाक्षि तेजोरूपं नमाम्य हम् ॥ १०१ ॥ गमनार्हमपादं यदचक्षुः सर्वदर्शनम् ॥ हस्तास्यहीनं यद्भोक्तृ तेजोरूपं नमाम्यहम् ॥ १०२ ॥ वेदे निरूपितं वस्तु सन्तः शक्ताश्च वर्णितुम् ॥ वेदेऽनिरूपितं यत्तत्तेजोरूपं नमाम्यहम् ॥ १०३ ॥ सर्वेशं यदनीशं यत्सर्वादि यदनादि यत् ॥ सर्वात्मकमनात्मं यत्तेजोरूपं नमाम्यहम् ॥ १०४ ॥ अहं विधाता जगतो वेदानां जनकः स्वयम् ॥ पाता धर्मो हरो हर्ता स्तोतुं शक्ता न केपि यत् ॥ १०५ ॥ सेवया तव धर्मोयं पालने च निरूपितः ॥ तवाज्ञया च संहर्ता त्वया काले निरूपिते ॥ १०६ ॥ निःशेषोत्पत्तिकर्त्ताऽहं त्वत्पादांभोजसेवया ॥ कर्मिणां फलदाता च त्वं भक्तानां च नः प्रभुः ॥ १०७ ॥ ब्रह्मांडे बिंबसदृशे भूत्वा विष यिणो वयम् ॥ एवं कतिविधाः संति तेष्वनन्तेषु सेवकाः ॥ १०८ ॥ यथा न संख्या रेणूनां तथा तेषामणीयसाम् ॥ सर्वेषां जनक श्चेशो यस्तं स्तोतुं च के क्षमाः ॥ १०९ ॥ एकैकलोमविवरे ब्रह्मांडमेकमेककम् ॥ यस्यैव महतो विष्णोः षोडशांशस्तवैव सः ॥ ११० ॥ ध्यायंते योगिनः सर्वे तवैतद्रूपमीप्सितम् ॥ त्वद्भक्तदास्यनिरताः सेवंते चरणांबुजम् ॥ १११ ॥ किशोरं सुंदरतरं यद्रूपं कमनीयक म् ॥ मंत्रध्यानानुरूपं च दर्शयास्माकमीश्वर ॥ ११२ ॥ नवीनजलदश्यामं पीतांबरधरं वरम् ॥ द्विभुजं मुरलीहस्तं सस्मितं सुमनो हरम् ॥ ११३ ॥ मयूरपिच्छचूडं च मालतीजालमंडितम् ॥ चंदनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥ ११४ ॥ अमूल्यरत्नसाराणां सारभूषणभूषितम् ॥ अमूल्यरत्नरचितकिरीटमुकुटोज्ज्वलम् ॥ ११५ ॥ शरत्प्रफुल्लपद्मानां प्रभामोष्यास्यचंद्रकम् ॥ पक्वबिंबसमाने न ह्यधरोष्ठेन राजितम् ॥ ११६ ॥ पक्वदाडिमबीजाभदंतपंक्तिमनोहरम् ॥ केलीकदंबमूले च स्थितं रासरसोन्मुखम् ॥ ११७ ॥ गोपीवक्त्रस्मिततनुं राधावक्षःस्थलस्थितम् ॥ एवं वांछितरूपं ते द्रष्टुं को वा न चोत्सुकः ॥ ११८ ॥ इत्येवमुक्त्वा विश्वसृट् प्रणनाम

१ सर्वांतःकरणं तच्च—इ० पा० । २ रक्षितारं च रक्षात्वि—इ० पा० । ३ निषेकलिपिकर्ताहम्—इ० पा० । ४ भूत्वा—इ० पा० ।

पुनःपुनः ॥ एवं स्तोत्रेण तुष्टाव धर्मोऽपि शंकरः स्वयम् ॥११९॥ ननाम भूयोभूयश्च साश्रुपूर्णविलोचनः ॥ तिष्ठंतोऽपि पुनः स्तोत्रं प्रचक्रुस्त्रिदशेश्वराः ॥ १२० ॥ व्याप्तास्तत्राश्रमे सर्वे श्रीकृष्णतेजसा मुने ॥ स्तवराजमिमं नित्यं ब्रह्मेशधर्मभिः कृतम् ॥ १२१ ॥ पूजाकाले हरेरेवं भक्तियुक्तश्च यः पठेत् ॥ सुदुर्लभां दृढां भक्तिं निश्चलां लभते हरेः ॥ १२२ ॥ सुरासुरमुनींद्राणां दुर्लभं दास्यमेव च ॥ अणिमादिकसिद्धिं च सालोक्यादिचतुष्टयम् ॥ १२३ ॥ इहैव विष्णुतुल्यश्च विख्यातः पूजितो ध्रुवम् ॥ वाक्सिद्धिर्मंत्रसिद्धिश्च भवेत्तस्य सुनिश्चितम् ॥ १२४ ॥ सर्वसौभाग्यसंयुक्तं यशसा पूरितं जगत् ॥ पुत्रश्च विद्या कविता निश्चला कमला तथा ॥ १२५ ॥ पत्नी पतिव्रता साध्वी सुशीला सुस्थिराः प्रजाः ॥ कीर्तिश्च चिरकालीना त्वंते कृष्णांतिके गतिः ॥ १२६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे गोलोकवर्णने श्रीकृष्णस्तोत्रराजपठनंनाम पंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥

श्रीनारायण उवाच ॥ ॥ ध्यात्वा स्तुत्वा च तिष्ठंतो देवास्ते तेजसः पुरः ॥ ददृशुस्तेजसो मध्ये शरीरं कमनीयकम् ॥ १ ॥ सजलांभोदवर्णाभं सस्मितं सुमनोहरम् ॥ परमाह्लादकं रूपं त्रैलोक्यचित्तमोहनम् ॥ २ ॥ गंडस्थलकपोलाभ्यां ज्वलन्मकरकुण्डलम् ॥ सद्रत्ननूपुराभ्यां च चरणांभोजराजितम् ॥ ३ ॥ वह्निशुद्धहरिद्राभामूल्यवस्त्रविराजितम् ॥ मणिरत्नेंद्रसाराणां स्वेच्छाकौतुकनिर्मितैः ॥ ४ ॥ भूषितं भूषणै रम्यैस्तद्रूपणैव भूषितैः ॥ विनोदमुरलीयुक्तबिंबाधरमनोहरम् ॥ ५ ॥ प्रसन्नेक्षणपश्यंतं भक्तानुग्रहकातरम् ॥ सद्रत्नगुटिकायुक्तकवचोरःस्थलोज्ज्वलम् ॥ ६ ॥ कौस्तुभासक्तसद्रत्नप्रदीप्ततेजसोज्ज्वलम् ॥ तत्र तेजसि चार्वंगीं ददृशू राधिकाभिधाम् ॥ ७ ॥ पश्यंतं सस्मितं कांतं पश्यंतीं वक्रचक्षुषा ॥ मुक्तापंक्तिविनिंद्यैकदंतपंक्तिविराजिताम् ॥ ॥ ८ ॥ ईषद्धास्यप्रसन्नास्यां शरत्पंकजलोचनाम् ॥ शरत्पार्वणचन्द्राभाविनिंदास्यमनोहराम् ॥ ९ ॥ बंधुजीवप्रभामुष्टाधरौष्ठरुचिराननाम् ॥ रणन्मंजीरयुग्मेन पादांबुजविराजिताम् ॥ १० ॥ मणींद्राणां प्रभामोषनखराजिविराजिताम् ॥ कुङ्कुमाभासमाच्छा

यपदाधोरागभूषिताम् ॥ ११ ॥ अमूल्यरत्नसाराणां रशनाश्रोणिभूषिताम्[1] ॥ हुताशनविशुद्धांशुकामूल्यज्वलितोज्ज्वलाम् ॥ १२ ॥ महामणींद्रसाराणां किङ्किणीमध्यसंयुताम् ॥ सद्रत्नहारकेयूरकरकंकणभूषिताम् ॥ १३ ॥ रत्नेंद्रसाररचितकपोलोज्ज्वलकुंडलाम् ॥ कर्णोपरि मणीन्द्राणां कर्णभूषणभूषिताम् ॥ १४ ॥ खगेंद्रचंचुनासाग्रगजेंद्रमौक्तिकान्विताम् ॥ मालतीमालया वक्रकबरीभारशोभिताम् ॥ १५ ॥ मालया कौस्तुभेंद्राणां वक्षःस्थलसुशोभिताम् ॥ पारिजातप्रसूनानां मालाजालोज्ज्वलांबराम् ॥ १६ ॥ रत्नांगुलीयनिकरैः करांगुलिविभूषिताम् ॥ दिव्यशंखविकारैश्च चित्ररागविभूषितैः ॥ १७ ॥ सूक्ष्मसूत्राकृतै रम्यैर्भूषितां शंखभूषणैः ॥ सद्रत्नसारगुटिकाराजिसूत्रसुशोभिताम्[2] ॥ १८ ॥ प्रतप्तस्वर्णवर्णाभामाच्छाद्य चारुविग्रहाम् ॥ नितम्बश्रोणिललितां पीनस्तननतांबराम् ॥ १९ ॥ भूषितां भूषणैः सर्वैः सौंदर्येण विभूषितैः ॥ विस्मितास्त्रिदशाः सर्वे दृष्ट्वा तामीश्वरीं वराम् ॥ तुष्टुवुस्ते सुराः सर्वे[3] पूर्णसर्वमनोरथाः ॥ २० ॥ ॥ ब्रह्मोवाच ॥ ॥ तव चरणसरोजे मन्मनश्चंचरीको भ्रमतु सततमीश प्रेमभक्त्या सरोजे ॥ भुवनविभवभोगात्तापशांत्यौपधाय सुदृढसुपरिपक्वां देहि भक्तिं च दास्यम् ॥ २१ ॥ ॥ शंकर उवाच ॥ ॥ भवजलनिधिमग्नश्चित्तमीनो मदीयो भ्रमति सततमस्मिन्घोरसंसारकूपे ॥ विषयमतिविनिंद्यं सृष्टिसंहाररूपमपनय तव भक्तिं देहि पादारविंदे ॥ २२ ॥ ॥ धर्म उवाच ॥ ॥ तव निजजन सार्द्धं संगमो मे मदीश भवतु विषयबंधच्छेदने तीक्ष्णखड्गः ॥ तव चरणसरोजे स्थानदानैकहेतुर्जनुषि जनुषि भक्तिं देहि पादारविंदे ॥ २३ ॥ इत्येवं स्तवनं कृत्वा परिपूर्णैकमानसाः ॥ कामपूरस्य पुरतस्तिष्ठंतो राधिकापतेः ॥ २४ ॥ सुराणां स्तवनं श्रुत्वा तानुवाच कृपानिधिः ॥ हितं तथ्यं च वचनं स्मेराननसरोरुहः ॥ २५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तिष्ठतागच्छत सुरा मदीया नात्र संशयः ॥ शिवाश्रयाणां कुशलं प्रष्टुं युक्तं न सांप्रतम् ॥ २६ ॥ निश्चिंता भवतात्रैव का चिंता वो मयि स्थिते ॥ स्थितोहं सर्वजीवेषु प्रत्यक्षोऽहं स्तवेन वै ॥ २७ ॥ युष्माकं यंमभिप्रायं[4] सर्वं जानामि निश्चितम् ॥ शुभाशुभं

१ पाशकश्रेणिशोभिताम्–इ०पा० । २ रक्तसूत्राक्तशोभिताम्–इ०पा० । ३ सदैव–इ०पा० । ४ यदभिप्रायम्–इ०पा० ।

च यत्कर्म काले खलु भविष्यति ॥ २८ ॥ महत्क्षुद्रं च यत्कर्म सर्वं कालकृतं सुराः ॥ स्वेस्वे काले च तरवः फलिताः पुष्पिणः सदा ॥ २९ ॥ परिपक्वफलाः काले काले पक्वफलान्विताः ॥ सुखं दुःखं विपत्संपच्छोकचिंताशुभाशुभम् ॥ ३० ॥ स्वकर्मफलनिष्ठं च सर्वकालेप्युपस्थितम् ॥ न हि कस्य प्रियः को वा विप्रियो वा जगत्त्रये ॥ ३१ ॥ काले कार्यवशात्सर्वे भवंत्येवाप्रियाः प्रियाः ॥ राजानो मनवः पृथ्व्यां दृष्टा युष्माभिरत्र वै ॥ ३२ ॥ स्वकर्मफलपाकेन सर्वे कालवशंगताः ॥ युष्माकमधुना चैव गोलोके यत्क्षणं गतम् ॥ ३३ ॥ पृथिव्यां तत्क्षणेनैव सप्त मन्वंतरं गतम् ॥ इंद्राः सप्त गतास्तत्र देवेंद्र श्चाष्टमोऽधुना ॥ ३४ ॥ कालचक्रं भ्रमत्येव मदीयं च दिवानिशम् ॥ इंद्राश्च मानवा भूपाः सर्वे कालवशंगताः ॥ ३५ ॥ कीर्तिः पृथ्व्यां पुण्यमद्य कथामात्रावशेषितम् ॥ अधुनाऽपि च राजानो दुष्टाश्च हरिनिंदकाः ॥ ३६ ॥ बभूवुर्बहवो भूमौ महाबल पराक्रमाः ॥ सर्वे यास्यंति राजानः कालांतरवशं ध्रुवम् ॥ ३७ ॥ उपस्थितोपि कालोयं वातो वाति निरंतरम् ॥ वह्निर्दहति सूर्यश्च तपत्येव ममाज्ञया ॥ ३८ ॥ व्याधयः संति देहेषु मृत्युश्चरति जंतुषु ॥ वर्षंत्येते जलधराः सर्वे देवा ममाज्ञया ॥ ३९ ॥ ब्राह्मण्यनिष्ठा विप्राश्च तपोनिष्ठास्तपोधनाः ॥ ब्रह्मर्षयो ब्रह्मनिष्ठा योगनिष्ठाश्च योगिनः ॥ ४० ॥ ते सर्वे मद्भयाद्भीताः स्वकर्मधर्मतत्पराः ॥ मद्भक्ताश्चैव निःशंकाः कर्मनिर्मूलकारकाः ॥ ४१ ॥ देवाः कालस्य कालोहं विधाता धातुरेव च ॥ संहारकर्तुः संहर्ता पातुः पाता परात्परः ॥ ४२ ॥ ममाज्ञयाऽयं संहर्ता नाम्ना तेन हरः स्मृतः ॥ त्वं विश्वसृट् सृष्टिहेतोः पाता धर्मस्य रक्षणात् ॥ ४३ ॥ ब्रह्मादितृणपर्यंतसर्वेषामहमीश्वरः ॥ स्वकर्मफलदाताऽहं कर्मनिर्मूलकारकः ॥ ४४ ॥ अहं यान्संहरिष्यामि कस्तेषामपि रक्षिता ॥ यानहं पालयिष्यामि तेषां हंता न कोपि वा ॥ ४५ ॥ सर्वेषामपि संहर्ता स्रष्टा पाताऽहमेव च ॥ नाहं शक्तश्च भक्तानां संहारे नित्यदेहिनाम् ॥ ४६ ॥ भक्ता ममानुगा नित्यं मत्पादार्चनतत्पराः ॥ अहं भक्तांतिके शश्वत्तेषां

---

१ कालेन ग्रासं कालांतकस्य च—इ०पा० ।

रक्षणहेतवे ॥ ४७ ॥ सर्वे नश्यंति ब्रह्मांडे प्रभवंति पुनःपुनः ॥ न मे भक्ताः प्रणश्यंति निःशंकाश्च निरापदः ॥ ४८ ॥ अतो
विपश्चितः सर्वे दास्यं वांछंति नो वरम् ॥ ये मां दास्यं प्रयाचंते धन्यास्तेऽन्ये च वंचिताः ॥ ४९ ॥ जन्ममृत्युजराव्याधि
भयं च यमयातना ॥ अन्येषां कर्मिणामस्ति न भक्तानां च कर्हिचित् ॥ ५० ॥ भक्ता न लिप्ताः पापेषु पुण्येषु सर्वक
र्मिणः ॥ अहं धुनोमि तेषां च कर्मभोगान्सुनिश्चितम् ॥ ५१ ॥ अहं प्राणश्च भक्तानां भक्ताः प्राणा ममापि च ॥ ध्यायंते
ते च मां नित्यं तान्स्मरामि दिवानिशम् ॥ ५२ ॥ चक्रं सुदर्शनंनाम षोडशारं सुतीक्ष्णकम् ॥ यत्तेजः षोडशांशोंऽपि नास्ति
सर्वेषु जीविषु ॥ ५३ ॥ भक्तांतिके तु तच्चक्रं दत्त्वा रक्षार्थमीप्सितम् ॥ न स्वास्थ्यं न च प्रीतिर्मे[1] यामि तेषां च सन्निधिम्
॥ ५४ ॥ न मे स्वास्थ्यं च वैकुंठे गोलोके राधिकांतिके ॥ यत्र तिष्ठंति भक्तास्ते तत्र तिष्ठाम्यहर्निशम् ॥ ५५ ॥ प्राणेभ्यः
प्रेयसी राधा स्थितोरसि दिवानिशम् ॥ यूयं प्राणाधिका लक्ष्मीर्न मे भक्तात्परा प्रिया ॥ ५६ ॥ भक्तदत्तं च यद्द्रव्यं भक्त्या
श्नामि सुरेश्वराः ॥ अभक्तदत्तं नाश्नामि ध्रुवं भुंक्ते बलिं स्वयम् ॥ ५७ ॥ स्त्रीपुत्रस्वजनांस्त्यक्त्वा ध्यायंते मामहर्निशम् ॥ युष्मा
न्विहाय तान्नित्यं स्मराम्यहमहर्निशम् ॥ ५८ ॥ दुष्टा[2] यदा मे भक्तानां ब्राह्मणानां गवामपि ॥ क्रतूनां देवतानां च हिंसां कुर्वंति
निश्चितम् ॥ ५९ ॥ तथाचिरं ते नश्यंति यथा वह्नौ तृणानि च ॥ न कोपि रक्षिता तेषां मयि हंतर्युपस्थिते ॥ ६० ॥ यास्यामि
पृथिवीं देवा यात यूयं स्वमालयम् ॥ यूयं चैवांशरूपेण शीघ्रं गच्छत भूतलम् ॥ ६१ ॥ इत्युक्त्वा जगतां नाथो गोपाना
हूय गोपिकाः ॥ उवाच मधुरं वाक्यं सत्यं यत्समयोचितम् ॥ ६२ ॥ गोपा गोप्यश्च शृणुत यात नंदव्रजं परम् ॥ वृष
भानुगृहे क्षिप्रं गच्छ त्वमपि राधिके ॥ ६३ ॥ वृषभानुप्रिया साध्वी नंदगोपकलावती ॥ सुबलस्य सुता सा च कमलांशसमुद्भवा ॥
॥ ६४ ॥ पितॄणां मानसी कन्या धन्या मान्या च योषिताम् ॥ पुरा दुर्वाससः शापाज्जन्म तस्या व्रजे गृहे ॥ ६५ ॥ तस्या[3] गृहे

१ तथापि न प्रतीतिर्मे—इ० पा०। २ द्वेष्टारो ये च—इ० पा०। ३ तस्यां लभस्व त्वं जन्म—इ० पा०।


॥ १६ ॥

जन्म लभ शीघ्रं नंदव्रजं व्रज ॥ त्वामहं बालरूपेण गृह्णामि कमलानने ॥ ६६ ॥ त्वं मे प्राणाधिका राधे तव प्राणाधिकोप्यहाम् ॥
न किंचिदावयोर्भिन्नमेकांगं सर्वदैव हि ॥ ६७ ॥ श्रुत्वैवं राधिका तत्र रुरोद प्रेमविह्वला ॥ पपौ चक्षुश्चकोराभ्यां मुखचंद्रं हरेर्मुने ॥६८॥
जनुर्लभत गोपाश्च गोप्यश्च पृथिवीतले ॥ गोपानामुत्तमानां च मंदिरे मंदिरे शुभे ॥ ६९ ॥ एतस्मिन्नंतरे सर्वे ददृशू रथमुत्तमम् ॥
मणिरत्नेंद्रसारेण हीरकेण विभूषितम् ॥ ७० ॥ श्वेतचामरलक्षेण शोभितं दर्पणायुतैः ॥ सूक्ष्मकाषायवस्त्रेण वह्निशुद्धेन भूषितम् ॥
॥ ७१ ॥ सद्रत्नकलशानां च सहस्रेण सुशोभितम् ॥ पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥ ७२ ॥ पार्षदप्रवरैर्युक्तं शात
कुंभमयं शुभम् ॥ तेजःस्वरूपमतुलं शतसूर्यसमप्रभम् ॥ ७३ ॥ तत्रस्थं पुरुषं श्यामं सुन्दरं कमनीयकम् ॥ शंखचक्रगदापद्मधरं
पीतांबरं वरम् ॥ ७४ ॥ किरीटिनं कुण्डलिनं वनमालाविभूषितम् ॥ चंदनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥ ७५ ॥ चतुर्भु
जं स्मेरवक्त्रं भक्तानुग्रहकातरम् ॥ मणिरत्नेंद्रसाराणां सारभूषणभूषितम् ॥ ७६ ॥ देवीं तद्वामतो रम्यां शुक्लवर्णां मनोहराम् ॥
रत्नालंकारशोभाढ्यां शोभितां पीतवाससा ॥ ७७ ॥ शरत्पार्वणचंद्रास्यां शरत्पंकजलोचनाम् ॥ पक्वबिंबाधरोष्ठीं च स्मेरयु
क्तां मनोहराम् ॥ ७८ ॥ वेणुवीणाग्रंथहस्तां भक्तानुग्रहकातराम् ॥ विद्याधिष्ठातृदेवीं च ज्ञानरूपां सरस्वतीम् ॥ ७९ ॥ अपरां
दक्षिणे रम्यां शतचंद्रसमप्रभाम् ॥ प्रतप्तस्वर्णवर्णाभां सस्मितां सुमनोहराम् ॥ ८० ॥ सद्रत्नकुण्डलाभ्यां च सुकपोलविराजि
ताम् ॥ अमूल्यरत्नखचितामूल्यवस्त्रेण भूषिताम् ॥ ८१ ॥ अमूल्यरत्नकेयूरकरकंकणशोभिताम् ॥ सद्रत्नसारमंजीरकलशब्दस
मन्विताम् ॥ ८२ ॥ मणींद्रकिंकिणीयुक्तमध्यदेशसमन्विताम् ॥ पारिजातप्रसूनानां मालावक्षःस्थलोज्ज्वलाम् ॥ ८३ ॥ प्रफुल्ल
मालतीमालासंयुक्तकबरीयुताम् ॥ शरच्चंद्रप्रभामुष्णन्मुखचारुविभूषिताम् ॥ ८४ ॥ कस्तूरीबिंदुसंयुक्तसिन्दूरतिलकान्विताम् ॥
सुचारुकज्जलासक्तशरत्पंकजलोचनाम् ॥ ८५ ॥ सहस्रदलसंसक्तलीलाकमलसंयुताम् ॥ नारायणं च पश्यंतं पश्यंतीं वक्रच
क्षुषा ॥ ८६ ॥ अवरुह्य रथात्तूर्णं सस्त्रीकः सहपार्षदः ॥ जगाम च सभां रम्यां गोपगोपीसमन्विताम् ॥ ८७ ॥ देवा गोप्यश्च गोपा

 

श्च तस्थुः प्रांजलयो मुदा ॥ सामवेदोक्तस्तोत्रेण कृतेन च सुरर्षिभिः ॥ ८८ ॥ गत्वा नारायणो देवो विलीनः कृष्णविग्रहे ॥
दृष्ट्वा च परमाश्चर्यं ते सर्वे विस्मयं ययुः ॥ ८९ ॥ एतस्मिन्नंतरे तत्र शातकुंभमयाद्रथात् ॥ अवरुह्य स्वयं विष्णुः पाता च जग
तां पतिः ॥ ९० ॥ आजगाम चतुर्बाहुर्वनमालाविभूषितः ॥ पीतांबरधरः श्रीमान्सस्मितः सुमनोहरः ॥ ९१ ॥ सर्वालंकारशोभा
ढ्यः सूर्यकोटिसमप्रभः ॥ उत्तस्थुस्ते च तं दृष्ट्वा तुष्टुवुः प्रणता मुने ॥ ९२ ॥ स चापि लीनस्तत्रैव राधिकेशस्य विग्रहे ॥ ते दृष्ट्वा
महदाश्चर्यं विस्मयं परमं ययुः ॥ ९३ ॥ संविलीने हरेरंगे श्वेतद्वीपनिवासिनि ॥ एतस्मिन्नंतरे तूर्णमाजगाम त्वरान्वितः ॥ ९४ ॥
शुद्धस्फटिकसंकाशो नाम्ना संकर्षणः स्मृतः ॥ सहस्रशीर्षा पुरुषः शतसूर्यसमप्रभः ॥ ९५ ॥ आगतं तुष्टुवुः सर्वे दृष्ट्वा तं विष्णुवि
ग्रहम् ॥ स चागत्य नतस्कंधस्तुष्टाव राधिकेश्वरम् ॥ ९६ ॥ सहस्रमूर्धा भक्त्या च प्रणनाम च नारद ॥ आवां च धर्मपुत्रौ द्वौ नर
नारायणाभिधौ ॥ ९७ ॥ लीनोऽहं कृष्णपादाब्जे बभूव फाल्गुनोवरः ॥ ब्रह्मेशशेषधर्माश्च तस्थुरेकत्र तत्र वै ॥ ९८ ॥ एतस्मिन्नंतरे
देवा ददृशू रथमुत्तमम् ॥ स्वर्णसारविकारं च नानारत्नपरिच्छदम् ॥ ९९ ॥ मणींद्रसारसंयुक्तं वह्निशुद्धांशुकान्वितम् ॥ श्वेतचामर
संयुक्तं भूषितं दर्पणान्वितैः ॥ १०० ॥ सद्रत्नसारकलशसमूहेन विराजितम् ॥ पारिजातप्रसूनानां मालाजालैः सुशोभितम् ॥ १०१॥
सहस्रचक्रसंयुक्तं मनोयायि मनोहरम् ॥ ग्रीष्ममध्याह्नमार्तंडप्रभामोषकरं वरम् ॥ १०२ ॥ मुक्तामाणिक्यवज्राणां समूहेन
समुज्ज्वलम् ॥ चित्रपुत्तलिकापुष्पसरःकाननचित्रितम् ॥ १०३ ॥ देवानां दानवानां च रथानां प्रवरं मुने ॥ यत्नेन
शंकरप्रीत्या निर्मितं विश्वकर्मणा ॥ १०४ ॥ पंचाशद्योजनोर्ध्वं च चतुर्योजनविस्तृतम् ॥ रैवितुल्यवधूयुक्तैः शोभितं रतिमं
दिरैः ॥ १०५ ॥ तत्रस्थां ददृशुर्देवीं रत्नालंकारभूषिताम् ॥ प्रदग्धस्वर्णसाराणां प्रभामोषकरद्युतिम् ॥ १०६ ॥ तेजःस्वरूपा
मतुलां मूलप्रकृतिमीश्वरीम् ॥ सहस्रभुजसंयुक्तां नानायुधसमन्विताम् ॥ १०७ ॥ ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकातराम् ॥ 

१ रतितल्पसमायुक्तम्—इ० पा० ।

गंडस्थलकपोलस्थसद्रत्नकुंडलोज्ज्वलाम् ॥ १०८ ॥ रत्नेन्द्रसाररचितक्वणन्मंजीररंजिताम् ॥ मणींद्रमेखलायुक्तमध्य
देशसुशोभिताम् ॥ १०९ ॥ सद्रत्नसारकेयूरकरकंकणभूषिताम् ॥ मंदारपुष्पमालाभिरुरःस्थलसमुज्ज्वलाम् ॥ ११० ॥ नितंबक
ठिनश्रोणीं पीनोन्नतकुचानताम् ॥ शरत्सुधाकराभासविनिंदास्यमनोहराम् ॥ १११ ॥ कज्जलोज्ज्वलरेखाक्तशरत्पंकजलोच
नाम् ॥ चंदनागुरुकस्तूरीचित्रपात्रविभूषिताम् ॥ ११२ ॥ मुक्तापंक्तिप्रभामुष्टदंतराजिविराजिताम् ॥ प्रफुल्लमालतीमालासं
सक्तकबरीं वराम् ॥ ११३ ॥ पक्षींद्रचंचुनासाग्रगजेंद्रमौक्तिकान्विताम् ॥ वह्निशुद्धांशुकेनातिज्वलितेन समुज्ज्वलाम् ॥ ११४ ॥
सिंहपृष्ठसमारूढां सुताभ्यां सहितां मुदा ॥ अवरुह्य रथात्तूर्णं श्रीकृष्णं प्रणनाम च ॥ ११५ ॥ सुताभ्यां संहिता देवी समुवा
स वरानना ॥ गणेशः कार्तिकेयश्च नत्वा कृष्णं परात्परम् ॥ ११६ ॥ ननाम शंकरं धर्ममनंतं कमलोद्भवम् ॥ उत्तस्थुरारात्ते
देवा दृष्ट्वा तौ त्रिदशेश्वरौ ॥ ११७ ॥ आशिषं च ददुर्देवा वासयामासुरंतिके ॥ ताभ्यां सह सदालापं चक्रुर्देवा मुदान्विताः
॥ ११८ ॥ तस्थुर्देवाः सभामध्ये देवस्य पुरतो हरेः ॥ गोपा गोप्यश्च बहुशो बभूवुर्विस्मयाकुलाः ॥ ११९ ॥ उवाच कम
लां कृष्णः स्मेराननसरोरुहः ॥ त्वं गच्छ भीष्मकगृहं नानारत्नसमन्वितम् ॥ १२० ॥ वैदर्भ्या उदरे जन्म लभ देवि सना
तनि ॥ तव पाणिं ग्रहीष्यामि गत्वाऽहं कुंडिनं सति ॥ १२१ ॥ ता देव्यः पार्वतीं दृष्ट्वा समुत्थाय त्वरान्विताः ॥ रत्नसिं
हासने रम्ये वासयामासुरीश्वरीम् ॥ १२२ ॥ विप्रेंद्र पार्वतीलक्ष्मीवागधिष्ठातृदेवताः ॥ तस्थुरेकासने तत्र संभाष्य च यथोचि
तम् ॥ १२३ ॥ ताश्च संभाषयामासुः संप्रीत्या गोपकन्यकाः ॥ ऊचुर्गोपालिकाः काश्चिन्मुदा तासां च संनिधौ ॥ १२४ ॥
श्रीकृष्णः पार्वतीं तत्र समुवाच जगत्पतिः ॥ देवि त्वमंशरूपेण जन नंदव्रजे शुभे ॥ १२५ ॥ उदरे च यशोदायाः कल्याणी
नंदरेतसा ॥ लभ जन्म महामाये सृष्टिसंहारकारिणि ॥ १२६ ॥ ग्रामेग्रामे च पूजां ते कारयिष्यामि भूतले ॥ कृत्स्ने महीतले

१ कपोलाभ्याम्—इ० पा०। २ सहसा—इ० पा०।

भक्त्या नगरेषु वनेषु च ॥ १२७ ॥ तत्राधिष्ठातृदेवीं त्वां पूजयिष्यंति मानवाः ॥ द्रव्यैर्नानाविधैर्दिव्यैर्बलिभिश्च मुदान्विताः ॥ १२८ ॥ त्वद्भूमिस्पर्शमात्रेण सूतिकामंदिरे शिवे ॥ पिता मां तत्र संस्थाप्य त्वामादाय गमिष्यति ॥ १२९ ॥ कंसदर्शनमात्रेण गमिष्यसि शिवांतिकम् ॥ भारावतरणं कृत्वागमिष्यामि स्वमाश्रमम् ॥ १३० ॥ इत्युक्त्वा श्रीहरिस्तूर्णमुवाच च षडाननम् ॥ अंशरूपेण वत्स त्वं गमिष्यसि महीतलम् ॥ १३१ ॥ जांबवत्याश्च गर्भे च लभ जन्म सुरेश्वर ॥ अंशेन देवताः सर्वा गच्छंतु धरणीतलम् ॥ १३२ ॥ भारहारं करिष्यामि वसुधायाश्च निश्चितम् ॥ इत्युक्त्वा राधिकानाथस्तस्थौ सिंहासने वरे ॥ १३३ ॥ तस्थुर्देवाश्च देव्यश्च गोपा गोप्यश्च नारद ॥ एतस्मिन्नंतरे ब्रह्मा समुत्तस्थौ हरेः पुरः ॥ पुटांजलिर्जगत्कांतमुवाच विनयान्वितः ॥ १३४ ॥ ॥ ब्रह्मोवाच ॥ ॥ अवधानं कुरु विभो किंकरस्य निवेदनम् ॥ १३५ ॥ आज्ञां कुरु महाभाग कस्य कुत्र स्थलं भुवि ॥ भर्ता पातोद्धारकर्ता सेवकानां प्रभुः सदा ॥ १३६ ॥ स भृत्यः सर्वदा भक्त ईश्वराज्ञां करोति यः ॥ के देवाः केन रूपेण देव्यश्च कलया कया ॥ १३७ ॥ कुत्र कस्याभिधेयं च विषयं च महीतले ॥ ब्रह्मणो वचनं श्रुत्वा प्रत्युवाच जगत्पतिः ॥ १३८ ॥ यत्र यस्यावकाशं च कथयामि विधानतः ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कामदेवो रौक्मिणेयो रतिर्मायावती सती ॥ १३९ ॥ शंबरस्य गृहे या च छायारूपेण संस्थिता ॥ त्वं तस्य पुत्रो भविता नाम्नानिरुद्ध एव च ॥ १४० ॥ भारती शोणितपुरे बाणपुत्री भविष्यति ॥ अनंतो देवकीगर्भाद्रौहिणेयो जगत्पतिः ॥ १४१ ॥ मायया गर्भसंकर्षान्नाम्ना संकर्षणः प्रभुः ॥ कालिंदी सूर्यतनया गंगांशेन महीतले ॥ १४२ ॥ अर्द्धांशेनैव तुलसी लक्ष्मणा राजकन्यका ॥ सावित्री वेदमाता च नाम्ना नाग्नजिती सती ॥ १४३ ॥ वसुंधरा सत्यभामा शैब्या देवी सरस्वती ॥ रोहिणी मित्रविंदा च भविता राजकन्यका ॥ १४४ ॥ सूर्यपत्नी रत्नमाला कलया च जगत्प्रभोः ॥ स्वाहांशेन सुशीला च रुक्मिण्याद्याः



१ जगन्नाथम्-इ० पा० ।

स्त्रियो नव ॥ १४५ ॥ दुर्गांशार्द्धाज्जांबवती महिषीणां दश स्मृताः ॥ अर्द्धांशेन शैलपुत्री यातु जांबवतो गृहम् ॥ १४६ ॥
कैलासे शंकराज्ञा च बभूव पार्वती पुरा ॥ कैलासगामिनं विष्णुं श्वेतद्वीपनिवासिनम् ॥ आलिंगनं देहि कांते नास्ति दोषो ममा
ज्ञया ॥ १४७ ॥ ॥ ब्रह्मोवाच ॥ कथं शिवाज्ञा तां देवीं बभूव राधिकापते ॥ विष्णोः संभाषणे पूर्वं श्वेतद्वीपनिवासिनः ॥ १४८ ॥
॥ ॥ श्रीभगवानुवाच ॥ ॥ पुरा गणेशं द्रष्टुं च प्रजग्मुः सर्वदेवताः ॥ श्वेतद्वीपात्स्वयं विष्णुर्जगाम शंकरालये ॥१४९॥ दृष्ट्वा गणेशं
मुदितः समुवास सुखासने ॥ सुखेन ददृशुः सर्वे त्रैलोक्यमोहनं वपुः ॥ १५० ॥ किरीटिनं कुंडलिनं पीतांबरधरं वरम् ॥ सुंदरं श्याम
रूपं च नवयौवनसंयुतम् ॥ १५१ ॥ चंदनागुरुकस्तूरीकुंकुमद्रवसंयुतम् ॥ रत्नालंकारशोभाढ्यं स्मेराननसरोरुहम् ॥ १५२ ॥ रत्न
सिंहासनस्थं च पार्षदैः परिवेष्टितम् ॥ वंदितं च सुरैः सर्वैः शिवेन पूजितं स्तुतम् ॥ १५३ ॥ तं दृष्ट्वा पार्वती विष्णुं प्रसन्नवदनेक्षणा ॥
मुखमाच्छादितं चक्रे वाससा व्रीडया सती ॥ १५४ ॥ अतीव सुन्दरं रूपं दर्शंदर्शं पुनःपुनः ॥ ददर्श मुखमाच्छाद्य निमेषरहिता
सती ॥ १५५ ॥ परमाद्भुतवेषं च सस्मिता वक्रचक्षुषा ॥ सुखसागरसम्मग्ना बभूव पुलकांचिता ॥ १५६ ॥ क्षणं ददर्श पञ्चास्यं शुभ्र
वर्णं त्रिलोचनम् ॥ त्रिशूलपरिघधरं कन्दर्पकोटिसुन्दरम् ॥ १५७ ॥ क्षणं ददर्श श्यामं तमेकास्यं च द्विलोचनम् ॥ चतुर्भुजं
पीतवस्त्रं वनमालाविभूषितम् ॥ १५८ ॥ एकं ब्रह्म मूर्तिभेदमभेदं वा निरूपितम् ॥ दृष्ट्वा बभूव सा माया सकामा विष्णु
मायया ॥ १५९ ॥ मदंशाश्च त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥ ताभ्यामौत्कर्षपाताच्च श्रेष्ठः सत्त्वगुणात्मकः ॥ १६० ॥
दृष्ट्वा तं पार्वती भक्त्या पुलकांचितविग्रहा ॥ मनसा पूजयामास परमात्मानमीश्वरम् ॥ १६१ ॥ दुर्गांतराभिप्रायं च बुबुधे शंकरः
स्वयम् ॥ सर्वांतरात्मा भगवानंतर्यामी जगत्पतिः ॥ १६२ ॥ दुर्गां निर्जनमाहूय तामुवाच हरः स्वयम् ॥ बोधयामास विविधं हितं
तथ्यमखंडितम् ॥ १६३ ॥ ॥ श्रीशंकर उवाच ॥ ॥ निवेदनं मदीयं च निबोध शैलकन्यके ॥ शृंगारं देहि भद्रं ते हरये परमा
त्मने ॥ १६४ ॥ अहं ब्रह्मा च विष्णुश्च ब्रह्मैकं च सनातनम् ॥ वेदैको वेदरहितो त्रिषयान्मूर्तिभेदकः ॥ १६५ ॥ एका प्रकृतिः सर्वेषां

माता त्वं सर्वरूपिणी ॥ स्वयंभूरसि वाणी त्वं लक्ष्मीनारायणोरसि ॥ १६६ ॥ मम वक्षसि दुर्गा त्वं निबोधाध्यात्मकं
सति ॥ शिवस्य वचनं श्रुत्वा तमुवाच सुरेश्वरी ॥ १६७ ॥ ॥ पार्वत्युवाच ॥ ॥ दीनबंधो कृपासिंधो तव मामकृपा कथम् ॥
सुचिरं तपसा लब्धो नाथस्त्वं जगतां मया ॥ १६८ ॥ मादृशीं किंकरीं नाथ न परित्यक्तुमर्हसि ॥ अयोग्यमीदृशं वाक्यं मामा
वद महेश्वर ॥ १६९ ॥ तव वाक्यं महादेव कारिष्याम्येव पालनम् ॥ देहांतरे जन्म लब्ध्वा भजिष्यामि हरिं हर ॥ १७० ॥ इत्येवं
वचनं श्रुत्वा विरराम महेश्वरः ॥ उच्चैर्जहासाभयदः पार्वत्यै चाभयं ददौ ॥ १७१ ॥ तत्प्रतिज्ञापालनाय पार्वती जांबवद्गृहे ॥
लभिष्यति जनुर्धातर्नाम्ना जांबवती सती ॥ १७२ ॥ ॥ ब्रह्मोवाच ॥ ॥ भूमौ कतिविधे भूपे संस्थिते पार्वती कथम् ॥ ललाभ
भारते जन्म निंदिते भाल्लुके गृहे ॥ १७३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ रामावतारे त्रेतायां देवांशाश्च ययुर्महीम् ॥ हिमालयांशो भल्लूको
जांबवान्नाम किंकरः ॥ १७४ ॥ रामस्य वरदानेन चिरंजीवी श्रिया युतः ॥ कोटिसिंहबलाधानं विधत्ते च महाब
लः ॥ १७५ ॥ पितुरंशगृहे दुर्गा जगामांशेन भूतलम् ॥ पूर्वं पूर्वस्य वृत्तांतं कथितं शृणु मन्मुखात् ॥ १७६ ॥ सर्वेषां च सुराणां
वै वंशा गच्छंतु भूतलम् ॥ नृपपुत्रा मत्सहाया भविष्यंति रणे विधे ॥ १७७ ॥ कमलाकलया सर्वा भवंतु नृपकन्यकाः ॥ मन्म
हिष्यो भविष्यंति सहस्राणां च षोडश ॥ १७८ ॥ धर्मोऽयमंशरूपेण पांडुपुत्रो युधिष्ठिरः ॥ वायोरंशाद्भीमसेनः स वज्री ह्यर्जुनः
स्वयम् ॥ १७९ ॥ नकुलः सहदेवश्च स्ववैद्यांशसमुद्भवौ ॥ सूर्यांशः कर्णवीरश्च विदुरः स यमः स्वयम् ॥ १८० ॥ दुर्योधनः कलेरंशः
समुद्रांशश्च शंतनुः ॥ अश्वत्थामा शंकरांशो द्रोणो वह्न्यंशसंभवः ॥ १८१ ॥ हुताशनांशो भगवान्धृष्टद्युम्नो महाबलः ॥ चंद्रांशोऽप्य
भिमन्युश्च भीष्मश्चैव वसूद्भवः ॥ १८२ ॥ वसुदेवः कश्यपांशोप्यदित्यंशा च देवकी ॥ वस्वंशो नंदगोपश्च यशोदा वसुका
मिनी ॥ १८३ ॥ द्रौपदी कमलांशा च यज्ञकुंडसमुद्भवा ॥ सुभद्रा शतरूपांशा देवकीगर्भसंभवा ॥ १८४ ॥ देवा गच्छंतु पृथिवीमंशेन

१ पालयिष्यामि सर्वथा–इ० पा० । २ बलाधारः क्रियंत च–इ० पा० ।

भारहारकाः ॥ कलया देवपत्न्यश्च गच्छंतु पृथिवीतलम् ॥ १८५ ॥ इत्येवमुक्त्वा भगवान्विरराम च नारद ॥ सर्वं विवरणं श्रुत्वा तत्रोवास प्रजापतिः ॥ १८६ ॥ कृष्णस्य वामे वाग्देवी दक्षिणे कमलालया ॥ पुरतो देवताः सर्वाः पार्वती चापि नारद ॥ १८७ ॥ गोप्यो गोपाश्च परितो राधा वक्षःस्थलस्थिता ॥ एतस्मिन्नंतरे सा च तमुवाच व्रजेश्वरी ॥ १८८ ॥ ॥ राधिकोवाच ॥ ॥ शृणु नाथ प्रवक्ष्यामि किंकरी वचनं प्रभो ॥ प्राणा दहंति सततमांदोलयति मे मनः ॥ १८९ ॥ चक्षुर्निमीलनं कर्तुमशक्ता तव दर्शने ॥ त्वया विना कथं नाथ यास्यामि धरणीतलम् ॥ १९० ॥ कियत्कालांतरेणैव मेलनं मे त्वया सह ॥ प्राणेश्वर ब्रूहि सत्यं भविष्यत्येव गोकुले ॥ १९१ ॥ निमेषं च युगशतं भविता मे त्वया विना ॥ कं द्रक्ष्यामि क्व यास्यामि को वा मां पालयिष्यति ॥ १९२ ॥ मातरं पितरं बंधुं भ्रातरं भगिनीं सुतम् ॥ त्वया विनाऽहं प्राणेश चिंतयामि न कंचन ॥ १९३ ॥ करोषि मायया छन्नां मां चेन्मायेश भूतले ॥ विस्मृतां विभवं दत्त्वा सत्यं मे शपथं कुरु ॥ १९४ ॥ अनुक्षणं मम मनोमधुपो मधुसूदन ॥ करोतु भ्रमणं नित्यं समाध्वीके पदांबुजे ॥ १९५ ॥ यत्रयत्र च यस्यां वा योनौ जन्म भवत्विदम् ॥ त्वं स्वस्य स्मरणं दास्यं मह्यं दास्यसि वांछितम् ॥ १९६ ॥ कृष्णस्त्वं राधिकाहं च प्रेमसौभाग्यमावयोः ॥ न विस्मरामि भूमौ च देहि मह्यं वरं परम ॥ १९७ ॥ यथा तन्वा सह प्राणाः शरीरं छायया सह ॥ तथावयोर्जन्म यातु देहि मह्यं वरं विभो ॥ १९८ ॥ चक्षुर्निमेषविच्छेदो भविता नावयोर्भुवि ॥ तत्रागत्यापि कुत्रापि देहि मह्यं वरं प्रभो ॥ १९९ ॥ मम प्राणैस्तव तनुः केन वा करुणा हरे[1] ॥ आत्मना मुरलीपादौ मनसा वा विनिर्मितौ ॥ २०० ॥ स्त्रियः कतिविधाः संति पुरुषा वा पुरुष्टुतः ॥ नास्ति कुत्रापि कांता वा कांत्या शत्तया च मादृशी ॥ २०१ ॥ तव देहार्धभागेन केन वाऽहं विनिर्मिता ॥ अयमेवावयोर्भेदो नास्त्यतस्त्वयि मे मनः ॥ २०२ ॥ ममात्मा मानसं प्राणास्त्वयि संस्थापिता यथा ॥ तवात्ममानसप्राणा मयि वा संस्थिता

१ वार्यन हरे–इ० पा०।

स्तथा ॥ २०३ ॥ अतो निमेषविरहादात्मनोर्विक्लवं मनः ॥ प्रदग्धंसन्ततं प्राणा दहंति विरहश्रुतौ ॥ २०४ ॥ इत्येवमुक्त्वा सा देवी
तत्रैव सुरसंसदि ॥ भूयोभूयो रुरोदोच्चैर्धृत्वा तच्चरणांबुजम् ॥ २०५ ॥ क्रोडे कृत्वा तु तां कृष्णो मुखं संमृज्य वाससा ॥ बोधयामास
विविधं सत्यं तथ्यं हितं वचः ॥ २०६ ॥ ॥ श्रीकृष्ण उवाच ॥ आध्यात्मिकं परं योगं शोकच्छेदनकारकम् ॥ शृणु देवि प्रवक्ष्या
मि योगींद्राणां च दुर्लभम् ॥ २०७ ॥ आधाराधेययोः सर्वं ब्रह्मांडं पश्य सुन्दरि ॥ आधारव्यतिरेकेण नास्त्याधेयस्य संभवः ॥
॥ २०८ ॥ फलाधारं च पुष्पं च पुष्पाधारं च पल्लवम् ॥ स्कन्धश्च पल्लवाधारः स्कन्धाधारस्तरुः स्वयम् ॥ २०९ ॥ वृक्षाधारो
प्यंकुरश्च जीवशक्तिसमन्वितः ॥ अष्टिरेकांकुराधारश्चाष्ट्याधारो वसुन्धरा ॥ २१० ॥ शेषो वसुन्धराधारः शेषाधारो हि कच्छपः ॥
वायुश्च कच्छपाधारो वाय्वाधारोहमेव च ॥ २११ ॥ ममाधारस्वरूपा त्वं त्वयि तिष्ठामि सांप्रतम् ॥ त्वं च शक्तिसमूहा च मूलप्रकृ
तिरीश्वरी ॥ २१२ ॥ त्वं शरीरस्वरूपाऽसि त्रिगुणाधाररूपिणी ॥ तवात्माहं निरीहश्च चेष्टावांश्च त्वया सह ॥ २१३ ॥ पुरुषाद्वीर्य
मुत्पन्नं वीर्यात्सन्ततिरेव च ॥ तयोराधाररूपा च कामिनी प्रकृतेः कला ॥ २१४ ॥ विना देहेन क्वात्मा च क्व शरीरं विनात्मना ॥
प्राधान्यं च तयोर्देवि विना त्वाद्य कुतो भवः ॥ २१५ ॥ न कुत्राप्यावयोर्भेदो राधे संसारबीजयोः ॥ यत्रात्मा तत्र देहं च
न भेदो विनयेन किम् ॥ २१६ ॥ यथा क्षीरे च धावल्यं दाहिका च हुताशने ॥ भूमौ गन्धो जले शैत्यं तथा त्वयि मयि
स्थिते ॥ २१७ ॥ धावल्यदुग्धयोरैक्यं दाहिकानलयोर्यथा ॥ भूगन्धजलशैत्यानां नास्ति भेदस्तथाऽऽवयोः ॥ २१८ ॥ मया
विना त्वं निर्जीवा चादृश्योऽहं त्वया विना ॥ त्वया विना भवं कर्तुं नालं सुन्दरि निश्चितम् ॥ २१९ ॥ विना मृदा घटं
कर्तुं यथा नालं कुलालकः ॥ विना स्वर्णं स्वर्णकारोऽलंकारं कर्तुमक्षमः ॥ २२० ॥ स्वयमात्मा यथा नित्यस्तथा त्वं प्रकृतिः
स्वयम् ॥ सर्वशक्तिसमायुक्ता सर्वाधारा सनातनी ॥ २२१ ॥ मम प्राणसमा लक्ष्मीर्वाणी च सर्वमंगला ॥ ब्रह्मेशानन्तध ॥ २० ॥
र्माश्च त्वं मे प्राणाधिका प्रिया ॥ २२२ ॥ समीपस्था इमे सर्वे सुरा देव्यश्च राधिके ॥ एभ्योप्यभ्यधिका नो चेत्कथं वक्षः

स्थलस्थिता ॥ २२३ ॥ त्यजाश्रुमोक्षणं राधे भ्रांतिं च निष्फलां सति ॥ विहाय शंकां निःशंकं वृषभानुगृहं व्रज ॥ २२४ ॥
कलावत्याश्च जठरे मासानां नव सुन्दरि ॥ वायुना पूरयित्वा च गर्भं रोधय मायया ॥ २२५ ॥ दशमे समनुप्राप्ते त्वमाविर्भव
भूतले ॥ स्वात्मरूपं परित्यज्य शिशुरूपं विधाय च ॥ २२६ ॥ वायुनिःसारणे काले कलावत्याः समीपतः ॥ भूमौ विवसनीभूय
पतित्वा रोदिषि ध्रुवम् ॥ २२७ ॥ अयोनिसंभवा त्वं च भविता गोकुले सति ॥ अयोनिसंभवोऽहं च नावयोर्गर्भसंस्थितिः ॥२२८॥
भूमिसंस्पृष्टमात्रं मां गोकुले प्रापयिष्यति ॥ तव हेतोर्गमिष्यामि कृत्वा कंसभयं छलम् ॥ २२९ ॥ यशोदामंदिरे मां च सानन्दं
नन्दनंदनम् ॥ नित्यं द्रक्ष्यसि कल्याणि ममाश्लेषणपूर्वकम् ॥ २३० ॥ स्मृतिस्ते भविता काले वरेण मम राधिके ॥ स्वच्छन्दं
विहरिष्यामि नित्यं वृन्दावने वने ॥ २३१ ॥ त्रिःसप्तशतकोटीभिर्गोपीभिर्गोकुलं व्रज ॥ त्रयस्त्रिंशद्वयस्याभिः सुशीलादिभिरेव
च ॥ २३२ ॥ संस्थाप्य संख्यारहिता गोपीर्गोकुल एव च ॥ ता आश्वास्य प्रबोधैश्च मितया च सुधागिरा ॥ २३३ ॥ अहं गोपाल
सुहृदः संस्थाप्यात्रैव राधिके ॥ वसुदेवाश्रमं पश्चाद्यास्यामि मथुरां पुरीम् ॥ २३४ ॥ व्रजं व्रजन्तु क्रीडार्थं मम संगे प्रियात्प्रियाः ॥
बल्लवानां गृहे जन्म लभन्तां गोपकोटयः ॥ २३५ ॥ इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद ॥ ऊचुर्देवाश्च देव्यश्च गोपा गोप्यश्च
तत्र वै ॥ २३६ ॥ ब्रह्मेशशेषधर्माश्च श्रीकृष्णं तं परात्परम् ॥ शिवापद्मासरस्वत्यस्तुष्टुवुः परया मुदा ॥ २३७ ॥ भक्त्या गोपाश्च
गोप्यश्च विरहज्वरकातराः ॥ तत्र संस्तूय श्रीकृष्णं प्रणेमुः प्रेमविह्वलाः ॥ २३८ ॥ प्राणाधिकं प्रियं कांतं राधापूर्णमनोरथम् ॥
परितुष्टोऽभवद्भक्त्या विरहज्वरकातराम् ॥ २३९ ॥ साश्रुपूर्णातिदीनां च दृष्ट्वा राधां भयाकुलाम् ॥ प्रबोधवचनं श्रुत्यमुवाच तां हरिः
स्वयम् ॥ २४० ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ प्राणाधिके महादेवि स्थिरा भव भयं त्यज ॥ यथा त्वं च तथाऽहं च का चिंता ते मयि
स्थिते ॥ २४१ ॥ किं तु ते कथयिष्यामि किंचिदेवास्त्यमंगलम् ॥ वर्षाणां शतकं पूर्णं त्वद्विच्छेदो मया सह ॥ २४२ ॥
श्रीदामशापजन्येन कर्मभोगेन सुन्दरि ॥ भविष्यत्येव मम च मथुरागमनं ततः ॥ २४३ ॥ तत्र भारावतरणं पित्रोर्बंधनमो

चनम् ॥ मालाकारतंतुवायकुब्जिकानां च मोक्षणम् ॥ २४४ ॥ घातयित्वा च यवनं मुचुकुन्दस्य मोक्षणम् ॥ द्वारकायाश्च निर्माणं राजसूयस्य दर्शनम् ॥ २४५ ॥ उद्वाहं राजकन्यानां सहस्राणां च षोडश ॥ दशाधिकशतस्यापि शत्रूणां दमनं तथा ॥ २४६ ॥ मित्रोपकरणं चैव वाराणस्याश्च दाहनम् ॥ हरस्य जृंभणं तत्र बाणस्य भुजकृंतनम् ॥ २४७ ॥ पारिजातस्य हरणं यद्यत्कर्माणि तानि च ॥ गमनं तीर्थयात्रायां मुनिसंघप्रदर्शनम् ॥ २४८ ॥ संभाषणं च बंधूनां यज्ञसंपादनं पितुः ॥ शुभक्षणे पुनस्तत्र त्वया सार्द्धं प्रदर्शनम् ॥ करिष्यामि च तत्रैव गोपिकानां च दर्शनम् ॥ २४९ ॥ तुभ्यमाध्यात्मिकं दत्त्वा पुनः सत्यं त्वया सह ॥ दिवानिशमविच्छेदो मया सार्द्धमतःपरम् ॥ २५० ॥ भविष्यति त्वया सार्द्धं पुनरागमनं व्रजे ॥ कांते विच्छेदसमये वर्षाणां शतके सति ॥ २५१ ॥ नित्यं संमीलनं स्वप्ने भविष्यति त्वया सह ॥ मम नारायणांशो यस्तस्य यानं च द्वारकाम् ॥ २५२ ॥ शतवर्षांतरे साध्यमेतदेव सुनिश्चितम् ॥ भविष्यति पुनस्तत्र वने रासस्त्वया सह ॥ २५३ ॥ पुनः पित्रोश्च गोपीनां शोकसंमार्जनं परम् ॥ कृत्वा भारावतरणं पुनरागमनं मम ॥ २५४ ॥ त्वया सहापि गोलोकं गोपैर्गोपीभिरेव च ॥ मम नारायणांशस्य वाण्या च पद्मया सह ॥ २५५ ॥ वैकुंठगमनं राधे नित्यस्य परमात्मनः ॥ श्वेतद्वीपं धर्मगेहमंशानां च भविष्यति ॥ २५६ ॥ देवानां चैव देवीनामंशा यास्यंति स्वक्षयम् ॥ पुनः संस्थितिरत्रैव गोलोके मे त्वया सह ॥ २५७ ॥ इत्येवं कथितं सर्वं भविष्यं च शुभाशुभम् ॥ मया निरूपितं यत्तत्कांते केन निवार्यते ॥ २५८ ॥ इत्येवमुक्त्वा श्रीकृष्णः कृत्वा राधां स्ववक्षसि ॥ तस्थौ तस्थुः सुराः सर्वे सुरपत्न्यश्च विस्मिताः ॥ २५९ ॥ उवाच श्रीहरिर्देवान्देवीं च समयोचितम् ॥ देवा गच्छत कार्यार्थं स्वालयं विषयोचितम् ॥ २६० ॥ गच्छ पार्वति कैलासं सुताभ्यां स्वामिना सह ॥ मया नियोजितं कर्म सर्वं काले भविष्यति ॥ २६१ ॥ भविता कलया जन्म सर्वेषां च व्रजेश्वरि ॥ क्षुद्राणां चैव

१ गतस्य द्वारकां त्वत्तो मम नारायणांशस्य–इ० पा० । २ वासः–इ० पा० ।

महतां देवं लंबोदरं विना ॥ २६२ ॥ प्रणम्य श्रीहरिं देवाः स्वालयं प्रययुर्मुदा ॥ लक्ष्मीं सरस्वतीं भक्त्या प्रणम्य पुरुषोत्तमम् ॥ २६३ ॥ हरिणा योजितं कर्म कर्तुं व्यग्रा महीं ययुः ॥ भर्त्रा निरूपितं स्थानं देवानामपि दुर्लभम् ॥ २६४ ॥ उवाच राधिकां कृष्णो वृषभानुगृहं व्रज ॥ गोपगोपीसमूहैश्च सह पूर्वनिरूपितैः ॥ २६५ ॥ अहं यास्यामि मथुरां वसुदेवालयं प्रिये ॥ पश्चात्कंसभय व्याजाद्गोकुलं तव सन्निधिम् ॥ २६६ ॥ राधा प्रणम्य श्रीकृष्णं रक्तपंकजलोचना ॥ भृशं रुरोद पुरतः प्रेमविच्छेदकातरा ॥ २६७ ॥ स्थायंस्थायं क्वचिद्यांती गत्वागत्वा पुनःपुनः ॥ पुनःपुनः समागत्य दर्शंदर्शं हरेर्मुखम् ॥ २६८ ॥ पपौ चक्षुश्चकोराभ्यां निमेषरहिता सती ॥ शरत्पार्वणचंद्राभसुधापूर्णं प्रभोर्मुखम् ॥ २६९ ॥ ततः प्रदक्षिणीकृत्य सप्तधा परमेश्वरी ॥ प्रणम्य सप्तधा चैव पुनस्तस्थौ हरेः पुरः ॥ २७० ॥ आजग्मुर्गोपिकानां च त्रिःसप्तशतकोटयः ॥ आजगाम च गोपानां समूहः कोटिसंख्यकः ॥२७१॥ गोपानां गोपिकानां च समूहैः सह राधिका ॥ पुनः प्रणम्य तं राधा तत्र तस्थौ च नारद ॥ २७२ ॥ त्रयस्त्रिंशद्वयस्याभिर्गोपीभिः सह सुंदरी ॥ गोपानां च समूहैश्च प्रणम्य प्रययौ महीम् ॥ २७३ ॥ हरिणा योजितं स्थानं प्रजग्मुर्नंदगोकुलम् ॥ वृषभानुगृहं राधा गोपीगोपगृहं ययौ ॥ २७४ ॥ महीं गतायां राधायां गोपीभिः सह गोपकैः ॥ बभूव श्रीहरिः सद्यः पृथिवीं गमनोत्सुकः ॥ २७५ ॥ संभाष्य गोपान्गोपीश्च नियोज्य स्वीयकर्मणि ॥ मनोयायी जगन्नाथो जगाम मथुरां हरिः ॥ २७६ ॥ पूर्वं यद्यदपत्यं च देवकीवसुदेवयोः ॥ बभूव सद्यस्तत्कंसः पुत्रषट्कं जघान ह ॥ २७७ ॥ शेषांशं सप्तमं गर्भं माययाकृष्य गोकुले ॥ निधाय रोहिणीगर्भे जगाम चाज्ञया हरेः ॥ २७८ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे षष्ठोऽध्यायः ॥६॥

॥ नारद उवाच ॥ ॥ तस्यातिरेकं कृष्णस्य महत्पुण्यकरं परम् ॥ वद जन्म महाभाग जन्ममृत्युजरापहम् ॥ १ ॥ वसुदेवः कस्य पुत्रः कस्य कन्या च देवकी ॥ को वसुदेवकी का वा विवाहं चोभयोर्वद ॥ २ ॥ कथं जघान कंसस्तत्पुत्रषट्कं च दारुणः ॥ कस्मिन्दिने हरेर्जन्म श्रोतुमिच्छामि तत्त्वतः ॥३॥ ॥ श्रीनारायण उवाच ॥ ॥ कश्यपो वसुदेवश्च देवमाता च देवकी ॥ पूर्वपुण्यफलेनैव

प्रापतुः श्रीहरिं सुतम् ॥ ४ ॥ देवमीढान्मारिषायां वसुदेवो महानभूत् ॥ यस्योद्भवे देवसंघो वादयामास दुंदुभिम् ॥ ५ ॥ आनकं च महाहृष्टाः श्रीहरेर्जनकं च तम् ॥ संतः पुरातनास्तेन वदंत्यानकदुंदुभिम् ॥ ६ ॥ आहुकस्य सुतः श्रीमान्यदुवंशसमुद्भवः ॥ देवको ज्ञानसिंधुश्च तस्य कन्या च देवकी ॥ ७ ॥ गर्गो यदुकुलाचार्यः संबंधं वसुना सह ॥ देवक्याः कारयामास विधिवच्च यथोदितम् ॥ ८ ॥ महासंभृतसंभारो वसुदेवः शुभे क्षणे ॥ उद्वाहे देवकीं तस्मै देवकः प्रददौ किल ॥ ९ ॥ अश्वानां च सहस्राणि गजानां च शतानि च ॥ सालंकृतानां दासीनां शतानि सुंदराणि च ॥ १० ॥ नानाविधानि द्रव्याणि रत्नानि विविधानि च ॥ मणिश्रेष्ठानि वस्त्राणि स्वर्णपात्राणि नारद ॥ ११ ॥ सद्रत्नभूषितां कन्यां शतचंद्रसमप्रभाम् ॥ त्रैलोक्यमोहिनीं धन्यां मान्यां श्रेष्ठां च योषिताम् ॥ १२ ॥ रूपाधारां गुणाधारां सुस्मितां वक्रलोचनाम् ॥ नवसंगमयोग्यां च प्रोद्भिन्नवयौवनाम् ॥ १३ ॥ तां गृहीत्वा रथे कृत्वा प्रस्थानसमये तदा ॥ कंसो हृष्टःसहचरो भगिन्युद्वाहकर्मणि ॥ १४ ॥ तस्या रथसमीपस्थे कंसे गच्छति तत्क्षणे ॥ कंसं संबोध्य गगने वाग्बभूवाशरीरिणी ॥ १५ ॥ कथं हृष्टोऽसि राजेंद्र शृणु सत्यं वचो हितम् ॥ देवक्या ह्यष्टमो गर्भो मृत्युहेतुस्तवैव हि ॥ १६ ॥ श्रुत्वैवं देवकीं कंसः खड्गहस्तो महाबलः ॥ देववाक्याद्भयात्क्रोधात्पापिष्ठो हंतुमुद्यतः ॥ १७ ॥ तां हंतुमुद्यतं दृष्ट्वा वसुदेवः सुपंडितः ॥ बोधयामास नीतिज्ञो नीतिशास्त्रविशारदः ॥ १८ ॥ ॥ वसुदेव उवाच ॥ ॥ राजनीतिं न जानासि शृणु मे वचनं हितम् ॥ यशस्करं च दोषघ्नं शास्त्रोक्तं समयोचितम् ॥ १९ ॥ अस्या एवाष्टमो गर्भो मृत्युश्चेत्तव भूमिप ॥ इमां च हत्वा दुष्कीर्तिं करोषि त्वं नरः कथम् ॥ २० ॥ वधे च क्षुद्रजंतूनां हिंसकानां च पंडितः ॥ कार्षापणं समुत्सृज्य मृत्युकाले प्रमुच्यते ॥ २१ ॥ अहिंसकानां क्षुद्राणां वधः शतगुणं ध्रुवम् ॥ प्रायश्चित्तं मृत्युकाले कथितं पद्मयोनिना ॥ २२ ॥ वधे विशिष्टजंतूनां पश्वादीनां च कामतः ॥ ततः शतगुणं पापं निश्चितं मनुरब्रवीत् ॥ २३ ॥ नराणां म्लेच्छजातीनां वधे शतगुणं ततः ॥ म्लेच्छानां च शतानां च यत्पापं लभते वधे ॥ २४ ॥

१ मकरोत्तदा–इ० पा० । २ हि तत्–इ० पा० ।

सच्छूद्रैकस्य च वधे तत्पापं लभते पुमान् ॥ सच्छूद्राणां शतानां च यत्पापं लभते वधे ॥ २५ ॥ तत्पापं लभते नूनं गोवधैकेन निश्चितम् ॥ गवां दशगुणं पापं ब्राह्मणस्य वधे भवेत् ॥ २६ ॥ विप्रहत्यासमं पापं स्त्रीवधे लभते नरः ॥ विशेषतो हि भगिनी पोष्या च शरणागता ॥ २७ ॥ स्त्रीहत्याशतपापं च भवेदस्या वधे नृप ॥ तपो जपं च दानं च पूजनं तीर्थदर्शनम् ॥ २८ ॥ विप्राणां भोजनं होमं स्वर्गार्थं कुरुते बुधः ॥ जलबुद्बुदवत्सर्वं स्वप्नतुल्यसमं भवम् ॥ २९ ॥ पश्यंति सततं संतो धर्मं कुर्वंति यत्नतः ॥ भगिनीं त्यज धर्मिष्ठ स्ववंशापरभास्कर[1] ॥ ३० ॥ बुधाः कतिविधाः संति सभायां पृच्छयतां नृप ॥ अस्याश्चैवाष्टमो गर्भो यदपत्यं भविष्यति ॥ ३१ ॥ वधो तुभ्यं प्रदास्यामि तेन मे किं प्रयोजनम् ॥ अथवा यान्यपत्यानि भवंति ज्ञानिनां वर ॥ ३२ ॥ तानि सर्वाणि दास्यामि त्वत्तः को मे वरः प्रियः ॥ भगिनीं त्यज राजेंद्र कन्यातुल्यां प्रियां तव ॥ ३३ ॥ मिष्टान्नपानदानेन वर्धिता मनुजां सदा ॥ वसुदेववचः श्रुत्वा तत्याज भगिनीं नृपः ॥ ३४ ॥ वसुदेवः प्रियां नीत्वा जगाम निजमंदिरे ॥ क्रमादपत्यषट्कं च यद्यद्भूतं च नारद ॥ ३५ ॥ ददौ तस्मै वसुः सत्यात्स जघान क्रमेण तान् ॥ देवक्याः सप्तमे गर्भे कंसो रक्षां ददौ भिया ॥ ॥ ३६ ॥ रोहिणीजठरे माया तमाकृष्य ररक्ष च ॥ रक्षकाः कथयामासुर्गर्भस्रावो बभूव ह ॥ ३७ ॥ तस्माद्बभूव भगवानात्मा संकर्पणः प्रभुः ॥ तस्या एवाष्टमो गर्भो वायुपूर्णो बभूव ह ॥ ३८ ॥ गते च नवमे मासि दशमे समुपस्थिते ॥ दृष्टिं ददौ च गर्भे च भगवान्सर्वदर्शनः ॥ ३९ ॥ स्वयं रूपवती देवी सर्वासां योपितां वरा ॥ बभूव दर्शनात्सद्यः सुंदरी सा चतुर्गुणा ॥ ४० ॥ ददर्श देवकीं कंसः प्रफुल्लवदनेक्षणाम् ॥ तेजसा प्रज्वलंतीं च मायामिव दिशो दश ॥ ४१ ॥ ज्योतिषां संहतिं चैव यथा मूर्तिमतीमिव ॥ दृष्ट्वा तामसुरेंद्रश्च विस्मयं परमं ययौ ॥ ४२ ॥ अस्माद्गर्भादपत्यं च मृत्युबीजं ममैव च ॥ इत्येवमुक्त्वा कंसश्च ददौ रक्षां प्रयत्नतः ॥ देवकीं वसुदेवं च सप्तद्वारं ररक्ष च ॥ ४३ ॥ पूर्णे च दशमे मासे गर्भः पूर्णो बभूव ह ॥ बभूव सा चलस्पंदा जडरूपा च

१ पद्मभास्कर—इ० पा० ।

नारद ॥ ४४ ॥ गर्भे च वायुना पूर्णे निर्लिप्तो भगवानजित् ॥ हृत्पद्मकोशे देवक्या अधिष्ठानं चकार ह ॥ ४५ ॥ सा विश्वंभरगर्भा च मंदिराभ्यंतरे सती ॥ उवास जडरूपा च क्लेशयुक्ता बभूव ह ॥ ४६ ॥ उवास च क्षणं देवी क्षणमुत्थाय तिष्ठति ॥ क्षणं व्रजति पादैकं क्षणं स्वपिति तत्र वै ॥ ४७ ॥ दृष्ट्वा च देवकीं शीघ्रं वसुदेवो महामनाः ॥ प्रसूतिसमयं ज्ञात्वा सस्मार हरिमीश्वरम् ॥ ४८ ॥ रत्नप्रदीपसंयुक्ते मंदिरे सुमनोहरे ॥ स्थापयामास खड्गं च लोहं तोयं हुताशनम् ॥ ४९ ॥ मंत्रज्ञं च नरं चैव बंधुपत्नीर्भयाकुलः ॥ विद्वांसं ब्राह्मणं चैव त्रस्तो बंधूंश्च सादरम् ॥ ५० ॥ एतस्मिन्नंतरे तस्या रात्रेर्द्वौ प्रहरौ गतौ ॥ व्याप्तं च गगनं मेघैः क्षणद्युतिसमन्वितैः ॥ ५१ ॥ ववुश्च वायवश्चेष्टा ययुर्निद्रां च रक्षकाः ॥ अचेष्टिताश्च शयने मृता इव विचेतनाः ॥ ५२ ॥ एतस्मिन्नंतरे तत्र चाजग्मुस्त्रिदशेश्वराः ॥ तुष्टुवुर्धर्मब्रह्मेशा गर्भस्थं परमेश्वरम् ॥ ५३ ॥ ॥ देवा ऊचुः ॥ ॥ जगद्योनिरयोनिस्त्वमनंतोऽव्यय एव च ॥ ज्योतिःस्वरूपो ह्यनघः सगुणो निर्गुणो महान् ॥ ५४ ॥ भक्तानुरोधात्साकारो निराकारो निरंकुशः ॥ निर्व्यूहो निखिलाधारो निःशंको निरुपद्रवः ॥ ५५ ॥ निरुपाधिश्च निर्लिप्तो निरीहो निधनांतकः ॥ स्वात्मारामः पूर्णकामो निमिषो नित्य एव च ॥ ५६ ॥ स्वेच्छामयः सर्वहेतुः सर्वः सर्वगुणाश्रयः ॥ सुखदो दुःखदो दुर्गो दुर्जनांतक एव च ॥ ५७ ॥ सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः ॥ वेदहेतुश्च वेदाश्च वेदांगो वेदविद्विभुः ॥ ५८ ॥ इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः ॥ हर्षाश्रुलोचनाः सर्वे ववृषुः कुसुमानि च ॥ ५९ ॥ द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत् ॥ दृढां भक्तिं हरेर्दास्यं लभते वांछितं फलम् ॥ ६० ॥ इति श्रीब्रह्मवैवर्ते ब्रह्मादिकृतश्रीकृष्णस्तोत्रम् ॥ ॥ नारायण उवाच ॥ इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः ॥ ६१ ॥ बभूव जलवृष्टिश्च निश्चेष्टा मथुरापुरी ॥ घोरांधकारनिबिडा बभूव यामिनी मुने ॥ ६२ ॥ गते सप्तमुहूर्ते तु चाष्टमे समुपस्थिते ॥ वेदातिरिक्तदुर्ज्ञेये सर्वोत्कृष्टे शुभे क्षणे ॥ ६३ ॥ शुभग्रहे दृष्टियुक्तेप्यदृष्टे चाशुभग्रहे ॥ अर्धरात्रे समुत्पन्ने रोहिण्या



१--स्वयम्--इ० पा० । २ निर्दोषो--इ० पा० ।

मष्टमीतिथौ ॥ ६४ ॥ जयंतीयोगसंयुक्ते चार्धचंद्रोदये मुने ॥ दृष्ट्वादृष्ट्वा क्षणं लग्नं भीताः सूर्यादयस्तदा ॥ ६५ ॥ गगने क्रममुल्लंघ्य जग्मुर्मीनं शुभावहाः ॥ सुप्रसन्ना ग्रहाः सर्वे बभूवुस्तत्र संस्थिताः॥६६॥ एकादशास्ते प्रीतया च मुहूर्तं धातुराज्ञया ॥ ववर्षुश्च जलधरा ववुर्वाताःसुशीतलाः ॥ ६७ ॥ सुप्रसन्ना च पृथिवी प्रसन्नाश्च दिशो दश ॥ ऋषयो मनवश्चैव यक्षगंधर्वकिन्नराः ॥६८॥ देवा देव्यश्च मुदिता ननृतुश्चाप्सरोगणाः॥ जगुर्गंधर्वपतयो विद्याधर्यश्च नारद ॥६९॥ सुखेन सुस्रुवुनद्यो जज्वलुश्चाग्नयो मुदा ॥ नेदुर्दुंदुभयो नाके चानकाश्च मनोहराः ॥ ७० ॥ पारिजातप्रसूनानां महावृष्टिर्बभूव ह ॥ जगाम सूतिकागेहं नारीरूपं विधाय भूः ॥ ७१ ॥ जयशब्दः शंखशब्दो हरिशब्दो बभूव ह ॥ एतस्मिन्नंतरे तत्र पपात देवकी सती ॥ ७२ ॥ निःससार च वायुश्च देवकीजठरात्ततः ॥ तत्रैव भगवान्कृष्णो दिव्यरूपं विधाय च ॥ ७३ ॥ हृत्पद्मकोशाद्देवक्या हरिराविर्बभूव ह ॥ अतीव कमनीयं च शरीरं सुमनोहरम् ॥ ७४ ॥ द्विभुजं मुरलीहस्तं स्फुरन्मुकुटकुंडलम् ॥ ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकातरम् ॥ ७५ ॥ मणिरत्नेंद्रसाराणां भूषणैश्च विभूषितम् ॥ नवीननीरदश्यामं शोभितं पीतवाससा ॥ ७६ ॥ चंदनागुरुकस्तूरीकुंकुमद्रवचर्चितम् ॥ शरत्पार्वणचंद्रास्यं बिंबाधरमनोहरम् ॥ ७७ ॥ मयूरपिच्छचूडं च सद्रत्नमुकुटोज्ज्वलम् ॥ त्रिभंगवक्रमध्यं च वनमालाविभूषितम् ॥ ७८ ॥ श्रीवत्सवक्षसं चारु कौस्तुभेन विराजितम् ॥ किशोरवयसं शांतं कांतं ब्रह्मेशयोः परम् ॥७९॥ ददर्श वसुदेवश्च देवकीपुरतो मुने ॥ तुष्टाव परया भक्त्या विस्मयं परमं ययौ ॥ ८० ॥ कृतांजलिपुटो भूत्वा भक्तिनम्रात्मकंधरः ॥ साश्रुपूर्णः सपुलको देवक्या च प्रिया सह ॥ ८१ ॥

॥ वसुदेव उवाच ॥ ॥ त्वामतींद्रियमव्यक्तमक्षरं निर्गुणं विभुम् ॥ ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम् ॥ ८२ ॥ स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् ॥ निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम् ॥ ८३ ॥ स्थूलात्स्थूलतरं व्यातमतिसूक्ष्ममदर्शनम् ॥ स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम् ॥ ८४ ॥ शरीरवंतं सगुणमशरीरं गुणोत्करम् ॥ प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः परम् ॥ ८५ ॥

१ मुनयः-इ० पा० । २ श्रीमंतामिंद्रियवर्तितम्-इ० पा० ।

सर्वेशं सर्वरूपं च सर्वांतकरमव्ययम् ॥ सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम् ॥ ८६ ॥ अनंतः स्तवनेऽशक्तोऽशक्ता देवी
सरस्वती ॥ यं वा स्तोतुमशक्तश्च पंचवक्त्रः षडाननः ॥ ८७ ॥ चतुर्मुखो वेदकर्ता यं स्तोतुमक्षमः सदा ॥ गणेशो न समर्थश्च योगीं
द्राणां गुरोर्गुरुः ॥ ८८ ॥ ऋषयो देवताश्चैव मुनींद्रमनुमानवाः ॥ स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवंति ते ॥ ८९ ॥ श्रुतयः
स्तवनेऽशक्ताः किं स्तुवंति विपश्चितः ॥ विहायैवं शरीरं च बालो भवितुमर्हसि ॥ ९० ॥ वसुदेवकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः ॥
भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणांबुजे ॥ ९१ ॥ विशिष्टपुत्रं लभते हरिदासं गुणान्वितम् ॥ संकटं निस्तरेत्तूर्णं शत्रुभीत्या
प्रमुच्यते ॥ ९२ ॥ इति श्रीब्रह्मवैवर्ते वसुदेवकृतं श्रीकृष्णस्तोत्रम् ॥ नारायण उवाच ॥ वसुदेववचः श्रुत्वा तमुवाच हरिः स्वयम् ॥
प्रसन्नवदनः श्रीमान्भक्तानुग्रहकातरः ॥ ९३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तपसां च फलेनैव पुत्रोऽहं तव सांप्रतम् ॥ वरं वृणीष्व भद्रं
ते भविष्यति न संशयः ॥ ९४ ॥ पुरा तपस्विनां श्रेष्ठः सुतपास्त्वं प्रजापतिः ॥ पत्नी ते पृश्निनाम्नी च तपसाराधितस्त्वया
॥ ९५ ॥ पुत्रो मत्सदृशस्तत्र दृष्ट्वा मां च वृतो बुधैः ॥ मया दत्तो वरस्तुभ्यं मत्समो भविता सुतः ॥ ९६ ॥ दत्त्वा तुभ्यं वरं
तात मनसालोच्य चिंतितः ॥ मत्समो नास्ति भुवने पुत्रोऽहं तेन हेतुना ॥ ९७ ॥ तपसां च प्रभावेण त्वमेव कश्यपः स्वयम् ॥
सुतपा देवमातेयमदितिश्च पतिव्रता ॥ ९८ ॥ अधुना कश्यपांशस्त्वं वसुदेवः पिता मम ॥ देवकी देवमातेयमदितेरंशसंभवा
॥ ९९ ॥ त्वत्तोदित्यां वामनोऽहं पुत्रस्तेंशेन संभवः ॥ अधुना परिपूर्णोऽहं पुत्रस्ते तपसां फलात् ॥ १०० ॥ मां वा त्वं पुत्रभावेन
ब्रह्मभावेन वा पुनः ॥ मां प्राप्तोसि महाप्राज्ञ जीवन्मुक्तो भविष्यसि ॥ १०१ ॥ यशोदाभवनं शीघ्रं मां गृहीत्वा व्रजं व्रज ॥ संस्थाप्य
तत्र मां तात मायामादाय स्थापय ॥ १०२ ॥ इत्युक्त्वा श्रीहरिस्तत्र बालरूपो बभूव ह ॥ नग्नं भूमौ शयानं च ददर्श श्यामलं
सुतम् ॥ १०३ ॥ दृष्ट्वा स बालकं तत्र मोहितो विष्णुमायया ॥ किं वा कूटं च तंद्रायामपूर्वं सूतिकागृहम् ॥ १०४ ॥ इत्युक्त्वा वसुदे



१ विभो—इति पा० । २ वरः—इति पा० । ३ तपसः—इति पा० ।

वश्च समालोच्य स्त्रिया सह ॥ गृहीत्वा बालकं क्रोडे जगाम नन्दगोकुलम् ॥ १०५ ॥ गत्वा नन्दव्रजं शीघ्रं विवेश सूतिकागृहम् ॥
ददर्श शयनाविष्टां यशोदां निद्रयान्विताम् ॥ १०६ ॥ निद्रान्वितं च नन्दं च सर्वं तत्र गृहे स्थितम् ॥ ददर्श बालिकां नग्नां तप्तकां
चनसन्निभाम् ॥ १०७ ॥ ईषद्धास्यां प्रसन्नास्यां पश्यन्तीं गृहशेखरम् ॥ तां दृष्ट्वा वसुदेवश्च विस्मयं परमं ययौ ॥ १०८ ॥ संस्थाप्य
तत्र पुत्रं च कन्यामादाय सत्वरम् ॥ जगाम मथुरां हृष्टः स्वकांतासूतिकागृहम् ॥ १०९ ॥ स्थापयामास तत्रैव महामायां च बालि
काम् ॥ रोरूयमाणां तामेव दृष्ट्वा हृष्टा च देवकी॥११०॥ रोदनेनैव सा बाला बोधयामास रक्षकान् ॥ उत्थाय रक्षकाः शीघ्रं बालिकां
जगृहुस्तदा ॥ १११ ॥ गृहीत्वा बालिकां ते च प्रजग्मुः कंससन्निधिम् ॥ जगाम देवकी पश्चाद्वसुदेवश्च शोकतः ॥ ११२ ॥ दृष्ट्वा
च बालिकां कंसो नातिहृष्टो महामुने ॥ रोरूयमाणां कल्याणीं तदया न बभूव ह ॥ ११३ ॥ तां गृहीत्वा च पाषाणे हन्तुं यांतं
सुदारुणम् ॥ उवाच वसुदेवश्च देवकी परमादरम् ॥११४॥ भोभोः कंस नृपश्रेष्ठ नीतिशास्त्रविशारद ॥ निबोध वाक्यं सत्यं च नीति
युक्तं मनोरमम् ॥ ११५ ॥ हत्वाऽऽवयोः पुत्रषट्कं दया ते नास्ति बांधव ॥ अधुना चाष्टमे गर्भे बालिकामबलां मम ॥ ११६ ॥ हत्वा
तव किमैश्वर्यं भविष्यति महीतले ॥ स्त्रीमेव हंतुमबल किं क्षमा रणमूर्धनि ॥ ११७ ॥ इत्येवमुक्त्वा तं वसुर्देवकी च सभा
तले ॥ रुरोद पुरतस्तत्र कंसस्य च दुरात्मनः ॥ कंसस्तयोर्वचः श्रुत्वा तामुवाच दुरात्मना ॥११८॥ ॥ कंस उवाच ॥ ॥ शृणु वाक्यं
मदीयं च निबोध बोधयामि ते ॥ ११९ ॥ तृणेन पर्वतं हन्तुं शक्तो धाता च दैवतः ॥ कीटेन सिंहशार्दूलं मशकेन गजं
तथा ॥ १२० ॥ शिशुना च महावीरं महांतं क्षुद्रजन्तुभिः ॥ मूषकेन च मार्जारं मंडूकेन भुजंगमम् ॥१२१॥ एवं जन्येन जनकं
भक्ष्येणैव च भक्षकम् ॥ वह्निना च जलं नष्टुं वार्हिं शुष्कतृणेन च ॥ १२२ ॥ पीताः सप्तसमुद्राश्च द्विजेनैकेन जन्तुना ॥
धातुर्गतिर्विचित्रा तु दुर्ज्ञेया भुवनत्रये ॥ १२३ ॥ दैवेन बालिका नष्टुं मां समर्था भविष्यति ॥ बालिकां च वधिष्यामि नात्र
कार्या विचारणा ॥ १२४ ॥ इत्येवमुक्त्वा कंसश्च गृहीत्वा बालिकां तदा ॥ हंतुमारब्धवान्कंसस्तमुवाच वसुस्तदा ॥ १२५ ॥

वृथा हिंसितवान्राजन्देहि बालां कृपानिधे ॥ स तच्छ्रुत्वा विचारज्ञः कंसस्तुष्टो महामुने ॥ १२६ ॥ संबोधयन्तं तत्रैव वाग्बभूवा
शरीरिणी ॥ हे कंस हंसि कां मूढ न विज्ञाय हरेर्गतिम् ॥ १२७ ॥ कुत्रचित्त्वन्निहन्तास्ति काले व्यक्तो भविष्यति ॥ श्रुत्वैव
देववाणीं च तत्याज बालिकां नृपः ॥ १२८ ॥ वसुदेवो देवकी च तामादाय मुदान्वितौ ॥ जग्मतुः स्वगृहं तौ च कन्यां कृत्वा
स्ववक्षसि ॥ १२९ ॥ मृतामिव पुनः प्राप्य ब्राह्मणेभ्यो ददौ धनम् ॥ सा परा भगिनी विप्र कृष्णस्य परमात्मनः ॥ १३० ॥
एकानंशेति विख्याता पार्वत्यंशसमुद्भवा ॥ वसुस्तां द्वारकायां तु रुक्मिण्युद्वाहकर्मणि ॥ १३१ ॥ ददौ दुर्वाससे
भक्त्या शंकरांशाय भक्तितः ॥ एवं निगदितं सर्वं कृष्णजन्मानुकीर्तनम् ॥ जन्ममृत्युजरातिघ्नं सुखदं पुण्यदं मुने ॥ १३२ ॥
॥ इति श्रीब्रह्मवैवर्ते महापुराणे कृष्णजन्मखंडे नारायणनारदसंवादे सप्तमोऽध्यायः ॥ ७ ॥ ॥ नारद उवाच ॥ ॥ जन्मा-
ष्टमीव्रतं ब्रूहि व्रतानां व्रतमुत्तमम् ॥ फलं जयंतीयोगस्य सामान्येनैव सांप्रतम् ॥ १ ॥ को वा दोषोप्यकरणे भोजने
वा महामुने ॥ उपवासफलं किं वा जयंत्यां च सुसंमतम् ॥ २ ॥ व्रतं पूजाविधानं च संयमस्य च सांप्रतम् ॥ उपवासपारणयोः
सुविचार्य वद प्रभो ॥ ३ ॥ ॥ नारायण उवाच ॥ ॥ कृत्वा हविष्यं सप्तम्यां संयतः पारणे तथा ॥ अरुणोदयवेलायां समुत्थाय
परेहनि ॥ ४ ॥ प्रातःकृत्यं संविधाय स्नात्वा संकल्पमाचरेत् ॥ व्रतोपवासयोर्ब्रह्मञ्छ्रीकृष्णप्रीतिहेतुकम् ॥ ५ ॥ मन्वादिदिवसे
प्राप्ते यत्फलं स्नानपूजनैः ॥ फलं भाद्रपदेऽष्टम्यां भवेत्कोटिगुणं द्विज ॥ ६ ॥ तस्यां तिथौ वारिमात्रं पितॄणां यः प्रयच्छति ॥ गया
श्राद्धं कृतं तेन शताब्दं नात्र संशयः ॥७॥ स्नात्वा नित्यक्रियां कृत्वा निर्माय सूतिकागृहम् ॥ लोहखंडवह्निजालैर्युक्तं रक्षकसंघकैः ॥
॥ ८ ॥ तत्र द्रव्यं बहुविधं नाभिच्छेदनकर्तनम् ॥ धात्रीस्वरूपां नारीं च यत्नतः स्थापयेद्बुधः ॥ ९ ॥ पूजाद्रव्याणि चारूणि
सोपचाराणि षोडश ॥ फलान्यष्टौ च मिष्टानि द्रव्याण्येव हि नारद ॥ १० ॥ जातीफलं च कंकोलं दाडिमं श्रीफलं तथा ॥ नारि

१ लोहखड्ग–इ० पा० । २ नाडी–इ० पा० ।

केरं च जंबीरं कूष्मांडं च सुवासंसम् ॥ ११ ॥ आसनं वसनं पाद्यं मधुपर्कं तथैव च ॥ अर्घ्यमाचमनीयं च स्नानीयं शयनं तथा ॥ १२ ॥ गंधं पुष्पं च नैवेद्यं तांबूलमनुलेपनम् ॥ धूपदीपौ भूषणं वै चोपचारांश्च षोडश ॥ १३ ॥ पादप्रक्षालनं कृत्वा धृत्वा धौते च वाससी ॥ आचम्य चासने स्थित्वा स्वस्तिवाचनपूर्वकम् ॥ १४ ॥ घटस्यारोपणं कृत्वा संपूज्य पंच देवताः ॥ घटे ह्यावाहनं कृत्वा श्रीकृष्णं परमेश्वरम् ॥ १५ ॥ वसुदेवं देवकीं च यशोदां नंदमेव च ॥ रोहिणीं बलदेवं च षष्ठीदेवीं वसुंधराम् ॥ १६ ॥ रोहिणीं ब्राह्मणीं चैव अष्टमीं स्थानदेवताम् ॥ अश्वत्थाम्ना सह बलिं हनुमंतं विभीषणम् ॥ १७ ॥ कृपं परशुरामं च वेदव्यासं मृकंडकम् ॥ सर्वस्यावाहनं कृत्वा ध्यानं कुर्याद्धरेस्तदा ॥ १८ ॥ पुष्पकं मस्तके न्यस्य पुनर्ध्यायेद्विचक्षणः ॥ ध्यानं च सामवेदोक्तं शृणु वक्ष्यामि नारद ॥ १९ ॥ ब्रह्मणा कथितं पूर्वं कुमाराय महात्मने ॥ २० ॥ बालं नीलांबुजाभमतिशयरुचिरं स्मेरवक्त्रांबुजं तं ब्रह्मेशानंतधर्मैः कतिकतिदिवसैः स्तूयमानं परं यत् ॥ ध्यानासाध्यमृषीन्द्रैर्मुनिगणमनुजैः सिद्धसंघैरसाध्यं योगींद्राणामचिंत्यमतिशयमतुलं साक्षिरूपं भजेऽहम् ॥ २१ ॥ ध्यात्वा पुष्पं च दत्त्वा च तत्सर्वं च निवेदयेत् ॥ एवं व्रती व्रतं कुर्याच्छृणु मंत्रक्रमं मुने ॥ २२ ॥ आसनं सर्वशोभाढ्यं सद्रत्नमणिनिर्मितम् ॥ विचित्रं च विचित्रेण गृह्यतां शोभनं हरे ॥ २३ ॥ वसनं वह्निशौचं च निर्मितं विश्वकर्मणा ॥ प्रतप्तस्वर्णखचितं चित्रितं गृह्यतां हरे ॥ २४ ॥ पादप्रक्षालनार्थं च स्वर्णपात्रस्थितं जलम् ॥ पवित्रं निर्मलं चारु पाद्यं च गृह्यतां हरे ॥ २५ ॥ मधुसर्पिर्दधिक्षीरं शर्करासंयुतं परम् ॥ स्वर्णपात्रस्थितं देयं स्नानार्थं गृह्यतां हरे ॥ २६ ॥ दूर्वाक्षतं शुक्लपुष्पं स्वच्छतोयसमन्वितम् ॥ चंदनागुरुकस्तूरीसहितं गृह्यतां हरे ॥ २७ ॥ सुस्वादु स्वच्छतोयं च वासितं गंधवस्तुना ॥ शुद्धमाचमनीयं च गृह्यतां परमेश्वर ॥ २८ ॥ गंधद्रव्यसमायुक्तं विष्णो तैलं सुवासितम् ॥ आमलक्या द्रवं चैव स्नानीयं गृह्यतां हरे ॥ २९ ॥ सद्रत्नमणिसारेण रचितां सुमनोहराम् ॥ छादितां सूक्ष्मवस्त्रेण शय्यां च गृह्यतां

१ मनोहरम्—इ० पा० ।

चूर्णं च वृक्षभेदानां मूलानां द्रवसंयुतम् ॥ कस्तूरीद्रवसंयुक्तं गन्धं च गृह्यतां हरे ॥ ३१ ॥ पुष्पं सुगंधियुक्तं च संयुक्तं
हरे ॥ ३० ॥ चूर्णं च वृक्षभेदानां मूलानां द्रवसंयुतम् ॥ कस्तूरीद्रवसंयुक्तं गन्धं च गृह्यतां हरे ॥ ३१ ॥ पुष्पं सुगंधियुक्तं च संयुक्तं नैवेद्यं
कुंकुमेन च ॥ सुप्रियं सर्वदेवानां सांप्रतं गृह्यतां हरे ॥ ३२ ॥ गृह्यतां स्वस्तिकोक्तं च मिष्टद्रव्यसमन्वितम् ॥ सुपक्वफलसंयुक्तं नैवेद्यं
गृह्यतां हरे ॥ ३३ ॥ लड्डुकं मोदकं चैव सर्पिः क्षीरं गुडं मधु ॥ नवोद्धृतं दधि तक्रं नैवेद्यं गृह्यतां हरे ॥ ३४ ॥ शीतलं शर्करायुक्तं
क्षीरस्वादुसुपक्वकम् ॥ तांबूलं भोगसारं च कर्पूरादिसमन्वितम् ॥ ३५ ॥ भक्त्या निवेदितमिदं गृह्यतां परमेश्वर ॥ चन्दनागुरु
कस्तूरीकुंकुमद्रवसंयुतम् ॥ ३६ ॥ अबीरचूर्णं रुचिरं गृह्यतां परमेश्वर ॥ तरुभेदरसोत्कर्षो गंधयुक्तोऽग्निना सह ॥ ३७ ॥ सुप्रियः
सर्वदेवानां धूपोऽयं गृह्यतां हरे ॥ घोरांधकारनाशैकहेतुरेव शुभावहः ॥ ३८ ॥ सुप्रदीपो दीप्तिकरो दीपोऽयं गृह्यतां हरे ॥ पवित्रं निर्मलं
तोयं कर्पूरादिसमायुतम् ॥ ३९ ॥ जीवनं सर्वबीजानां पानार्थं गृह्यतां हरे ॥ नानापुष्पसमायुक्तं ग्रथितं सूक्ष्मतंतुना ॥ ४० ॥
शरीरभूषणवरं माल्यं च प्रतिगृह्यताम् ॥ दत्त्वा देयानि द्रव्याणि पूजोपयोगितानि च ॥ ४१ ॥ व्रतस्थानस्थितं द्रव्यं हरये देयमेव
च ॥ फलानि तरुबीजानि स्वादूनि सुंदराणि च ॥ ४२ ॥ वंशवृद्धिकराण्येव गृह्यतां परमेश्वर ॥ आवाहितांश्च देवांश्च प्रत्येकं
पूजयेद्व्रती ॥ ४३ ॥ तान्पूज्य भक्तिभावेन दद्यात्पुष्पांजलित्रयम् ॥ सुनंदनंदकुमुदान्गोपान्गोपीश्च राधिकाम् ॥ ४४ ॥ गणेशं
कार्तिकेयं च ब्रह्माणं च शिवं शिवाम् ॥ लक्ष्मीं सरस्वतीं चैव दिक्पालांश्च ग्रहांस्तथा ॥ ४५ ॥ शेषं सुदर्शनं चैव पार्षदप्रवरांस्तथा ॥
सम्पूज्य सर्वदेवांश्च प्रणम्य दंडवद्भुवि ॥ ब्राह्मणेभ्यश्च नैवेद्यं दत्त्वा दद्याच्च दक्षिणाम् ॥ ४६ ॥ कथां च जन्माध्यायोक्तां शृणुयाद्भक्ति
भावतः ॥ तदा कुशासने स्थित्वा कुर्याज्जागरणं व्रती ॥ ४७ ॥ प्रभाते चाह्निकं कृत्वा संपूज्य श्रीहरिं मुदा ॥ ब्राह्मणान्भोजयित्वा
च कारयेद्धरिकीर्तनम् ॥ ४८ ॥ ॥ नारद उवाच ॥ ॥ व्रतकालव्यवस्थां च वेदोक्तां सर्वसंमताम् ॥ वेदार्थं च समालोच्य संहितां ॥ २६ ॥

१ सचूर्णो–इ० पा० । २ संयुत:–इ०पा० । ३ संयुक्तो–इ० पा० । ४ गन्धश्च–इ० पा० । ५ वनस्पतिसमुद्भवम्–इ० पा० । ६ गृह्यतां परमेश्वर–इ०पा०।
७ सुवासितम्–इ० पा० । ८ कुर्याच्छ्रीहरिकीर्तनम्–इ० पा० ।

च पुरातनीम् ॥ ४९ ॥ उपवासे जागरणे व्रते किं वा फलं मुने ॥ किं वा पापं तत्र भुक्त्वा वद वेदविदां वर ॥ ५० ॥ ॥ श्रीनारायण उवाच ॥ ॥ अष्टमी कर्क्षसंयुक्ता रात्र्यर्धे यदि दृश्यते ॥ स एव मुख्यकालश्च तत्र जातः स्वयं हरिः ॥ ५१ ॥ जयं पुण्यं च कुरुते जयंती तेन संस्मृता ॥ तत्रोपोष्य व्रतं कृत्वा कुर्याज्जागरणं बुधः ॥ ५२ ॥ सर्वापवादः कालोऽयं प्रधानः सर्वसंमतः ॥ इति वेदविदां वाणी चेत्युक्ता वेधसा पुरा ॥ ५३ ॥ तत्र जागरणं कृत्वा यश्चोपोष्य व्रतं चरेत् ॥ कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥ ५४ ॥ वर्जनीया प्रयत्नेन सप्तमीसहिताष्टमी ॥ सा सर्क्षापि न कर्तव्या सप्तमीसहिताष्टमी ॥ अविद्धायां कर्क्षयायां जातो देवकिनंदनः ॥ ५५ ॥ वेदवेदांगगुप्तेतिविशिष्ट मंगलक्षणे ॥ व्यतीते रोहिणीऋक्षे व्रती कुर्याच्च पारणाम् ॥ ५६ ॥ तिथ्यंते च हरिं स्मृत्वा कृत्वा देवार्चनं व्रती ॥ पारणं पावनं पुंसां सर्वपापप्रणाशनम् ॥ ५७ ॥ उपवासांगभूतं च फलदं सिद्धिकारणम् ॥ सर्वेष्वेवोप वासेषु दिवा पारणमिष्यते ॥ ५८ ॥ अन्यथा फलहानिः स्यात्कृते धारणपारणे ॥ न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात ॥५९॥ निशायां पारणं कुर्याद्वर्जयित्वा महानिशाम् ॥ पूर्वाह्णे पारणं शस्तं कृत्वा विप्रसुरार्चनम् ॥ ६० ॥ सर्वेषां संमतं कुर्यादृते वै रोहिणी व्रतम् ॥ बुधसोमसमायुक्ता जयंती यदि लभ्यते ॥६१॥ न कुर्याद्गर्भवासं च तत्र कृत्वा व्रतं व्रती ॥ उदये चाष्टमी किंचिन्नवमी सकला यदि ॥ ६२ ॥ भवेद्बुधेंदुसंयुक्ता प्राजापत्यर्क्षसंयुता ॥ अपि वर्षशतेनापि लभ्यते वा न लभ्यते ॥ ६३ ॥ व्रतं तत्र व्रती कुर्यात्पुंसां कोटिं समुद्धरेत् ॥ नृणां विना व्रतेनापि भक्तानां हीनसंपदाम् ॥ ६४ ॥ कृतेनैवोपवासेन प्रीतो भवति माधवः ॥ भक्त्या नानो पचारेण रात्रौ जागरणेन च ॥६५॥ फलं ददाति दैत्यारिर्जयंतीव्रतसंभवम् ॥ वित्तशाठ्यमकुर्वाणः सम्यक्फलमवाप्नुयात् ॥६६॥ कुर्वाणो वित्ताशाठ्यं च लभते सदृशं फलम् ॥ अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं बुधः ॥६७॥ हन्यात्पुराकृतं पुण्यं चोपवासा र्जितं फलम् ॥ तिथिरष्टगुणं हंति नक्षत्रं च चतुर्गुणम् ॥ ६८ ॥ तस्मात्प्रयत्नतः कुर्यात्तिथिभांते च पारणम् ॥ महानिशायां प्राप्तायां

१ कर्क्षेण ब्रह्मनक्षत्रेण रोहिणीनक्षत्रेण संयुक्तेत्यर्थः । पादमेकं तु—इ० पा० ।

तिथिभांतं यदा भवेत् ॥ ६९ ॥ तृतीयेह्नि मुनिश्रेष्ठ पारणं कुरुते बुधः ॥ षण्मुहूर्ते व्यतीते तु रात्रावेव महानिशा ॥ ७० ॥ लभते
ब्रह्महत्यां च तत्र भुक्त्वा च नारद ॥ गोमांसविण्मूत्रसमं तांबूलं च फलं जलम् ॥ ७१ ॥ पुंसामभक्ष्यं शुद्धानामोदनस्य च का
कथा ॥ त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यं च चतुष्टयम् ॥ ७२ ॥ नांडीनां[1] तदुभे सन्ध्ये दिवसाद्यंतसंज्ञिते ॥ जन्माष्टम्यां च शुद्धायां
कृत्वा जागरणं व्रतम् ॥ ७३ ॥ शतजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥ जन्माष्टम्यां च शुद्धायामुपोष्य केवलं नरः ॥ ७४ ॥
अश्वमेधफलं तस्य व्रतं जागरणं विना ॥ यद्बाल्ये यच्च कौमारे यौवने यच्च वार्धके ॥ ७५ ॥ सप्तजन्मकृतात्पापान्मुच्यते नात्र
संशयः ॥ श्रीकृष्णजन्मदिवसे यश्च भुंक्ते नराधमः ॥ ७६ ॥ स भवेन्मातृगामी च ब्रह्महत्याशतं लभेत् ॥ कोटिजन्मार्जितं पुण्यं
तस्य नश्यति निश्चितम् ॥ ७७ ॥ अनर्हश्चाशुचिः शश्वद्दैवे पित्र्ये च कर्मणि ॥ अन्ते वसेत्कालसूत्रे यावच्चंद्रदिवाकरौ ॥ ७८ ॥
कृमिभिः शूलतुल्यैश्च तीक्ष्णदंष्ट्रैश्च भक्षितः ॥ पापी ततः समुत्थाय भारते जन्म चेल्लभेत् ॥ ७९ ॥ षष्टिवर्षसहस्राणि विष्ठायां च
कृमिर्भवेत् ॥ गृधकोटिसहस्राणि शतजन्मानि सूकरः ॥ ८० ॥ श्वापदः शतजन्मानि सृगालः सप्त जन्म च ॥ सप्तजन्मसु[2] सर्पश्च
काकश्च सप्तजन्मसु ॥ ८१ ॥ ततो भवेन्नरो मूको गलत्कुष्ठी सदातुरः ॥ ततो भवेत्पशुघ्नश्च व्यालग्राही ततो भवेत् ॥ ८२ ॥ तदंते
च भवेद्दस्युर्धर्महीनश्च[3] गृध्रकः ॥ ततो भवेत्स रजकस्तैलकारस्ततो भवेत् ॥ ८३ ॥ ततो भवेद्देवलको ब्राह्मणश्च सदाशुचिः ॥ उपवा
सासमर्थश्चेदेकं विप्रं च भोजयेत् ॥ ८४ ॥ तावद्धनानि वा दद्याद्यद्भुक्तं द्विगुणं भवेत् ॥ सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् ॥
॥ ८५ ॥ कुर्याद्द्वादशसंख्याकान्यथार्थं तद्व्रते नरः ॥ इत्येवं कथितं वत्स श्रुतं यद्धर्मवक्त्रतः ॥ व्रतोपवासपूजानां विधानमकृते च
यत् ॥ ८६ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे कृष्णजन्माष्टमीव्रतपूजोपवासनिरूपणंनामा
ष्टमोऽध्यायः ॥ ८॥ नारद उवाच ॥ ॥ संस्थाप्य गोकुले कृष्णं यशोदामंदिरे वसुः ॥ जगाम स्वगृहं नन्दः किञ्चकार महा[4]



१ दण्डानाम्-इ० पा० । २ शतजन्मसु-इ० पा० । ३ हीनो नरघ्नकः-इ० पा० । ४ सुतोत्सवम्-इ०पा० ।

प्रभुः ॥ १ ॥ किञ्चकार हरिस्तत्र कतिवर्षस्थितिः प्रभोः ॥ बालक्रीडनकं तस्य वर्णय क्रमशो मुने ॥ २ ॥ पुरा कृता या प्रतिज्ञा गोलोके राधया सह ॥ तत्कृतं केन विधिना प्रतिज्ञापालनं हरेः ॥ ३ ॥ कीदृग्वृन्दावनं नाम मण्डलं किंविधं वद ॥ रासक्रीडां जलक्रीडां सव्यस्य वर्णय प्रभो ॥ ४ ॥ नन्दस्तपः किञ्चकार यशोदा चाथ रोहिणी ॥ हरेः पूर्वं च हलिनः कुत्र जन्म बभूव ह ॥ ५ ॥ पीयूषखंडमाख्यानमपूर्वं श्रीहरेः स्मृतम् ॥ विशेषतः कविमुखान्नव्यं नूनं पदे पदे ॥ ६ ॥ स्वरासमण्डलक्रीडां वर्णय स्वयमेव च ॥ परोक्षवर्णनात्काव्यं प्रशस्तं नव्यवर्णनम् ॥७॥ श्रीकृष्णांशो भवान्साक्षाद्योगींद्राणां गुरोर्गुरुः ॥ यो यस्यांशः स च जनस्तस्यैव सुखतः सुखी ॥ ८ ॥ त्वयैव वर्णितौ पादौ विलीनौ तु युवां हरेः ॥ साक्षाद्गोलोकनाथांशस्त्वमेव तत्समो महान् ॥ ९ ॥ ॥ नारायण उवाच ॥ ॥ ब्रह्मेशशेषविघ्नेशाः कूर्मो धर्मोहमेव च ॥ नरश्च कार्तिकेयश्च श्रीकृष्णांशा वयं नव ॥ १० ॥ अहो गोलोकनाथस्य महिमा केन वर्ण्यते ॥ यं स्वयं नो विजानीमो न वेदाः किं विपश्चितः ॥ ११ ॥ सूकरो वामनः कल्किर्बौद्धः कपिलमीनकौ ॥ एते चांशाः कलाश्चान्ये संत्येव कतिधा मुने ॥ १२ ॥ कूर्मो नृसिंहो रामश्च श्वेतद्वीपविराड्विभुः ॥ परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम् ॥ १३ ॥ वैकुण्ठे कमलाकांतो रूपभेदाच्चतुर्भुजः ॥ गोलोके गोकुले राधाकांतोयं द्विभुजः स्वयम् ॥ १४ ॥ अस्यैव तेजो नित्यं च चित्ते कुर्वंति योगिनः ॥ भक्ताः पादाम्बुजं तेजः कुतस्तेजस्विनं विना ॥ १५ ॥ शृणु विप्र वर्णयामि यशोदानन्दयोस्तपः ॥ रोहिण्याश्च यतो हेतोर्ददृशुस्ते हरेर्मुखम् ॥ १६ ॥ वसूनां प्रवरो नन्दो नाम्ना द्रोणस्तपोधनः ॥ तस्य पत्नी धरा साध्वी यशोदा सा तपस्विनी ॥१७॥ रोहिणी सर्पमाता च कद्रूश्च सर्पकारिणी ॥ एतेषां जन्मचरितं निबोध कथयामि ते ॥१८॥ एकदा च धराद्रोणौ पर्वते गन्धमादने ॥ पुण्यदे भारते वर्षे गौतमाश्रमसन्निधौ ॥ १९ ॥ चक्रतुश्च तपस्तत्र वर्षाणामयुतं मुने ॥ श्रीकृष्णदर्शनार्थं च निर्जने सुप्रभातटे ॥२०॥ न ददर्श हरिं द्रोणो धरा चैव तपस्विनी ॥ कृत्वाग्निकुंडं वैराग्यात्प्रवेष्टुं समुपस्थितौ॥२१॥ तौ मर्तुकामौ

१ कविमुखे काव्यं नूत्नं पदेपदे–इ० पा० । २ हृश्य–इ० पा० ।

दृष्ट्वा च वाग्बभूवाशरीरिणी ॥ द्रक्ष्यथः श्रीहरिं पृथ्व्यां गोकुले पुत्ररूपिणम् ॥ २२ ॥ जन्मांतरे वसुश्रेष्ठ दुर्दर्शं योगिनां विभुम् ॥ ध्यानासाध्यं च विदुषां ब्रह्मादीनां च वंदितम् ॥ २३ ॥ श्रुत्वैवं तद्धराद्रोणौ जग्मतुः स्वालयं सुखात् ॥ लब्ध्वा तु भारते जन्म दृष्टं ताभ्यां हरेर्मुखम् ॥ २४ ॥ यशोदानंदयोरेवं कथितं चरितं तव ॥ सुगोप्यं त्रिदशानां च रोहिणीचरितं शृणु ॥ २५ ॥ एकदा देवमाता च पुष्पोत्सवदिने सती ॥ विज्ञापनं चरद्वारा चकार कश्यपं मुने ॥ २६ ॥ सुस्नाता सुंदरी देवी रत्नालंकारभूषिता ॥ चकार वेषं विविधं ददर्श दर्पणे मुखम् ॥ २७ ॥ कस्तूरीबिंदुना सार्द्धं सिंदूरबिंदुसंयुतम् ॥ रत्नकुंडलशोभाढ्यं पत्राभरणभूषितम् ॥ २८ ॥ गजमौक्तिकसंयुक्तं नासाग्रं सुमनोहरम् ॥ शरत्पार्वणचंद्रास्यं शरत्पंकजलोचनम् ॥ २९ ॥ वक्रभ्रूभंगिना युक्तं विचित्रकज्जलोज्ज्वलम् ॥ पक्वदाडिमबीजाभदंतपंक्तिविराजितम् ॥ ३० ॥ पक्वबिंबाधरौष्ठं च सस्मितं सुंदरं सदा ॥ अतीव कमनीयं च मुनींद्रचित्तमोहनम् ॥ ३१ ॥ एवंभूतं मुखं दृष्ट्वा सुंदरी स्वगृहे स्थिता ॥ पश्यंती पतिमार्गं च कामबाणप्रपीडिता ॥ ३२ ॥ शुश्राव वार्तामदितिः कश्यपं कद्रुसंयुतम् ॥ रत्नसारसमारंभे तस्या वक्षस्थले स्थितम् ॥ ३३ ॥ श्रुत्वा चुकोप साध्वी सा हताशा रतिकातरा ॥ न शशाप पतिं प्रेम्णा शशाप सर्पमातरम् ॥ ३४ ॥ न देवालययोग्या सा धर्मिष्ठा धर्मनाशिनी ॥ दूरं गच्छतु स्वर्लोकादात्मयोनिं च मानवीम् ॥ ३५ ॥ श्रुत्वैवं सा चरद्वारा शशाप देवमातरम् ॥ सा चैवं मानवीं योनिं यातु मर्त्ये जरायुताम् ॥ ३६ ॥ कश्यपो बोधयामास कद्रुं च सर्पमातरम् ॥ काले यास्यसि मर्त्यं च मया सह शुचिस्मिते ॥ ३७ ॥ त्यज भीतिं लभ सुखं द्रक्ष्यसि श्रीहरेर्मुखम् ॥ एवमुक्त्वा कश्यपश्च जगाम चादितेर्गृहम् ॥ ३८ ॥ वांछां पूर्णां च तस्याश्च चकार भगवान्विभुः ॥ ऋतौ तत्र महेंद्रश्च बभूव च सुरर्षभः ॥३९॥ अदितिर्देवकी चैव सर्पमाता च रोहिणी ॥ कश्यपो वसुदेवश्च श्रीकृष्णजनको महान् ॥ ४० ॥ रहस्यं गोपनीयं च सर्वं निगदितं मुने ॥ अधुना बलदेवस्य जन्माख्यानं मुने शृणु ॥ ४१ ॥ अनंतस्याप्रमेयस्य सहस्रशिरसः प्रभोः ॥ रोहिणी वसुदेवस्य भार्यारत्नं च प्रेयसी ॥ ४२ ॥ जगाम गोकुलं

साध्वी वसुदेवाज्ञया मुने ॥ संकर्षणस्य रक्षार्थं कंसभीता पलायिता ॥ ४३ ॥ देवक्याः सप्तमं गर्भं माया कृष्णाज्ञया तदा ॥ रोहि
ण्या जठरे तत्र स्थापयामास गोकुले ॥ ४४ ॥ संस्थाप्य च तदा गर्भं कैलासं सा जगाम ह ॥ दिनांतरे कतिपये रोहिणी
नंदमंदिरे ॥ ४५ ॥ सुषाव पुत्रं कृष्णांशं तप्तरौप्याभमीश्वरम् ॥ ईषद्धास्यं प्रसन्नास्यं ज्वलंतं ब्रह्मतेजसा ॥ ४६ ॥ तस्यैव जन्म
मात्रेण देवा मुमुदिरे तदा ॥ स्वर्गे दुंदुभयो नेदुरानका मुरजादयः ॥ ४७ ॥ जयशब्दं शंखशब्दं चक्रुर्देवा मुदान्विताः ॥ नंदो
हृष्टो ब्राह्मणेभ्यो धनं बहुविधं ददौ ॥ ४८ ॥ चिच्छेद नाडीं धात्री च स्नापयामास बालकम् ॥ जयशब्दं जगुर्गोप्यः सर्वाभ
रणभूषिताः ॥ ४९ ॥ परपुत्रोत्सवं नंदश्चकार परमादरात् ॥ तदा यशोदा गोपीभ्यो ब्राह्मणेभ्यो ददौ मुदा ॥ ५० ॥ धनानि
नानावस्तूनि तैलं सिंदूरमेव च ॥ इत्येवं कथितं वत्स यशोदानंदयोस्तपः ॥ ५१ ॥ जन्माख्यानं च हलिनो रोहिणीचरितं
तथा ॥ अधुना ते वांछनीयं नंदपुत्रोत्सवं शृणु ॥ ५२ ॥ सुखदं मोक्षदं सारं जन्ममृत्युजरापहम् ॥ मंगलं कृष्णचरितं वैष्ण
वानां च जीवनम् ॥ ५३ ॥ सर्वाशुभविनाशं च भक्तिदास्यप्रदं हरेः ॥ श्रीकृष्णं वसुदेवश्च संस्थाप्य नंदमंदिरे ॥ ५४ ॥ गृहीत्वा
बालिकां हृष्टो जगाम निजमंदिरम् ॥ कथितं चरितं तस्याः श्रुतं संमुखतो मुने ॥ ५५ ॥ अधुना गोकुले कृष्णचरितं शृणु
मंगलम् ॥ वसुदेवे गृहं याते यशोदा नंद एव च ॥ ५६ ॥ मंगले सूतिकागारे जयगारे जयान्विते ॥ ददर्श पुत्रं भूमिस्थं
नवीननीरदप्रभम् ॥ ५७ ॥ अतीव सुंदरं नग्नं पश्यंतं गृहशेखरम् ॥ शरत्पार्वणचंद्रास्यं नीलेंदीवरलोचनम् ॥५८॥ रुदंतं च हसंतं च
वेणुसंसक्तविग्रहम् ॥ हस्तद्वयं सुविन्यस्तं प्रेमवंतं पदांबुजम् ॥ ५९ ॥ दृष्ट्वा नंदः स्त्रिया सार्द्धं हरिं हृष्टो बभूव ह ॥ धात्री तं
स्नापयामास शीततोयेन बालकम् ॥ ६० ॥ चिच्छेद नाडीं बालस्य हर्षाद्गोप्यो जयं ददुः ॥ आजग्मुर्गोपिकाः सर्वा
बृहच्छ्रोण्यश्चलत्कुचाः ॥ ६१ ॥ बालिकाश्च वयस्याश्च विप्रपत्न्यश्च सूतिकाम् ॥ आशिषं युयुजुः सर्वा ददृशुर्बालकं मुदा ॥ ६२ ॥
क्रोडे चक्रुः प्रशंसंत्य ऊषुस्तत्र च काश्चन ॥ नंदः सचैलः स्नातश्च धृत्वा धौते च वाससी ॥ ६३ ॥ पारंपर्यविधिं तत्र चकार हृष्ट

मानसः ॥ ब्राह्मणान्भोजयामास कारयामास मंगलम् ॥ ६४ ॥ वाद्यानि वादयामास बंदिभ्यश्च ददौ धनम् ॥ ततो नंदश्च सानंदं ब्राह्मणेभ्यो ददौ धनम् ॥ ६५ ॥ सद्रत्नानि प्रवालानि हीरकाणि च सादरम् ॥ तिलानां पर्वतान्सप्त सुवर्णशतकं मुने ॥ ६६ ॥ रौप्यं धान्याचलं वस्त्रं गोसहस्रं मनोहरम् ॥ दधि दुग्धं शर्करां च नवनीतं घृतं मधु ॥ ६७ ॥ मिष्टान्नं सल्लड्डुकौघं स्वादूनि मोदकानि च ॥ भूमिं च सर्वसस्याढ्यां वायुवेगांस्तुरंगमान् ॥ ६८ ॥ तांबूलानि च तैलानि दत्त्वा हृष्टो बभूव ह ॥ रक्षितुं सूतिकागारं योजयामास ब्राह्मणान् ॥ ६९ ॥ तत्र मंत्रज्ञमनुजान्स्थ विरान्गोपिकागणान् ॥ वेदांश्च पाठयामास हरेर्नामैकमंगलम् ॥ ७० ॥ भक्त्या च ब्राह्मणद्वारा पूजयामास देवताः ॥ गोपालिकाश्च वृद्धाश्च रत्नालंकारभूषिताः ॥ ७१ ॥ सस्मिताः शीघ्रगामिन्य आजग्मुर्नंदमंदिरम् ॥ नानाविधाश्च गणका ज्योतिःशास्त्रविशारदाः ॥ ७२ ॥ वाक्सिद्धाः पुस्तककरा आजग्मुर्नंदमंदिरम् ॥ सस्मिता विप्रपत्न्यश्च वयस्याः स्थविरा वराः ॥ ७३ ॥ बालिका बालकयुता आजग्मुर्नंदमंदिरम् ॥ तेभ्योपि प्रददौ रत्नं धनानि विविधानि च ॥ ७४ ॥ वरवस्त्राणि रौप्याणि गोसहस्राणि सादरम् ॥ नंदस्तेभ्यो नमस्कृत्य चकार विनयं मुदा ॥ ७५ ॥ आशिषं युयुजुः सर्वे ददृशुर्बालकं परम् ॥ एवं संभृतसंभारो बभूव व्रजपुंगवः ॥७६॥ गणकैः कारयामास यद्भविष्यं शुभाशुभम् ॥ एवं ववर्ध बालश्च शुक्लपक्षे यथा शशी ॥ ७७ ॥ नंदालये हली चैव भुंक्ते मातुः पयोधरम् ॥ तदा च रोहिणी हृष्टा तत्र पुत्रोत्सवे मुदा ॥ ७८ ॥ तैलसिंदूरतांबूलं धनं ताभ्यो ददौ मुने ॥ दत्त्वाशिषश्च शिरसि ताश्च ते स्वालयं ययुः ॥ ७९ ॥ यशोदारोहिणीनंदास्तस्थुर्गेहे मुदान्विताः ॥ ८० ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे नंदपुत्रोत्सवोनाम नवमोऽध्यायः ॥ ९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ कंसः सभामध्ये स्वर्णसिंहासनस्थितः ॥ शुश्राव वाचं गगने सूनृतामशरीरिणीम् ॥ १ ॥ किं करोषि महामूढ चिंतां स्वश्रेयसः कुरु ॥ जातः कालो धरण्यां ते तिष्ठोपाये नराधिप ॥ २ ॥ नंदाय तनयं दत्त्वा वसुदेवस्तवांतकम् ॥ कन्यामादाय तुभ्यं च दत्त्वा संमायया स्थितः ॥३॥

मायांशा कन्यकेयं च वासुदेवः स्वयं हरिः ॥ तत्र हंता गोकुले च वर्द्धते नंदमंदिरे ॥ ४ ॥ देवक्याः सप्तमो गर्भो वर्द्धते नंदमं
दिरे ॥ देवक्याः सप्तमो गर्भो न सुस्रावामृतं सुतम् ॥ ५ ॥ स्थापयामास माया तं रोहिणीजठरे किल ॥ तत्र जातश्च शेषांशो बलदेवो
महाबलः ॥ ६ ॥ गोकुले तौ च वर्द्धेते कालौ ते नंदमंदिरे ॥ श्रुत्वेति वचनं राजा बभूवानम्रकंधरः ॥ ७ ॥ चिंतामवाप सहसा
तत्याजाहारमुन्मनाः ॥ पूतनां च समानीय प्राणेभ्यः प्रेयसीं सतीम् ॥८॥ उवाच भगिनीं राजा सभामध्ये च नीतिवित् ॥ ॥ कंस
उवाच ॥ ॥ पूतने गोकुलं गच्छ कार्यार्थं नंदमंदिरम् ॥ ९ ॥ विषाक्तं च स्तनं कृत्वा शिशवे देहि सत्वरम् ॥ त्वं मनोयायिनी वत्से
मायाशास्त्रविशारदा ॥ १० ॥ मायामानुषरूपं च विधाय व्रज योगिनि ॥ दुर्वाससो महामंत्रं प्राप्य सर्वत्रगामिनी ॥ ११ ॥ सर्वरूपं
विधातुं त्वं शक्तासि सुप्रतिष्ठिते ॥ इत्युक्त्वा तां महाराजस्तस्थौ संसदि नारद ॥ १२ ॥ जगाम पूतना कंसं प्रणम्य कामचारिणी ॥
तप्तकांचनवर्णाभा नानालंकारभूषिता ॥ १३ ॥ बिभ्रती कबरीभारं मालतीमाल्यसंयुतम् ॥ कस्तूरीबिंदुना युक्तं सिंदूरं दधती मुदा ॥
॥ १४ ॥ मंजीररशनाभ्यां च कलशब्दं प्रकुर्वती ॥ संप्राप्य गोष्ठं दुर्दर्शं नंदालयमनोहरम् ॥ १५ ॥ परिखाभिर्गभीराभिर्दुर्लंघ्याभि
श्च वेष्टितम् ॥ रचितं प्रस्तरैर्दिव्यैर्निर्मितं विश्वकर्मणा ॥ १६ ॥ इंद्रनीलैर्मरकतैः पद्मरागैश्च भूषितम् ॥ सुवर्णकलशैर्दिव्यैश्चित्रितैः
शेखरोज्ज्वलैः ॥ १७ ॥ प्राकारैर्गगनस्पर्शैश्चतुर्द्वारसमन्वितैः ॥ युक्तं लोहकपाटैश्च द्वारपालसमन्वितैः ॥ १८ ॥ वेष्टितं सुन्दरं रम्यं
सुन्दरीगणवेष्टितम् ॥ मुक्तामाणिक्यपरशैः[1] पूर्णरत्नादिभिर्धनैः ॥ १९ ॥ स्वर्णपात्रघटाकीर्णं गवां कोटिभिरन्वितम् ॥ भरणीयैः किं
करैश्च गोपलक्षैः समन्वितम् ॥ २० ॥ दासीनां च सहस्रैश्च कर्मण्यग्रैः समन्वितम् ॥ प्रविवेशाश्रमं साध्वी सस्मिता सुमनोहरा ॥
॥ २१ ॥ दृष्ट्वा तां प्रविशंतीं च गोप्यो दृष्ट्वानुमेनिरे[2] ॥ किं वा पद्मालया दुर्गा कृष्णं द्रष्टुं समागता ॥ २२ ॥ प्रणेमुर्गोपिका गोपाः
पप्रच्छुः कुशलं च ताम् ॥ ददौ सिंहासनं पाद्यं वासयामास तत्र वै ॥ २३ ॥ पप्रच्छ कुशलं सा च गोपानां बालकस्य च ॥ उवास

१ परसैः—इ० पा० । २ गोप्यस्ता बहुमेनिरे—इ० पा० ।

सस्मिता साध्वी पाद्यं जग्राह सादरम् ॥ २४ ॥ तामूचुर्गोपिकाः सर्वाः का त्वमीश्वरि सांप्रतम् ॥ वासस्ते कुत्र किं नाम किं वात्र कर्म नो वद ॥ २५ ॥ तासां च वचनं श्रुत्वा साप्युवाच मनोहरम् ॥ मथुरावासिनी गोपी सांप्रतं विप्रकामिनी ॥ २६ ॥ श्रुतं वाचिकवक्त्रेण तत्त्वं मंगलसूचकम् ॥ बभूव स्थविरे काले नंदपुत्रो महानिति ॥ २७ ॥ श्रुत्वागताहं तं द्रष्टुमाशिषं कर्तुमीप्सिताम् ॥ पुत्रमानय तं दृष्ट्वा यामि कृत्वा तमाशिषम् ॥ २८ ॥ ब्राह्मणीवचनं श्रुत्वा यशोदा हृष्टमानसा ॥ प्रणमय्य सुतं क्रोडे ददौ ब्राह्मणयोषितः ॥ २९ ॥ कृत्वा क्रोडे तु तं साध्वी चुचुंब च पुनःपुनः ॥ स्तनं ददौ सुखासीना हरिं पुण्यवती सती ॥ ॥ ३० ॥ अहोऽद्भुतोऽयं बालस्ते सुन्दरो गोपसुन्दरि ॥ गुणैर्नारायणसमो बालोयमित्युवाच ह ॥ ३१ ॥ कृष्णो विषस्तनं पीत्वा जहास वक्षसि स्थितः ॥ तस्याः प्राणैः सह पपौ विषक्षीरं सुधामिव ॥ ३२ ॥ तत्याज बालकं साध्वी प्राणांस्त्यक्त्वा पपात ह ॥ विकृताकारवदना चोत्तानवदना मुने ॥ ३३ ॥ स्थूलदेहं परित्यज्य सूक्ष्मदेहं विवेश सा ॥ आरुरोह रथं शीघ्रं रत्नसारविनिर्मितम् ॥ ३४ ॥ पार्षदप्रवरैर्दिव्यैर्वेष्टितं सुमनोहरैः ॥ श्वेतचामरलक्षेण शोभितं लक्षदर्पणैः ॥ ३५ ॥ वह्निशौचेन वस्त्रेण सूक्ष्मेण भूषितं वरम् ॥ नानाचित्रविचित्रैश्च सद्रत्नकलशैर्युतम् ॥ ३६ ॥ सुंदरं शतचक्रं च ज्वलितं रत्नतेजसा ॥ पार्षदास्तां रथे कृत्वा जग्मुर्गोलोकमुत्तमम् ॥ ३७ ॥ दृष्ट्वा तमद्भुतं लोका गोपिकाश्चातिविस्मिताः ॥ कंसः श्रुत्वा च तत्सर्वं विस्मितश्च बभूव ह ॥ ३८ ॥ यशोदा बालकं नीत्वा क्रोडे कृत्वा स्तनं ददौ ॥ मंगलं कारयामास विप्रद्वारा शिशोर्मुने ॥ ३९ ॥ ददाह देहं तस्याश्च नंदः सानंदपूर्वकम् ॥ चंदनागुरुकस्तूरीसमं संप्राप्य सौरभम् ॥ ४० ॥ ॥ नारद उवाच ॥ ॥ सा वा का राक्षसीरूपा कथं पुण्यवती सती ॥ केन पुण्येन तं दृष्ट्वा जगाम कृष्णमंदिरम् ॥ ४१ ॥ ॥ श्रीनारायण उवाच ॥ ॥ बलियज्ञे वामनस्य दृष्ट्वा रूपं मनोहरम् ॥ बलिकन्या रत्नमाला पुत्रस्नेहं चकार तम् ॥ ४२ ॥ मनसा मानसं चक्रे पुत्रस्य सदृशो मम ॥ पिबेद्यदि स्तनं कृष्णः ॥ ३० ॥

१ वेष्टितम्–इ० पा० । २ मुने–इ०पा० ।

करोमि तं च वक्षसि ॥ ४३ ॥ हरिस्तन्मानसं ज्ञात्वा पपौ जन्मांतरे स्तनम् ॥ ददौ मातृगतिं तस्यै कामपूरः कृपानिधिः ॥ ४४ ॥ दत्त्वा विषस्तनं कृष्णं पूतना राक्षसी मुने ॥ भक्त्या मातृगतिं प्राप कं भजाम विना हरिम् ॥ ४५ ॥ इत्येवं कथितं विप्र श्रीकृष्ण गुणकीर्तनम् ॥ पदेपदे सुमधुरं प्रवरं कथयामि ते ॥ ४६ ॥ इति श्रीब्र० म० श्रीकृ० ना० पूतनामोक्षोनाम दशमोऽध्यायः ॥ १० ॥ ॥ श्रीनारायण उवाच ॥ ॥ एकदा गोकुले साध्वी यशोदा नंदगेहिनी ॥ गृहकर्माणि संसक्ता कृत्वा बालं स्ववक्षसि ॥ १ ॥ वात्यारूपं तृणावर्तमागच्छंतं च गोकुलम् ॥ श्रीहरिर्मनसा ज्ञात्वा भारयुक्तो बभूव ह ॥ २ ॥ भाराक्रांता यशोदा च तत्याज बालकं तदा ॥ शयनं कारयित्वा च जगाम यमुनां मुने ॥ ३ ॥ एतस्मिन्नंतरे तत्र वात्यारूपधरोऽसुरः ॥ आदाय तं भ्रामयित्वा गत्वा च शतयोजनम् ॥ ४ ॥ बभंज वृक्षशाखाश्च ह्यंधीभूतं च गोकुलम् ॥ चकार सद्यो मायावी पुनस्तत्र पपात ह ॥ ५ ॥ असुरोपि हरिस्पर्शाज्जगाम हरिमंदिरम् ॥ सुंदरं रथमारुह्य कृत्वा कर्मक्षयं स्वकम् ॥ ६ ॥ पांड्यदेशोद्भवो राजा शापाद्दुर्वाससोऽसुरः ॥ श्रीकृष्णचरणस्पर्शाद्गोलोकं स जगाम ह ॥ ७ ॥ वात्यारूपे गते गोपा गोप्यश्च भयविह्वलाः ॥ न दृष्ट्वा बालकं तत्र शयानं शयने मुने ॥ ८ ॥ सर्वे निजघ्नुः स्वं वक्षःस्थलं शोकाकुला भयात् ॥ केचिन्मूर्च्छामवापुश्च रुरुदुश्चापि केचन ॥ ९ ॥ अन्वेषणं प्रकुर्वंतो ददृशुर्बालकं व्रजे ॥ धूलिधूसरसर्वांगं पुष्पोद्यानांतरस्थितम् ॥ १० ॥ बाह्यैकदेशे सरसस्तीरे नीरसमन्विते ॥ पश्यतं गगनं शश्वद्रुदंतं भयकातरम् ॥ ११ ॥ गृहीत्वा बालकं नंदः कृत्वा वक्षसि सत्वरम् ॥ दर्शंदर्शं मुखं तस्य रुरोद च शुचान्वितः ॥ १२ ॥ यशोदा रोहिणी शीघ्रं दृष्ट्वा बालं रुरोद च ॥ कृत्वा वक्षसि तद्वक्त्रं चुचुंब च मुहुर्मुहुः ॥ १३ ॥ मंगलं कारयामास स्नापयामास बालकम् ॥ स्तनं ददौ यशोदा च प्रसन्नवदनेक्षणा ॥ १४ ॥ ॥ नारद उवाच ॥ ॥ कथं शशाप दुर्वासाः पांड्यदेशोद्भवं नृपम् ॥ सुविचार्य वद ब्रह्मन्नितिहासं पुरातनम् ॥ १५ ॥ ॥ श्रीनारायण उवाच ॥ ॥ पांड्यदेशाधिपो राजा सहस्राक्षः प्रतापवान् ॥ स्त्रीसहस्रं समादाय कामबाणप्रपीडितः ॥ १६ ॥ मनोहरे निर्जने च पर्वते गंधमादने ॥ विजहार नदीतीरे पुष्पोद्याने

मनोरमे ॥ १७ ॥ नानाप्रकारशृंगारं विपरीतादिकं नृपः ॥ नखदंतक्षतांगं च कामिनीनां चकार सः ॥ १८ ॥ कृत्वा मूर्तिसहस्रं च योगींद्रो नृपतीश्वरः ॥ कृत्वा स्थलविहारं च जलक्रीडां चकार ह ॥ १९ ॥ नार्यो विवसनाः सर्वा नग्नाश्च नृपयोषितः ॥ विजह्रुश्च पुष्पभद्रानदीतीरे मनोहरे ॥ २० ॥ एतस्मिन्नंतरे तत्र समायातो महामुनिः ॥ शिष्यलक्षैः परिवृतो गच्छन्वै शंकरं प्रति ॥ २१ ॥ दृष्ट्वा मुनिं महामत्तो नोत्तस्थौ न ननाम ह ॥ वाचा हस्तेन राजा च संभाषां न चकार ह ॥ २२ ॥ दृष्ट्वा चुकोप नृपतिं शशाप स्फुरिताधरः ॥ असुरो भव पापिष्ठ योगाद्भ्रष्टो भुवं व्रज ॥ २३ ॥ भारते लक्षवर्षं च स्थातव्यं ते नराधम ॥ ततो हरिपदस्पर्शाद्गोलोकं यास्यसि ध्रुवम् ॥ २४ ॥ स्थानेस्थाने हे महिष्यो जनिं लभत भारते ॥ राजेंद्रगेहे राजेंद्राद्भविष्यथ मनोहराः ॥ २५ ॥ इत्युक्त्वा तु मुनींद्रस्तु जगाम शंकरालयम् ॥ हाहाशब्दं विचक्रुश्च शिष्यसंघाः कृपालवः[1] ॥ २६ ॥ गते मुनींद्रे राजेंद्रो रुरोद च सरित्तटे ॥ रुरुदू रमणीयाश्च रमण्यो विरहातुराः ॥ ॥ २७ ॥ हे नाथ रमणश्रेष्ठेत्युच्चार्य च पुनःपुनः ॥ त्वां विना वा क्क यास्यामो वयं त्वं वा क्क यास्यसि ॥ २८ ॥ वयं नो विहरिष्यामस्त्वया सार्द्धं सुनिर्जने ॥ न करिष्यसि राज्यं त्वं न यास्यामो गृहं वयम् ॥ २९ ॥ शरच्चंद्रप्रभामुष्टं न द्रक्ष्यामो मुखं तव ॥ प्रसारिताभ्यां बाहुभ्यां नानयिष्याम इत्यतः ॥ ३० ॥ इत्युक्त्वा रुरुदुः सर्वाः पुरस्कृत्य नराधिपम् ॥ मूर्च्छामवापुश्चरणं धृत्वा राज्ञः सरित्तटे ॥ ३१ ॥ राजाऽग्निकुंडमाधाय नारीभिः सह नारद ॥ स्मृत्वा हरिपदांभोजं ज्वलदग्निं विवेश ह ॥३२॥ हाहाकारं सुराः सर्वे विचक्रुर्गगने स्थिताः ॥ इत्यूचुर्मुनयश्चैवं दैवं च बलवत्तरम् ॥३३॥ स च राजा तृणावर्तो जगाम हरिमंदिरम् ॥ महिष्यो भारते वर्षे लेभिरे जन्म वाञ्छितम् ॥ ३४ ॥ इत्येवं कथितं सर्वं हरेर्माहात्म्यमुत्तमम् ॥ मोक्षणं नृपतेश्चैव मुनींद्रशापहेतुकम् ॥ ३५ ॥ इति श्रीब्र० म० श्रीकृष्णज० नारायणनारदसम्वादे तृणावर्तवधोनामैकादशोऽध्यायः ॥ ११ ॥ श्रीनारायण उवाच ॥ ॥ एकदा मंदिरे नन्दपत्नी सानंदपूर्वकम् ॥ कृत्वा वक्षसि गोविंदं क्षुधितं

[1] कृपालयाः—इ०पा० ।

च स्तनं ददौ ॥ १ ॥ एतस्मिन्नंतरे गोप्य आजग्मुर्नंदमंदिरम् ॥ स्थविराश्च वयस्याश्च बालिका बालकान्विताः ॥ २ ॥ अतृप्तं
बालकं शीघ्रं संन्यस्य शयने सती ॥ प्रणनाम समुत्थाय कर्मण्यौत्थानिके मुदा ॥ ३ ॥ तैलसिंदूरतांबूलं ददौ ताभ्यो मुदान्विता ॥
मिष्टवस्तूनि वस्त्राणि भूषणानि च गोपिका ॥ ४ ॥ एतस्मिन्नन्तरे कृष्णो रुरोद क्षुधितस्तदा ॥ प्रेरयित्वा स चरणं मायेशो मायया
विभुः ॥५॥ पपात चरणं तस्य प्रवीणे शकटे मुने ॥ विश्वंभरपदाघातात्तच्च चूर्णं बभूव ह ॥६॥ बभंज शकटं पेतुर्भग्नकाष्ठानि तत्र वै ॥
पपात दधिदुग्धं च नवनीतं घृतं मधु ॥७॥ दृष्ट्वाश्चर्यं गोपिकाश्च दुद्रुवुर्बालकं भयात् ॥ ददृशुर्भग्नशकटमिंधनाभ्यंतरे शिशुम् ॥८॥
भग्नभांडसमूहं च पतितं बहुगोरसम् ॥ प्रेरयित्वा तु काष्ठानि जग्राह बालकं भिया ॥ ९ ॥ मायारक्षितसर्वांगं रुदितं क्षुधितं क्षुधा ॥
स्तनं ददौ यशोदा तं रुरोद च भृशं शुचा ॥ १० ॥ पप्रच्छुर्बालकान्गोपा बभंज शकटं कथम् ॥ किंचिद्धेतुं न पश्यामः सहसेति
किमद्भुतम् ॥ ११ ॥ इत्यूचुर्बालकाः सर्वे गोपाः शृणुत मद्वचः ॥ श्रीकृष्णस्य पदाघाताद्बभंज शकटं ध्रुवम् ॥ १२ ॥ श्रुत्वा तद्वचनं
गोपा गोप्यश्च जहसुर्मुदा ॥ न हि जग्मुः प्रतीतिं च मिथ्येत्यूचुर्व्रजे प्रजाः ॥ १३ ॥ शिशोः स्वस्त्ययनं कार्यं चक्रुर्ब्राह्मणपुंगवाः ॥
हस्तं दत्त्वा शिशोर्गात्रेप पाठ कवचं द्विजः ॥ १४ ॥ वदामि तत्ते विप्रेन्द्र कवचं सर्वरक्षणम् ॥ यद्दत्तं मायया पूर्वं ब्राह्मणे नाभिपं
कजे ॥१५॥ निद्रिते जगतीनाथे जले च जलशायिनि ॥ भीताय स्तुतिकर्त्रे च मधुकैटभयोर्भयात् ॥ १६ ॥ ॥ योगनिद्रोवाच ॥
दूरीभूतं कुरु भयं भयं किं ते हरौ स्थिते ॥ स्थितायां मयि च ब्रह्मन्सुखी तिष्ठ जगत्पते ॥ १७ ॥ श्रीहरिः पातु ते वक्त्रं मस्तकं मधु
सूदनः ॥ श्रीकृष्णश्चक्षुषी पातु नासिकां राधिकापतिः ॥ १८ ॥ कर्णयुग्मं च कण्ठं च कपालं पातु माधवः ॥ कपोलं पातु
गोविन्दः केशांश्च केशवः स्वयम् ॥ १९ ॥ अधरोष्ठं हृषीकेशो दंतपंक्तिं गदाग्रजः ॥ रासेश्वरश्च रसनां तालुकं वामनो विभुः ॥२०॥

---

१ भोजनानि–इ० पा० । २ तु–इ०पा० । ३ रस–इ०पा० । ४ पप्रच्छ बालकान् गोपी–इ०पा० । ५ पश्यामि–इ०पा० । ६ तूर्णम्–इ०पा० । ७ सुखम्–इ०पा० ।

वक्षः पातु मुकुन्दश्च जठरं पातु दैत्यहा ॥ जनार्दनः पातु नाभिं पातु विष्णुश्च मेहनम् ॥ २१ ॥ नितंबयुग्मं गुह्यं च पातु ते पुरुषो
त्तमः ॥ जानुयुग्मं जानकीशः पातु ते सर्वदा विभुः ॥ २२ ॥ हस्तयुग्मं नृसिंहश्च पातु सर्वत्र संकटे ॥ पादयुग्मं वराहश्च पातु ते
कमलोद्भवः ॥ २३ ॥ ऊर्ध्वं नारायणः पातु ह्यधस्तात्कमलापतिः ॥ पूर्वस्यां पातु गोपालः पातु वह्नौ दशास्यहा ॥ २४ ॥ वन
माली पातु याम्यां वैकुंठः पातु नैर्ऋतौ ॥ वारुण्यां वासुदेवश्च सतो रक्षाकरः स्वयम् ॥ २५ ॥ पातु ते संततमजो वायव्यां विष्टर
श्रवाः ॥ उत्तरे च सदा पातु तेजसा जलजासनः ॥ २६ ॥ ऐशान्यामीश्वरः पातु पातु सर्वत्र शत्रुजित् ॥ जले स्थले चांतरिक्षे
निद्रायां पातु राघवः ॥ २७ ॥ इत्येवं कथितं ब्रह्मन्कवचं परमाद्भुतम् ॥ कृष्णेन कृपया दत्तं स्मृतेनैव पुरा मया ॥ २८ ॥ शुंभेन
सह संग्रामे निर्लक्ष्ये घोरदारुणे ॥ गगने स्थितया सद्यः प्राप्तिमात्रेण सो जितः ॥ २९ ॥ कवचस्य प्रभावेण धरण्यां पतितो मृतः ॥
पूर्वं वर्षशतं खे च कृत्वा युद्धं भयावहम् ॥ ३० ॥ मृते शुंभे च गोविन्दः कृपालुर्गगनस्थितः ॥ मालां च कवचं दत्त्वा गोलोकं स
जगाम ह ॥ ३१ ॥ कल्पांतरस्य वृत्तांतं कृपया कथितं मुने ॥ अभ्यंतरभयं नास्ति कवचस्य प्रभावतः ॥ ३२ ॥ कोटिशः कोटिशो
नष्टा मया दृष्टाश्च वेधसः ॥ अहं च हरिणा सार्द्धं कल्पेकल्पे स्थिरा सदा ॥ ३३ ॥ इत्युक्त्वा कवचं दत्त्वा सांतर्धानं चकार ह ॥
निःशंको नाभिकमले तस्थौ स कमलोद्भवः ॥ ३४ ॥ सुवर्णगुटिकायां च कृत्वेदं कवचं परम् ॥ कण्ठे वा दक्षिणे बाहौ बध्नीयाद्यः
सुधीः सदा ॥ ३५ ॥ विषाग्निजलशत्रुभ्यो भयं तस्य न जायते ॥ जले स्थले चांतरिक्षे निद्रायां रक्षतीश्वरः ॥ ३६ ॥ संग्रामे
वज्रपाते च विपत्तौ प्राणसंकटे ॥ कवचस्मरणादेव सद्यो निःशंकतां व्रजेत ॥ ३७ ॥ बद्ध्वेदं कवचं कण्ठे शंकरस्त्रिपुरं पुरा ॥
जघान लीलामात्रेण दुरंतमसुरेश्वरम् ॥ ३८ ॥ बद्ध्वेदं कवचं काली रक्तबीजं चखाद सा ॥ सहस्रशीर्षा धृत्वेदं विश्वं धत्ते
तिलं यथा ॥ ३९ ॥ आवां सनत्कुमारश्च धर्मसाक्षी च कर्मणाम् ॥ कवचस्य प्रभावेण सर्वत्र जयिनो वयम् ॥ ४० ॥ 

---

१ ते हनुम्-इ० पा० । २ माल्यम्-इ० पा० । ३ सर्प-इ० पा० । ४ प्रसादेन-इ० पा० ।

तस्य नन्दशिशोः कण्ठे चकार कवचं द्विजः ॥ आत्मनः कवचं कण्ठे दधार च स्वयं हरिः ॥ ४१ ॥ प्रभावः कथितः सर्वः कवचस्य हरेस्तथा ॥ अनन्तस्याच्युतस्यैव प्रभावमतुलं मुने ॥ ४२ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसम्वादे शकटभंजनयोगनिद्रोक्तकवचन्यासोनाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अपरं कृष्णमाहात्म्यं शृणु किंचिन्महामुने ॥ विघ्ननिघ्नं पापहरं महापुण्यकरं परम् ॥ १ ॥ एकदा नंदपत्नी च कृत्वा कृष्णं स्ववक्षसि ॥ स्वर्णसिंहासनस्था च क्षुधितं तं स्तनं ददौ ॥ २ ॥ एतस्मिन्नंतरे तत्र विप्रेंद्रैकः समागतः ॥ वृतः शिष्यसमूहैश्च प्रज्वलन्ब्रह्मतेजसा ॥ ३ ॥ प्रजपन्परमं ब्रह्म शुद्धस्फटिकमालया ॥ दंडी छत्री शुक्लवासा दंतपंक्तिविराजितः ॥ ४ ॥ ज्योतिर्ग्रंथो मूर्तिमांश्च वेदवेदांगपारगः ॥ परिबिभ्रज्जटाजालं तप्तकांचनसन्निभम् ॥ ५ ॥ शरत्पार्वणचंद्रास्यो गौरांगः पद्मलोचनः ॥ योगींद्रो धूर्जटेः शिष्यः शुद्धभक्तो गदाभृतः ॥ ६ ॥ व्याख्यामुद्राकरः श्रीमाञ्छिष्यानध्यापयन्मुदा ॥ वेद व्याख्यां कतिविधां प्रकुर्वन्निव लीलया ॥ ७ ॥ एकीभूय चतुर्वेदस्तेजसा मूर्तिमानिव ॥ साक्षात्सरस्वतीकंठः सिद्धांतैकविशारदः ॥ ८ ॥ ध्यानैकनिष्ठः श्रीकृष्णपादांभोजे दिवानिशम् ॥ जीवन्मुक्तो हि सिद्धेशः सर्वज्ञः सर्वदर्शनः ॥ ९ ॥ तं दृष्ट्वा सा समुत्तस्थौ यशोदा प्रणनाम च ॥ पाद्यं गां मधुपर्कं च स्वर्णसिंहासनं ददौ ॥ १० ॥ बालकं वंदयामास मुनींद्रं सस्मितं मुदा ॥ मुनिश्च मनसा चक्रे प्रणामशतकं हरिम् ॥ ११ ॥ आशिषं प्रददौ प्रीत्या वेदमंत्रोपयोगिकम् ॥ प्रणनाम च शिष्यांश्च ते तां युयुजुराशिषम् ॥१२॥ शिष्यान्पाद्यादिकं भक्त्या प्रददौ च पृथक्पृथक् ॥ सशिष्यांघ्री च प्रक्षाल्य समुवास सुखासने ॥१३॥ समुद्यता सा प्रष्टुं च पुटांजलियुता सती ॥ स्वक्रोडे बालकं कृत्वा भक्तिनम्रात्मकंधरा ॥ १४ ॥ स्वात्मारामं मंगलं च प्रष्टुं यद्यपि न क्षमा ॥ तथापि भवतो नाम शिवं पृच्छामि सांप्रतम् ॥ १५ ॥ अबलाबुद्धिहीनाया दोषं क्षंतुं सदार्हसि ॥ मूढस्य सततं दोषं क्षमां कुर्वंति साधवः ॥ १६ ॥ अंगिरा वाऽथ वाऽत्रिर्वा मरीचिर्गौतमोऽथ वा ॥ क्रतुः किं वा प्रचेता वा पुलस्त्यः पुलहोथ वा ॥१७॥ दुर्वासाः कर्दमस्त्वं

वा वशिष्ठो गर्ग एव वा ॥ जैगीषव्यो देवलो वा कपिलो वा स्वयं विभुः ॥ १८ ॥ सनत्कुमारः सनकः सनंदो वा सनातनः ॥ वोढुः
पंचशिखो वा त्वमासुरिः सौभरिः किमु ॥१९॥ विश्वामित्रोऽथ वाल्मीको वामदेवोऽथ कश्यपः ॥ संवर्तः किमुतथ्यो वा किं कचो वा
बृहस्पतिः ॥ २० ॥ भृगुः शुक्रश्च च्यवनो नरनारायणोऽथवा ॥ सक्थिनः पराशरो व्यासः शुकदेवोऽथ जैमिनिः ॥२१॥ मार्कण्डेयो
लोमशश्च कण्वः कात्यायनस्तथा ॥ आस्तीको वा जरत्कारुर्ऋष्यशृंगो विभांडकः ॥ २२ ॥ पौलस्त्यस्त्वमगस्त्यो वा शरद्वान्गिरि
रेव च ॥ शमीकोरिष्टनेमिश्च मांडव्यः पैल एव च ॥ २३ ॥ पाणिनिर्वा कणादो वा शाकल्यः शाकटायनः ॥ अष्टावक्रो भागु
रिर्वा सुमंतुर्वत्स एव वा ॥ २४ ॥ जाबालो याज्ञवल्क्यश्च वैशंपायन एव च ॥ यतिर्हंसी पिप्पलादो मैत्रेयः करुषस्तथा
॥ २५ ॥ उपमन्युर्गौरमुखोऽरुणिरौर्वोऽथ कक्षिवान् ॥ भरद्वाजो वेदशिराः शंकुकर्णोऽथ शौनकः ॥ २६ ॥ एतेषां पुण्यश्लो
कानां को भवान्वद मे प्रभो ॥ प्रत्युत्तरार्हा नाहं चेत्तथापि वक्तुमर्हसि ॥ २७ ॥ किंकरः किंकरी वापि समर्था प्रष्टुमीश्वरम् ॥
यो यस्य सेवानियतः स कं पृच्छति तं विना ॥ २८ ॥ धन्याहं कृतकृत्याहं सफलं जीवितं[1] मम ॥ त्वत्पादाब्जरजःस्पर्शा
ज्जन्मकोट्यंहसां क्षयः ॥ २९ ॥ त्वत्पादोदकसंस्पर्शात्सद्यः पूता वसुंधरा ॥ तवागमनमात्रेण तीर्थीभूतो ममाश्रमः ॥ ३० ॥
येये श्रुताः श्रुतौ ब्रह्मञ्छ्रुतिसारा महाजनाः ॥ तेषामेको मया दृष्टः पूर्वपुण्यफलोदयात् ॥ ३१ ॥ शिष्या वेदा मूर्तिमंतो ग्रीष्म
मध्याह्नभास्कराः ॥ गोकुलं मत्कुलं सद्यः पुनंति पादरेणुना ॥ ३२ ॥ आशिषं कर्तुमर्हति प्रसन्नमनसा शिशुम् ॥ पूर्णस्वस्त्य
यनं सद्यो विप्राशीर्वचनं ध्रुवम् ॥ ३३ ॥ इत्येवमुक्त्वा नंदस्त्री भक्त्या तस्थौ मुनेः पुरः ॥ नंरं प्रस्थापयामास नंदमानयितुं सती
॥ ३४ ॥ यशोदावचनं श्रुत्वा जहास मुनिपुंगवः ॥ जहसुः शिष्यसंघाश्च भासयंतो दिशो दश ॥ ३५ ॥ हितं तथ्यं नीति
युक्तं महत्पुण्यकरं परम् ॥ तामुवाच मुदा युक्तः शुद्धिबुद्धिर्महामुनिः ॥ ३६ ॥ ॥ श्रीगर्ग उवाच ॥ ॥ सुधामयं ते वचनं लौकिकं च ॥ ३३ ॥

१ जीवनम्–इ०पा० । २ सर्वम्–इ०पा० । ३ चरम्–इ०पा० । ४ प्रीतिकरम्–इ०पा० । ५ समयोचितम्–इ०पा० ।

कुलोचितम् ॥ यस्य यत्र कुले जन्म स एव तादृशो भवेत् ॥ ३७ ॥ सर्वेषां गोपपद्मानां गिरिभानुश्च भास्करः ॥ पत्नीपद्मासमा तस्य नाम्ना पद्मावती सती ॥३८॥ तस्याः कन्या यशोदा त्वं यशोवर्द्धनकारिणी ॥ बल्लवानां च प्रवरो लब्धो नंदश्चवल्लभः ॥३९॥ नंदो यस्त्वं च या भद्रे बालो यो येन वा गतः॥ जानामि निर्जने सर्वं वक्ष्यामि नंदसन्निधिम् ॥ ४० ॥ गर्गोहं यदुवंशानां चिरकालं पुरोहितः ॥ प्रस्थापितोऽहं वसुना नान्यसाध्ये च कर्मणि ॥ ४१ ॥ एतस्मिन्नंतरे नंदः श्रुतमात्रं जगाम ह ॥ ननाम दंडवद्भूमौ मूर्ध्ना तं मुनिपुंगवम् ॥ ४२ ॥ शिष्यान्ननाम मूर्ध्ना च ते तं युयुजुराशिषम् ॥ समुत्थायासनात्तूर्णं यशोदानंद एव च ॥ ४३ ॥ गृहीत्वाभ्यंतरं रम्यं जगाम विदुषां वरः ॥ गर्गो नंदो यशोदा च सपुत्रा सा मुदान्विता ॥ वाक्यं गर्गस्तदोवाच निगूढं निर्जने मुने ॥ ४४ ॥ श्रीगर्ग उवाच ॥ अयि नंद प्रवक्ष्यामि वचनं ते सुखावहम् ॥ प्रस्थापितोहं वसुना येन तच्छ्रूयतामिति ॥४५॥ वसुना सूतिकागारे शिशुः प्रत्यर्पणं कृतः ॥ पुत्रोऽयं वसुदेवस्य ज्येष्ठश्च तस्य च ध्रुवम् ॥ ४६ ॥ कन्या ते तेन या नीता मथुरां कंसभीरुणा ॥ अस्यान्नप्राशनायाहं नामानुकरणाय च॥ गूढेन प्रेषितस्तेन तस्योद्योगं कुरु द्विज ॥४७॥ पूर्णब्रह्मस्वरूपोयं शिशुस्ते मायया महीम् ॥ आगत्य भारहरणं कर्ता धात्रा च सेवितः ॥ गोलोकनाथो भगवाञ्छ्रीकृष्णो राधिकापतिः ॥ ४८ ॥ नारायणो यो वैकुंठे कमलाकांत एव च ॥ श्वेतद्वीपंनिवासी यः पिता विष्णुश्च सोप्यजः ॥ ४९ ॥ कपिलोन्ये तदंशाश्च नरनारायणावृषी ॥ सर्वेषां तेजसां राशिर्मूर्तिमानागतः किमु ॥ ५० ॥ तं वसुं दर्शयित्वा च शिशुरूपो बभूव ह ॥ सांप्रतं सूतिकागारादाजगाम तवालयम् ॥ ५१ ॥ अयोनिसंभवश्चायमाविर्भूतो महीतले ॥ वायुपूर्णं मातृगर्भं कृत्वा च मायया हरिः ॥ ५२ ॥ आविर्भूय वसुं मूर्तिं दर्शयित्वा जगामह ॥ युगेयुगे वर्णभेदो नामभेदोस्य बल्लव ॥ ५३ ॥ शुक्लः पीतस्तथा रक्त इदानीं कृष्णतां गतः ॥ शुक्लवर्णः सत्ययुगे सुतीव्रतेजसावृतः ॥ ५४ ॥ त्रेतायां रक्तवर्णोयं पीतोयं द्वापरे विभुः ॥ कृष्णवर्णः कलौ श्रीमांस्तेजसां राशिरेव च ॥ ५५ ॥ परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः ॥

१ बल्लानाम्–इ०पा० । २ शुभावहम्–इ० पा० । ३ पाता–इ० पा० । ४ सुतीव्रः–इ० पा० ।

ब्रह्मणो वाचकः कोयमृकारोऽनंतवाचकः ॥ ५६ ॥ शिवस्य वाचकः षश्च नकारो धर्मवाचकः ॥ अकारो विष्णुवचनः श्वेतद्वीपनिवासिनः ॥ ५७ ॥ नरनारायणार्थस्य विसर्गो वाचकः स्मृतः ॥ सर्वेषां तेजसां राशिः सर्वमूर्तिस्वरूपकः ॥ ५८ ॥ सर्वाधारः सर्वबीजस्तेन कृष्ण इति स्मृतः ॥ कर्मनिर्मूलवचनः कृषिर्नो दास्यवाचकः ॥ ५९ ॥ अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥ कृषिर्निश्चेष्टवचनो नकारो भक्तिवाचकः ॥ ६० ॥ अकारः प्राप्तिवचनस्तेन कृष्ण इति स्मृतः ॥ कृषिर्निर्वाणवचनो नकारो मोक्षवाचकः ॥ ॥ ६१ ॥ अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥ नाम्नां भगवतो नंद कोटीनां स्मरणेन यत् ॥ ६२ ॥ तत्फलं लभते नूनं कृष्णेति स्मरणे नरः ॥ यद्विधं स्मरणात्पुण्यं वचनाच्छ्रवणात्तथा ॥ ६३ ॥ कोटिजन्मांहसो नाशो भवेद्यत्स्मरणादिकात् ॥ विष्णोर्नाम्नां च सर्वेषां सारात्सारं परात्परम् ॥६४॥ कृष्णेति सुंदरं नाम मंगलं भक्तिदायकम् ॥ ककारोच्चारणाद्भक्तः कैवल्यं मृत्युजन्महम् ॥६५॥ ऋकाराद्दास्यमतुलं षकाराद्भक्तिमीप्सिताम् ॥ नकारात्सहवासं च तत्समं कालमेव च ॥६६॥ तत्सारूप्यं विसर्गाच्च लभते नात्र संशयः ॥ ककारोच्चारणादेव वेपंते यमकिंकराः ॥६७॥ ऋकारोक्तेर्न तिष्ठंति षकारात्पातकानि च ॥ नकारोच्चारणाद्रोगा अकारान्मृत्युरेव च ॥ ६८ ॥ ध्रुवं सर्वे पलायंते नामोच्चारणभीरवः ॥ स्मृत्युक्तिश्रवणोद्योगात्कृष्णनाम्नो व्रजेश्वर ॥ ६९ ॥ रथं गृहीत्वा धावंति गोलोकात्कृष्णकिंकराः ॥ पृथिव्या रजसः संख्यां कर्तुं शक्ता विपश्चितः ॥ ७० ॥ नाम्नः प्रभावसंख्यानं संतो वक्तुं न च क्षमाः ॥ पुरा शंकरवक्त्रेण नाम्नोऽस्य महिमा श्रुतः ॥ ७१ ॥ गुणान्नामप्रभावं च किंचिज्जानाति मद्गुरुः ॥ ब्रह्मानंतश्च धर्मश्च सुरर्षिमनुमानवाः ॥ ७२ ॥ वेदाः संतो न जानंति महिम्नः षोडशीं कलाम् ॥ इत्येवं कथितो नंद महिमा च सुतस्य च ॥ ७३ ॥ यथामति यथाज्ञानं गुरुवक्त्राद्यथा श्रुतम् ॥ कृष्णः पीतांबरः कंसध्वंसी च विष्टरश्रवाः ॥ ७४ ॥ देवकीनंदनः श्रीशो यशोदानंदनो हरिः ॥ सनातनोऽच्युतोऽनंतः सर्वेशः सर्वरूपधृक् ॥ ७५ ॥ सर्वाधारः सर्वगतिः सर्वकारणकारणम् ॥ राधाबंधू राधिकात्मा राधिकाजीवन

१ अकारः प्राप्तिवचनः–इ० पा० । २ मयाश्रुतम्–इ०पा० । ३ विष्णुः–इ० पा० ।

स्वयम् ॥ ७६ ॥ राधाप्राणो राधिकेशो राधिकारमणः स्वयम् ॥ राधिकासहचारी च राधामानसपूरणः ॥ ७७ ॥ राधाधनो राधि
कांगो राधिकासक्तमानसः ॥ राधिकाचित्तचोरश्च राधाप्राणाधिकः प्रभुः ॥ ७८ ॥ परिपूर्णतमं ब्रह्म गोविंदो गरुडध्वजः ॥ नामा
न्येतानि कृष्णस्य श्रुतानि मन्मुखाद्धदि ॥ ७९ ॥ जन्ममृत्युहराण्येव रक्ष नंद शुभेक्षण ॥ कृतं निरूपणं नाम्नां कनिष्ठस्य यथा
श्रुतम् ॥ ८० ॥ ज्येष्ठस्य हलिनो नाम्नः संकेतं शृणु मन्मुखात् ॥ गर्भसंकर्षणादेव नाम्ना संकर्षणः स्मृतः ॥ ८१ ॥ नास्त्यंतोऽस्यैव
वेदेषु तेनानंत इति स्मृतः ॥ बलदेवो बलोद्रेकाद्धली च हलधारणात् ॥८२॥ शितिवासा नीलवासान्मुसली मुसलायुधात् ॥ रेवंत्या
सह संभोगाद्रेवतीरमणः स्वयम् ॥ ८३ ॥ रोहिणीगर्भवासात्तु रौहिणेयो महामतिः ॥ इत्येवं ज्येष्ठपुत्रस्य श्रुतं नाम निवेदितम् ॥८४॥
यास्याम्यहं गृहं नंद सुखं तिष्ठ स्वमंदिरे ॥ ब्राह्मणस्य वचः श्रुत्वा नंदःस्तब्धो बभूव ह ॥ ८५ ॥ निश्चेष्टा नंदपत्नी च जहास बालकः
स्वयम् ॥ प्रणम्योवाच नंदस्तं वाक्यं विनयपूर्वकम् ॥८६॥ पुटांजलियुतो भूत्वा भक्तिनम्रात्मकंधरः ॥ ॥ नंद उवाच ॥ ॥ गतश्चेत्त्वं
तदा कर्म करिष्यत्येव को महान् ॥ ८७ ॥ स्वयं शुभेक्षणं कृत्वा कुरु नाम्नान्नप्राशनम् ॥ यन्नामौघश्च कथितो राधाप्राणादिको दश ॥
॥८८॥ तस्यापि का वां राधेति कन्यका कस्य च ध्रुवम् ॥ नंदस्य वचनं श्रुत्वा जहास मुनिपुंगवः ॥ निगूढं परमं तत्त्वं रहस्यं कथ
यामि ते ॥ ८९ ॥ ॥ श्रीगर्ग उवाच ॥ ॥ शृणु नंद प्रवक्ष्यामि इतिहासं पुरातनम् ॥ ९० ॥ पुरा गोलोकवृत्तांतं श्रुतं शंकरवक्त्रतः ॥
श्रीदाम्नो राधया सार्द्धं बभूव कलहो महान् ॥ ९१ ॥ श्रीदामशापाद्देवेन गोपी राधा च गोकुले ॥ वृषभानुसुता सा च माता
तस्याः कलावती ॥ ९२ ॥ कृष्णस्यार्द्धांगसंभूता नाथस्य सदृशी सती ॥ गोलोकवासिनी सेयमत्र कृष्णाज्ञयाधुना ॥ ९३ ॥
अयोनिसंभवा देवी मूलप्रकृतिरीश्वरी ॥ मातुर्गर्भं वायुपूर्णं कृत्वा च मायया सती ॥ ९४ ॥ वायुनिःसरणे काले धृत्वा च शिशु
विग्रहम् ॥ आविर्बभूव मायेयं पृथ्व्यां कृष्णोपदेशतः ॥ ९५ ॥ वर्धते सा व्रजे राधा शुक्ले चंद्रकला यथा ॥ श्रीकृष्णतेज

१ सांप्रतं व्रज–इ०पा० ।

 

काश्चिदारुह्य शिबिकां रथमारुह्य काश्चन ॥ राधा स्यंदनमारुह्य शातकौंभपरिच्छदम् ॥ १५८ ॥ ताभिर्युक्ता ययौ देवी रत्नालंकार
भूषिता ॥ यशोदा रोहिणी चैव रत्नालंकारभूषिता ॥ १५९ ॥ ययौ स्यंदनमारुह्य शातकौंभपरिच्छदम् ॥ नंदः सुनंदः श्रीदामा
गिरिभानुर्विभाकरः ॥ १६० ॥ वीरभानुश्चंद्रभानुर्गजस्थाः प्रययुर्मुदा ॥ श्रीकृष्णबलदेवौ तौ रत्नालंकारभूषितौ ॥ १६१ ॥ स्वर्ण
स्यंदनमास्थाय जग्मतुः परया मुदा ॥ कोटिशः कोटिशो गोपा वृद्धाश्च यौवनान्विताः ॥ १६२ ॥ अश्वस्थाश्च गजस्थाश्च रथ
स्थाश्चैव केचन ॥ गोपा ययुर्मुदायुक्ताश्चोद्धता नंदकिंकराः ॥ १६३ ॥ वृषस्था गर्दभस्थाश्च संगीततानतत्पराः ॥ अपरा राधिकादा
स्यस्त्रिसप्तशतकोटयः ॥ १६४ ॥ मुदान्विताः सस्मिताश्च स्वर्णालंकारभूषिताः ॥ काश्चिर्त्सिदूरहस्ताश्च काश्चित्कज्जलवाहिकाः ॥
॥ १६५ ॥ काश्चित्कंदुकहस्ताश्च काश्चित्पुत्तलिकाकराः ॥ भोगद्रव्यकराः काश्चित्क्रीडाद्रव्यकरा वराः ॥१६६॥ वेषद्रव्यकराः काश्चि
त्काश्चिन्मालाकरा वराः ॥ काश्चिद्वाद्यकहस्ताश्च प्रययुर्गोपिका मुदा ॥१६७॥ वह्निशुद्धांशुकानां च वाहिकाश्चैव काश्चन ॥ चंदनागु
रुकस्तूरीकुंकुमद्रववाहिकाः॥१६८॥काश्चित्संगीतनिरताः काश्चिच्चित्रकथारताः॥ कोटिशः कोटिशो रम्याः प्रययुः शिबिकान्विताः॥
॥ १६९ ॥ कोटिशः कोटिशश्चाश्वाः कोटिशः कोटिशो रथाः ॥ कोटिशः कोटिशश्चैव शकटा द्रव्यपूरिताः ॥१७०॥ कोटिशः कोटि
शश्चैव वृषेंद्रा द्रव्यवाहकाः ॥ कोटिशः कोटिशश्चैव दशलक्षाणि हस्तिनाम् ॥ १७१ ॥ हस्तिपांकुशयुक्तानि ययुर्वृंदावनं वनम् ॥ सर्वे
वृंदावनं गत्वा दृष्ट्वा शून्यगृहं मुने ॥१७२॥ वृक्षमूले यथास्थानं तस्थुः सर्वे यथोचितम् ॥ उवाच गोपाञ्छ्रीकृष्णो गृहांश्चेष्टतमान्व्र
जाः ॥ १७३ ॥ अद्य संतिष्ठतेत्येवं श्रुत्वा श्रीकृष्णभाषितम् ॥ कुत्र संति गृहाः कृष्णेत्येवमूचुस्तु गोपकाः॥ इति तेषां वचः श्रुत्वा
श्रीकृष्णो वाक्यमब्रवीत् ॥१७४॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अत्र स्थाने गृहाः संति प्रसन्ना देवनिर्मिताः ॥ १७५ ॥ देवप्रीतिं विना
शक्ता न हि द्रष्टुं च केचन ॥ अद्य तिष्ठत गोपालाः संपूज्य वनदेवताः ॥ १७६ ॥ प्रातर्यूयं गृहान्रम्यान्द्रक्ष्यथाद्य ध्रुवं मुदा ॥ ॥ ४८ ॥
धूपदीपादिनैवेद्यैर्बलिभिः पुष्पचंदनैः ॥ १७७ ॥ देवीं च वटमूलस्थां पूजां कुरुत चंडिकाम् ॥ कृष्णस्य वचनं श्रुत्वा गोपाः संपूज्य

देवताम् ॥ भुक्त्वा भोगान्दिने रात्रौ तत्रैव सुषुपुर्मुदा ॥१७८॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे बकप्रलंबकेशिवधपूर्वकवृंदावनगमनंनाम षोडशोऽध्यायः ॥ १६ ॥ ॥ श्रीनारायण उवाच ॥ सुप्तेषु व्रजनंदेषु नक्तं वृन्दावने वने ॥ सुनिद्रिते च निद्रेशे मातृवक्षःस्थलस्थिते ॥ १ ॥ निद्रितासु च गोपीषु रम्यतल्पस्थितासु च ॥ यूनां च सुखसंयोगानुषक्तमानसासु च ॥ २ ॥ कासुचिच्छिशुयुक्तासु सखीयुक्तासु कासुचित् ॥ कासुचिच्छकटस्थासु स्यंदनस्थासु कासुचित ॥ ३ ॥ पूर्णेंदुकौमुदीयुक्ते स्वर्गादपि मनोहरे ॥ नानाप्रकारकुसुमवायुना सुरभीकृते ॥ ४ ॥ सर्वप्राणिनि निश्चेष्टे मुहूर्ते पंचमे गते ॥ तत्राजगाम भगवाञ्छिल्पिनां च गुरोर्गुरुः ॥ ५ ॥ बिभ्रद्दिव्यांशुकं सूक्ष्मं रत्नमाल्यं मनोहरम् ॥ रत्नालंकारमतुलं श्रीमन्मकरकुंडलम् ॥ ६ ॥ ज्ञानेन वयसा वृद्धो दर्शनीयः किशोरवत् ॥ अतीव सुंदरः श्रीमान्कामदेवसमप्रभः ॥ ७ ॥ विशिष्टशिल्पनिपुणैः सार्द्धं शिल्पित्रिकोटिभिः ॥ मणिरत्नैर्हेमरत्नैर्लोहास्त्रयुतहस्तकैः ॥ ८ ॥ आजग्मुर्यक्षनिकराः कुबेरवनकिंकराः ॥ स्फाटिकारत्नवेषाश्च दीर्घस्कंधाश्च केचन ॥ ९ ॥ पद्मरागकराः केचिदिंद्रनीलकरा वराः ॥ केचित्स्यमंतककराश्चंद्रकांतकरास्तथा ॥ १० ॥ सूर्यकांतकराश्चान्ये प्रभाकरकरा वराः ॥ केचित्परशुहस्ताश्च लोहसारकरा वराः ॥ ११ ॥ केचिच्च गंधसाराणां मणींद्राणां च वाहकाः ॥ केचिच्चामरहस्ताश्च केचिद्दर्पणवाहकाः ॥ १२ ॥ स्वर्णपात्रघटादीनां वाहकाश्चैव केचन ॥ विश्वकर्मा च सामग्रीं दृष्ट्वा तु सुमनोहराम् ॥ १३ ॥ नगरं कर्तुमारेभे ध्यात्वा कृष्णं शुभेक्षणम् ॥ पंचयोजनविस्तीर्णं भारते श्रेष्ठमुत्तमम् ॥ १४ ॥ पुण्यक्षेत्रं तीर्थसारमतिप्रियतमं हरेः ॥ तत्रस्थानां मुमुक्षूणां परं निर्वाणकारणम् ॥ १५ ॥ गोलोकस्य च सोपानं सर्वेषां वांछितप्रदम् ॥ चतुष्कोटिचतुःशालं तत्रैवातिमनोहरम् ॥ १६ ॥ कपाटस्तंभसोपानसहितैः प्रस्तरैर्वरैः ॥. चित्रपुत्तलिकापुष्पकलशोज्ज्वलशेखरम् ॥ १७ ॥ शैलजाश्मविनिर्माणवेदिप्रांगणसंयुतम् ॥ शिलाप्राकारसंयुक्तं प्रचकाराथ लीलया ॥ १८॥ यथोचितबृहत्क्षुद्रद्वारद्वयसमन्वितम् ॥ स्फाटिकाकारमणिभिर्मुदा युक्तो विनिर्ममे ॥ १९ ॥ सोपानैर्गंधसाराणां स्तंभैः शंकुवि

निर्मितैः ॥ कपाटैर्लोहसाराणां राजतैः कलशोज्ज्वलैः ॥ २० ॥ वज्रसारविनिर्माणप्राकारैः परिशोभितम् ॥ कृत्वाऽऽश्रमं बहु
वानां यथास्थानं यथोचितम् ॥ वृषभान्वालयं रम्यं कर्तुमारब्धवान्पुनः ॥ २१ ॥ प्राकारपरिखायुक्तं चतुर्द्वारान्वितं परम् ॥
चारुविंशच्चतुःशालं महामणिविनिर्मितम् ॥ २२ ॥ रत्नसारविकारैश्च तूलिकानिकरैर्वरैः ॥ सुवर्णाकारमणिभिरारोहैरतिसुंदरैः
॥ २३ ॥ लोहसारकपाटैश्च शोभितं चित्रकृत्रिमैः ॥ मंदिरेमंदिरे रम्ये सुवर्णकलशोज्ज्वलम् ॥ २४ ॥ तदाश्रमैकदेशे च निजे
नेतिमनोहरे ॥ चारुचंपकवृक्षाणामुद्यानाभ्यंतरे मुने ॥ २५ ॥ संभोगार्थं कलावत्याः स्वामिना सह कौतुकात् ॥ विशिष्टेन
मणींद्रेण चकाराट्टालिकालयम् ॥ २६ ॥ युक्तं नवभिरारोहैरिंद्रनीलविनिर्मितैः ॥ स्थूणाकपाटनिकरैर्गंधसारविकारजैः ॥ अत्यु
च्छ्रितं मनोरम्यं सर्वतोपि विलक्षणम् ॥ २७ ॥ ॥ नारद उवाच ॥ ॥ कलावती का भगवन्कस्य पत्नी मनोहरा ॥ यत्नतो
यद्गृहं रम्यं निर्ममे सुरकारुणा ॥ २८ ॥ नरायण उवाच ॥ ॥ पितॄणां मानसी कन्या कमलांशा कलावती ॥ सुंदरी
वृषभानस्य पतिव्रतपरायणा ॥ यस्याश्च तनया राधा कृष्णप्राणाधिका प्रिया ॥ २९ ॥ श्रीकृष्णार्द्धांशसंभूता तेन तुल्या च
तेजसा ॥ यस्याश्च चरणांभोजरजःपूता वसुंधरा ॥ यस्यां च सुदृढां भक्तिं संतो वांछंति संततम् ॥ ३० ॥ ॥ नारद उवाच ॥ ॥
पितॄणां मानसीं कन्यां व्रजे तिष्ठन्कथं मुने ॥ ३१ ॥ मानवः केन पुण्येन कथमाप सुदुर्लभाम् ॥ वृषभानुर्व्रजपतिः पुरासीत्को
महानहो ॥ कस्य वा केन तपसा राधा कन्या बभूव ह ॥ ३२ ॥ ॥ सूत उवाच ॥ ॥ नारदस्य वचः श्रुत्वा महर्षिर्ज्ञानिनां
वरः ॥ प्रहस्योवाच प्रीत्या तमितिहासं पुरातनम् ॥ ३३ ॥ ॥ नारायण उवाच ॥ ॥ बभूवुः कन्यकास्तिस्रः पितॄणां
मानसात्पुरा ॥ ३४ ॥ कलावतीरत्नमालामेनकाश्चातिदुर्लभाः ॥ रत्नमाला च जनकं वरयामास कामुकी ॥ ३५ ॥ शैलाधिपं हरेरंशं
मेनका सा हिमालयम् ॥ दुहिता रत्नमालाया अयोनिसंभवा सती ॥ ३६ ॥ श्रीरामपत्नी श्रीः साक्षात्सीता सत्यपरायणा ॥ कन्य

१ वृषभानोर्गृहम्–इ०पा० ।

का मेनकायाश्च पार्वती सा पुरा सती ॥ ३७ ॥ अयोनिसंभवा सा च हरेर्माया सनातनी ॥ सा लेभे तपसा देवं हरं नारायणात्म
कम् ॥ ३८ ॥ कलावती सुचंद्रं च मनुवंशसमुद्भवम् ॥ स च राजा हरेरंशस्तां संप्राप्य कलावतीम् ॥३९॥ मन्ये गुणवतां श्रेष्ठमात्मा
नमतिसुंदरम् ॥ अहो रूपमहो वेषमहो अस्या नवं वयः ॥ ४० ॥ सुकोमलांगं ललितं शरच्चंद्राधिकाननम् ॥ गमनं दुर्लभमहो
गजखंजनगंजनम् ॥ ४१ ॥ कटाक्षैर्मोहितुं शक्ता मुनींद्राणां च मानसम् ॥ श्रोणीयुग्मं सुललितं रंभास्तंभविनिर्मितम् ॥ ४२ ॥
स्तनद्वयं सुकठिनमतिपीनोन्नतं मुने ॥ नितंबयुगलं चारु रथचक्रविनिर्मितम् ॥ ४३ ॥ हस्तौ पादौ च रक्तौ च पक्वबिंबफलाधरम् ॥
पक्वदाडिमबीजाभं दंतपंक्तिमनोहरम् ॥ ४४ ॥ शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम् ॥ भूषणैर्भूषितं रूपं कृतं सद्रत्नभूषणम् ॥
॥ ४५ ॥ इतीव मत्वा दृष्ट्वा च कामबाणप्रपीडितः ॥ दिव्यं स्यंदनमारुह्य कामुक्या सह कामुकः ॥ ४६ ॥ क्रीडां चकार रहसि स्था
नेस्थाने मनोहरे ॥ रम्यायां मलयद्रोण्यां चंदनागुरुवायुना ॥ ४७ ॥ चारुचंपकपुष्पाणां तल्पे रतिसुखावहे ॥ मालतीमल्लिकानां च
पुष्पोद्यानेतिपुष्पिते ॥ ४८ ॥ पुष्पभद्रानदीतीरे निर्जने केतकीवने ॥ पश्चिमाब्धितटांतस्थकानने जंतुवर्जिते ॥ ४९ ॥ नंदने मंदर
द्रोण्यां कावेरीतीरजे वने ॥ शैलेशैले सुरम्ये च नद्यांनद्यां नदेनदे ॥ ५० ॥ द्वीपेद्वीपे तु रहसि स रेमे वामया सह ॥ नवसंगमसं
योगाद्बुबुधे न दिवानिशम् ॥ ५१ ॥ एवं वर्षसहस्रं तद्गतमेव मुहूर्तवत् ॥ कृत्वा विहारं सुचिरं स विरक्तो बभूव ह ॥ ५२ ॥ जगाम
तपसे विंध्यशैलं तीर्थं तया सह ॥ भारतेतिप्रशस्यं च पुलहाश्रममुत्तमम् ॥ ५३ ॥ तपस्तेपे नृपस्तत्र दिव्यवर्षसहस्रकम् ॥ मोक्षा
कांक्षी निःस्पृहश्च निराहारः कृशोदरः ॥ ५४ ॥ मूर्छामाप मुनिश्रेष्ठ ध्यात्वा कृष्णपदांबुजम् ॥ तद्गात्रव्याप्तवल्मीकं साध्वी दूरं चकार
सा ॥ ५५ ॥ निश्चेष्टितं पतिं दृष्ट्वा त्यक्तं प्राणैश्च पंचभिः ॥ मांसशोणितरिक्तं तमस्थिसंसक्तविग्रहम् ॥ ५६ ॥ उच्चै रुरोद शोकार्ता
निर्जने तु कलावती ॥ हे नाथनाथेत्युच्चार्य कृत्वा वक्षसि मूर्च्छितम् ॥ ५७ ॥ विललाप महादीना पतिव्रतपरायणा ॥ दृष्ट्वा नृपं
निराहारं कृशं धमनिसंयुतम् ॥५८॥ श्रुत्वा च रोदनं तस्याः कृपया च कृपानिधिः ॥ आविर्बभूव जगतां विधाता कमलोद्भवः ॥५९॥

क्रोडे कृत्वा च तं तूर्णं रुरोद भगवान्विभुः ॥ ब्रह्मा कमंडलुजलेनासिच्य नृपविग्रहम् ॥ ६० ॥ जीवं संचारयामास ब्रह्मज्ञाने न ब्रह्मवित् ॥ नृपेंद्रश्चेतनां प्राप्य पुरो दृष्ट्वा प्रजापतिम् ॥ ६१ ॥ प्रणनाम च तं दृष्ट्वा तं च कामसमप्रभम् ॥ तमुवाचेति संतुष्टो वरं वृणु यथेप्सितम् ॥ ६२ ॥ स विधेर्वचनं श्रुत्वा वव्रे निर्वाणमीप्सितम् ॥ दयानिधे त्वं दयया वरं दातुं समुद्यतः ॥ ६३ ॥ प्रसन्नवदनः श्रीमान्स्मेराननसरोरुहः ॥ कृत्वानुमानं मनसि शुष्ककंठोष्ठतालुका ॥ ६४ ॥ तमुवाच सती त्रस्ता वरं दातुं समुद्यतम् ॥ ॥ कमलावत्युवाच ॥ ॥ यदि मुक्तिं नृपेंद्राय ददासि कमलोद्भव ॥ ६५ ॥ अतोबलाया हे ब्रह्मन्का गतिर्भविता वद ॥ विना कांतं च कांतानां का शोभा चतुरानन ॥ ६६ ॥ व्रतं पतिव्रतायाश्च पतिरेव श्रुतौ श्रुतम् ॥ गुरुश्चाभीष्टदेवश्च तपोधर्ममयः पतिः ॥ ६७ ॥ सर्वेषां च प्रियतरो न बंधुः स्वामिनः परः ॥ सर्वधर्मात्परा ब्रह्मन्पतिसेवा सुदुर्लभा ॥ ६८ ॥ स्वामिसेवाविहीनायाः सर्वं तन्निष्फलं भवेत ॥ व्रतं दानं तपः पूजा जपहोमादिकं च यत् ॥ ६९ ॥ स्नानं च सर्वतीर्थेषु पृथिव्याश्च प्रदक्षिणम् ॥ दीक्षा च सर्वयज्ञेषु महादानानि यानि च ॥ ७० ॥ पठनं सर्ववेदानां सर्वाणि च तपांसि च ॥ वेदज्ञानां ब्राह्मणानां भोजनं देवसेवनम् ॥ ७१ ॥ एतानि स्वामिसेवायाः कलां नार्हंति षोडशीम् ॥ स्वामिसेवाविहीना या वदंति स्वामिने कटुम् ॥ ७२ ॥ पतंति कालसूत्रे च यावच्चंद्रदिवाकरौ ॥ सर्पप्रमाणाः कृमयो दंशंति च दिवानिशम् ॥ ७३ ॥ संततं विपरीतं च कुर्वंति शब्दमुल्बणम् ॥ मूत्रश्लेष्मपुरीषाणां कुर्वंति भक्षणं मुदा ॥ ७४ ॥ मुखे तासां ददत्येवमुल्कां च यमकिंकराः ॥ भुक्त्वा भोगं च नरके कृमियोनिं प्रयांति ताः ॥ ७५ ॥ भक्षंति जन्मशतकं रक्तमांसपुरीषकम् ॥ श्रुत्वाहं विदुषां वक्त्राद्वेदवाक्येषु निश्चितम् ॥ ७६ ॥ जानामि किंचिदबला त्वं वेदजनको विभुः ॥ गुरोर्गुरुश्च विदुषां योगिनां ज्ञानिनां तथा ॥ ७७ ॥ सर्वज्ञमेवंभूतं त्वां बोधयामि किमच्युत ॥ प्राणाधिकोयं कांतोयं यदि मुक्तो बभूव ह ॥ ॥ ७८ ॥ मम को रक्षिता ब्रह्मन्धर्मस्य यौवनस्य च ॥ कौमारे रक्षिता तातो दत्त्वा पात्राय सत्कृती ॥ ७९ ॥ सर्वदा रक्षिता कांतस्तदभावे च तत्सुतः ॥ त्रिष्ववस्थासु नारीणां त्रातारश्च त्रयः स्मृताः ॥ ८० ॥ याः स्वतंत्राश्च ता नष्टाः सर्वधर्मबहिष्कृताः ॥ असत्कु

लप्रसूतास्ताः कुलटा दुष्टमानसाः ॥ ८१ ॥ शतजन्मकृतं पुण्यं तासां नश्यति पद्मज ॥ पुत्रस्नेहो यथा बाल्ये तथा यूनि च वार्द्ध
के ॥ ८२ ॥ पतिव्रतानां कांते च सर्वकाले समा स्पृहा ॥ सुते स्तनंधये स्नेहो मातॄणां चातिशोभिते ॥ ८३ ॥ पतिस्नेहस्य साध्वी
नां कलां नार्हति षोडशीम् ॥ स्तनांधे स्तनदानांतमिष्टान्ने भोजनावधि ॥ ८४ ॥ कांते चित्तं सतीनां च स्वप्ने ज्ञाने च संततम् ॥
दुःखांतो बंधुविच्छेदः पुत्राणां च ततोधिकः ॥ ८५ ॥ सुदारुणः स्वामिनश्च दुःखं नातः परं स्त्रियाः ॥ अविदग्धा यथा दग्धा ज्वलदग्नौ
विषादने ॥ ८६ ॥ तथा विदग्धा दग्धा स्याद्विदग्धविरहानले ॥ नान्ने तृष्णा जले तृष्णा साध्वीनां स्वामिनं विना ॥ ८७ ॥
विरहाग्नौ मनो दग्धं वह्नौ शुष्कतृणं यथा ॥ न हि कांतात्परो बन्धुर्न हि कांतात्परः प्रियः ॥८८॥ न हि कांतात्परो देवो नहि कान्ता
त्परो गुरुः ॥ न हि कांतात्परो धर्मो न हि कांतात्परं धनम् ॥ ८९ ॥ न हि कांतात्पराः प्राणा न हि कांतात्परः स्त्रियाः ॥ निमग्नं
कृष्णपादाब्जे वैष्णवानां यथा मनः ॥ ९० ॥ यथैकपुत्रे मातुश्च यथा स्त्रीषु च कामिनाम् ॥ धनेषु कृपणानां च चिरकालार्जि
तेषु च ॥ ९१ ॥ यथा भयेषु भीतानां शास्त्रेषु विदुषां यथा ॥ स्तनादाने शिशूनां च शिल्पेषु शिल्पिनां यथा ॥ ९२ ॥ यथा
जारे पुंश्चलीनां साध्वीनां च तथा प्रिये ॥ तं विना जीवितुं ब्रह्मन्क्षणमेकं न च क्षमम् ॥ ९३ ॥ मरणं जीवनं तासां जीवनं मरणा
धिकम् ॥ सद्भर्तृरहितानां च शोकेन हतचेतसाम् ॥ अन्यशोकनिमग्नानां कालेन पानभोजनात् ॥ ९४ ॥ विपरीतः कांतशोको
वर्द्धते भक्षणादहो ॥ कर्म च्छाया सतीनां च संगिनीनां सती वरा (?) ॥ ९५ ॥ इतरे भोगदेहांते साध्वी जन्मनिजन्मनि ॥ करोषि
चेज्जगद्धातरिमं मुक्तं मया विना ॥ ९६ ॥ त्वां शस्वाहं त्वयि विभो पश्य दास्यामि स्त्रीवधम् ॥ श्रुत्वा कलावतीवाक्यमुवाच विस्मि
तो विधिः ॥ हितं पीयूषसदृशं भयसंविग्नमानसः ॥ ९७ ॥ ॥ ब्रह्मोवाच ॥ ॥ वत्से मुक्तिं न दास्यामि स्वामिनं च त्वया विना ॥
॥ ९८ ॥ मुक्तं कर्तुं त्वया सार्द्धं सांप्रतं नाहमीश्वरः ॥ मातर्मुक्तिर्विना भोगाद्दुर्लभा सर्वसंमता ॥ ९९ ॥ निर्वाणतां समाप्नोति भोगी
भोगविकृंतने ॥ कतिवर्षं स्वर्गभोगं कुरुष्व स्वामिना सह ॥ १०० ॥ ततस्तु युवयोर्जन्म भविता भारते सति ॥ यदा भविष्यति

सती कन्या ते राधिका स्वयम् ॥ १०१ ॥ जीवन्मुक्तौ तया सार्द्धं गोलोकं च गमिष्यथः ॥ कतिकालं नृपश्रेष्ठ भुंक्ष्व भोगं स्त्रिया
सह ॥ १०२ ॥ साध्वी वै सत्त्वयुक्ता च मा मां शप्तुं त्वमर्हसि ॥ जीवन्मुक्ताः समाः सन्तः कृष्णपादाब्जमानसाः ॥ १०३ ॥
वांछंति हरिदास्यं च दुर्लभं न च निर्वृतिम् ॥ इत्युक्त्वा तौ वरौ दत्त्वा सन्तस्थौ पुरतस्तयोः ॥ १०४ ॥ ययतुस्तौ तं प्रणम्य जगा
म स्वालयं विधिः ॥ आजग्मतुस्तौ कालेन भुक्त्वा भोगं च भारतम् ॥ १०५ ॥ परं पुण्यप्रदं दिव्यं ब्रह्मादीनां च वांछितम् ॥
सुचंद्रो वृषभानुश्च ललाभ जन्म गोकुले ॥ १०६ ॥ पद्मावत्याश्च जठरे सुरभानस्य रेतसा ॥ जातिस्मरो हरेरंशः शुक्लपक्षे यथा
शशी ॥ १०७ ॥ ववर्द्धानुदिनं तत्र व्रजगेहे व्रजाधिपः ॥ सर्वज्ञश्च महायोगी हरिपादाब्जमानसः ॥ १०८ ॥ नन्दबन्धुर्वदान्यश्च
रूपवान्गुणवान्सुधीः ॥ कलावती कान्यकुब्जे बभूवायोनिसंभवा ॥ १०९ ॥ जतिस्मरा महासाध्वी सुन्दरी कमलाकला ॥ कान्य
कुब्जे नृपश्रेष्ठो भनंदन उरुक्रमः ॥ ११० ॥ स तां संप्राप्य यागांते यज्ञकुंडसमुत्थिताम् ॥ नग्नां हसन्तीं रूपाढ्यां स्तनांधामिव
बालिकाम् ॥ १११ ॥ तेजसा प्रज्वलन्तीं च प्रतप्तकनकप्रभाम् ॥ कृत्वा वक्षसि राजेंद्रः स्वकांतायै ददौ मुदा ॥ ११२ ॥ माला
वती स्तनं दत्त्वा तां पुपोष प्रहर्षिता ॥ तदन्नप्राशनदिने सतां मध्ये शुभे क्षणे ॥ ११३ ॥ नामरक्षणकाले च वाग्बभूवाशरीरिणी ॥
कलावतीति कन्याया नाम रक्ष नृपेति च ॥ ११४ ॥ इत्येवं वचनं श्रुत्वा तच्चकार महीपतिः ॥ विप्रेभ्यो भिक्षुकेभ्यश्च बंदिभ्यश्च
धनं ददौ ॥ ११५ ॥ सर्वेभ्यो भोजयामास चकार सुमहोत्सवम् ॥ कालेन सा रूपवती यौवनस्था बभूव ह ॥ ११६ ॥ अतीव सुन्दर
श्यामा मुनिमानसमोहिनी ॥ चारुचंपकवर्णाभा शरच्चंद्रनिभानना ॥ ११७ ॥ ईषद्धास्यप्रसन्नास्या प्रफुल्लपद्मलोचना ॥ नितंब
श्रोणिभरार्ता स्तनभारनता सती ॥ ११८ ॥ गच्छंती राजमार्गेण गजेंद्रमंदगामिनी ॥ ददर्श नन्दः पथि तां गच्छंतीं च मुदा
न्वितः ॥ ११९ ॥ जितेंद्रियश्च ज्ञानी च मूर्च्छामाप तथापि च ॥ त्रस्तो लोकान्पथि गतांस्तूर्णं पप्रच्छ सादरम् ॥ १२० ॥ गच्छन्ती ॥ ५१ ॥
कस्य कन्येयमिति होवाच तं जनः ॥ भनंदनस्य नृपतेः कन्या नाम्ना कलावती ॥ १२१ ॥ कमलाकलया धन्या संभूता नृपमं

दिरे ॥ कौतुकेन च गच्छंती क्रीडार्थं सखिमंदिरम् ॥ १२२ ॥ व्रजं व्रज व्रजश्रेष्ठेत्युक्त्वा लोको जगाम ह ॥ प्रहृष्टमानसो नन्दो जगाम राजमंदिरम् ॥ १२३ ॥ अवरुह्य रथात्तूर्णं विवेश नृपतेः सभाम् ॥ उत्थाय राजा संभाष्य स्वर्णसिंहासनं ददौ ॥ १२४ ॥ इष्टालापं बहुतरं चकार च परस्परम् ॥ विनयावनतो नन्दः सम्बंधोक्तिं चकार ह ॥ १२५ ॥ नंद उवाच ॥ ॥ शृणु राजेंद्र वक्ष्यामि विशेषवचनं शुभम् ॥ संबन्धं कुरु कन्याया विशिष्टेन च सांप्रतम् ॥ १२६ ॥ सुरभानुसुतः श्रीमान्वृषभानुर्व्रजाधिपः ॥ नारायणांशो गुणवान्सुन्दरश्च सुपंडितः ॥ १२७ ॥ स्थिरयौवनयुक्तश्च योगी जातिस्मरो युवा ॥ कन्या तेऽयोनिसंभूता यज्ञकुण्डसमुद्भवा ॥ १२८ ॥ त्रैलोक्यमोहिनी शांता कमलांशा कलावती ॥ स च योग्यस्त्वद्दुहितुस्तद्योग्या ते च कन्यका ॥ १२९ ॥ विदग्धाया विदग्धेन संबन्धो गुणवान्नृप ॥ इत्येवमुक्त्वा नंदस्तु विरराम च संसदि ॥ उवाच तं नृपश्रेष्ठो विनयावनतो मुने ॥ ॥ १३० ॥ ॥ भनंदन उवाच ॥ ॥ संबन्धो हि विधिवशो न मे साध्यो व्रजाधिप ॥ १३१ ॥ प्रजापतिर्योगकर्ता जन्मदाताहमेव च ॥ का कस्य पत्नी कन्या वा वरः को वा ससाधनः ॥ १३२ ॥ कर्मानुरूपफलदः सर्वेषां कारणं विधिः ॥ भवितव्यं कृतं कर्म तदमोघं श्रुतौ श्रुतम् ॥ १३३ ॥ अन्यथा निष्फलं सर्वमनीशस्योद्यमो यथा ॥ वृषभानप्रिया धात्रा लिखिता चेत्सुता मम ॥ ॥ १३४ ॥ पुरा भूतैव को वाहं केनान्येन निवार्यते ॥ इत्येवमुक्त्वा राजेंद्रो विनयानतकंधरः ॥ १३५ ॥ मिष्टान्नं भोजयामास सादरेण च नारद ॥ नृपानुज्ञामुपादाय व्रजराजो व्रजं गतः ॥ १३६ ॥ गत्वा स कथयामास सुरभानस्य संसदि ॥ सुरभानश्च यत्नेन नंदनेन च सादरम् ॥ १३७ ॥ संबंधं योजयामास गर्गद्वारा च सत्वरम् ॥ विवाहकाले राजेंद्रो विपुलं यौतकं ददौ ॥ ॥ १३८ ॥ गजरत्नमश्वरत्नं रत्नानि मणिभूषणम् ॥ वृषभानुर्मुदा युक्तः प्राप्य तां च कलावतीम् ॥ १३९ ॥ रेमे सुनिर्जने रम्ये बुबुधे न दिवानिशम् ॥ चक्षुर्निमेषविरहाद्व्याकुलां स्वामिना विना ॥ १४० ॥ व्याकुलो वृषभानश्च क्षणेन च तया विना ॥ जातिस्मरा च सा कन्या मायामानुषरूपिणी ॥ १४१ ॥ जातिस्मरो हरेरंशो वृषभानो मुदान्वितः ॥ ववर्द्ध च तयोः प्रेम नित्यंनित्यं

नवंनवम् ॥ १४२ ॥ सदा सकामा सा प्रौढा स च कामसमो युवा ॥ तयोः कन्या च कालेन राधिका सा बभूव ह ॥ दैवात्सुदाम
शापेन श्रीकृष्णस्याज्ञया पुरा ॥ १४३ ॥ अयोनिसंभवा सा च कृष्णप्राणाधिका सती ॥ यस्या दर्शनमात्रेण तौ विमुक्तौ बभूवतुः ॥
॥ १४४ ॥ इतिहासश्च कथितः प्रकृतं शृणु सांप्रतम् ॥ पापेंधनानां दाहे च ज्वलदग्निशिखोपमः ॥ १४५ ॥ वृषभानाश्रमं गत्वा शि
ल्पिनां प्रवरो मुदा ॥ स्थानांतरं विश्वकर्मा जगाम स्वगणैः सह ॥ १४६ ॥ क्रोशमात्रं स्थलं चारु मनसालोच्य तत्त्ववित् ॥
आश्रमं कर्तुमारेभे नंदस्य सुमहात्मनः ॥ १४७ ॥ कृत्वानुमानं बुद्ध्या च सर्वतोपि विलक्षणम् ॥ परिखाभिर्गभीराभिश्चतुर्भिः
संयुतं वरम् ॥ १४८ ॥ दुर्लंघ्याभिर्वैरिभिश्च खनिताभिश्च प्रस्तरैः ॥ पुष्पोद्यानैः पुष्पिताभिः पारावारेषु पुष्पितैः ॥ १४९ ॥ चारु
चंपकवृक्षैश्च पुष्पितैः सुमनोहरैः ॥ परितो वासिताभिश्च सुगंधिवायुना मुने ॥ १५० ॥ आम्रैर्गुडालैः पनसैः खर्जूरैर्नारिकेलकैः ॥
दाडिमैः श्रीफलैर्भृंगैर्जंबीरैर्नागरंगकैः ॥ १५१ ॥ तुंगैराम्रातकैर्जंबुसमूहैश्च फलान्वितैः ॥ कदलीनां केतकीनां कदंबानां कदंबकैः ॥
॥ १५२ ॥ सर्वतः शोभिताभिश्च फलैस्तैः पुष्पितैरहो ॥ क्रीडार्हाभिर्निगूढाभिर्वाञ्छिताभिश्च सर्वदा ॥ १५३ ॥ परिखानां रहः
स्थाने चकार मार्गमुत्तमम् ॥ दुर्गमं परवर्गाणां स्वानां च सुगमं सदा ॥ १५४ ॥ संकेतेन मणिस्तंभैश्छादितैः स्वल्पपाथसा ॥
स्तंभसीमाकृतमहो न संकीर्णं न विस्तृतम् ॥ १५५ ॥ परिखोपरिभागे च प्राकारं सुमनोहरम् ॥ धनुःशतप्रमाणं च चकारातिस
मुच्छ्रितम् ॥ १५६ ॥ प्रस्तरस्य प्रमाणं च पंचविंशतिहस्तकम् ॥ सिंदूराकारमणिभिर्निर्मितं चातिसुंदरम् ॥ १५७ ॥ बाह्ये
द्वाभ्यां च संयुक्तमंतरे सप्तभिस्तथा ॥ द्वार्भिश्च सन्निरुद्धाभिर्मणिसारकपाटकैः ॥ १५८ ॥ हरिन्मणीनां कलशैश्चित्रयुक्तैर्विराजितम् ॥
मणिसारविकारैश्च कपाटैश्च सुशोभितम् ॥ १५९ ॥ स्वर्णसारविनिर्माणकलशोज्ज्वलशेखरम् ॥ नंदालयं विनिर्माय बभ्राम नगरं
पुनः ॥ १६० ॥ राजमार्गांश्च विविधान्स च चारूंश्चकार ह ॥ रक्तभानुविकारैश्च वेदीभिश्च सुपत्तनैः ॥ १६१ ॥ पारावारे च परितो
निबद्धांश्च मनोहरान् ॥ वाणिज्यार्हैश्च वणिजां परितो मणिमंडपैः ॥ १६२ ॥ सर्वतो दक्षिणे वामे ज्वलद्भिश्च विराजितान् ॥

ततो वृंदावनं गत्वा निर्ममे रासमंडलम् ॥ १६३ ॥ सुंदरं मंडलाकारं मणिप्राकारसंयुतम् ॥ परितो योजनायामं मणिवेदिभिरन्वितम् ॥ १६४ ॥ मणिसारविकारैश्च मंडपैर्नवकोटिभिः ॥ शृंगारार्हैश्च चित्राढ्यै रतितल्पसमन्वितैः ॥ १६५ ॥ नानाजातिप्रसूनानां वायुना सुरभीकृतैः ॥ रत्नप्रदीपसंयुक्तैः सुवर्णकलशोज्ज्वलैः ॥ १६६ ॥ पुष्पोद्यानैः पुष्पितैश्च सरोभिश्च सुशोभितम् ॥ रासस्थलं विनिर्माय जगामान्यत्स्थलं पुरः ॥ १६७ ॥ दृष्ट्वा वृंदावनं रम्यं परितुष्टो बभूव ह ॥ वृंदावनाभ्यंतरे च स्थानेस्थाने सुनिर्जने ॥ १६८ ॥ कृत्वा परिमितं बुद्ध्या मनसालोच्य यत्नतः ॥ विलक्षणानि रम्याणि तत्र त्रिंशद्वनानि च ॥ १६९ ॥ राधामाधवयोरेव क्रीडार्थं च विनिर्ममे ॥ ततो मधुवनाभ्याशे निर्जनेतिमनोहरे ॥ १७० ॥ वटमूलसमीपे च सरसः पश्चिमे तटे ॥ चंपकोद्यानपूर्वायां केतकीवनमध्यतः ॥१७१॥ पुनस्तयोश्च क्रीडार्थं चकार रत्नमंडपम् ॥ चतुर्भिर्वेदिकाभिश्च परीतमतिसुंदरम् ॥ ॥१७२॥सद्रत्नसाररचितै राजितं तूलिकाशतैः ॥ अमूल्यरत्नरचितैर्नानाचित्रेण चित्रितैः॥१७३॥ कपाटैर्नवभिर्युक्तं नवद्वारैर्मनोहरैः॥ रत्नेंद्रचित्रकलशैः कृत्रिमैश्च त्रिकोटिभिः ॥ १७४ ॥ परितः परितो भित्त्यामूर्ध्वं च परिशोभितम् ॥ महामणींद्रविकृतैरारोहैर्नवभिर्वृतम् ॥१७५॥ सद्रत्नसाररचितकलशोज्ज्वलशेखरम् ॥ पताकातोरणैर्युक्तं शोभितं श्वेतचामरैः ॥१७६॥ सर्वतः पुरतो दीप्तममूल्यरत्नदर्पणैः ॥ धनुःप्रमाणशतकमूर्ध्वमग्निशिखोपमम् ॥ १७७ ॥ शतहस्तप्रमाणं च प्रस्तारं वर्तुलाकृतिम् ॥ शोभितं रत्नतल्पैश्च तदभ्यंतरमुत्तमम् ॥१७८॥ वह्निशुद्धांशुकैर्वस्त्रैर्मालाजालविचित्रितैः॥ पारिजातप्रसूनानां माल्योपधानसंयुतैः॥१७९॥चन्दनागुरुकस्तूरीकुंकुमैः सुरभीकृतम् ॥ नवशृङ्गारयोग्यैश्च कामवर्द्धनकारिभिः ॥ १८० ॥ मालतीचंपकानां च पुष्पराजिभिरन्वितम् ॥ सकर्पूरैश्च तांबूलैः सद्रत्नपात्रसंस्थितैः॥ १८१ ॥ वज्रसारेण खचितैर्मुक्ताजालविलंबिभिः ॥ रत्नसारघटाकीर्णं रत्नपीठैः सुसंयुतम् ॥ १८२ ॥ रत्नसिंहासनैर्युक्तं रत्नचित्रेण चित्रितैः ॥ क्षरितैश्चंद्रकांतैश्च सुसिक्तं जलबिन्दुभिः ॥१८३॥ शीतवासिततोयेन संयुक्तं भोगवस्तुभिः ॥ कृत्वा रतिगृहं रम्यं नगरं च पुनर्ययौ ॥ १८४ ॥ यानि येषां मंदिराणि तन्नामानि लिलेख सः ॥ मुदा युक्तो विश्वकर्मा शिष्यैर्यक्ष

गणैः सह ॥ १८५ ॥ निद्रेशं निद्रितं नत्वा प्रययौ स्वालयं मुने ॥ सर्वत्रैवं सुकृतिनां समस्तं भगवत्कृपा ॥ १८६ ॥ नेहाश्चर्यं
च नगरं बभूवेशेच्छया भुवि ॥ इत्येवं कथितं सर्वं हरेश्चरितमंगलम् ॥ सुखदं पातकहरं किं भूयः श्रोतुमिच्छसि ॥ १८७ ॥
॥ ॥ नारद उवाच ॥ ॥ कथं वृन्दावनं नाम काननस्यास्य भारते ॥ व्युत्पत्तिरस्य संज्ञा वा तत्त्वं वद सुतत्त्ववित् ॥ १८८ ॥
॥ ॥ सूत उवाच ॥ ॥ नारदस्य वचः श्रुत्वा ऋषिर्नारायणो मुदा ॥ प्रहस्योवाच निखिलं तत्त्वमेव पुरातनम् ॥ १८९ ॥
॥ नारायण उवाच ॥ ॥ पुरा केदारनृपतिः सप्तद्वीपपतिः स्वयम् ॥ १९० ॥ आसीत्सत्ययुगे ब्रह्मन्सत्यधर्मरतः सदा ॥ स रेमे
सह नारीभिः पुत्रपौत्रगणैः सह ॥ १९१ ॥ पुत्रानिव प्रजाः सर्वाः पालयामास धार्मिकः ॥ कृत्वा क्रतुशतं राजा लेभे नेंद्रत्व
मीप्सितम् ॥ १९२ ॥ कृत्वा नानाविधं पुण्यं फलकांक्षी न च स्वयम् ॥ नित्यं नैमित्तिकं सर्वं श्रीकृष्णप्रीतिपूर्वकम् ॥ १९३ ॥
केदारतुल्यो राजेंद्रो न भूतो भविता पुनः ॥ पुत्रेषु राज्यं संन्यस्य प्रियां त्रैलोक्यमोहिनीम् ॥ १९४ ॥ जैगीषव्योपदेशेन
जगाम तपसे वनम् ॥ हरेरैकांतिको भक्तो ध्यायते संततं हरिम् ॥ १९५ ॥ शश्वत्सुदर्शनं चक्रमस्ति यत्सन्निधौ मुने ॥ चिरं तप्त्वा
मुनिश्रेष्ठो गोलोकं च जगाम सः ॥ १९६ ॥ केदारंनाम तीर्थं च तन्नाम्ना च बभूव ह ॥ तत्राद्यापि मृतः प्राणी सद्यो मुक्तो
भवेद्ध्रुवम् ॥ १९७ ॥ कमलांशा तस्य कन्या नाम्ना वृंदा तपस्विनी ॥ न वव्रे सा वरं कंचिद्योगशास्त्रविशारदा ॥ १९८ ॥
दत्तो दुर्वाससा तस्यै हरेर्मंत्रः सुदुर्लभः ॥ सा विरक्ता गृहं त्यक्त्वा जगाम तपसे वनम् ॥ १९९ ॥ षष्टिवर्षसहस्राणि तपस्तेपे
सुनिर्जने ॥ आविर्बभूव श्रीकृष्णस्तत्पुरो भक्तवत्सलः ॥ २०० ॥ प्रसन्नवदनः श्रीमान्वरं वृण्वित्युवाच सः ॥ दृष्ट्वा सा राधि
कांतं शांतं सुंदरविग्रहम् ॥ २०१ ॥ मूर्च्छां संप्राप सा सद्यः कामबाणप्रपीडिता ॥ सा च शीघ्रं वरं वव्रे पतिस्त्वं मे भवेति
च ॥ २०२ ॥ ओमित्युक्त्वा च रहसि चिरं रेमे तया सह ॥ सा जगाम च गोलोकं कृष्णेन सहकौतुकात् ॥ २०३ ॥ राधा
समा सा सौभाग्याद्गोपीश्रेष्ठा बभूव ह ॥ वृंदा यत्र तपस्तेपे तत्तु वृंदावनं स्मृतम् ॥ २०४ ॥ वृंदयात्र कृता क्रीडा तेन वा मुनि

पुंगव ॥ अथान्यं चेतिहासं च शृणुष्व वत्स पुण्यदम् ॥ २०५ ॥ येन वृंदावनं नाम निबोध कथयामि ते ॥ कुशध्वजस्य कन्ये द्वे धर्मशास्त्रविशारदे ॥ २०६ ॥ तुलसीवेदवत्यौ च विरक्ते भवकर्मणि ॥ तपस्तत्वा वेदवती प्राप नारायणं परम् ॥ २०७ ॥ सीता जनककन्या सा सर्वत्र परिकीर्तिता ॥ तुलसी च तपस्तत्वा वांछां कृत्वा हरिं प्रति ॥ २०८ ॥ दैवाद्दुर्वासस: शापात्प्राप्य शंखासुरं प्रति ॥ पश्चात्संप्राप्य कमलाकांतं कांतं मनोहरम् ॥ २०९ ॥ सा चैव हरिशापेन वृक्षरूपा सुरेश्वरी ॥ तस्याः शापेन च हरिः शालग्रामो बभूव ह ॥ २१० ॥ तथा तस्थौ च सततं शिलावक्षसि सुंदरी ॥ विस्तीर्णं कथितं सर्वं तुलसीचरितं च ते ॥ तथापि च प्रसंगेन किंचिदुक्तं मुने पुनः ॥ २११ ॥ तस्याश्च तपसः स्थानं तदिदं च तपोधन ॥ तेन वृंदावनं नाम प्रवदंति मनीषिणः ॥ २१२ ॥ अथ वा ते प्रवक्ष्यामि परं हेत्वंतरं शृणु ॥ येन वृंदावनं नाम पुण्यक्षेत्रस्य भारते ॥ २१३ ॥ राधाषोडशनाम्नां च वृंदानाम श्रुतौ श्रुतम् ॥ तस्याः क्रीडावनं रम्यं तेन वृंदावनं स्मृतम् ॥ २१४ ॥ गोलोके प्रीतये तस्याः कृष्णेन निर्मितं पुरा ॥ क्रीडार्थं भुवि तन्नाम्ना वनं वृंदावनं स्मृतम् ॥ २१५ ॥ ॥ नारद उवाच ॥ ॥ कानि षोडश नामानि राधिकाया जगद्गुरो ॥ तानि मे वद शिष्याय श्रोतुं कौतूहलं मम ॥ २१६ ॥ श्रुतं नाम्नां सहस्रं च सामवेदे निरूपितम् ॥ तथापि श्रोतुमिच्छामि त्वत्तो नामानि षोडश ॥ २१७ ॥ अभ्यंतराणि तेषां वा तदन्यान्येव मे विभो ॥ अहो पुण्यस्वरूपाणि भक्तानां वांछितानि च ॥ २१८ ॥ नामानि तेषां व्युत्पत्तिं सर्वेषां दुर्लभानि च ॥ पावनानि जगन्मातुर्जगतामपि कारणम् ॥ २१९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ राधा रासेश्वरी रासवासिनी रसिकेश्वरी ॥ कृष्णप्राणाधिका कृष्णप्रिया कृष्णस्वरूपिणी ॥ २२० ॥ कृष्णवामांगसंभूता परमानंदरूपिणी ॥ कृष्णा वृंदावनी वृंदा वृंदावनविनोदिनी ॥ २२१ ॥ चंद्रावती चंद्रकांता शतचंद्रनिभानना ॥ नामान्येतानि साराणि तेषामभ्यंतराणि च ॥ २२२ ॥ राधेत्येवं च संसिद्धा राकारो दानवाचकः ॥ स्वयं निर्वाणदात्री या सा राधा परिकीर्तिता ॥ २२३ ॥ रासेश्वरस्य पत्नीयं तेन रासेश्वरी स्मृता ॥

रासे च वासो यस्याश्च तेन सा रासवासिनी ॥ २२४ ॥ सर्वासां रसिकानां च देवीनामीश्वरी परा ॥ प्रवदंति पुरा संत
स्तेन तां रसिकेश्वरीम् ॥ २२५ ॥ प्राणाधिका प्रेयसी सा कृष्णस्य परमात्मनः ॥ कृष्णप्राणाधिका सा च कृष्णेन
परिकीर्तिता ॥२२६॥ कृष्णस्यातिप्रिया कांता कृष्णो वास्याः प्रियः सदा ॥ सर्वैर्देवगणैरुक्ता तेन कृष्णप्रिया स्मृता ॥ २२७ ॥
कृष्णरूपं सन्निधातुं या शक्ता चावलीलया ॥ सर्वांशैः कृष्णसदृशी तेन कृष्णस्वरूपिणी ॥ २२८ ॥ वामांगार्द्धेन
कृष्णस्य या संभूता परा सती ॥ कृष्णवामांगसंभूता तेन कृष्णेन कीर्तिता ॥ २२९ ॥ परमानंदराशिश्च स्वयं मूर्तिमती सती ॥
श्रुतिभिः कीर्तिता तेन परमानंदरूपिणी ॥ २३० ॥ कृषिर्मोक्षार्थवचनो न एवोत्कृष्टवाचकः ॥ आकारो दातृवचनस्तेन कृष्णा
प्रकीर्तिता ॥ २३१ ॥ अस्ति वृंदावनं यस्यास्तेन वृंदावनी स्मृता ॥ वृंदावनस्याधिदेवी तेन वाथ प्रकीर्तिता ॥ २३२ ॥ संघः सखी
नां वृंदः स्यादकारोप्यस्तिवाचकः ॥ सखिवृंदोस्ति यस्याश्च सा वृंदा परिकीर्तिता ॥ २३३ ॥ वृंदावने विनोदश्च सोस्या ह्यस्ति च
तत्र वै ॥ वेदा वदंति तां तेन वृन्दावनविनोदिनीम् ॥ २३४ ॥ नखचंद्रावलीवक्रचंद्रोस्ति यत्र संततम् ॥ तेन चंद्रावली सा च कृष्णेन
परिकीर्तिता ॥ २३५ ॥ कांतिरस्ति चंद्रतुल्या सदा यस्या दिवानिशम् ॥ सा चंद्रकांता हर्षेण हरिणा परिकीर्तिता ॥ २३६ ॥
शरच्चंद्रप्रभा यस्याश्चाननेस्ति दिवानिशम् ॥ मुनिना कीर्तिता तेन शरच्चंद्रप्रभानना ॥ २३७ ॥ इदं षोडशनामोक्तमर्थव्याख्यानसं
युतम् ॥ नारायणेन यद्दत्तं ब्रह्मणे नाभिपंकजे ॥ २३८ ॥ ब्रह्मणा च पुरा दत्तं धर्माय जनकाय मे ॥ धर्मेण कृपया दत्तं मह्य
मादित्यपर्वणि ॥ २३९ ॥ पुष्करे च महातीर्थे पुण्याहे देवसंसदि ॥ राधाप्रभावप्रस्तावे सुप्रसन्नेन चेतसा ॥ २४० ॥ इदं स्तोत्रं
महापुण्यं तुभ्यं दत्तं मया मुने ॥ निंदकायावैष्णवाय न दातव्यं महामुने ॥ २४१ ॥ यावज्जीवमिदं स्तोत्रं त्रिसंध्यं यः पठेन्नरः ॥
राधामाधवयोः पादपद्मे भक्तिर्भवेदिह ॥ २४२ ॥ अंते लभेत्तयोर्दास्यं शश्वत्सहचरो भवेत् ॥ अणिमादिकसिद्धिं च संप्राप्य
नित्यविग्रहम् ॥ २४३ ॥ व्रतदानोपवासैश्च सर्वैर्नियमपूर्वकैः ॥ चतुर्णां चैव वेदानां पाठैः सर्वार्थसंयुतैः ॥ २४४ ॥ सर्वेषां यज्ञ

तीर्थानां करणैर्विधिबोधितैः ॥ प्रदक्षिणेन भूमेश्च कृत्स्नाया एव सप्तधा ॥ २४५ ॥ शरणागतरक्षायामज्ञानां ज्ञानदानतः ॥ देवानां वैष्णवानां च दर्शनेनापि यत्फलम् ॥ २४६ ॥ तदेव स्तोत्रपाठस्य कलां नार्हति षोडशीम् ॥ स्तोत्रस्यास्य प्रभावेण जीवन्मुक्तो भवेन्नरः ॥ २४७ ॥ ॥ नारद उवाच ॥ ॥ संप्राप्तं परमाश्चर्यं स्तोत्रं सर्वसुदुर्लभम् ॥ कवचं चापि देव्याश्च संसारविजयं प्रभो ॥ ॥ २४८ ॥ कृतं स्तोत्रं सुयत्नेन प्राप्तं तदपि दुर्लभम् ॥ श्रुत्वा कृष्णकथां चित्रां त्वत्पादाब्जप्रसादतः ॥ २४९ ॥ अधुना श्रोतुमिच्छामि यद्रहस्यं च तद्वद ॥ प्रातश्च नगरं दृष्ट्वा किमूचुर्बल्लवा मुने ॥ २५० ॥ ॥ श्रीनारायण उवाच ॥ ॥ गतायां तत्र यामिन्यां गते च विश्वकर्मणि ॥ अरुणोदयवेलायां जनाः सर्वे जजागरुः ॥ २५१ ॥ उत्थाय दृष्ट्वा नगरं सर्वेभ्योपि विलक्षणम् ॥ किमाश्चर्यं किमाश्चर्यमित्यूचुर्व्रजवासिनः ॥ २५२ ॥ कांश्चिद्गोपान्केचिदूचुः कुत एतदभूदिदम् ॥ न जाने केन रूपेण को भूमौ प्रभवेदिति ॥ २५३ ॥ बुबुधे मनसा नंदो गर्गवाक्यमनुस्मरन् ॥ श्रीहरेरिच्छया सर्वं जगदेतच्चराचरम् ॥ २५४ ॥ ब्रह्मादितृणपर्यंतं यस्य भ्रूभंगलीलया ॥ आविर्भूतं तिरोभूतं तस्यासाध्यं च किं कुतः ॥ २५५ ॥ विवरेष्वेव यल्लोम्नां ब्रह्मांडान्यखिलानि च ॥ ईशस्य तन्महाविष्णोः किमसाध्यं हरेरहो ॥ २५६ ॥ ब्रह्मानंतेशधर्माश्च ध्यायंते यत्पदांबुजम् ॥ किमसाध्यं तदीशस्य मायामानुषरूपिणः ॥ २५७ ॥ भ्रामंभ्रामं तन्नगरं दर्शंदर्शं गृहंगृहम् ॥ पाठंपाठं च नामानि सर्वेभ्यो निलयं ददौ ॥ २५८ ॥ कृत्वा शुभक्षणं नंदो वृषभानश्च कौतुकी ॥ चकार सगणैः सार्द्धं मुदाश्रमनिवेशनम् ॥ २५९ ॥ सर्वे वृन्दावनस्थाश्च प्रसन्नवदनेक्षणाः ॥ मुदा प्रवेशनं चक्रुः स्वंस्वमाश्रममुत्तमम् ॥ २६० ॥ सर्वे मुमुदिरे गोपाः स्वेस्वे स्थाने मनोहरे ॥ बालका बालिकाश्चैव चिक्रीडुश्च प्रहर्षिताः ॥ २६१ ॥ श्रीकृष्णो बलदेवश्च शिशुभिः सह कौतुकात् ॥ क्रीडां चकार तत्रैव स्थानेस्थाने मनोहरे ॥ २६२ ॥ इत्येवं कथितं सर्वं निर्माणं नगरस्य च ॥ अबलानां वने रासमंडलस्य च नारद ॥ २६३ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीवृन्दावननगरवर्णनंनाम सप्तदशोध्यायः ॥ १७ ॥ ॥ शौनक उवाच ॥ अहो किमद्भुतं सूत रहस्यं सुमनोहरम् ॥

श्रुतं कृष्णस्य चरितं सुखदं मोक्षदं परम् ॥ १ ॥ ॥ सूत उवाच ॥ ॥ श्रुत्वा नगरनिर्माणं नारदो मुनिसत्तमः ॥ पप्रच्छ कृष्ण
चरितमपरं सुमनोहरम् ॥ २ ॥ ॥ नारद उवाच ॥ ॥ श्रीकृष्णाख्यानचरितं पीयूषमृषिसत्तम ॥ ज्ञानसिंधो निगद मां शिष्यं
च शरणागतम् ॥ ३ ॥ नारदस्य वचः श्रुत्वा मुदा नारायणः स्वयम् ॥ उवाच परमीशस्य चरितं परमाद्भुतम् ॥ ४ ॥ ॥ श्रीना
रायण उवाच ॥ ॥ एकदा बालकैः सार्धं बलेन सह माधवः ॥ जगाम श्रीमधुवनं यमुनातीरनीरजम् ॥ ५ ॥ विचेरुर्गोसहस्रैश्च
चिक्रीडुर्बालकास्तदा ॥ विश्रांतास्तृट्परीताश्च क्षुधा च परिपीडिताः ॥ ६ ॥ तमूचुर्गोपशिशवः श्रीकृष्णं परया मुदा ॥ क्षुदस्मान्बा
धते कृष्ण किं कुर्मो ब्रूहि किंकरान् ॥७॥ शिशूनां वचनं श्रुत्वा तानुवाच दयानिधिः ॥ हितं तथ्यं च वचनं प्रसन्नवदनेक्षणः॥८॥ श्रीकृ
ष्ण उवाच ॥ ॥ बाला गच्छत विप्राणां यज्ञस्थानं सुखावहम् ॥ अन्नं याचत ताञ्छीघ्रं ब्राह्मणांश्च क्रतून्मुखान् ॥ ९ ॥ विप्रा आंगि
रसाः सर्वे स्वाश्रमे श्रीवनांतिके ॥ यज्ञं कुर्वंति विप्राश्च श्रुतिस्मृतिविशारदाः ॥ १० ॥ निःस्पृहा वैष्णवाः सर्वे मां यजंति मुमुक्षवः ॥
मायया मां न जानंति मायामानुषरूपिणम् ॥ ११ ॥ न चेद्ददति युष्मभ्यमन्नं विप्राः क्रतून्मुखाः ॥ तत्कांता याचत क्षिप्रं दया
युक्ताः शिशून्प्रति ॥ १२ ॥ श्रीकृष्णवचनं श्रुत्वा ययुर्बालकपुंगवाः ॥ पुरतो ब्राह्मणानां च तस्थुरानम्रकंधराः ॥ १३ ॥ इत्यूचुर्बा
लकाः शीघ्रमन्नं दत्त द्विजोत्तमाः ॥ न शुश्रुवुर्द्विजाः केचित्केचिच्छ्रुत्वा स्थिताः स्थिताः॥१४॥ ते ययू रंधनागारं ब्राह्मण्यो यत्र पाचि
काः ॥ गत्वा बाला विप्रभार्याः प्रणेमुर्नतकंधराः ॥ १५ ॥ नत्वोचुर्बालकाः सर्वे विप्रभार्याः पतिव्रताः ॥ अन्नं दत्त मातरोऽस्मा
न्क्षुधार्तान्बालकानपि ॥ १६ ॥ बालानां वचनं श्रुत्वा दृष्ट्वा तांश्च मनोहरान् ॥ पप्रच्छुः सादरं साध्व्यः स्मेराननसरोरुहाः ॥१७॥
॥ विप्रपत्न्य ऊचुः ॥ ॥ के यूयं प्रेषिताः केन कानि नामानि कोविदाः ॥ दास्यामोऽन्नं बहुविधं व्यंजनैः सहितं वरम् ॥ १८ ॥
ब्राह्मणीनां वचः श्रुत्वा ता ऊचुस्ते मुदान्विताः ॥ स्निग्धा हसंतः स्फीताश्च सर्वे गोपालबालकाः ॥१९॥ ॥ बाला ऊचुः ॥ ॥ प्रेषिता
रामकृष्णाभ्यां वयं क्षुत्पीडिता भृशम् ॥ दत्तान्नं मातरोऽस्मभ्यं क्षिप्रं यामस्तदंतिकम् ॥ २० ॥ इतो विदूरे भाण्डीरे वनाभ्यंतरमेव

च ॥ वटमूले मधुवने वसन्तौ रामकेशवौ ॥ २१ ॥ विश्रांतौ क्षुधितौ तौ च याचेतेऽन्नं च मातरः ॥ किम्नु देयमदेयं वा शीघ्रं वदत नोऽधुना ॥ २२ ॥ गोपानां वचनं श्रुत्वा हृष्टानंदाश्रुलोचनाः ॥ पुलकांकितसर्वांगास्तत्पादाब्जमनोरथाः ॥ २३ ॥ नानाव्यजन संयुक्तं शाल्यन्नं सुमनोहरम् ॥ पायसं पिष्टकं स्वादु दधि क्षीरं घृतं मधु ॥ २४ ॥ रौप्ये कांस्ये राजते च पात्रे कृत्वा मुदान्विताः ॥ ताः सर्वा विप्रपत्न्यश्च प्रययुः कृष्णसन्निधिम् ॥ २५ ॥ नानामनोरथं कृत्वा मनसा गमनोत्सुकाः ॥ पतिव्रतास्ता धन्याश्च श्रीकृष्णदर्शनोत्सुकाः ॥ २६ ॥ श्रीकृष्णं ददृशुर्गत्वा रामं च सहबालकम् ॥ वटमूले वसन्तं तमुडुमध्ये यथोडुपम् ॥ २७ ॥ श्यामं किशोरवयसं पीतकौशेयवाससम् ॥ सुन्दरं सस्मितं शांतं राधाकांतं मनोहरम् ॥ २८ ॥ शरत्पार्वणचंद्रास्यं रत्नालंकारभूषितम् ॥ रत्नकुण्डलयुग्माभ्यां गंडस्थलविराजितम् ॥ २९ ॥ रत्नकेयूरवलयरत्ननूपुरभूषितम् ॥ आजानुलंबितां शुभ्रां बिभ्रतं रत्नमालिकाम् ॥ ३० ॥ मालतीमालया कंठवक्षःस्थलविराजितम् ॥ चंदनागुरुकस्तूरीकुंकुमांचितविग्रहम् ॥ ३१ ॥ सुनखं सुकपोलं च पक्वबिंबाधरं वरम् ॥ पक्वदाडिमबीजाभं बिभ्रतं दंतमुत्तमम् ॥ ३२ ॥ शिखिपिच्छसमायुक्तं बद्धचूडं परात्परम् ॥ कदंबपुष्पयुग्माभ्यां कर्णमूले विराजितम् ॥ ३३ ॥ ध्यानासाध्यं योगिनां च भक्तानुग्रहकातरम् ॥ ब्रह्मेशधर्मशेषेंद्रैः स्तूयमानं मुनीश्वरैः ॥ ३४ ॥ दृष्ट्वैवमीश्वरं भक्त्या प्रणेमुर्द्विजयोषितः ॥ स्वानां ज्ञानानुरूपं च तुष्टुवुर्मधुसूदनम् ॥३५॥ ॥ विप्रपत्न्य ऊचुः ॥ ॥ त्वं ब्रह्म परमं धाम निरीहो निरहंकृतिः ॥ निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ॥ ३६ ॥ साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः ॥ प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम् ॥ ३७ ॥ सृष्टिस्थित्यंतविषये ये च देवास्त्रयः स्मृताः ॥ ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः ॥ ॥ ३८ ॥ यस्य लोम्नां च विवरे चाखिलं विश्वमीश्वर ॥ महाविराण्महाविष्णुस्त्वं तस्य जनको विभो ॥ ३९ ॥ तेजस्त्वं चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः ॥ वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥ ४० ॥ महदादिसृष्टिसूत्रं पंचतन्मात्रमेव च ॥ बीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः ॥ ४१ ॥ सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा ॥ त्वमनीहः स्वयंज्योतिः सर्वानन्दः सना

तनः ॥ ४२ ॥ अहोप्याकारहीनस्त्वं सर्वविग्रहवानपि ॥ सर्वेंद्रियाणां विषयं जानासि नेंद्रियी भवान् ॥ ४३ ॥ सरस्वती जडीभूता
यत्स्तोत्रे यन्निरूपणे ॥ जडीभूतो महेशश्च शेषो धर्मो विधिः स्वयम् ॥ ४४ ॥ पार्वती कमला राधा सावित्री वेदसूरपि ॥ वेदश्च जड
तां याति के वा शक्ता विपश्चितः ॥ ४५ ॥ वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर ॥ प्रसन्नो भव नो देव दीनबन्धो कृपां कुरु ॥
॥ ४६ ॥ इति पेतुश्च ता विप्रपत्न्यस्तच्चरणांबुजे ॥ अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥ ४७ ॥ विप्रपत्नीकृतं स्तोत्रं पूजाकाले
च यः पठेत् ॥ स गतिं विप्रपत्नीनां लभते नात्र संशयः ॥४८॥ ॥ नारायण उवाच ॥ ॥ ताः पदांभोजपतिता दृष्ट्वा श्रीमधुसूदनः ॥
वरं वृणुत कल्याणं भविता चेत्युवाच ह ॥ ४९ ॥ श्रीकृष्णस्य वचः श्रुत्वा विप्रपत्न्यो मुदान्विताः ॥ तमूचुर्वचनं भक्त्या भक्तिनम्रा
त्मकंधराः ॥ ५० ॥ ॥ द्विजपत्न्य ऊचुः ॥ वरं कृष्ण न गृह्णीमो नः स्पृहा त्वत्पदांबुजे ॥ देहि स्वं दास्यमस्मभ्यं दृढां भक्तिं सुदुर्ल
भाम् ॥ ५१ ॥ पश्यामोऽनुक्षणं वक्त्रसरोजं तव केशव ॥ अनुग्रहं कुरु विभो न यास्यामो गृहं पुनः ॥ ५२ ॥ द्विजपत्नीवचः श्रुत्वा
श्रीकृष्णः करुणानिधिः ॥ ओमित्युक्त्वा त्रिलोकेशस्तस्थौ बालकसंसदि ॥५३॥ प्रदत्तं विप्रपत्नीभिर्मिष्टमन्नं सुधोपमम् ॥ बालका
न्भोजयित्वा तु स्वयं च बुभुजे विभुः ॥ ५४ ॥ एतस्मिन्नंतरे तत्र शातकुंभं रथं परम् ॥ ददृशुर्विप्रपत्न्यश्च पतंतं गगनादहो ॥ ५५ ॥
रत्नदर्पणसंयुक्तं रत्नसारपरिच्छदम् ॥ रत्नस्तंभैर्निबद्धं च सद्रत्नकलशोज्ज्वलम् ॥५६॥ श्वेतचामरसंयुक्तं वह्निशुद्धांशुकान्वितम् ॥
पारिजातप्रसूनानां मालाजालैर्विराजितम्॥५७॥शतचक्रसमायुक्तं मनोयायि मनोहरम् ॥ वेष्टितं पार्षदैर्दिव्यैर्वनमालाविभूषितैः॥५८॥
पीतवस्त्रपरीधानै रत्नालंकारभूषितैः ॥ नवयौवनसंपन्नैः श्यामलैः सुमनोहरैः ॥ ५९ ॥ द्विभुजैर्मुरलीहस्तैर्गोपवेषधरैर्वरैः ॥ शिखिपि
च्छगुंजमालाबद्धवक्रिमचूडकैः ॥ ६० ॥ अवरुह्य रथात्तूर्णं ते प्रणम्य हरेः पदम् ॥ रथमारोहणं[1] कर्तुमूचुर्ब्राह्मणकामिनीः ॥ ६१ ॥
विप्रभार्या हरिं नत्वा जग्मुर्गोलोकमीप्सितम् ॥ बभूवुर्गोपिकाः सद्यस्त्यक्त्वा मानुषविग्रहान् ॥ ६२ ॥ हरिश्छायां विनिर्माय तासां



१ रथस्यारोहणम् —इ० पा० ।

च विष्णुमायया ॥ प्रस्थापयामास गृहान्ब्राह्मणानां स्वयं विभुः ॥ ६३ ॥ विप्राश्च भार्या उद्दिश्य परमोद्विग्नमानसाः ॥ अन्वेषणं प्रकुर्वंतो ददृशुः पथि कामिनीः ॥ ६४ ॥ दृष्ट्वोचुर्ब्राह्मणाः सर्वे तास्ते च विनयान्विताः ॥ पुलकांकितसर्वांगाः प्रसन्नवदनेक्षणाः ॥ ॥ ६५ ॥ ॥ ब्राह्मणा ऊचुः ॥ ॥ अहोतिधन्या यूयं च दृष्टो युष्माभिरीश्वरः ॥ अस्माकं जीवनं व्यर्थं वेदपाठोऽप्यनर्थकः ॥ ६६ ॥ वेदे पुराणे सर्वत्र विद्वद्भिः परिकीर्तिताः ॥ हरेर्विभूतयः सर्वाः सर्वेषां जनको हरिः ॥ ६७ ॥ तपो जपो व्रतं ज्ञानं वेदाध्ययनमर्चनम् ॥ तीर्थस्नानमनशनं सर्वेषां फलदो हरिः ॥ ६८ ॥ श्रीकृष्णः सेवितो येन किं तस्य तपसां फलैः ॥ प्राप्तः कल्पतरुर्येन किं तस्यान्येन शाखिना ॥ ६९ ॥ श्रीकृष्णो हृदये यस्य तस्य किं कर्मभिः कृतैः ॥ किं वा न सागरस्यैव पौरुषं कूपलंघने ॥ ॥ ७० ॥ इत्येवमुक्त्वा विप्राश्च गृहीत्वा कामिनीवराः ॥ आजग्मुः स्वगृहं हृष्टास्ताभिः सार्धं च रेमिरे ॥ ७१ ॥ तासां ततोधिकं प्रेम क्रीडासु सर्वकर्मसु ॥ दाक्षिण्यं मायया शक्त्या ब्राह्मणानामतर्कितम् ॥ ७२ ॥ अथ नारायणः सोयं बलेन शिशुभिः सह ॥ जगाम स्वालयं तूर्णं पूर्णब्रह्म सनातनः ॥ ७३ ॥ इत्येवं कथितं सर्वं हरेर्माहात्म्यमुत्तमम् ॥ पुरा श्रुतं धर्मवक्त्रात्किं भूयः श्रोतुमिच्छसि ॥ ॥ ७४ ॥ ॥ नारद उवाच ॥ ॥ ऋषींद्र केन पुण्येन बभूव विप्रयोषिताम् ॥ मुनींद्रयोगसिद्धानां दुर्लभा गतिरीश्वरी ॥ ॥ ७५ ॥ इमाः का वा पुण्यवत्यः पुरा तस्थुर्महीतलम् ॥ आजग्मुः केन दोषेण वद संदेहभञ्जनम् ॥७६॥ ॥ श्रीनारायण उवाच ॥ ॥ सप्तर्षीणां रमण्यश्च रूपेणाप्रतिमाः पराः ॥ गुणवत्यः सुशीलाश्च धर्मिष्ठाश्च पतिव्रताः ॥ ७७ ॥ नवीनयौवनाः सर्वाः पीनश्रोणिपयोधराः ॥ दिव्यवस्त्रपरीधाना रत्नालंकारभूषिताः ॥ ७८ ॥ तप्तकांचनवर्णाभाः स्मेराननसरोरुहाः ॥ मुनीनां मोहितुं शक्ता मानसं वक्रचक्षुषा ॥ ७९ ॥ दृष्ट्वा तासां स्तनश्रोणिमुखानि सुंदराणि च ॥ अनलश्चकमे ताश्च मदनानलपीडितः ॥ ८० ॥ अग्निस्थानस्थितानां च शिखया सुरतोन्मुखः ॥ स्पृष्ट्वा चांगानि तासां च बभूव हतचेतनः ॥ ८१ ॥ पतिव्रता न जानंति पतिपादाब्जमानसाः ॥ अग्निरंगानि तासां च दर्शंदर्शं मुमोह च ॥ ८२ ॥ वह्नेश्च मानसं ज्ञात्वा भगवानंगिरा मुनिः ॥ शशाप तं चेत्यु

वाच सर्वभक्षो भवेति ह ॥ ८३ ॥ वह्निः सचेतनो भूत्वा तुष्टाव मुनिपुंगवम् ॥ व्रीडया नम्रवदनश्चकंपे ब्रह्मतेजसा ॥ ८४ ॥ क्रुद्धो मुनिवरः स्पृष्टाः कामिन्यश्च शशाप ह ॥ यात यूयं पापयुक्ता मानुषीं योनिमेव च ॥ ८५ ॥ भारते ब्राह्मणानां च गृहे लभत जन्म वै ॥ करिष्यंति विवाहं च युष्माकं कुलजा द्विजाः ॥ ८६ ॥ श्रुत्वा वाक्यं मुनेस्ताश्च रुरुदुः प्रेमविह्वलाः ॥ पुटांजलियुताः सर्वा ऊचुस्तं विदुषां वरम् ॥ ८७ ॥ ॥ मुनिपत्न्य ऊचुः ॥ ॥ न त्यजास्मान्मुनिश्रेष्ठ निष्पापाश्च पतिव्रताः ॥ अजानंत्यः परस्पृष्टा न च नस्त्यक्तुमर्हसि ॥ ८८ ॥ भक्तानां किंकरीणां च न दंडं कर्तुमर्हसि ॥ युष्माकं चरणांभोजं कदा द्रक्ष्यामहे वयम् ॥ ॥ ८९ ॥ खड्गच्छेदाद्वज्रपातात्सर्वप्रहरणान्मुने ॥ दारुणः कांतविच्छेदः साध्वीनां दुःसहः सदा ॥ ९० ॥ ब्रह्मिष्ठानां गुणवतां परा न्कांतान्महामुनीन् ॥ एवंभूतान्कथं त्यक्त्वा यास्यामः पृथिवीतलम् ॥ ९१ ॥ यास्यामो यदि विप्रेश कदात्रागमनं वद ॥ अज्ञानस्प र्शदोषश्च न स्यान्नो विधिबोधितः ॥ ९२ ॥ अहल्यया पुनः प्राप्तः स्वामींद्रस्य प्रधर्षणात् ॥ सा संभोगात्पुनः शुद्धा स्पर्शनाद्वर्जिता वयम् ॥ ९३ ॥ विचारं कुरु धर्मिष्ठ वेदवेदांगपारग ॥ विश्वकर्तुश्च पुत्रस्त्वं सर्ववेदविदांवर ॥९४॥ अन्येषां च भयात्कांता व्रजंति शरणं पतिम् ॥ स्वकांतभयसंविग्नाः शरणं कं व्रजंति ताः ॥ ९५ ॥ अभयं देहि धर्मिष्ठ भययुक्ताभ्य एव च ॥पुत्रे शिष्ये कलत्रे च को दंडं कर्तुमक्षमः ॥ ९६ ॥ दुर्बलः सबलो वापि स्ववस्तूनामपीश्वरः ॥ स्वद्रव्यविक्रयं कर्तुं न चान्यो रक्षितुं क्षमः ॥९७॥ कामिनीनां वचः श्रुत्वा दयालुर्मुनिपुंगवः ॥ प्रेम्णा रुरोद तासां च निरीक्ष्य मुखपंकजम् ॥९८॥ वेदवेदांगपारज्ञो ज्ञानिनां योगिनां वरः ॥ पत्नीविच्छे दविषये मूर्च्छां प्राप तथापि सः ॥९९॥ सर्वे बभूवुः शोकार्ता विरहोद्विग्नमानसाः ॥ निरीक्ष्य तासां वक्त्राणि तस्थुः पुत्तलिका यथा ॥ ॥१००॥ कृत्वा विलापं सुचिरं सर्ववेदविदां वरः ॥ भ्रातृभिश्च सहालोच्य ता उवाच शुचातुरः ॥ १०१ ॥ ॥ अंगिरा उवाच ॥ ॥ यूयं शृणुत वक्ष्यामि वचनं सत्यमेव च ॥ स्वकर्मभोगिनां भोगमाकर्माच्च श्रुतौ श्रुतम् ॥ १०२ ॥ गतो भोगश्च युष्माकमस्माभिः सह निश्चितम् ॥ गते भोगे पुनर्भोगो न हि वेदे निरूपितः ॥ १०३ ॥ शुभाशुभं च यत्कर्म भारते कृतिभिः सह ॥ नाभुक्तं क्षीयते कर्म

जन्मकोटिशतैरपि ॥ १०४ ॥ परभुक्तां च कांतां च यो भुंक्ते स नराधमः ॥ स पच्यते कालसूत्रे यावच्चंद्रदिवाकरौ ॥ १०५ ॥
न सा देवे न सा पैत्र्ये पाकार्हा पापसंयुता ॥ तस्या आलिंगने भर्ता भ्रष्टश्रीस्तेजसा हतः ॥ १०६ ॥ देवताः पितरस्तस्य हव्य
दाने च तर्पणे ॥ सुखिनो न भवंत्येवमित्याह कमलोद्भवः ॥ १०७ ॥ तस्माद्यत्नेन भार्याया रक्षणं कुरुते सुधीः ॥ अन्यथा
पापभाग्भर्ता निश्चितं नरकं व्रजेत् ॥ १०८ ॥ पदेपदे सावधानः कांतां रक्षति पंडितः ॥ न व्रती न स्थली योषा दोषाणां च
करंडिका ॥ १०९ ॥ कलत्रं पाकपात्रं च सदा रक्षितुमर्हति ॥ परस्पर्शादशुद्धां च शुद्धां स्वस्पर्शने सदा ॥ ११० ॥ स्वकांतं च
परित्यज्य परं गच्छति याधमा ॥ कुंभीपाकं सा प्रयाति यावच्चंद्रदिवाकरौ ॥ १११ ॥ तामेव यमदूताश्च संस्थाप्य नरकांतरे ॥
उत्तिष्ठति विदूराच्चेत्कुर्वंति दंडताडनाम् ॥ ११२ ॥ सर्पप्रमाणाः कीटाश्च तीक्ष्णदंष्ट्राः सुदारुणाः ॥ दशंति पुंश्चलीं तत्र सततं च
दिवानिशम् ॥ ११३ ॥ विकृताकारशब्दं च करोति शाश्वतं भिया ॥ न ममार प्रहारेण सूक्ष्मदेहविधारिणी ॥ ११४ ॥ मुहू
तार्धं सुखं भुक्त्वा लोकेऽत्र यशसा हता ॥ पतिता परलोके च गतिमेतादृशीं लभेत् ॥ ११५ ॥ परस्पृष्टा च वै नारी या स्पृहां
कुरुते परम् ॥ सापि दुष्टा परित्याज्या चेत्याह कमलोद्भवः ॥ ११६ ॥ तस्मान्नारीं परैर्यत्नाददृष्टा कृतिभिः कृता ॥ अमूर्यंपश्या
या दाराः शुद्धास्ताश्च पतिव्रताः ॥ ११७ ॥ स्वच्छंदगामिनी या च स्वत्रंता सूकरीसमा ॥ अंतर्दुष्टा सदा सैव निश्चितं परगामिनी
॥ ११८ ॥ स्वामिसाध्या च या नारी कुलधर्मभिया स्थिता ॥ कांतेन सार्द्धं सा कांता वैकुंठं याति निश्चितम् ॥ ११९ ॥ यात
यूयं च पृथिवीं मानुषीं योनिमीप्सिताम् ॥ कृष्णदर्शनमात्रेण गोलोकं यास्यथ ध्रुवम् ॥ १२० ॥ हरिणा निर्मिताश्छाया युष्माकं
योगमायया ॥ ता विप्रमंदिरे स्थित्वा चागमिष्यंति नो ध्रुवम् ॥ १२१ ॥ पुनरंशेन नः पत्न्यो भविष्यथ न संशयः ॥ युष्माकं
मम शापश्च बभूव च वराधिकः ॥ १२२ ॥ इत्येवमुक्त्वा स मुनिर्विरराम शुचान्वितः ॥ ता आगत्य महीं शापाद्बभूवुर्विप्रयो
षितः ॥ १२३ ॥ दत्त्वान्नं हरये भक्त्या प्रजग्मुर्हरिमंदिरम् ॥ बभूव निश्चितं तासां शापश्च संपदोधिकः ॥ १२४ ॥ निंद्या नीचा

च संपत्तिर्विपत्तिर्महतो वरा ॥ अहो सद्यः सतां कोपश्चोपकाराय कल्पते ॥ १२५ ॥ विना विपत्तेर्महिमा कुतः कस्य भवेद्भुवि ॥
भूताः कांतपरित्यागान्मुक्ता ब्राह्मणयोषितः ॥ १२६ ॥ इत्येवं कथितं सर्वं हरेश्चरितमुत्तमम् ॥ अहो पुण्यवतीनां च मोक्षाख्यानं
मनोहरम् ॥ १२७ ॥ श्रीकृष्णाख्यानं विप्रेंद्र नूतनंनूतनं पदेपदे ॥ न हि तृप्तिः श्रुतवतां केन श्रेयसि तृप्यते ॥ १२८ ॥ यावद्रम्यं
तत्कथितं यच्छ्रुतं गुरुवक्त्रतः ॥ वद मां वांछितं यत्ते किं भूयः श्रोतुमिच्छसि ॥ १२९ ॥ ॥ नारद उवाच ॥ ॥ यद्यच्छ्रुतं
त्वया पूर्वं गुरुवक्त्रात्कृपानिधे ॥ मंगलं कृष्णचरितं तन्मे ब्रूहि जगद्गुरो ॥ १३० ॥ ॥ सूत उवाच ॥ ॥ श्रुत्वा देवर्षिवचनमृषिर्ना
रायणः स्वयम् ॥ अपरं कृष्णमाहात्म्यं प्रवक्तुमुपचक्रमे ॥ १३१ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे विप्रपत्नीमोक्ष
णप्रस्तावोनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एकदा बालकैः सार्धं बलदेवं विना हरिः ॥ जगाम
यमुनातीरं यत्र कालियमंदिरम् ॥ १ ॥ परिपक्वफलं भुक्त्वा यमुनातीरजे वने ॥ स्वेच्छामयस्तृट्परीतः पपौ च निर्मलं जलम्
॥ २ ॥ गोकुलं चारयामास शिशुभिः सह कानने ॥ विजहार च तैः सार्द्धं स्थापयामास गोकुलम् ॥ ३ ॥ क्रीडानिमग्नचित्तोयं
बालकाश्च मुदान्विताः ॥ भुक्त्वा नवतृणं गावो विषतोयं पपुर्मुने ॥ ४ ॥ विषाक्तं च जलं पीत्वा दारुणांतकचेष्टया ॥ ज्वालाभिः
कालकूटानां सद्यः प्राणांश्च तत्यजुः ॥ ५ ॥ दृष्ट्वा मृत गोसमूहं गोपाश्चिन्ताकुला भिया ॥ विषण्णवदनाः सर्वे तमूचुर्मधुसूदनम् ॥ ६ ॥
ज्ञात्वा सर्वं जगन्नाथो जीवयामास गोकुलम् ॥ उत्तस्थुस्तत्क्षणं गावो ददृशुः श्रीहरेर्मुखम् ॥ ७ ॥ कृष्णः कदंबमारुह्य यमुनानीरतीर
जम् ॥ पपात सर्पभवने नागमध्ये नराकृतिः ॥ ८ ॥ शतहस्तप्रमाणं च जलोत्थानं बभूव ह ॥ बाला हर्षं विषादं च मेनिरे तत्र
नारद ॥ ९ ॥ सर्पो नराकृतिं दृष्ट्वा कालियः क्रोधविह्वलः ॥ जग्राह श्रीहरिं तूर्णं तप्तलोहं यथा नरः ॥ १० ॥ दग्धकंठोदरो नागश्चो
द्विग्नो ब्रह्मतेजसा ॥ प्राणा यांत्येवमुक्त्वा च चकारोद्गमनं पुनः ॥ ११ ॥ भग्नदंतो रक्तमुखः कृष्णवज्रांगचर्वणात् ॥ रक्तवक्त्रस्य
भगवानुत्तस्थौ मस्तकोपरि ॥ १२ ॥ नागो विश्वंभराक्रांतः स प्राणांस्त्यक्तुमुद्यतः ॥ चकार रक्तोद्गमनं पपात मूर्च्छितो मुने ॥ १३ ॥

दृष्ट्वा तं मूर्छितं नागा रुरुदुः प्रेमविह्वलाः ॥ १४ ॥ केचित्पलायिता भीताः केचित्प्रविविशुर्बिलम् ॥ मरणाभिमुखं कांतं दृष्ट्वा
सा सुरसा सती ॥१५॥ नागिनीभिः सह प्रेम्णा रुरोद पुरतो हरेः ॥ पुटांजलियुता तूर्णं प्रणम्य श्रीहरिं भिया ॥ धृत्वा पादारविंदे
च तमुवाच भियाकुला ॥ १६ ॥ ॥ सुरसोवाच ॥ ॥ हे जगत्कांत कांतं मे देहि मानं च मानद ॥ पतिः प्राणाधिकः स्त्री
णां नास्ति बंधुश्च तत्परः ॥ १७ ॥ सकलभुवननाथ प्राणनाथं मदीयं न कुरु वधमनंतप्रेमसिंधो सुबंधो ॥ अखिलभुवनबंधो
राधिकाप्रेमसिंधो पतिमिह कुरु दानं मे विधातुर्विधातः ॥ १८ ॥ त्रिनयनविधिशेषाः षण्मुखश्चास्यसंघैः स्तवनविषयजाड्यात्स्तो
तुमीशा न वाणी ॥ न खलु निखिलवेदाः स्तोतुमन्येपि देवाः स्तवनविषयशक्ताः संति संतस्तवैव ॥ १९ ॥ कुमतिरहमधिज्ञा यो
षितां क्वाधमा वा क्व भुवनगतिरीशश्चक्षुषो गोचरापि ॥ विधिहरिहरशेषैः स्तूयमानश्च यस्त्वमतनुमनुजमीशं स्तोतुमिच्छामि तं त्वा
म् ॥ २० ॥ स्तवनविषयभीता पार्वती यस्य पद्मा श्रुतिगणजनयित्री स्तोतुमीशा न यं त्वाम् ॥ कलिकलुषनिमग्ना वेदवेदांगशास्त्र
श्रवणविषयमूढा स्तोतुमिच्छामि किं त्वाम् ॥ २१ ॥ शयानो रत्नपर्यंके रत्नभूषणभूषितः ॥ रत्नभूषणभूषांगी राधावक्षसि संस्थितः
॥ २२ ॥ चंदनोक्षितसर्वांगः स्मेराननसरोरुहः ॥ प्रोद्यत्प्रेमरसांभोधौ निमग्नः सततं सुखात् ॥ २३ ॥ मल्लिकामालतीमालाजालैः
शोभितशेखरः ॥ पारिजातप्रसूनानां गंधामोदितमानसः ॥ २४ ॥ पुंस्कोकिलकलध्वानैर्भ्रमरध्वनिसंयुतैः ॥ कुसुमेषुविकारेण पुल
कांकितविग्रहः ॥ २५ ॥ प्रियाप्रदत्ततांबूलं भुक्तवान्यः सदा मुदा ॥ वेदा अशक्ता यं स्तोतुं जडीभूता विचक्षणाः ॥ २६ ॥ तमनिर्वच
नीयं च किं स्तौमि नागवल्लभा ॥ वंदेहं त्वत्पदांभोजं ब्रह्मेशशेषसेवितम् ॥ २७ ॥ लक्ष्मीसरस्वतीदुर्गाजाह्नवीवेदमातृभिः ॥ सेवितं
सिद्धसंघैश्च मुनींद्रैर्मनुभिः सदा ॥ २८ ॥ निष्कारणायाखिलकारणाय सर्वेश्वरायापि परात्पराय ॥ स्वयंप्रकाशाय परावराय परावरा
णामधिपाय ते नमः ॥ २९ ॥ हे कृष्ण हे कृष्ण सुरासुरेश ब्रह्मेश शेषेश प्रजापतीश ॥ मुनीश मन्वीश चराचरेश सिद्धीश सिद्धेश
गणेश पाहि ॥ ३० ॥ धर्मेश धर्मीश शुभाशुभेश वेदेश वेदेष्वनिरूपितश्च ॥ सर्वेश सर्वात्मक सर्वबंधो जीवीश जीवेश्वर पाहि

मत्प्रभुम् ॥ ३१ ॥ इत्येवं स्तवनं कृत्वा भक्तिनम्रात्मकंधरा ॥ विधृत्य चरणांभोजं तस्थौ नागेशवल्लभा ॥ ३२ ॥ नागपत्नीकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः ॥ सर्वपापात्प्रमुक्तस्तु यात्यंते श्रीहरेः पदम् ॥ ३३ ॥ इह लोके हरेर्भक्तिमंते दास्यं लभेद्ध्रुवम् ॥ लभते पार्षदो भूत्वा सालोक्यादिचतुष्टयम् ॥ ३४ ॥ ॥ नारद उवाच ॥ ॥ नागपत्नीवचः श्रुत्वा भगवान्सर्वनंदनः ॥ प्रहृष्टोत्फुल्लनयनः किमुवाच हरिः स्वयम् ॥ ३५ ॥ कथयस्व महाभाग रहस्यं परमाद्भुतम् ॥ ॥ सूत उवाच ॥ ॥ नारदस्य वचः श्रुत्वा भगवान्सर्वदर्शनः ॥ ३६ ॥ उवाच परमात्मानं मधुवृंदं पदेपदे ॥ ॥ नारायण उवाच ॥ ॥ नागपत्नीवचःश्रुत्वा श्रीकृष्णस्तामुवाच ह ॥ ३७ ॥ पुटांजलियुतां पादे पतितां भयविह्वलाम् ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ उत्तिष्ठोत्तिष्ठ नागेशे वरं वृणु भयं त्यज ॥ ३८ ॥ गृहाण कांतं हे मातर्मद्वरादजरामरम् ॥ कालिंदीह्रदमुत्सृज्य स्वकीयं भवनं व्रज ॥ ३९ ॥ भर्त्रा सगोष्ठ्या सार्द्धं च गच्छ वत्से सुखी भव ॥ अद्य प्रभृति नागेशि भूता कन्या च त्वं मम ॥ ४० ॥ त्वत्प्राणाधिक एवायं जामाता च न संशयः ॥ मत्पादपद्मचिह्नेन गरुडस्त्वत्पतिं शुभे ॥ ४१ ॥ कृत्वा च स्तवनं भक्त्या प्रणमिष्यति मत्पदम् ॥ त्यज त्वं गरुडाद्भीतिं शीघ्रं रमणकं व्रज ॥ ४२ ॥ ह्रदान्निर्गच्छ वत्से त्वं वरं वृणु यथेप्सितम् ॥ श्रीकृष्णस्य वचः श्रुत्वा प्रसन्नवदनेक्षणा ॥ ४३ ॥ उवाच साश्रुनेत्रा सा भक्तिनम्रात्मकंधरा ॥ ॥ सुरसोवाच ॥ ॥ वरं दास्यसि चेदानीं वरदेश्वर मेपि च ॥ ४४ ॥ त्वत्पादाब्जे दृढां भक्तिं निश्चलां दातुमर्हसि ॥ मन्मनस्त्वत्पदांभोजे भ्रमतु भ्रमरो यथा ॥ ४५ ॥ तव स्मृतेर्विस्मृतिर्मे कदापि न भविष्यति ॥ स्वकांते मम सौभाग्यं कांतोयं ज्ञानिनां वरः ॥ ४६ ॥ इत्येवं प्रार्थनीयं च परिपूर्णं कुरु प्रभो ॥ इत्येवमुक्त्वा सर्पस्त्री प्रतस्थौ पुरतो हरेः ॥ ४७ ॥ शरत्पार्वणचंद्रास्यं ददर्श श्रीहरेर्मुखम् ॥ लोचनाभ्यां पपौ वक्त्रं निमेषरहितं सती ॥ ४८ ॥ सर्वांगपुलकोद्भिन्ना सानंदाश्रुपरिप्लुता ॥ सुंदरं बालकं दृष्ट्वा पुत्रस्नेहं प्रकुर्वती ॥ ॥ ४९ ॥ उवाच पुनरेवेदं भक्त्युद्रेकपरिप्लुता ॥ न यास्यामि रमणकं तत्र नास्ति प्रयोजनम् ॥ ५० ॥ सर्पः करोतु संसारं कुरु मां निजकिंकरीम् ॥ न वांछा मम हे कृष्ण सालोक्यादिचतुष्टये ॥ ५१ ॥ त्वत्पदांभोजसेवायाः कलां नार्हति षोडशीम् ॥ विना त्वत्पा

दसेवां च यो वांछति वरांतरम्॥५२॥भारते दुर्लभं जन्म लब्ध्वासौ वञ्चितः स्वयम् ॥ नागपत्न्या वचः श्रुत्वा स्मेराननसरोरुहः॥५३॥ प्रसन्नमानसः श्रीमानोमित्येवमुवाच ह ॥ एतस्मिन्नंतरे दिव्यः सद्रत्नसारनिर्मितः ॥ ५४ ॥ आजगाम रथस्तूर्णमुद्दीप्तस्तेजसा मुने ॥ पार्षदप्रवरैर्युक्तो वस्त्रमालापरिच्छदः ॥ ५५ ॥ शतचक्रो वायुवेगो मनोयायी मनोहरः ॥ अवरुह्य रथात्तूर्णं श्यामलाः श्याम किंकराः ॥ ५६ ॥ प्रणम्य कृष्णं तां नीत्वा जग्मुर्गोलोकमुत्तमम् ॥ हरिश्छायां विनिर्माय ददौ सर्पाय तेजसा ॥५७॥ स च किंचिन्न बुबुधे मोहितो विष्णुमायया ॥ अवरुह्य सर्पमूर्ध्नः श्रीकृष्णः करुणानिधिः॥५८॥ ददौ हस्तं च कृपया शीघ्रं कालियमस्तके ॥ संप्राप्य चेतनां सद्यो ददर्श पुरतो हरिम् ॥५९॥ पुटाञ्जलियुतां साश्रुपूर्णां च सुरसां सतीम् ॥ प्रणनाम हरिं सद्यो रुरोद प्रेमविह्वलः ॥६०॥ भक्त्युद्रेकात्साश्रुनेत्रां पुलकांकितविग्रहाम् ॥ तूष्णींभूतां च तां दृष्ट्वा समुवाच कृपानिधिः ॥ यदीश्वरस्य सततं योग्यायोग्ये समा कृपा ॥६१॥ ॥ श्रीकृष्ण उवाच ॥ ॥ वरं वृणु त्वं कालिय यस्ते मनसि वर्तते ॥६२॥ त्वं मे प्राणाधिको वत्स सुखं तिष्ठ भयं त्यज ॥ तस्याहमनुगृह्णामि योतिभक्तो ममांशजः ॥ ६३ ॥ किंचित्तद्दमनं कृत्वा त्वत्प्रसादं करोम्यहम् ॥ त्वद्वंशजातान्सर्पांश्च हंति यो मानवाधमः ॥ ६४ ॥ ब्रह्महत्यासमं पापं भविता तस्य निश्चितम् ॥ मत्पादपद्मचिह्ने यः करोति दंडताडनम् ॥६५॥ द्विगुणं ब्रह्म हत्याया भविता तस्य किल्बिषम् ॥ लक्ष्मीर्यास्यति तद्गेहाच्छापं दत्त्वा सुदारुणम्॥६६॥ वंशायुर्यशसां हानिर्भविता तस्य निश्चितम् ॥ ध्रुवं वर्षशतं कालसूत्रे यास्यति मद्गिरा ॥ ६७ ॥ त्वत्प्रमाणाः कीटसंघा दंशिष्यंति च संततम् ॥ भोगांते जन्म लब्ध्वा च तन्मृत्यु स्तस्य दंशनात् ॥ ६८ ॥ तस्य वंशोद्भवानां च त्वद्वंशाद्भविता भयम् ॥ ये च त्वद्वंशजान्दृष्ट्वा सुपदांकं मदीयकम् ॥ ६९ ॥ प्रण मिष्यंति भक्त्या ते मुच्यंते सर्वपातकात् ॥ गच्छ शीघ्रं रमणकं त्यज भीतिं खगाधिपात् ॥ ७० ॥ मत्पदांकं मूर्ध्नि दृष्ट्वा त्वां भक्त्या प्रणमिष्यति ॥ तव त्वद्वंशजानां च गरुडान्न भयं क्वचित् ॥ ७१ ॥ सर्वेषां ज्ञातिसर्पाणां वरोऽद्य भव मद्वरात् ॥ वरं किं परमं वत्स वांछितं वरयाधुना ॥ ७२ ॥ भयं त्यक्त्वा कथय मां त्वदीयं दुःखभंजनम् ॥ श्रीकृष्णवचनं श्रुत्वा कालियः कंपितो भिया ॥

पुटांजलियुतो भूत्वा तमुवाच भुजंगमः ॥ ७३ ॥ ॥ कालिय उवाच ॥ ॥ वरेन्यस्मिन्मम विभो वांछा नास्ति वरप्रद ॥ ॥ ७४ ॥ भक्तिं स्मृतिं त्वत्पदाब्जे देहि जन्मनि जन्मनि ॥ जन्म ब्रह्मकुले वापि तिर्यग्योनिषु वा समम् ॥ ७५ ॥ तद्भवेत्सफलं यत्र स्मृतिस्त्वच्चरणांबुजे ॥ तन्निष्फलः स्वर्गवासो नास्ति चेत्त्वत्पदस्मृतिः ॥ ७६ ॥ त्वत्पादध्यानयुक्तस्य यत्तत्स्थानं च तत्परम् ॥ क्षणं वा कोटिकल्पं वा पुरुषायुः क्षयोस्तु वा ॥ ७७ ॥ यदि त्वत्सेवया याति सफलो निष्फलोथवा ॥ तेषां चायुर्व्ययो नास्ति ये त्वत्पादाब्जसेवकाः ॥ ७८ ॥ न संति जन्ममरणरोगशोकार्तिभीतयः ॥ इंद्रत्वे वामरत्वे वा ब्रह्मत्वे चातिदुर्लभे ॥७९॥ वांछा नास्त्येव भक्तानां त्वत्पादसेवनं विना ॥ सुजीर्णपटखंडस्य समं नूतनमेव च ॥ ८० ॥ पश्यंति भक्ताः किं चान्यत्सालोक्यादिचतुष्टयम् ॥ संप्राप्तस्त्वन्मनुर्ब्रह्मन्ननंताद्यावदेव हि ॥ ८१ ॥ तावत्त्वद्भावनेनैव त्वद्वर्णोहमनुग्रहात् ॥ मां च भक्तमपक्वं वा विज्ञाय गरुडः स्वयम् ॥ ॥ ८२ ॥ देशाद्दूरं च न्यक्कारं चकार दृढभक्तिमान् ॥ भवता च दृढां भक्तिं दत्त्वा मे वरदेश्वर ॥ ८३ ॥ स च उक्तश्च भक्तोहं न मां त्यक्तुं क्षमोधुना ॥ त्वत्पादपद्मचिह्नाक्तं दृष्ट्वा श्रीमस्तकं मम ॥ ८४ ॥ सदोषं गुणयुक्तं मां सोऽधुना त्यक्तुमक्षमः ॥ ममाराध्याश्च नागेंद्रा न तद्वाध्योहमीश्वर ॥ ८५ ॥ भयं न केभ्यः सर्वत्र तमनंतं गुरुं विना ॥ यं देवेंद्राश्च देवाश्च मुनयो मनवो नराः ॥ ८६ ॥ स्वप्ने ध्याने न पश्यंति चक्षुषोर्गोचरः स मे ॥ भक्तानुरोधात्साकारः कुतस्ते विग्रहो विभो ॥ ८७ ॥ सगुणस्त्वं च साकारो निराकारश्च निर्गुणः ॥ स्वेच्छामयः सर्वधाम सर्वबीजं सनातनम् ॥ ८८ ॥ सर्वेषामीश्वरः साक्षी सर्वात्मा सर्वरूपधृक् ॥ ब्रह्मेशशेषधर्मेंद्र वेदवेदांगपारगाः ॥ ८९ ॥ स्तोतुं यमीशं ते जाड्याः सर्पः स्तोष्यति त विभुम् ॥ हे नाथ करुणासिंधो दीनबंधो क्षमाधमम् ॥९०॥ खलस्वभावादज्ञानात्कृष्ण त्वं चर्वितो मया ॥ नास्त्रलक्ष्यो यथाकाशो न दृश्यांतो न लंघ्यकः ॥ ९१ ॥ न स्पृश्यो हि न चावर्यस्तथा तेजस्त्वमेव च ॥ इत्येवमुक्त्वा नागेंद्रः पपात चरणांबुजे ॥ ९२ ॥ ओमित्युक्त्वा हरिस्तुष्टः सर्वं तस्मै वरं ददौ ॥ नागराजकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ॥ ९३ ॥ तद्वंश्यानां च तस्यैव नागेभ्यो न भयं भवेत् ॥ स नागशय्यां कृत्वैव स्वप्तुं शक्तः सदा

भुवि ॥ ९४ ॥ विषपीयूषयोर्भेदो नास्त्येव तस्य भक्षणे ॥ नागग्रस्ते नागघाते प्राणांते विषभोजनात् ॥ ९५ ॥ स्तोत्रस्मरणमात्रेण
सुस्थो भवति मानवः ॥ भूर्जे कृत्वा स्तोत्रमिदं कंठे वा दक्षिणे करे ॥ ९६ ॥ बिभर्ति यो भक्तियुक्तो नागेभ्योपि न तद्भयम् ॥ यत्र
गेहे स्तोत्रमिदं नागस्तत्र न तिष्ठति ॥ ९७ ॥ विषाग्निवज्रभीतिश्च न भवेत्तत्र निश्चितम् ॥ इह लोके हरेर्भक्तिं स्मृतिं च सततं
लभेत् ॥ अंते च स्वकुलं पूत्वा दास्यं च लभते ध्रुवम् ॥ ९८ ॥ ॥ श्रीनारायण उवाच ॥ ॥ नागेंद्राय वरं दत्त्वा पुनस्तं जग
दीश्वरः ॥ उवाच मधुरं वाक्यं परिणामसुखावहम् ॥ ९९ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ गच्छ त्वं च रमणकं यथेंद्रनगरं परम् ॥
॥ १०० ॥ सार्द्धं स्वगोष्ठ्या नागेंद्र यमुनाजलवर्त्मना ॥ श्रुत्वा नागो हरेराज्ञां रुरोद प्रेमविह्वलः ॥ १०१ ॥ कदा द्रक्ष्यामि त्वत्पा
दपद्मं नाथेत्युवाच ह ॥ प्रणम्य शतकृत्वश्च स्त्रिया गोष्ठ्या सहेश्वरम् ॥ १०२ ॥ जगाम जलमार्गेण नागेंद्रो विरहातुरः ॥ यमुना
ह्रदतोयं च बभूवामृतकल्पकम् ॥ १०३ ॥ प्रसन्ना जंतवः सर्वे बभूवुस्तेन नारद ॥ गत्वा ददर्श भवनं यथेंद्रनगरं परम् ॥ १०४ ॥
आज्ञया च कृपासिंधोर्निर्मितं विश्वकर्मणा ॥ तत्र तस्थौ च नागेंद्रः स्त्रिया पुत्रगणैः सह ॥ १०५ ॥ निःशंको हर्षयुक्तश्च हरिभावन
तत्परः ॥ इत्येवं कथितं सर्वं हरेश्चरितमद्भुतम् ॥ सुखदं मोक्षदं सारं परं किं श्रोतुमिच्छसि ॥ १०६ ॥ ॥ सूत उवाच ॥ ॥ महं
र्षेर्वचनं श्रुत्वा नारदो हर्षविह्वलः ॥ ऋषिं पप्रच्छ संदेहं सर्वसंदेहभंजनम् ॥ १०७ ॥ ॥ नारद उवाच ॥ ॥ कथं विहाय
कालियः स्वपूर्वभवनं परम् ॥ जगाम यमुनातीरं तन्मे ब्रूहि जगद्गुरो ॥ १०८ ॥ ॥ श्रीनारायण उवाच ॥ ॥
शृणु नारद वक्ष्येहमितिहासं पुरातनम् ॥ १०९ ॥ यच्छ्रुतं धर्मवक्त्रान्मे मलये सूर्यपर्वणि ॥ कृष्णाख्यानप्रसंगेन सुप्रभा
पश्चिमे तटे ॥ ११० ॥ पप्रच्छ धर्मं पुलहः कथितं मुनिसंसदि ॥ इदमाख्यानमाश्चर्यमुवाच तं कृपानिधिः ॥ १११ ॥ तत्र
श्रुतं मया विप्र निबोध कथयामि ते ॥ शेषाज्ञया नागगणाः प्रतिसंवत्सरं भिया ॥ ११२ ॥ कार्तिकीपूर्णिमायां तु कुर्वंति
गरुडार्चनम् ॥ पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्बलिभिर्मुदा ॥ ११३ ॥ पुष्करे च महातीर्थे सुस्नातो भक्तिसंयुतः ॥ तस्य पूजां च काली

योन चकारात्यहंकृतः ॥ ११४ ॥ नागपूजोपकरणं बलाद्भक्षितुमुद्यतः ॥ चक्रुर्निवारणं नागा नीतिमूचुर्मदोद्धतम् ॥ ११५ ॥ न
शक्ता वारणे ते चेत्याविर्भूतः खगेश्वरः ॥ दृष्ट्वा खगेश्वरं नागाः कालीयप्राणरक्षया ॥ ११६ ॥ प्राणशक्त्या च युयुधुर्यावत्सूर्योदयं
मुने ॥ पक्षींद्रतेजसा सर्वे समुद्विग्नाः पलायिताः ॥ ११७ ॥ अनन्तं शरणं जग्मुः सर्वेषामभयप्रदम् ॥ पलायनपरान्दृष्ट्वा नागांश्च
करुणानिधिः ॥ ११८ ॥ तत्र तस्थौ च निःशंकः कालीयस्तं ददर्श ह ॥ स्मृत्वा हरिपदांभोजं कालीयो युयुधे मुने ॥ ११९ ॥
मुहूर्तं च तयोर्युद्धं बभूवातीव दारुणम् ॥ पराजितश्च नागेंद्रस्तेजसा गरुडस्य च ॥ १२० ॥ भिया पलायनं कृत्वा जगाम यमुना
ह्रदम् ॥ न तं सौभरिशापेन खगेंद्रो गन्तुमीश्वरः ॥ तत्र तस्थौ भिया नागो जग्मुः पश्चाच्च तद्गणाः ॥१२१॥ ॥ नारद उवाच ॥ ॥
कथं तु सौभरेः शापो बभूव गरुडाय वै ॥ कथं न शक्तो गन्तुन्तं ह्रदमीश्वरवाहनः ॥ १२२ ॥ ॥ श्रीनारायण उवाच ॥ ॥ दिव्यं
वर्षसहस्रं च वर्षाणां तत्र सौभरिः ॥ १२३ ॥ तपस्तप्त्वा महासिद्धो दध्यौ कृष्णपदांबुजम् ॥ समीपे ध्यायमानस्य कूले च यमुन
जले ॥ १२४ ॥ गणेन सार्धं निःशंकः करोति भ्रमणं मुदा ॥ पुच्छमुत्फाल्य बहुधा परितः परमेच्छया ॥ १२५ ॥ मुनिं प्रदक्षिणी
कृत्य यात्यायाति मुदान्वितः ॥ सकुलं सुमहात्मानं दर्शंदर्शं खगाधिपः ॥ १२६ ॥ जग्राह चंचुना मीनं मुनींद्रस्य समीपतः ॥
गच्छन्तं तं मीनमुखं ददर्श कोपचक्षुषा ॥ १२७ ॥ प्रकंपितो मुनेर्दृष्ट्या मीनस्तोये पपात ह ॥ तमुवाच मुनींद्रश्च पुनरादातुमुद्य
तम् ॥ मीनश्च गरुडत्रासात्तस्थौ मुनिसमीपतः ॥ १२८ ॥ ॥ सौभरिरुवाच ॥ ॥ गच्छ दूरं गच्छ दूरं खगेंद्र मत्समीपतः ॥१२९॥
का योग्यता मत्पुरस्ते ग्रहीतुं जीवमुल्बणम् ॥ श्रीकृष्णवाहनं ज्ञात्वा चात्मानं बहु मन्यसे ॥१३०॥ त्वद्विधान्कोटिशः कृष्णः स्रष्टुं
शक्तश्च वाहकान् ॥ करोमि भस्मसाच्चूर्णं त्वां च भ्रूभंगलीलया ॥ १३१ ॥ वाहनं च त्वमीशस्य न वयं तव किंकराः ॥ अद्य प्र
भृति पक्षींद्र यद्यागच्छसि मे ह्रदम् ॥ १३२ ॥ मदीयशापात्तूर्णं च भस्मसाद्भविता ध्रुवम् ॥ मुनींद्रस्य वचः श्रुत्वा प्रचचाल खगे
श्वरः ॥ १३३ ॥ स्मारंस्मारं कृष्णपादं तं प्रणम्य जगाम ह ॥ अद्यप्रभृति विप्रेंद्र पतगेंद्रस्य संततम् ॥ १३४ ॥ ह्रदस्य श्रुतिमा

त्रेण कंपो भवति निश्चितम् ॥ इतिहासश्च कथितो यः श्रुतो धर्मवक्त्रतः ॥ १३५ ॥ सरहस्य श्रुतसुख प्रकृत शृणु मंगलम् ॥ विज्ञा
य सुचिरं बाला नोत्तस्थौ तज्जलाद्धरिः ॥ १३६ ॥ चक्रुर्विषादं मोहाच्च रुरुदुर्यमुनातटे ॥ स्ववक्षोघातनं चक्रुः केचिद्बालाः शुचा
कुलाः ॥ १३७ ॥ केचिन्निपत्य भूमौ च मूर्छां प्रापुर्हरिं विना ॥ ह्रदं प्रवेष्टुं केचिच्च विरहेण समन्विताः ॥१३८॥ केचिद्गोपालबालाश्च
चक्रुश्च तन्निवारणम् ॥ कृत्वा विलापं केचिच्च प्राणांस्त्यक्तुं समुद्यताः ॥ १३९ ॥ तेषां केचिज्ज्ञानवंतो रक्षां चक्रुः प्रयत्नतः ॥
केचिदूचुश्च हाहेति कृष्णकृष्णेति केचन ॥ १४० ॥ केचिद्वक्तुं प्रवृत्तिं च प्रययुर्नंदसन्निधिम् ॥ केचित्संमीलितास्तत्र शोकमोहभया
तुराः ॥ १४१ ॥ इत्यूचुः किं करिष्यामः कुतोऽस्माकं गतो हरिः ॥ हे नंदसूनो हे कृष्ण प्राणेभ्योऽप्यधिकप्रिय ॥ १४२ ॥ हे बंधो
दर्शनं देहीत्यूचुः प्राणाः प्रयांति हि ॥ एतस्मिन्नंतरे केचिद्बालका नंदसन्निधिम् ॥ १४३ ॥ संप्रापुरतिलोलाश्च रुदंतः शोकविह्वलाः ॥
प्रवृत्तिमूचुस्तं शीघ्रं यशोदां मूलतो बलम् ॥ १४४ ॥ गोपान्गोपालिकाश्चैव रक्तपंकजलोचनाः ॥ श्रुत्वा वार्तां च ते सर्वे शीघ्रं
जग्मुः शुचान्विताः ॥ १४५ ॥ कालिंदनंदिनीतीरं रुरुदुर्बालकैर्युताः ॥ गत्वा समीलिताः सर्वे रुरुदुः शोकमूर्च्छिताः ॥ १४६ ॥
ह्रदं विशन्तीमंबां तां केचिच्चक्रुर्निवारणम् ॥ गोपा गोपालिकाश्चैव जघ्नुरंगानि शोकतः ॥ १४७ ॥ केचिद्विललपुस्तत्र मूर्च्छां प्रापुश्च
केचन ॥ ह्रदं विशंतीं तां राधां वारयामास काचन ॥ १४८ ॥ मूर्च्छां च प्राप सा शोकान्मृतेव च सरित्तटे ॥ विलप्या
तिभृशं नंदो मूर्च्छां प्राप पुनः पुनः ॥ १४९ ॥ भूयोपि रोदनं कृत्वा भूयो मूर्च्छामवाप ह ॥ विलपंतं भृशं नंदं यशोदां
शोककर्शिताम् ॥ १५० ॥ गोपाश्च गोपिकाश्चैव राधिकामतिमूर्च्छिताम् ॥ रुदतो बालकान्सर्वान्बालिकाश्च शुचान्विताः ॥
सर्वांश्च बोधयामास बलश्च ज्ञानिनां वरः ॥ १५१ ॥ ॥ श्रीबलदेव उवाच ॥ ॥ गोपा गोपालिका बालाः सर्वे शृणुत
मद्वचः ॥ १५२ ॥ हे नंद ज्ञानिनां श्रेष्ठ गर्गवाक्यस्मृतिं कुरु ॥ जगद्विभर्तुः शेषस्य संहर्तुः शंकरस्य च ॥ १५३ ॥ विधातुः संवि
धातुश्च भुवि कस्मात्पराजयः ॥ परमाणुः परो व्यूहः स्थूलात्स्थूलः परात्परः ॥ १५४ ॥ विद्यमानोप्यविदृश्यः संयोगो

योगिनामपि ॥ दिशां नास्ति समाहारः स्पृश्यो नाकाश एव च ॥ १५५ ॥ अपि सर्वेश्वरो बाध्य इत्यूचुः श्रुतयः स्फुटम् ॥
नात्मा दृश्यो नास्त्रलक्ष्यो न वध्यो न हि दृश्यकः ॥ १५६ ॥ नाग्निग्रस्तो न हिंस्यश्चापीदमाध्यात्मिका विदुः ॥ विग्रहोस्यैव
कृष्णस्य भक्तध्यानार्थमेव च ॥ १५७ ॥ ज्योतिःस्वरूपस्य विभोर्नाद्यंतमध्यमात्मनः ॥ जलप्लुते च ब्रह्मांडे जलशायी
जनार्दनः ॥ १५८ ॥ यन्नाभिपद्मजो ब्रह्मा तस्येशस्य ह्रदे विपत् ॥ मशकश्चेत्क्षमो ग्रस्तुं ब्रह्मांडमखिलं पितः ॥ १५९ ॥
न तथापि तदीशं तं ग्रस्तुं सर्पः क्षमो भवेत् ॥ इत्येवं कथितं सर्वमाध्यात्मिकमनुत्तमम् ॥ १६० ॥ निगूढं योगिनां सारं
संशयच्छेदकारणम् ॥ बलदेववचः श्रुत्वा गर्गवाक्यमनुस्मरन् ॥ १६१ ॥ तत्याज शोकं नंदश्च व्रजश्च व्रजयोषितः ॥
प्रबोधं मेनिरे सर्वे न यशोदा न राधिका ॥ १६२ ॥ बंधुविच्छेदविषये प्रबोधे न स्थितं मनः ॥ एतस्मिन्नंतरे कृष्णमुत्पततं
जलान्मुने ॥ १६३ ॥ ददृशुस्तं सुप्रसन्ना व्रजाश्च व्रजयोषितः ॥ शरत्पार्वणचंद्रास्यं सस्मितं सुमनोहरम् ॥ १६४ ॥ अस्निग्धवस्त्रम
स्निग्धमलुप्तचंदनांजनम् ॥ सर्वाभरणसंयुक्तं ज्वलंतं ब्रह्मतेजसा ॥ १६५ ॥ मयूरपिच्छचूडं च वंशीवदनमच्युतम् ॥ यशोदा बालकं
दृष्ट्वा कृत्वा वक्षसि सस्मिता ॥ १६६ ॥ चुचुंब वदनांभोजं प्रसन्नवदनेक्षणा ॥ क्रोडे चकार नंदश्च बलश्च रोहिणी मुदा
॥ १६७ ॥ निमेषरहिताः सर्वे ददृशुः श्रीमुखं हरेः ॥ प्रेमांधा बालकाः सर्वे चक्रुरालिंगनं हरेः ॥ १६८ ॥ पपुश्चक्षुश्चकोरैश्च
मुखचंद्रं च गोपिकाः ॥ एतस्मिन्नंतरे तत्र सहसा काननांतरम् ॥ १६९ ॥ दावाग्निर्वेष्टयामास तैः सर्वैः सह गोकुलम् ॥
दृष्ट्वा शैलप्रमाणाग्निं परितः काननांतरे ॥ १७० ॥ प्रणाशं मेनिरे सर्वे भयमापुश्च संकटे ॥ श्रीकृष्णं तुष्टुवुः सर्वे संपुटांजलयो
व्रजाः ॥ बाला गोप्यश्च संत्रस्ता भक्तिनम्रात्मकंधराः ॥ १७१ ॥ ॥ बाला ऊचुः ॥ ॥ यथा संरक्षितं ब्रह्मन्सर्वापत्स्वेव नः कुलम् ॥
॥ १७२ ॥ तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ॥ त्वमिष्टदेवतास्माकं त्वमेव कुलदेवता ॥ १७३ ॥ स्रष्टा पाता च संहर्ता जगतां च ॥ ६२ ॥
जगत्पते ॥ वह्निर्वा वरुणो वापि चंद्रो वा सूर्य एव च ॥ १७४ ॥ यमः कुबेरः पवन ईशानाद्याश्च देवताः ॥ ब्रह्मेशशेषधर्मेंद्रा

मुनींद्रा मनवः स्मृताः ॥ १७५ ॥ मानवाश्च तथा दैत्या यक्षराक्षसकिंनराः ॥ येये चराचराश्चैव सर्वे तत्र विभूतयः ॥ १७६ ॥
आविर्भावस्तिरोभावः सर्वेषां च तवेच्छया ॥ अभयं देहि गोविंद वह्निसंहरणं कुरु ॥ १७७ ॥ वयं त्वां शरणं यामो रक्ष नः शरणा
गतान् ॥ इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदांबुजम् ॥ १७८ ॥ दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टितः ॥ दूरीभूते च दावाग्नौ
ननृतुस्ते मुदान्विताः ॥ १७९ ॥ सर्वापदः प्रणश्यंति हरिस्मरणमात्रतः ॥ इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत् ॥ १८० ॥
वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ॥ शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसंकटे ॥ १८१ ॥ स्तोत्रमेतत्पठित्वा तु मुच्यंते
नात्र संशयः ॥ शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत् ॥ इह लोके हरेर्भक्तिमंते दास्यं लभेद्ध्रुवम् ॥ १८२ ॥ ॥ श्रीनारायण
उवाच ॥ ॥ दावाग्निमोक्षणं कृत्वा तैः सार्द्धं शृणु नारद ॥ जगाम श्रीहरिर्गेहं कुबेरभवनोपमम् ॥ १८३ ॥ ब्राह्मणेभ्यो धनं नंदः
परिपूर्णं ददौ मुदा ॥ भोजनं कारयामास ज्ञातिवर्गांश्च बांधवान् ॥ १८४ ॥ नानाविधं मंगलं च हरेर्नामानुकीर्तनम् ॥ वेदांश्च पाठ
यामास विप्रद्वारा मुदान्वितः ॥ १८५ ॥ एवं मुमुदिरे सर्वे वृंदारण्ये गृहेगृहे ॥ श्रीकृष्णचरणांभोजध्यानैकतानमानसाः ॥ १८६ ॥
इत्येवं कथितं सर्वं हरेश्चरितमंगलम् ॥ कलिकिल्बिषकाष्ठानां दहने दहनोपमम् ॥१८७॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्म
खंडे नारायणनारदसंवादे कालीयदमनदावाग्निमोक्षणंनामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एकदा बालकैः
सार्द्धं बलेन सह माधवः ॥ भुक्त्वा पीत्वानुलिप्तश्च वृंदारण्यं जगाम ह ॥ १ ॥ क्रीडां चकार भगवान्कौतुकेन च तैःसह ॥ क्रीडानि
मग्नचित्तानां दूरं तद्गोकुलं ययौ ॥ २ ॥ तस्य प्रभावं विज्ञातुं विधाता जगतां पतिः ॥ चकार निर्हृतिं गाश्च वत्सांश्च बालकानपि
॥ ३ ॥ विज्ञाय तदभिप्रायं सर्वज्ञः सर्वकारकः ॥ पुनश्चकार तत्सर्वं योगींद्रो योगमायया ॥ ४ ॥ जगाम श्रीहरिर्गेहं कालयित्वा च
गोकुलम् ॥ बलेन बालकैः सार्धं क्रीडाकौतुकमानसः ॥ ५ ॥ एवं चकार भगवान्वर्षमेकं च प्रत्यहम् ॥ यमुनागमनं गोभिर्बलेन
सह बालकैः ॥ ६ ॥ ब्रह्मा प्रभावं विज्ञाय लज्जानम्रात्मकंधरः ॥ आजगाम हरेः स्थानं भांडीरवटमूलके ॥ ७ ॥ ददर्श कृष्णं तत्रैव

गोपालगणवेष्टितम् ॥ यथा पार्वणचंद्रं च विभांतं स्वगणैः सह ॥ ८ ॥ रत्नसिंहासनस्थं च हसंतं सस्मितं मुदा ॥ पीतवस्त्रपरीधानं ज्वलंतं ब्रह्मतेजसा ॥९॥ रत्नकेयूरवलयरत्नमंजीररंजितम् ॥ रत्नकुंडलयुग्माभ्यां स्वकपोलस्थलोज्ज्वलम् ॥१०॥ कोटिकंदर्पलावण्यं लीलाधाममनोहरम् ॥ चंदनागुरुकस्तूरीकुंकुमार्चितविग्रहम् ॥११॥ पारिजातप्रसूनानां मालाजालैर्विभूषितम् ॥ नवीननीरदश्यामं प्रोद्भिन्नवयौवनम् ॥ १२ ॥ मालतीमाल्यसंयुक्तं मयूरपिच्छचूडकम् ॥ स्वांगसौंदर्यदीप्त्या च कृतभूषणभूषितम् ॥१३॥ शरत्पार्वणचंद्रस्य प्रभामुष्टास्यसुंदरम् ॥ पक्वबिंबाधरौष्ठं च खगेंद्रचंचुनासिकम् ॥ १४ ॥ शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम् ॥ मुक्तापंक्तिविनिंद्यैकदंतपंक्तिमनोहरम् ॥१५॥ कौस्तुभेन मणींद्रेण वक्षःस्थलसमुज्ज्वलम् ॥ शांतं च राधिकाकांतं परिपूर्णतमं परम् ॥१६॥ एवंभूतं प्रभुं दृष्ट्वा प्रणनामातिविस्मितः ॥ दर्शंदर्शमीश्वरं तं प्रणनाम पुनःपुनः ॥ १७ ॥ यद्दृष्टं हृदयांभोजे तद्रूपं बहिरेव च ॥ या मूर्तिः पुरतो दृष्टा सा पश्चात्परितस्ततः ॥ १८ ॥ तत्र वृंदावने सर्वं दृष्ट्वा कृष्णसमं मुने ॥ ध्यायंध्यायं च तद्रूपं तत्र तस्थौ जगद्गुरुः ॥ ॥ १९ ॥ गावो वत्साश्च बालाश्च लतागुल्माश्च वीरुधः ॥ सर्वं वृंदावनं ब्रह्मा श्यामरूपं ददर्श ह ॥ २० ॥ दृष्ट्वैवं परमाश्चर्यं पुनर्ध्यानं चकार ह ॥ ददर्श त्रिजगद्ब्रह्मा नान्यत्कृष्णं विना मुने ॥ २१ ॥ क्व च वृक्षः क्व वा शैलः क्व मही क्व च सागराः ॥ क्व देवाः क्व च गंधर्वा मुनींद्राः क्व च मानवाः ॥ २२ ॥ क्व चात्मा क्व जगद्बीजं क्व स्वर्गः क्वायमेव च ॥ सर्वं च स्वदृशा ब्रह्मा ददर्श मायया हरेः ॥ २३ ॥ क्व कृष्णो जगतां नाथः क्व वा मायाविभूतयः ॥ सर्वं कृष्णमयं दृष्ट्वा किंचिन्निर्वक्तुमक्षमः ॥ २४ ॥ किं स्तौमि किं करोमीति मनसैवं प्रगृह्य च ॥ तत्र स्थित्वा जगद्धाता जपं कर्तुं समुद्यतः ॥ २५ ॥ सुखं योगासनं कृत्वा बभूव संपुटांजलिः ॥ पुलकांकितसर्वांगः साश्रुनेत्रोतिदीनवत् ॥ २६ ॥ इडां सुषुम्नां मध्यां च पिंगलां नलिनीं धुराम् ॥ नाडीषट्कं च योगेन निबद्ध्य च प्रयत्नतः ॥ २७ ॥ मूलाधारं स्वाधिष्ठानं मणिपूरं मनोहरम् ॥ विशुद्धं परमाज्ञाख्यं षट्चक्रं च निबद्ध्य च ॥ २८ ॥ लंघनं कारयित्वा च तत्षट्चक्रं क्रमाद्विधिः ॥ ब्रह्मरंध्रं समानीय वायुबंधं चकार ह ॥२९॥ निबध्य वायुं मध्यां तामानीय हृदयांबुज

म् ॥ तं वायुं भ्रामयित्वा च योजयामास मध्यया ॥ ३० ॥ एवं कृत्वा तु निष्पंदो यो दत्तो हरिणा पुरा ॥ जजाप परमं मंत्रं तस्यै
व च दशाक्षरम् ॥ ३१ ॥ मुहूर्तं च जपं कृत्वा ध्यायंध्यायं पदांबुजम् ॥ ददर्श हृदयांभोजे सर्वतेजोमयं मुने ॥ ३२ ॥ तत्तेजसोंतरे
रूपमतीव सुमनोहरम् ॥ द्विभुजं मुरलीहस्तं भूषितं पीतवाससा ॥ ३३ ॥ श्रुतिमूलस्थलन्यस्तज्वलन्मकरकुंडलम् ॥ ईषद्धास्यप्रस
न्नास्यं भक्तानुग्रहकातरम् ॥ ३४ ॥ यद्दृष्टं ब्रह्मरंध्रे च हृदि तद्बहिरेव च ॥ दृष्ट्वा च परमाश्चर्यं तुष्टाव परमेश्वरम् ॥ ३५ ॥ यत्स्तोत्रं
च पुरा दत्तं हरिणैकार्णवे मुने ॥ तमीशं तेन विधिना भक्तिनम्रात्मकंधरः ॥ ३६ ॥ ॥ ब्रह्मोवाच ॥ ॥ सर्वस्वरूपं सर्वेशं सर्वकारण
कारणम् ॥ सर्वानिर्वचनीयं तं नमामि शिवरूपिणम् ॥ ३७ ॥ नवीनजलदाकारं श्यामसुंदरविग्रहम् ॥ स्थितं जंतुषु सर्वेषु
निर्लिप्तं साक्षिरूपिणम् ॥ ३८ ॥ स्वात्मारामं पूर्णकामं जगद्व्यापिजगत्परम् ॥ सर्वस्वरूपं सर्वेषां बीजरूपं सना
तनम् ॥ ३९ ॥ सर्वाधारं सर्ववरं सर्वशक्तिसमन्वितम् ॥ सर्वाराध्यं सर्वगुरुं सर्वमंगलकारणम् ॥ ४० ॥ सर्वमंत्रस्वरूपं
च सर्वसंपत्करं वरम् ॥ शक्तियुक्तमयुक्तं च स्तौमि स्वेच्छामयं विभुम् ॥ ४१ ॥ शक्तीशं शक्तिबीजं च शक्तिरूपधरं वरम् ॥
संसारसागरे घोरे शक्तिनौकासमन्वितम् ॥ ४२ ॥ कृपालुं कर्णधारं च नमामि भक्तवत्सलम् ॥ आत्मस्वरूपमेकांतं लिप्तं
निर्लिप्तमेव च ॥ ४३ ॥ सगुणं निर्गुणं ब्रह्म स्तौमि स्वेच्छास्वरूपिणम् ॥ सर्वेंद्रियादिदेवं तमिंद्रियालयमेव च ॥ ४४ ॥ सर्वेंद्रियस्व
रूपं च विराड्रूपं नमाम्यहम् ॥ वेदं च वेदजनकं सर्ववेदांगरूपिणम् ॥ ४५ ॥ सर्वमंत्रस्वरूपं च नमामि परमेश्वरम् ॥ सारात्सारतरं
द्रव्यमपूर्वमनिरूपिणम् ॥ ४६ ॥ स्वतंत्रमस्वतंत्रं च यशोदानंदनं भजे ॥ संतं सर्वशरीरेषु तमदृष्टमनूहकम् ॥ ४७ ॥ ध्यानासाध्यं
विद्यमानं योगींद्राणां गुरुं भजे ॥ रासमंडलमध्यस्थं रासोल्लाससमुत्सुकम् ॥ ४८ ॥ गोपीभिः सेव्यमानं च तं धरेशं नमाम्यहम् ॥
सतां सदैव संतं तमसंतमसतामपि ॥ ४९ ॥ योगीशं योगसाध्यं च नमामि शिवसेवितम् ॥ मंत्रबीजं मंत्रराजं मंत्रदं फलदं फलम् ॥
॥ ५० ॥ मंत्रसिद्धिस्वरूपं तं नमामि च परात्परम् ॥ सुखं दुःखं च सुखदं दुःखदं पुण्यमेव च ॥५१॥ पुण्यप्रदं च शुभदं शुभबीजं

नमाम्यहम् ॥ इत्येवं स्तवनं कृत्वा दत्त्वा गाश्च स बालकान् ॥ ५२ ॥ निपत्य दंडवद्भूमौ रुरोद प्रणनाम च ॥ ददर्श चक्षुरुन्मी
ल्य विधाता जगतां मुने ॥ ५३ ॥ ब्रह्मणा च कृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥ इह लोके सुखं भुक्त्वा यात्यंते श्रीहरेः
पदम् ॥ ५४ ॥ लभते दास्यमतुलं स्थानमीश्वरसन्निधौ ॥ लब्ध्वा च कृष्णसान्निध्यं पार्षदप्रवरो भवेत् ॥ ५५ ॥ ॥ श्रीनारायण
उवाच ॥ ॥ गते जगत्कारणे च ब्रह्मलोके च ब्रह्मणि ॥ श्रीकृष्णो बालकैः सार्धं जगाम स्वालयं विभुः ॥ ५६ ॥ गावो वत्साश्च
बालाश्च जग्मुर्वर्षांतरे गृहम् ॥ श्रीकृष्णमायया सर्वे मेनिरे ते दिनांतरम् ॥ ५७ ॥ गोपा गोपालिकाः किंचित्तत्कर्तुं न क्षमा
स्तदा ॥ योगिनः कृत्रिमं सर्वं किं नूत्नं वा पुरातनम् ॥ ५८ ॥ इत्येवं कथितं सर्वं श्रीकृष्णचरितं शुभम् ॥ सुखदं मोक्षदं
पुण्यं सर्वकालसुखावहम् ॥ ५९ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे गोवत्सबालकहरणप्रस्तावो
नाम विंशोऽध्यायः ॥ २० ॥ ॥ श्रीनारायण उवाच ॥ ॥ एकदानंदयुक्तश्च नंदो गोपव्रजे मुने ॥ दुंदुभिं वादयामास शक्रयागकृ
तोद्यमः ॥ १ ॥ दधि क्षीरं घृतं तक्रं नवनीतं गुडं मधु ॥ एतान्यादाय शक्रस्य पूजां कुर्वंत्विति ब्रुवन् ॥ २ ॥ येये संत्यत्र
नगरे गोपा गोप्यश्च बालकाः ॥ बालिकाश्च द्विजा भूयो वैश्याः शूद्राश्च भक्तितः ॥ ३ ॥ इत्येवं श्रावयामास स्वयमेव
मुदान्वितः ॥ यष्टिमारोपयामास रम्यस्थाने सुविस्तृते ॥ ४ ॥ ददौ तत्र क्षौमवस्त्रं मालाजालं मनोहरम् ॥
चंदनागुरुकस्तूरीकुंकुमद्रवमेव च ॥ ५ ॥ स्नातः कृताह्निको भक्त्या धृत्वा धौते च वाससी ॥ उवास स्वर्णपीठे च प्रक्षालितपदां
बुजः ॥ ६ ॥ नानाप्रकारपात्रैश्च ब्राह्मणैश्च पुरोहितैः ॥ गोपालैर्गोपिकाभिश्च बालाभिः सह बालकैः ॥ ७ ॥ एतस्मिन्नंतरे तत्राजग्मु
र्नगरवासिनः ॥ महासंभृतसंभारा नानोपायनसंयुताः ॥ ८ ॥ आजग्मुर्मुनयः सर्वे ज्वलंतं ब्रह्मतेजसा ॥ शांताः शिष्यगणैः सार्धं
वेदवेदांगपारगाः ॥ ९ ॥ गर्गश्च गालवश्चैव शाकल्यः शाकटायनः ॥ गौतमः करुषः कण्वो वात्स्यः कात्यायनस्तथा ॥ १० ॥ ॥ ६४ ॥
सौभरिर्वामदेवश्च याज्ञवल्क्यश्च पाणिनिः ॥ ऋष्यशृंगो गौरमुखो भरद्वाजश्च वामनः ॥ ११ ॥ कृष्णद्वैपायनः शृंगी सुमंतुर्जैमिनिः

कचः ॥ पराशरश्च मैत्रेयो वैशंपायन एव च ॥ १२ ॥ ब्राह्मणाश्च कतिविधा भिक्षुका बंदिनस्तथा ॥ भूपा वैश्याश्च शूद्राश्च समाज
ग्मुर्महोत्सवे ॥ १३ ॥ दृष्ट्वा मुनींद्रान्नंदश्च ब्राह्मणान्भूमिपांस्तथा ॥ स्वर्णपीठात्समुत्तस्थौ व्रजाश्चोत्तस्थुरेव च ॥ १४ ॥ प्रणम्य वास
यामास मुनींद्रान्विप्रभूमिपान् ॥ तेषामनुमतिं प्राप्य तत्रोवास पुनर्मुदा ॥ १५ ॥ पाकं च यष्टिनिकटे कर्तुमाज्ञां चकार ह ॥
पाकप्राज्ञं ब्राह्मणानां शतमानीय सादरम् ॥ १६ ॥ तत्र रत्नप्रदीपाश्च जज्वलुः परितस्तथा ॥ अंधीभूतं च धूपेन स्थानं तत्सुरभी
कृतम् ॥ १७ ॥ नानाविधानि पुष्पाणि माल्यानि विविधानि च ॥ नैवेद्यं च बहुविधमपूर्वं सुमनोहरम् ॥ १८ ॥ तिललड्डुकपूर्णं
च मंडकानां सहस्रकम् ॥ स्वस्तिकैः परिपूर्णं च यष्टिस्थानं च नारद ॥ १९ ॥ कलशानां सहस्रं च पूर्णं शर्करया मुने ॥ यवगो
धूमचूर्णानां लड्डुकैर्मधुरैर्वरैः ॥ २० ॥ घृतपक्वैर्विप्रकृतैः पूर्णानि कलशानि च ॥ वृक्षपक्वानि रम्याणि चारुरंभाफलानि च
॥ २१ ॥ फलानि परिपक्वानि कालदेशोद्भवानि च ॥ क्षीराणां कुंभलक्षाणि दध्नां तावंति नारद ॥ २२॥ मधूनां कुंभशतकं सर्पिःकुंभ
सहस्रकम् ॥ कलशानां त्रिलक्षाणि तक्रपूर्णानि निश्चितम् ॥ २३ ॥ घटानां पंचलक्षाणि गुणपूर्णानि निश्चितम् ॥ तिलतैलेन पूर्णं
च कलशानां सहस्रकम् ॥ २४ ॥ वृषेंद्राश्च बहुविधा भोगार्हद्रव्यवाहकाः ॥ नानाविधानि पात्राणि सौवर्णराजतानि च ॥२५॥
स्वर्णपीठानि च ब्रह्मन्नाजग्मुर्यष्टिसन्निधिम् ॥ वस्त्राणि वरणार्हाणि चारूणि भूषणानि च ॥ २६ ॥ नानाविधानि वाद्यानि चारूणि
मधुराणि च ॥ वादकाः स्वरयंत्राणि वादयामासुरुत्सवे ॥ २७ ॥ छागलानां सहस्राणि महिषाणां शतानि च ॥ मेषकाणां च
लक्षाणि ह्यानयामास तत्र वै ॥२८॥ शतान्येव गण्डकानामाजग्मुर्यष्टिसंनिधिम् ॥ प्रेक्षितानि च सर्वाणि रक्षितानि च रक्षकैः ॥२९॥
बालकानां बालिकानां वृक्षाणां वृक्षयोषिताम् ॥ यूनां च युवतीनां च संख्यां कर्तुं च कः क्षमः॥३०॥ गायकानां च संगीतं नर्तकानां
च नर्तनम् ॥ श्रुत्वा दृष्ट्वा जनाः सर्वे मुमुहुः सुमहोत्सवे ॥ ३१ ॥ रंभोर्वशी मेनका च घृताची मोहिनी रतिः ॥ प्रभावती भानुमती
विप्रचित्तिस्तिलोत्तमा ॥ ३२ ॥ चंद्रप्रभा सुप्रभा च रत्नमाला मदालसा ॥ रेणुका रमणी ब्रह्मन्नेता आजग्मुरुत्सवे ॥ ३३ ॥ तासां

नृत्येन गीतेन स्तनास्यश्रोणिदर्शनात् ॥ रूपेण वक्रदृष्ट्या च मूर्छां प्रापुश्च मानवाः ॥ ३४ ॥ एतस्मिन्नंतरे शीघ्रमाजगाम हरिः स्वयम् ॥ गोपालबालकैः सार्धं बलेन बलशालिना ॥३५॥ दृष्ट्वा तं च जनाः सर्वे संभ्रांता हर्षविह्वलाः ॥ उत्तस्थुराराद्रीताश्च पुलकांकितविग्रहाः ॥ ३६ ॥ क्रीडास्थानात्समायांतं शांतं सुंदरविग्रहम् ॥ विनोदमुरलीवेणुशृंगशब्दसमन्वितम् ॥ ३७ ॥ सद्रत्नसारभूषाभिर्भूषितं कौस्तुभेन च ॥ चंदनागुरुपंकेन चर्चितं श्यामविग्रहम् ॥ ३८ ॥ शरन्मध्याह्नपद्मास्यं पश्यंतं रत्नदर्पणे ॥ चारुचंदनचंद्रेण कस्तूरीबिंदुना सह ॥ ३९ ॥ शशांकेन यथाकाशं भालमध्यविराजितम् ॥ मालतीमालया श्यामकंठवक्षःस्थलोज्ज्वलम् ॥ ४० ॥ बकपंक्त्या यथाकाशं शारदीयं सुनिर्मलम् ॥ चारुणा पीतवस्त्रेण शोभितं श्यामविग्रहम् ॥ ४१ ॥ विभांतं विद्युता शश्वन्नवीनं नीरदं यथा ॥ कुंदप्रसूनैर्गुंजाभिर्बद्धवक्रिमचूडकम् ॥ ४२ ॥ यथेंद्रधनुषा भाति विभांतं भगणैर्नभः ॥ रत्नकुंडलदीप्त्या च स्मितवक्त्रसुशोभितम् ॥ ४३ ॥ शरत्प्रफुल्लपद्मं च द्युमणेः किरणैर्यथा ॥ विप्रक्षत्रियवैश्याश्च मुनयो बल्लवा मुने ॥ ४४ ॥ प्रणम्य वासयामासू रत्नसिंहासने शुभे ॥ उवास रत्नपीठे स तेषां मध्ये जगत्पतिः ॥ ४५ ॥ यथा बभौ शरच्चंद्रो ज्योतिषामंतरे च खे ॥ श्रुत्वा तमूचुस्ते सर्वे जगतामीश्वरं परम् ॥ ४६ ॥ स्वेच्छामयं गुणातीतं ज्योतीरूपं सनातनम् ॥ दृष्ट्वा महोत्सवं शीघ्रमुवाच पितरं हरिः ॥ सर्वेषां दुर्लभां नीतिं नीतिशास्त्रविशारदः ॥ ४७ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ भोभो बल्लवराजेंद्र किं करोषीह सुव्रत ॥ ४८ ॥ आराध्यः कश्च का पूजा किं फलं पूजने भवेत् ॥ फलेन साधनं किं वा कः साध्यः साधनेन च ॥ ४९ ॥ देवे रुष्टे भवेत्किं वा पूजायाः प्रतिबंधके ॥ तुष्टो देवः किं ददाति फलमत्र परत्रकम् ॥ ५० ॥ काचिद्ददात्यत्र फलं परत्रेह न काचन ॥ काचिच्च नोभयत्रापि चोभयत्रापि काचन ॥ ५१ ॥ अवेदविहिता पूजा सर्वहानिकरंडिका ॥ पूजेयमधुना वा ते किमु वा पुरुषक्रमात् ॥ ५२ ॥ दृष्टो देवस्त्वया कस्मिन्पूजेयं चानुसारिणी ॥ साक्षात्खादति देवस्ते साक्षात्किं वा न खादति ॥ ५३ ॥ साक्षाद्भुंक्ते च यो देवः सुप्रशस्तं तदर्चनम् ॥ साक्षात्खादति नैवेद्यं विप्ररूपी जनार्दनः ॥ ५४ ॥ ब्राह्मणे परितुष्टे

च संतुष्टाः सर्वदेवताः ॥ किं तस्य देवपूजायां यो नियुक्तो द्विजार्चने ॥ ५५ ॥ पूजिता ब्राह्मणा येन पूजिताः सर्वदेवताः ॥ देवाय दत्त्वा नैवेद्यं द्विजाय न प्रयच्छति ॥ ५६ ॥ भस्मीभूतं च नैवेद्यं पूजनं निष्फलं भवेत् ॥ विप्राय देवनैवेद्यदानाद्ध्रुवमनंतकम् ॥५७॥ तुष्टो देवो वरं दत्त्वा प्रयाति च स्वमंदिरम् ॥ दत्त्वा देवाय नैवेद्यं मूढो भुंक्ते स्वयं यदि ॥ ५८ ॥ दत्तापहारी देवस्वं भुक्त्वा च नरकं व्रजेत् ॥ देवदत्तं न भोक्तव्यं नैवेद्यं च विना हरेः ॥ ५९ ॥ प्रशस्तं सर्वदेवेषु विष्णुनैवेद्यभोजनम् ॥ अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ॥ ६० ॥ सर्वेषां च क्रममिदं ब्राह्मणानां विशेषतः ॥ न दत्त्वा वस्तु देवाय दत्तं विप्राय चेत्सुधीः ॥ ६१ ॥ भुक्त्वा विप्रमुखे देवास्तुष्टाः स्वर्गं प्रयांति च ॥ तस्मात्सर्वप्रयत्नेन विप्राणामर्चनं कुरु ॥ ६२ ॥ प्रशस्तफलदातॄणामिह लोके परत्र च ॥ जपस्तपश्च पूजा वा यज्ञदानं महोत्सवम् ॥ ६३ ॥ सर्वेषां कर्मणां सारं विप्रतुष्टिश्च दक्षिणा ॥ ब्राह्मणानां शरीरेषु तिष्ठंति सर्वदेवताः ॥ ॥ ६४ ॥ पादेषु सर्वतीर्थानि पुण्यानि पादधूलिषु ॥ पादोदके च विप्राणां तीर्थतोयानि संति च ॥ ६५ ॥ तत्स्पर्शात्सर्वतीर्थेषु स्नानजन्यफलं लभेत् ॥ नश्यंति भक्षणाद्रोगा भक्तिभावेन बल्लव ॥ ६६ ॥ सप्तजन्मकृतात्पापान्मुच्यंते नात्र संशयः ॥ पापं पंचविधं कृत्वा यो विप्रं प्रणमेद्व्रजे ॥ ६७ ॥ स स्नातः सर्वतीर्थेषु सर्वपापात्प्रमुच्यते ॥ ब्राह्मणस्पर्शमात्रेण मुक्तो भवति पातकी ॥६८॥ दर्शनान्मुच्यते पापादिति वेदे निरूपितम् ॥ अप्राज्ञो वाथ प्राज्ञो वा ब्राह्मणो विष्णुविग्रहः ॥ ६९ ॥ प्रियाः प्राणाधिका विष्णोर्ये विप्रा हरिसेविनः ॥ द्विजानां हरिभक्तानां प्रभावो दुर्लभः श्रुतौ ॥ ७० ॥ येषां पादाब्जरजसा सद्यः पूता वसुंधरा ॥ तेषां च पादचिह्नं यत्तीर्थं तत्परिकीर्तितम् ॥ ७१ ॥ तेषां च स्पर्शमात्रेण तीर्थपापं प्रणश्यति ॥ आलिंगनात्सदालापात्तेषामुच्छिष्टभोजनात् ॥ ॥ ७२ ॥ दर्शनात्स्पर्शनाच्चैव सर्वपापात्प्रमुच्यते ॥ भ्रमणे सर्वतीर्थानां यत्पुण्यं स्नानतो भवेत् ॥ ७३ ॥ हरिदासस्य विप्रस्य तत्पुण्यं दर्शनाल्लभेत् ॥ ये विप्रा हरये दत्त्वा नित्यमन्नं च भुंजते ॥ ७४ ॥ उच्छिष्टभोजनात्तेषां हरेर्दास्यं लभेन्नरः ॥ न दत्त्वा हरये भक्त्या भुंजते चेद्भ्रमादपि ॥ ७५ ॥ पुरीषसदृशं वस्तु जलं मूत्रसमं भवेत् ॥ शूद्रश्चेद्धरिभक्तश्च नैवेद्यभोजनोत्सुकः ॥ ७६ ॥ आमान्नं

हरये दत्त्वा पाकं कृत्वा च खादति ॥ विप्रक्षत्रियवैश्यानां शालग्रामशिलार्चने ॥ ७७ ॥ अधिकारो न शूद्राणां हरेरप्यर्चने तथा ॥
द्रव्याण्येतानि गोपेंद्र विप्रेभ्यश्चेन्न दास्यति ॥ ७८ ॥ भस्मीभूतानि सर्वाणि भविष्यंति न संशयः ॥ अन्नं च सर्वजीवेभ्यः पुण्यार्थं
दातुमर्हति ॥ ७९ ॥ दत्त्वा विशिष्टजीवेभ्यो विशिष्टं फलमाप्नुयात् ॥ अतो दत्त्वा मानुषेभ्यो लभतेऽष्टगुणं फलम् ॥ ८० ॥ शूद्रा
णां द्विगुणं पुण्यं वैश्येभ्योन्नं प्रदाय च ॥ दत्त्वान्नं क्षत्रियेभ्योपि वैश्यानां द्विगुणं भवेत् ॥ क्षत्रियाणां शतगुणं विप्रेभ्योन्नं प्रदाय च
॥ ८१ ॥ विप्राणां च शतगुणं शास्त्रज्ञे ब्राह्मणे फलम् ॥ शास्त्रज्ञानां शतगुणं भक्ते विप्रे लभेद्ध्रुवम् ॥ ८२ ॥ स चान्नं हरये दत्त्वा
भुंक्ते भक्त्या च सादरम् ॥ विष्णवे विप्रभक्ताय दत्त्वा दातुश्च यत्फलम् ॥ ८३ ॥ तत्फलं लभते नूनं भक्तब्राह्मणभोजने ॥ भक्ते
तुष्टे हरिस्तुष्टो हरौ तुष्टे च देवताः ॥ ८४ ॥ भवंति सिद्धाः शाखाश्च यथा मूलनिषेचनात् ॥ द्रव्याण्येतानि देवाय यद्येकस्मै
प्रयच्छति ॥ ८५ ॥ सर्वे देवाश्च रुष्टाश्चेद्देवैः कः किं करिष्यति ॥ अथवार्द्धं च वस्तूनां देहि गोवर्धनाय च ॥ ८६ ॥ गा वर्धयति
नित्यं यस्तेन गोवर्धनः स्मृतः ॥ गोवर्धनसमस्तात पुण्यवान्न महीतले ॥ ८७ ॥ नित्यं ददाति गोभ्यो यो नवीनानि तृणानि च ॥
तीर्थस्थानेषु यत्पुण्यं यत्पुण्यं विप्रभोजने ॥ ८८ ॥ सर्वव्रतोपवासेषु सर्वेष्वेव तपःसु च ॥ यत्पुण्यं च महादासे यत्पुण्यं हरिसेवने
॥ ८९ ॥ भुवः पर्यटने यत्तु सर्ववाक्येषु यद्भवेत् ॥ यत्पुण्यं सर्वयज्ञेषु दीक्षायां च लभेन्नरः ॥ ९० ॥ तत्पुण्यं लभते प्राज्ञो गोभ्यो
दत्त्वा तृणानि च ॥ भुक्तवंतीं तृणं यश्च गां वारयति कामतः ॥ ९१ ॥ ब्रह्महत्या भवेत्तस्य प्रायश्चित्ताद्विशुध्यति ॥ सर्वे देवा गवा
मंगे तीर्थानि तत्पदेषु च ॥ ९२ ॥ तद्गुह्येषु स्वयं लक्ष्मीस्तिष्ठत्येव सदा पितः ॥ गोष्पदाक्तमृदा यो हि तिलकं कुरुते नरः ॥ ९३ ॥
तीर्थस्नातो भवेत्सद्यो जयस्तस्य पदेपदे ॥ गावस्तिष्ठंति यत्रैव तत्तीर्थं परिकीर्तितम् ॥ ९४ ॥ प्राणांस्त्यक्त्वा नरस्तत्र सद्यो मुक्तो
भवेद्ध्रुवम् ॥ ब्राह्मणानां गवामंगं यो हंति मानवाधमः ॥ ९५ ॥ ब्रह्महत्यासमं पापं भवेत्तस्य न संशयः ॥ नारायणांशान्विप्रांश्च ॥ ६६ ॥
गाश्च ये घ्नंति मानवाः ॥ ९६ ॥ कालसूत्रं च ते यांति यावच्चन्द्रदिवाकरौ ॥ इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद ॥ ९७ ॥

आनंदयुक्तो नंदश्च तमुवाच स्मिताननः ॥ ॥ नंद उवाच ॥ ॥ पौर्वापरीयं पूजेति महेंद्रस्य महात्मनः ॥ ९८ ॥ सुवृष्टिसाधनी साध्यं
सर्वसस्यमनोहरम् ॥ सस्यानि प्राणिनां प्राणाः सस्याज्जीवंति जीविनः ॥ ९९ ॥ पूजयंति व्रजस्थाश्च महेंद्रं पुरुषक्रमात् ॥ महोत्सवं
वत्सरांते निर्विघ्नाय शिवाय च ॥ १०० ॥ इत्येवं वचनं श्रुत्वा बलेन सह माधवः ॥ उच्चैर्जहास स पुनरुवाच पितरं मुदा ॥ १ ॥
॥ श्रीकृष्ण उवाच ॥ ॥अहो श्रुतं विचित्रं ते वचनं परमाद्भुतम् ॥ उपहास्यं लोकशास्त्रं वेदेष्वेव विगर्हितम्॥२॥ निरूपणं नास्ति कुत्र
शक्राद्वृष्टिः प्रजायते ॥ अपूर्वं नीतिवचनं श्रुतमद्य मुखात्तव ॥ ३ ॥ शृणु नीतिं श्रुतिमतां हे तात नानयं वदेः ॥ वचनं सामवेदोक्तं
संतो जानंति सर्वतः ॥४॥ प्रश्नं कुरुष्व मंत्रांश्च विविधानपि संसदि ॥ ब्रुवंतु परमार्थं च किमिंद्राद्वृष्टिरेव च ॥ ५ ॥ सूर्याद्धि जायते
तोयं तोयात्सस्यानि शाखिनः ॥ तेभ्योन्नानि फलान्येव तेभ्यो जीवंति जीविनः ॥ ६ ॥ सूर्यग्रस्तं च नीरं च काले तस्मात्समुद्भवः ॥
सूर्यो मेघादयः सर्वे विधात्रा ते निरूपिताः ॥ ७ ॥ यत्राब्दे यो जलधरो गजश्च सागरो मतः ॥ सस्याधिपो नृपो मंत्री विधात्रा ते
निरूपिताः ॥ ८ ॥ जलादिकानां सस्यानां तृणानां च निरूपितम् ॥ अब्देऽब्देस्त्येव तत्सर्वं कल्पेकल्पे युगेयुगे ॥ ९ ॥ हस्ती समुद्रा
दादाय करेण जलमीप्सितम् ॥ दद्याद्घनाय तद्दद्याद्वातेन प्रेरितो घनः ॥११०॥ स्थानेस्थाने पृथिव्यां च कालेकाले यथोचितम् ॥
ईशेच्छयाविर्भूतं च न भवेत्प्रतिबंधकम् ॥ ११ ॥ भूतं भव्यं भविष्यच्च महत्क्षुद्रं च मध्यमम् ॥ धात्रा निरूपितं कर्म केन तात
निवार्यते ॥ १२ ॥ जगच्चराचरं सर्वं कृतं तेनेश्वराज्ञया ॥ आदौ विनिर्मितं भक्ष्यं पश्चाज्जीव इति स्मृतः ॥ १३ ॥ अभ्यासा
त्स स्वभावो हि स्वभावात्कर्म एव च ॥ जायते कर्मणां भोगो जीविनां सुखदुःखयोः ॥ १४ ॥ यातनाजन्ममरणरोगशोकभ
यानि च ॥ समुत्पत्तिर्विपद्विद्या कविता वा यशोऽयशः ॥ १५ ॥ पुण्यं च स्वर्गवासश्च पापं नरकसंस्थितिः ॥ भुक्तिर्मुक्तिर्हरेर्दास्यं
कर्मणा घटते नृणाम् ॥ १६ ॥ सर्वेषां जनको हीशश्चाभ्यासः शीलकर्मणाम् ॥ धातुश्च फलदाता च सर्वं तस्येच्छया भवेत्॥१७॥
विनिर्मितो विराड्येन तत्त्वानि प्रकृतिर्जगत् ॥ कूर्मश्च शेषधरणी चाब्रह्मस्तंब एव च ॥ १८ ॥ यस्याज्ञया मरुत्कूर्मं धत्ते शेषं बिभ

र्ति सः ॥ शेषो वसुंधरां मूर्ध्ना सा च सर्वं चराचरम् ॥ १९ ॥ यस्याज्ञया सदा पाति जगत्प्राणो जगत्त्रये ॥ तपति भ्रमणं कृत्वा
भूगोलं सुप्रभाकरः ॥ १२० ॥ दहत्यग्निः संचरते मृत्युश्च सर्वजंतुषु ॥ उत्पत्तिः शाखिनां काले पुष्पाणि च फलानि च ॥ २१ ॥
स्वेस्वे स्थाने समुद्राश्च तूर्णं मज्जंत्यधोऽधुना ॥ तमीशं भज भक्त्या च शक्रः किं कर्तुमीश्वरः ॥ २२ ॥ ब्रह्मांडं च कतिविधमावि
र्भूतं तिरोहितम् ॥ विधयश्च कतिविधा यस्य भ्रूभंगलीलया ॥ २३ ॥ मृत्योर्मृत्युः कालकालो विधातुर्विधिरेव सः ॥ भज तं शरणं
तात स ते रक्षां करिष्यति ॥ २४ ॥ अहोष्टाविंशदिंद्राणां पतने यदहर्निशम् ॥ विधातुरेव जगतामष्टोत्तरशताधिकः ॥ २५ ॥ निमे
षाद्यस्य पतनं निर्गुणस्यात्मनः प्रभोः ॥ एवंभूते तिष्ठतीशे शक्रपूजाविडंबनम् ॥ २६ ॥ इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद ॥
प्रशशंसुश्च मुनयो भगवंतं सभासदः ॥ २७॥ नंदः सपुलको हृष्टः सभायां साश्रुलोचनः ॥ आनंदयुक्ता मनुजा यदि पुत्रैः परा
जिताः ॥ २८ ॥ श्रीकृष्णाज्ञां समाज्ञाय चकार स्वस्तिवाचनम् ॥ क्रमेण वरणं तत्र सर्वेषां च चकार ह ॥ २९॥ पर्वतस्य मुनीं
द्राणां चकार पूजनं मुदा ॥ बुधानां ब्राह्मणानां च गवां वह्नेश्च सादरम् ॥ १३० ॥ तत्र पूजासमाप्तौ च क्रतौ च सुमहोत्सवे ॥
नानाप्रकारवाद्यानां बभूव शब्द उल्बणः ॥ ३१ ॥ जयशब्दः शंखशब्दो हरिशब्दो बभूव ह ॥ वेदमंगलकांडं च पपाठ मुनिपुंग
वः ॥ ३२ ॥ बंदिनां प्रवरो डिंडी कंसस्य सचिवः प्रियः ॥ उच्चैः पपाठ पुरतो मंगलं मंगलाष्टकम् ॥ ३३ ॥ कृष्णः शैलांतिकं गत्वा
भिन्नां मूर्तिं विधाय च ॥ वस्तु खादामि शैलोस्मि वरं वृणिवत्युवाच ह ॥ ३४ ॥ उवाच नंदं श्रीकृष्णः पश्य शैलं पितः पुरः ॥ वरं
प्रार्थय भद्रं ते भविता चेत्युवाच ह ॥ ३५ ॥ हरेर्दास्यं हरेर्भक्तिं वरं वव्रे स बल्लवः ॥ द्रव्यं भुक्त्वा वरं दत्त्वा सोंतर्धानं चकार ह ॥
॥ ३६ ॥ मुनींद्रान्ब्राह्मणांश्चैव भोजयित्वा च गोपपाः ॥ बंदिभ्यो ब्राह्मणेभ्यश्च मुनिभ्यश्च धनं ददौ ॥ ३७ ॥ मुनिभ्यो ब्राह्मणेभ्यो
पि दत्त्वा नंदो मुदान्वितः ॥ रामकृष्णौ पुरस्कृत्य सगणः स्वालयं ययौ ॥ ३८ ॥ रौप्यं वस्त्रं सुवर्णं च वरमश्वं मणिं तथा ॥ भक्ष्यं

१ बिभर्ति–इ०पा० । २ विधयाश्च–इ० पा० ।

द्रव्यं बहुविधं बंदिने डिंडिने ददौ ॥ ३९ ॥ स्तुत्वा नत्वा रामकृष्णौ मुनयो ब्राह्मणा ययुः ॥ ययुरप्सरसः सर्वा गंधर्वाः किंनरा स्तथा ॥ १४० ॥ राजानो बल्लवाः सर्वे चागता ये महोत्सवे ॥ सर्वे प्रणम्य श्रीकृष्णं ययुः सादरपूर्वकम् ॥ ४१ ॥ एतस्मिन्नंतरे शक्रः कोपप्रस्फुरिताधरः ॥ मखभंगे बहुविधां निंदां श्रुत्वा सुरेश्वरः ॥४२॥ मरुद्भिर्वारिदैः सार्धं रथमारुह्य सत्वरम् ॥ जगाम नंद नगरं वृंदारण्यं मनोहरम् ॥ ४३ ॥ सर्वे देवा ययुः पश्चाद्युद्धशास्त्रविशारदाः ॥ शस्त्रास्त्रपाणयः कोपाद्रथमारुह्य नारद ॥ ४४ ॥ वायुशब्दैर्मेघशब्दैः सैन्यशब्दैर्भयानकैः ॥ चकंपे नगरं सर्वं नंदो भयमवाप ह ॥ ४५ ॥ भार्यां संबोध्य स्वगणमुवाच शोककातरः ॥ रहः स्थलं समानीय नीतिशास्त्रविशारदः ॥ ४६ ॥ ॥ नंद उवाच ॥ ॥ हे यशोदे समागच्छ वचनं शृणु रोहिणि ॥ रामकृष्णौ समादाय व्रज दूरं व्रजात्प्रिये ॥ बालका बालिका नार्यो यांतु दूरं भयाकुलाः ॥ ४७ ॥ बलवंतश्च गोपालास्तिष्ठंतु मत्समीपतः ॥ पश्चाच्च निर्गमिष्यामो वयं च प्राणसंकटात् ॥४८॥ इत्युक्त्वा बल्लवश्रेष्ठः सस्मार श्रीहरिं भिया ॥ पुटांजलियुतो भूत्वा भक्तिनम्रात्मकंधरः ॥ काण्वशाखोक्तस्तोत्रेण तुष्टाव ह शचीपतिम् ॥ ४९ ॥ ॥ नंद उवाच ॥ ॥ इंद्रः सुरपतिः शक्रो दितिजः पवनाग्रजः ॥ १५० ॥ सहस्राक्षो भगांगश्च कश्यपांगज एव च ॥ बिडौजाश्च सुनासीरो मरुत्वान्पाकशासनः ॥५१॥ जयंतजनकः श्रीमाञ्छचीशो दैत्यसूदनः ॥ वज्रहस्तः कामसखो गौतमीव्रतनाशनः ॥ ५२ ॥ वृत्रहा वासवश्चैव दधीचिदेहभिक्षुकः ॥ विष्णुश्च वामनभ्राता पुरुहूतः पुरंदरः ॥ ५३ ॥ दिवस्पतिः शतमखः सुत्रामा गोत्रभिद्विभुः ॥ लेखर्षभो बलारातिर्जंभभेदी सुराश्रयः ॥ ५४ ॥ संक्रंदनो दुश्च्यवनस्तुराषाण्मेघवाहनः ॥ आखंडलो हरिहयो नमुचिप्राणनाशनः ॥ ५५ ॥ वृद्धश्रवा वृषश्चैव दैत्यदर्पनिषूदनः ॥ षट्चत्वारिंशन्नामानि पापघ्नानि विनिश्चितम् ॥ ५६ ॥ स्तोत्रमेतत्कौथुमोक्तं नित्यं यदि पठेन्नरः ॥ महाविपत्तौ शक्रस्तं वज्रहस्तश्च रक्षति ॥ ५७ ॥ अतिवृष्टिशिलावृष्टिवज्रपाताच्च दारुणात् ॥ कदाचिन्न भयं तस्य रक्षिता वासवः स्वयम् ॥ ५८ ॥ यत्र गेहे स्तोत्रमिदं यश्च जानाति पुण्यवान् ॥ न तत्र वज्रपतनं शिलावृष्टिश्च नारद ॥ ५९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ स्तोत्रं नंदमुखाच्छ्रुत्वा

...॥ ... सा च सर्वं परात्परम् ॥ १९ ॥ यस्याज्ञया सदा पाति जगत्प्राणो जगत्त्रये ॥ तपति भ्रमणं कृत्वा ... सं० १ ॥
... सूर्यभास्करः ॥ १२० ॥ दहत्यग्निः संचरते मृत्युश्च सर्वजंतुषु ॥ उत्पत्तिः शाखिनां काले पुष्पाणि च फलानि च ॥ २१ ॥ म० २१
... स्थाने समुद्राश्च तूर्णं मज्जंत्यधोऽधुना ॥ तमीशं भज भक्त्या च शक्रः किं कर्तुमीश्वरः ॥ २२ ॥ ब्रह्मांडं च कतिविधमावि
... तिरोहितम् ॥ विश्वंयश्च कतिविधा यस्य भ्रूभंगलीलया ॥ २३ ॥ मृत्योर्मृत्युः कालकालो विधातुर्विधिरेव सः ॥ भज तं शरणं
... स ते रक्षां करिष्यति ॥ २४ ॥ अहोरात्रविंशदिंद्राणां पतने यदहर्निशम् ॥ विधातुरेव जगतामष्टोत्तरशताधिकः ॥ २५ ॥ निमे
... पतनं निर्गुणस्यात्मनः प्रभोः ॥ एवंभूते तिष्ठतीशे शक्रपूजाविडंबनम् ॥ २६ ॥ इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद ॥
... मुनयो भगवंतं समासदः ॥ २७ ॥ नंदः सपुलको हृष्टः सभार्यो साश्रुलोचनः ॥ आनंदयुक्ता मनुजा यदि पुत्रैः परा
...ताः ॥ २८ ॥ श्रीकृष्णाज्ञां समाज्ञाय चकार स्वस्तिवाचनम् ॥ क्रमेण वरणं तत्र सर्वेषां च चकार ह ॥ २९ ॥ पर्वतस्य मुनी
...णां चकार पूजनं मुदा ॥ बुधानां ब्राह्मणानां च गवां वह्नेश्च सादरम् ॥ १३० ॥ तत्र पूजासमाप्तौ च कृतौ च सुमहोत्सवे ॥
...नाप्रकारवाद्यानां बभूव शब्द उल्बणः ॥ ३१ ॥ जयशब्दः शंखशब्दो हरिशब्दो बभूव ह ॥ वेदमंगलकांडं च पपाठ मुनिपुंग
... ॥ ३२ ॥ वंदिनां प्रवरो डिंडी कंसस्य सचिवः प्रियः ॥ उच्चैः पपाठ पुरतो मंगलं मंगलाष्टकम् ॥ ३३ ॥ कृष्णः शैलांतिकं गत्वा
... मूर्तिं विधाय च ॥ वस्तु खादामि शैलोऽस्मि वरं वृणिवत्युवाच ह ॥ ३४ ॥ उवाच नंदं श्रीकृष्णः पश्य शैलं पितः पुरः ॥ वरं
... भद्रं ते भविता चेत्युवाच ह ॥ ३५ ॥ हरेर्दास्यं हरेर्भक्तिं वरं वव्रे स बल्लवः ॥ द्रव्यं भुक्त्वा वरं दत्त्वा सोंतर्धानं चकार ह ॥
... ॥ ... भोजयित्वा च गोपपाः ॥ वंदिभ्यो ब्राह्मणेभ्यश्च मुनिभ्यश्च धनं ददौ ॥ ३७ ॥ मुनिभ्यो ब्राह्मणेभ्यो
... ॥ रामकृष्णौ पुरस्कृत्य सगणः स्वालयं ययौ ॥ ३८ ॥ रौप्यं वस्त्रं सुवर्णं च वरमश्वं मणिं तथा ॥ मह्यं ॥ ६० ॥
... १ ...०पा० । २ ...०पा० ।

[illegible] ॥ ३९ ॥ स्तुत्वा नत्वा रामकृष्णौ मुनयो ब्राह्मणा ययुः ॥ ययुरप्सरसः सर्वा गंधर्वाः किन्नरा
स्तथा ॥ १४० ॥ राजानो बल्लवाः सर्वे चागता ये महोत्सवे ॥ सर्वे प्रणम्य श्रीकृष्णं ययुः सादरपूर्वकम् ॥ ४१ ॥ एतस्मिन्नंतरे
शक्रः कोपप्रस्फुरिताधरः ॥ मखभंगे बहुविधां निंदां श्रुत्वा सुरेश्वरः ॥४२॥ मरुद्भिर्वारिदैः सार्धं रथमारुह्य सत्वरम् ॥ जगाम नंद
नगरं वृंदारण्यं मनोहरम् ॥ ४३ ॥ सर्वे देवा ययुः पश्चाद्युद्धशास्त्रविशारदाः ॥ शस्त्रास्त्रपाणयः कोपाद्रथमारुह्य नारद ॥ ४४ ॥ वायु
शब्दैर्मेघशब्दैः सैन्यशब्दैर्भयानकैः ॥ चकंपे नगरं सर्वं नंदो भयमवाप ह ॥ ४५ ॥ भार्यां संबोध्य स्वगणमुवाच शोककातरः ॥ रहः
स्थलं समानीय नीतिशास्त्रविशारदः ॥ ४६ ॥ ॥ नंद उवाच ॥ ॥ हे यशोदे समागच्छ वचनं शृणु रोहिणि ॥ रामकृष्णौ
समादाय व्रज दूरं व्रजात्प्रिये ॥ बालका बालिका नार्यो यांतु दूरं भयाकुलाः ॥ ४७ ॥ बलवंतश्च गोपालास्तिष्ठंतु मत्समीपतः ॥
पश्चाच्च निर्गमिष्यामो वयं च प्राणसंकटात् ॥४८॥ इत्युक्त्वा बल्लवश्रेष्ठः सस्मार श्रीहरिं भिया ॥ पुटांजलियुतो भूत्वा भक्तिनम्रा
त्मकंधरः ॥ काण्वशाखोक्तस्तोत्रेण तुष्टाव ह शचीपतिम् ॥ ४९ ॥ ॥ नंद उवाच ॥ ॥ इंद्रः सुरपतिः शक्रो दितिजः पवना
ग्रजः ॥ १५० ॥ सहस्राक्षो भगांगश्च कश्यपांगज एव च ॥ बिडौजाश्च सुनासीरो मरुत्वान्पाकशासनः ॥५१॥ जयंतजनकः श्रीमा
ञ्छचीशो दैत्यसूदनः ॥ वज्रहस्तः कामसखो गौतमीव्रतनाशनः ॥ ५२ ॥ वृत्रहा वासवश्चैव दधीचिदेहभिक्षुकः ॥ विष्णुश्च वामन
भ्राता पुरुहूतः पुरंदरः ॥ ५३ ॥ दिवस्पतिः शतमखः सुत्रामा गोत्रभिद्विभुः ॥ लेखर्षभो बलारातिर्जंभभेदी सुराश्रयः ॥ ५४ ॥ संक्रं
दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ॥ आखंडलो हरिहयो नमुचिप्राणनाशनः ॥ ५५ ॥ वृद्धश्रवा वृषश्चैव दैत्यदर्पनिषूदनः ॥ षट्त्रिं
शत्तिरिन्द्रनामानि पापघ्नानि विनिश्चितम् ॥ ५६ ॥ स्तोत्रमेतत्कौथुमोक्तं नित्यं यदि पठेन्नरः ॥ महाविपत्तौ शक्रस्तं वज्रहस्तश्च
रक्षति ॥ ५७ ॥ अतिवृष्टिशिलावृष्टिवज्रपाताच्च दारुणात् ॥ कदाचिन्न भयं तस्य रक्षिता वासवः स्वयम् ॥ ५८ ॥ यत्र गेहे स्तोत्र
मिदं यत्र [illegible] पुण्यदम् ॥ न तत्र वज्रपतनं शिलावृष्टिश्च नारद ॥ ५९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ स्तोत्रं नंदमुखाच्छ्रुत्वा

कोप मधुसूदनः ॥ १६० ॥ उवाच पितरं नीतिं प्रज्वलन्ब्रह्मतेजसा ॥ कं स्तौषि भीरो को वेंद्रस्त्यज भीतिं ममांतिके ॥ ६१ ॥ सं० ४
क्षणार्द्धे भस्मसात्कर्तुं क्षमोहमवलीलया ॥ गावश्च वत्सांश्च बालांश्च योषितो हि भयातुराः ॥ ६२ ॥ गोवर्धनस्य कुहरे संस्थाप्य तिष्ठ
निर्भयम् ॥ बालस्य वचनं श्रुत्वा तच्चकार मुदान्वितः ॥ ६३ ॥ हरिर्दधार शैलं तं वामहस्तेन दंडवत् ॥ एतस्मिन्नंतरे तत्र दीप्तो अ० २१
पि रत्नतेजसा ॥ ६४ ॥ अंधीभूतश्च सहसा बभूव रजसावृतः ॥ सवातो मेघनिकरश्छाद गगनं मुने ॥ ६५ ॥ वृंदावने बभूवा
तिवृष्टिरेव निरंतरम् ॥ शिलावृष्टिर्वज्रवृष्टिरुल्कापातः सुदारुणः ॥ ६६ ॥ समस्तं पर्वतस्पर्शात्पतितं दूरतस्ततः ॥ विफलस्तत्समा
रंभो यथानीशोद्यमो मुने ॥ ६७ ॥ दृष्ट्वा मोघं च तत्सर्वं सद्यः शक्रश्चुकोप ह ॥ जग्राहामोघकुलिशं दधीच्यस्थिविनिर्मितम्
॥ ६८ ॥ दृष्ट्वा तं वज्रहस्तं च जहास मधुसूदनः ॥ सहस्तं स्तंभयामास वज्रमेवातिदारुणम् ॥ ६९ ॥ सहामरगणं मोघं चकार स्तं
भनं विभुः ॥ सर्वे तस्थुर्निश्चलास्ते भित्तौ पुत्तलिका यथा ॥ १७० ॥ हरिणा जृंभितः शक्रः सद्यस्तंद्रामवाप ह ॥ ददर्श सर्वं
तंद्रायां तत्र कृष्णमयं जगत् ॥ ७१ ॥ द्विभुजं मुरलीहस्तं रत्नालंकारभूषितम् ॥ पीतवस्त्रपरीधानं रत्नसिंहासनस्थितम् ॥ ७२ ॥
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥ चंदनोक्षितसर्वांगमेतत्सर्वं चराचरम् ॥ ७३ ॥ दृष्ट्वाद्भुततमं तत्र सद्यो मूर्छामवाप ह ॥
जजाप मंत्रं तत्रैव प्रदत्तं गुरुणा पुरा ॥ ७४ ॥ सहस्रदलपद्मस्थं ददर्श ज्योतिरुल्बणम् ॥ तत्रांतरे दिव्यरूपमतीव सुमनोहरम् ॥
॥ ७५ ॥ नवीनजलदोत्कर्ष श्यामसुंदरविग्रहम् ॥ सद्रत्नसारनिर्माणज्वलन्मकरकुंडलम् ॥ ७६ ॥ ज्वलन्मणींद्रमकरकिरीटोज्ज्वल
शेखरम् ॥ ज्वलता कौस्तुभेंद्रेण कंठवक्षःस्थलोज्ज्वलम् ॥ ७७ ॥ मणिकेयूरवलयमणिमंजीररंजितम् ॥ अंतर्बहिः समं दृष्ट्वा तुष्टाव
परमेश्वरम् ॥ ७८ ॥ ॥ इंद्र उवाच ॥ ॥ अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम् ॥ गुणातीतं निराकारं स्वेच्छामयमनंतकम्
॥ ७९ ॥ भक्तध्यानाय सेवायै नानारूपधरं वरम् ॥ शुक्लरक्तपीतश्यामं युगानुक्रमणेन च ॥ १८० ॥ शुक्लतेजःस्वरूपं च सत्ये ॥ ९८ ॥
सत्यस्वरूपिणम् ॥ त्रेतायां कुंकुमाकारं ज्वलंतं ब्रह्मतेजसा ॥ ८१ ॥ द्वापरे पीतवर्णं च शोभितं पीतवाससा ॥ कृष्णवर्णं कलौ

[illegible] परिपूर्णतमं प्रभुम् ॥ ८२ ॥ नवधाराधरोत्कृष्टश्यामसुंदरविग्रहम् ॥ नंदैकनंदनं वंदे यशोदानंदनं प्रभुम् ॥ ८३ ॥ गोपिका
चेतनहरं राधाप्राणाधिकं परम् ॥ विनोदमुरलीशब्दं कुर्वंतं कौतुकेन च ॥ ८४ ॥ रूपेणाप्रतिमेनैव रत्नभूषणभूषितम् ॥ कंदर्पकोटि
सौंदर्यं बिभ्रतं शांतमीश्वरम् ॥८५॥ क्रीडंतं राधया सार्धं वृन्दारण्ये च कुत्रचित् ॥ कुत्रचिन्निर्जनेरण्ये राधावक्षःस्थलस्थितम् ॥८६॥
जलक्रीडां प्रकुर्वंतं राधया सह कुत्रचित् ॥ राधिकाकबरीभारं कुर्वंतं कुत्रचिद्वने ॥ ८७ ॥ कुत्रचिद्राधिकापादे दत्तवंतमलक्तकम् ॥
सदा चर्विततांबूलं गृह्णंतं कुत्रचिन्मुदा ॥ ८८ ॥ पश्यंतं कुत्रचिद्राधां पश्यंतीं वक्रचक्षुषा ॥ दत्तवंतं च राधायै कृत्वा मालां च कुत्र
चित् ॥ ८९ ॥ कुत्रचिद्राधया सार्धं गच्छंतं रासमंडलम् ॥ राधादत्तां गले मालां धृतवंतं च कुत्रचित् ॥ १९० ॥ सार्धं गोपालि
काभिश्च विहरंतं च कुत्रचित् ॥ राधां गृहीत्वा गच्छंतं विहाय तां च कुत्रचित् ॥ ९१ ॥ विप्रपत्नीदत्तमन्नं भुक्तवंतं च कुत्रचित् ॥
भुक्तवंतं तालफलं बालकैः सह कुत्रचित् ॥ ९२ ॥ वस्त्रं गोपालिकानां च हरंतं कुत्रचिन्मुदा ॥ गवां गणं व्याहरंतं कुत्रचिद्बालकैः
सह ॥ ९३ ॥ कालियमूर्ध्नि पादाब्जं दत्तवंतं च कुत्रचित् ॥ विनोदमुरलीशब्दं कुर्वंतं कुत्रचिन्मुदा ॥ ९४ ॥ गायंतं रम्यसंगीतं कुत्र
चिद्बालकैः सह ॥ स्तुत्वा शक्रःस्तवेंद्रेण प्रणनाम हरिं भिया ॥ ९५ ॥ पुरा दत्तेन गुरुणा रणे वृत्रासुरेण च ॥ कृष्णेन दत्तं कृपया
ब्रह्मणे च तपस्यते ॥ ९६ ॥ एकादशाक्षरो मंत्रः कवचं सर्वलक्षणम् ॥ दत्तमेतत्कुमाराय पुष्करे ब्रह्मणा पुरा ॥ ९७ ॥ कुमारोंगिरसे
दत्तं गुरवेंगिरसा मुने ॥ इदमिंद्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥ ९८ ॥ स हि प्राप्य दृढां भक्तिमंते दास्यं लभेद्ध्रुवम् ॥
जन्ममृत्युजराव्याधिशोकेभ्यो मुच्यते नरः ॥ न हि पश्यति स्वप्नेपि यमदूतं यमालयम् ॥९९॥ ॥ नारायण उवाच ॥ ॥ इंद्रस्य वचनं
श्रुत्वा प्रसन्नः श्रीनिकेतनः ॥ २०० ॥ प्रीत्या तस्मै वरं दत्त्वा स्थापयामास पर्वतम् ॥ प्रणम्य च हरिं शक्रः प्रययौ स्वगणैः सह ॥१॥
[illegible] जनाः सर्वे प्रजग्मुर्गह्वराद्गृहम् ॥ ते सर्वे मेनिरे कृष्णं परिपूर्णतमं विभुम् ॥ २ ॥ पुरस्कृत्य व्रजस्थांश्च प्रययौ स्वालयं
हरिः ॥ [illegible] नंदः पुत्रं तं पूर्णब्रह्म सनातनम् ॥ पुलकांचितसर्वाङ्गो भक्तिपूर्णाश्रुलोचनः ॥ ३ ॥ ॥ नंद उवाच ॥ नमो ब्रह्मण्यदेवा

 

गोब्राह्मणहिताय च ॥ ४ ॥ जगद्धिताय कृष्णाय गोविंदाय नमोनमः ॥ नमो ब्रह्मण्यदेवाय ब्रह्मणे परमात्मने ॥ ५ ॥ अनंत
कोटिब्रह्मांडधामधाम्ने नमोस्तु ते ॥ नमो मत्स्यादिरूपाणां जीवरूपाय साक्षिणे ॥ ६ ॥ निर्लिप्ताय निर्गुणाय निराकाराय ते नमः ॥
अतिसूक्ष्मस्वरूपाय स्थूलात्स्थूलतमाय च ॥ ७ ॥ सर्वेश्वराय सर्वाय तेजोरूप नमोस्तु ते ॥ अतिप्रत्यक्षरूपाय ध्यानासाध्याय योगि
नाम् ॥ ८ ॥ ब्रह्मविष्णुमहेशानां वंद्याय नित्यरूपिणे ॥ धाम्ने चतुर्णां वर्णानां युगेष्वेव चतुर्षु च ॥ ९ ॥ शुक्लरक्तपीतश्यामाभिधानगु
णशालिने ॥ योगिने योगरूपाय गुरवे योगिनामपि ॥२१०॥ सिद्धेश्वराय सिद्धाय सिद्धानां गुरवे नमः ॥ यं स्तोतुमक्षमो ब्रह्मा
विष्णुर्यं स्तोतुमक्षमः ॥११॥ यं स्तोतुमक्षमो रुद्रः शेषो यं स्तोतुमक्षमः ॥ यं स्तोतुमक्षमो धर्मो यं स्तोतुमक्षमो रविः ॥१२॥ यं स्तो
तुमक्षमो लंबोदरश्चापि षडाननः ॥ यं स्तोतुमक्षमाः सर्वे मुनयः सनकादयः ॥ १३ ॥ कपिलो न क्षमः स्तोतुं सिद्धेंद्राणां गुरोर्गुरुः ॥
न शक्तौ स्तवनं कर्तुं नरनारायणावृषी ॥१४॥ अन्ये जडधियः के वा स्तोतुं शक्ताः परात्परम् ॥ वेदा न शक्ता नो वाणी न च लक्ष्मीः
सरस्वती ॥ १५ ॥ न राधा स्तवने शक्ता किं स्तुवंति विपश्चितः ॥ क्षमस्व निखिलं ब्रह्मन्नपराधं क्षणेक्षणे ॥ १६ ॥ रक्ष मां करुणा
सिंधो दीनबंधो भवार्णवे ॥ पुरा तीर्थे तपस्तप्त्वा पुत्रः प्राप्तः सनातनः ॥ १७ ॥ स्वकीयचरणांभोजे भक्तिं दास्यं च देहि मे ॥
ब्रह्मत्वममरत्वं वा सालोक्यादिकमेव वा ॥ १८ ॥ त्वत्पदांभोजदास्यस्य कलां नार्हंति षोडशीम् ॥ इंद्रत्वं वा सुरत्वं वा संप्राप्तिं सि
द्धिस्वर्गयोः ॥ १९ ॥ राजत्वं चिरजीवित्वं सुधियो गणयंति किम् ॥ एतद्यत्कथितं सर्वं ब्रह्मत्वादिकमीश्वर ॥ २२० ॥ भक्तसंगक्ष
णार्द्धस्य नोपमा ते किमर्हति ॥ त्वद्भक्तो यस्त्वत्सदृशः कस्त्वां तर्कितुमीश्वरः ॥ २१ ॥ क्षणार्द्धालापमात्रेण पारं कर्तुं स चेश्वरः ॥
भक्तसंगाद्भवत्येव भक्तिं कर्तुमनेकधा ॥ २२ ॥ त्वद्भक्तजलदालापजलसेकेन वर्द्धते ॥ अभक्तालापतापात्तु शुष्कतां याति तत्क्षणम् ॥
॥ २३ ॥ त्वद्गुणस्मृतिसेकाच्च वर्द्धते तत्क्षणे स्फुटम् ॥ त्वद्भक्त्यंकुरमुद्भूतं स्फीतं मानसजं परम् ॥ २४ ॥ न नश्यं वर्द्धनीयं च

१ ध्यानसाध्याय-इ० पा० ।

नित्यंनित्यं क्षणेक्षणे ॥ ततः संप्राप्य ब्रह्मत्वं भक्तस्य जीवनाय च ॥ २५ ॥ ददात्येव फलं तस्मै हरिदास्यमनुत्तमम् ॥ संप्राप्य दुर्लभं दास्यं यदि दासो बभूव ह ॥ २६ ॥ मुनिश्रयेन तेनेव जितं सर्वं भयादिकम् ॥ इत्येवमुक्त्वा भक्त्या च नंदस्तस्थौ हरेः पुरः ॥ २७ ॥ प्रसन्नवदनः कृष्णो ददौ तस्मै तदीप्सितम् ॥ एवं नंदकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥ २८ ॥ सुदृढां भक्तिमाप्नोति सद्यो दास्यं लभेद्धरेः ॥ तपस्तप्त्वा यदा द्रोणस्तीर्थे च धरया सह ॥ २९ ॥ स्तोत्रं तस्मै पुरा दत्तं ब्रह्मणा तत्सुदुर्लभम् ॥ हरेः षडक्षरो मंत्रः कवचं सर्वरक्षणम् ॥ ३० ॥ इह सौभरिणा दत्तं तस्मै तुष्टेन पुष्करे ॥ तदेव कवचं स्तोत्रं स च मंत्रः सुदुर्लभः ॥ ॥ ३१ ॥ ब्रह्मणोंऽशेन मुनिना नंदाय च तपस्यते ॥ मंत्रः स्तोत्रं च कवचमिष्टदेवो गुरुस्तथा ॥ ३२ ॥ या यस्य विद्या प्राचीना न तां त्यजति निश्चितम् ॥ इत्येवं कथितं स्तोत्रं श्रीकृष्णाख्यानमद्भुतम् ॥ सुखदं मोक्षदं सारं भवबंधविमोचनम् ॥ २३३ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवाद इंद्रयागभंजनोनामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एकदा राधिकानाथो बलेन सह बालकैः ॥ जगाम तत्तालवनं परिपक्वफलान्वितम् ॥ १ ॥ वृक्षाणां रक्षिता दैत्यः खररूपी च धेनुकः ॥ कोटिसिंहसमबलो देवानां दर्पनाशनः ॥२॥ शरीरं पर्वतसमं कूपतुल्ये च लोचने ॥ ईषापंक्तिसमा दंतास्तुंडं पर्वतगह्वरम् ॥ ३ ॥ शतहस्तपरिमिता जिह्वा लोला भयानका ॥ कासारसदृशी नाभिः शब्दस्तस्य भयानकः ॥ ४ ॥ दृष्ट्वा तालवनं बाला हर्षमापुरनंदिताः ॥ कौतुकात्कृष्णमूचुस्ते स्मेराननसरोरुहाः ॥ ५ ॥ ॥ बाला ऊचुः ॥ ॥ हे कृष्ण करुणासिन्धो दीनबंधो जगत्पते ॥ महाबल बलभ्रातः समस्तबलिनां वर ॥ ६ ॥ अवधानं कुरु विभो क्षणार्द्धं नो निवेदने ॥ क्षुधितानां शिशूनां च भक्तानां भक्तवत्सल ॥ ७ ॥ स्वादूनि सुंदराण्येव पश्य तालफलानि च ॥ भंक्तुं चालयितुं वृक्षान्पातितुं च फलानि च ॥ ८ ॥ नानावर्णानि पुष्पाणि पक्वानि दुर्लभानि च ॥ आज्ञां करोषि चेत्कृष्ण चेष्टां कर्त्तुं वयं क्षमाः ॥ ९ ॥ किं त्वत्र दैत्यो बलवान्खररूपी च धेनुकः ॥ अजितस्त्रिदशैः सर्वैर्महाबलपराक्रमः ॥ १० ॥ दुर्निवार्यश्च सर्वेषां कंसस्य सचिवो महान् ॥ हिंसकः सर्वजंतूनां

नानामस्ति रक्षिता ॥ ११ ॥ क्षुधितार्थं जगत्कांत वद नो वदतां वर ॥ युक्तं कार्यमयुक्तं वा कर्तव्यमथ वा न वा
॥ १२ ॥ बालकानां वचः श्रुत्वा भगवान्मधुसूदनः ॥ उवाच मधुरं बालान्वचनं तत्सुखावहम् ॥ १३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥
किं वो दैत्याद्भयं बाला यूयं मत्सहचारिणः ॥ वृक्षान्भंक्त्वा चालयित्वा फलानि खादताभयम् ॥ १४ ॥ श्रीकृष्णा
ज्ञां समादाय बालका बलशालिनः ॥ उत्पेतुर्वृक्षशिखरं क्षुधिताश्च फलार्थिनः ॥ १५ ॥ नानाप्रकारवर्णानि स्वादूनि
सुंदराणि च ॥ फलानि पातयामासुः परिपक्वानि नारद ॥ १६ ॥ केचिद्बभंजुर्वृक्षांश्च चालयामासुरेव च ॥ केचित्कोलाहलं
चक्रुर्ननृतुस्तत्र केचन ॥ १७ ॥ अवरुह्य तरुभ्यश्च बालका बलशालिनः ॥ फलान्यादाय गच्छंतो ददृशुर्दैत्यपुंगवम् ॥ १८ ॥
महाबलं महाकायं घोरं गर्दभरूपिणम् ॥ आगच्छंतं महावेगात्कुर्वंतं शब्दमुल्बणम् ॥ १९ ॥ तं दृष्ट्वा रुरुदुः सर्वे फलानि
तत्यजुर्भिया ॥ कृष्णकृष्णेति शब्दं च प्रचक्रुर्बहुधा भृशम् ॥ २० ॥ अस्मान्रक्ष समागच्छ हे कृष्ण करुणानिधे ॥ हे संक
र्षण नो रक्ष प्राणा नो यांति दानवात् ॥२१॥ हे कृष्ण हे कृष्ण हरे मुरारे गोविंद दामोदर दीनबंधो ॥ गोपीश गोपेश भवार्णवेऽस्मा
ननंत नारायण रक्षरक्ष ॥ २२ ॥ भयेऽभये वाथ शुभेऽशुभे वा सुखेषु दुःखेषु च दीननाथ ॥ त्वया विनान्यं शरणं भवार्णवे न नोस्ति
हे माधव रक्षरक्ष ॥ २३ ॥ जयजय गुणसिंधो कृष्ण भक्तैकबंधो बहुतरभययुक्तान्बालकान्रक्षरक्ष ॥ जहि दनुजकुलानामीशमस्माक
मंतं सुरकुलबलदर्पं वर्धयेमं निहत्य ॥ २४ ॥ बालानां विक्लवं दृष्ट्वा बलेन सह माधवः ॥ आजगाम शिशुस्थानं भयहा भक्त
वत्सलः ॥ २५ ॥ भयं नास्ति भयं नास्तीत्युक्त्वा दुद्राव सत्वरम् ॥ ईषद्धास्यप्रसन्नास्यो निर्भयं दत्तवाञ्छिशून् ॥ २६ ॥ दृष्ट्वा
कृष्णं बलं बाला ननृतुर्विजहुर्भयम् ॥ हरिस्मृतिश्चाभयदा सर्वमंगलदायिका ॥ २७ ॥ श्रीकृष्णो दानवं दृष्ट्वा ग्रसंतं पुरतः शिशून् ॥
बलं संबोध्य बलिनमुवाच मधुसूदनः ॥ २८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ दानवो बलिपुत्रोयं नाम्ना साहसिको बली ॥ गर्दभो
[illegible] शप्तो दुर्वाससा पुरा ॥ २९ ॥ पापिष्ठो मम वध्योयं महाबलपराक्रमः ॥ अहमेनं वधिष्यामि त्वं रक्ष बालकान्बल ॥ ३० ॥

बालकान्सर्वान्दूरं गच्छेत्युवाच ह ॥ तान्गृहीत्वा बलः शीघ्रं जगाम त्वरयान्वया ॥ ३१ ॥ दृष्ट्वा कृष्णं दानवेंद्रो महाबलपराक्रमः ॥ जग्रास लीलया कोपाज्ज्वलदग्निशिखोपमम् ॥ ३२ ॥ बभूवातिदाहयुक्तो मर्तुकामोऽतितेजसा ॥ उद्गमास पुन दैत्यो विभुं तेजस्विनं भिया ॥ ३३ ॥ उज्झितं संतमीशं च दृष्ट्वा दैत्यो मुमोच ह ॥ अतीवसुंदरं शांतं ज्वलंतं ब्रह्मतेजसा ॥ ३४ ॥ कृष्णदर्शनमात्रेण बभूवास्य पुरा स्मृतिः ॥ आत्मानं बुबुधे कृष्णं जगतां कारणं परम् ॥ ३५ ॥ तेजःस्वरूपमीशं तं दृष्ट्वा तुष्टाव दानवः ॥ यथागमं यथाजन्म गुणातीतं श्रुतेः परम् ॥ ३६ ॥ ॥ दानव उवाच ॥ ॥ वामनोऽसि त्वमंशेन मत्पितुर्यज्ञभिक्षुकः ॥ राज्यहर्ता च श्रीहर्ता सुतलस्थलदायकः ॥ ३७ ॥ बलिभक्तिवशो वीरः सर्वेशो भक्तवत्सलः ॥ शीघ्रं त्वं छिन्धि मां पापं शापाद्गर्द भरूपिणम् ॥ ३८ ॥ मुनेर्दुर्वाससः शापादीदृशं जन्म कुत्सितम् ॥ मृत्युरुक्तश्च मुनिना त्वत्तो मम जगत्पते ॥ ३९ ॥ षोडशारेण चक्रेण सुतीक्ष्णेनातितेजसा ॥ जहि मां जगतां नाथ सद्भक्तिं कुरु मोक्षद ॥ ४० ॥ त्वमंशेन वराहश्च समुद्धर्तुं वसुंधराम् ॥ वेदानां रक्षिता नाथ हिरण्याक्षनिषूदनः ॥ ४१ ॥ त्वं नृसिंहः स्वयं पूर्णो हिरण्यकशिपोर्वधे ॥ प्रह्लादानुग्रहार्थाय देवानां रक्षणाय च ॥ ॥ ४२ ॥ त्वं च वेदोद्धारकर्त्ता मीनांशेन दयानिधे ॥ नृपस्य ज्ञानदानाय रक्षायै सुरविप्रयोः ॥ ४३ ॥ शेषाधारश्च कूर्मस्त्वमंशेन सृष्टिहेतवे ॥ विश्वाधारश्च विश्वस्त्वमंशेनापि सहस्रधृक् ॥ ४४ ॥ रामो दाशरथिस्त्वं च जानक्युद्धारहेतवे ॥ दशकंधरहंता च सिंधौ सेतुविधायकः ॥ ४५ ॥ कलया परशुरामश्च जमदग्निसुतो महान् ॥ त्रिःसप्तकृत्वो भूपानां निहंता जगतीपते ॥ ४६ ॥ अंशेन कपि लस्त्वं च सिद्धानां च गुरोर्गुरुः ॥ मातृज्ञानप्रदाता च योगशास्त्रविधायकः ॥ ४७ ॥ अंशेन ज्ञानिनां श्रेष्ठो नरनारायणावृषी ॥ त्वं च धर्मसुतो भूत्वा लोकविस्तारकारकः ॥ ४८ ॥ अधुना कृष्णरूपस्त्वं परिपूर्णतमः स्वयम् ॥ सर्वेषामवताराणां बीजरूपः सना तनः ॥ ४९ ॥ यशोदाजीवनो नित्यो नंदैकानंदवर्धनः ॥ प्राणाधिदेवो गोपीनां राधाप्राणाधिकप्रियः ॥ ५० ॥ वसुदेवसुतः शांतो देवकीदुःखभंजनः ॥ अयोनिसंभवः श्रीमान्पृथिवीभारहारकः ॥ ५१ ॥ पूतनायै मातृगतिं प्रदाता च कृपानिधिः ॥ बककेशि

प्रलंबानां ममापि मोक्षकारकः ॥ ५२ ॥ स्वेच्छामयगुणातीत भक्तानां भयभंजन ॥ प्रसीद राधिकानाथ प्रसीद कुरु मोक्षणम् ॥
॥ ५३ ॥ हे नाथ गार्दभीयोनेः समुद्धर भवार्णवात् ॥ मूर्खस्त्वद्भक्तपुत्रोहं मामुद्धर्तुं त्वमर्हसि ॥ ५४ ॥ वेदा ब्रह्मादयो यं च मुनींद्राः
स्तोतुमक्षमाः ॥ किं स्तौमि तं गुणातीतं पुरा दैत्योऽधुना खरः ॥ ५५ ॥ एवं कुरु कृपासिंधो येन मे न भवेज्जनुः ॥ दृष्ट्वा पादारविंदं
ते कः पुनर्भवनं व्रजेत् ॥ ५६ ॥ ब्रह्मा स्तोता खरः स्तोता नोपहासितुमर्हसि ॥ सदीश्वरस्य विज्ञस्य योग्यायोग्ये समा कृपा ॥५७॥
इत्येवमुक्त्वा दैत्येंद्रस्तस्थौ च पुरतो हरेः ॥ प्रसन्नवदनः श्रीमानतितुष्टो बभूव ह ॥ ५८ ॥ इदं दैत्यकृतं स्तोत्रं नित्यं भक्त्या च यः
पठेत् ॥ सालोक्यसार्ष्टिसामीप्यं लीलया लभते हरेः ॥५९॥ इह लोके हरेर्भक्तिमंते दास्यं सुदुर्लभम् ॥ विद्यां श्रियं सुकवितां पुत्रपौत्रा
न्यशो लभेत् ॥६०॥ ॥ श्रीनारायण उवाच ॥ ॥ श्रुत्वानुमेने दैत्येंद्रस्तवनं करुणानिधिः ॥ कथं करोमि संहारमीदृशं भक्तमित्यहो ॥
॥६१॥ अनुमन्य स्मृतिं तस्य संजहार हरिः स्वयम् ॥ न हि युक्तो वधः स्तोतुर्दुर्वक्तुर्विधिरीश्वरात् ॥६२॥ दानवो मायया विष्णोर्विस
स्मार पुनः स्वकम् ॥ दुरुक्तिस्तत्कंठदेशे ह्यदधिष्ठानं चकार ह॥६३॥ उवाच श्रीहरिं दैत्यः कोपात्प्रस्फुरिताधरः ॥ मुने सद्यो मर्तुकामो
दैवग्रस्तो विचेतनः॥६४॥ ॥ दैत्य उवाच ॥ ॥ ध्रुवं त्वं मर्तुकामोसि दुर्बुद्धे मानवार्भक ॥ अद्य प्रस्थापयिष्यामि त्वामहं यममंदिरम् ॥
॥६५॥ आयासि जीवनाकांक्षी मम तालवनं शिशो ॥ न यास्यसि पुनर्गेहं बांधवं न हि द्रक्ष्यसि ॥६६॥ न कंसो न जरासंधो नरको
न समो मम ॥ देवाः कंपंति मे नित्यं के चान्ये मत्समा भुवि ॥ ६७ ॥ न हि संहारकर्ता च मां संहर्तुं क्षमः शिवः ॥ न च ब्रह्मा न
विष्णुश्च न मृत्युः काल एव च ॥ ६८ ॥ मम तालतरून्भंक्त्वा पातयित्वा फलानि च ॥ अहंकरोषि सहसा किमहो कस्य तेजसा
॥ ६९ ॥ कस्त्वं वद बटो सत्यं कमनीयोतिसुंदरः ॥ दुर्लभं जीवनं दातुं मह्यं कथमिहागतः ॥ ७० ॥ इत्युक्त्वा मस्तके कृत्वा
भ्रामयित्वा तु तं बली ॥ दूरतः पातयामास श्रीकृष्णं मरणोन्मुखः ॥ ७१ ॥ पातयित्वा च तं भूमौ विषाणाभ्यां जघान सः ॥ ॥ ७१ ॥

१ गार्दभयोनेरित्यर्थः । २ खुराभ्यां च—इ० पा० ।

कृष्णांगस्पर्शमात्रेण तद्विषाणे बभंजतुः ॥ ७२ ॥ दैत्यो भग्नविषाणश्च तमीशं कोपयन्मुने ॥ जग्रास चर्वणं कर्तुं भग्नदंतो बभूव ह ॥ ७३ ॥ तेजसा दग्धवक्त्रश्च तमुज्जग्राह तत्क्षणे ॥ जज्वाल व्यथितः कोपाद्दार* खुरतो महीम् ॥ ७४ ॥ घूर्णयित्वा तु लांगूलं शब्दं कृत्वा भयानकम् ॥ स जगाम शिशुस्थानं दुद्रुवुर्बालका भिया ॥ ७५ ॥ बलं च प्रेरयामास मस्तकेन महाबली ॥ बलो मुष्टिं ददौ तस्मै मूर्छामाप ततोऽसुरः ॥ ७६ ॥ क्षणेन चेतनां प्राप्य जगाम हरिसन्निधिम् ॥ बलमुष्ट्या च व्यथितः पुनर्मूर्छामवाप सः ॥ ७७ ॥ पुनश्च चेतनां प्राप्य समुत्तस्थौ व्यथाकुलः ॥ उत्ससर्ज बृहल्लेंडं मूत्रं च भयमाप ह ॥ ७८ ॥ क्षणात्संधिक्षणं प्राप्य महाबलपराक्रमः ॥ कृत्वा शिरसि गोविंदं घूर्णयामास दानवः ॥ ७९ ॥ पातयामास भूमौ तं घूर्णयित्वा पुनःपुनः ॥ उत्पाट्य तालवृक्षं तं ताडयामास माधवः ॥ ८० ॥ यथा खड्गप्रहारेण दानवस्य भवेद्व्यथा ॥ तथा बभूव दैत्यस्य तालवृक्षस्य ताडनात् ॥ ८१ ॥ गोवर्धनं समुत्पाट्य घातयामास तं विभुः ॥ पपात वेगाच्छैलेंद्रस्तस्योपरि महामुने ॥ ८२ ॥ पर्वतस्य प्रहारेण मूर्छामाप महाबलः ॥ बभूव जर्जरांगश्च रुधिरं च समुद्वमन् ॥ ८३ ॥ क्षणेन चेतनां प्राप्य समुत्तस्थौ रुषाऽसुरः ॥ गृहीत्वा पर्वतश्रेष्ठं प्रेरयामास माधवम् ॥ ८४ ॥ दृष्ट्वा शैलमुत्पतंतं वेगेन मधुसूदनः ॥ जग्राह दक्षिणकरे यथेक्षुदंडवत्प्रभुः ॥ ८५ ॥ पूर्वस्थाने पर्वतं तं स्थापयामास कौतुकात् ॥ गृहीत्वा दैत्यकर्णाग्रं पातयामास दूरतः ॥ ८६ ॥ उत्पत्य च महावेगाच्चकार वेष्टनं हरेः ॥ पृथिवीं घर्षयामास तीक्ष्णाग्रेण खुरेण च ॥ ८७ ॥ प्रगृह्य श्रीहरिं वेगात्कृत्वा मूर्ध्नि महासुरः ॥ उत्पपात मनोयायी लीलया लक्षयोजनम् ॥ ८८ ॥ प्रहरं च तयोर्युद्धं निर्लक्षे च बभूव ह ॥ ततो गृहीत्वा श्रीकृष्णं पपात धरणीतले ॥ ८९ ॥ पुनर्मुहूर्तं युद्धं च बभूव भूतले तयोः ॥ मुदा हरिः प्रशशंस प्रहस्य दानवेश्वरम् ॥ ९० ॥ मद्भक्तस्य बलेः पुत्र धन्यं तज्जीवनं परम् ॥ स्वस्त्यस्तु ते दानवेंद्र वत्स निर्वाणतां व्रज ॥ ९१ ॥ मद्दर्शनं स्वस्तिबीजं परं निर्वाणकारणम् ॥ सर्वाधिकं सर्वपरं लभ स्थानं मनोहरम् ॥ ९२ ॥ इत्येवमुक्त्वा श्रीकृष्णः सस्मार चक्रमुत्तमम् ॥ सूर्यकोटिसमं दीप्त्या जग्राह तत्सुदर्शनम् ॥ ९३ ॥ चिक्षेप भ्रामयित्वा च षोडशारमनुत्तमम् ॥ चिच्छे

लीलयाऽवध्यं ब्रह्मविष्णुमहेश्वरैः ॥ ९४ ॥ पपात मस्तकं भूमौ दानवस्य महात्मनः ॥ तेजःसमूहं ततस्थौ शतसूर्यसमप्रभम्
॥ ९५ ॥ विलोक्य हरिलोकं संलिहं कृष्णपदांबुजे ॥ संप्राप्य परमं मोक्षमहो दानवपुंगवः ॥ ९६ ॥ गगनस्थाः सुराः सर्वे
मुनयश्च भृशं मुदा ॥ पारिजातप्रसूनानां चक्रुस्ते तत्र वर्षणम् ॥ ९७ ॥ नेदुर्दुंदुभयः स्वर्गे ननृतुश्चाप्सरोगणाः ॥ जगुर्गंधर्वनिकरा
स्तुष्टुवुर्मुनयो मुदा ॥ ९८ ॥ स्तुत्वा जग्मुः सुराः सर्वे मुनयो हर्षविह्वलाः ॥ धेनुकस्य वधं दृष्ट्वा तत्राजग्मुश्च बालकाः ॥ ९९ ॥
बलश्च बलिनां श्रेष्ठस्तुष्टाव पुरुषोत्तमम् ॥ तुष्टुवुर्बालकाः सर्वे ननृतुश्च मुदान्विताः ॥ १०० ॥ दत्त्वा कृष्णबलाभ्यां च प्रपक्वानि
फलानि च ॥ सर्वाणि भक्षयामासुर्बालाः प्रहृष्टमानसाः ॥ १०१ ॥ भुक्त्वा पीत्वा हरिः शीघ्रं बलेन बालकैः सह ॥ जगाम स्वालयं
ब्रह्मन्निहत्य दानवेश्वरम् ॥१०२॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे धेनुकवधोनाम द्वाविंशोऽध्यायः
॥ २२ ॥ ॥ नारद उवाच ॥ ॥ केन पापेन बलिजो गर्दभत्वमवाप ह ॥ दुर्वासाः केन दोषेण शशाप दानवेश्वरम् ॥ १ ॥ केन
पुण्येन वा नाथ बलिनः श्रीहरेः पदम् ॥ सहसैकत्वमुक्तिं च संप्राप दानवाधिपः ॥ २ ॥ मुने सर्वं सुविस्तार्य वद संदेहभंजन ॥
अहो कविमुखे काव्यं नूत्नंनूत्नं पदेपदे ॥ ३ ॥ ॥ श्रीनारायण उवाच ॥ ॥ शृणु वत्स प्रवक्ष्येहमितिहासं पुरातनम् ॥ पुरा श्रुतं
धर्मवक्त्रात्पर्वते गंधमादने ॥ ४ ॥ पाद्मकल्पे च वृत्तांतं विचित्रं सुमनोहरम् ॥ नारायणकथोपेतं कर्णपीयूषमुत्तमम् ॥ ५ ॥ यत्र
कल्पे कथा चेयं तत्र त्वमुपबर्हणः ॥ आकल्पजीवी सश्रीकः सुंदरः स्थिरयौवनः ॥ ६ ॥ पंचाशत्कामिनीनां च पतिः शृंगारत
त्परः ॥ वरेण ब्रह्मणस्त्वं च सुकंठो गायनेश्वरः ॥ ७ ॥ अनुक्षणं पपुस्तास्ते सुंदरं मुखपंकजम् ॥ निमेषरहिताः सर्वाः
कामबाणप्रपीडिताः ॥ ८ ॥ तासां प्राणैश्च घटितो विधिना त्वमिव श्रुतम् ॥ दिवानिशं सहचरा न जीवंति त्वया विना ॥
॥ ९ ॥ पुष्पोद्याने च रहसि स्थानेस्थाने मनोरमे ॥ गह्वरेषु च शैलानां कंदरेषु नदीषु च ॥ १० ॥ काननेषु च रम्येषु
स्थाने जंतुवर्जिते ॥ यथामनोरथं ताश्च क्रीडां चक्रुस्त्वया सह ॥ ११ ॥ तदा देवाद्द्विधेः शापाद्भूत्वा दासीसुतो भवान् ॥

साधुना ब्रह्मणः पुत्रो वैष्णवोच्छिष्टभोजनात् ॥ १२ ॥ असंख्यकल्पजीवी च वैष्णवप्रवरो महान् ॥ ज्ञानदृष्ट्या सर्वदर्शी प्रिय शिष्यश्च धूर्जटेः ॥ १३ ॥ तस्य कल्पस्य वृत्तांतं मुने मत्तो निशामय ॥ विस्तार्य दैत्यवृत्तांतं कथयामि सुधोपमम् ॥ १४ ॥ एक देव बलेः पुत्रो नाम्ना साहसिको बली ॥ स्वतेजसा सुराञ्जित्वा प्रतस्थे गंधमादनम् ॥ १५ ॥ चंदनोक्षितसर्वांगो रत्नभूषण भूषितः ॥ रत्नसिंहासनस्थश्च बहुसैन्यसमन्वितः ॥ १६ ॥ एतस्मिन्नंतरे तेन पथा याति तिलोत्तमा ॥ रूपेणाप्सरसां श्रेष्ठा नानावेषविधायिनी ॥ १७ ॥ चारुचंपकवर्णाभा रत्नाभरणभूषिता ॥ नवयौवनसंपन्ना कामबाणप्रपीडिता ॥ १८ ॥ ईषद्धास्य प्रसन्नास्या दिव्यवस्त्रं सुबिभ्रती ॥ वक्रभ्रूभंगयुक्ता सा गजेंद्रमंदगामिनी ॥ १९ ॥ स्तनमूरुं मुखेंदुं च दृष्ट्वा साहसिको युवा ॥ वायुना मुक्तवस्त्रायास्तस्या मूर्छामवाप ह ॥ २० ॥ सा ददर्श बलेः पुत्रमतीव सुमनोहरम् ॥ प्रफुल्लमालतीमालां बिभ्रतं नवयौव नम् ॥ २१ ॥ शरत्पार्वणचंद्रास्यं सुस्मितं सुमनोहरम् ॥ दृष्ट्वा तं विस्मिता कामात्कटाक्षं च चकार सा ॥ २२ ॥ क्रीडार्थे चंद्र लोकं च गच्छंती चंद्रकामुकी ॥ तस्थौ केन च्छलेनैव मत्ता शृंगारलालसा ॥ २३ ॥ दर्शंदर्शं च तस्यास्यं प्रहस्य वक्रचक्षुषा ॥ मुखस्याच्छादनं चक्रे वाससा सा पुनःपुनः ॥ २४ ॥ पुलकांकितसर्वांगं धर्मकर्मसमन्वितम् ॥ बभूव काममत्ताया योनौ कंडू यनं जलम् ॥ २५ ॥ विसस्मार शशधरं बलिपुत्रमनोरथा ॥ अहो को वेद भुवने दुर्ज्ञेयं पुंश्चलीमनः ॥ २६ ॥ पुंश्चल्यां यो हि वि श्वस्तो विधिना स विडंबितः ॥ बहिष्कृतश्च यशसा धर्मेण स्वकुलेन च ॥ २७ ॥ वांछितं नूतनं प्राप्य विनश्यति पुरातनम् ॥ तदा स्वकर्मसाध्या सा को वा तस्याः प्रियोऽप्रियः ॥ २८ ॥ दैवे कर्मणि पित्र्ये च पुत्रे बंधौ न भर्तरि ॥ दारुणं पुंश्चलीचित्तं सदा शृङ्गा रकर्मणि ॥ २९ ॥ प्राणाधिकं रतिज्ञं साऽमृतदृष्ट्या च पुंश्चली ॥ रत्नप्रदं रत्नविज्ञं विषदृष्ट्या हि पश्यति ॥ ३० ॥ सर्वेषां स्थल मस्त्येव पुंश्चलीनां न कुत्रचित् ॥ दारुणा पुंश्चली जातिर्नरघातिभ्य एव च ॥३१॥ निष्कृतिः सर्वभोगांते सर्वेषामस्ति निश्चितम् ॥ न पुंश्चलीनां विप्रेंद्र यावच्चंद्रदिवाकरौ ॥ ३२ ॥ अन्यासां कामिनीनां च कीटं हंतुं च या दया ॥ सा नास्ति पुंश्चलीनां तु कांत

भियः ॥ ददृशुर्यमुनातीरं वस्त्रवस्तुविहीनकम् ॥७१॥ चक्रुर्विषादं तोये च नग्नास्ता रुरुदुर्भृशम् ॥ क्व गतानि च वस्त्राणि वस्तूनीत्यूचु
स्त्र नः ॥७२॥ कृत्वा विषादं तत्रैव तमूचुर्गोपकन्यकाः ॥ पुटांजलियुताः सर्वा भक्त्या विनयपूर्वकम् ॥७३॥ ॥ गोपालिका ऊचुः ॥
परिधेयानि वस्त्राणि किंकरीणां सदीश्वर ॥ निबोधयात्मानमेव स्पर्शं कर्तुं त्वमर्हसि ॥ ७४ ॥ व्रतार्हाणि च वस्तूनि देवस्वानि च
सांप्रतम् ॥ अदत्तानि नोचितानि ग्रहीतुं वेदविद्वद ॥ ७५ ॥ देहि धौतानि धृत्वा च करिष्यामो व्रतं वयम् ॥ वस्तुनान्येन गोविंद
वस्तूनां भक्षणं कुरु ॥ ७६ ॥ एतस्मिन्नंतरे तत्र श्रीदामा वस्त्रपुंजिकाम् ॥ दर्शयित्वा च ताः सर्वा दूरं दुद्राव तत्पुरः ॥ ७७ ॥ दृष्ट्वा
सवस्त्रं गोपालं सर्वासामीश्वरी परा ॥ सर्वा वयस्याश्चोवाच कोपयुक्ता जलप्लुता ॥७८॥ ॥ श्रीराधिकोवाच ॥ ॥ हे सुशीले शशिकले
हे चन्द्रमुखि माधवि ॥ कदंबमाले हे कुन्ति यमुने सर्वमंगले ॥ ७९ ॥ हे पद्ममुखि सावित्रि पारिजाते च जाह्नवि ॥ सुधामुखि शुभे
पद्मे हे गौरि हे स्वयंप्रभे ॥ ८० ॥ कालिके कमले दुर्गे हे सरस्वति भारति ॥ अपूर्णे रति हे गंगे चांबिके सति सुंदरि ॥ ८१ ॥
कृष्णप्रिये मधुमति चंपे चंदननंदिनि ॥ यूयं सर्वाः समुत्थाय बद्धानयत बल्लवम् ॥ ८२ ॥ सर्वा राधाज्ञया तूर्णं समुत्थाय जला
त्क्रुधा ॥ प्रजग्मुर्गोपिका नग्ना योनिमाच्छाद्य पाणिना ॥ ८३ ॥ एतासां सहचारिण्यो गोप्यस्तूर्णं सहस्रशः ॥ प्रजग्मुस्तेन रूपेण
कोपादारक्तलोचनाः ॥ ८४ ॥ वेगेन दुद्रुवुः सर्वाः श्रीदामानं च बालिकाः ॥ वेगेन च प्रधावंतं बिभ्रतं वस्त्रपुंजिकाम् ॥ ८५ ॥
जगाम शीघ्रं श्रीदामा यत्र गोपाः सहांशुकाः ॥ जवेन दुद्रुवुर्गोप्यस्तत्पश्चाद्बलसंयुताः ॥ ८६ ॥ वस्त्रचोरांश्च गोपांश्च वेष्टयामासुरा
शु ताः ॥ भिया प्रदुद्रुवुर्बाला यत्र कृष्णः सहांशुकः ॥ ८७ ॥ श्रीकृष्णसहितान्बालान्वरयामासुराशु च ॥ गोपिकानां भिया गोपा
ददुर्वस्त्राणि माधवम् ॥ ८८ ॥ माधवः स्थापयामास स्कंधेस्कंधे तरोस्तथा ॥ कदंबवृक्षः शुशुभे वस्त्रैर्नानाविधैरपि ॥ ८९ ॥ वस्त्राणां
पुंजिकाः सर्वाः स्कंधेषु विनिधाय च ॥ उवाच गोपिकाः कृष्णः परिहासपरं वचः ॥ ९० ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ भो
भो गोपालिका नग्ना इदानीं किं करिष्यथ ॥ वस्त्रयाच्ञां प्रकर्तुं च कुरुताशु पुटांजलिम् ॥ ९१ ॥ गत्वा वदत युष्माकमीश्वरीमथ

राधिकाम् ॥ करोतु शीघ्रं वस्त्राणां याच्ञां कृत्वा पुटांजलिम् ॥ ९२ ॥ अन्यथाहं न दास्यामि युष्मभ्यमंशुकानि च ॥ युष्माकमी श्वरी राधा किं करिष्यति मेऽधुना ॥ ९३ ॥ व्रताराध्या च या देवी सा वा मे किं करिष्यति ॥ इत्येवं कथितं सर्वं ब्रूत यूयं च राधि काम् ॥ ९४ ॥ श्रीकृष्णवचनं श्रुत्वा ताः सर्वा गोपकन्यकाः ॥ वीक्ष्य लोचनकोणेन प्रजग्मू राधिकांतिकम् ॥ ९५ ॥ चक्रुर्निवे दनं गत्वा यदुवाच हरिः स्वयम् ॥ श्रुत्वा जहास सा राधा बभूव कामपीडिता ॥ ९६ ॥ श्रुत्वा तासां च वचनं पुलकांचित विग्रहा ॥ न जगाम हरेः स्थानं व्रीडया सस्मिता सती ॥ ९७ ॥ जले योगासनं कृत्वा दध्यौ कृष्णपदांबुजम् ॥ ब्रह्मेशानंतधर्माणां वंद्यमीप्सितदं परम् ॥ ९८ ॥ स्मारंस्मारं पदांभोजं साश्रुसंपूर्णलोचना ॥ भावातिरेकात्प्राणेशं तुष्टाव निर्गुणं परम् ॥ ९९ ॥ ॥ ॥ राधिकोवाच ॥ ॥ गोलोकनाथ गोपीश मदीश प्राणवल्लभ ॥ हे दीनबंधो दीनेश सर्वेश्वर नमोस्तु ते ॥ १०० ॥ गोपे श गोसमूहेश यशोदानंदवर्धन ॥ नंदात्मज सदानंद नित्यानंद नमोस्तु ते ॥ १०१ ॥ शतमन्योर्मन्युभग्न ब्रह्मदर्पविनाशक ॥ कालीयदमन प्राणनाथ कृष्ण नमोस्तु ते ॥ १०२ ॥ शिवानंतेश ब्रह्मेश ब्राह्मणेश परात्पर ॥ ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मबीज नमोस्तु ते ॥ १०३ ॥ चराचरतरोर्बीज गुणातीत गुणात्मक ॥ गुणबीज गुणाधार गुणेश्वर नमोस्तु ते ॥ १०४ ॥ अणिमादिकसिद्धीश सिद्धेः सिद्धिस्वरूपक ॥ तपस्तपस्विंस्तपसां बीजरूप नमोस्तु ते ॥ १०५ ॥ यदनिर्वचनीयं च वस्तु निर्वचनीयकम् ॥ तत्स्वरूप तयो र्बीज सर्वबीज नमोस्तु ते ॥ १०६ ॥ अहं सरस्वती लक्ष्मीर्दुर्गा गंगा श्रुतिप्रसूः ॥ यस्य पादार्चनान्नित्यं पूज्या तस्मै नमोनमः ॥ ॥ १०७ ॥ स्पर्शने यस्य भृत्यानां ध्यानेन च दिवानिशम् ॥ पवित्राणि च तीर्थानि तस्मै भगवते नमः ॥ १०८ ॥ इत्येवमुक्त्वा सा देवी जले संन्यस्य विग्रहम् ॥ मनः प्राणांश्च श्रीकृष्णे तस्थौ स्थाणुसमा सती ॥ १०९ ॥ राधाकृतं हरेः स्तोत्रं त्रिसंध्यं यः पठेन्नरः ॥ हरिभक्तिं च दास्यं च लभेद्राधागतिं ध्रुवम् ॥ ११० ॥ विपत्तौ यः पठेद्भक्त्या सद्यः संपत्तिमाप्नुयात् ॥ चिरकालगतं द्रव्यं हृतं नष्टं च लभ्यते ॥ १११ ॥ बंधुवृद्धिर्भवेत्तस्य प्रसन्नं मानसं परम् ॥ चिंताग्रस्तः पठेद्भक्त्या परां निर्वृतिमाप्नुयात् ॥ ११२ ॥

पतिभेदे पुत्रभेदे मित्रभेदे च संकटे ॥ मासं भक्त्या यदि पठेत्सद्यः संदर्शनं लभेत् ॥ ११३ ॥ भक्त्या कुमारीस्तोत्रं च शृणुयाद्वत्सरं यदि ॥ श्रीकृष्णसदृशं कांतं गुणवंतं लभेद्ध्रुवम् ॥ ११४ ॥ इति श्रीब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे राधाकृतं श्रीकृष्णस्तोत्रम् ॥ ॥ जलस्था राधिका ध्यात्वा श्रीकृष्णचरणांबुजम् ॥ स्तुत्वैवं चक्षुरुन्मील्य दृष्ट्वा कृष्णमयं जगत् ॥ ११५ ॥ ददर्श यमुनातीरं वस्त्रद्रव्यमयं मुने ॥ दृष्ट्वा तंद्राथवा स्वप्नमिति मेने च राधिका ॥ ११६ ॥ यत्र स्थाने यदाधारे यद्द्रव्यं संस्थितं पुरा ॥ वस्त्रैश्च सहितं सर्वं तत्प्रापुर्गोपकन्यकाः ॥ ११७ ॥ जलादुत्थाय ताः सर्वा व्रतं कृत्वा मनीषितम् ॥ संप्राप्य च वरं देव्यस्ताः सर्वाः स्वालयं ययुः ॥ ११८ ॥ ॥ नारद उवाच ॥ ॥ व्रतस्य किं विधानं च किं नाम किं फलं प्रभो ॥ कानि द्रव्याणि देयानि का देया तत्र दक्षिणा ॥ ११९ ॥ व्रतांते किं रहस्यं च बभूव सुमनोहरम् ॥ व्यासं कृत्वा महाभाग वद नारायणीं कथाम् ॥ ॥ १२० ॥ ॥ सूत उवाच ॥ ॥ नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुंगवः ॥ कथां कथितुमारेभे कवींद्राणां गुरोर्गुरुः ॥ १२१ ॥ ॥ ॥ नारायण उवाच ॥ ॥ सर्वं व्रतविधानं च मत्तो वत्स निशामय ॥ ख्यातं गौरीव्रतंनाम मार्गे मासि कृतं स्त्रिया ॥ १२२ ॥ पुंसां च धर्मकामार्थमोक्षदं कृष्णभक्तिदम् ॥ देशभेदे प्रसिद्धं च व्रतं पौर्वापरं स्मृतम् ॥ १२३ ॥ कामदं कामुकानां च फलं कांतनिमित्तकम् ॥ उपोष्य पूर्वदिवसे वस्त्रं प्रक्षाल्य संयता ॥ १२४ ॥ प्रातश्च मार्गसंक्रांत्यां भक्त्या गत्वा सरित्तटम् ॥ धृत्वा धौते च स्नात्वा च नानाद्रव्येण कन्यका ॥ १२५ ॥ देवषट्कं च संपूज्य कृत्वा चावाहनं घटे ॥ गणेशं च दिनेशं च वह्निं नारायणं शिवम् ॥ १२६ ॥ दुर्गां पंचोपचारैश्च संपूज्य व्रतमारभेत् ॥ घटाधः पिंडिकां कृत्वा चतुरस्रां सुविस्तृताम् ॥ चंदनागुरुकस्तूरीकुंकुमैश्च सुसंस्कृताम् ॥ १२७ ॥ निर्माय वालुकानां च दुर्गां दशभुजां पराम् ॥ धृत्वा कपाले सिंदूरं तदधश्चंदनेंदुकम् ॥ ॥ १२८ ॥ तां ध्यात्वाऽऽवाहयेद्देवीं ततो भूत्वा पुटांजलिः ॥ इमं मंत्रं पठित्वादौ ततः पूजां समारभेत् ॥ १२९ ॥ हे गौरि शंकरार्धांगि यथा त्वं शंकरप्रिया ॥ तथा मां कुरु कल्याणि कांतकांतां सुदुर्लभाम् ॥ १३० ॥ इमं मंत्रं पठित्वा तु ध्यायेद्देवीं जगत्प्रसूम् ॥

ध्यानं तत्सामवेदोक्तं निगूढं सर्वकामदम् ॥ १३१ ॥ शृणु नारद वक्ष्यामि मुनींद्राणां च दुर्लभम् ॥ ध्यायंत्यनेन सिद्धाश्च दुर्गां
दुर्गतिनाशिनीम् ॥ १३२ ॥ शिवां शिवप्रियां शैवां शिववक्षःस्थलस्थिताम् ॥ ईषद्धास्यप्रसन्नास्यां सुप्रतिष्ठां सुलोचनाम् ॥ १३३ ॥
नवयौवनसंपन्नां रत्नाभरणभूषिताम् ॥ रत्नकंकणकेयूररत्ननूपुरभूषिताम् ॥ १३४ ॥ रत्नकुंडलयुग्मेन गंडस्थलविराजिताम् ॥ मालती
माल्यसंसक्तकबरभ्रमरान्विताम् ॥ १३५ ॥ सिंदूरतिलकं चारुकस्तूरीबिंदुना सह ॥ वह्निशुद्धांशुकां रत्नकिरीटां सुमनोहराम् ॥
॥ १३६ ॥ मणींद्रसारसंसक्तरत्नमालासमुज्ज्वलाम् ॥ पारिजातप्रसूनानां मालाजालानुलंबिताम् ॥ १३७ ॥ सुपीनकठिनश्रोणीं
बिभ्रतीं च स्तनानताम् ॥ नवयौवनभारौघादीषन्नम्रां मनोहराम् ॥ १३८ ॥ ब्रह्मादिभिः स्तूयमानां सूर्यकोटिसमप्रभाम् ॥ पक्वबिं
बाधरौष्ठीं च चारुचंपकसन्निभाम् ॥ १३९ ॥ मुक्तापंक्तिविनिंद्यैकदंतराजिविराजिताम् ॥ मुक्तिकामप्रदां देवीं शरच्चंद्रमुखीं भजे ॥
॥ १४० ॥ ध्यात्वैवं मस्तके पुष्पं विन्यस्य च व्रती मुदा ॥ पुष्पं गृहीत्वा भक्त्या च पुनर्ध्यात्वा च पूजयेत् ॥ १४१ ॥ दत्त्वा
षोडशोपचारान्प्रहृष्टं तत्र नित्यशः ॥ पूर्वोक्तेनैव मंत्रेण मुदा भक्त्या व्रते व्रती ॥ १४२ ॥ पूर्वोक्तेनैव स्तोत्रेण स्तुत्वा च प्रणमेत्तदा ॥
कृत्वा प्रणामं भक्त्या च संयतः शृणुयात्कथाम् ॥ १४३ ॥ ॥ नारद उवाच ॥ ॥ व्रतं व्रतविधानं च फलं च स्तोत्रमद्भुत
म् ॥ अधुना श्रोतुमिच्छामि गौरीव्रतकथां शुभाम् ॥ १४४ ॥ व्रतं केन कृतं पूर्वं भूमौ केन प्रकाशितम् ॥ एतत्सर्वं सुविस्तार्य
वद संदेहभंजन ॥ १४५ ॥ ॥ श्रीनारायण उवाच ॥ ॥ कुशध्वजस्य हि सुता नाम्ना वेदवती सती ॥ तया कृतं व्रतमि
दं महातीर्थे च पुष्करे ॥ १४६ ॥ समाप्तिदिवसे साक्षाद्बभूव जगदंबिका ॥ योगिनीलक्षसंयुक्ता सूर्यकोटिसमप्रभा ॥ १४७ ॥ शात
कुंभविनिर्माणरथस्था परमेश्वरी ॥ ईषद्धास्यप्रसन्नास्या तामुवाच सुसंयताम् ॥ १४८ ॥ ॥ पार्वत्युवाच ॥ ॥ हे वेदवति
भद्रं ते वरं वृणु यथेप्सितम् ॥ तव व्रतेन तुष्टाहं तुभ्यं दास्यामि वांछितम् ॥ १४९ ॥ पार्वतीवचनं श्रुत्वा दृष्ट्वा तां हृष्टमानसाम् ॥
पुटांजलियुता साध्वी प्रणम्योवाच नारद ॥ १५० ॥ ॥ वेदवत्युवाच ॥ ॥ देवि नारायणं कांतं मह्यं देहि मनीषितम् ॥

वसेन्यस्मिन्स्पृहा नास्ति दृढां भक्तिं च तत्पदे ॥ १५१ ॥ श्रुत्वा वेदवतीवाक्यं प्रहस्य जगदंबिका ॥ अवरुह्य रथात्तूर्णं तामुवाच
हरिप्रियाम् ॥ १५२ ॥ ॥ पार्वत्युवाच ॥ ॥ ज्ञातं सर्वं जगन्मातस्त्वं च लक्ष्मीः स्वयं सती ॥ भारतं पादरजसा पूतं कर्तुं
समागता ॥ त्वत्पादरजसा साध्वि सद्यः पूता वसुंधरा ॥ १५३ ॥ निखिलानि च तीर्थानि पूतानि परमेश्वरि ॥ व्रतं ते लोकशि
क्षार्थं तपश्चर तपस्विनि ॥ १५४ ॥ नारायणस्य कांता त्वं प्रिया जन्मनिजन्मनि ॥ भारावतरणे विष्णुर्वसुधामागमिष्यति ॥
॥ १५५ ॥ रामो दाशरथिः पूर्णः कर्तुं दस्युविनिग्रहम् ॥ ब्रह्मशापाच्च च्युतयोर्मोक्षणाय च भक्तयोः ॥ १५६ ॥ अयोध्यायां च त्रेता
यामाविर्भावो हरेरपि ॥ त्वमेव मिथिलां गच्छ विधाय शिशुविग्रहम् ॥ १५७ ॥ त्वामिमां प्राप्य जनकोऽप्ययोनिसंभवां सुताम् ॥ पाल
यिष्यति यत्नेन सीता त्वं च भविष्यसि ॥ १५८ ॥ गत्वा रामोपि मिथिलां त्वद्विवाहं करिष्यति ॥ नारायणस्य कांता त्वं कल्पेकल्पे
भविष्यसि ॥ १५९ ॥ इत्युक्त्वा तां समालिंग्य पार्वती स्वालयं ययौ ॥ गत्वा सा मिथिलां साध्वी शिशुरूपं विधाय च ॥ १६० ॥
लांगलस्य च रेखायां सुखात्तस्थौ च मायया ॥ विलोक्य जनकस्तां च नग्नां मुद्रितलोचनाम् ॥ १६१ ॥ तप्तकांचनवर्णां च रुदंतीं
तेजसान्विताम् ॥ दृष्ट्वा तां च गृहीत्वा च कृत्वा वक्षसि नारद ॥ १६२ ॥ गच्छंतं प्रति तत्रैव वाग्बभूवाशरीरिणी ॥ अयोनिसंभ
वां कन्यां कमलां ग्रहणं कुरु ॥ १६३ ॥ नारायणस्ते जामाता भवितेत्येव मे वचः ॥ श्रुत्वा तदा देववाणीं गृहीत्वा कन्यकामृषिः
॥ १६४ ॥ गत्वा ददौ स्वकांतायै पालनाय मुदान्वितः ॥ सा लब्धयौवना प्राप रामं दाशरथिं सती ॥ १६५ ॥ व्रतस्यास्य
प्रभावेण कांतं त्रिजगतां पतिम् ॥ प्रकाशितं वशिष्ठेन पृथिव्यां भक्तिभावतः ॥ १६६ ॥ राधा कृत्वा व्रतमिदं श्रीकृष्णं प्राणवल्लभम् ॥
गोपांगनाश्च तं प्रापुर्व्रतस्यास्य प्रभावतः ॥ १६७ ॥ इत्येवं कथिता विप्र कथा गौरीव्रतस्य च ॥ भारते च व्रतमिदं या करोति
कुमारिका ॥ स्वामिनं कृष्णतुल्यं च सा प्राप्नोति न संशयः ॥ १६८ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एवं व्रतं च चक्रु ॥ ८८ ॥
स्ता यावन्मासं च गोपिकाः ॥ पूर्वस्तोत्रेण तां देवीं तुष्टुवुश्च दिनेदिने ॥ १६९ ॥ समाप्तिदिवसे गोप्यो व्रतं कृत्वा मुदान्विताः ॥

कृष्णशाखोक्तस्तोत्रेण तुष्टुवुः परमेश्वरीम् ॥ १७० ॥ येन स्तोत्रेण तां स्तुत्वा सीता सत्यपरायणा ॥ सद्यः संप्राप कांतं च रामं राजीवलोचनम् ॥ १७१ ॥ ॥ जानक्युवाच ॥ ॥ शक्तिस्वरूपे सर्वेषां सर्वाधारे गुणाश्रये ॥ सदाशंकरयुक्ते च पतिं देहि नमोऽस्तु ते ॥ १७२ ॥ सृष्टिस्थित्यंतरूपेण सृष्टिस्थित्यंतरूपिणी ॥ सृष्टिस्थित्यंतबीजानां बीजरूपे नमोऽस्तु ते ॥ १७३ ॥ हे गौरि पतिमर्मज्ञे पतिव्रतपरायणे ॥ पतिव्रते पतिरते पतिं देहि नमोऽस्तु ते ॥ १७४ ॥ सर्वमंगलमांगल्ये सर्वमंगलसंयुते ॥ सर्वमंगल बीजे च नमस्ते सर्वमंगले ॥ १७५ ॥ सर्वप्रिये सर्वबीजे सर्वाशुभविनाशिनि ॥ सर्वेशे सर्वजनके नमस्ते शंकरप्रिये ॥ १७६ ॥ परमात्मस्वरूपे च नित्यरूपे सनातनि ॥ साकारे च निराकारे सर्वरूपे नमोऽस्तु ते ॥ १७७ ॥ क्षुत्तृष्णेच्छा दया श्रद्धा निद्रा तंद्रा स्मृतिः क्षमा ॥ एतास्तव कलाः सर्वा नारायणि नमोस्तु ते ॥ १७८ ॥ लज्जा मेधा तुष्टिपुष्टी शांतिसंपत्तिवृद्धयः ॥ एतास्तव कलाः सर्वाः सर्वरूपे नमोऽस्तु ते ॥ १७९ ॥ दृष्टादृष्टस्वरूपे च तयोर्बीजफलप्रदे ॥ सर्वानिर्वचनीये च महामाये नमोऽस्तु ते ॥ १८० ॥ शिवे शंकरसौभाग्ययुक्ते सौभाग्यदायिनि ॥ हरिं कांतं च सौभाग्यं देहि देवि नमोऽस्तु ते ॥ १८१ ॥ स्तोत्रेणानेन याः स्तुत्वा समाप्तिदिवसे शिवाम् ॥ नमंति परया भक्त्या ता लभंते हरिं पतिम् ॥ १८२ ॥ इह कांतसुखं भुक्त्वा पतिं प्राप्य परात्परम् ॥ दिव्यं स्यंदनमारुह्य यांत्यंते कृष्णसन्निधिम् ॥ १८३ ॥ इति ब्रह्मवैवर्ते सीताकृतं पार्वतीस्तोत्रम् ॥ ॥ समाप्तिदिवसे राधा गोपीभिः सह संयुता ॥ देवीं प्रणम्य स्तुत्वा च व्रतं पूर्णं चकार ह ॥ १८४ ॥ गोसहस्रं ब्राह्मणेभ्यः सुवर्णशतकं मुदा ॥ विप्राय दक्षिणां दत्त्वा स्वगृहं गंतुमुद्यता ॥ १८५ ॥ ब्राह्मणानां सहस्रं च भोजयामास सादरम् ॥ वाद्यानि वादयामास भिक्षुकाय धनं ददौ ॥ १८६ ॥ एतस्मिन्नंतरे तत्र दुर्गा दुर्गार्तिनाशिनी ॥ आविर्बभूव गगनाज्ज्वलंती ब्रह्मतेजसा ॥ १८७ ॥ ईषद्धास्यप्रसन्नास्या योगिनीशतसंयुता ॥ सिंहस्था च दशभुजा रत्नालंकारभूषिता ॥ १८८ ॥ शातकुंभमयाद्दिव्याद्रत्नसारपरिच्छदात् ॥ अवरुह्य रथात्तूर्णमालिंग्योरसि राधिकाम् ॥ १८९ ॥ दृष्ट्वा गोपांगना देवीं प्रणेमुश्च मुदान्विताः ॥ आशिषं युयुजे दुर्गा वांच्छासिद्धिर्भ

विष्यसि ॥ १९० ॥ गोपिकाभ्यो वरं दत्त्वा ताः संभाष्य च सादरम् ॥ उवाच राधिकां दुर्गा स्मेराननसरोरुहा ॥ १९१ ॥
॥ ॥ पार्वत्युवाच ॥ ॥ राधे सर्वेश्वरप्राणादधिके जगदंबिके ॥ व्रतं ते लोकशिक्षार्थं मायामानुषरूपिणि ॥ १९२ ॥ गोलोकनाथं
गोलोकं श्रीशैलं गिरिजातटम् ॥ श्रीरासमंडलं दिव्यं वृन्दावनमनोहरम् ॥ १९३ ॥ चरितं रतिचोरस्य स्त्रीणां मानसहारकम् ॥
विदुषः कामशास्त्राणां किंस्वित्स्मरसि सुंदरि ॥ १९४ ॥ श्रीकृष्णार्धांगसंभूता कृष्णतुल्या च तेजसा ॥ तवांशकलया देव्यः कथं
त्वं मानुषी सती ॥ १९५ ॥ भवती च हरेः प्राणा भवत्याश्च हरिः स्वयम् ॥ वेदे नास्ति द्वयोर्भेदः कथं त्वं मानुषी सती ॥ १९६ ॥
षष्टिवर्षसहस्राणि ब्रह्मा तप्त्वा तपः पुरा ॥ न ते ददर्श पादाब्जं कथं त्वं मानुषी सती ॥ १९७ ॥ कृष्णाज्ञया च त्वं देवि गोपी
रूपं विधाय च ॥ आगतासि महीं शांते कथं त्वं मानुषी सती ॥ १९८ ॥ सुयज्ञो हि नृपश्रेष्ठो मनुवंशसमुद्भवः ॥ त्वत्तो जगाम
गोलोकं कथं त्वं मानुषी सती ॥ १९९ ॥ त्रिःसप्तकृत्वो निर्भूपां चकार पृथिवीं भृगुः ॥ तव मंत्रेण कवचात्कथं त्वं मानुषी सती
॥ २०० ॥ शंकरात्प्राप्य त्वन्मंत्रं सिद्धं कृत्वा च पुष्करे ॥ जघान कार्तवीर्यं च कथं त्वं मानुषी सती ॥ २०१ ॥ बभंज दर्पाद्दंतं
च गणेशस्य महात्मनः ॥ त्वत्तो नाम भयं चक्रे कथं त्वं मानुषी सती ॥ २०२ ॥ मय्युद्धतायां कोपेन भस्मसात्कर्तुमीश्वरः ॥
ररक्षागत्य मत्प्रीत्या कथं त्वं मानुषी सती ॥ २०३ ॥ कल्पेकल्पे तव पतिः कृष्णो जन्मनिजन्मनि ॥ व्रतं लोकहितार्थाय जगन्मा
तस्त्वया कृतम् ॥ २०४ ॥ अहो श्रीदामशापेन भारावतरणेन च ॥ भूमौ तवाधिष्ठानं च कथं त्वं मानुषी सती ॥ २०५ ॥
अयोनिसंभवा त्वं च जन्ममृत्युजरापहा ॥ कलावतीसुता पुण्या कथं त्वं मानुषी सती ॥ २०६ ॥ त्रिषु मासेष्वतीतेषु मधुमासे
मनोहरे ॥ निर्जने निर्मले रात्रौ सुयोग्ये रासमंडले ॥ २०७ ॥ सर्वाभिर्गोपिकाभिश्च सार्धं वृन्दावने वने ॥ हर्षेण हरिणा सार्धं
क्रीडा ते भविता सति ॥ २०८ ॥ विधात्रा लिखिता क्रीडा कल्पेकल्पे महीतले ॥ तव श्रीहरिणा सार्धं केन राधे निवार्यते
॥ २०९ ॥ यथा सौभाग्ययुक्ताहं हरस्य श्रीहरिप्रिये ॥ तथा सौभाग्ययुक्ता त्वं भव कृष्णस्य सुंदरि ॥ २१० ॥ यथा क्षीरेषु धाव

त्वं यथा वह्नौ च दाहिका ॥ भुवि गंधो जले शैत्यं तथा कृष्णे स्थितिस्तव ॥ २११ ॥ देवी वा मानुषी वापि गांधर्वी राक्षसी तथा ॥ त्वत्तः परा च सौभाग्या न भूता न भविष्यति ॥ २१२ ॥ परात्परो गुणातीतो ब्रह्मादीनां च वंदितः ॥ स्वयं कृष्णस्त व धीनो मद्वरेण भविष्यति ॥ २१३ ॥ ब्रह्मानंतशिवाराध्यो भविता त्वद्वशः सति ॥ ध्यानासाध्यो दुराराध्यः सर्वेषामपि योगिनाम् ॥ २१४ ॥ त्वं च भाग्यवती राधे स्त्रीजातिषु न ते परा ॥ कृष्णेन सार्धं पश्चात्त्वं गोलोकं च गमिष्यसि ॥२१५॥ इत्युक्त्वा पार्वती सद्यस्तत्रैवांतर्दधे मुने ॥ सार्धं गोपालिकाभिश्च राधिका गंतुमुद्यता ॥२१६॥ एतस्मिन्नंतरे कृष्णो जगाम राधिकापुरः ॥ राधा ददर्श श्रीकृष्णं किशोरं श्यामसुंदरम् ॥२१७॥ पीतवस्त्रपरीधानं नानालंकारभूषितम् ॥ आजानुमालतीमालावनमालाविभूषितम् ॥ २१८ ॥ ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥ चंदनोक्षितसर्वांगं शरत्पंकजलोचनम् ॥ २१९ ॥ शरत्पार्वणचंद्रास्यं सद्रत्नमुकुटोज्ज्वलम् ॥ पक्वदाडिमबीजाभदशनं सुमनोहरम् ॥ २२० ॥ विनोदमुरलीहस्तन्यस्तलीलासरोरुहम् ॥ कोटिकंदर्पलावण्यं लीलाधाममनोहरम् ॥२२१॥गुणातीतं स्तूयमानं ब्रह्मानंतशिवादिभिः॥ ब्रह्मस्वरूपं ब्रह्मण्यं श्रुतिभिश्चानिरूपितम् ॥२२२॥ अव्यक्तमक्षराव्यक्तं ज्योतीरूपं सनातनम् ॥ मांगल्यं मंगलाधारं मंगलं मंगलप्रदम् ॥ २२३ ॥ दृष्ट्वा तदद्भुतं रूपं संभ्रमात्प्रणनाम तम् ॥ तं दृष्ट्वा मूर्च्छिता राधा कामबाणप्रपीडिता ॥ २२४ ॥ दर्शंदर्शं मुखांभोजं सस्मिता वक्रलोचना ॥ मुखस्याच्छादनं चक्रे व्रीडया च पुनःपुनः ॥ २२५ ॥ दृष्ट्वा हरिस्तामुवाच प्रसन्नवदनेक्षणः ॥ गोपालिकासमूहानां सर्वेषां पुरतः स्थितः ॥ २२६ ॥ श्रीकृष्ण उवाच ॥ ॥ प्राणाधिके राधिके त्वं वरं वृणु मनीषितम् ॥ भोभो गोपालिकाः सर्वा वरं वृणुत वांछितम् ॥ २२७ ॥ कृष्णस्य वचनं श्रुत्वा वरं वव्रे च राधिका ॥ गोपालिकाः प्रहृष्टाश्च सर्वसंकल्पपादपात् ॥ २२८ ॥ ॥ राधिकोवाच ॥ ॥ त्वत्पादाब्जे मन्मनोलिः सततं भ्रमतु प्रभो ॥ पातुं भक्तिरसं पद्मे मधुपश्च यथा मधु ॥ २२९ ॥ मदीयप्राणनाथस्त्वं भव जन्मनिजन्मनि ॥ त्वदीयचरणांभोजे देहि भक्तिं सुदुर्लभाम् ॥२३०॥ तव स्मृतौ गुणे चित्तं स्वप्ने ज्ञाने दिवानिशम् ॥ भवेन्निमग्नं सततमेतन्मम मनीषितम् ॥२३१॥ ॥ गोपालिका

ऊचुः ॥ ॥ यथा राधा तथा नश्च प्राणबंधो दिवानिशम् ॥ भविष्यसि प्राणनाथः पास्यसि प्रतिजन्मनि ॥ २३२ ॥ आसां च वचनं
श्रुत्वा तथास्त्वेवमुवाच ह ॥ प्रसन्नवदनः श्रीमान्यशोदानंदवर्धनः ॥ २३३ ॥ क्रीडापद्मं राधिकायै सहस्रदलसंयुतम् ॥ ललितां
मालतीमालां ददौ प्रीत्या जगत्पतिः ॥ २३४ ॥ मालासमूहं पुष्पाणि गोपीभ्यो गोपिकापतिः ॥ प्रहस्य परमप्रीत्या प्रददावित्यु
वाच ह ॥ २३५ ॥ श्रीकृष्ण उवाच ॥ ॥ त्रिषु मासेष्वतीतेषु यूयं क्रीडां मया सह ॥ रासमंडलरम्ये च वृंदारण्ये
करिष्यथ ॥ २३६ ॥ यथाहं च तथा यूयं नाहं भेदः श्रुतौ श्रुतः ॥ प्राणोऽहं चैव युष्माकं यूयं प्राणा मम प्रभोः ॥ २३७ ॥
व्रतं वो लोकरक्षार्थं न हि स्वार्थमिदं प्रियाः ॥ सहागताश्च गोलोकाद्गमनं च मया सह ॥ २३८ ॥ गच्छत स्वालयं शीघ्रं
वोऽहं जन्मनिजन्मनि ॥ प्राणेभ्योऽपि गरीयस्यो यूयं मे नात्र संशयः ॥ २३९ ॥ इत्युक्त्वा श्रीहरिस्तत्र तस्थौ सूर्यसुतातटे ॥
तस्थुर्गोपालिकाः सर्वा वीक्ष्य कृष्णं पुनःपुनः ॥२४०॥ सर्वाः प्रहृष्टवदनाः सस्मिता वक्रलोचनाः ॥ प्रीत्या चक्षुश्चकोराभ्यां मुखचं
द्रं पपुर्हरेः ॥ २४१ ॥ ताः शीघ्रं प्रययुर्गेहं जयं दत्त्वा पुनःपुनः ॥ हरिश्च शिशुभिः सार्द्धं प्रसन्नः स्वालयं ययौ ॥ २४२ ॥ इत्येवं
कथितं सर्वं हरेश्चरितमंगलम् ॥ गोपीनां वस्त्रहरणं सर्वलोकसुखावहम् ॥ २४३ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे
नारायणनारदसंवादे गोपिकावस्त्रहरणप्रस्तावोनाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ नारद उवाच ॥ ॥ त्रिषु मासेष्वतीतेषु
तासां च हरिणा सह ॥ वद केन प्रकारेण बभूव तनुसंगमः ॥ १ ॥ वृंदावनं किंप्रकारं किंविधं रासमंडलम् ॥ हरिरेकस्ताश्च बह्व्यः
केन क्रीडा बभूव ह ॥ २ ॥ कुतूहलं भवति मे इदं श्रोतुं नवंनवम् ॥ कथयस्व महाभाग पुण्यश्रवणकीर्तन ॥ ३ ॥ कथापुराणसारा
णां रासयात्रा हरेरहो ॥ हरिलीलाः पृथिव्यां तु सर्वाः श्रुतिमनोहराः ॥ ४ ॥ ॥ सूत उवाच ॥ ॥ नारदस्य वचः श्रुत्वा ॥ १०
ऋषिर्नारायणः स्वयम् ॥ प्रहस्य सुप्रसन्नास्यः प्रवक्तुमुपचक्रमे ॥ ५ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एकदा श्रीहरिर्नक्तं वनं

१ श्रुतमस्यास्तीति श्रुतः—अर्श आदित्वादच् ।

वृंदावनं ययौ ॥ शुभे शुक्लत्रयोदश्यां पूर्णे चंद्रोदये मुने ॥ ६ ॥ यूथिकामालतीकुंदमाधवीपुष्पवायुना ॥ वासितं कलनादेन मधु
व्रातानां मनोहरम् ॥ ७ ॥ नवपल्लवसंयुक्तं पुंस्कोकिलरुतश्रुतम् ॥ नवलक्षरासवाससंयुक्तं सुमनोहरम् ॥ ८ ॥ चंदनागुरुकस्तूरीकुंकु
मेन सुवासितम् ॥ कर्पूरान्विततांबूलभोगद्रव्यसमन्वितम् ॥ ९ ॥ प्रसूनैश्चंपकानां च कस्तूरीचंदनान्वितैः ॥ रतियोग्यैर्विरचितैर्ना
नातल्पैः सुशोभितम् ॥ १० ॥ दीप्तं रत्नप्रदीपैश्च धूपेन सुरभीकृतम् ॥ नानापुष्पैश्च रचितं मालाजालैर्विराजितम् ॥ ११ ॥ परितो
वर्तुलाकारं तत्रैव रासमंडलम् ॥ चंदनागुरुकस्तूरीकुंकुमेन सुसंस्कृतम् ॥१२॥ पुष्पोद्यानैः पुष्पितैश्च युक्तं क्रीडासरोवरैः ॥ हंसकारं
डवाकीर्णैर्जलकुक्कुटकूजितैः ॥ १३ ॥ क्रीडनीयैः सुंदरैश्च सुरतश्रमहारिभिः ॥ शुद्धस्फटिकसंकाशतोयपूर्णैः सुनिर्मलैः ॥ १४ ॥
दधिपूर्णशुक्लधान्यजलैर्निर्मञ्छनीकृतम् ॥ रंभास्तंभसमूहेन सुंदरेण सुशोभितम् ॥ १५ ॥ आम्रपल्लवयुक्तेन सूत्रबंधेन चारुणा ॥ भूषि
तं मंगलघटैः सिंदूरचंदनान्वितैः ॥१६॥ मालतीमाल्यसंयुक्तैर्नारिकेलफलान्वितैः ॥ स रासमंडलं दृष्ट्वा जहास मधुसूदनः ॥ १७ ॥
चकार तत्र कुतुकाद्विनोदमुरलीरवम् ॥ गोपीनां कामुकीनां च कामवर्धनकारणम् ॥ १८ ॥ तच्छ्रुत्वा राधिका सद्यो मुमोह मद
नातुरा ॥ बभूव स्थाणुवद्देहा ध्यानैकतानमानसा ॥ १९ ॥ क्षणेन चेतनां प्राप्य पुनः शुश्राव सा ध्वनिम् ॥ उवास सा समुत्तस्थौ
समुद्विग्ना पुनःपुनः ॥ २० ॥ त्यक्त्वा चावश्यकं कर्म निःससार द्रुतं गृहात् ॥ ययौ तदनुसारेण प्रसमीक्ष्य चतुर्दिशम् ॥ २१ ॥
ध्यायंती चरणांभोजं श्रीकृष्णस्य महात्मनः ॥ तेजसा च द्योतयंती सद्रत्नसारभूषणैः ॥ २२ ॥ बहिर्बभूवुस्तास्त्रस्ता वरेण हृतचे
तनाः ॥ कुलधर्मं परित्यज्य निःशंकाः काममोहिताः ॥ २३ ॥ त्रयस्त्रिंशद्वयस्याश्च ताः सुशीलादयः स्मृताः ॥ राधिकायाः
प्रियतमा गोपीनां प्रवरा ययुः ॥२४॥ तासां पश्चाद्ययुर्गोप्यस्तासां संख्यां निबोध मे ॥ समा वेषेण वयसा रूपेण च गुणेन च ॥२५॥
ययुः सुशीलासंगेन सहस्राणि च षोडश ॥ ययुश्चंद्रमुखी पश्चात्सहस्राणि च षोडश ॥ २६ ॥ एकादशसहस्राणि माधव्यालयश्च
निर्ययुः ॥ अन्ययुः कदंबमालाल्यः सहस्राणि त्रयोदश ॥ २७ ॥ ययुः कुन्तीवयस्याश्च सहस्राणि दश स्मृताः ॥ चतुर्दश सहस्राणि

स्वयुक्ता यमुनानुगाः ॥ २८ ॥ जाह्नवीसहचारिण्यः सहस्राणि ययुर्नव ॥ ययुर्नवसहस्राणि पद्ममुख्यालय एव च ॥२९॥ सावित्र्यालयः पंचदश सहस्राणि ययुर्व्रजात् ॥ पारिजातावयस्याश्च सहस्राणि ययुर्दश ॥ ३० ॥ स्वयंप्रभानुगाः सप्त सहस्राणि ययुर्व्रजात् ॥ ययुः सुधामुखीगोप्यः सहस्राणि चतुर्दश ॥३१॥ शुभानुगा ययुर्गोप्यः सहस्राणि चतुर्दश ॥ पद्मानुगा ययुर्गोप्यः सहस्राणि चतुर्दश॥३२॥ गौरीपश्चा[1] ययुर्गोप्यः सहस्राणि चतुर्दश ॥ ययुः सर्वमंगलाल्यः सहस्राणि च षोडश ॥ ३३ ॥ कालिकाल्यो ययुर्गोप्यः सहस्राणि च षोडश ॥ निर्ययुः कमलाल्यश्च सहस्राणि त्रयोदश ॥ ३४ ॥ दुर्गानुगा ययुर्गोप्यः सहस्राणि च षोडश ॥ ययुः सरस्वतीपश्चात्सहस्राणि त्रयोदश ॥ ३५ ॥ प्रजग्मुर्भारतीपश्चात्सहस्राणि दश व्रजात् ॥ अपर्णासहचारिण्यः सहस्राणि चतुर्दश ॥ ३६ ॥ रतिपश्चाद्वयस्याश्च सहस्राणि ययुर्दश ॥ गंगावयस्याः प्रययुः सहस्राणि चतुर्दश ॥ ३७ ॥ प्रजग्मुरंबिकापश्चात्सहस्राणि च षोडश ॥ सतीपश्चाद्ययुर्गोप्यः सहस्राणि त्रयोदश ॥ ३८ ॥ नंदिनीसहचारिण्यः सहस्राणि ययुर्दश ॥ प्रययुः सुंदरीपश्चात्सहस्राणि त्रयोदश ॥ ॥३९॥ ययुः कृष्णप्रियापश्चात्सहस्राणि च षोडश ॥ ययुर्मधुमतीपश्चात्सहस्राणि च षोडश ॥ ४० ॥ ययुश्चम्पानुगा गोप्यः सहस्राणि त्रयोदश ॥ चंदनाल्यो ययुः पश्चात्सहस्राणि च षोडश ॥ ४१ ॥ सर्वा बभूवुरेकत्र तत्र तस्थुः पलं मुदा ॥ तत्राययुर्गोपिकाश्च मालाहस्ताश्च काश्चन ॥ ४२ ॥ चारुचंदनहस्ताश्च काश्चित्तत्राययुर्व्रजात् ॥ श्वेतचामरहस्ताश्च काश्चित्तत्राययुर्मुदा ॥ ४३ ॥ तत्राययुर्गोपकन्याः काश्चित्कस्तूरिकाकराः ॥ तत्राययुर्गोपकन्याः काश्चित्कुंकुमवाहिकाः ॥ ४४ ॥ काश्चित्तत्राययुर्गोप्यस्तांबूलपात्रवाहिकाः ॥ यावत्कांचनवस्त्राणां वाहिका गोपकन्यकाः ॥ काश्चित्तत्राययुः शीघ्रं यत्र चंद्रावली मुदा॥४५॥ सर्वाश्चैकत्र संभूय सास्मितास्च मुदान्विताः ॥ विधाय राधिकावेषं स्थानाच्च प्रययुर्मुदा ॥ ४६ ॥ चक्रुः पुनः पुनस्ताश्च हरिशब्दजपं पथि ॥ प्रापुर्वृंदावनं रम्यं वृहत्सु रासमंडलम् ॥४७॥ स्वर्गेभ्यः सुंदरं दृश्यं राकापतिकरान्वितम् ॥ सुनिर्जनं कुसुमितं वासितं पुष्पवायुना॥४८॥ नारीणां काम

[1] गौर्याः स्वस्वामिन्याः पश्चोऽङ्घ्रेर्मार्गो यासु ताः ।

जननं मुनिमोहनकारणम् ॥ शुश्रुवुस्तत्र ताः सर्वाः पुंस्कोकिलकलध्वनिम् ॥ ४९ ॥ अतिसूक्ष्मकलं चातिभ्रमराणां मनोहरम् ॥ प्रसूनमधुमत्तानां भ्रमरीसंगसंगिनाम् ॥ ५० ॥ शुभे क्षणे प्रविवेश राधिका रासमंडलम् ॥ सर्वाभिरालिभिः सार्धं ध्यात्वा कृष्णपदांबुजम् ॥ ५१ ॥ राधामारात्तु संवीक्ष्य कृष्णस्तत्र मुदान्वितः ॥ जगामानुव्रजन्प्रीत्या सस्मितो मदनातुरः ॥ ५२ ॥ मध्यस्थां सखिसंघानां रत्नालंकारभूषिताम् ॥ दिव्यवस्त्रपरीधानां सस्मितां वक्रलोचनाम् ॥५३॥ गजेंद्रगामिनीं रम्यां मुनिमानसमोहिनीम् ॥ नवीनवेषवयसा रूपेणातिमनोहराम् ॥ ५४ ॥ तलश्रोणिनितंबानां भारशेषान्वितां पराम् ॥ चारुचंपकवर्णाभां शरच्चंद्रनिभाननाम् ॥ बिभ्रतीं कबरीभारं मालतीमाल्यसंयुतम् ॥ ५५ ॥ राधा ददर्श श्रीकृष्णं किशोरं श्यामसुंदरम् ॥ नवयौवनसंपन्नं रत्नाभरणभूषितम् ॥ ५६ ॥ कंदर्पकोटिलावण्यलीलाधाम मनोहरम् ॥ प्राणाधिकां तां पश्यंतं पश्यंतीं वक्रचक्षुषा ॥५७॥ परमाद्भुतरूपं च सर्वत्रानुपमं परम् ॥ विचित्रवेषं चूडां च बिभ्रतं सस्मितं मुदा ॥५८॥ वक्रलोचनकोणेन दर्शंदर्शं पुनःपुनः ॥ मुखमाच्छादयांचक्रे व्रीडया सस्मिता सती ॥ ५९ ॥ मूर्च्छामवाप सा सद्यः कामबाणप्रपीडिता ॥ पुलकांचितसर्वांगी बभूव हतचेतना ॥ ६० ॥ कटाक्षकामबाणैश्च विद्धः क्रीडारसोन्मुखः ॥ मूर्च्छां प्राप्य न पपात तस्थौ स्थाणुसमो हरिः ॥ ६१ ॥ पपात मुरली तस्य क्रीडाकमलमुज्ज्वलम् ॥ द्वितीयं पीतवस्त्रं च शिखिपिच्छं शरीरतः ॥ ६२ ॥ क्षणेन चेतनां प्राप्य ययौ राधांतिकं मुदा ॥ कृत्वा वक्षसि तां प्रीत्या समाश्लिष्य चुचुंब सः ॥ ६३ ॥ श्रीकृष्णस्पर्शमात्रेण संप्राप्य चेतनां सती ॥ प्राणाधिकं प्राणनाथं समाश्लिष्य चुचुंब ह ॥ ६४ ॥ मनो जहार राधायाः कृष्णस्तस्य च सा मुने ॥ जगाम राधया सार्धं रसिको रतिमंदिरम् ॥ ६५ ॥ रत्नप्रदीपसंयुक्तं रत्नदर्पणसंयुतम् ॥ चारुचंपकशय्याभिश्चंदनाक्ताभी राजितम् ॥ ६६ ॥ कर्पूरान्विततांबूलैर्भोगद्रव्यैः समन्वितम् ॥ उवास राधया सार्धं कृष्णस्तत्र मुदान्वितः ॥ ६७ ॥ राधया दत्ततांबूलं चखाद मधुसूदनः ॥ रासेश्वरी कृष्णदत्तं तांबूलं बुभुजे मुदा ॥ ६८ ॥ दत्तं चर्विततांबूलं राधायै प्रभुणा मुदा ॥ चखाद भक्त्या सा तूर्णं प्रहस्य मदनातुरा ॥ ६९ ॥ राधाचर्विततांबूलं ययाचे माधवो मुदा ॥

  

न ददौ राधिका भीता पपात चरणांबुजे ॥ ७० ॥ एतस्मिन्नंतरे तत्र सकामः सुरतोन्मुखः ॥ सुष्वाप राधया सार्धं रतितल्पे मनोहरे ॥ ७१ ॥ शृंगाराष्टप्रकारं च विपरीतादिकं विभुः ॥ नखदंतकराणां च प्रहारं च यथोचितम् ॥ ७२ ॥ कामशास्त्रेषु यद्गोप्यं चुंबनाष्टविधं परम् ॥ कामिनीनां मनोहारि चकार रसिकेश्वरः ॥७३॥ अंगैरंगानि प्रत्यंगैः प्रत्यंगानि स्मरातुरः ॥ चकाराश्लेषणं तत्र कामुकीनां सुखावहम् ॥७४॥ शृंगारकुशलौ तौ तु कामशास्त्रसुपंडितौ ॥ रतियुद्धविरामश्च न बभूव द्वयोरपि ॥७५॥ एवं गृहेगृहे रम्ये नानामूर्तिं विधाय च ॥ रेमे गोपांगनाभिश्च सुरम्ये रासमंडले ॥ ७६ ॥ गोपीनां नव लक्षाणि गोपानां च तथैव च ॥ लक्षाण्यष्टादश मुने युक्तानि रासमंडले ॥ ॥ ७७ ॥ मुक्तकेशानि नग्नानि विच्छिन्नभूषणानि च ॥ वेषोच्छिन्नानि मत्तानि मूर्च्छितानि स्मरेण च॥७८॥ कंकणानां किंकिणीनां वलयानां च नारद ॥ सद्रत्ननूपुराणां च शब्दयुक्तानि संततम् ॥७९॥ एवं कृत्वा स्थलक्रीडां ययुस्तानि जलं मुदा ॥ कृत्वा तत्र जलक्रीडां परिश्रांतानि सांप्रतम् ॥८०॥ तूर्णं जलात्समुत्थाय वासांसि परिधाय च ॥ ददृशुर्मुखपद्मानि सद्रत्नदर्पणेषु च ॥ ८१ ॥ चंदनागुरुकस्तूरीद्रव्याणि पुष्पमालिकाः ॥ मुदा परिदधुस्तानि संप्रापुश्चेतनानि च ॥ ८२ ॥ सकर्पूरं च तांबूलं भुक्त्वा सर्वाणि कौतुकात् ॥ ददृशुर्मुखपद्मानि सद्रत्ने दर्पणेमले ॥ ८३ ॥ काचित्कामातुरा कृष्णं बलादाकृष्य कौतुकात् ॥ हस्ताद्वंशीं निजग्राह वसनं च चकर्ष ह ॥ ८४ ॥ काचित्कामप्रमत्ता च नग्नं कृत्वा तु माधवम् ॥ निजग्राह पीतवस्त्रं परिहस्य पुनर्ददौ ॥ ८५ ॥ युक्तिं शृण्वित्येवमुक्त्वा काचित्संगृह्य स्वामिनम् ॥ चुचुंब गंडे बिंबोष्ठे समाश्लिष्य पुनःपुनः ॥ ८६ ॥ सस्मितं सकटाक्षं च मुखचंद्रं स्तनोन्नतम् ॥ काचिच्छ्रोणीं सुललितां दर्शयामास कामतः ॥ ८७ ॥ काचित्कांतं करे कृत्वा संस्थाप्य श्रोणिदेशतः ॥ चकार चूडानिर्माणं मालतीमाल्यसंयुतम् ॥८८॥ काचिच्चूडां समाकृष्य मयूरपिच्छकं ददौ ॥ गुंजामाल्यं च चूडायां वेष्टयामास काचन ॥ ८९ ॥ प्रददौ स्वामिने कामात्प्रेमवर्धनहेतवे ॥ काचित्कांचित्समाकृष्य नग्नां कृत्वा तु कामतः ॥ ९० ॥ प्रेषयामास कृष्णस्य क्रोडे चंदनचर्चिते ॥ ननृतुश्च जगुः काश्चित्कांतं कृत्वा तु कामतः ॥ ९१ ॥

नर्तनं कारयामास तं च काचिद्दुलेन च ॥ कृष्णश्च वस्त्रं कस्याश्च विचकर्ष कुतूहलात् ॥ ९२ ॥ कांचित्कृत्वा तु नग्नां च कस्यैचिदंशुकं ददौ ॥ कृष्णो राधां समाकृष्य वासयामास वक्षसि ॥९३॥ तस्याश्च कबरीं रम्यां सुनिर्माणं चकार ह ॥ सिंदूरं च ददौ भाले कस्तूरीं बिंदुभिः सह ॥ ९४ ॥ अतिसूक्ष्मं चंदनेंदुं कौतुकात्तदधो ददौ ॥ पत्रावलीं सुललितां सुकपोले चकार ह ॥ ९५ ॥ वह्निशुद्धांशुकं चारु परिधार्य्य प्रयत्नतः ॥ पदोः सद्रत्नमंजीरे गृहीत्वा चरणांबुजे ॥ नखनिर्मार्जनं कृत्वा सुंदरं यावकं ददौ ॥ ९६ ॥ भूषणैर्भूषितां कृत्वा संप्रलिप्यानुलेपनैः ॥ दत्त्वा च मालतीमालां चुचुंब च पुनःपुनः ॥ ९७ ॥ चारुलोचनपद्मे च चकारांजनसंयुते ॥ प्रददौ नासिकामध्ये दुर्लभं गजमौक्तिकम् ॥ ९८ ॥ श्रोणिदेशे च स्तनयोर्नखच्छिद्रं चकार ह ॥९९॥ चकार दंतदलनं पक्वबिंबाधरे वरे ॥ सरसश्च तटे रम्ये पुष्पोद्याने सुनिर्जने ॥ १०० ॥ बहिश्चंद्रोदये रम्ये पुष्पचंदनचर्चिते ॥ अगुरुचंदनाक्तेन वायुना सुरभीकृते ॥ १०१ ॥ भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते ॥ बहुमूर्तीः संविधाय योगिनां परमो गुरुः ॥ १०२ ॥ पुनश्चकार श्रृंगारं गोपीनां चित्तहारकः ॥ किंकिणीनां कंकणानां नूपुराणां च नारद ॥ १०३ ॥ श्रृंगारोद्रेकतस्तत्र बभूव सुंदरो वरः ॥ मूर्च्छामवापुस्ताः सर्वा नवसंगममात्रतः ॥ १०४ ॥ बभूवुरचलास्पंदाः पुलकांचितविग्रहाः ॥ श्रृंगारविरते भूते संप्रापुश्चेतनां पुनः ॥ १०५ ॥ नखदंतप्रहारं च प्रचकार परस्परम् ॥ कृष्णः कररुहाघातं ददौ तासां कुचोपरि ॥ १०६ ॥ श्रोणीदेशे सुकठिने नखचिह्नं चकार ह ॥ नीवी विस्रंसिता तासां कबरी क्षुद्रघंटिकाः ॥ १०७ ॥ दूरीभूतं सुवसनं सुवेषं सुमनोहरम् ॥ आलिंगनं नवविधं चुंबनाष्टविधं मुदा ॥ १०८ ॥ श्रृंगारं षोडशविधं चकार रसिकेश्वरः ॥ अंगैरंगानि प्रत्यंगैः प्रत्यंगानि च योषिताम् ॥ १०९ ॥ चकारालिंगनं प्रीत्या कामुकीनां च कामुकः ॥ नारीणां षोडश कलाः श्रृंगारस्तत्प्रमाणकः ॥ ॥ ११० ॥ कलाभेदेन तद्भेदं कामशास्त्रविदो विदुः ॥ प्राकृतं द्वादशविधं चकार रसिकेश्वरः ॥ १११ ॥ निरूपितं कामशास्त्रे चकारे शस्ततोधिकम् ॥ क्रीडारंभे च मध्ये च विरतौ कर्म योषिताम् ॥ ११२ ॥ प्रीत्यर्थमपि कर्तव्यं चकारेशस्ततोधिकम् ॥

 गोपीकंकणरेखाभिः पादालक्तकचिह्नितः ॥ शुशुभे कृष्णदेहश्च यथाद्रिर्गैरिकेण च ॥ ११३ ॥ एवंभूते पूर्णरासंभूते रास 
 मंडले ॥ समाजग्मुः सुराः सर्वे सकलत्राश्च सानुगाः ॥ ११४ ॥ सुवर्णस्यंदनस्थाश्च कौतुकात्स्वगणावृताः ॥ पुलकांचितस 
र्वांगाः कामबाणप्रपीडिताः ॥ ११५ ॥ ऋषयो मुनयश्चैव सिद्धाश्च पितरस्तथा ॥ विद्याधराश्च गंधर्वा यक्षराक्षसकिन्नराः ॥
सस्त्रीकाश्च समाजग्मुर्ददृशुश्च मुदान्विताः ॥ ११६ ॥ दिव्यस्यंदनमारुह्य शातकौंभविनिर्मितम् ॥ सुशोभितं च मणिना
रत्नसारपरिच्छदम् ॥ ११७ ॥ वह्निशुद्धांशुकेनैव वेष्टितं सुमनोहरम् ॥ श्वेतचामरयुक्तं च सद्रत्नदर्पणांबुजम् ॥ ११८ ॥
शतचक्रं चित्रयुक्तं मनोयायि मनोहरम् ॥ सद्रत्नसारनिर्माणकलशोज्ज्वलशेखरम् ॥ ११९ ॥ समाजगाम भगवान्पार्वत्या सह
शंकरः ॥ वामपार्श्वे महाकालो दक्षिणे नंदिकेश्वरः ॥ १२० ॥ पुरतः कार्तिकेयश्च स्वयं देवो गणेश्वरः ॥ पिंगलाक्षा
दयः सर्वे पार्षदाः पारतस्तयोः ॥ १२१ ॥ क्षेत्रपालादयः सर्वे तथाष्टौ भैरवेश्वराः ॥ वक्षःस्थलस्थिता दुर्गा सस्मिता वक्रलोचना
॥ १२२ ॥ भारत्या सह ब्रह्मा च शातकौंभरथस्थितः ॥ वामे सप्तर्षयस्तस्य दक्षिणे सनकादयः ॥ १२३ ॥ सुवर्णस्यंदनस्थश्च धर्मः
साक्षी च कर्मणाम् ॥ वक्षःस्थलस्थिता तस्य मूर्तिः स्मेराननना सती ॥ १२४ ॥ पश्यंती पूर्णरासं च सकामा वक्रलोचना ॥ परितः
पार्षदाः सर्वे ज्वलंतो ब्रह्मतेजसा ॥ १२५ ॥ शच्या सह महेंद्रश्च रोहिण्या च कलानिधिः ॥ स्वाहासार्द्धं स्वयं वह्निः सूर्यश्च
संज्ञया सह ॥ १२६ ॥ समाजगाम कामश्च रतिं कृत्वा च वक्षसि ॥ सर्वे ग्रहाश्च दिक्पाला आजग्मुः सकलत्रकाः ॥ १२७ ॥
आकाशस्थाश्च ददृशुः सरासं रासमंडलम् ॥ केचिच्च मुमुहुस्तत्र मूर्छामापुश्च केचन ॥ १२८ ॥ मुहूर्तं च सुराः सर्वे सस्मिताश्च
मुदान्विताः ॥ चंदनद्रववृष्टिं च पुष्पवृष्टिं च चिक्षिपुः ॥१२९॥ कस्तूरीयुक्तमाल्यानां वृष्टिं चक्रुर्मुनीश्वराः ॥ रासं दृष्ट्वा देवपत्न्यः काम
बाणप्रपीडिताः ॥ १३० ॥ स्थले रतिरसं कृत्वा जगाम यमुनाजलम् ॥ राधया सह कृष्णश्च पूर्णब्रह्म सनातनः ॥१३१॥ गोपीभिः 
सह जग्मुश्च मायाः श्रीकृष्णरूपिकाः ॥ प्रपीडिताः कामबाणैः क्रीडां चक्रुर्जले मुदा ॥ १३२ ॥ जलं ददौ राधिकायै सकामो

माधवः स्वयम् ॥ ददौ सा च माधवाय कामार्तांयांजलित्रयम् ॥ १३३ ॥ वस्त्रं जग्राह तस्याश्च सा च नग्ना बभूव ह ॥ मालां चिच्छेद कबरीं चकार शिथिलां हरिः ॥ १३४ ॥ सिंदूरपत्रकं लुप्तं वेषं च जलताडनैः ॥ भ्रूविचित्रमोष्ठरागं लुप्तं कज्जललोचनम् ॥ १३५ ॥ तां च नग्नां समाश्लिष्य निममज्ज जले हरिः ॥ प्रकृत्याभ्यंतरे क्रीडां सुतस्थौ च तया सह ॥ १३६ ॥ तां च नग्नां दर्शयित्वा गोपिकां क्रीडया नताम् ॥ सस्मितां प्रेरयामास दूरतो यमुनाजले ॥ १३७ ॥ सा वेगेन समुत्थाय बलाज्जग्राह माधवम् ॥ गृहीत्वा मुरलीं कोपात्प्रेरयामास दूरतः ॥ १३८ ॥ गृहीत्वा पीतवसनं चकार तं दिगंबरम् ॥ वनमालां च चिच्छेद ददौ तोयं पुनः पुनः ॥ १३९ ॥ हरिं पुनः समाकृष्य प्रेषयामास पाथसि ॥ गभीरे स्रोतसि मुने निममज्ज जगत्पतिः ॥ १४० ॥ उत्थाय माधवः शीघ्रं तां गृहीत्वा प्रहस्य च ॥ कृत्वा वक्षसि नग्नां च चुचुंब च पुनःपुनः ॥ १४१ ॥ एवं ता मूर्तयः सर्वा गोपीभिः सह कौतुकात् ॥ क्रीडां विचक्रुर्यमुनातीरनीरे मनोहरे ॥ १४२ ॥ तीरं गत्वा तया सार्धं हरिर्नग्नश्च मग्नया ॥ सा तं ययाचे वसनं स च तां सस्मितां सतीम् ॥ १४३ ॥ राधिकायै ददौ वस्त्रं रम्यां मालां च माधवः ॥ प्रददौ हरये वस्त्रं वंशीं रासेश्वरी तथा ॥ १४४ ॥ चंदनागुरुकस्तूरीं सर्वांगे कुंकुमान्विताम् ॥ कृष्णस्य परया भक्त्या ददौ श्रोणिस्थितस्य च ॥ १४५ ॥ निर्माय चूडां ललितां कामिनीं चित्तमोहिनीम् ॥ शोभनैर्मालतीमाल्यैश्चकार वेष्टनं पुनः ॥ १४६ ॥ श्रीकृष्णो राधिकायाश्च कबरीं सुमनोहराम् ॥ कृत्वा कुंडलसंस्कारं निर्ममे पत्रकावलीम् ॥ १४७ ॥ ददौ ललाटे सिंदूरं कस्तूरीबिंदुभिः सह ॥ तदधश्चंदनेंदुं च सुसूक्ष्मं सुमनोहरम् ॥ १४८ ॥ नखांकं स्तनयोरूर्वोरुरस्येव घनं मुदा ॥ दत्त्वा तां वासयामास वह्निशुद्धांशुकेन वै ॥ १४९ ॥ चंदनागुरुकस्तूरीकुङ्कुमानां द्रवेण सः ॥ कृत्वा वक्षसि संलिप्य चुचुंब च मुहुर्मुहुः ॥ १५० ॥ पुनराश्लेषणं कृत्वा ददौ मालां गले पुनः ॥ भूषणैर्भूषितां कृत्वा मंजीरं चरणे ददौ ॥ १५१ ॥ अलक्तकं चरणयोर्नखेषु च ददौ पुनः ॥ एवं गोपश्च गोपीनां विदधौ च पृथक्पृथक् ॥ १५२ ॥ पुनः प्रजग्मुस्ता मत्ताः सुंदरं रासमंडलम् ॥ पूर्णेंदुचंद्रिकायुक्तं रतियोग्यं सुनिर्जनम् ॥ १५३ ॥ माधवीकेतकीकुंदमालतीनां मनो

ब्र. वै. कृ. ॥ ९४ ॥

रे ॥ चंपकयूथीमल्लिकानां पुष्पैश्च सुरभीकृतम् ॥ १५४ ॥ दृष्ट्वा च स्फुटितं पुष्पं चयनं कर्तुमीश्वरी ॥ गोपीर्नियोजयामास कौतु स्कं० ४ पृ०
केन च राधिका ॥ १५५ ॥ काश्चिन्नियोजयामास मालानिर्माणकर्मणि ॥ काश्चित्तांबूलसज्जेषु काश्चिचंदनघर्षणे ॥ १५६ ॥ माला अ० २९
चंदनतांबूलं गोपीदत्तं च सुंदरी ॥ ददौ कृष्णाय संप्रीत्या सस्मिता वक्रलोचना ॥ १५७ ॥ काश्चिन्नियोजनं चक्रुः कृष्णसंगीतक
र्मणि ॥ मृदंगमुरजादीनां वादनेषु च काश्चन ॥ १५८ ॥ एवं रासे रतिं कृत्वा लीलया हरिणा सह ॥ विजहार च सर्वत्र निर्जने
षु मनोहरम् ॥ १५९ ॥ पुष्पोद्यानेषु रम्येषु सरसां च तटेषु च ॥ कंदरे कंदरे रम्ये नदेषु च नदीषु च ॥ १६० ॥ अतीव
निर्जनस्थाने स्मशाने गिरिगह्वरे ॥ वांछितेषु च नारीणां त्रयस्त्रिंशद्वनेषु च ॥ १६१ ॥ भांडीरे श्रीवने रम्ये कदंबकानने
तथा ॥ तुलसीकानने कुंदवने चंपककानने ॥ १६२ ॥ निंबारण्ये मधुवने जंबीरकानने तथा ॥ नालिकेरवने पूगवने च कदलीवने
॥ १६३ ॥ बदरीकानने बिल्ववने नारिंगकानने ॥ अश्वत्थकानने वंशवने दाडिमकानने ॥ १६४ ॥ मंदारकानने तालवने
चूतवने तथा ॥ केतकीकाननेशोकवने खर्जूरकानने ॥ १६५ ॥ आम्रातकवने जंबूगहने शालकानने ॥ कटके कानने पद्मवने
जातिवने मुने ॥ १६६ ॥ न्यग्रोधगहने घोरे श्रीखंडकानने तथा ॥ प्रहृष्टकेसरवने सर्वतोऽपि विलक्षणे ॥ १६७ ॥ एवं रेमे
कौतुकेन कामात्रिंशद्दिवानिशम् ॥ तथापि मानसं पूर्णं न च किंचिद्बभूव ह ॥ १६८ ॥ न कामिनीनां कामश्च शृंगारेण निवर्तते ॥
अधिकं वर्धते शश्वद्यथाग्निर्घृतधारया ॥ १६९ ॥ जग्मुर्देवाः स्वगेहं च देव्यश्च मुनयस्तथा ॥ ते सर्वे प्रशशंसुश्च विस्मयं च
ययुर्मुदा ॥ १७० ॥ गेहे गेहे नृपेंद्राणां लेभिरे जन्म भारते ॥ दग्धाः कामाग्निनांशेन देव्यः शृंगारलालसाः ॥ १७१ ॥
॥ इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे रासक्रीडाप्रस्तावोनाम अष्टाविंशोऽध्यायः
॥ २८ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ गोपांगनाः सर्वाः काममत्ततया मुने ॥ अतिप्रौढाश्च मानिन्यो ॥ ९४ ॥
नेश्वरं मेनिरे पतिम् ॥ १ ॥ काश्चिदूचुरहो कृष्णं सस्मिता वक्रलोचनाः ॥ मालतीपुष्पमुत्तोल्य देहि मे मालिकामिति ॥ २ ॥

काश्चिदूचुरये कृष्ण स्वक्रोडेऽस्मांश्च कुर्विति ॥ गृहीत्वा श्रीहरेः स्कंधमारुरोह च काचन ॥ ३ ॥ उवाच काचिद्दर्पेण प्रमत्ता प्राणव
ल्लभम् ॥ स्वकीयपीतवसनं परिधारय मामिति ॥ ४ ॥ उवाच काचिदीशं तं सिंदूरं देहि मामिति ॥ उवाच काचित्प्राणेशं शीघ्रमाग
त्य सांप्रतम् ॥ ५ ॥ कृत्वा कुंतलसंस्कारं कुरु मे कबरीमिति ॥ काश्चित्संप्रेरयामासुः श्रीखंडं बल्लवाय च ॥ ६ ॥ स्वांगवेषविधायि
न्यो भूषार्थं श्रुतिमूलयोः ॥ उवाच काचित्कामेन परं संकेतपूर्वकम् ॥ ७ ॥ पश्यंती तन्मुखांभोजं सस्मिता मैथुनाय च ॥ काचि
ज्जग्राह मुरलीं बलादाकृष्य माधवम् ॥ ८ ॥ जहार पीतवसनं कृत्वा नग्नं च कामिनी ॥ कामिन्यः काश्चिदित्यूचुर्मानिन्यो मधु
सूदनम् ॥ ९ ॥ अलक्तकद्रवं देहि पादयोर्नखरेषु च ॥ उवाच काचित्प्रेम्णा तं गंडयोःस्तनयोर्मम ॥ १० ॥ नानाचित्रविचित्राढ्यां
कुरु पत्रावलीमिति ॥ कृत्वानुमानं मनसा दृष्ट्वा तासां प्रमत्तताम् ॥ ११ ॥ माधवो राधया सार्द्धमंतर्धानं चकार ह ॥ अतीव
निर्जने स्थाने मुदा स्वेच्छामयो विभुः ॥ १२ ॥ कलामानप्रकारं च शृंगारं च चकार ह ॥ पर्वते पर्वते रम्ये द्वीपेद्वीपे सुनिर्जने ॥
॥ १३ ॥ तटे तटे नदीनां च सर्वजंतुविवर्जिते ॥ श्रीगोष्ठे रत्नशैले च वेलागंगातटेऽपि च ॥ १४ ॥ कालिंदे च पुलिंदे च
मंदिरे गंधमादने ॥ मनोहरे कुन्दवने कावेरीतीरनीरजे ॥ १५ ॥ पुष्पभद्रापुलिनजे पुष्पोद्याने सुपुष्पिते ॥ सर्वत्र रमणं कृत्वा
राधावेषं विधाय च ॥ १६ ॥ जगाम मलयद्रोणीं रम्यां चंदनवायुना ॥ शय्यां पुष्पमयीं कृत्वा तत्र रेमे तया.सह ॥ १७ ॥
अतीव सुखसंभोगान्मूर्च्छां संप्राप्य राधिका ॥ कृत्वा वक्षसि गोविंदं पुलकांचितविग्रहा ॥ १८ ॥ दृष्ट्वा तां मूर्च्छितां कृष्णो घनश्रो
णिपयोधराम् ॥ विलुप्तवेषां कामार्तां नग्नां शिथिलकुन्तलाम् ॥ १९ ॥ चेतनां कारयामास कृत्वा वक्षसि तंद्रिताम् ॥ वासया
मास वसनं राधाया मेखलांबरम् ॥ २० ॥ कबरीं रचयामास किंचिद्वामेन वक्रताम् ॥ मालतीमाल्यसंयुक्तां कुंदपुष्पैश्च वेष्टिताम् ॥
॥ २१ ॥ तस्याः कपाले सिंदूरतिलकं सुंदरं ददौ ॥ गंडयोः स्तनयोश्चित्रां चकार पत्रिकां मुदा ॥ २२ ॥ सालक्तकांश्च नखरांश्चित्रि
तान्पदपद्मयोः ॥ नखैः कृत्रिमपद्मानि निर्ममे श्रोणिवक्षसोः ॥ २३ ॥ उत्थायाथ तया सार्द्धं जगाम ह सरोवरम् ॥ नानाप्रकारप

वानां राशिमिव विराजितम् ॥ २४ ॥ निर्मलस्फटिकाकारजलपूर्णं मनोहरम् ॥ हंसकारंडवाकीर्णं जलकुक्कुटकूजितम् ॥ २५ ॥ मधुलुब्धमधुव्राणां पद्मस्थानं सुपद्मजम् ॥ चारुणा कलशब्देन शब्दितं शश्वदेव हि ॥ २६ ॥ तत्र स्नात्वा जलक्रीडां चकार ह तया सह ॥ जलं ददौ राधिकायै मुदा सा माधवाय च ॥ २७ ॥ सहस्रदलपद्मं च गृहीत्वा माधवः स्वयम् ॥ एकं ददौ राधिकायै ररक्ष स्वार्थमेककम् ॥ २८ ॥ चंदनागुरुकस्तूरीकुंकुमद्रवमीप्सितम् ॥ स्वांगं दत्त्वा राधिकायै लिलेप राधिकेश्वरः ॥ २९ ॥ ततो गच्छंस्तया सार्द्धं ददर्श पुरतो वटम् ॥ अतीवोत्तुंगशाखाग्रमतिविस्तृतमेव च ॥ ३० ॥ मूले योजनपर्यंतं छायया परिवेष्टितम् ॥ उवास तत्र गोविंदः केतकीवनसंनिधौ ॥ ३१ ॥ पुष्पाक्तेन सुशीतेन वायुना सुरभीकृते ॥ चित्रं रहस्यं सुचिरं पुराणं च पुरातनम् ॥ ॥ ३२ ॥ प्रहर्षितश्च श्रीकृष्णः कथयामास राधिकाम् ॥ एतस्मिन्नंतरे तत्र ददर्श मुनिपुंगवम् ॥ ३३ ॥ आगच्छंतं च तं दृष्ट्वा प्रसन्नवदनेक्षणम् ॥ न दृष्ट्वा हृदये रूपमीशस्य परमात्मनः ॥ ३४ ॥ ध्यानाद्विरतमग्रे च पश्यंतं बहिरेव तत् ॥ सर्वावयववक्रं च कृष्णं सर्वं दिगंबरम् ॥ ३५ ॥ नाम्नाष्टवक्रं जटिलं ज्वलंतं ब्रह्मतेजसा ॥ मुखतोग्निमुद्गिरंतं तपोराशिमिवोत्थितम् ॥ ३६ ॥ अहो किं वा ब्रह्मतेजो मूर्तिमंतमिह स्वयम् ॥ नखश्मश्रुसुदीर्घं च शांतं तेजस्विनं परम् ॥ ३७ ॥ पुटांजलियुतं भक्त्या भीतं प्रणतकंधरम् ॥ दृष्ट्वा हसंतीं राधां तां वारयामास माधवः ॥ ३८ ॥ प्रभावं कथयामास मुनींद्रस्य महात्मनः ॥ अथ प्रणम्य गोविंदं तुष्टाव मुनिपुंगवः ॥ यत्स्तोत्रं च पुरा दत्तं शंकरेण महात्मना ॥ ३९ ॥ ॥ अष्टावक्र उवाच ॥ ॥ गुणातीत गुणाधार गुणबीज गुणात्मक ॥ गुणीश गुणिनां बीज गुणायन नमोस्तु ते ॥ ४० ॥ सिद्धिस्वरूप सिद्ध्यंश सिद्धिबीज परात्पर ॥ सिद्धिसिद्धगुणाधीश सिद्धानां गुरवे नमः ॥ ४१ ॥ हे वेदबीज वेदज्ञ वेदिन्वेदविदां वर ॥ वेदाज्ञातावरूपेश वेदज्ञेश नमोस्तु ते ॥ ४२ ॥ ब्रह्मानंतेश शेषेंद्रधर्मादीनामधीश्वर ॥ सर्व सर्वेश शर्वेश बीजरूप नमोस्तु ते ॥ ४३ ॥ प्रकृते प्राकृत प्रज्ञ प्रकृतीश परात्पर ॥ संसारवृक्ष तद्बीज फलरूप नमोऽस्तु ते ॥ ४४ ॥ सृष्टिस्थित्यंतबीजेश सृष्टिस्थित्यंतकारण ॥ महाविराट्तरोर्बीज राधिकेश नमोऽस्तु ते ॥ ४५ ॥

मूलो यस्य ब्रह्मः स्कंधा ब्रह्मविष्णुमहेश्वराः ॥ शाखाप्रशाखा वेदाद्यास्तपांसि कुसुमानि च ॥ ४६ ॥ संसारविफला एव प्रकृत्यंकुरमेव च ॥ तदाधार निराधार सर्वाधार नमोऽस्तु ते ॥ ४७ ॥ तेजोरूप निराकार प्रत्यक्षानूहमेव च ॥ सर्वाकारातिप्रत्यक्ष स्वेच्छामय नमोऽस्तु ते ॥ ४८ ॥ इत्युक्त्वा स मुनिश्रेष्ठो निपत्य चरणांबुजे ॥ प्राणांस्तत्याज योगेन तयोः प्रत्यक्ष एव च ॥ ४९ ॥ पपात तत्र तद्देहः पादपद्मसमीपतः ॥ तत्तेजश्च समुत्तस्थौ ज्वलदग्निशिखोपमम् ॥ ५० ॥ सप्ततालप्रमाणं तु चोत्थाय च पपात ह ॥ भ्रामं भ्रामं च परितो लीनं चाभूत्पदांबुजे ॥५१॥ अष्टावक्रकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ॥ परं निर्वाण मोक्षं च समाप्नोति न संशयः ॥ ५२ ॥ प्राणाधिको मुमुक्षूणां स्तोत्रराजश्च नारद ॥ हरिणाहो पुरा दत्तो वैकुंठे शंकराय च ॥ ५३ ॥ इति श्रीब्रह्मवै० म० श्रीकृ० ज० नाराय० मुनिमोक्षणप्रस्ताव एकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ नारद उवाच ॥ ॥ महामुने रहस्यं च श्रुतं ब्रह्मन्किमद्भुतम् ॥ मृते मुनौ किं चकार श्रीकृष्णो भक्तवत्सलः ॥ १ ॥ ॥ श्रीनारायण उवाच ॥ ॥ दृष्ट्वा मृतं मुनिं कृष्णः संस्कारं कर्तुमुद्यतः ॥ कृत्वा वक्षसि तद्देहं रुरोदोच्चैर्यथा नरः ॥ २ ॥ बाहुभ्यां च समाश्लिष्य पिपेषोद्रिक्तमोहतः ॥ निर्गतं भस्मनिकरं शवाद्व्रांगघर्षणात् ॥ ३ ॥ रक्तमांसास्थिहीनं तच्छरीरं च महात्मनः ॥ षष्टिवर्षसहस्राणि निराहारः कृतो मुने ॥ ४ ॥ दग्धं लोहितमांसास्थि ज्वलता जठराग्निना ॥ बाह्यज्ञानविहीनस्य हरिपादाब्जचेतसः ॥ ५ ॥ चितां चंदनकाष्ठेन निर्माय मधुसूदनः ॥ कृत्वाग्निकार्यं तत्रैव स्थापयामास शोकतः ॥ ६ ॥ ददौ चितायामग्निं च काष्ठं दत्त्वा शवोपरि ॥ ज्वलितायां चिता यां च मूर्च्छामाप क्षणं विभुः ॥ ७ ॥ तद्देहे भस्मसाद्भूते नेदुर्दुंदुभयो दिवि ॥ बभूव पुष्पवृष्टिश्च तत्क्षणाद्गगनाद्दहो ॥ ८ ॥ एतस्मिन्नंतरे तत्र रत्नसारविनिर्मितम् ॥ स्यंदनं च मनोयायि वस्त्रमाल्यपरिच्छदम् ॥ ९ ॥ पार्षदप्रवरैर्युक्तं श्रीकृष्णसदृशैर्वरैः ॥ आविर्बभूव गोलोकात्सुंदरं पुरतो हरेः ॥ १० ॥ अवरुह्य रथात्तूर्णं पार्षदप्रवरा हरेः ॥ सर्वे समानरूपास्ते प्रणम्य राधिकेश्वरौ ॥ ११ ॥ धृतवंतं सूक्ष्मदेहं प्रणमय्य मुनीश्वरम् ॥ रथे कृत्वा तु तं देहं जग्मुर्गोलोकमुत्तमम् ॥ १२ ॥ गते मुनींद्रे गोलोकं वृन्दावनविनो

दिनी ॥ कथम विरहिता साध्वी पप्रच्छ जगदीश्वरम् ॥ १३ ॥ ॥ श्रीराधिकोवाच ॥ ॥ कोऽयं नाथ मुनिश्रेष्ठः सर्वावयववक्रिमः ॥ अतिसर्वजनाकारस्तेजीयानतिकुत्सितः ॥ १४ ॥ कथं वा निर्गतं भस्म देहादस्य किमद्भुतम् ॥ साक्षाद्विलीनं यत्तेजस्त्वत्पादाब्जेऽनलोपमम् ॥ १५ ॥ रथस्थः पुण्यवान्सद्यो गोलोकं च जगाम ह ॥ स्वात्मारामस्य यद्धेतो रोदनं ते बभूव ह ॥ १६ ॥ त्वया कृतं च सत्कारमश्रुपूर्णेन चक्षुषा ॥ सर्वं विवरणं तूर्णं संन्यस्य कथय प्रभो ॥ १७ ॥ राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः कथां कथितुमारेभे युगांतरगतामपि ॥ १८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ रहस्यमष्टावक्रीयं विख्यातं सर्वतः प्रिये ॥ पश्चाच्छ्रोष्यसि कालेन प्रसंगे विदुषां मुखात् ॥ १९ ॥ अष्टावक्रो मुनींद्रोपि विख्यातो भुवनत्रये ॥ परिपूर्णं यद्यशसा जन्मना तज्जगत्त्रयम् ॥ २० ॥ कृष्णस्य वचनं श्रुत्वा विमनस्का हरिप्रिया ॥ उवाच मधुरं यत्नाच्छुष्ककंठोष्ठतालुका ॥ २१ ॥ ॥ राधिकोवाच ॥ ॥ यत्तृषालोर्मनः पूर्णं न बभूव सुधांबुधौ ॥ स वितृप्तो भवति किं गोष्पदोदकपानतः ॥ २२ ॥ वेदानां वेदवक्तॄणां विधातुर्जनकस्य च ॥ महाविष्णोरीश्वरस्त्वं कोऽन्यो वक्तास्ति त्वत्परः ॥ २३ ॥ राधिकावचनं श्रुत्वा तुष्टः कृष्णो बभूव ह ॥ उवाच गोपनीयं च रहस्यं परमाद्भुतम् ॥ २४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु कांते प्रवक्ष्येऽहमितिहासं पुरातनम् ॥ श्रवणात्कथनाद्यस्य सर्वं पापं प्रणश्यति ॥ २५ ॥ महाविष्णोर्नाभिपद्माद्बभूव जगतां विधिः ॥ ममांशस्य मत्कलया जलाकीर्णे जगत्त्रये ॥ २६ ॥ पुत्रा बभूवुश्चत्वारो ब्रह्मणो मानसात्पुरा ॥ नारायणपराः सर्वे ज्वलंतो ब्रह्मतेजसा ॥ २७ ॥ शिशवः पंचवर्षीया नग्ना अज्ञानिनो यथा ॥ बाह्यज्ञानविहीनाश्च ब्रह्मतत्त्वविशारदाः ॥ २८ ॥ सनकश्च सनंदश्च तृतीयश्च सनातनः ॥ सनत्कुमारो भगवानेते च त्वार एव च ॥ २९ ॥ तानुवाच जगद्धाता सृष्टिं कुरुत पुत्रकाः ॥ ते न तस्थुः पितुर्वाक्ये प्रययुस्तपसे मम ॥ ३० ॥ विधाता विमनस्कश्च तनयेषु गतेषु च ॥ पितुर्दुःखाय प्रभवेत्पुत्रश्चेदवचस्करः ॥ ३१ ॥ ज्ञानेन निर्ममे पुत्रान्स्वांगेषु च तपोधनान् ॥ वेदवेदांगविदश्च ज्वलतो ब्रह्मतेजसा ॥ ३२ ॥ अत्रिः पुलस्त्यः पुलहो मरीचिर्भृगुरंगिराः ॥ क्रतुर्वसिष्ठो वोढुश्च कपिलश्चासुरिः कविः ॥ ३३ ॥

शंकुः शंखः पंचशिखः प्रचेतास्ते तपोधनाः ॥ बहुकालं तपस्तप्त्वा चक्रुः सृष्टिं तदाज्ञया ॥ ३४ ॥ कलत्रवंतस्ते सर्वे संसारं कर्तुमु
न्मुखाः ॥ बभूवुः पुत्रपौत्राश्च सर्वेषां च तपस्विनाम् ॥ ३५ ॥ तदस्तु च कथा बह्वी मुनिवंशानुकीर्तनी ॥ चार्वी पुण्यस्वरूपा च प्रकृतं
शृणु सुन्दरि ॥ ३६ ॥ प्रचेतसः सुतः श्रीमानसितो मुनिपुंगवः ॥ सकलत्रस्तपस्तेपे दिव्यं वर्षसहस्रकम् ॥ ३७ ॥ न बभूव सुत
स्तस्य प्राणांस्त्यक्तुं समुद्यतः ॥ तं सम्बोद्धुं बभूवाथ सत्या वागशरीरिणी ॥ ३८ ॥ कथं त्यजसि प्राणांस्त्वं गच्छ शंकरसन्निधिम् ॥
सिद्धं कुरु गृहीत्वा च मन्त्रं शंकरवक्त्रतः ॥ ३९ ॥ मंत्राधिष्ठातृदेवी ते सद्यः साक्षाद्भविष्यति ॥ वरेणाभीष्टदेव्याश्च पुत्रस्ते भविता
ध्रुवम् ॥ ४० ॥ श्रुत्वैतच्चरितं विप्रो जगाम शिवसन्निधिम् ॥ योगिनामप्यगम्यं च शिवलोकं निरामयम् ॥ ४१ ॥ सकलत्रो य
था योगी तुष्टाव योगिनां गुरुम् ॥ पुटांजलियुतो भूत्वा भक्तिनम्रात्मकंधरः ॥४२॥ ॥ असित उवाच ॥ ॥ जगद्गुरो नमस्तुभ्यं शिवाय
शिवदाय च ॥ योगींद्राणां च योगींद्र गुरूणां गुरवे नमः ॥ ४३ ॥ मृत्योर्मृत्युस्वरूपेण मृत्युसंसारखंडन ॥ मृत्योरीश मृत्युबीज
मृत्युंजय नमोऽस्तु ते ॥ ४४ ॥ कालरूपं कलयतां कालकालेश कारण ॥ कालादतीत कालस्थ कालकाल नमोऽस्तु ते ॥ ४५ ॥
गुणातीत गुणाधार गुणबीज गुणात्मक ॥ गुणीश गुणिनां बीज गुणिनां गुरवे नमः ॥ ४६ ॥ ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावे च तत्पर ॥
ब्रह्मबीजस्वरूपेण ब्रह्मबीज नमोऽस्तु ते ॥ ४७ ॥ इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः ॥ दीनवत्साश्रुनेत्रश्च पुलकां
चितविग्रहः ॥ ४८ ॥ असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ॥ वर्षमेकं हविष्याशी शंकरस्य महात्मनः ॥ ४९ ॥ स लभेद्वै
ष्णवं पुत्रं ज्ञानिनं चिरजीविनम् ॥ भवेद्धनाढ्यो दुःखी च मूको भवति पंडितः ॥ ५० ॥ अभार्यो लभते भार्यां सुशीलां च पतिव्र
ताम् ॥ इह लोके सुखं भुक्त्वा यात्यंते शिवसन्निधिम् ॥५१॥ इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे ॥ प्रचेतसा स्वपुत्रायासिताय
दत्तमुत्तमम् ॥ ५२ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ समाकर्ण्य मुनेः स्तोत्रं भगवाञ्छंकरः स्वयम् ॥ उवाच ब्रह्मणः पुत्रं स्वभक्तं भक्तव
त्सलः ॥५३॥ ॥ शंकर उवाच ॥ ॥ स्थिरो भव मुनिश्रेष्ठ जानामि तव वांछितम् ॥ पुत्रस्ते भविता सत्यं मदंशेन च मत्समः ॥५४॥

दास्यामि मंत्रमतुलं सर्वेषां च सुदुर्लभम् ॥ इत्युक्त्वा च ददौ मंत्रं तवैव षोडशाक्षरम् ॥ ५५ ॥ स्तोत्रं पूजाविधानं च
कवचं परमाद्भुतम् ॥ संसारविजयंनाम पुरश्चरणपूर्वकम् ॥५६॥ वरं दातुमिष्टदेवी प्रत्यक्षा भवितेति च ॥ इत्युक्त्वा विरतो रुद्रः स तं
नत्वा जगाम ह ॥ ५७ ॥ जजाप परमं मंत्रं सोऽसितः शतवत्सरम् ॥ साक्षाद्भूत्वा वरस्तस्मै त्वया दत्तः पुरा सति ॥ ५८ ॥ पुत्रस्ते
भविता सत्यं महाज्ञानी सुतेति च ॥ वरं दत्त्वा त्वमगमो गोलोकं मम सन्निधिम् ॥ ५९ ॥ कालेन च सुतस्तस्य शिवांशेन बभूव
ह ॥ ब्रह्मिष्ठो देवलो नाम्ना कंदर्पसमसुंदरः ॥ ६० ॥ सुयज्ञनृपतेः कन्यां रत्नमालावतीं मुदा ॥ तां सुंदरीं विवाहेन जगृहे सर्वमो
हिनीम् ॥ ६१ ॥ स्थानेस्थाने च रहसि शतवर्षं तया सह ॥ स रेमे निपुणः श्रेष्ठः स्त्रीणां रमणकर्मणि ॥ ६२ ॥ कालांतरे स विरतो
बभूव मुनिपुंगवः ॥ सुखं सर्वं परित्यज्य धर्मिष्ठः श्रीहरिं स्मरन् ॥ ६३ ॥ उत्थाय रात्रौ शयनाद्विरक्तश्च तपोधनः ॥ स ययौ तपसे
कर्तुं गंधमादनपर्वते ॥ ६४ ॥ निद्रां त्यक्त्वा च तत्कांता न दृष्ट्वा स्वामिनं सती ॥ विललाप भृशं शोकात्प्रदग्धा विरहाग्निना॥६५॥
उत्तिष्ठंती निर्विशंती रुरोदोच्चैर्मुहुर्मुहुः ॥ तप्तपात्रे यथा धान्यं बभूव तन्मनस्तदा ॥ ६६ ॥ आहारं च परित्यज्य प्राणांस्तत्याज
सुंदरी ॥ चकार तत्सुतस्तस्याः कर्म निर्हरणादिकम् ॥६७॥ तपश्चकार स मुनिर्गंधमादनगह्वरे ॥ दिव्यं वर्षसहस्रं च मम भक्तो जितें
द्रियः ॥ ६८ ॥ तं ददर्श ह दैवेन रंभा शृंगारलोलुपा ॥ अतीव सुंदरं शांतं कंदर्पमिव सुंदरम् ॥ ६९ ॥ सा च तं कथयामास निर्जने
समुपस्थिता ॥ विधाय वेषं यत्नेन त्रैलोक्यचित्तमोहिनी ॥ ७० ॥ ॥ रंभोवाच ॥ ॥ निबोध साधो मद्वाक्यं कामिनीनां मनोहरम् ॥
त्यक्त्वा कठोरं रहसि भज मां सुखदायिकाम् ॥ ७१ ॥ त्वं वरेषु वरः पृथ्व्यां वरारोहा स्वयंवरा ॥ विदग्धाया विदग्धस्य दुर्लभो नव
संगमः ॥ ७२ ॥ यज्ञं कुर्वंति भूपाला भारते स्वर्गहेतुकम् ॥ स्वर्गभोगनिमित्तं च भोगसारा वयं मुने ॥ ७३ ॥ स्तनयोर्युग्ममूर्वोर्मे
सुंदरं मुखपंकजम् ॥ हास्यभ्रूभंगसहितं दृष्ट्वा को न लभेत्सुखम् ॥ ७४ ॥ स्त्रीरसः सुखसारश्च मुनीनामभिवांछितः ॥ रसिकासुखसंभो
गो निर्जने चातिदुर्लभ ः ॥ ७५ ॥ देवो वा मानवो वापि गंधर्वो वाथ राक्षसः ॥ स्त्रीसुखेष्वप्यविज्ञेयो रंभाया रतिवंचितः ॥ ७६ ॥

रहस्युपस्थितां कांतां न भजेद्यो जितेंद्रियः ॥ गात्रलोमप्रमाणाब्दं कुंभीपाके वसेद्ध्रुवम् ॥७७॥ सत्यं तस्याश्च वधभाक्च्छापेन प्रणश्यति ॥ विधाता मोहिनीशापादपूज्यो भुवनत्रये ॥ ७८ ॥ येन त्यक्तोपस्थिता तं यथा पश्यति पुंश्चली ॥ स्वामिपुत्रस्वबंधूनां न तथा घातकं रुषा ॥ ७९ ॥ परं प्रियं च सर्वेषां जारं जानाति पुंश्चली ॥ यदि तेन परित्यक्ता तं हंतुं सा तु दक्षिणा ॥ ८० ॥ पुंश्चली हिंस्रजंतुभ्यो नवघातिभ्य एव च ॥ दुष्टा शश्वद्दयाहीना दुरंता प्रतिजन्मनि ॥ ८१ ॥ त्यज ध्यानं मुनिश्रेष्ठ भुंक्ष्वेदं तपसः फलम् ॥ रहस्युपस्थितां मां च गृहीत्वा सुचिरं सुखम् ॥ ८२ ॥ स रंभावचनं श्रुत्वा तामुवाच भयाकुलः ॥ हितं तथ्यं नीतिसारं परिणामसुखावहम् ॥ ८३ ॥ ॥ देवल उवाच ॥ ॥ शृणु रंभे प्रवक्ष्यामि वेदसारं परं वचः ॥ कुलधर्मोचितं सत्यं ब्राह्मणानां तपस्विनाम् ॥८४॥ धर्मोयं युक्तकाले च स्वयोषिति रतो द्विजः ॥ सर्वत्र पूजितः शश्वदिह लोके परत्र च ॥ ८५ ॥ ब्राह्मणः क्षत्रियो वैश्यो यो रतः परयोषिति ॥ याति तस्यापूजितस्य रुष्टा लक्ष्मीर्गृहादपि ॥ ८६ ॥ इहातिनिंद्यः सर्वत्र नाधिकारी स्वकर्मसु ॥ परत्रैवांधकूपे च यावद्वर्षशतं वसेत् ॥ ८७ ॥ ब्राह्मा चोपस्थिता स्त्री च गृहिणा न तपस्विना ॥ त्यागे दोषः कामिनीनां शापभाक्पापभाग्गृही ॥ ८८ ॥ ब्रह्मा जगद्विधातापि न विरक्तः कलत्रवान् ॥ त्यागे दोषस्तत्कदाचिन्नास्माकं त्यक्तयोषिताम् ॥ ८९ ॥ स्वभार्यां च परित्यज्य यो गृह्णाति परस्त्रियम् ॥ यशोधनायुषां हानिर्भवेज्जीवन्मृतस्य च ॥ ९० ॥ भुवि नास्ति यशो यस्य जीवनं तस्य निष्फलम् ॥ सुसंपदा किं राज्येन सुखेन च तपस्विनः ॥ ९१ ॥ निष्कामेन च वृद्धेन मया किं ते प्रयोजनम् ॥ सुवेषं सुंदरं मातर्युवानं पश्य सुंदरि ॥ ९२ ॥ इत्येवं वचनं श्रुत्वा चुकोपाप्सरसां वरा ॥ उवाच भूयो वाक्यं तं त्रस्ता प्रस्फुरिताधरा ॥ ९३ ॥ ॥ रंभोवाच ॥ ॥ चारुचंपकवर्णाभः कंदर्पसमसुंदरः ॥ तपःप्रभावात्स श्रीकः सुवेषः संमतः स्त्रियाः ॥ ९४ ॥ त्वया विनान्यं कं यामि को वास्ति त्वत्परः पुमान् ॥ पुंश्चली त्वां परित्यज्य का जीवति स्मरातुरा ॥ ९५ ॥ शीघ्रं मां भज विप्रेंद्र दग्धां कामाग्निना सदा ॥ कामो नश्यति मां त्वत्तो यथा रंभां मतंगजः ॥ ९६ ॥ न चेच्छापं

॥ ९८ ॥ अ० ३१

प्रदास्यामि वद वेदविदां वर ॥ मां वा दारुणशापं वा सत्वरं ग्रहणं कुरु ॥९७॥ दग्धाः प्राणा मनो दग्धं स्वात्मा वा इति संततम् ॥
नवशृंगारपीयूषपाननिर्वाणतां व्रजेत् ॥ ९८ ॥ स्वांतर्दुःखेन दुःखार्तो यो यं शपति निश्चितम् ॥ तं शापं खंडितुं शक्तो न विधाता
जगत्पतिः ॥ ९९ ॥ द्विजो रंभावचः श्रुत्वा बभूव ध्यानतत्परः ॥ नोवाच किंचिन्मौनस्थः सा तं कोपाच्छशाप ह ॥ १०० ॥ हे
वक्रचित्त ते विप्र सर्वावयववक्रिमम् ॥ शरीरमंजनाकारं रूपयौवनवर्जितम् ॥ १ ॥ अतीव विकृताकारं त्रिषु लोकेषु गर्हितम् ॥
पुरातनं तपो नष्टं सद्यो भवतु निश्चितम् ॥ २ ॥ इत्युक्त्वा पुंश्चली कामात्काममलोकं जगाम ह ॥ अचिरेण मुनींद्रश्च न ददर्श हरेः
पदम् ॥ ३ ॥ पदारविंदविरहात्समुद्विग्नो बभूव ह ॥ स्वांगं च दृष्ट्वा विकृतं पूर्वपुण्यविवर्जितम् ॥ ४ ॥ कृत्वाग्निकुंडं शोकेन प्राणांस्त्य
क्तुं समुद्यतः ॥ मया दृष्टो वरो दत्तो दिव्यज्ञानेन बोधितः ॥ ५ ॥ आश्वासश्च कृतः प्रीत्या ततः शांतो बभूव ह ॥ अंगान्यष्टौ च वक्रा
णि दृष्ट्वा तूर्णं महामुनेः ॥ ६ ॥ अष्टावक्रेति तन्नाम कौतुकेन मया कृतम् ॥ मद्वाक्यान्मलयद्रोणीमयमागम्य सत्वरः ॥ ७ ॥ षष्टि
वर्षसहस्राणि चकार परमं तपः ॥ तपोऽवसाने मद्भक्तो मया युक्तः कृतः प्रिये ॥ ८ ॥ सर्वस्मिन्प्रलये नष्टे न मद्भक्तः प्रणश्यति ॥
सुचिरेणैव तपसा ज्वलता जठराग्निना ॥ ९ ॥ त्यक्ता हारस्यांतरं च भस्मपूर्णं ततो मुनेः ॥ आगतं मलयद्रोणीं मुनिहेतोर्मया
प्रिये ॥ ११० ॥ अष्टावक्राच्च मद्भक्तो न भूतो न भविष्यति ॥ एवंभूतस्तपोनिष्ठः प्रपौत्रो ब्रह्मणो मुनिः ॥ ११ ॥ निष्कलः पुंश्चली
शापाद्ब्रह्मापूज्यो यथा पुरा ॥ इत्येवं कथितं सर्वं रहस्यं च महात्मनः ॥ सुखदं पुण्यदं गूढं किं भूयः श्रोतुमिच्छसि ॥ ११२ ॥ ॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे राधाप्रश्ने त्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ श्रीराधिकोवाच ॥ ॥
किमाश्चर्यं श्रुतं नाथ चरितं सुमनोहरम् ॥ अधुना श्रोतुमिच्छामि ब्रह्मणः शापकारणम् ॥ १ ॥ यो विधाता त्रिजगतां तपसां
फलदायकः ॥ स कथं कुलटाशापादपूज्यश्च बभूव ह ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ मन्वंतरे रैवतस्य सुचंद्रो नृपपुंगवः ॥
तपस्वी वैष्णवः श्रेष्ठो ज्ञानी परमधार्मिकः ॥ ३ ॥ स च पूर्वं तपः कुर्वन्नाजगाम मम प्रिये ॥ इमां च मलयद्रोणीं भारतेषु मनोह

राम् ॥ ४ ॥ तपश्चकार राजेंद्रो वर्षाणां च सहस्रकम् ॥ जीर्णं तस्य शरीरं च कठोरेण तपस्विनः ॥ ५ ॥ वल्मीकाच्छादितं देहं दृष्ट्वा धाता कृपानिधिः ॥ आजगाम वरं दातुं तपःस्थानं सुनिर्जनम् ॥६॥ कमंडलुजलेनैव मम देहोद्भवेन च॥सिषेच तं च मंत्रेण मया दत्तेन योगवित् ॥ ७ ॥ कमंडलुजलस्पर्शादुत्थाय नृपतिः स्वयम् ॥ ननाम भक्त्या जगतां स्रष्टारं च पुरःस्थितम् ॥ ८ ॥ स तं नमंतं राजानमुवाच कमलोद्भवः ॥ वरं वृण्विति राजेंद्र यत्ते मनसि वांछितम् ॥ ९ ॥ तस्य तद्वचनं श्रुत्वा वरं वव्रे परात्परम् ॥ ममैव चरणे भक्तिं मदीयं दास्यमेव च ॥ १० ॥ कृपया च वरं ब्रह्मा दत्तवानभिवांछितम् ॥ स च तत्पुरतस्तस्थौ कामदेवसमप्रभः ॥ ॥ ११ ॥ एतस्मिन्नंतरे राजा ददर्श रथमुत्तमम् ॥ आकाशान्निपततं वै शतसूर्यसमप्रभम् ॥ १२ ॥ तेजसाच्छादितं सर्वं सुप्रदीप्तं दिशो दश ॥ रत्नेंद्रसारनिर्माणं शतचक्रसमन्वितम् ॥१३॥ अमूल्यरत्नरचितं विचित्रकलशोज्ज्वलम् ॥ मुक्तामाणिक्यहीराणां मालाजालैश्च राजितम् ॥ १४ ॥ सद्रत्नदर्पणैर्दीप्तैरतीव सुमनोहरम् ॥ भूषितं दिव्यवस्त्रैश्च श्वेतचामरकोटिभिः ॥ १५ ॥ पारिजातप्रसूनानां मालाजालैः सुशोभितम् ॥ मनोयायि महाश्चर्यं नानाचित्रेण चित्रितम् ॥१६॥ वेष्टितं पार्षदैर्दिव्यै रत्नभूषणभूषितैः ॥ चतुर्भुजैः श्यामलैश्च ज्वलद्भिः स्थिरयौवनैः ॥ १७ ॥ पीतवस्त्रपरीधानैश्चंदनागुरुचर्चितैः ॥ दृष्ट्वा रथस्थान्देवांश्च ननाम नृपतिर्मुदा ॥ १८ ॥ सहसा तस्य शिरसि पुष्पवृष्टिर्बभूव ह ॥ नेदुर्दुंदुभयः स्वर्गे चानकाश्च मनोहराः ॥ १९ ॥ ऋषयो मुनयः सिद्धाः प्रकुर्वंतो मुदाशिषम् ॥ प्रशशंसुः सुराः सर्वे राजानं हर्षनिर्भराः ॥ २० ॥ राजा च पार्षदान्ध्यात्वा तद्रूपश्च बभूव ह ॥ पार्षदास्तं रथे कृत्वा नीत्वा जग्मुर्ममालयम् ॥ २१ ॥ मदीयः पार्षदो भूत्वा स च तस्थौ ममांतिके ॥ ततः स्वमंदिरं यांतं ददर्श मोहिनी विधिम् ॥ २२ ॥ पुष्पोद्याने च रम्ये च पुष्पचंदनवायुना ॥ सद्यो मुमोद तं दृष्ट्वा प्रदग्धा मदनानलैः ॥२३॥ विलोक्य वक्रनयना जुगोप सस्मितं मुखम्॥ सिंदूरबिंदुं दधती कस्तूरीबिंदुना सह ॥ २४॥ चारुचंपकवर्णाभा सततं स्थिरयौवना ॥ बृहन्नितंबयुगला पीनश्रोणिपयोधरा ॥२५॥ शरत्पार्वणशुभ्रांशुप्रभामुष्टकरानना ॥ सूक्ष्मवस्त्रपरीधाना रत्नालंकारभूषिता ॥ २६ ॥ त्रैलोक्यं मोहितुं शक्ता कटाक्षैरेव लीलया ॥

अतीव कामिनी शश्वद्गजेंद्रमन्दगामिनी ॥ २७ ॥ पुलकांचितसर्वांगी मूर्छां संप्राप वर्त्मनि ॥ सन्निरीक्ष्य च तां ब्रह्मा जगाम श्रीहरिं स्मरन् ॥ २८ ॥ स विकारं न हि प्राप ह्यात्मारामो जितेंद्रियः ॥ ब्रह्मलोकं च संप्राप ब्रह्मा च जगतां पतिः ॥ २९ ॥ सकामा सा च कुलटा बभूव हतचेतना ॥ दिवानिशं चिन्तयन्ती स्वप्ने ज्ञाने चतुर्मुखम् ॥ ३० ॥ सर्वं जारं विसस्मार तत्याज हरिमीश्वरी ॥ उत्तिष्ठंती निवसती शयनं कुर्वती क्षणम् ॥ ३१ ॥ तप्तपात्रे यथा सस्यं भ्रमत्येव तथा पथि ॥ एतस्मिन्नंतरे रंभा विदग्धाप्सरसां वरा ॥ ॥ ३२ ॥ गच्छन्ती कामलोकं सा सकामा तेन वर्त्मना ॥ दृष्ट्वा सहचरीं तत्र शुष्ककण्ठोष्ठतालुकाम् ॥ अभिप्रायेण बुबुधे पप्रच्छ सस्मिता तदा ॥ ३३ ॥ ॥ रंभोवाच ॥ ॥ कथमेवंविधा त्वं हि त्रैलोक्यचित्तमोहिनि ॥ ३४ ॥ वद शीघ्रं महाभागे रंभाहं चेतनं कुरु ॥ समुद्दिश्य सकामा त्वं गच्छ त्वं कांतमीप्सितम् ॥३५॥ कुलटा सर्वसौभाग्या न वयं कुलपालिकाः ॥ सर्वे व्यग्रा इन्द्रियाणां सुखाय भुवनत्रये ॥ ३६ ॥ यांति प्राणा यतः काले का लज्जा तत्र जीविनाम् ॥ न चात्मनः परः कश्चित्प्रियोऽस्ति भुवनत्रये ॥३७॥ कांतेऽपत्ये स्वबन्धौ च स्नेहो यः स्वात्महेतुकः ॥ सम्बंधः स्वात्मनो यावत्तावत्स्नेहोस्ति तत्र वै ॥ ३८ ॥ येषु यन्मानसं शश्वत्तेषां प्राणास्त एव हि ॥ गच्छन्तीं कामलोकं च सकामां पश्य मां प्रिये ॥ ३९ ॥ सह सख्या समालोच्य मनसा गच्छ तं प्रियम् ॥ निबद्ध्य नीवीं केशांश्च कृत्वा वेषमभीप्सितम् ॥ ४० ॥ मुनिमोहनबीजं च तं मोहं कुरु मोहिनि ॥ कथयस्व महाभागे वचनं हृदयंगमम् ॥ ४१ ॥ रक्षात्मानं प्रभावं च स्त्रीजातीनां जगत्त्रये ॥ स्वाभिप्रायश्च सुरतौ न प्रकाश्यः कदाचन ॥ ४२ ॥ स्वांतं कांतं स्वानुरक्तमूर्ज्वीं सहचरीं विना ॥ तस्माद्यत्नेन हृद्वाक्यं प्रकाश्यं च प्रिये प्रिये ॥ ४३ ॥ अन्यथा चोपहासाय मरणायैव कल्पते ॥ तस्याश्च वचनं श्रुत्वा सस्मिता सा सुलज्जिता ॥ हृद्यं च कथयामास यद्धेतोस्तादृशी गतिः ॥ ४४ ॥ ॥ मोहिन्युवाच ॥ ॥ यावद्दृष्टो मया रंभे निर्जने चतुराननः ॥ ४५ ॥ तावन्मनो मेतिदग्धं शश्वन्मनसिजानलैः ॥ न दत्तमात्मने भक्ष्यमंतरे न हि रोचते ॥ ॥ ४६ ॥ जानामि नाहमुदयं यामिनीशदिनेशयोः ॥ अधुना न हि भेदो मे सततं स्वप्नज्ञानयोः ॥ ४७ ॥ मम प्राणाः प्रतीक्षंते

तस्यालिंगनमेव च ॥ क्षणं विज्ञाय न चिरं यास्यन्ति नान्यथा प्रिये ॥ ४८ ॥ कामज्वालाकलापैश्च स्वर्णाकारं कलेवरम् ॥ अनाद्दा
रेण चेदानीं बभूव दग्धशैलवत् ॥ ४९ ॥ गंतुं स्थातुं न शक्ताहं शयनं कर्तुमुद्यता ॥ धिगस्तु पुंश्चलीजातिं मामेव च विशेषतः ॥५०॥
कमुपायं करिष्यामि वद रंभेति सांप्रतम् ॥ लज्जां वापि शरीरं वा विसृजामि च किं द्वयोः ॥ ५१ ॥ मोहिनीवचनं श्रुत्वा प्रहस्याप्स
रसां वरा ॥ तामुवाच हितं नीतमुपायं शुभकारणम् ॥ ५२ ॥ ॥ रंभोवाच ॥ ॥ एवमेतदहो भद्रे भद्रस्य कारणं तव ॥ सर्वं त्व
पनयिष्यामि शृणूपायं भयं त्यज ॥ ५३ ॥ कृत्वा वेषमपूर्वं च पूर्वमाराध्य मन्मथम् ॥ तेन सार्द्धं स्वयं गत्वा मोहं कुरु च भामिनि ॥
॥ ५४ ॥ जितेंद्रियाणां प्रवरं साक्षान्नारायणात्मकम् ॥ विना कामसहायेन का शक्ता जेतुमीश्वरम् ॥ ५५ ॥ भज कामं तपः कृत्वा
पुष्करे व्रज मोहिनि ॥ सद्यः साक्षात्स भविता दयालुर्योषितां प्रभुः ॥ ५६ ॥ इत्युक्त्वा तामप्सरसां प्रवरा काममंतिकम् ॥ जगामें
द्रियशांत्यर्थं सा जगाम च पुष्करम् ॥ ५७ ॥ पुष्करे च तपः कृत्वा कामं संप्राप्य मोहिनी ॥ जगाम तेन सार्द्धं च ब्रह्मलोकमना
मयम् ॥ ५८ ॥ ददर्श निर्जनस्थं च मोहिनी कमलोद्भवम् ॥ तमेव मोहनं कर्तुं समारेभे पुरः स्थिता ॥ ५९ ॥ क्षणं ननर्त सुचिरं
सुगानेन क्षणं जगौ ॥ संगीतं मम संबंधि भक्तानां चित्तमोहनम् ॥ ६० ॥ विधाता जगतां तस्याः श्रुत्वा संगीतमीप्सितम् ॥ पुल
कांचितसर्वांगो मुमोह साश्रुलोचनः ॥ ६१ ॥ दृष्ट्वा मुग्धं चतुर्वक्त्रं मोहिनी हृष्टमानसा ॥ कलाप्रमाणं भावं च चकार तत्र लील
या ॥ ६२ ॥ स्वांगं संदर्शयामास स्मेरभ्रूभंगपूर्वकम् ॥ का लज्जा तस्य संसारे यः कामहतचेतनः ॥ ६३ ॥ विज्ञाय ब्रह्मा तद्भावं
नतवक्त्रो बभूव ह ॥ प्रदाय तस्या दानं च विरतः श्रीहरिं स्मरन् ॥ ६४ ॥ विज्ञाय ब्रह्मणो भावं शुष्ककण्ठोष्ठतालुका ॥ हतोद्यमा
सा तुष्टाव कामं कामप्रदं वरम् ॥ ६५ ॥ ॥ मोहिन्युवाच ॥ ॥ सर्वेंद्रियाणां प्रवरं विष्णोरंशं च मानसम् ॥ तदेव कर्मणां
बीजं तदुद्भव नमोऽस्तु ते ॥ ६६ ॥ स्वयमात्मा हि भगवाञ्ज्ञानरूपो महेश्वरः ॥ नमो ब्रह्मअग्रत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ ६७ ॥
दृष्टिः सर्वशरीरेषु दृष्टिश्च योगिनामपि ॥ जगत्साध्य दुराराध्य दुर्निवार नमोऽस्तु ते ॥६८॥ सर्वाजित जगज्जेतर्जीव जीवमनोहर ॥

रतिबीज रतिस्वामिन्रतिप्रिय नमोऽस्तु ते ॥ ६९ ॥ शश्वद्योषिदधिष्ठान योषित्प्राणाधिकप्रिय ॥ योषिद्वाहन योषास्त्र योषिद्बंधो
नमोऽस्तु ते ॥ ७० ॥ पतिसांध्यकराशेषरूपाधारगुणाश्रय ॥ सुगंधिवातसचिव मधुमित्र नमोऽस्तु ते ॥ ७१ ॥ शश्वद्योनिकृता
धार स्त्रीसंदर्शनवर्धन ॥ विदग्धानां विरहिणां प्राणांतक नमोऽस्तु ते ॥ ७२ ॥ अकृपा येषु तेनर्थस्तेषां ज्ञानविनाशनम् ॥
अनूहरूपभक्तेषु कृपासिन्धो नमोऽस्तु ते ॥ ७३ ॥ तपस्विनां च तपसां विघ्नबीजावलीलया ॥ मनः सकामं मुक्तानां कर्तुं
शक्त नमोऽस्तु ते ॥ ७४ ॥ तपःसाध्यास्तथाराध्याश्च सदैवं पांचभौतिकाः ॥ पंचेंद्रियकृताधार पंचबाण नमोऽस्तु ते ॥ ७५ ॥
मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुरः ॥ विररामानम्रवक्त्रा बभूव ध्यानतत्परा ॥ ७६ ॥ उक्तं माध्यंदिने कांते स्तोत्रमेतन्म
नोहरम् ॥ परा दुर्वाससा दत्तं मोहिन्यै गंधमादने ॥ ७७ ॥ स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत् ॥ अभीष्टं लभते नूनं
निष्कलंको भवेद्ध्रुवम् ॥ ७८ ॥ चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम् ॥ भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः ॥ वनितां लभते
साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥ ७९ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे मोहिनी
स्तोत्रवर्णनंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ मोहिनीस्तवनेनैव कामस्तुष्टो बभूव ह ॥ चकार शरसं
धानमंतरिक्षे स्थितः स्वयम् ॥ १ ॥ मंत्रपूतं महास्त्रं च चिक्षेप पितरं मुदा ॥ बभूव चंचलो ब्रह्मा कामास्त्रेण च कामुकः ॥ २ ॥
क्षणं निरीक्षणं चक्रे मोहिन्यास्ये पुनःपुनः ॥ ज्ञानं प्राप्य तदा धाता विरराम हरिं स्मरन् ॥ ३ ॥ बुबुधे मनसा सर्वं चरितं मन्मथस्य
च ॥ शशाप तं सुतमपि विधाता क्रोधविह्वलः ॥ ४ ॥ हे काम यौवनोन्मत्त मूढैश्वर्येण गर्वितः ॥ भविता दर्पभंगस्ते गुरोर्मे हेलना
दिति ॥ ५ ॥ इतोद्यमो जगामाशु मन्मथो मधुना सह ॥ ब्रह्मणः शापभीतश्च शुष्ककंठोष्ठतालुकः ॥ ६ ॥ इत्युवाच जगद्धाता
मोहिनीं मदनातुराम् ॥ चतुर्वक्त्रं च पश्यंतीं सस्मितं वक्रचक्षुषा ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ ॥ मातर्मोहिनि गच्छ त्वं निष्फलं
कर्म चात्र ते ॥ ज्ञातस्तवाभिप्रायश्च नाहं योग्योऽस्य कर्मणः ॥ ८ ॥ वेदे जुगुप्सितं कर्म तदेव कर्तुमक्षमः ॥ वेदकर्ता स्वयमहं व्यव

स्याकारको भवे ॥ ९ ॥ अकीर्तिं वेदवक्तुश्च निंद्यं च किमतः परम् ॥ उपस्थिता च या योषिदत्याज्या रागिणामपि ॥ १०.॥ श्रुतौ श्रुतमिति त्याज्या सर्वदैव तपस्विनाम् ॥ अहो सर्वैः परित्याज्या पुंश्चली च विशेषतः ॥ ११ ॥ धनायुःप्राणयशसां नाशिनी दुःखदायिनी ॥ स्वकार्यतत्परा शश्वत्परकार्यविनाशिनी ॥ १२ ॥ निष्ठुरा नवघातिभ्यः सर्वापद्बीजरूपिणी ॥ विद्युद्दीप्तिर्जले रेखा लोभान्मैत्री यथा भवेत् ॥ १३ ॥ परद्रोहाद्यथा संपत्कुलटाप्रेम तत्समम् ॥ सर्वेभ्यो हिंस्रजंतुभ्यो विपद्बीजा सदैव हि ॥ १४ ॥ यो विश्वसेत्तां संमूढो विपत्तस्य पदेपदे ॥ त्वं च रूपवती धन्या वंचिता कामुकैःसदा॥१५॥ यूनां संपत्स्वरूपा च विषतुल्या तपस्विनाम्॥ त्वमेवाप्सरसां श्रेष्ठा सर्वदा स्थिरयौवना ॥१६॥ तवैव कर्म योग्यं च युवानं पश्य सुन्दरि ॥ त्वं विदग्धा च योषित्तु विदग्धान्वेषणं कुरु ॥ १७ ॥ विदग्धाया विदग्धेन संगमो गुणवान्भवेत् ॥ जरातुरोहं वृद्धश्च तपस्वी वैष्णवो द्विजः ॥ १८ ॥ अस्वतंत्रः पराधीनः का रतिः पुंश्चलीषु मे ॥ अये वत्से गच्छ शीघ्रं विहाय पितरं च माम् ॥ १९ ॥ नाम्नाहं च जगत्स्रष्टा तस्मात्तव पिता सदा ॥ मन्मथं चंद्रमित्रं च जयंतं नलकूबरम् ॥ २० ॥ स्ववैद्यौ चंद्रतनयं दितिपुत्रांश्च सुंदरान् ॥ कामशास्त्रेषु निष्णातान्रतिकर्मविशारदान् ॥ ॥ २१ ॥ या मां यासि हि तांस्त्यक्त्वा सा विदग्धा च कामुकी ॥ सदा संभोगविषये स्त्रियं प्रार्थयते पुमान् ॥ २२ ॥ स्त्री चेत्प्र याति पुरुषं विपरीतं विडंबनम् ॥ सर्वेषां चैव रत्नानां स्त्रीरत्नं दुर्लभं परम् ॥ २३ ॥ स्वयं प्रार्थयते स्वामी न तु स्वामिनमेव च ॥ योषिज्जातिषु धिक् ताश्च स्वयं याः समुपस्थिताः ॥२४॥ भवेद्दूरं स्वल्पमूल्यं रत्नं स्वयमुपस्थितम् ॥ नित्यं पुमान्स्त्रियं याति स्त्री वा याति च न प्रियम् ॥ २५ ॥ लोकाचारेषु वेदेषु न स्त्री यानि परप्रियम् ॥ स्ववस्तु भुंक्ते यः काले शास्त्रोक्तविधिपूर्वकम् ॥ २६ ॥ स पूज्यो न भवेत्पूज्यो यद्रतिः परवस्तुषु ॥ कः कस्य शत्रुरबले निशामय जगत्त्रये ॥ २७ ॥ स्वेंद्रियाः शत्रवः सर्वे शत्रुता यन्निमि त्ततः ॥ वेदोक्ताचरणे सर्वं मित्रं च जगतां जगत् ॥ २८॥ कृते वेदविरुद्धे च मित्रं शत्रुर्भवेद्ध्रुवम् ॥ वेदोक्तं कृतवंतं च हरिस्तुष्टो दिवानिशम् ॥ २९ ॥ हरौ तुष्टे जगत्तुष्टं तस्मिन्रुष्टे भवो रिपुः ॥ कुत्रास्ति कुलटाजातिः साध्वीजातिश्च कुत्र वा ॥ ३० ॥ स्वकी

याचरणात्सर्वं भवे भवति कर्मणः ॥ स्त्रीजातिः प्रकृतेरंशा नारायणविनिर्मिता ॥ ३१ ॥ दुःशीला पुंश्चली निंद्या सुशीला च पति
व्रता ॥ पतिव्रतास्तु त्रिविधाः पुंश्चलीषु च योषितः ॥ ३२ ॥ तासामेवंविधा नास्ति स्वयं याति परप्रियम् ॥ स्त्रीजातीनां च मध्ये
च कास्त्येवं कुलकज्जला ॥ ३३ ॥ भवे रत्यै स्वयं दृष्ट्वा वेषं कृत्वा प्रयाति तम् ॥ क्षोभिता यदि पश्यंती भक्ष्यद्रव्यमसाध्यकम् ॥
॥ ३४ ॥ वैकुल्यान्नहि तत्साध्यं सामान्यमेव केवलम् ॥ इत्येवमुक्त्वा जगतां विधाता विरराम च ॥ वक्तुं समुद्यता सा च कोपप्रस्फु
रिताधरा ॥ ३५ ॥ ॥ मोहिन्युवाच ॥ ॥ ज्ञातं सर्वं जगद्धातश्चरितं तव सांप्रतम् ॥ ३६ ॥ त्वया निबोधिता नीतिर्मनो मे
न स्थिरं भवेत् ॥ भूतं त्वयि विशिष्टं च यावद्दृष्टः क्षणे भवान् ॥ ३७ ॥ त्वद्वक्रदृष्टिमात्रेण सर्वे जाराश्च विस्मृताः ॥ देहं कामाग्निना
दग्धं यदा त्यक्तुं समुद्यता ॥ ३८ ॥ निषिषेध च मां रंभा प्रददौ मंत्रमीदृशम् ॥ तदा कामसहायेन त्वत्समीपं समागता ॥ ३९ ॥
समघुस्तव शापेन स जगाम हतोद्यमः ॥ अहो गंतुमशक्ताहं त्वया यद्यपि भर्त्सिता ॥ ४० ॥ सर्वांगेष्वेव मे जाड्यं बभूव सांप्रतं
विभो ॥ कृपां कुरु कृपासिंधो न मां हंतुं त्वमर्हसि ॥ ४१ ॥ तवाश्लेषणमात्रेण विज्वराहं सुनिश्चितम् ॥ त्वमेव जगतां धाता
कुलटाऽहं च कर्मणा ॥ ४२ ॥ संतो गर्वं न कुर्वंति कर्मसाध्याश्च जीविनः ॥ कश्चित्प्रयाति यानेन वहंति तं च केचन ॥ ४३ ॥
करं गृह्णाति नृपतिः कर्मणा ददति प्रजाः ॥ कश्चित्सिंहासनस्थश्च नृपमात्रश्च कश्चन ॥ ४४ ॥ कर्मणा वाहकाः केचि
त्केचिद्वाहनपालकाः ॥ सूकरीजठरं कश्चित्संप्रयाति स्वकर्मणा ॥ ४५ ॥ कश्चिच्छच्याश्च जठरं तव पुत्राश्च केचन ॥
केचित्कृत्वा हरेर्भक्तिं कर्मणा तस्य पार्षदाः ॥ ४६ ॥ केचिद्भवंति कृमयो विष्ठायां दैवदोषतः ॥ स्वर्गं प्रयांति राजेंद्राः
केचिच्च स्वस्वकर्मणा ॥ ४७ ॥ केचित्प्रयांति नरकं विण्मूत्रे तत्र पच्यते ॥ कर्मणा कश्चिदिंद्रेंद्रः सुराणां प्रवरः स्वयम् ॥ ४८ ॥
केचित्सुरा नराः केचित्केचिच्च क्षुद्रजंतवः ॥ केचिच्च कर्मणा विप्रा वर्णश्रेष्ठा महीतले ॥ ४९ ॥ केचिद्भूपा वैश्यशूद्राः केचि
च्च म्लेच्छजातयः ॥ केचित्स्वकर्मणा प्राज्ञा ज्ञानेन सर्वदर्शिनः ॥ ५० ॥ केचिन्मूर्खाः केचिदंधाः स्वांगहीनाश्च केचन ॥ केचिच्छात्रं

बोधयंति शिष्यवर्गान्स्वकर्मणा ॥ ५१ ॥ केचित्पठंति सर्वार्थं जानंति गुरुवक्त्रतः ॥ भवंति कर्मणा केचिद्देहे स्थावरजंगमे ॥ ५२ ॥
तपस्वी नवघाती च त्वं च ब्रह्मा च कर्मणा॥ काचित्स्वकर्मणा साध्वी पूज्येह च परत्र च ॥५३॥ काचिद्वेश्या तदाहारं भुंक्ते कृत्वांग
विक्रयम् ॥ स्वर्वेश्याहं सुरपुरे सुरभोग्या सुपूजिता ॥ ५४ ॥ येषामालिंगनेनैव कर्मणां खंडनं भवेत् ॥ मनःस्वभावबीजं च स्वभावः
कर्मबीजकः ॥ ५५ ॥ तत्कर्म फलबीजं च सर्वेषां जनको हरिः ॥ फलं ददाति नियतं कर्मद्वारा विभुः स्वयम् ॥ ५६ ॥ सर्वेभ्यो .बल
वान्नित्यं कर्मरूपी जनार्दनः ॥ कुतो हेतोर्निंदिताहं त्वयैव भर्त्सिता कथम् ॥ ५७ ॥ जगत्स्रष्टुरीश्वरस्य पादाब्जं द्रष्टुमागता ॥
स्वप्ने यस्य पदद्वंद्वं न हि पश्यंति योगिनः ॥ ५८ ॥ तमीश्वरं पतिं कर्तुमिच्छया स्वयमागता ॥ गत्वा हि कस्यचित्स्थानमस्पृ
श्येह परत्र च ॥ ५९ ॥ कस्यचित्पादरजसा यशसा भांति योषितः ॥ इत्युक्त्वा मोहिनी शीघ्रं गत्वोवास हरेः पुरः ॥ ६० ॥
स्वयं विधाता जगतां चकंपे कुलटाभयात् ॥ सस्मिता वक्रनयना कामभावं चकार ह ॥ ६१ ॥ स्वांगं च दर्शयामास कामबाणप्र
पीडिता ॥ एतस्मिन्नंतरे कामः सर्वज्ञः सर्वयोगवित् ॥ ६२ ॥ आविर्भूय पंचबाणान्निचिक्षेप च ब्रह्मणि ॥ सम्मोहनं समुद्वेगं बीजस्तं
भितकारणम् ॥ ६३ ॥ उन्मत्तबीजं ज्वलदं शश्वच्चेतनहारकम् ॥ एतान्प्रक्षिप्य मदनोऽप्यंतरिक्षस्थितः स्वयम् ॥ ६४ ॥ किंकरान्प्रे
षयामास संमोहाय पितुर्मुदा ॥ वसंतं कोकिलालीश्च गंधवातं मनोहरम् ॥ ६५ ॥ नियुज्याभ्यंतरं गत्वा तद्विकारं चकार ह ॥
पुंस्कोकिलः कलं रावमुवाच तत्समीपतः ॥ ६६ ॥ षट्पदः सुंदरं सूक्ष्मं जुगुंजे पुरतः स्थितः ॥ शश्वद्ववौ गंधवहो मंदोतिशीतलः
प्रिये ॥ ६७ ॥ सततं मुदितस्तत्र बभ्राम च मधुः स्वयम् ॥ पुलकांचितसर्वांगो बभूव जगतां विधिः ॥ ६८ ॥ ददर्श मोहिनी
भावं प्रहस्य च पुनःपुनः ॥ अतीव वक्रनयना कामास्त्रहतचेतना ॥ ६९ ॥ विधाता बुबुधे सर्वं सर्वबंधनिबंधनम् ॥ नियंतुं न मनः
शक्तः सस्मार श्रीहरिं भिया ॥ ७० ॥ तुष्टाव मनसा कृष्णं शांतं हृत्पंकजस्थितम् ॥ द्विभुजं मुरलीहस्तं हरिं पीतांबरं परम्
॥ ७१ ॥ अतीव कमनीयं च किशोरं स्थिरयौवनम् ॥ रत्नालंकारभूषाढ्यं सस्मितं श्याममसुंदरम् ॥ ७२ ॥ ॥ ब्रह्मोवाच ॥

रक्ष रक्ष हरे मां च निमग्नं कामसागरे ॥ दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसंकटे ॥ ७३ ॥ भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे ॥ अतीव निर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥ ७४ ॥ जन्मोर्मिसंघसहिते योषिन्नक्रौघसंकुले ॥ रतिस्रोतःसमायुक्ते गंभीरे घोर एव च ॥ ७५ ॥ प्रथमामृतरूपे च परिणामविषालये ॥ यमालयप्रवेशाय मुक्तिद्वारातिविस्मृते ॥७६॥ बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् ॥ स्वयं च त्वं कर्णधारः प्रसीद मधुसूदन ॥७७॥ मद्विधाः कतिचिन्नाथ नियोज्या भवकर्मणि ॥ संति विश्वेश विधयो हे विश्वेश्वर माधव ॥ ७८ ॥ न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः ॥ तथापि नः स्पृहा कामे त्वद्भक्तिव्यवधायके ॥७९॥ हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु ॥ त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ८० ॥ इत्युक्त्वा जगतां धाता विरराम सनातनः ॥ ध्यायंध्यायं मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ८१ ॥ ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ॥ स चैवाकर्ण्य विषये न निमग्नो भवेद्ध्रुवम् ॥ ८२ ॥ मम मायां विनिर्जित्य संज्ञानं लभते ध्रुवम् ॥ इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ८३ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे ब्रह्ममोहिनीसंवादे द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कृत्वा ब्रह्मा हरेः स्तोत्रं तस्थौ तस्याः समीपतः ॥ मनोमत्तगजेंद्रं च कामासक्तं निवारयन् ॥ १ ॥ दिव्यज्ञानांकुशेनैव मया दत्तेन राधिके ॥ उवाच मोहिनी तं च परिहासपरं वचः ॥ २ ॥ ॥ मोहिन्युवाच ॥ ॥ इंगितेनैव नारीणां सद्यो मत्तं भवेन्मनः ॥ करोत्याकृष्य संभोगं यः स एवोत्तमो विभो ॥ ३ ॥ ज्ञात्वा स्फुटमभिप्रायं नार्या संप्रेषितो हि यः ॥ पश्चात्करोति शृंगारं पुरुषः स च मध्यमः ॥ ४ ॥ पुनःपुनःप्रेषितश्च स्त्रिया कामार्तया च यः ॥ तया न लिप्तो रहसि स क्लीबो न पुमानहो ॥५॥ गृही तपस्वी कामी वा त्यजेत्स्त्रियमुपस्थिताम् ॥ व्रजेत्परत्र नरकमपूज्यश्च भवेदिह ॥ ६ ॥ नष्टश्रीर्भ्रष्टरूपश्च भ्रष्टबुद्धिर्भवेद्ध्रुवम् ॥ स सद्यः क्लीबतां याति ब्रह्मञ्छापेन योषितः ॥७॥ उत्तिष्ठ जगतीनाथ पारं कुरु स्मरार्णवे ॥ निमग्नां दुस्तरे घोरे कर्णधार भयानके ॥८॥ अतीव निर्जनस्थाने सर्वजंतुविवर्जिते ॥ सुगंधिवायुना रम्ये पुंस्कोकिलरुतश्रुते ॥ ९ ॥ सततं त्वन्मनस्कां मां दासीं जन्मनि

जन्मनि ॥ क्रीणीहि रतिपण्येनामूल्यरत्नेन सत्वरम् ॥ १० ॥ इत्युक्त्वा मोहिनी सद्यो जगत्स्रष्टुश्च ब्रह्मणः ॥ विचकर्ष वरं वस्त्रं सस्मि
ता कामविह्वला ॥ ११ ॥ विज्ञाय समयं धाता तामुवाच भयातुरः ॥ पीयूषतुल्यं वचनं वरं विनयपूर्वकम् ॥ १२ ॥ ॥ ब्रह्मोवाच ॥
शृणु मोहिनि मद्वाक्यं सत्यसारं हितं स्फुटम् ॥ न कुरु त्वं च त्रैलोक्ये स्त्रीजातीनामपत्रपाम् ॥ १३ ॥ त्यज मामंबिके पुत्रं
वृद्धं निष्काममेव च ॥ त्वत्कर्मयोग्यरसिकं युवानं पश्य सुस्मिते ॥ १४ ॥ निषेकाल्लभते पत्नी गुरु भर्तुः शुभाशुभम् ॥ मंत्रशिल्प
मपत्यं च सर्वमेतन्न यत्नतः ॥ १५ ॥ त्वया सह मम रते निबंधो नास्ति सुव्रते ॥ क्षुद्रं महद्वा यत्कर्म सर्वं देवनिबंधकम् ॥ १६ ॥
इत्युक्तवंतं ब्रह्माणं स्मरंतं मत्पदांबुजम् ॥ विचकर्ष पुनर्वेश्या कामेन हृतचेतना ॥ १७ ॥ एतस्मिन्नंतरे शीघ्रं स्थानं तत्सुमनोहरम् ॥
आजग्मुर्मुनयः सर्वे ज्वलंतो ब्रह्मतेजसा ॥ १८ ॥ अत्रिः पुलस्त्यः पुलहो वसिष्ठः क्रतुरंगिराः ॥ भृगुर्मरीचिः कपिलो वोढुः पंचशि
खो रुचिः ॥ १९ ॥ आसुरिश्च प्रचेताश्च स्वयं शुक्रो बृहस्पतिः ॥ उतथ्यः करकः कण्वः कश्यपो गौतमस्तथा ॥ २० ॥ सनकश्च
सनंदश्च कर्दमश्च सनातनः ॥ सनत्कुमारो भगवान्योगिनां परमो गुरुः ॥ २१ ॥ शातातपः पिप्पलश्च शंकुः शुक्रः पराशरः ॥
मार्कण्डेयो लोमशश्च मृकंडुश्च्यवनस्तथा ॥ २२ ॥ दुर्वासाश्च जरत्कारुरास्तीकश्च विभांडकः ॥ ऋष्यशृंगो भरद्वाजो वामदेवश्च
कौशिकः ॥ २३ ॥ दृष्ट्वैतांश्च तपोनिष्ठानागतांश्च मुनीश्वरान् ॥ तत्याज मोहिनी शीघ्रं व्रीडया कमलोद्भवम् ॥ २४ ॥ तत्रोवास
जगद्धाता तद्धामपार्श्वतश्च सा ॥ प्रणेमुर्मुनयस्तं च भक्तिनम्रात्मकंधराः ॥ २५ ॥ आशिषं युयुजे ब्रह्मा वासयामास तान्विभुः ॥
तेषु मध्ये प्रजज्वाल यथा तारासु चंद्रमाः ॥ २६ ॥ पप्रच्छुर्मुनयो देवं कथमेषा तवांतिके ॥ स्ववेंश्यानां च प्रवरा मोहिनीत्येवमेव
च ॥ २७ ॥ श्रुत्वा मुनीनां वचनमुवाच तान्प्रजापतिः ॥ स्त्रीजातीनां च वचनं लज्जाच्छादनमेव च ॥ २८ ॥ ॥ ब्रह्मोवाच ॥ ॥
अपूर्वं नृत्यगीतं च चिरं कृत्वा शुभावहा ॥ उवासेयं परिश्रांता यथा कन्या पितुः पुरः ॥ इत्युक्त्वा जगतां धाता जहास मुनि
संसदि ॥ २९ ॥ जहसुर्मुनयः सर्वे सर्वज्ञास्तत्र राधिके ॥ सर्वं रहस्यं विज्ञाय जगत्स्रष्टुश्च मानसम् ॥ ३० ॥ सद्यश्चुकोप कुलटा
१५

हास्यव्याजेन संसदि ॥ सर्वांगकंपमाना सा कुलटा कुटिलानना ॥ ३१ ॥ रक्तपंकजनेत्रां च कोपप्रस्फुरिताधरा ॥ उत्थाय च
सभामध्ये तेषां च पुरतः स्थिता ॥ संबोध्योवाच ब्रह्माणं मृत्युकन्या यथा रुषा ॥ ३२ ॥ ॥ मोहिन्युवाच ॥ ॥ अये ब्रह्मञ्ज
गन्नाथ वेदकर्ता त्वमेव च ॥ ३३ ॥ किं वा वेदप्रणिहितं कर्म किं तद्विपर्ययम् ॥ विचारं मनसा स्वेन कुरु वेदविदां गुरो ॥ ३४ ॥
स्वकन्यायां यत्स्पृहा स कथं हससि नर्तकीम् ॥ निर्मिताहमीश्वरेण स्ववेश्या सर्वगामिनी ॥ ३५ ॥ सतां कर्म विरुद्धं यत्तदत्यंतवि
डंबनम् ॥ दासीतुल्यां विनीतां च दैवेन शरणागताम् ॥ ३६ ॥ यतो हससि गर्वेण ततोऽपूज्यो भवाचिरम् ॥ अचिराद्दर्पभंगं ते
करिष्यति हरिः स्वयम् ॥ ३७ ॥ निबोध वचनं ब्रह्मन्वेश्यायाश्च तु सांप्रतम् ॥ तवैव वचनं स्तोत्रं गृह्णाति यो नरः सदा ॥ ३८ ॥
भविता तस्य विघ्नश्च स यास्यत्युपहास्यताम् ॥ भविता वार्षिकी पूजा देवतानां युगेयुगे ॥ ३९ ॥ तत्र माघ्यां च संक्रांत्यां न
भविष्यति सा पुनः ॥ कल्पांतरेऽत्र कल्पे वा देहे देहांतरेऽत्र वा ॥ ४० ॥ पुनः पूजा न भविता या गता सा गतैव च ॥ इत्युक्त्वा
मोहिनी शीघ्रं जगाम मदनालयम् ॥ ४१ ॥ तेन सार्द्धं रतिं कृत्वा बभूव विज्वरा पुनः ॥ पश्चात्सा चेतनां प्राप्य विललाप भृशं
पुनः ॥ ४२ ॥ अयं कथं मया शप्तो जगद्विधिरतिप्रियः ॥ स्ववेश्यायां गतायां च मुनयो दुःखिता भृशम् ॥ ४३ ॥ स्वयं विधाता
जगतां चकंपे नतकंधरः ॥ उपायं मुनयस्तस्मै ददुः कल्याणकारिणः ॥ ४४ ॥ शरणं व्रज वैकुंठमित्युक्त्वा ते गृहान्ययुः ॥ ब्रह्मा
जगाम शरणं मम मूर्त्यंतरं परम् ॥ ४५ ॥ शांतं तं कमलाकांतं श्यामं नारायणाभिधम् ॥ गत्वा विषण्णवदनः प्रणम्य च चतुर्भुज
म् ॥ ४६ ॥ तत्रोवास जगत्कर्ता नातिदूरे समीपतः ॥ रहस्यं कथयामास शुष्ककंठोष्ठतालुकः ॥ ४७ ॥ दीनबंधुं दयासिंधुं विप
त्तारणकारणम् ॥ श्रुत्वा रहस्यं तत्सर्वं प्रहस्योवाच तं विभुः ॥ सत्यं सारं हितं वाक्यं जगतां च सुखावहम् ॥ ४८ ॥ ॥ श्रीना
रायण उवाच ॥ ॥ स्वयं त्वं वेदविदसि विदुषां च गुरोर्गुरुः ॥ ४९ ॥ त्वया कृतं च यत्कर्म इह केन न तत्कृतम् ॥ स्त्रीजातिः
प्रकृतेरंशा जगतां बीजरूपिणी ॥ ५० ॥ स्त्रीणां विडंबनेनैव प्रकृतेश्च विडंबनम् ॥ न तद्भारतवर्षे च पुण्यक्षेत्रमनुत्तमम् ॥ ५१ ॥

क्रीडाक्षेत्रे ब्रह्मलोके कस्तवेंद्रियनिग्रहः ॥ यदि तद्वारते दैवात्कामिनी समुपस्थिता ॥ ५२ ॥ स्वयं रहसि कामार्ता न सा त्याज्या जितेंद्रियैः ॥ त्यक्त्वा परत्र नरकं व्रजेदतिविडंबितः ॥ ५३ ॥ भवेदेव हि दुःखार्ता शापं दद्याच्च तं ध्रुवम् ॥ विहाय स्वकलत्रं च यो गृह्णाति परस्त्रियम् ॥ ५४ ॥ लोभात्कामसुखाद्वापि सोऽधमो नात्र संशयः ॥ पातयित्वा स च पतेद्दश पूर्वान्दशापरान् ॥ ५५ ॥ त्यक्त्वा स्वस्वामिनं या च परं गच्छति कामतः ॥ न पुमान्न च वेश्या च कुलस्त्री तत्र दुष्यति ॥ ॥ ५६ ॥ उपायेन च या साध्यं करोति परपूरुषम् ॥ तिष्ठत्येवांधकूपे सा यावच्चंद्रदिवाकरौ ॥ ५७ ॥ स्ववेश्या च दिवं याति सततं कुलधर्मतः ॥ ध्रुवं भवेत्सोपराधी तस्या अप्यवमानतः ॥ ५८ ॥ तमुपायं करिष्यामि शप्तो यत्र विशुद्ध्यति ॥ क्षणं तिष्ठ जगन्नाथ पापिनश्च भवार्णवे ॥ ५९ ॥ एतस्मिन्नंतरे कश्चिदाजगाम हरेः पुरः ॥ द्वारपालः शीघ्रगामीत्युवाच नत कंधरः ॥ ६० ॥ ॥ द्वारपाल उवाच ॥ ॥ अन्यब्रह्मांडाधिपतिर्ब्रह्मा दशमुखः स्वयम् ॥ द्वारे तिष्ठन्महाभक्तस्त्वां द्रष्टुं स्वयमागतः ॥ ६१ ॥ द्वारपालवचः श्रुत्वा स चैवानुमतिं ददौ ॥ द्वारपालाज्ञया ब्रह्मा तुष्टावागत्य भक्तितः ॥ ६२ ॥ स्तोत्रैरतिविचित्रैश्च चतुर्वक्त्राऽश्रुतैरहो ॥ स्तुत्वोवासाज्ञया विष्णोः कृत्वा पश्चाच्चतुर्मुखम् ॥ ६३ ॥ नारायणो द्वारपालानित्युवाच चतुर्भुजान् ॥ आगंतुकं जनमपि प्रवेशयत सादरम् ॥ ६४ ॥ एतस्मिन्नंतरे तत्र वृन्दावनविनोदिनि ॥ आजगामातिप्रणतो ब्रह्मा शतमुखः स्वयम् ॥ ॥ ६५ ॥ दिव्यैः स्तोत्रैश्च तुष्टाव निगूढमतिसुन्दरैः ॥ स्तुत्वोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो ॥ ६६ ॥ तदनन्तरयोरग्रे भक्त्या शतमुखः स्वयम् ॥ जगद्विधौ सभायां च तत्र तिष्ठति तत्क्षणे ॥ ६७ ॥ आजगामान्यब्रह्मांडाधिपो ब्रह्मा हरेः पुरः ॥ सहस्रवदनः श्रीमान्भक्त्या नम्रात्मकंधरः ॥ ६८ ॥ स्तुत्वोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो ॥ तं च पप्रच्छ सर्वेषां ब्रह्मांडानां च ब्रह्मणाम् ॥ ॥ ६९ ॥ वार्तां विषयिणां चैवं सुराणां च क्रमेण च ॥ चतुर्मुखस्य तान्दृष्ट्वा दर्पभंगो बभूव ह ॥ ७० ॥ आत्मानं विष्णुसदृशं मन्यमानस्य दर्पतः ॥ अन्यान्न दर्शयामास ब्रह्मांडस्थान्विधीन्हरिः ॥ ७१ ॥ दृष्ट्वा च कृपया तत्र मृततुल्यं चतुर्मुखम् ॥ यावंति गात्रलो

णानि संति नारायणस्य मे ॥७२॥ तत्प्रमाणाश्च ब्रह्मांडा ब्रह्माणः संति सन्ततम् ॥ नारायणं प्रणम्याशु जग्मुस्ते स्वालयं प्रति ॥७३॥
स मेने विधिरात्मानमत्यल्पविषयाविषम् ॥ पप्रच्छ प्रणतं विष्णुर्लज्जानम्रचतुर्मुखम् ॥ ७४ ॥ वद तत्किमिदं दृष्टं स्वप्नवद्व
क्ताधुना ॥ नारायणवचः श्रुत्वा विधिरित्युक्तवांस्तदा ॥ ७५ ॥ भूतं भव्यं भविष्यं च तव मायासमुद्भवम् ॥ इत्येवमुक्त्वा स विधिस्त
स्थौ संसदि लज्जया ॥ सर्वांतर्यामी भगवांस्तस्योपायं विनिर्ममे ॥ ७६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे
नारायणनारदसंवादे मोहिनीशापब्रह्मदर्पभंगोनाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ एतस्मिन्नंतरे तत्र
शंकरः समुपास्थितः ॥ सस्मितो वृषभेन्द्रस्थो विभूतिभूषणः स्वयम् ॥ १ ॥ व्याघ्रचर्मांबरधरो नागयज्ञोपवीतकः ॥ स्वर्णाकारज
टाधारमर्धचन्द्रं च सन्दधत् ॥ २ ॥ त्रिशूलपट्टिशकरो बिभ्रत्खट्वाङ्गमुत्तमम् ॥ सद्रत्नसाररचितस्वरयंत्रकरो मुदा ॥ ३ ॥ वाहनादव
रुह्याशु भक्तिनम्रात्मकंधरः ॥ प्रणम्य कमलाकांतं वामे चोवास भक्तितः ॥४॥ आजग्मुर्मुनयः सर्वे सुराः शक्रादयस्तथा ॥ आदित्या
वसवो रुद्रा मनवः सिद्धचारणाः ॥ ५ ॥ पुलकांचितसर्वांगास्तुष्टुवुः पुरुषोत्तमम् ॥ प्रणम्य तं शिवं सर्वे सुराश्च नम्रकंधराः ॥ ६ ॥
एतस्मिन्नन्तरे तत्र संगीतं शंकरो जगौ ॥ कृत्वातीव सुतालं च स्वरयंत्रसमन्वितः ॥ ७ ॥ आवयोश्च गुणाख्यानं राससंबंधि सुन्द
रम् ॥ समयोचितरागेण मनोमोहनकारिणा ॥८॥ यत्र कण्ठैकतानेन चैकमानेन चारुणा ॥ पदभेदविरामेण गुरुणा लघुना क्रमात् ॥
॥ ९ ॥ गमकेनातिदीर्घेण मदेन मधुरेण च ॥ भवेतिदुर्लभं सृष्टं प्रीत्या स्वेन विनिर्मितम् ॥ १० ॥ पुलकांचितसर्वांगः साश्रुनेत्रः
पुनःपुनः ॥ तदेव श्रुतिमात्रेण मूर्च्छां प्रापुर्विचेतनाः ॥ ११ ॥ बभूवू रुद्ररूपाश्च मुनयः पुरतः प्रिये ॥ रुद्ररूपाः सुराः सर्वे विधातृह
रिपार्षदाः ॥ १२ ॥ नारायणश्च लक्ष्मीश्च गायकश्च शिवः स्वयम् ॥ जलपूर्णं च वैकुण्ठं दृष्ट्वा त्रस्तोहमीश्वरि ॥ १३ ॥ गत्वा मूर्तीर्वि
निर्माय सर्वाश्च तादृशीरिति ॥ तत्स्वरूपास्तदस्त्राश्च तत्स्ववाहनभूषणाः ॥ १४ ॥ तत्स्वभावास्तन्मनस्कास्तत्तद्विषयमानसाः ॥
स्थानं निर्माय परितो वैकुण्ठस्य चतुर्दिशि ॥ १५ ॥ तदधिष्ठातृदेवी च आजगाम स्वमालयम् ॥ शरीरजा सुराणां सा बभूव सुर

निम्नगा ॥ १६ ॥ मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा ॥ कोटिजन्मार्जितं पापं विविधं पापिनामहो ॥ १७ ॥ यस्याश्च स्पर्श वायोश्च संपर्केण विनश्यति ॥ किं वा न जाने प्राणेशि स्पर्शदर्शनयोः फलम् ॥१८॥ किमुत स्नानजन्यं च कथयामि निरूपणम् ॥ सर्वतीर्थात्परं पृथ्व्यां पुष्करं परिकीर्तितम् ॥ १९ ॥ वेदोक्तं च तदेवास्याः कलां नार्हति षोडशीम् ॥ भगीरथेन चानीता तेन भागीरथी स्मृता ॥ २० ॥ गामागता स्रोतसोंशाद्गंगा तेन प्रकीर्तिता ॥ जानुद्वारा पुरा दत्ता जह्नुनाऽऽपीय कोपतः ॥ २१ ॥ तस्य कन्यास्वरूपा सा जाह्नवी तेन कीर्तिता ॥ भीष्मः स्वयं वसुर्जातस्तस्यांशात्तेन भीष्मसूः ॥ २२ ॥ धाराभिस्तिसृभिः स्वर्गं पृथिवीमतलं तथा ॥ ममाज्ञया च गच्छंती तेन त्रिपथगामिनी ॥ २३ ॥ प्रधानधारया स्वर्गे सा च मंदाकिनी स्मृता ॥ योजनायुतविस्तीर्णा प्रस्थे च योजना स्मृता ॥ २४ ॥ क्षीरतुल्यजला शश्वदत्युत्तुंगतरंगिणी ॥ वैकुंठाद्ब्रह्मलोकं च ततः स्वर्गं समागता ॥ २५ ॥ स्वर्गाद्धिमाद्रिमार्गेण पृथिवीमागता मुदा ॥ सा धारालकनंदाख्या लवणोदेन मिश्रिता ॥ २६ ॥ शुद्धस्फटिकसंकाशा बहुवेगवती सती ॥ पापिनां पापशुष्कैधं दग्धुं पावकरूपिणी ॥ २७ ॥ अहो सागरवंशेभ्यो निर्वाणमुक्तिदायिनी ॥ वैकुंठगामिनी सा च सोपानरूपिणी वरा ॥ २८ ॥ अतोपि मृत्युसमये सतां पुण्यस्वरूपिणाम् ॥ आदौ पादौ च संन्यस्य मुखे तोयं प्रदीयते ॥ २९ ॥ गंगासोपानमारुह्य संतो यांति निरामयम् ॥ आब्रह्मलोकं संलंघ्य रथस्थाश्च निरापदः ॥ ३० ॥ दैवात्पुरा प्राक्तनेन मग्नं चेत्कृतपातकैः ॥ लोमप्रमाणवर्षं च मोदंते हरिमंदिरे ॥ ३१ ॥ ततो भोगो भवेत्तेषां निश्चितं पापपुण्ययोः ॥ अतिस्वल्पेन कालेन कालव्यूहं च बिभ्रताम् ॥ ३२ ॥ ततः पुण्यवतां गेहे लब्ध्वा जन्म च भारते ॥ संप्राप्य निश्चलां भक्तिं भवंति हरिरूपिणः ॥ ३३ ॥ मृतद्विजानां देहांश्च दैवाच्छूद्रा वहंति चेत् ॥ पदप्रमाणवर्षं च तेषां च नरके स्थितिः ॥३४॥ ततस्तेषां च साहाय्यं करोति हरिरूपिणी ॥ ददाति मुक्तिं तेभ्योपि क्रमेण च कृपामयी॥३५॥ जन्म पुण्यवतां गेहे कारयित्वा च भारते ॥ स्थलं ददाति वैकुंठे निश्चितं जन्मभिस्त्रिभिः ॥ ३६ ॥ यात्रां कृत्वा तु यः शुद्धो स्नातुं याति सुरेश्वरीम् ॥ पदप्रमाणवर्षं च वैकुंठे

मोदते ध्रुवम् ॥ ३७ ॥ गंगां प्राप्यानुषंगेण स्नाति चेत्समलो नरः ॥ मुच्यते सर्वपापेभ्यः पुनर्यदि न लिप्यते ॥ ३८ ॥ कलौ पंच
सहस्राब्दं स्थितिस्तस्याश्च भारते ॥ तस्यां च विद्यमानायां कः प्रभावः कलेरहो ॥ ३९ ॥ कलौ दशसहस्राणि वर्षाणि प्रतिमा मम॥
तिष्ठंति च पुराणानि प्रभावस्तत्र कः कलेः ॥ ४० ॥ अतलं याति या धारा सा च भोगवती स्मृता ॥ पयःफेननिभा शश्वदतिवेग
वती सदा ॥ ४१ ॥ आकरामूल्यरत्नानां मणींद्राणां च संततम् ॥ नागकन्याश्च यत्तीरे क्रीडंति स्थिरयौवनाः ॥ ४२ ॥ स्वयं देवी च
वैकुंठं वेष्टयित्वा च संततम् ॥ सहस्रयोजना प्रस्थे दैर्घ्ये च लक्षयोजना ॥ ४३ ॥ अस्या विनाशः प्रलये नास्त्येव दुहितुर्मम ॥
नानारत्नाकरं दिव्यं तत्तीरं सुमनोहरम् ॥ ४४ ॥ इत्येवं कथितं सर्वं जाह्नवीजन्म पुण्यदम् ॥ ब्रह्मणश्च प्रतीकारो मोहिनीशापतः
शृणु ॥ ४५ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे जाह्नवीजन्मप्रस्तावोनाम चतुस्त्रिंशोऽध्यायः ॥
॥ ३४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ नारायणश्च ब्रह्माणमुवाच कृपया पुनः ॥ दृष्ट्वा गंगां च सर्वे तां मम मायां च मेनिरे ॥ १ ॥
॥ ॥ श्रीनारायण उवाच ॥ ॥ उत्तिष्ठ गच्छ भद्रं ते भविष्यति चतुर्मुख ॥ अत्र स्नात्वाभिशापस्त्वं पूतो भव ममाज्ञया ॥२॥ त्वं चेतस
त्वं स्वयं पूतः स्पर्शं वांछंति तानि ते ॥ वैष्णवेशस्य तीर्थानि सर्वाणि सततं मुने ॥ ३ ॥ तथापि शापमुक्तस्त्वमत्र प्रकृतिहेलनात् ॥
अहंकारश्च सर्वेषां पापबीजममंगलम् ॥ ४ ॥ शीघ्रं त्वं गच्छ गोलोकं ममालयं परात्परम् ॥ प्रकृत्यंशां मंगलदां तत्र प्राप्स्यसि भार
तीम् ॥ ५ ॥ प्रकृतिं भज कल्याण सृष्टिबीजस्वरूपिणीम् ॥ अहो कल्पांतपर्यंतं तपस्तप्तं त्वयाधुना ॥ ६ ॥ तव मंत्रं न गृह्णंति केपि
वेश्याभिशापतः ॥ यदन्यदेवपूजायां तव पूजा भविष्यति ॥ ७ ॥ त्वमेव जगतां धाता स्वात्मारामश्च योषितः ॥ सर्वरूपी च पूजा
च सर्वदेहेषु सर्वतः ॥ ८ ॥ तदा ममाज्ञया ब्रह्मास्नात्वा च जाह्नवीजले ॥ शीघ्रं जगाम गोलोकं मां प्रणम्य जगद्गुरुः ॥ ९ ॥ ते
देवा मुनयः सर्वे प्रजग्मुः स्वालयं मुदा ॥ मुनिर्मलं मम यशो गायंतश्च पुनःपुनः ॥ १० ॥ विधिरागत्य गोलोकं संप्राप्य भारतीं
सतीम् ॥ सर्वविद्याधिदेवीं तां मद्वक्त्राब्जविनिर्मिताम् ॥ ११ ॥ वागीश्वरीं च संप्राप्य ब्रह्मा प्रमुदितः स्वयम् ॥ कामास्त्राणां च व्या

रमनुमेने स्वयं विभुः ॥ १२ ॥ तत आगत्य मां नत्वा प्राप्य त्रैलोक्यमोहिनीम् ॥ क्रीडां चकार भगवान्स्थानेस्थानेऽतिनिर्जने ॥१३॥ रतिं चिरतरं कृत्वा विरराम स्वयं विधिः ॥ वागीश्वरीमुवाचेदं त्वं वै ब्रह्मा च कर्मणा॥१४॥ काचित्स्वकर्मणा साध्वी पूजा च स्थिरयौवना ॥ तवैव कर्मयोगं च युवानं पश्य सुन्दरि ॥ १५ ॥ विदग्धाया विदग्धेन संगमो गुणवान्भवेत् ॥ जरातुरोऽहं वृद्धश्च तपस्वी वैष्णवो द्विजः ॥ १६ ॥ अस्वतंत्रः पराधीनः का रतिः पुंश्चलीषु मे ॥ आजगाम ब्रह्मलोकं पुनरेव निजालयम् ॥ १७ ॥ ददृशुर्ब्रह्मलोकस्थास्तां देवीं कौतुकान्विताः ॥ अतीव सुंदरीं रम्यां शुभ्रवर्णां च सस्मिताम् ॥ १८ ॥ शरच्छीतांशुवदनां शरत्पंकजलोचनाम् ॥ पक्वबिंबप्रभामुष्टदीप्तोष्ठाधरपल्लवाम् ॥ १९ ॥ मुक्तापंक्तिविनिंद्यैकदंतपंक्तिमनोहराम् ॥ रत्नकेयूरवलयरत्ननूपुरशोभिताम् ॥ २० ॥ रत्नकुंडलयुग्मेन कर्णमूलविराजिताम् ॥ रत्नेंद्रसारहारेण वक्षःस्थलसमुज्ज्वलाम् ॥ २१ ॥ वह्निशुद्धांशुकं सूक्ष्मं बिभ्रतीं नवयौवनाम् ॥ अतीव कमनीयां च पीनश्रोणिपयोधराम् ॥ २२ ॥ वीणापुस्तकहस्तां च व्याख्यामुद्राकरां वराम् ॥ ते च निर्मञ्छनं कृत्वा चक्रुः परममंगलम् ॥ २३ ॥ पुरीं प्रवेशयामासुर्ब्रह्माणं भारतीं मुदा ॥ ब्रह्मा तया सह क्रीडां चकार स दिवानिशम् ॥ २४ ॥ अतीव सुखसंभोगे निमग्नः सततं मुदा ॥ गूढं सर्वपुराणेषु किं पुनः श्रोतुमिच्छसि ॥ २५ ॥

॥ श्रीनारायण उवाच ॥

॥ प्राणेशवचनं श्रुत्वा प्रहस्य परमेश्वरी ॥ भूयोपि परिपप्रच्छ कौतुकान्मानसं पुरा ॥ २६ ॥

॥ श्रीराधिकोवाच ॥

॥ ब्रह्मा कथं न जग्राह वेश्यां स्वयमुपस्थिताम् ॥ न कर्मक्षेत्रे रहसि फलदाता च कर्मणाम् ॥ २७ ॥ उपस्थितायास्त्यागे च महान्दोषो हि योषितः ॥ ज्ञात्वा देवो विधाता स कथं तत्याज मोहिनीम् ॥ २८ ॥

॥ श्रीनारायण उवाच ॥

॥ राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ॥ पाद्मकल्पस्य वृत्तांतमुवाच परमेश्वरीम् ॥ २९ ॥

॥ श्रीकृष्ण उवाच ॥

॥ शृणु कांते प्रवक्ष्यामि पुरावृत्तांतमीप्सितम् ॥ अकथ्यं गोपनीयं च महतामभिनिंदितम् ॥ ३० ॥ एकदा च प्रजाः स्रष्टुं विधाता प्रेरितो मया ॥ ससर्ज मनसा पुत्रान्ज्वलतो ब्रह्मतेजसा ॥ ३१ ॥ सनकं च सनंदं च सनातनमनुत्तमम् ॥ सनत्कु

मारं वोढुं च कविं पंचशिखं विभुम् ॥ ३२ ॥ असितं कपिलं सिद्धं सिद्धान्मम कलोद्भवान् ॥ तान्ब्राह्मान्पंचवर्षीयान्पिता स्रष्टु जगा
द ह ॥ ३३ ॥ प्रजाः स्रष्टुं प्रेरकं च जनकं तेऽवमन्य च ॥ प्रजग्मुस्तपसे तूर्णं ममार्चनपरायणाः ॥ ३४ ॥ तदा रुष्टो जगद्धाता पुनः
पुत्रान्विनिर्ममे ॥ रुद्रानेकादश वरान्रुदतो भीमविग्रहान् ॥ ३५ ॥ तस्मिन्प्रयुज्य तरसा पुनः पुत्रान्विनिर्ममे ॥ योगी योगेन
मां ध्यात्वा स्वात्मारामः स्वविग्रहे ॥ ३६ ॥ वसिष्ठं पुलहं चैव क्रतुमंगिरसं तथा ॥ भृगुमत्रिं पुलस्त्यं च दक्षं कर्दममेव च ॥ ३७ ॥
मरीचिं च विनिर्माय प्रजाः स्रष्टुं नियुज्य च ॥ प्रहृष्टमानसः पुत्रं कन्यैकां च ससर्ज ह ॥ ३८ ॥ कृष्णस्य कामिनः पुत्रः काम
देवो बभूव ह ॥ कन्या षोडशवर्षीया रत्नभूषणभूषिता ॥ ३९ ॥ उवाच पुत्रं स विधिः सुदीप्तं पुरतः स्थितम् ॥ दुर्निवार्यं मत्क
लांशं स्वात्मारामं मनोहरम् ॥ ४० ॥ ॥ ब्रह्मोवाच ॥ ॥ स्त्रीपुंसोः क्रीडनार्थाय मुदा त्वं च विनिर्मितः ॥ हृष्टियोगेन सर्वे
षामधिष्ठानं करिष्यसि ॥ ४१ ॥ संमोहनं समुद्वेगं बीजस्तंभितकारणम् ॥ उन्मत्तबीजं ज्वलदं शश्वच्चेतनहारकम् ॥ ४२ ॥ प्रगृ
ह्येतान्मया दत्तान्सर्वान्संमोहनं कुरु ॥ दुर्निवार्यो मम वराद्भव वत्स भवेषु च ॥ ४३ ॥ बाणान्दत्त्वैवमुक्त्वा च प्रहृष्टश्च जग
द्विधिः ॥ हृष्टोवाच दुहितरं वरं दातुं समुद्यतः ॥ ४४ ॥ एतस्मिन्नंतरे कामो मनसालोच्य मंत्रणाम् ॥ कर्तुं शस्त्रपरीक्षां च बाणां
श्चिक्षेप ब्रह्मणि ॥ ४५ ॥ मंत्रपूतैश्च बाणैश्च दुर्वार्यैः स्मरणेन च ॥ अतिविद्धो महायोगी मूर्छितो हतचेतनः ॥ ४६ ॥ क्षणेन चेतनां
प्राप्य ददर्शाग्रे च कन्यकाम् ॥ तां संभोक्तुं मनश्चक्रे सा दुद्राव भिया सती ॥ ४७ ॥ दृष्ट्वा पश्चाच्च पितरं धावंतं हतचेतनम् ॥
जगाम शरणं शीघ्रं भ्रातॄणां च तपस्विनाम् ॥ ४८ ॥ ते तां समीपे संस्थाप्य तमूचुः पितरं क्रुधा ॥ हितं तथ्यं च वेदोक्तं नीतिसारं
परं वचः ॥ ४९ ॥ ॥ ऋषय ऊचुः ॥ ॥ अहो किमेतज्जनक कर्म तेऽतिविगर्हितम् ॥ नीचानां चरितं यत्तत्करोषि त्वं
जगद्विधे ॥ ५० ॥ पश्यंति सततं संतः प्रसूमिव परस्त्रियम् ॥ ये ते सर्वत्र पूज्याश्च परत्रेह जितेंद्रियाः ॥ ५१ ॥ त्वं स्वयं वेदकर्ता
च कन्यां संभोक्तुमिच्छसि ॥ कन्या च मातृवर्गेषु प्रविष्टा च श्रुतौ श्रुता ॥५२ ॥ गुरोः पत्नी राजपत्नी विप्रपत्नी च या

सती ॥ पत्नी च भ्रातृसुतयोर्मित्रपत्नी च तत्प्रसूः ॥ ५३ ॥ प्रसूः पित्रोस्तथा भ्रातुः पत्नी श्वश्रूः स्वकन्यकाः ॥ जननी तत्सपत्नी च भगिनी सुरभी तथा ॥ ५४ ॥ स्वामीष्टसुरपत्नी च धात्रिकान्नप्रदायिका ॥ गर्भधात्री स्वनाम्ना च भयात्त्रातुश्च कामिनी ॥ ५५ ॥ एता वेदप्रणीताश्च सर्वेषां मातरः स्मृताः ॥ एतास्वपि च सर्वासु न्यूनता नास्ति कासु च ॥ ५६ ॥ कन्यादातान्नदाता च ज्ञानदाताभयप्रदः ॥ जन्मदो मंत्रदो ज्येष्ठभ्राता च पितरः स्मृताः ॥ ५७ ॥ एता वहंति ये मूढा य एताञ्जनकानपि ॥ पच्यंते नरके ते च यावद्वै ब्रह्मणो वयः ॥ ५८ ॥ तानंधकूपे संस्थाप्य दूरतो यमकिंकराः ॥ कुर्वंति ताडनं शश्वत्पुरीषं पाययंति च ॥ ५९ ॥ त्वमेव विश्वकर्ता च शास्ता वै शमनस्य च ॥ स्वयं विधाता जगतां तेन गृह्णासि कन्यकाम् ॥ ६० ॥ अस्माकं पुरतो दूरं गच्छ कामार्तमानस ॥ न कुर्मो भस्मसात्कर्तुं शक्ताश्च जनकं वयम् ॥ ६१ ॥ गुरोर्दोषसहस्राणि क्षंतुमर्हंति पंडिताः ॥ सर्वघ्नं तं विनिघ्नंति नीतिज्ञाः स्वगुरुं विना ॥ ६२ ॥ गृह्णंतं यदि सर्वस्वं शपंतं निष्ठुरं गुरुम् ॥ साधवस्तं न निंदंति प्रणमंति स्वभक्तितः ॥ ६३ ॥ ये द्विषंति च निंदंति गुरुमिष्टं सुरात्परम् ॥ पच्यंते तेंऽधकूपे च यावच्चंद्रदिवाकरौ ॥ ६४ ॥ पुरीषं भुंजते नित्यं क्षुभिता यमताडनैः ॥ सर्पप्रमाणकीटैश्च दंशिताश्च दिवानिशम् ॥ ६५ ॥ इत्येवमुक्त्वा मुनयः प्रणेमुस्तत्पदांबुजम् ॥ सर्वं भवति दैवेन प्रशांतमनसा ध्रुवम् ॥ ६६ ॥ उन्मुखा मुनयः सर्वे बभूवुश्च स्वकर्मणि ॥ ब्रह्मा शरीरं संत्यक्तुं व्रीडया च समुद्यतः ॥६७॥ योगेन भित्त्वा षट्चक्रं सर्वान्प्राणान्निरुध्य च ॥ ब्रह्मरंध्रं समानीय तत्याज स्वेन वर्त्मना ॥६८॥ मनसा श्रीहरिं स्मृत्वा नमस्कारं चकार ह ॥ न मे मनः परद्रव्ये भविता स्तोकमीश्वर ॥६९॥ प्राणत्यागात्परं दुःखमयशश्च यशस्विनाम् ॥ बभूव हृदि कृत्वैकं ब्रह्मा लीनश्च ब्रह्मणि ॥ ॥ ७० ॥ कन्या तातं मृतं दृष्ट्वा विलप्य च भृशं मुहुः ॥ योगेन देहं तत्याज सा प्रलीना च ब्रह्मणि ॥७१॥ मृतं तातं च भगिनीं दृष्ट्वा च मुनिपुंगवाः ॥ सस्मरुः श्रीहरिं कोपात्स्वात्मारामं विलप्य च ॥७२॥ नारायणो मंदशश्च कृपयागत्य सत्वरम् ॥ ब्रह्माणं जीवयामास ब्रह्मज्ञानात्सुतां च ताम् ॥७३॥ ब्रह्मा पुरो हरिं दृष्ट्वा वरं वव्रे स्म वांछितम् ॥ भक्तिं त्वच्चरणे शश्वन्निश्चलामनपायिनीम् ॥७४॥ ब्रह्माणं

विरसं दृष्ट्वा तमुवाच कृपानिधिः ॥ प्रबोधवचनं सत्यं नीतिसारं मनोहरम् ॥ ७५ ॥ ॥ श्रीनारायण उवाच ॥ ॥ शृणु ब्रह्म
न्प्रवक्ष्येऽहं सुखसुत्तोल्य सांप्रतम् ॥ त्यज लज्जां जगन्नाथ हृदयज्वररूपिणीम् ॥ ७६ ॥ सत्कीर्तिरपकीर्तिर्वा सुप्रतिष्ठाप्युपद्रवः ॥
क्षुद्राणां चैव महतां भवत्येव स्वकर्मणा ॥७७॥ सर्वेषामपि सर्वेभ्यः स्वकर्म बलवत्तरम् ॥ तस्मात्संतः प्रकुर्वंति नित्यं सत्कर्म संततम्
॥ ७८ ॥ केचित्कुर्वंति निर्मूलं सर्वेषामपि कर्मणाम् ॥ कृतं कर्म परं भुक्त्वा हरिपादाब्जचेतसः ॥ ७९ ॥ कुकर्मणश्चापकीर्तिस्ततो
लज्जा भवेद्ध्रुवम् ॥ सुकर्मणः सुप्रतिष्ठा सर्वत्र निर्मलं यशः ॥ ८० ॥ कालेन रजसा देहो बलं रूपं शुभाशुभम् ॥ कीर्तिर्या त्रिगुणा
चैव मोहश्चापयशो विधे ॥ ८१ ॥ ऋणव्रणापवादाश्च जंतूनां यांति कालतः ॥ महतां तौ च पूर्वोक्तौ नेतरश्च कदाचन ॥ ८२ ॥
सदापकीर्तिर्वसति परस्त्रीषु च वस्तुषु ॥ तस्मात्ते नैव गृह्णंति संतः स्वक्लेशकारणे ॥ ८३ ॥ स्मर मामंतरे ब्राह्मे मदीयं विषयं कुरु ॥
अतस्ते न मनो लोलं भविता परवस्तुषु ॥ ८४ ॥ योषिद्रूपा च मे माया सर्वेषां मोहकारिणी ॥ लीलया कुरुते मोहं स्वात्मारामस्य
संततम् ॥८५॥ नानासुद्राश्रये देशे रागिणां संततं रतिः ॥ स्तनाभिधे मांसपिंडेऽधरे लालालयेऽशुचौ ॥८६॥ श्रोणिवक्त्रस्तनं तासा
कामदेवालयं सदा ॥ तस्मात्ते न हि पश्यंति संतो हि धर्मभीरवः ॥८७॥ को धर्मः किं यशस्तेषां का प्रतिष्ठा च किं तपः ॥ किं बुद्धि
र्विद्या दानं च परस्त्रीषु च यन्मनः ॥ ८८ ॥ इहाप्यपयशो दुःखं नरकेषु परत्र च ॥ वासः प्रहारस्तेषां च ताडनैः कृमिभक्षणैः
॥ ८९ ॥ दुःखबीजं सुखं मत्वा मूढाश्च दैवदोषतः ॥ परस्त्रीसेवनं प्रीत्या कुर्वंति संततं मुदा ॥ ९० ॥ उत्तमा मत्पदांभोजं सत्कर्म
मध्यमाः सदा ॥ स्मरंति शश्वदधमाः परस्त्रीसेवनं मुदा ॥ ९१ ॥ विपत्तिः संततं तस्य परवस्तुषु यन्मनः ॥ विशेषतः परस्त्रीषु
सुवर्णेषु च भूमिषु ॥ ९२ ॥ दैवात्परस्त्रियं दृष्ट्वा विरमेद्यो हरिं स्मरन् ॥ दृष्ट्वा परसुवर्णं च हस्तप्रक्षालनाच्छुचिः ॥ ९३ ॥ सततं नैव
संसक्ताः संतः स्वस्त्रीषु कामतः ॥ यक्ष्मव्याधिज्ञानहानिलोकनिंदाभयेन च ॥ ९४ ॥ तपस्विनस्तपस्यायां शास्त्रचिंतासु पंडिताः ॥
योगिनो योगचिंतासु वेदार्थेषु च वैदिकाः ॥ ९५ ॥ साध्व्यश्च पतिसेवासु गृहस्था गृहकर्मसु ॥ विषयेषु विषयिणो मद्भक्ता मम सेव

ते ॥ ९६ ॥ एते नियुक्ता एतेषु सभासु च प्रशंसिताः ॥ वेदोक्ताचरणेनैव तद्विरुद्धेन निंदिताः ॥ ९७ ॥ सर्वे नित्यं प्रशंसंति शश्वत्स
न्मार्गगामिनम् ॥ डालिका अपि निंदंति कुवर्त्मगामिनं विधे ॥ ९८ ॥ भविता न परस्त्रीषु परवस्तुषु ते मनः ॥ अद्यप्रभृति जीवं
तं निविष्टं मद्वरेण च ॥ ९९ ॥ मदीयविषये बाह्ये मया दत्तं कुरु प्रियम् ॥ अंतरा मत्पदांभोजचिन्तां विघ्नविनाशिनीम् ॥ १०० ॥
कन्या भवतु मे ब्रह्मन्कामदेवस्य कामिनी ॥ रतिर्नाम परित्याज्या रत्यधिष्ठातृदेवता ॥ १ ॥ इत्येवमुक्त्वा ब्रह्माणमाश्वास्य कमला
पतिः ॥ जगाम नित्यं वैकुंठं वृंदावनविनोदनः ॥ १०२ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे
राधाकृष्णसंवादोनाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ श्रीराधिकोवाच ॥ ॥ एतेन नियमेनैव ब्रह्मा तत्याज मोहिनीम् ॥ कथं
स कुलटाशापादपूज्यः संबभूव ह ॥ १ ॥ कथं तस्य दर्पभंगं चकार कमलापतिः ॥ कथयस्व सर्वबीजं सर्वेषामीश्वरः स्वयम् ॥ २ ॥
॥ ॥ श्रीनारायण उवाच ॥ ॥ रासेश्वरीवचः श्रुत्वा प्रहस्य रसिकेश्वरः ॥ निगूढमितिहासं च तां वक्तुमुपचक्रमे ॥ ३ ॥
॥ ॥ श्रीकृष्ण उवाच ॥ ॥ ब्रह्मा चिरं तपस्तप्त्वा मत्तो लब्ध्वा वरं वरम् ॥ सृष्टिं नानाविधां कृत्वा विधाता स बभूव ह ॥ ४ ॥
तपसां फलदाता च सर्वेषां शास्तिकृत्प्रभुः ॥ आत्मानमीश्वरं ज्ञात्वा महागर्वो बभूव ह ॥ ५ ॥ ब्रह्मांडेषु च सर्वेषु गर्वपर्यंतमुन्नतिः ॥
इति मत्वा ब्रह्मणश्च दर्पभंगः कृतो मया ॥ ६ ॥ येषां येषां भवेद्दर्पो ब्रह्मांडेषु परात्परः ॥ विज्ञाय सर्वं सर्वात्मा तेषां शास्ताहमेव च
॥ ७ ॥ प्रथमे ब्रह्मणो गर्वो मया चूर्णीकृतः श्रुतः ॥ शंकरस्य च पार्वत्याश्चंद्रस्य च रवेस्तथा ॥ ८ ॥ वह्नेर्दुर्वाससश्चैव तथा धन्वंतरेः
प्रिये ॥ क्रमेण दर्पभंगं च कथयामि निशामय ॥ ९ ॥ क्षुद्राणां महतां चैव येषां गर्वो भवेत्प्रिये ॥ एवंविधमहं तेषां चूर्णीभूतं करोमि
च ॥ १० ॥ ॥ श्रीनारायण उवाच ॥ ॥ श्रीकृष्णस्य वचः श्रुत्वा शुष्ककंठोष्ठतालुका ॥ पप्रच्छ राधा यत्नेन संत्रस्ता भय
विह्वला ॥ ११ ॥ ॥ श्रीराधिकोवाच ॥ ॥ कस्य केन प्रभावेण महादर्पो बभूव ह ॥ त्वया केन प्रभावेण तस्य भंगः कृतः
पुरा ॥ १२ ॥ कथयस्व प्राणनाथ सर्वेषां दर्पभंजन ॥ दर्पदो भयदः प्राणदानेककारणेश्वर ॥ १३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥

येन भूतं गर्वचूर्णं श्रुतं त्रिजगतां विधेः ॥ अन्यच्च श्रूयतां राधे व्यासेन कथयामि ते ॥ १४ ॥ स्वयं शिवो महेशश्च संहर्ता जगतां च
यः ॥ तेजसा मत्समः पूर्णो ज्ञानेन च गुणेन च ॥ १५ ॥ ध्यायंति योगिनो यं स योगींद्राणां गुरोर्गुरुः ॥ ज्ञानानंदस्वरूपोऽयं तस्या
ख्यानं शृणु प्रिये ॥१६॥ युगषष्टिसहस्राणि तपस्तप्त्वा दिवानिशम् ॥ भूत्वा च मत्कलापूर्णो बभूव मत्समो विभुः ॥१७॥ तपसा तेजसा
च्चैतत्तेजोराशिर्बभूव ह ॥ सूर्यकोटिप्रभावश्च भक्तानां कल्पपादपः ॥१८॥ ध्यायंध्यायं च योगींद्रास्तत्तेजो बहुकालतः ॥ तदंतरे च
पश्यंति स्वरूपमतिसुन्दरम् ॥ १९ ॥ शुद्धस्फटिकसंकाशं पंचवक्त्रं त्रिलोचनम् ॥ त्रिशूलपट्टिशकरं व्याघ्रचर्मांबरं वरम् ॥ २० ॥ जपंतं
स्वात्मनात्मानं श्वेताब्जबीजमालया ॥ ईषद्धास्यप्रसन्नास्यं चंद्रचूडं परात्परम् ॥ २१ ॥ स्वर्णाकारं जटाभारं दधतं शिरसा मुदा ॥
शांतं कांतं त्रिजगतां भक्तानुग्रहकातरम् ॥ २२ ॥ अथ स्वमीश्वरं मत्वा प्रदाता सर्वसंपदाम् ॥ ददाति सर्वं सर्वेभ्यो वांछितं कल्पपा
दपः ॥२३॥ यो यं वांछति तं तस्मै वरं दत्त्वा वरेश्वरः ॥ बभूव गर्वसंयुक्तः स्वात्मारामः स्वलीलया ॥ २४ ॥ एकदा च वृको दैत्यस्त
पस्तेपे शिवस्य च ॥ केदारे च कठोरेण वर्षमेकं दिवानिशम् ॥ २५ ॥ नित्यं याति तत्समीपं कृपया च कृपानिधिः ॥ वरं दातुं
यथाभीष्टं न जग्राहासुरो वरम् ॥ २६ ॥ वर्षांते शंकरः शश्वत्तस्थौ तत्पुरतः स्वयम् ॥ वरदो भक्तिपाशेन क्षणं गंतुं न स क्षमः
॥ २७ ॥ सर्वैश्वर्यं सर्वसिद्धिं भुक्तिं मुक्तिं हरेः पदम् ॥ दैत्यः किंचिन्न गृह्णाति परितः शूलपाणिनः ॥ २८ ॥ ध्यायमानं तत्पदाब्जं
दृष्ट्वा त्रस्तो महेश्वरः ॥ अयाचितारं निश्चेष्टं रुरोद प्रेमविह्वलः ॥ २९ ॥ अतीव रोदनात्तस्य ध्यानभंगो बभूव ह ॥ ददर्श पुरतः
साक्षाद्दातारं सर्वसंपदाम् ॥ ३० ॥ यन्मायया वरं वव्रे दैत्येंद्रो भक्तिपूर्वकम् ॥ हस्तं दधे च यन्मूर्ध्नि स भस्म भवितेति च ॥ ३१ ॥
ओमित्युक्त्वा प्रयांतं तं दुद्राव दैत्यपुंगवः ॥ मृत्युंजयो मृत्युभयाद्दुद्राव त्रासविह्वलः ॥ ३२ ॥ पपात डमरुस्तस्य व्याघ्रचर्म मनो
हरम् ॥ दिगंबरो दशादिशो भेजे दानवभीतये ॥ ३३ ॥ न हंति तं च कृपया भक्तं च भक्तवत्सलः ॥ दुष्टानुसारं साधुश्च न करोति
कदाचन ॥ ३४ ॥ साधवो भ्रंति भ्रंतं च भृत्यं पुत्रं प्रियां विना ॥ प्रबोधितुं न शक्तश्च स्वात्मानं कृपया समम् ॥ ३५ ॥ शिवः स्वप्र

तं मत्वा च भीतश्च निरहंकृतः ॥ स्मारंस्मारं च मां भद्रे मामेव शरणं ययौ ॥ ३६ ॥ दृष्ट्वा स्वाश्रममायांतं शुष्ककंठोष्ठतालुकम् ॥ हे हरे रक्ष रक्षेति जपंतं भयविह्वलम् ॥ ३७ ॥ संस्थाप्य तत्समीपे च स दैत्यो बोधितो मया ॥ पृष्टश्च सर्ववृत्तांतमुवाच मां क्रमेण च ॥ ३८ ॥ तदा ममाज्ञया तूर्णं वंचितो माययासुरः ॥ दत्त्वा स्वमूर्ध्नि हस्तं च सद्यो भस्म बभूव ह ॥ ३९ ॥ तदा सिद्धाः सुरेंद्राश्च मुनींद्रा मनवो मुदा ॥ तुष्टुवुर्मां सुभक्त्या च लज्जया लज्जितः शिवः ॥ ४० ॥ बभूव चूर्णस्तद्गर्वो जगाम बोधितो मया ॥ वरं ददाति वरदस्ततो बोध्यो ह्यहं शिवः ॥ ४१ ॥ अथ गर्वान्वितो रुद्रो हंतुं त्रिपुरमुल्बणम् ॥ मत्वा मनसि संहर्ता सर्वेषां जगतामिति ॥ ४२ ॥ कोऽयं पतंगवद्दैत्य इति मत्वा ययौ रणम् ॥ विहाय शूलं मद्दत्तं मदीयकवचं परम् ॥ ४३ ॥ चिरं बभूव समरं वर्षमेकं दिवानिशम् ॥ न कोपि जेतुं कं शक्तो द्वौ समौ समरे तदा ॥ ४४ ॥ पृथिव्यां चरणं कृत्वा दैत्येंद्रो मायया प्रिये ॥ अत्यूर्ध्वं च समुत्तस्थौ पंचाशत्कोटियोजनम् ॥ ४५ ॥ उत्तस्थौ शंकरस्तूर्णं हंतुं दैत्यं जगत्प्रभुः ॥ बभूव तत्र युद्धं च मासमेकं निराश्रये ॥ ४६ ॥ अस्त्राणि चापं चिच्छेद शंकरस्यासुरो बली ॥ रथं बभंज दैत्येंद्रश्चापमस्त्राणि शंकरात् ॥ ४७ ॥ जघान मुष्टिना रुद्रो दानवेंद्रं प्रकोपतः ॥ वज्रमुष्टिप्रहारेण सद्यो मूर्च्छामवाप सः ॥ ४८ ॥ क्षणेन चेतनां प्राप्य कोपाद्दानवपुंगवः ॥ शिवं शयानमुत्तोल्य पातयामास भूतले ॥ ४९ ॥ सरथे पातिते रुद्रे देवा देवर्षयो भिया ॥ तुष्टुवुर्मां परित्राहि कृष्णेत्युक्त्वा पुनःपुनः ॥ ५० ॥ हरः सस्मार मामेव निर्भयो भयकारणम् ॥ तुष्टाव भक्त्या स्तोत्रेण मया दत्तेन संकटे ॥ ५१ ॥ तदाहं कलया शीघ्रं वृषरूपं विधाय च ॥ शयानं शंकरं धृत्वा विषाणाभ्यामुरुक्रमम् ॥ ५२ ॥ ददौ तस्मै स्वकवचं स्वशूलमरिमर्दनम् ॥ प्राप्य तद्दानवस्थानमत्यूर्ध्वं च निराश्रयम् ॥ ५३ ॥ मया दत्तेन शूलेन जघान त्रिपुरं हरः ॥ मामेव दर्पहंतारं तुष्टाव व्रीडितः पुनः ॥ ५४ ॥ सद्यः पपात दैत्येंद्रश्चूर्णीभूतश्च भूतले ॥ देवता मुनयः सर्वे तुष्टुवुः शंकरं मुदा ॥ ५५ ॥ तत्याज शंकरो दर्पं विघ्नबीजं ततो विभुः ॥ ज्ञानानंदस्वरूपश्च निर्लिप्तः सर्वकर्मसु ॥ ५६ ॥ ततोहं वृषरूपेण वहामि तेन तं प्रियम् ॥ मम प्रियतमो नास्ति त्रैलोक्येषु शिवात्परः ॥ ५७ ॥

मनःस्वरूपो ब्रह्मा मे ज्ञानरूपो महेश्वरः ॥ बुद्धिर्भगवती दुर्गा मूलप्रकृतिरीश्वरी ॥ ५८ ॥ निद्रादयः शक्तयो यास्ताः सर्वाः प्रकृतेः कलाः ॥ वागधिष्ठातृदेवी या सा स्वयं च सरस्वती ॥५९॥ मम कल्याणाधिदेवो हर्षरूपो गणेश्वरः ॥ परमार्थः स्वयं धर्मो मम भक्तो हुताशनः ॥ ६० ॥ सर्वैश्वर्याधिदेवी मे सर्वगोलोकवासिनः ॥ प्राणाधिष्ठातृदेवी त्वं सदा प्राणाधिका मम ॥ ६१ ॥ गोपांगनास्तव कला अत एव मम प्रियाः ॥ मल्लोमकूपजा गोपाः सर्वे गोलोकवासिनः ॥ ६२ ॥ तेजःस्वरूपः सूर्यश्च प्राणा मे वायवः स्मृताः ॥ जलाधिदेवो वरुणः पृथिवी मे मलोद्भवा ॥ ६३ ॥ मम शून्यो महाकाशो मदनो मानसोद्भवः ॥ इंद्रादयः सुराः सर्वे मत्कलांशांशसंभवाः ॥ ६४ ॥ एतानि सृष्टिबीजानि महदादीनि चैव हि ॥ सर्वेषां बीजरूपोऽहं स्वयमात्मा निराश्रयः ॥६५॥ जीवो मे प्रतिबिंबश्च कर्मभोगाधिकारकः ॥ अहं साक्षी निरीहश्च न भोगी सर्वकर्मसु ॥ ६६ ॥ भक्तध्यानार्थदेहोयं मम स्वेच्छामयस्य च ॥ प्रकृतिः पुरुषोऽहं च एक एव परात्परः ॥ ६७ ॥ इत्येवं कथितं राधे शिवदर्पविमोचनम् ॥ सृष्टिबीजं च शृणु मे पार्वतीदर्पमोचनम् ॥ ६८ ॥ ॥ ॥ श्रीनारायण उवाच ॥ ॥ इत्युक्तवंतं श्रीकृष्णं परमात्मानमीश्वरम् ॥ पप्रच्छ राधिका देवी निगूढमभिवांछितम् ॥६९॥ ॥ श्रीराधिकोवाच ॥ ॥ भगवन्सर्वतत्त्वज्ञ सर्वबीज सनातन ॥ वद मे वांछितं प्रश्नं सर्वसंदेहभंजनम् ॥७०॥ सर्वज्ञानाधिदेवश्च शंकरः सर्वतत्त्ववित् ॥ मृत्युंजयः कालकालो भगवांस्त्वत्समो महान् ॥ ७१ ॥ कथं विभूतिगात्रश्च पंचवक्त्रस्त्रिलोचनः ॥ दिगंबरो जटाधारी नागसंघातभूषणः ॥ ७२ ॥ वृषेणाटति देवेंद्रो विहाय वरवाहनम् ॥ न बिभर्ति कथं रत्नं सारनिर्माणभूषणम् ॥७३॥ वह्निशुद्धांशुकं त्यक्त्वा धत्ते शार्दूलचर्मकम् ॥ धत्ते धत्तूरकुसुमं पारिजातं विहाय च ॥७४॥ नास्ति रत्नकिरीटेच्छा जटायां प्रीतिरुत्तमा ॥ दिव्यलोकं परित्यज्य श्मशानेषु स्पृहा विभोः ॥ ७५ ॥ चंदनागुरुकस्तूरीसुगंधिकुसुमानि च ॥ त्यक्त्वा स्पृहा बिल्वपत्रे बिल्वकाष्ठानुलेपने ॥७६॥ एतद्वेदितुमिच्छामि व्यासेन कथय प्रभो ॥ श्रोतुं कौतूहलं नाथ वर्द्धते मे मनःस्पृहा ॥ ७७ ॥ राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ॥ कथां कथितुमारेभे कृत्वा राधां स्ववक्षसि ॥७८॥ ॥ श्रीकृष्ण उवाच ॥ ॥ युगषष्टिसहस्राणि तपः कृत्वा महेश्वरः ॥ विरराम

पूर्णतमो ध्यात्वा मां मनसा मुदा ॥ ७९ ॥ एतस्मिन्नंतरे मां च ददर्श पुरतः स्थितम् ॥ अतीव कमनीयांगं किशोरं श्यामसुंदरम् ॥ ८० ॥ अहोनिर्वचनीयं च दृष्ट्वा रूपमनुत्तमम् ॥ न बभूव वितृष्णश्च लोचनाभ्यां त्रिलोचनः ॥८१॥ पश्यन्निमेषरहित इति मत्वा स्वमानसे ॥ भक्त्युद्रेकान्महाभक्तो रुरोद प्रेमविह्वलः ॥ ८२ ॥ सहस्रवदनोऽनंतो भाग्यवांश्च चतुर्मुखः ॥ बहुभिर्लोचनैर्दृष्ट्वा तुष्टाव बहुभिर्मुखैः ॥ ८३ ॥ पश्यामि किं वा किं स्तौमि संप्राप्य नाथमीदृशम् ॥ आस्यैकेन लोचनाभ्यां चतुर्द्धा स पुनःपुनः ॥ ८४ ॥ स्व मानसे कुर्वतीदं शंकरे च तपस्विनि ॥ तद्बभूव चतुर्वक्त्रं पूर्वेण सह पंचमम् ॥ ८५ ॥ एकैकवक्त्रं शुशुभे लोचनैश्च त्रिभिस्त्रिभिः ॥ बभूव तेन तन्नाम पंचवक्त्रस्त्रिलोचनः ॥ ८६ ॥ स्तवनादधिकप्रीतिः शिवस्य दर्शने मम ॥ तेनाधिकानि तस्यैवं बभूवुर्लोचनानि च ॥ ॥ ८७ ॥ चक्षूंषि गुणरूपाणि तस्य ब्रह्मस्वरूपिणः ॥ सत्त्वं रजस्तम इति तस्य हेतुं निशामय ॥ ८८ ॥ सत्त्वांशेन दृशा शंभुः पश्यन्पाति च सात्त्विकान् ॥ राजसेन राजसिकांस्तामसेन च तामसान् ॥ ८९ ॥ चक्षुषस्तामसात्पश्चाल्ललाटस्थाद्धरस्य च ॥ संहार काले संहर्तुरग्निराविर्भवेत्क्रुधा ॥ ९० ॥ कोटितालप्रमाणश्च सूर्यकोटिसमप्रभः ॥ लेलिहानो दीर्घशिखस्त्रैलोक्यं दग्धुमीश्वरः ॥ ९१ ॥ विभूतिगात्रः स विभुः सतीसंस्कारभस्मना ॥ धत्ते तस्या अस्थिमालां प्रेमभावेन भस्म च ॥ ९२ ॥ स्वात्मारामो यद्यपीशस्तथापि पूर्णमब्दकम् ॥ सतीशवं गृहीत्वा च भ्रामंभ्रामं रुरोद ह ॥ ९३ ॥ प्रत्यंगं चापि तस्याश्च पपात यत्र यत्र ह ॥ सिद्धपीठस्तत्र तत्र बभूव मंत्रसिद्धिकृत् ॥ ९४ ॥ तदा शवावशेषं च कृत्वा वक्षसि शंकरः ॥ पपात मूर्च्छितो भूत्वा सिद्धिक्षेत्रे च राधिके ॥ ९५ ॥ तदा गत्वा महेशं तं कृत्वा क्रोडे प्रबोध्य च ॥ अददां दिव्यतत्त्वं च तस्मै शोकहरं परम् ॥ ९६ ॥ तदा शिवश्च संतुष्टः स्वं लोकं च जगाम ह ॥ मृत्यंतरेण कालेन तां संप्राप प्रियां सतीम् ॥ ९७ ॥ दिव्यस्रग्धारियोगेन नेच्छा नित्ये परे विभोः ॥ जटां तपस्याकालीनां धत्तेद्यापि विवेकतः ॥ ९८ ॥ न चेच्छा केशसंस्कारे स्वांगवेषेण योगिनः ॥ समता चंदने पंके लोष्टे रत्ने मणीश्वरे ॥ ९९ ॥ गरुडद्वेषिणो नागाः शंकरं शरणं ययुः ॥ बिभर्ति कृपया स्वांगे तानेव शरणागतान् ॥ १०० ॥ वाहनं वृषरूपोऽहमन्यस्तं वोढुमक्षमः ॥ त्रिपु

स्य वधे पूर्वं मत्कलांशसमुद्भवः ॥१॥ पारिजातादिकं पुष्पं सुगंधिचंदनादिकम् ॥ मयि संन्यस्य तेष्वेवं प्रीतिर्नास्ति कदाचन ॥२॥
धत्तूरे तत्सदा प्रीतिर्बिल्वपत्रानुलेपने ॥ गंधहीने सुगंधे च योगीष्टे व्याघ्रचर्मणि ॥३॥ दिव्यलोके दिव्यतल्पे जनतायां न तन्मनः ॥
श्मशानेऽतीव रहसि ध्यायते मामहर्निशम् ॥४॥ आब्रह्मस्तंबपर्यंतं समं च मन्यते शिवः ॥ ममानिर्वचनीयेऽत्र रूपे तन्मग्नमानसम् ॥५॥
ब्रह्मणःपतनेनापि शूलपाणेः क्षणो भवेत् ॥ तस्यायुषः प्रमाणं च नाहं जानामि का श्रुतिः ॥६॥ ज्ञानं मृत्युंजयः शूलं धत्ते मत्तेजसा
समम् ॥ विना मया न कश्चित्तं शंकरं जेतुमीश्वरः ॥ ७ ॥ शंकरः परमात्मा मे प्राणेभ्योऽपि परः शिवः ॥ त्र्यंबके मन्मनः शश्वन्न
प्रियो मे भवात्परः ॥ ८ ॥ ब्रह्मांडनिकरं छन्नं मया मन्मायया सदा ॥ स कंपति हरं शश्वन्न च तं मोहितुं क्षमः ॥ ९ ॥ न संवसामि
गोलोके वैकुंठे तत्र वक्षसि ॥ सदा शिवस्य हृदये निबद्धः प्रेमपाशतः ॥ ११० ॥ स्वरसिद्धं सुतानेन पंचवक्त्रेण शंकरः ॥ शश्वद्गायति
मद्गाथां तेनाहं तत्समीपतः ॥ ११ ॥ स्रष्टुं शक्तो हि नष्टुं च भ्रूभंगलीलयापि यः ॥ ब्रह्मांडनिकरं योगान्न योगी शंकरात्परः ॥ १२ ॥
दिव्यज्ञानेन यः स्रष्टुं नष्टुं भ्रूभंगलीलया ॥ मृत्युं कालादिकं शक्तो न ज्ञानी शंकरात्परः ॥ १३ ॥ मम भक्तिं च दास्यं च मुक्तिं च
सर्वसंपदः ॥ सर्वसिद्धिं दातुमीशो न दाता शंकरात्परः ॥१४॥ पंचवक्त्रेण मन्नाम योहि गायत्यहर्निशम् ॥ मद्रूपं ध्यायते शश्वन्न भक्तः
शंकरात्परः ॥ १५ ॥ अहं सुदर्शनं शंभुस्तेजसा च वयं समाः ॥ ब्रह्मा स्रष्टा च योगेन नास्माभिस्तेजसा समः ॥१६॥ इत्येवं कथितं
सर्वं शंकरस्य यशोऽमलम् ॥ तथाप्यस्य दर्पभंगं किं भूयः श्रोतुमिच्छसि ॥ ११७ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे
नारायणनारदसंवादे श्रीकृष्णकृतशंकरप्रशंसानाम षट्त्रिंशोऽध्यायः ॥३६॥ ॥ श्रीराधिकोवाच ॥ ॥ एवंभूतस्य च विभोः सर्वेशस्य
महात्मनः ॥ न शस्तं कथमुच्छिष्टं ब्रूहि संदेहभंजन ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु देवि प्रवक्ष्येऽहमितिहासं पुरातनम् ॥
पापेंधनानां दहने ज्वलदग्निशिखोपमम् ॥२॥ सनत्कुमारो वैकुंठमेकदा च जगाम ह ॥ ददर्श भुक्तवंतं च नाथं नारायणं द्विजः ॥३॥
तुष्टाव गूढैः स्तोत्रैश्च प्रणम्य भक्तितो मुदा ॥ अवशेषं ददौ तस्मै संतुष्टो भक्तवत्सलः ॥ ४ ॥ प्राप्तमात्रेण तत्रैव भुक्तं तेनैव किंचन ॥

किंचिद्दत्त्वा बधूनां भक्षणाय च दुर्लभम् ॥५॥ सिद्धाश्रमे च यद्दत्तं गुरवे शूलपाणिने ॥ भक्त्युद्रेकाच्च तत्सर्वं भुक्तं च प्रीतिमात्रतः॥६॥
भुक्त्वा सुदुर्लभं वस्तु ननर्त प्रेमविह्वलः ॥ पुलकांकितसर्वांगः साश्रुनेत्रो मुदान्वितः ॥ ७ ॥ गायन्मम गुणान्भक्त्या सुकंठः पंचव
क्त्रः ॥ रागभेदैकतानेन तालमानेन सुंदरम् ॥ ८ ॥ पपात डमरुर्हस्ताच्छृंगं च व्याघ्रचर्म च ॥ स्वयं निपत्य पश्चाच्च रुदन्मूर्च्छाम
वाप ह ॥ ९ ॥ अतीव कमनीयं तद्रूपं ध्यात्वैकमानसः ॥ सहस्रदलमध्यस्थं मां पश्यन्हृत्सरोरुहे ॥ १० ॥ एतस्मिन्नंतरे देवी दुर्गा
दुर्गार्तिनाशिनी ॥ मुदाजगाम शीघ्रं तत्प्रसन्नवदनेक्षणा ॥ ११ ॥ रुदंतं मूर्च्छितं दृष्ट्वा निपतंतं च भक्तितः ॥ प्रहस्य वार्तां
पप्रच्छ कुमारं शूलपाणिनः ॥ १२ ॥ सर्वं तां कथयामास कुमारः संपुटांजलिः ॥ श्रुत्वा चुकोप सा देवी शिवं प्रस्फुरिताधरा ॥
॥ १३ ॥ तां शप्तुमुद्यतां देवीमुत्थाय च त्रिलोचनः ॥ बोधयामास विविधं तुष्टाव संपुटांजलिः ॥ १४ ॥ श्रुत्वा मनोहरं स्तोत्रं न
शशाप शिवं शिवा ॥ दुष्टं चक्रे तदुच्छिष्टमभक्ष्यं विदुषामपि ॥ १५ ॥ न लोकानां प्रभावश्च तपःसौभाग्यतेजसाम् ॥ ब्रह्मांडे
सर्वसंहर्ता चकंपे पार्वतीभये ॥ १६ ॥ उवाच तं जगन्माता नीतिसारं परं वचः ॥ गणप्रसूः सकोपा च रक्तपंकजलोचना ॥ १७ ॥
अहो तपःप्रभावश्च तेजसश्च न जीविनाम् ॥ स ब्रह्मांडस्य संहर्ता चकंपे शैलकन्यका ॥ १८ ॥ ॥ पार्वत्युवाच ॥ ॥ त्वं पोष्टा
जगतां पाता ममैव च विशेषतः ॥ वक्ता चतुर्णां वेदानां जनकश्च स्वयं विभुः ॥ १९ ॥ मुक्तिप्रदाता भक्तानां दाता च सर्वसंपदाम् ॥
त्वं चेत्करोषि दुर्नीतिं को वा धर्मं च पाति वै ॥ २० ॥ सदा ते परिपाल्याहं पोष्या भक्त्या च किंकरी ॥ वंचिता कर्मदोषेण हरनि
र्माल्यभक्षणे ॥ २१ ॥ किंचिच्छुद्धं हिरण्येन किंचिद्वस्तु च वायुना ॥ किंचित्प्रक्षालनेनैव सर्वं विष्णोर्निवेदनात् ॥ २२ ॥ विष्णो
र्निवेदितान्नेन यष्टव्याः सर्वदेवताः ॥ पितरोऽतिथयश्चैवमिति वेदेषु निश्चितम् ॥ २३ ॥ अनिवेद्यमभक्ष्यं च नैवेद्यमुदरे हरेः ॥
त्यक्त्वा करोति यो भक्त्या पार्षदप्रवरो भवेत् ॥ २४ ॥ अमृतं सर्ववस्तूनामिष्टसारं सुदुर्लभम् ॥ विष्णोर्निवेदितान्नस्य कलां नार्हति
षोडशीम् ॥ २५ ॥ हंत्यकालिकमृत्युं तदमृतं मूढरंजनम् ॥ नैवेद्यं च हरेरेव हरितुल्यं करोत्यहो ॥ २६ ॥ यदृच्छया तं नैवेद्यं यो

भुंक्ते साधुसंगतः ॥ षष्टिवर्षसहस्राणां प्राप्नोति तपसः फलम् ॥ २७ ॥ यो निवेद्य हरिं भुंक्ते भक्त्या भक्तश्च नित्यशः ॥ किं वा तपस्यां कर्ता च स हरेस्तेजसा समः ॥ २८ ॥ श्रुतं पुरा त्वन्मुखतः पुष्करे मुनिसंसदि ॥ अहं वेदविधाता न किमहं वक्तुमीश्वरी ॥ ॥ २९ ॥ सुचिरं च तपस्तप्त्वा मया लब्धस्त्वमीश्वरः ॥ त्वया विष्णोः प्रसादेन वंचिताहं कथं प्रभो ॥ ३० ॥ यतो न दत्तं नैवेद्यं विष्णोर्मह्यं त्वयाधुना ॥ अतो मत्तो गृहाणैतत्फलमेव महेश्वर ॥ ३१ ॥ अद्य प्रभृति ये लोका नैवेद्यं भुंजते तव ॥ ते जन्मैकं सारमेया भविष्यंत्येव भारते ॥ ३२ ॥ इत्युक्त्वा पार्वती माता रुरोद पुरतो विभोः ॥ दृष्टिः पपात तत्कंठे नीलकंठो बभूव ह ॥ ३३ ॥ तदा शिवः शिवां भक्त्या कृत्वा वक्षसि सादरम् ॥ तन्मानभंगं स्तोत्रेण विनयेन चकार ह ॥ ३४ ॥ करेण चक्षुषोर्नीरं संमृज्य च पुनःपुनः ॥ बोधयामास विविधैर्नीतिवाक्यैर्मनोहरैः ॥ ३५ ॥ परितुष्टा च सा देवी भर्तारं समुवाच ह ॥ कलेवरं च त्यक्ष्यामि नैवेद्येन विना हरेः ॥ ३६ ॥ बिभर्ति देहं सततं तव सौभाग्यवर्द्धनम् ॥ कथं वहामि सौभाग्यरहितं च कलेवरम् ॥ ३७ ॥ अपूर्वं तव नैवेद्यं जन्ममृत्युजराहरम् ॥ कृतं दुष्टं च यत्तस्मात्पश्य देहं त्यजामि च ॥ ३८ ॥ लिंगोपरि च यद्दत्तं तदेवाग्राह्यमीश्वर ॥ सुपवित्रं भवेत्तस्य विष्णोर्नैवेद्यमिश्रितम् ॥ ३९ ॥ इत्येवमुक्त्वा सा देवी देहं त्यक्तुं समुद्यता ॥ त्रस्तो हरस्तत्पुरतः स्तुत्वा च स्वीचकार ह ॥ ४० ॥ ॥ शंकर उवाच ॥ ॥ स्थिरा भव महादेवि चंडिके जगदंबिके ॥ ममापराधमखिलं क्षंतुमर्हसि सुंदरि ॥ ॥ ४१ ॥ मां भृत्यं तपसा क्रीतं कृपां कुरु ममोपरि ॥ ब्रह्मविष्णुमहेशानां बीजभूते सनातनि ॥ ४२ ॥ अहो गोलोकनाथस्य गुणातीतस्य निर्गुणे ॥ सर्वशक्तिस्वरूपे च सदैव सहचारिणि ॥ ४३ ॥ साकारे च निराकारे नित्ये स्वेच्छामये प्रिये ॥ कृपया तद्विभोरेव मम वक्षसि सांप्रतम् ॥ ४४ ॥ सर्वबीजस्वरूपे च महामाये मनोहरे ॥ सर्वसिद्धिप्रदे देवि मुक्तिदे कृष्णभक्तिदे ॥ ४५ ॥ इच्छेवं श्रीहरेः साक्षान्नाहं दातुमपि क्षमः ॥ तदा देहं परित्यज्य निर्गुणं व्रज निर्गुणे ॥ ४६ ॥ इत्येवमुक्त्वा पुरतस्तस्थौ च चंद्रशेखरः ॥ बभूव सुप्रसन्ना सा प्रणनाम हरं परम् ॥ ४७ ॥ इत्येवं पार्वतीस्तोत्रं शंकरेण कृतं पुरा ॥ यः पठेद्विपदा ग्रस्तः स

भयादेव मुच्यते ॥ ४८ ॥ मित्रभेदो भवेद्दूरं तत्संप्रीतिर्भवेत्पुरा ॥ पार्वती परितुष्टा च न त्यजेत्तस्य मंदिरम् ॥ ४९ ॥
॥ ॥ श्रीकृष्ण उवाच ॥ ॥ श्रुत्वा प्रतिज्ञां नाथस्य परितुष्टा बभूव सा ॥ जगाम स्वर्णदीं तूर्णं स्नानार्थं शंकराज्ञया ॥ ५० ॥
स्नात्वा संपूज्य भक्त्या च सुरभिष्टं च निर्गुणम् ॥ चकार प्रस्तुतं शीघ्रं मिष्टान्नं व्यंजनानि च ॥ ५१ ॥ शिवः स्नात्वा च संपूज्य
ब्रह्मज्योतिः सनातनम् ॥ तुष्टाव परया भक्त्या मामेव हृदयस्थितम् ॥ ५२ ॥ गत्वा सर्वमहं भुक्त्वा तस्मै दत्त्वाभिवांछितम् ॥
नैवेद्यं पार्वती लेभे तव मूलं समागता ॥ ५३ ॥ भुक्त्वावशेषं सा देवी सह भर्त्रा मुदान्विता ॥ तुष्टाव शंकरं भक्त्या प्रणनाम मुहु
र्मुहुः ॥ ५४ ॥ इत्येवं कथितं सर्वं त्वया पृष्टं सुरेश्वरि ॥ अभिशप्तं शंकरस्य निर्माल्यं येन हेतुना ॥ ५५ ॥ इति श्रीब्रह्मवैवर्त्ते
महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे हरनिर्माल्यशापप्रसंगोनाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ श्रीकृष्ण उवाच ॥
दर्पभंगः श्रुतो देवि शंकरस्य जगद्गुरोः ॥ अधुना श्रूयतां मत्तो दुर्गादर्पविमोचनम् ॥ १ ॥ तेजसा सर्वदेवानामाविर्भूय जगत्प्रसूः ॥
दधार कामिनीरूपं कमनीयं मनोहरम् ॥ २ ॥ निहत्य दानवेंद्रांश्च ररक्ष देवताकुलम् ॥ लेभे जन्म ततो देवी जठरे दक्षयोषितः
॥ ३ ॥ पिनाकपाणिं जग्राह सा देवी सुरसाधनम् ॥ शश्वत्परमभक्त्या च सिषेवे स्वामिनं सती ॥ ४ ॥ दक्षेण सार्द्धं देवेन बभूव
शिवशत्रुता ॥ निरर्थकं दैवयोगात्पुरा वै सुरसंसदि ॥ ५ ॥ दक्षश्चकार यज्ञं च तत आगत्य कोपतः ॥ सर्वान्विज्ञापयामास तत्रैव
शंकरं विना ॥ ६ ॥ सस्त्रीका देवताः सर्वा आजग्मुर्दक्षमंदिरम् ॥ सगणः शंकरः कोपान्नाजगामाभिमानतः ॥ ७ ॥ सती पतिं च
मोहेन बोधयामास यत्नतः ॥ न तं चालयितुं शक्ता बभूव चंचला स्वयम् ॥ ८ ॥ आजगाम पितुर्गेहं दर्पात्तस्य विनाज्ञया ॥
तस्य शापेन तस्याश्च दर्पभंगो बभूव ह ॥९॥ न हि संभाषणं चक्रे वाङ्मात्रेण पिता च ताम् ॥ श्रुत्वा च निंदां भर्तुश्च देहं तत्याज
मानतः ॥ १० ॥ एवं प्रिये निगदितं सतीदर्पविमोचनम् ॥ तस्या जन्मांतरं नित्यं दर्पभंगश्च श्रूयताम् ॥ ११ ॥ लेभे जन्म सती
शीघ्रं जठरे शैलयोषितः ॥ शिवस्तस्याश्चिताभस्म चास्थि जग्राह भक्तितः ॥ १२ ॥ चकार मालामस्थ्नां च भस्मना तनुलेप

मम ॥ स्मारंस्मारं सतीं प्रेम्णा भ्रामंभ्रामं पुनःपुनः ॥ १३ ॥ सुषाव मेना तां देवीमतीव सुमनोहराम् ॥ सृष्टौ विधातुस्तस्याश्च
सुषमा नास्ति कुत्र च ॥ १४ ॥ गुणप्रभूर्गुणान्सर्वान्सर्वरूपान्बिभर्त्ति सा ॥ सर्वाश्च देवपत्न्यस्तत्कलां नार्हंति षोडशीम् ॥ १५ ॥
बभूव वर्द्धमाना सा शुक्ले चंद्रकला यथा ॥ अतीव यौवनस्था च शैलगेहे दिनेदिने ॥ ॥ १६ ॥ बभूवाकाशवाणी च तां संबोध्य
जगत्प्रसूम् ॥ शिवे शिवं च तपसा कठोरेण लभेति च ॥ १७ ॥ विनेश्वरं न तपसा प्राप्ता हि गर्भसंभवम् ॥ प्रहस्य तस्थौ श्रुत्वेति सा
च यौवनगर्विता ॥ १८ ॥ मम जन्मांतरीयं च भस्मास्थि च बिभर्ति यः ॥ स मां प्रौढां कथं दृष्ट्वा न गृह्णात्यत्र जन्मनि
॥ १९ ॥ यो विदग्धश्च ब्रह्मांडं बभ्राम मम शोकतः ॥ स कथं मां न गृह्णाति दृष्ट्वा परमसुंदरीम् ॥ २० ॥ दक्षयज्ञं यो बभंज मम
हेतोः कृपानिधिः ॥ स कथं मां न गृह्णाति पत्नीं जन्मनिजन्मनि ॥ २१ ॥ या यस्य पत्नी यो यस्या भर्ता प्राक्तनतः पुरा ॥ कुतो
विश्वे तयोर्भेदो निषेको नान्यथा भवेत् ॥ २२ ॥ सर्वरूपगुणाधारं मत्वा स्वमतिमानतः ॥ न चकार तपः साध्वी न विज्ञाय तमी
श्वरम् ॥ २३ ॥ सुंदरीषु च सर्वासु मत्तो नास्त्येव सुंदरी ॥ हृदीति मत्वा गर्वेण न चकार तपः शिवा ॥ २४ ॥ रूपयौवनवेषाणां
पुमान्ग्राही स्वयोषिताम् ॥ शिवो मच्छ्रुतिमात्रेण मां गृह्णाति विना तपः ॥ २५ ॥ हृदीति मत्वा गिरिजा तस्थौ हिमगिरेर्गृहे ॥
शश्वत्सहचरीमध्ये क्रीडोन्मत्ता दिवानिशम् ॥ २६ ॥ एतस्मिन्नंतरे तूर्णं दूतः शैलेंद्रसंसदि ॥ उवाचागत्य मधुरं तत्पुरः संपुटां
जलिः ॥ २७ ॥ ॥ दूत उवाच ॥ ॥ उत्तिष्ठोत्तिष्ठ शैलेंद्र गच्छाक्षयवटांतिकम् ॥ आजगाम महादेवः सगणो वृषवाहनः॥
॥ २८ ॥ मधुपर्कादिकं दत्त्वा भक्तिनम्रात्मकंधरः ॥ पूजनं कुरु शैलेन्द्र देवेन्द्रं तमतींद्रियम् ॥ २९ ॥ सिद्धिस्वरूपं सिद्धेशं योगींद्रा
णां गुरोर्गुरुम् ॥ मृत्युंजयं कालकालं ब्रह्मज्योतिः सनातनम् ॥ ३० ॥ परमात्मस्वरूपं च सगुणं निर्गुणं विभुम् ॥ भक्तध्यानार्थम
मलं दधानं देहमीश्वरम् ॥ ३१ ॥ शैलो दूतवचः श्रुत्वा समुत्तस्थौ मुदान्वितः ॥ मधुपर्कादिकं नीत्वा जगाम शंकरांतिकम्
॥ ३२ ॥ देवी दूतवचः श्रुत्वा प्रसन्नवदनेक्षणा ॥ हृदीति मेने मद्धेतोराजगाम महेश्वरः ॥ ३३ ॥ चकार वेषमतुलं दधार वस्त्रमुत्त

मम् ॥ रत्नेंद्रसारालंकाराद्रत्नमालां मनोहराम् ॥ ३४ ॥ पारिजातप्रसूनानां मालां चंदनसंयुताम् ॥ चकार शंकरार्थं च मत्वा मालां मनोहराम् ॥ ३५ ॥ रत्नसिंहासनस्था सा ददर्श दर्पणे मुखम् ॥ कस्तूरीबिंदुना सार्द्धं सिंदूरबिंदुभूषितम् ॥ ३६ ॥ आरक्त नेत्रयुगलं निर्मलांजनसंयुतम् ॥ शरन्मध्याह्नममलं यथालिपंक्तिवेष्टितम् ॥३७॥ सुकोमलौष्ठयुगुलं तांबूलरागसंयुतम् ॥ अतीव सुंदरं रम्यपक्वबिंबफलं यथा ॥३८॥ रत्नकुंडलदीप्त्या च गंडस्थलविराजितम् ॥ सूर्योदयेन ज्वलितं सुमेरुशिखरं यथा ॥३९॥ अत्यनिर्वच नीयं च दंतपंक्तिमनोहरम् ॥ यथा मुक्तासमूहं च सजलं जलदागमे ॥४०॥ गजमुक्तासमायुक्तं सुचारुनासिकोत्तमम् ॥ सुशोभितं यथा मेरुं स्वर्णदीजलधारया ॥४१॥ मालतीमाल्यसंयुक्तकबरीभारसंयुतम् ॥ बकपंक्तिसुशोभाढ्यं नवीनं जलदं यथा ॥४२॥ तप्तकांचन वर्णाभं चारुवक्षःस्थलोज्ज्वलम् ॥ रत्नेंद्रसारहाराक्तं कस्तूरीकुंकुमान्वितम् ॥४३॥ चारुचंपकवर्णाभं स्तनयुग्मं मनोहरम् ॥ बदरीफ लतुल्यं च चारुपत्रकशोभितम् ॥ ४४ ॥ मध्यं मनोहरं क्षीणं निम्ननाभिस्थलोज्ज्वलम् ॥ अतीव सुंदरं रम्यमुदरं वर्तुलाकृति॥४५॥ रंभास्तंभविनिंद्यैकमूरुयुग्मं मनोहरम् ॥ कामालयं सुकठिनं निगूढं[1]शुकेन च ॥४६॥ स्थलपद्मप्रभामुष्टपदयुग्मं मनोहरम् ॥ रत्नपाश कसंयुक्तं सिद्धालक्तकभूषितम् ॥ ४७ ॥ दधतं रत्नमंजीरं राजहंसानुकारि च ॥ रत्नेंद्रसाराभरणं निर्मितं विश्वकर्मणा ॥ ४८ ॥ करं सुकोमलतरं सुंदरं कनकप्रभम् ॥ रत्नकंकणकेयूरशंखभूषणभूषितम् ॥ ४९ ॥ बिभ्रत्सद्रत्नमुकुरं लीलाकमलमुज्ज्वलम् ॥ रत्नांगुलीय मतुलं दधतं सुमनोहरम् ॥ ५० ॥ दृष्ट्वा स्वरूपमतुलं दध्यौ शंकरमीश्वरम् ॥ विशिष्य मनसा शश्वद्भर्तुश्चरणपंकजम् ॥ ५१ ॥ पितरं मातरं बंधुं साध्वीवर्गं सहोदरम् ॥ अंतरे सा न सस्मार किंचिदेव शिवं विना ॥ ५२ ॥ अथ शैलेश्वरस्तत्र ददर्श चंद्रशेख रम् ॥ स्वर्णदीपुलिनाद्रम्यादुत्पतंतं च सस्मितम् ॥ ५३ ॥ दधतं संस्कृतां मालां जपंतं मम नामकम् ॥ ततस्वर्णप्रभाजुष्टजटाराशि विराजितम् ॥ ५४ ॥ वृषभस्थं शूलपाणिं सर्वभूषणराजितम् ॥ नागयज्ञोपवीतं च सर्पभूषणभूषितम् ॥ ५५ ॥ शुद्धस्फटिकसंकाशं

1 सुकुटम्-इ० पा०।

व्याघ्रचर्मधरं परम् ॥ विभूतिभूषितांगं तमस्थिमालं दिगम्बरम् ॥ ५६ ॥ पंचवक्त्रं त्रिनयनं सूर्यकोटिसमप्रभम् ॥ ददर्श रुद्रान्परितो
ज्वलतो ब्रह्मतेजसा ॥ ५७ ॥ शिववामे महाकालं दक्षिणे नंदिकेश्वरम् ॥ भूतप्रेतपिशाचांश्च कूष्मांडान्ब्रह्मराक्षसान् ॥ ५८ ॥ वेता
लान्क्षेत्रपालांश्च भैरवान्भीमविक्रमान् ॥ सनकं च सनंदं च कुमारं च सनातनम् ॥ ५९ ॥ जैगीषव्यं देवलं च काणादं गौतमं
तथा ॥ पिप्पलादं कणखनं वोढुं पंचशिखं कठम् ॥ ६० ॥ ॥ जाजलिं करखं कर्णं लोमशं सूर्यवर्चसम् ॥ कात्यायनं पाणि
निं च शंखं दुर्वाससं ततः ॥ ६१ ॥ शातातपं पारिभद्रमष्टावक्रं मरुद्भवम् ॥ एतान्पुरोगमान्नत्वा प्रणनाम शिवं गिरिः ॥ ६२ ॥
मूर्ध्ना निपत्य भूमौ स दंडवत्संपुटांजलिः ॥ अथो अनल्पया भक्त्या धृत्वा तच्चरणांबुजम् ॥ ननाम चाश्रुनेत्रः स पुलकांचितवि
ग्रहः ॥ ६३ ॥ धर्मदत्तेन स्तोत्रेण तुष्टाव परमेश्वरम् ॥ तुष्टे ब्राह्मे दिनेऽतीते पुष्करे सूर्यपर्वणि ॥ ६४ ॥ ॥ हिमालय उवा
च ॥ ॥ त्वं ब्रह्मा सृष्टिकर्ता च त्वं विष्णुः परिपालकः ॥६५॥ त्वं शिवः शिवदोऽनंतः सर्वसंहारकारकः ॥ त्वमीश्वरो गुणातीतो
ज्योतीरूपः सनातनः ॥ ६६ ॥ प्रकृतः प्रकृतीशश्च प्राकृतः प्रकृतेः परः ॥ नानारूपविधाता त्वं भक्तानां ध्यानहेतवे ॥ येषु रूपेषु
यत्प्रीतिस्तत्तद्रूपं बिभर्षि च ॥६७॥ सूर्यस्त्वं सृष्टिजनक आधारः सर्वतेजसाम् ॥ सोमस्त्वं सस्यपाता च सततं शीतरश्मिना ॥६८॥
वायुस्त्वं वरुणस्त्वं च त्वमग्निः सर्वदाहकः ॥ इंद्रस्त्वं देवराजश्च कालो मृत्युर्यमस्तथा ॥ ६९ ॥ मृत्युंजयो मृत्युमृत्युः कालकालो
यमांतकः ॥ ७० ॥ वेदस्त्वं वेदकर्ता च वेदवेदांगपारगः ॥ विदुषां जनकस्त्वं च विद्वांश्च विदुषां गुरुः ॥ ७१ ॥ मंत्रस्त्वं हि जप
स्त्वं हि तपस्त्वं तत्फलप्रदः ॥ वाक् त्वं वागधिदेवी त्वं तत्कर्ता तद्गुरुः स्वयम् ॥७२॥ अहो सरस्वतीबीजं कस्त्वां स्तोतुमिहेश्वरः ॥
इत्येवमुक्त्वा शैलेंद्रस्तस्थौ धृत्वा पदांबुजम् ॥ ७३ ॥ तत्रोवास तमाबोध्य चावरुह्य वृषाच्छिवः ॥ स्तोत्रमेतन्महापुण्यं त्रिसंध्यं यः
पठेन्नरः ॥ ७४ ॥ मुच्यते सर्वपापेभ्यो भयेभ्यश्च भवार्णवे ॥ अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि ॥ ७५ ॥ भार्याहीनो लभेद्भार्यां

१ कचम्-इ०पा० । २ जाबालिम्-इ०पा० । ३ करथं कण्वम्-इ० पा० ।

सुशीलां सुमनोहराम् ॥ चिरकालगतं वस्तु लभते सहसा ध्रुवम् ॥ ७६ ॥ राज्यभ्रष्टो लभेद्राज्यं शंकरस्य प्रसादतः ॥ कारागारे श्मशाने च शत्रुग्रस्तेऽतिसंकटे ॥ ७७ ॥ गभीरेऽतिजलाकीर्णे भग्नपोते विषादने ॥ रणमध्ये महाभीते हिंस्रजंतुसमन्विते ॥ ७८ ॥ सर्वतो मुच्यते स्तुत्वा शंकरस्य प्रसादतः ॥ ७९ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे ऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ इति स्तुत्वा हिमगिरिर्वसतः शंकरस्य च ॥ उवास पुरतो दूरे लब्धाज्ञः सर्वसंमतः ॥ १ ॥ मधुपर्कादिकं तस्मै प्रददौ भक्तिपूर्वकम् ॥ मुनीन्संपूजयामास ततः शंकरपार्षदान् ॥ २ ॥ तदा तत्र समागत्य मेनका स्त्रीगणैः सह ॥ ददर्श वटमूलस्थं शंकरं चंद्रशेखरम् ॥ ३ ॥ ईषद्धास्यप्रसन्नास्यं वसंतं व्याघ्रचर्मणि ॥ मध्ये मुनिगणानां च ज्वलंतं ब्रह्मतेजसा ॥ ४ ॥ यथाकाशे तारकाणां द्विजराजं विराजितम् ॥ परमाह्लादकं रूपं कंदर्पकोटिसन्निभम् ॥५॥ विहाय वार्द्धकावस्थां दधतं नवयौवनम् ॥ अतीव सुंदरं रम्यं चित्तचोरं च योषिताम् ॥ ६ ॥ कामं कामातुराणां च सतीनां च सुतं यथा ॥ वैष्णवानां महाविष्णुं शैवानां च सदाशिवम् ॥ ७ ॥ शक्तिस्वरूपं शाक्तानां सौराणां सूर्यरूपिणम् ॥ कालस्वरूपं दुष्टानां शिष्टानां परिपालकम् ॥८॥ कालकालसमं मृत्योर्मृत्युमृत्युं भयानकम् ॥ व्याघ्रचर्मचारुवस्त्रं बभूव भस्मचंदनम् ॥९॥ सर्पाः सुंदरमाल्यानि कस्तूरी या विषप्रभा॥ जटा सुललिता चूडा चंद्रस्त्वलिकचंदनम् ॥ १० ॥ सुचार्वी मालतीमाला गंगाधारा मनोहरा ॥ अस्थिमाला रत्नमाला धत्तूरं चारुचंपकम् ॥११॥ एकीभूतं पंचवक्त्रं नेत्रयुग्माब्जशोभितम् ॥ शरत्पार्वणचंद्राभं प्रच्छाद्य दीप्तमुत्तमम् ॥ १२ ॥ बंधुजीवविनिंद्यैकमोष्ठाधरमनोहरम् ॥ श्वेतश्चंद्रो वृषेंद्रश्च भूताद्या नर्तका इव ॥१३॥ सद्यो व्यतिक्रमं सर्वं महेशस्य महेश्वरि ॥ दृष्ट्वैवं शिवरूपं च मेना तुष्टा बभूव ह ॥ १४ ॥ काश्चिन्निमेषरहिताः कामेन पुलकांचिताः ॥ अतिकामातुराः सत्यः प्रापुर्मूर्च्छां च काश्चन ॥ ॥ १५ ॥ काश्चिद्विनिंद्य कांतांश्च प्रशशंसुर्महेश्वरम् ॥ मनोरथेन मनसा समाश्लिष्यंति काश्चन ॥ १६ ॥ काचिन्मानसिकं कामा

 

त्कुर्वंती चुंबनं मुदा ॥ ध्रुवं कामं करिष्यामो वयं च कामसागरे ॥ १७ ॥ अस्माकमेवं भर्ता चेत्परत्रैव यशो भवेत् ॥ इहैवं किं करिष्यामो वयं कांते रतेरलम् ॥ १८ ॥ दृष्ट्वा तमेवं सुचिरमिति जल्पंति काश्चन ॥ काश्चिद्दृष्ट्वा शिवं किंचिन्मुखमाच्छाद्य वाससा ॥ १९ ॥ सस्मिता वक्रनयनाः पश्यंत्येवं पुनःपुनः ॥ वयं गृहं न यास्यामो यास्यामः शिवसन्निधिम् ॥ २० ॥ शरत्सुधांशुवदनं द्रक्ष्यामोऽहर्निशं मुदा ॥ संसारं न करिष्यामः प्रविशामो हुताशनम् ॥ २१ ॥ भविता नः शिवः स्वामीत्येवं जल्पंति काश्चन ॥ अहो पुण्यवती दुर्गा श्लाघ्यते जन्म भारते ॥ २२ ॥ यस्या अयं शिवः स्वामीत्येवं जल्पंति काश्चन ॥ मुदा मेना शिवं दृष्ट्वा गृहं ताभिर्जगाम ह ॥ २३ ॥ शिवं संपूज्य शैलेंद्रः प्रणम्य स्वगृहं ययौ ॥ कृत्वानुमानं रहसि गिरीशो मेनया सह ॥ २४ ॥ दुर्गां प्रस्थापयामास शिवाय शिवसन्निधिम् ॥ पार्वती सखिभिः सार्द्धं वेषं कृत्वा मनोहरम् ॥ २५ ॥ भावानुरक्ता हर्षेण जगाम शिवसंनिधिम् ॥ दृष्ट्वा शिवा शिवं शांतं प्रसन्नवदनेक्षणम् ॥ २६ ॥ सप्तप्रदक्षिणं कृत्वा सस्मिता प्रणनाम सा ॥ अनन्यभावं गुणिनम् परं ज्ञानिनां वरम् ॥ २७ ॥ सुंदरं लभ भर्तारं सुन्दरीत्याशिषं ददौ ॥ भविता तव सौभाग्यं शुभे स्वामिनि संततम् ॥ २८ ॥ पुत्रस्ते भविता साध्वि नारायणसमो गुणैः ॥ भविता ते परा पूजा त्रैलोक्ये जगदंबिके ॥ २९ ॥ ब्रह्मांडेषु च सर्वेषु सर्वेषां च परा भव ॥ सप्तप्रदक्षिणाः कृत्वा यतो भक्त्या त्वया नतम् ॥ ३० ॥ सप्तजन्मनि तुष्टोऽहं तत्फलं लभ सुन्दरि ॥ तीर्थे कांतेऽभीष्टदेवे गुरौ मंत्रे तथौषधे ॥ ३१ ॥ आस्था च यादृशी यासां सिद्धिस्तासां च तादृशी ॥ इत्युक्त्वा शंकरस्तूर्णं ब्रह्मज्योतिः परं च माम् ॥ ३२ ॥ दध्यौ योगासनं कृत्वा योगीशो व्याघ्रचर्मणि ॥ प्रक्षाल्य चरणौ देवी पपौ तच्चरणोदकम् ॥ ३३ ॥ चकार मार्जनं भक्त्या वह्निशौचेन वाससा ॥ रत्नसिंहासनं रम्यं विश्वकर्मादिनिर्मितम् ॥ ३४ ॥ अपूर्वं कांस्यपात्रस्थं नैवेद्यं प्रददौ किल ॥ अर्घ्यं मंदाकिनीतोयसंयुक्तं चरणे ददौ ॥३५॥ सुगंधिचंदनं चारु कस्तूरीकुंकुमान्वितम् ॥ प्रददौ मालतीमालां गले गरलसुंदरे ॥ ३६ ॥ भक्त्या पूजां 

१ च परत्र चयतो भवेत् ॥ इहैवैकं करिष्यामो वयं कान्तं रतौ रतम्—इ० पा०।

[illegible] पुष्पवृष्टिं च चक्रुः ॥ पीयूषं स्वर्णपात्रस्थं प्रददौ मधुरं मधु ॥ ३७ ॥ रत्नप्रदीपशतकं समंताद्धूपमुत्तमम् ॥ त्रैलोक्य
दुर्लभं वस्त्रं स्वर्णयज्ञोपवीतकम् ॥३८॥ सुगंधिशीततोयं च पानार्थं पार्वती ददौ ॥ अतीव सुन्दरं रम्यं रत्नसारेन्द्रभूषणम् ॥ ३९ ॥
दुर्लभां कामधेनुं च स्वर्णशृंगसमन्विताम् ॥ स्नानीयं तीर्थतोयं च तांबूलं च मनोहरम् ॥ ४० ॥ दत्त्वा षोडशोपचारं प्रणनाम
पुनःपुनः ॥ संपूज्य शूलिनं भक्त्या ययौ नित्यं पितुर्गृहम् ॥ ४१ ॥ शुश्रावाप्सरसां वक्त्राद्देवीमिंद्रो महेश्वरः ॥ श्रुत्वा वार्तां शुना
सीरो ननर्त हर्षसंयुतः ॥ ४२ ॥ दूतद्वारा कामदेवमानिनाय त्वरान्वितः ॥ इंद्राज्ञया कामदेवः प्रजगामामरावतीम् ॥ ४३ ॥ तूर्णं
प्रस्थापयामास तं च यत्र शिवः शिवा ॥ पंचसायकसंयुक्तो जगाम पंचसायकः ॥ ४४ ॥ प्रसन्नवदनः श्रीमान्यत्र शक्तियुतः शिवः ॥
गत्वा ददर्श मदनः शिवायुक्तं शिवं विभुम् ॥ ४५ ॥ शांतं त्रैलोक्यकांतं च प्रसन्नवदनेक्षणम् ॥ कामः स्थितोंतरिक्षे च धृत्वा च सशरं
धनुः ॥ ४६ ॥ चिक्षेपास्त्रं दुर्निवार्यममोघं शंकरे मुदा ॥ बभूवामोघमस्त्रं च मोघं तत्परमात्मनि ॥४७॥ आकाश इव निर्लिप्ते निर्लिप्ते
परमात्मनि ॥ मोघीभूते च शस्त्रे च भयमाप च मन्मथः ॥ ४८ ॥ चकंप पुरतः स्थित्वा दृष्ट्वा मृत्युंजयं विभुम् ॥ सस्मार त्रिदशा
न्कामः शक्रादीन्भयविह्वलः ॥ ४९ ॥ आययुर्देवताः सर्वाः शंभुकोपेन वेपिताः ॥ चक्रुः स्तुतिं च स्तोत्रेण शंकरं त्रिदशेश्वरम् ॥५०॥
कोपाग्निमुद्गिरंतं तं कपाललोचनाद्धरो ॥ स्तुतिं कुर्वत्सु देवेषु स वह्निः शंभुसंभवः ॥ ५१ ॥ जज्वालोर्ध्वशिखो दीप्तः प्रलयाग्निशिखो
पमः ॥ उत्पत्य गगने घूर्णन्निपत्य धरणीतले ॥ भ्रामं भ्रामं च परितः पपात मदनोपरि ॥ ५२ ॥ बभूव भस्मसात्कामः क्षणेन हर
कोपतः ॥ विषण्णा देवताः सर्वा नतवक्त्रा च पार्वती ॥५३॥ विललाप बहुतरं हरस्य पुरतो रतिः ॥ तुष्टुवुर्देवताः सर्वाः कंपिताश्चंद्रशे
खरम् ॥ ५४ ॥ रतिमूचुः सुराः सर्वे रुरुदुश्च मुहुर्मुहुः ॥ किंचिद्भस्म गृहीत्वा च रक्ष मातर्भयं त्यज ॥ ५५ ॥ वयं तं जीवयिष्यामो
लभिष्यसि प्रियं पुनः ॥ हरकोपापनयने सुप्रसन्ने दिने तथा ॥ ५६ ॥ दृष्ट्वा रतेर्विलापं च मूर्च्छां संप्राप पार्वती ॥ अतींद्रियं गुणातीतं
[illegible] ॥५७॥ रुदंतीं पार्वतीं त्यक्त्वा स्वस्थानं प्रययौ शिवः ॥ सद्यो बभूव तत्रैव पार्वतीदर्पमोक्षणम् ॥५८॥ रूपयौवनयो

मेवं तत्याज शैलकन्यका ॥ मुखं दर्शयितुं लज्जा तद्बभूव सखीगणे ॥ ५९ ॥ सुराश्च रविमाश्वास्य सर्वे जग्मुः स्वमंदिरम् ॥ प्रण
म्य दंडवद्रुद्रं शोकादुद्विग्नमानसाः ॥ ६० ॥ स्तुत्वा रुदित्वा शोकेन भयेन कामकामिनी ॥ कोपरक्तेक्षणं रुद्रं राधिके स्वालयं ययौ
॥ ६१ ॥ न जगाम पितुर्गेहं पार्वती सा तु लज्जया ॥ स्वालिभिर्वार्यमाणापि जगाम तपसे वनम् ॥ ६२ ॥ प्रजग्मुः सहचारिण्य
स्तत्पश्चाच्छोकविह्वलाः ॥ मातृभिर्वार्यमाणा सा स्वर्णदीतीरजं वनम् ॥ ६३ ॥ सुचिरं च तपस्तप्त्वा सा संप्राप त्रिलोचनम् ॥ रतिः
संप्राप मदनं शंकरस्य वरेण च ॥ ६४ ॥ इत्येवं कथितं सर्वं पार्वतीदर्पमोक्षणम् ॥ निगूढचरितं राधे किं भूयः श्रोतुमिच्छसि
॥ ६५ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ श्रीरा
धिकोवाच ॥ ॥ अहो विचित्रं चरितमपूर्वं किं श्रुतं विभो ॥ सुन्दरं श्रुतिपीयूषं निगूढं ज्ञानकारणम् ॥ १ ॥ न विशेषं समासं
च श्रुतं न व्यासमीप्सितम् ॥ अधुना श्रोतुमिच्छामि विस्तीर्णं कथय प्रभो ॥ २ ॥ किं किं तपः कठोरं च चकार पार्वती स्व
यम् ॥ कं कं वरं वा संप्राप्य कथमाप महेश्वरम् ॥ ३ ॥ रतिः केन प्रकारेण जीवयामास मन्मथम् ॥ पार्वतीशिवयोः कृष्ण विवाहं
वर्णय प्रभो ॥ ४ ॥ तयो रहसि संभोगं पापिनां पापमोचनम् ॥ कथ्यतां करुणासिंधो दुःखिनां दुःखमोचनम् ॥ ५ ॥ दंपतीविरहो
किंच कर्णज्वाला च योषितः ॥ श्रोतुं कौतूहलं कृष्ण पुनः संमेलनं तयोः ॥ ६ ॥ अग्निज्वाला विषज्वाला क्षमा सोढुं च योषि
तः ॥ दंपतीविरहज्वाला न श्रोतुं च क्षणं क्षमा ॥ ७ ॥ राधिकावचनं श्रुत्वा विस्मितश्चकिताननः ॥ विस्तीर्णं वक्तुमारेभे हृदयेन
विदूयता ॥ ८ ॥ दंपतीविरहोक्तिं च यां राधा श्रोतुमक्षमा ॥ विच्छेदे शतवर्षीये किमस्या भविता मम ॥ ९ ॥ इत्येवं मानसे
कृत्वा मायेशो माययान्वितः ॥ कृपासिंधुश्च कृपया कथां कथितुमुद्यतः ॥ १० ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ प्राणाधिके
राधिके त्वं श्रूयतां प्राणवल्लभे ॥ प्राणाधिदेवि प्राणेशि प्राणाधारे मनोहरे ॥ ११ ॥ वटमूलाद्गते रुद्रे पार्वती तपसे ययौ ॥ पुनःपुनः
स्वमात्रा च पित्रा च विनिवारिता ॥ १२ ॥ गत्वा सा स्वर्णदीतीरं स्नात्वा त्रिषवणं मुदा ॥ संदेशे च मया दत्तं जजाप तं मनुं मुदा ॥ १३ ॥

वर्षमेकं च संपूर्णमनाहारा स्वभक्तितः ॥ तस्वा तपः कठोरं च चकार जगदंबिका ॥ १४ ॥ ग्रीष्मे च परितो वह्निं प्रज्व
लंतं दिवानिशम् ॥ कृत्वा प्रतस्थौ तन्मध्ये संततं जपती मनुम् ॥१५॥ शश्वत्स्मशाने वर्षासु कृत्वा योगासनं शिवा ॥ शिलां दृष्ट्वा
च संसिक्तां बभूव जलधारया ॥ १६ ॥ शीते जलांतरे शश्वत्प्रतस्थौ भक्तिपूर्वकम् ॥ अनाहारा शरद्रौद्रनीहारासु दिशासु च ॥ १७॥
एवं कृत्वा परं वर्षमप्राप्य शंकरं सती ॥ शुचा कृत्वाग्निकुंडं च प्रवेष्टुं सा समुद्यता ॥१८॥ तामग्निकुंडं विशतीं तपसातिकृशां सतीम्॥
दृष्ट्वा शिवः कृपासिंधुः कृपया तां जगाम ह ॥ १९ ॥ अतीव वामनो बालो विप्ररूपी स्वतेजसा ॥ प्रज्वलन्मनसा हृष्टो दंडी छत्री
जटाधरः ॥ २० ॥ शुक्लयज्ञोपवीती च शुक्लवासाश्च सस्मितः ॥ श्वेताब्जबीजमालां च बिभ्रत्तिलकमुज्ज्वलम् ॥ २१ ॥ निर्जने
बालकं दृष्ट्वा स्निग्धा सापि जगाद ह ॥ तत्तेजसाति प्रच्छन्ना तत्याज च तपः स्वयम् ॥ २२ ॥ को भवानिति पप्रच्छ तं शिशुं पुरतः
स्थितम् ॥ मनसालिंगनं कर्तुमिच्छंती परमादरम् ॥ २३ ॥ श्रुत्वा शैलसुताप्रश्नं प्रहस्य परमेश्वरः ॥ उवाचातीव मधुरं कर्णपीयूषमी
श्वरीम् ॥ २४ ॥ ॥ शंकर उवाच ॥ ॥ इच्छागामी बटुरहं तपस्वी विप्रबालकः ॥ का त्वं कांतातिकांतारे तपश्चरसि सुन्दरि
॥ २५ ॥ वद कस्य कुले जाता कस्य कन्या च काभिधा ॥ तपसः फलदात्री त्वं कस्माद्धेतोस्तपस्तव ॥ २६ ॥ अहो वा तपसां
राशिः स्वयं मूर्तिमती सती ॥ तपो वा लोकशिक्षार्थं करोषि कमलेक्षणे ॥ २७ ॥ स्वयं तेजःस्वरूपा वा मूलप्रकृतिरीश्वरी ॥ वि
धाय भक्तध्यानार्थं विग्रहं भारते जनुः ॥ २८ ॥ किं वा त्रिलोके लक्ष्मीस्त्वं संपद्रूपा सनातनी ॥ रक्षां विधातुं जगतामागता धातु
रंतिके ॥ २९ ॥ किं वांबिका त्वं देवानां स्वयं मूर्तिमती सती ॥ सावित्री भारते जन्म स्वेच्छया लब्धुमागता ॥ ३० ॥ रागाधिष्ठा
तृदेवी वा स्वयं साक्षात्सरस्वती ॥ सर्वविद्याः प्रकटितुं स्वेच्छया जन्म भारते ॥ ३१ ॥ एतासु मध्ये का वा त्वं नाहं तार्कितुमीश्वरः ॥
या सा भवति कल्याणि परितुष्टा च मां भव ॥ ३२ ॥ सति त्वयि प्रसन्नायां प्रसन्नः परमेश्वरः ॥ पतिव्रतायां तुष्टायां तुष्टो नारा
यणः स्वयम् ॥ ३३ ॥ तुष्टे नारायणे देवे शश्वत्तुष्टं जगत्रयम् ॥ तरुमूलेषु सिक्तेषु शाखाः सिक्ता यथा प्रिये ॥ ३४ ॥ शिशोस्तद्व

एवं श्रुत्वा प्रहस्य परमेश्वरी ॥ उवाच वचनं चारु कर्णपीयूषमीश्वरी ॥ ३५ ॥ ॥ पार्वत्युवाच ॥ ॥ नाहं वेदप्रसूर्लक्ष्मीर्वाग
धिष्ठातृदेवता ॥ जन्म मे भारते वर्षे सांप्रतं शैलकन्यका ॥ ३६ ॥ पूर्वं जन्म दक्षगेहे सती शंकरकामिनी ॥ योगेन त्यक्तदेहाहं
तातभर्तृविनिंदया ॥ ३७ ॥ ॥ अत्र जन्मनि पुण्येन संप्राप्ते शंकरे द्विज ॥ मां त्यक्त्वा भस्मसात्कृत्वा मन्मथं स जगा
मह ॥ ३८ ॥ प्रयाते शंकरे तापाद्व्रीडयाहं पितुर्गृहात् ॥ आगमत्तपसे चित्तं ममेदं स्वर्णदीतटे ॥ ३९ ॥ तपः कृत्वा
कठोरं च सुचिरं प्राणवल्लभम् ॥ अप्राप्याग्निं प्रवेष्टुं च त्वां च दृष्ट्वा क्षणं स्थिता ॥ ४० ॥ गच्छ त्वं प्रविशाम्यग्नौ प्रलयाग्निशि
खोपमे ॥ कृत्वा स्वकामनां विप्र हरप्राप्तिमनीषितम् ॥ ४१ ॥ यत्र यत्र जनुर्लब्ध्वा लभिष्यामि शिवं परम् ॥ प्राणाधिकं प्रियं
कांतं विभुं जन्मनि जन्मनि ॥ ४२ ॥ सर्वा हि स्वप्रियं लब्धुं लभंति जन्म वांछितम् ॥ तज्जन्म पतिलाभार्थं सर्वासां च श्रुतौ
श्रुतम् ॥ ४३ ॥ प्राक्तनीयो हि यो भर्ता स तासां प्रतिजन्मनि ॥ या स्त्री येषां सुनियता सा तेषां जन्मजन्मनि ॥ ४४ ॥ तद्देहमिह
न प्राप्य कृत्वा घोरतरं तपः ॥ कृत्वाग्निकुंडे काम्यं च लभिष्यामि परत्र तम् ॥ ४५ ॥ इत्युक्त्वा पार्वती तत्र तत्पुरः प्रविवेश ह ॥
निषिध्यमाना पुरतो ब्राह्मणेन पुनःपुनः ॥ ४६ ॥ वह्निप्रवेशं कुर्वत्याः पार्वत्याः परमेश्वरि ॥ बभूव तपसा सद्यो वह्निश्चंदनवद्ध्रुवम् ॥
॥ ४७ ॥ क्षणं तदंतरे स्थित्वा चोत्पतंतीं शिवां शिवः ॥ पुनः प्रपच्छ सहसा वृंदावनविनोदिनि ॥ ४८ ॥ ॥ श्रीमहादेव उवाच ॥
अहो तपस्ते किं भद्रे न बुद्धं किंचिदेव हि ॥ न दग्धो वह्निना देहो न च प्राप्तो मनीषितः ॥ ४९ ॥ शिवं कल्याणरूपं च भर्ता
रं कर्तुमिच्छसि ॥ अविग्रहं पतिं कृत्वा किं वा ते वांछितं भवेत् ॥ ५० ॥ संहर्तारं च भर्तारं यदीच्छसि शुचिस्मिते ॥ कांतमिच्छंति
का वा स्त्री सर्वसंहारकारणम् ॥ ५१ ॥ मोक्षं वांछसि चेद्देवि कृत्वा कांतं स्वरूपिणम् ॥ सर्वमुक्तिप्रदा त्वं च तपस्या विफला तव ॥
॥ ५२ ॥ शिवश्च मंगले मोक्षे संहर्ता न च दृश्यते ॥ शिवशब्दस्य चान्योऽर्थो न हि वेदे निरूपितः ॥ ५३ ॥ तं च संहारकर्तारं
यदि वाञ्छसि सुंदरि ॥ लभिष्यसे रतं रुद्रं सर्वलोकभयंकरम् ॥ ५४ ॥ न भविष्यति मोक्षस्ते स्वाभीष्टं देवसेवनम् ॥ हरिस्मृतिर

मोक्षा च सर्वमंगलदा सदा ॥ ५५ ॥ शीघ्रं पितुर्गृहं गच्छ तत्र द्रक्ष्यसि शंकरम् ॥ ममाशिषा स्वतपसां फलेन च सुदुर्लभम् ॥ ५६ ॥
इत्युक्त्वा पार्वतीं विप्रस्तत्रैवांतरधीयत ॥ दुर्गा ययौ पितुर्गेहं महादेवेति वादिनी ॥ ५७ ॥ पार्वत्यागमनं श्रुत्वा मेनका च हिमालयः ॥
दिव्यं यानं पुरस्कृत्य प्रययौ हर्षविह्वलः ॥ ५८ ॥ संस्थाप्य मंगलघटान्राजवर्त्मनि राधिके ॥ चंदनागुरुकस्तूरीफलशाखासम
न्वितान् ॥ ५९ ॥ पट्टसूत्रसन्निबद्धरसालपल्लवान्वितैः ॥ परितः परितो रंभास्तंभवृंदसमन्विते ॥ ६० ॥ पतिपुत्रवतीयोषित्समूहै
र्दीपहस्तकैः ॥ पूर्णैर्लाजाधान्यदूर्वाफलपुष्पसमन्वितैः ॥ ६१ ॥ सुपुण्यैर्ब्राह्मणैश्चापि मुनिभिर्ब्रह्मचारिभिः ॥ नटीभिर्नर्तकीभिश्च गजेंद्रैः
परिशोभिते ॥ ६२ ॥ पुरोहितैश्च संयुक्तैः कुर्वद्भिर्मंगलध्वनिम् ॥ सुचारुमालतीमालाहस्तैः शस्तैः प्रशंसितैः ॥ ६३ ॥ नानाप्रकार
वाद्यैश्च शंखध्वनिसुनादितैः ॥ सिंदूररेणुभिश्चारुचंदनद्रवपंकिलम् ॥ ६४ ॥ प्रविश्य नगरं दुर्गा ददर्श पितरौ पुरः ॥ सुप्रसन्नौ प्रधा
वंतौ हर्षाश्रुपुलकान्वितौ ॥ ६५ ॥ प्रसन्नवदना देवी चालिभिः प्रणनाम तौ ॥ संयुज्याथाशिषं तौ च चक्रतुस्तां च वक्षसि ॥
॥ ६६ ॥ हे वत्से वत्सेत्युच्चार्य रुदंतौ प्रेमविह्वलौ ॥ तदा तां च रथे कृत्वा जग्मतुर्निजमंदिरम् ॥ ६७ ॥ स्त्रियो निर्मच्छनं चक्रुर्वि
प्रा युयुजुराशिषम् ॥ ब्राह्मणेभ्यश्च बंदिभ्यः पर्वतेंद्रो धनं ददौ ॥ ६८ ॥ मंगलं कारयामास पाठयामास छांदसम् ॥ एवं स्वकन्यया
सार्द्धं तस्थतुस्तौ स्वमंदिरे ॥ ६९ ॥ सुखेन वसतौ तौ हि हर्षनिर्भरमानसौ ॥ एकदा च तपः कर्तुं जगाम स्वर्णदीं गिरिः ॥ ७० ॥
मेनका कन्यया सार्द्धमुवास प्रांगणे मुदा ॥ एतस्मिन्नंतरे भिक्षुर्नर्तकश्च सुगायनः ॥ ७१ ॥ सहसैक आजगाम मेनकासन्निधिं मुदा ॥
शृंगवाद्यं वामहस्ते डमरुं दक्षिणे तथा ॥ ७२ ॥ कृत्वा विभूतिगात्रोऽतिवृद्धोतीव जरातुरः ॥ पृष्ठकंथो रक्तवासाः सुकंठोऽतिमनो
हरः ॥ ७३ ॥ जगौ मम गुणाख्यानं कृत्वा नृत्यं मनोहरम् ॥ वादयामास शृंगं च क्षणं डमरुकं तथा ॥ ७४ ॥ आजग्मुर्नागरा
बाला बालिका हर्षविह्वलाः ॥ वृद्धा युवानो युवतीसमूहो वृद्धयोषितः ॥ ७५ ॥ श्रुत्वा तु सुन्दरं गीतं सुतानस्वरसंयुतम् ॥ सहसा
मुमुहुः सर्वे तेन मूर्च्छामवाप्नुवन् ॥ ७६ ॥ मूर्च्छां संप्राप सा दुर्गा ददर्श हृदि शङ्करम् ॥ त्रिशूलपट्टिशकरं व्याघ्रचर्मांबरं परम् ॥ ७७ ॥

विभूतिभूषणं रम्यमस्थिमालां सुनिर्मलाम् ॥ ईषद्धास्यप्रसन्नास्यं सुप्रसन्नं त्रिलोचनम् ॥ ७८ ॥ मालाहस्तं पंचवक्त्रं नागयज्ञोपवीतकम् ॥ वरं वृणिवत्युक्तवंतं सुन्दरं चंद्रशेखरम् ॥ ७९ ॥ हृदयस्थं हरं दृष्ट्वा मनसा तं ननाम सा ॥ वरं वव्रे मानसे सा त्वं पतिर्मे भवेति च ॥ ८० ॥ एवं दत्त्वा शिवस्तस्यै चांतर्धानं चकार सः ॥ न दृष्ट्वा हृदि तं दुर्गा संप्राप्य चेतनां पुनः ॥ ८१ ॥ ददर्श चक्षुरुन्मील्य भिक्षुकं गायकं पुरः ॥ नृत्यसंगीततः सा तु भिक्षुकस्य च मेनका ॥ ८२ ॥ दातुं ययौ सा रत्नानि स्वर्णपात्रस्थितानि च ॥ भिक्षां ययाचे भिक्षुस्तां दुर्गां नान्यां गृहीतवान् ॥ ८३ ॥ पुनश्च नर्तनं कर्तुमुद्यतः कौतुकेन च ॥ मेना तद्वचनं श्रुत्वा चुकोप विस्मयं ययौ ॥ ८४ ॥ भिक्षुकं भर्त्सयामास बहिः कर्तुमुवाच तम् ॥ पत्नी त्रिलोकनाथस्य शिवस्य परमात्मनः ॥ ८५ ॥ याच्ञामिमां प्रकुर्वंतं दूरं कुरु सुभाषिणम् ॥ एतस्मिन्नंतरे तस्या गिरिः स्वालयमाययौ॥८६॥ ददर्श पुरतो भिक्षुं प्रांगणस्थं मनोहरम्॥ कृत्वा नारायणार्चां च गंगातीरे मनोहरे ॥ ८७ ॥ तन्मूर्तिध्यानविश्लेषशोकादुद्विग्नमानसः ॥ श्रुत्वा मेनामुखाद्वार्तां जहास च चुकोप सः ॥ ८८ ॥ आज्ञां चकार स्वचरं बहिः कर्तुं च भिक्षुकम् ॥ आकाशमिव दुःस्पर्शं प्रज्वलंतं स्वतेजसा ॥८९॥ न शशाक बहिः कर्तुं समीपं गंतुमक्षमः ॥ ददर्श भिक्षुकं शैलः क्षणं चारुचतुर्भुजम् ॥९०॥ किरीटिनं कुंडलिनं पीतांबरधरं परम् ॥ सुवेषं सुंदरश्याममीषद्धास्यं मनोहरम् ॥ ९१ ॥ चंदनोक्षितसर्वांगं भक्तानुग्रहकातरम् ॥ यद्यत्पुष्पं प्रदत्तं च पूजाकाले गदाभृते ॥ ९२ ॥ गात्रे शिरसि तत्सर्वं भिक्षुकस्य ददर्श ह ॥ धूपः प्रदीपो यो दत्तो नैवेद्यं वा मनोहरम् ॥ ९३ ॥ ददर्श शैलस्तत्सर्वं भिक्षुकस्य पुरः स्थितम् ॥ क्षणं ददर्श द्विभुजं विनोदमुरलीकरम् ॥ ९४ ॥ गोपवेषं किशोरं च सस्मितं श्यामसुंदरम् ॥ मयूरपिच्छचूडं च रत्नालंकारभूषितम् ॥ ॥ ९५ ॥ चंदनोक्षितसर्वांगं वनमालाविभूषितम् ॥ क्षणं ददर्श स्वच्छं च शंकरं चंद्रशेखरम् ॥ ९६ ॥ त्रिशूलपट्टिशकरं व्याघ्रचर्मांबरं परम् ॥ विभूतिगात्रममलमस्थिमालाविभूषितम् ॥ ९७ ॥ नागयज्ञोपवीतं च तप्तस्वर्णजटाधरम् ॥ डमरुशृंगहस्तं च सुप्रशस्तं मनोहरम् ॥ ९८ ॥ प्रजपंतं हरेर्नाम श्वेताब्जबीजमालया ॥ ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥ ९९ ॥ स्वतेजसा प्रज्वलंतं

पंचवक्त्रं त्रिलोचनम् ॥ क्षणं ददर्श जगतां स्रष्टारं च चतुर्मुखम् ॥ १०० ॥ जपंतं श्रीहरेर्नाम स्वच्छस्फटिकमालया ॥ क्षणं सूर्य स्वरूपं च ददर्श त्रिगुणात्मकम् ॥ १ ॥ ददर्श तमतीव्रं तु ज्वलंतं ब्रह्मतेजसा ॥ क्षणमग्निस्वरूपं च ज्वलंतमतितेजसा ॥ २ ॥ क्षणमाह्लादजनकं चंद्ररूपं ददर्श ह ॥ क्षणं तेजःस्वरूपं च निराकारं निरंजनम् ॥ ३ ॥ निर्लिप्तं च निरीहं च परमात्मस्वरूपिणम् ॥ एवं स्वेच्छामयं दृष्ट्वा नानारूपधरं परम् ॥ ४ ॥ हर्षाश्रुपुलकः शैलो दंडवत्प्रणनाम तम् ॥ भक्त्या प्रदक्षिणीकृत्य प्रणम्य च पुनः पुनः ॥ ५ ॥ समुत्पत्य हर्षयुक्तो ददर्श पुनरेव तम् ॥ वास्तवं भिक्षुकं दृष्ट्वा शैलेंद्रो विष्णुमायया ॥ ६ ॥ विसस्मार च तत्सर्वं नाना रूपधरं परम् ॥ भिक्षां ययाचे भिक्षुस्तं भिक्षास्थालीस्वपार्श्वकम् ॥ ७ ॥ रक्तांबरः शृंगवाद्यविचित्रडमरुः करे ॥ आदातुमुत्सुको दुर्गां नान्यां भिक्षुः कदाचन ॥ ८ ॥ न स्वीचकार शैलेंद्रो मोहितो विष्णुमायया ॥ भिक्षुः किंचिन्न जग्राह तत्रैवांतरधीयत ॥ ९ ॥ तदा बभूव ज्ञानं च मेनकाशैलयोः प्रिये ॥ अहो दृष्टो जगन्नाथ आवाभ्यां स्वप्नवद्दिने ॥ ११० ॥ आवां शिवो वंचयित्वा स्वस्थानं गतवान्विभुः ॥ तयोर्भक्तिं शिवे दृष्ट्वा सर्वे देवाश्च चिंतिताः ॥ ११ ॥ चक्रुः शक्रादयो युक्तिं सुमेरो रक्षणे भरात् ॥ एकांतभक्त्या शैलश्चेत्कन्यां तस्मै प्रदास्यति ॥ १२ ॥ ध्रुवं निर्वाणतां सद्यः संप्राप्नोत्येव भारते ॥ अनंतरत्नाधारश्चेत्पृथ्वीं त्यक्त्वा प्रयास्यति ॥ १३ ॥ रत्नगर्भाभिधा भूमेर्मिथ्यैव भविता ध्रुवम् ॥ स्थावरत्वं परित्यज्य दिव्यरूपं विधाय सः ॥ १४ ॥ कन्यां शूलभृते दत्त्वा विष्णुलोकं गमिष्यति ॥ नारायणस्य सारूप्यं भविष्यत्येव लीलया ॥ १५ ॥ संप्राप्य पार्षदत्वं च हरिदासो भविष्यति ॥ दशवा पीसमा कन्या दीयते ब्राह्मणाय ताम् ॥ १६ ॥ वेदज्ञाय पवित्राय चाप्रतिग्रहशालिने ॥ संध्यायज्ञवेदपाठकारिणे सत्यवादिने ॥ १७ ॥ अस्मै प्रदत्ता कन्या च दशवापीफलप्रदा ॥ त्रिसंध्याकारिणे सत्यवादिने गृहशालिने ॥ १८ ॥ वेदज्ञाय सुविप्राय दत्त्वा सुफलदा यिनीं ॥ परदारगृहीताय याजकाय द्विजातये ॥ १९ ॥ शठाय संध्याहीनाय वाप्यैकफलदा सुता ॥ सर्वसंध्यास्वगायत्रीविहीनाय शठाय च ॥ १२० ॥ वैश्योद्भवाय दत्ता या वाप्यर्द्धफलदा स्मृता ॥ पापिने शूद्रजाताय विप्रक्षत्रोद्भवाय च ॥ २१ ॥ दत्त्वा चांडाल

तुल्याय कन्या सा नरकप्रदा ॥ विष्णुभक्ताय विदुषे विप्राय सत्यवादिने ॥ २२ ॥ जितेंद्रियाय दत्ता या विंशद्वापीफलप्रदा ॥ षष्टि
वर्षसहस्राणि दिव्यरूपं विधाय च ॥ २३ ॥ एवंभूताय दत्ता चेन्मोदते विष्णुमंदिरे ॥ दत्त्वा कन्यां सुशीलां च हराय हरयेऽथ वा
॥ २४ ॥ नारायणस्वरूपं च भवेदेव श्रुतौ श्रुतम् ॥ विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीतये ॥ २५ ॥ स लभेद्धरिदास्यं च
ध्रुवं विप्रोद्भवाय च ॥ इत्यालोच्य सुराः सर्वे कृत्वा च मंत्रणां प्रिये ॥ २६ ॥ गुरुं प्रस्थापितुं जग्मुर्हिमालयगृहं प्रति ॥ गत्वा
प्रणम्य च गुरुं सर्वे चक्रुर्निवेदनम् ॥ २७ ॥ हिमालयगृहं गत्वा कुरु निंदां च शूलिनः ॥ पिनाकिनं विना दुर्गा वरं नान्यं वरि
ष्यति ॥ २८ ॥ अनिच्छया सुतां दत्त्वा फलं तूर्णं लभिष्यति ॥ कालेन या तु शैलेंद्रश्चेदानीं भुवि तिष्ठतु ॥ २९ ॥ अनंतरत्ना
धारं च त्वमेव रक्ष भारते ॥ देवानां वचनं श्रुत्वा प्रददौ कर्णयोः करौ ॥ १३० ॥ न स्वीचकार स्वगुरुः स्मरन्नारायणेति च ॥ उवाच
देववर्गांश्च संभर्त्स्य च पुनःपुनः ॥ ३१ ॥ वेदवेदांतविज्ञाता महाभक्तो हरौ हरे ॥ ॥ बृहस्पतिरुवाच ॥ ॥ श्रूयतां मद्वचः सत्यं हे देवाः
स्वार्थसाधकाः ॥ ३२ ॥ नीतिसारं च वेदोक्तं परिणामसुखावहम् ॥ हरकेशवयोर्भक्तं ये च निंदंति पापिनः ॥ ३३ ॥ भूदेवान्ब्राह्मणां
श्चैव स्वगुरुं च पतिव्रताः ॥ पतिभिक्षुब्रह्मचारिसृष्टिबीजान्सुरांस्तथा ॥ ३४ ॥ पच्यंते कालसूत्रे ते यावच्चंद्रदिवाकरौ ॥ श्लेष्ममूत्रपुरीषेषु
शेरते ते दिवानिशम् ॥ ३५ ॥ भक्षिताः कीटनिकरैः शब्दं कुर्वंति कातराः ॥ ये निंदंति च ब्रह्माणं स्रष्टारं जगतां गुरुम् ॥ ३६ ॥ शिवं
सुराणां प्रवरं दुर्गां लक्ष्मीं सरस्वतीम् ॥ गीतां च तुलसीं गंगां वेदांश्च वेदमातरम् ॥ ३७ ॥ व्रतं तपस्यां पूजां च मंत्रं मंत्रप्रदं गुरुम् ॥
ते पच्यंतेऽधकूपे वै चायुषोऽर्धं विधेरहो ॥ ३८ ॥ भक्षिताः सर्पसंघैश्च शब्दं कुर्वंति संततम् ॥ ये निंदंति हृषीकेशं देवसाम्यं विधा
य च ॥ ३९ ॥ विष्णुभक्तिप्रदं चैव पुराणं च श्रुतेः परम् ॥ राधा तदंगजा गोपी ब्राह्मणांश्च सदार्चितान् ॥ १४० ॥ ते पच्यंतेऽवटे
देवा विधातुरायुषा समम् ॥ अधोमुखा ऊर्ध्वजंघाः सर्पसंघैश्च वेष्टिताः ॥ ४१ ॥ भक्षिता विकृताकारैः कीटैः सर्पसमाकृतैः ॥
अतीव कातरा भीताः शब्दं कुर्वंति संततम् ॥ ४२ ॥ श्लेष्ममूत्रपुरीषाणि ध्रुवं भक्षंति क्षोभिताः ॥ उल्कां ददति रुष्टाश्च तन्मुखे यम

किंकराः ॥ ४३ ॥ त्रिसंध्यं तर्जनं कृत्वा कुर्वंति दंडताडनम् ॥ कुर्वंति मूत्रपानं च प्रहारैस्तृषितान्भिया ॥ ४४ ॥ तदा कल्पांतरे तद्वं सृष्टिं च प्रथमे पुनः ॥ तेषां भवेत्प्रतीकार इत्याह कमलोद्भवः ॥ ४५ ॥ कृत्वा हि शिवनिंदां च यास्यंति नरकं सुराः ॥ इममेवोपकारं च कर्तुमिच्छथ पुत्रकाः ॥ ४६ ॥ ब्रह्मणा प्रेरितो दक्षो दत्त्वा शूलभृते सुताम् ॥ न पापं परमैश्वर्यं संप्राप हरनिंदकः ॥ ४७ ॥ अनिच्छया सुतां दत्त्वा तुर्यपुण्यं ललाभ सः ॥ अहो विहाय सारूप्यं तुच्छं स्वर्गं ललाभ सः ॥ ४८ ॥ कश्चिन्मध्ये च युष्माकं गत्वा शैलगृहं सुराः ॥ संपादयतु स्वमतं शैलेंद्रस्य प्रयत्नतः ॥ ४९ ॥ अनिच्छया सुतां दत्त्वा सुखं तिष्ठतु भारते ॥ तस्मै भक्त्या सुतां दत्त्वा मोक्षं प्राप्यति निश्चितम् ॥ १५० ॥ पश्चात्सप्तर्षयः सर्वे गृहीत्वा तामरुंधतीम् ॥ ध्रुवं तस्य गृहं गत्वा बोधयिष्यंति पर्वतम् ॥ ५१ ॥ विना पिनाकिनं दुर्गा वरं नान्यं वरिष्यति ॥ अनिच्छया सुतां तस्मै प्रदास्यति सुताज्ञया ॥ ५२ ॥ इत्येवं कथितं सर्वं देवा गच्छंतु मंदिरम् ॥ इत्युक्त्वा वाक्पतिः शीघ्रं तपसे स्वर्णदीं गतः ॥ १५३ ॥ इति श्री ब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे चत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तदा देवाः समालोच्य जग्मुस्ते ब्रह्मणोंऽतिकम् ॥ सर्वे निवेदनं चक्रुर्ब्रह्माणं जगतां पतिम् ॥ १ ॥ ॥ देवा ऊचुः ॥ ॥ तव सृष्टौ जगत्स्रष्टा रत्नाधारो हिमालयः ॥ स चेत्प्राप्स्यति मोक्षं च रत्नगर्भा कुतो मही ॥ २ ॥ सुतां शूलभृते दत्त्वा भक्त्या शैलेश्वरः स्वयम् ॥ नारायणस्य सारूप्यं संप्राप्स्यति न संशयः ॥ ३ ॥ त्वं तस्य निंदनं कृत्वा विमतिं प्रतिपादय ॥ त्वया विना क्षमो नान्यो गच्छ शैलगृहे प्रभो ॥ ४ ॥ देवानां वचनं श्रुत्वा तानुवाच विधिः स्वयम् ॥ वचनं नीतिसारं च कर्णपीयूषमुत्तमम् ॥ ५ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ नाहं कर्तुं क्षमो वत्साः शिवनिंदां सुदुष्कराम् ॥ संपद्विनाशरूपां च विपदो बीजरूपिणीम् ॥ ६ ॥ भूतेशं प्रस्थापयत स्वात्मनिंदां करोति सः ॥ परनिंदा विनाशाय स्वनिंदा यशसे परम् ॥ ७ ॥ ब्रह्मणो वचनं श्रुत्वा तं प्रणम्य सुराः प्रिये ॥ शीघ्रं ययुस्ते कैलासं गत्वा च तुष्टुवुः शिवम् ॥ ८ ॥ सर्वे निवेदनं चक्रुः शंकरं करुणालयम् ॥ स ययौ शैलमूलं च तानाश्वास्य प्रह

स्य च ॥ ९ ॥ देवा मुमुदिरे सर्वे शीघ्रं गत्वा स्वमंदिरम् ॥ इष्टसिद्धिर्मुदे शश्वदसिद्धिर्दुःखवर्धिनी ॥ १० ॥ अथ, शैलः सभामध्ये
समुवास मुदान्वितः ॥ बंधुवर्गैः परिवृतः पार्वतीसहितः स्वयम् ॥ ११ ॥ एतस्मिन्नंतरे तत्र विप्ररूपी शिवः स्वयम् ॥ समाजगाम
सहसा प्रसन्नवदनेक्षणः ॥ १२ ॥ दंडी छत्री दीर्घवासा बिभ्रत्तिलकमुत्तमम् ॥ करे स्फटिकमालां च शालग्रामं गले दधत् ॥ १३॥
तं च दृष्ट्वा समुत्तस्थौ सगणश्च हिमालयः ॥ ननाम दंडवद्भूमौ भक्त्यातिथिमपूर्वकम् ॥ १४ ॥ ननाम पार्वती भक्त्या प्राणेशं विप्र
रूपिणम् ॥ आशिषं युयुजे विप्रः सर्वेषां प्रीतिपूर्वकम् ॥ १५ ॥ शैलदत्तासने शीघ्रमुवास ब्राह्मणः स्वयम् ॥ मधुपर्कादिकं सर्वं ज
ग्राह प्रीतिपूर्वकम् ॥ १६ ॥ पप्रच्छ कुशलं शैलो ब्राह्मणं को भवानिति ॥ उवाच सर्वं विप्रेंद्रो गिरींद्रं सादरेण च ॥ १७ ॥
॥ ॥ ब्राह्मण उवाच ॥ ॥ घाटिकां वृत्तिमाश्रित्य भ्रमामि धरणीतले ॥ मनोयायी सर्वगामी सर्वज्ञोहं गुरोर्वरात् ॥ १८ ॥ मया
ज्ञातं शंकराय सुतां दातुं त्वमिच्छसि ॥ इमां पद्मासमां दिव्यामज्ञातकुलशीलिने ॥१९॥ निराश्रयायासंगायारूपाय निर्गुणाय च ॥
श्मशानगामिने सर्वभूतनाथाय योगिने ॥२०॥ दिग्वाससेऽहिगात्राय विभूतिभूषणाय च ॥ व्यालग्राहिस्वरूपाय कालव्यापादनाय
च ॥२१॥ अज्ञातमृत्यवेऽज्ञायानाथायाबंधवे भवे ॥ तप्तस्वर्णजटाभारधारिणे निर्धनाय च ॥२२॥ अज्ञातवयसेऽतीव वृद्धाय चाविका
रिणे ॥ सर्वाश्रयाय भ्रमिणे नागहाराय भिक्षवे ॥ २३ ॥ निबोध ज्ञानिनां श्रेष्ठं नारायणं कुलोद्भवम् ॥ स ते पात्रानुरूपश्च पार्वतीदा
नकर्मणि ॥ २४ ॥ महाजनः स्मेरमुखः श्रुतिमात्राद्भविष्यति ॥ लक्षशैलाधिपस्त्वं च न तस्यैकोऽस्ति बांधवः ॥ २५ ॥ बांधवा
न्मेनकां प्रश्नं कुरु शीघ्रं प्रयत्नतः ॥ सर्वान्पृच्छ च यत्नेन हे बंधो पार्वतीं विना ॥ २६ ॥ रोगिणे नौषधं शश्वत्कुपथ्यं रोचते सदा ॥
इत्युक्त्वा ब्राह्मणः शीघ्रं स्नात्वा भुक्त्वा मुदान्वितः ॥ २७ ॥ जगाम स्वालयं शांतो वृन्दावनविनोदिनि ॥ ब्राह्मणस्य वचः श्रुत्वा
मेनोवाच हिमालयम् ॥ शोकेन साश्रुनयना हृदयेन विदूयता ॥ २८ ॥ मेनकोवाच ॥ ॥ शृणु शैलेंद्र मद्वाक्यं परिणामसुखावहम् 
॥ २९ ॥ पृच्छ शैलवरानस्मै न दास्यामि सुतामहम् ॥ त्यक्ष्यामि सर्वान्विषयान्भक्ष्यामि विषमेव च ॥ ३० ॥ गले बद्ध्वांबिकां

पश्य यास्यामि घोरकाननम् ॥ गृहीत्वा पार्वतीं मेना गत्वा कोपालयं रुषा ॥ २१ ॥ त्यक्त्वाहारं रुदंती च चकार शयनं भुवि ॥
एतस्मिन्नंतरे तत्र वसिष्ठो भ्रातृभिः सह ॥ २२ ॥ आजगाम पुनस्तेश्च युक्ता पश्चादरुंधती ॥ प्रणम्य शैलस्तान्सर्वान्स्वर्ण
सिंहासनं ददौ ॥ २३ ॥ दत्त्वा षोडशोपचारान्पूजयामास भक्तितः ॥ ऋषयश्च सभामध्ये सुखमूषुः सुखासने ॥ २४ ॥ जगामारुं
धती तूर्णं यत्र मेना च पार्वती ॥ गत्वा ददर्श मेनां च शयानां शोकमूर्च्छिताम् ॥ २५ ॥ उवाच मधुरं साध्वी सावधानां हितं वचः ॥
॥ ॥ अरुंधत्युवाच ॥ ॥ उत्तिष्ठ मेनके साध्वि त्वद्गृहेहमरुंधती ॥ २६ ॥ पितॄणां मानसी कन्या मां जानीहि विधेर्वधूम् ॥ अरुं
धत्याः स्वरं श्रुत्वा शीघ्रमुत्थाय मेनका ॥ उवाच शिरसा नत्वा तां पद्मामिव तेजसा ॥२७॥ ॥ मेनकोवाच ॥ ॥ अहोऽद्य कि
मिदं पुण्यमस्माकं पुण्यजन्मनाम् ॥ २८ ॥ वधूर्जगद्विधेः पत्नी वसिष्ठस्य ममालये ॥ संभ्रमेणेदमेवोक्के गृहं तेहं च किंकरी ॥
॥ २९ ॥ ईश्वरी जगतां स्वष्टुरागता बहुपुण्यतः ॥ पाद्यं दत्त्वा स्वर्णपीठे वासयामास तां सतीम् ॥ ४० ॥ भोजयामास मिष्टान्नं
बुभुजे कन्यया सह ॥ शिवस्य हेतोर्नीतिं च बोधयामास मेनकाम् ॥ ४१ ॥ अरुंधतीप्रसंगेन संबंधयोजनानि च ॥ अथ शैल
मृषींद्राश्च नीतिसारं परं वचः ॥ बोधयामासुः संबंधयोजनानि प्रसंगतः ॥ ४२ ॥ ॥ ऋषय ऊचुः ॥ ॥ शैलेंद्र श्रूयतां
वाक्यमस्माकं शुभकारकम् ॥ ४३ ॥ शिवाय पार्वतीं देहि संहर्तुः श्वशुरो भव ॥ अयाचितारं देवेशं बोधयाशु प्रयत्नतः ॥ ४४ ॥
तव शंकाविनाशाय ब्रह्मसंबंधकर्मणि ॥ नेच्छको दारसंयोगे शंकरो योगिनां वरः ॥ ४५ ॥ विधेः प्रार्थनया देव तव कन्यां ग्रही
ष्यति ॥ दुहितुस्ते तपस्यांते प्रतिज्ञानं चकार सः ॥ ४६ ॥ हेतुद्वयेन योगींद्रो विवाहं च करिष्यति ॥ ऋषीणां वचनं श्रुत्वा प्रहस्य
च हिमालयः ॥ उवाच किंचिद्भीतश्च परं विनयपूर्वकम् ॥ ४७ ॥ ॥ हिमालय उवाच ॥ ॥ शिवस्य राजसामग्रीं न हि
पश्यामि कांचन ॥ किंचिदाश्रममैश्वर्यं किं वा स्वजनबांधवम् ॥ ४८ ॥ न कन्यामतिनिर्लिप्तयोगिने दातुमर्हति ॥ यूयं विधातुः
पुत्राश्च सत्यं वदत निश्चितम् ॥ ४९ ॥ नानुरूपाय पुत्राय पिता कन्यां ददाति चेत् ॥ कालाल्लोभाद्भयान्मोहाच्छतान्दं नर

भजेत् ॥ ५० ॥ न हि दास्याम्यहं कन्यामिच्छया शूलपाणिने ॥ यद्विधानं भवेद्योग्यमृषयस्तद्विधीयताम् ॥ ५१ ॥ हिमाल
यवचः श्रुत्वा वसिष्ठो विधिनंदनः ॥ वेदवेदांगविज्ञाता वेदोक्तं वक्तुमुद्यतः ॥ ५२ ॥ ॥ वसिष्ठ उवाच ॥ ॥ वचनं त्रिविधं
शैल लौकिके वैदिके तथा ॥ सर्वं जानाति शास्त्रज्ञो निर्मलज्ञानचक्षुषा ॥ ५३ ॥ असत्यमहितं पश्चात्सांप्रतं श्रुतिसुन्दरम् ॥
सुबुद्धं शत्रुर्वदति न हितं च कदाचन ॥ ५४ ॥ आपातप्रीतिजनकं परिणामसुखावहम् ॥ दयालुर्धर्मशीलश्च बोधयत्येव बांधवम् ॥
॥ ५५ ॥ श्रुतिमात्रात्सुधातुल्यं सर्वकाले सुखावहम् ॥ सत्यसारं हितकरं वचसां श्रेष्ठमीप्सितम् ॥ ५६ ॥ एवं च त्रिविधं शैल नीति
शास्त्रनिरूपितम् ॥ कथ्यतां त्रिषु मध्ये किं वदामि वाक्यमीप्सितम् ॥ ५७ ॥ बाह्यसंपद्विहीनश्च शंकरस्त्रिदशेश्वरः ॥ तत्त्वज्ञानसमुद्रेषु
सन्निमग्नैकमानसः ॥ ५८ ॥ आपातभ्रमसंपत्तिर्विद्युच्छ्रीरिव नाशिनी ॥ सदानंदस्येश्वरस्य स्वात्मारामस्य का स्पृहा ॥ ५९ ॥ गृही
ददाति स्वसुतां राज्यसंपत्तिशालिने ॥ कन्यां विद्वेषिणे दत्त्वा कन्याघाती भवेत्पिता ॥ ६० ॥ को वदेच्छंकरो दुःखी कुबेरो यस्य
किंकरः ॥ भ्रूभंगलीलया सृष्टिं स्रष्टुं नष्टुं क्षमो हि यः ॥ ६१ ॥ निर्गुणः परमात्मा च य ईशः प्रकृतेः परः ॥ सर्वेशः स च निर्लिप्तो लिप्तश्च
सर्वजंतुषु ॥ ६२ ॥ स एकः सृष्टिसंहारे स सर्वः सृष्टिकर्मणि ॥ निराकारश्च साकारो विभुः स्वेच्छामयः स्वयम् ॥ ६३ ॥ य ईशस्त्रिविधां
मूर्तिं विधत्ते सृष्टिकर्मणि ॥ सृष्टिस्थित्यंतजननीं ब्रह्मविष्णुशिवाभिधाम् ॥ ६४ ॥ ब्रह्मा च ब्रह्मलोकस्थो विष्णुः क्षीरोदवासकृत् ॥
शिवः कैलासवासी च सर्वाः कृष्णविभूतयः ॥ ६५ ॥ श्रीकृष्णश्च द्विधा भूतो द्विभुजश्च चतुर्भुजः ॥ चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः
स्वयम् ॥ ६६ ॥ तस्य देवस्य तेंशाश्च ब्रह्मविष्णुमहेश्वराः ॥ केचिद्देवाः कलास्तस्य कलांशाश्चैव केचन ॥ ६७ ॥ कृष्णः सृष्ट्युन्मुखश्चा
पि प्रकृतिं तत्र निर्ममे ॥ निर्माय तां च तद्योनौ वीर्याधानं चकार ह ॥ ६८ ॥ ततो डिंभः समुद्भूतस्तन्मध्ये च महाविराट् ॥ महा
विष्णुः स विज्ञेयो श्रीकृष्णषोडशांशकः ॥ ६९ ॥ नाभिपद्मोद्भवो ब्रह्मा तस्यैव जलशायिनः ॥ भालोद्भवस्तस्य स्रष्टुः शंकरश्चंद्रशे
खरः ॥ ७० ॥ महाविष्णुर्वामपार्श्वात्संभूतो विष्णुरेव च ॥ सर्वे प्राकृतिकाः शैल ब्रह्मविष्णुशिवादयः ॥ ७१ ॥ धत्ते चतुर्विधां मूर्तिं

प्रकृतिः कृष्णसंभवा ॥ अंशेन लीलया सृष्ट्यै कलया बहुधा तया ॥ ७२ ॥ कृष्णवामांगसंभूता राधा रासेश्वरी स्वयम् ॥ मुखोद्भ
वा स्वयं वाणी रागाधिष्ठातृदेवता ॥ ७३ ॥ वक्षःस्थलोद्भवा लक्ष्मीः सर्वसंपत्स्वरूपिणी ॥ शिवा तेजःसु देवानामाविर्भावं चकार
सा ॥ ७४ ॥ निहत्य दानवान्सर्वान्देवेभ्यश्च श्रियं ददौ ॥ प्राप्य कल्पांतरे जन्म जठरे दक्षयोषितः ॥ ७५ ॥ नाम्ना सती शिवं प्राप
दक्षस्तस्मै ददौ च ताम् ॥ योगेन देहं तत्याज श्रुत्वा सा भर्तृनिंदनम् ॥ ७६ ॥ पितृणां मानसी कन्या मेनका तव गेहिनी ॥ ललाभ तस्य
जठरे जन्म सा जगदंबिका ॥७७॥ शिवा शिवस्य पत्नीयं शैल जन्मनिजन्मनि॥ कल्पेकल्पे बुद्धिरूपा ज्ञानिनां जननी परा ॥७८॥
जातिस्मरा च सर्वज्ञा सिद्धिदा सिद्धिरूपिणी ॥ अस्या अस्थि चिताभस्म भक्त्या धत्ते शिवः स्वयम् ॥७९॥ देहि त्वं स्वेच्छया कन्यां
देहि भद्र शिवाय च ॥ अथवा सा स्वयं कांतस्थानं यास्यति द्रक्ष्यति ॥ ८० ॥ प्राक्तनाद्यस्य या कांता सा तं प्राप्नोति वल्लभम् ॥
प्रजापतेर्निबंधं च न कोऽपि खंडितुं क्षमः ॥ ८१ ॥ विवाहेनोत्सुकः शंभुः स्वात्मारामश्च तत्त्ववित् ॥ तुष्टुवुस्तं सुराः सर्वे तारका
स्येन पीडिताः ॥ ८२ ॥ देवानां पीडनं दृष्ट्वा ब्रह्मणा प्रार्थितो विभुः ॥ कृपया स्वीचकाराशु कृपालुर्देवसंसदि ॥ ८३ ॥ कृत्वा
प्रतिज्ञां योगींद्रो दृष्ट्वा क्लेशमसंख्यकम् ॥ दुहितुस्ते तपःस्थानमाजगाम द्विजात्मकः ॥ ८४ ॥ तामाश्वास्य वरं दत्त्वा जगाम निज
मंदिरम् ॥ तच्छ्रुत्वैवाययुः सर्वे सुराः शक्रादयो मुदा ॥ ८५ ॥ नारायणश्च भगवान्ब्रह्मा धर्मश्च सांप्रतम् ॥ ऋषयो मुनयः सर्वे
गंधर्वा यक्षराक्षसाः ॥ ८६ ॥ तत्र सर्वे मुदा युक्ताः समालोचनकर्तृभिः ॥ प्रस्थापिता वयं शीघ्रमनृणा सा अरुंधती ॥ ८७ ॥ तव प्रबो
धने प्रीतिर्वर्द्धते महती सदा ॥ संप्राप्तं शुभकार्यं च सर्वकालसुखावहम् ॥ ८८ ॥ शिवां शिवाय शैलेंद्र स्वेच्छया चेन्न दास्यसि ॥
भविता वा विवाहश्च भवितव्यंबलेन च ॥ ८९ ॥ आगमिष्यति देवो यो नारायणसहायवान् ॥ रत्नसाररथे कृत्वा देवानां प्रवरं
वरम् ॥ ९० ॥ योगींद्राणां वरेण्यं तं ज्ञानिनां च गुरोर्गुरुम् ॥ आदिमध्यांतरहितमविकारमजं परम् ॥ ९१ ॥ वरं ददौ शिवायै स
शिवश्च तपसः स्थले ॥ न हीश्वरप्रतिज्ञातं दुर्लभं विफलं भवेत् ॥ ९२ ॥ ब्रह्मादिस्तंबपर्यंतं सर्वं नश्वरमस्थिरम् ॥ अहो प्रतिज्ञा

दुर्लंघ्या साधूनामविनाशिनी ॥ ९३ ॥ एको महेंद्रः शैलानां पक्षांश्चिच्छेद लीलया ॥ पवनो लीलया मेरोः शृंगभंगं चकार ह ॥
॥ ९४ ॥ के वा शैलेषु योद्धारः सुरैः सह हिमालय ॥ पतिष्यंति समुद्रेषु पवनैः प्रेरिताः क्षणात् ॥ ९५ ॥ एकार्थे यदि शैलेंद्र
सर्वसंपद्विनश्यति ॥ सर्वान्रक्षति तद्दत्त्वा विना च शरणागतम् ॥ ९६ ॥ शरणागतरक्षार्थं प्राणांश्च दातुमर्हति ॥ पुत्रदारधनं सर्वा
निति नीतिविदो विदुः ॥ ९७ ॥ दत्त्वा विप्राय स्वसुतामनरण्यो नृपेश्वरः ॥ ब्रह्मशापाद्विमुक्तश्च ररक्ष सर्वसंपदम् ॥ ९८ ॥ तमाशु
बोधयामासुर्नीतिशास्त्रविदो जनाः ॥ ब्रह्मशापनिमग्नं च ब्रह्मण्यमतिकातरम् ॥ ९९ ॥ त्वमेव शैलराजेंद्र सुतां दत्त्वा शिवाय च ॥
रक्ष सर्वान्बंधुवर्गान्वशे कुरु सुरानपि ॥ १०० ॥ वसिष्ठस्य वचः श्रुत्वा प्रहस्य पर्वतेश्वरः ॥ पप्रच्छ नृपवृत्तांतं हृदयेन विदूयता
॥ १०१ ॥ हिमालय उवाच ॥ ॥ कस्य वंशोद्भवो ब्रह्मन्ननरण्यो नृपेश्वरः ॥ सुतां दत्त्वा स च कथमरक्षत्सर्वसंपदम् ॥ १०२ ॥
॥ वसिष्ठ उवाच ॥ ॥ मनुवंशोद्भवो राजा सोनरण्यो नृपेश्वरः ॥ चिरंजीवी धर्मशीलो वैष्णवो विजितेंद्रियः ॥१०३॥ स्वायंभुवो मनुः
पूर्वं ब्रह्मपुत्रोऽतिधार्मिकः ॥ राज्यं चकार धर्मेण युगानामेकसप्ततिम् ॥ १०४ ॥ ततो जगाम वैकुंठं सहितः शतरूपया ॥ संप्राप्य
दास्यं सान्निध्यं हरेर्दासो बभूव ह ॥ १०५ ॥ मनुर्बभूव तत्पश्चात्स्वयं स्वारोचिषो महान् ॥ स्वारोचिषे गते शैल बभूव मनुरुत्तमः
॥ १०६ ॥ उत्तमे निर्गते धर्मी तामसो मनुरेव च ॥ ततो मनुर्बभूवात्र रैवतो ज्ञानिनां वरः ॥ ७ ॥ चाक्षुषश्च ततो ज्ञेयः श्राद्धदेवश्च
सप्तमः ॥ सावर्णिरष्टमो ज्ञेयः श्रीसूर्यतनयो महान् ॥ ८ ॥ चैत्रवंशोद्भवो राजा पुरासीत्सुरथो भुवि ॥ नवमो दक्षसावर्णिर्ब्रह्मसाव
र्णिको दश ॥ ९ ॥ एकादशो मनुश्रेष्ठो धर्मसावर्णिरुच्यते ॥ ततश्च रुद्रसावर्णिर्विष्णुभक्तो जितेंद्रियः ॥ ११० ॥ तत्परो देवसावर्णि
रिंद्रसावर्णिकस्ततः ॥ इत्येवं कथिता बंधो मनवश्च चतुर्दश ॥ ११ ॥ एतेषु समतीतेषु बभूव ब्रह्मणो दिनम् ॥ इंद्रसावर्णिवृत्तांतं सर्वं
मत्तो निशामय ॥ १२ ॥ मनूनां प्रवरो धर्मी शुद्धभक्तो गदाभृतः ॥ चकार राज्यं धर्मेण युगानामेकसप्ततिम् ॥ १३ ॥ राज्यं दत्त्वा ॥१२१॥
सुरेंद्राय जगाम तपसे वनम् ॥ सुरेंद्रस्य सुतः श्रीमाञ्छ्रीनिकेतुर्महाबलः ॥१४॥ तस्य पुत्रो महायोगी पुरीषतरुरेव च ॥ तस्य पुत्रोऽति

तेजस्वी मोकामुख इति स्मृतः ॥ १५ ॥ वृद्धश्रवाः सुतस्तस्य तत्पुत्रो भानुरेव च ॥ पुंडरीकः सुतस्तस्य तत्पुत्रो जिह्वलस्तथा ॥
॥ १६ ॥ जिह्वलस्य सुतः शृंगी तत्पुत्रो भीम एव च ॥ तत्पुत्रोऽपि यशश्चन्द्रो यशसा च शशीजितः ॥ १७ ॥ तत्कीर्तिं निर्मलां
संतो गायंति संततं सुराः ॥ तस्य पुत्रो वरेण्यश्च पुरारण्यश्च तत्सुतः ॥ १८ ॥ तत्पुत्रो धार्मिकः श्रीमान्धरारण्यश्च एव च ॥ तत्पुत्रो
मंगलारण्यस्तपस्वी ज्ञानिनां वरः ॥ १९ ॥ अपुत्रको नृपश्रेष्ठस्तपसे पुष्करं गतः ॥ सुचिरं च तपस्तप्त्वा वरं लब्ध्वा महेश्वरात् ॥
॥ १२० ॥ संप्राप्य वैष्णवं पुत्रमनरण्यं जितेंद्रियम् ॥ दत्त्वा तस्मै च राज्यं च जगाम तपसे वनम् ॥ २१ ॥ अनरण्यो नृपश्रेष्ठः
सप्तद्वीपमहीपतिः ॥ चकार यज्ञशतकं भृगुणा च पुरोधसा ॥ २२ ॥ तुच्छं मत्वाशु शक्रत्वं न लेभे नश्वरं सुधीः ॥ लीलया च जितः
शक्रो लीलया च जितो बलिः ॥ २३ ॥ जिताश्च दानवेंद्रा वै ज्वलता स्वेन तेजसा ॥ बभूवुः शतपुत्राश्च राज्ञस्तस्य हिमालय ॥ २४ ॥
कन्यैका सुंदरी रम्या पद्मा पद्मालयासमा ॥ सा कन्या यौवनस्था च बभूव पितृमंदिरे ॥ २५ ॥ चारं प्रस्थापयामास वराय नृपतीश्वरः॥
एकदा पिप्पलादश्च गंतुं स्वाश्रममुत्सुकः ॥ २६ ॥ तपःस्थाने निर्जने च गंधर्वं स ददर्श ह ॥ स्त्रीषु निमग्नचित्तं च शृंगाररससागरे
॥ २७ ॥ कामादतीव मत्तं च न जानंतं दिवानिशम् ॥ दृष्ट्वा तं मुनिशार्दूलः सकामश्च बभूव ह ॥ २८ ॥ ततः सुभग्नचित्तः सञ्चिन्तयन्दारसं
ग्रहम् ॥ एकदा पुष्पभद्रायां स्नातुं गच्छन्मुनीश्वरः ॥ २९ ॥ ददर्श पद्मां युवतीं पद्मामिव मनोरमाम् ॥ केयं कस्येति पप्रच्छ
समीपस्थाञ्जनान्मुनिः ॥ ॥ १३० ॥ जना निवेदनं चक्रुः पद्माऽनरण्यकन्यका ॥ मुनिः स्नात्वाभीष्टदेवं संपूज्य राधिकेश्वरम्
॥ ३१ ॥ जगाम कामी भिक्षार्थमनरण्यसभाजिरे ॥ राजा शीघ्रं मुनिं दृष्ट्वा प्रणनाम भयाकुलः ॥ ३२ ॥ मधुपर्कादिकं दत्त्वा
पूजयामास भक्तितः ॥ कामात्सर्वं गृहीत्वा च ययाचे कन्यकां मुनिः ॥ ३३ ॥ मौनी बभूव नृपतिः किंचिन्निर्वक्तुमक्षमः ॥ मुनिः
पुनर्ययाचे तं कन्यां देहीति मे नृप ॥ ३४ ॥ अथवा भस्मसात्सर्वं करिष्यामि क्षणेन च ॥ सर्वे बभूवुराच्छन्ना गणाश्च तेजसा मुनेः
॥ ३५ ॥ रुरोद राजा सगणो दृष्ट्वा वृद्धं जरातुरम् ॥ महिष्यो रुरुदुः सर्वा इति कर्तव्यमक्षमाः ॥ ३६ ॥ मूर्च्छां प्राप महाराज्ञी कन्या

माता शुचाकुला ॥ पंडितो नीतिशास्त्रज्ञो बोधयामास भूमिपम् ॥ ३७ ॥ महिर्षीं च नृपसुतान्कन्यकानीतिमुत्तमाम् ॥ अद्य वापि दिनांते वा दातव्या कन्यका नृप ॥ ३८ ॥ पराय विप्रादन्यस्मै कस्मै वा दातुमर्हसि ॥ सत्पात्रं ब्राह्मणादन्यं न पश्यामि जगत्त्रये ॥ ३९ ॥ सुतां दत्वा च मुनये रक्षस्व सर्वसंपदम् ॥ राजकन्यानिमित्तेन सर्वसंपत्प्रणश्यति ॥ १४० ॥ सर्वं रक्षति तत्त्यक्त्वा विना तं शरणागतम् ॥ राजा प्राज्ञवचः श्रुत्वा विलप्य च मुहुर्मुहुः ॥ ४१ ॥ कन्यां सालंकृतां कृत्वा मुनींद्राय ददौ किल ॥ कांतां गृहीत्वा स मुनिर्मुदितः स्वालयं ययौ ॥ ४२ ॥ राजा सर्वान्परित्यज्य जगाम तपसे शुचा ॥ भर्तुश्च दुहितुः शोकात्प्राणांस्तत्याज सुंदरी॥४३॥ पुत्राः पौत्राश्च भृत्याश्च मूर्च्छां प्रापुर्नृपं विना ॥ अनरण्यस्तपस्तप्त्वा चिंतयन्राधिकेश्वरम् ॥४४॥ गोलोकनाथं संसेव्य गोलोकं च जगामह ॥ बभूव कीर्तिमान्राजा ज्येष्ठपुत्रो नृपस्य च ॥ पुत्रवत्पालयामास प्रजाः सर्वा महीतले ॥ १४५ ॥ इतिश्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसम्वादे राधाकृष्णसंवादे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ वसिष्ठ उवाच ॥ अथानरण्यस्य कन्या सिषेवे भक्तितो मुनिम् ॥ कर्मणा मनसा वाचा लक्ष्मीर्नारायणं यथा ॥ १ ॥ एकादा स्वर्णदीं स्नातुं गच्छंतीं सस्मितां सतीम् ॥ ददर्श पथि धर्मश्च मायया नृपलिंगकः ॥ २ ॥ चारुरत्नरथस्थश्च रत्नालंकारभूषितः ॥ नवीनयौवनश्रीमान्कामदेवसमप्रभः ॥ ३ ॥ दृष्ट्वा तां सुंदरीं रम्यामुवाच मायया विभुः ॥ विज्ञातुमंतस्तत्त्वं च तस्याश्च मुनियोषितः ॥ ४ ॥ ॥ धर्म उवाच ॥ अयि सुंदरि लक्ष्मीव राजयोग्ये मनोहरे ॥ अतीव यौवनस्थे च कामिनि स्थिरयौवने ॥५॥ जरातुरस्य वृद्धस्य समीपे त्वं न राजसे ॥ चंदनागुरुसंलिप्ता राजसे राजवक्षसि ॥६॥ विप्रं तपःसु निरतं सत्यज्ञं मरणोन्मुखम् ॥ विहाय पश्य राजेंद्रं रतिशूरं स्मरातुरम् ॥ ७ ॥ प्राप्नोति सुंदरं पुण्यात्सौंदर्यं पूर्वजन्मतः ॥ सफलं तद्भवेत्सर्वं रसिकालिंगनेन च ॥ ८ ॥ सहस्रसुंदरीकांतं कामशास्त्रविशारदम् ॥ किंकरं कुरु मां कांते परित्यक्ष्यामि ता अपि ॥ ९ ॥ निर्जले निर्जने रम्ये शैलेशैले नदेनदे ॥ पुष्पोद्याने पुष्पिते च सुगंधिपुष्पवायुना ॥१०॥ मलये चन्दनारण्ये चारुचंदनवायुना ॥ विहरिष्यामि कामेन कामिन्या च त्वया सह ॥११॥ कामंज्वरेण

दग्धायाः शांतिं कर्तुमहं क्षमः ॥ विहरस्व मया सार्द्धं जन्मेदं सफलं कुरु ॥ १२ ॥ इत्येवमुक्तवंतं तं स्वरथादवरुह्य च ॥ गृहीतुमुत्सुकं
हस्ते तमुवाच पतिव्रता ॥१३॥ ॥ पद्मोवाच ॥ ॥ दूरं गच्छगच्छ दूरं पापिष्ठ भूमिपाधम ॥ मां चेत्पश्यसि कामेन सद्यो भस्म भवि
ष्यसि ॥ १४ ॥ पिप्पलादं मुनिश्रेष्ठं तपसा पूतविग्रहम् ॥ विहाय त्वां भजिष्यामि स्त्रीजितं रतिलंपटम् ॥१५॥ स्त्रीजितस्पर्शमात्रेण
सर्वं पुण्यं प्रणश्यति ॥ न भूमौ पातकी पापात्पापिनां स्त्रीजितात्परः ॥ १६ ॥ मां मातरं च स्त्रीभावं कृत्वा येन ब्रवीषि च ॥ भवि
ष्यति क्षयस्तेन कालेन मम शापतः ॥ १७ ॥ श्रुत्वा धर्मः सतीशापं नृपमूर्तिं विहाय च ॥ धृत्वा स्वमूर्तिं देवेशः कंपमान उवाच
ताम् ॥ १८ ॥ ॥ धर्म उवाच ॥ ॥ मातर्जानीहि मां धर्मं धर्मज्ञानां गुरोर्गुरुम् ॥ परस्त्रीमातृबुद्धिं च कुर्वंतं संततं सति ॥ १९ ॥
अहं तवांतर्विज्ञातुमागतस्तव सन्निधिम् ॥ युष्माकं च मनो जाने तथापि दैवबोधितः ॥ २० ॥ कृतं मे दमनं साध्वि न विरुद्धं
यथोचितम् ॥ शास्तिः समुत्पथस्थानामीश्वरेण विनिर्मिता ॥ २१ ॥ धर्मं स्वधर्मं विज्ञातुं कालं कलयितुं क्षमः ॥ विधातारं संविधातुं
तस्मै कृष्णाय ते नमः ॥ २२ ॥ संहर्तुं यः क्षमः काले संहर्तारं भवं विभुः ॥ स्रष्टारं लीलया स्रष्टुं तस्मै कृष्णाय ते नमः ॥ २३ ॥
शत्रुं विधातुं मित्रं च सुप्रीतिं कलहं क्षमः ॥ स्रष्टुं नष्टुं तदेवं च तस्मै कृष्णाय ते नमः ॥ २४ ॥ शापं प्रदातुं सर्वांश्च सुखदुःख
वरान्क्षमः ॥ संपदं विपदं यो हि तस्मै कृष्णाय ते नमः ॥ २५ ॥ प्रकृतिर्निर्मिता येन महाविष्णुश्च निर्मितः ॥ ब्रह्मविष्णुमहेशाद्या
स्तस्मै कृष्णाय ते नमः ॥ २६ ॥ येन शुक्लीकृतं क्षीरं जलं शीतं कृतं पुरा ॥ दाहीकृतो हुताशश्च तस्मै कृष्णाय ते नमः ॥ २७ ॥
अतितेजः समुत्थाय तेजोरूपाय मूर्त्तये ॥ गुणश्रेष्ठनिर्गुणाय तस्मै कृष्णाय ते नमः ॥ २८ ॥ सर्वस्मै सर्वबीजाय सर्वेषामंतरात्मने ॥
सर्वबंधुस्वरूपाय तस्मै कृष्णाय ते नमः ॥ २९ ॥ इत्युक्त्वा पुरतस्तस्यास्तस्थौ धर्मो जगद्गुरुः ॥ सा साध्वी तं च विज्ञाय सहसो
वाच पर्वत ॥ ३० ॥ ॥ पद्मोवाच ॥ ॥ त्वमेव धर्मः सर्वेषां साक्षी च सर्वकर्मणाम् ॥ सर्वांतरेषु सर्वात्मा सर्वज्ञः सर्वतत्त्ववित् ॥३१॥
कथं मनो मे विज्ञातुं विडंबयसि किंकरीम् ॥ यत्कृतं त्वत्कृते ब्रह्मन्नपराधो बभूव मे ॥ ३२ ॥ त्वं च शप्तो मयाऽज्ञानात्स्त्रीस्वभावा

कृपा विभो ॥ का व्यवस्था भवेत्तस्य चिन्तयामीति सांप्रतम् ॥ ३३ ॥ आकाशोसौ दिशः सर्वा यदि नश्यंति वायवः ॥ तथापि 
साध्वीशापस्तु न नश्यति कदाचन ॥ ३४ ॥ त्वं च नष्टो भवसि चेत्सृष्टिनाशो भवेत्तदा ॥ इतिकर्तव्यतामूढा तथापि त्वां वदा 
म्यहम् ॥ ३५ ॥ सत्ये पूर्णश्चतुष्पादैः पौर्णमास्यां यथा शशी ॥ विराजसे देवराज सर्वकालं दिवानिशम् ॥ ३६ ॥ पादक्षयश्च त्रेता
यां भगवन्भविता तव ॥ पादौ परौ द्वापरे च तृतीयश्च कलौ विभो ॥ ३७ ॥ कलिशेषे शेषपादस्तवाच्छन्नो भविष्यति ॥ पुनः
सत्ये समायाते परिपूर्णो भविष्यसि ॥ ३८ ॥ सत्ये सर्वव्यापकस्त्वं तदन्येषु च कुत्रचित् ॥ यत्र स्थानं तवाधारो वदामि श्रूयतां
विभो ॥ ३९ ॥ वैष्णवेषु च सर्वेषु यतिषु ब्रह्मचारिषु ॥ पतिव्रतासु प्राज्ञेषु वानप्रस्थेषु भिक्षुषु ॥ ४० ॥ नृपेषु धर्मशीलेषु सत्सु सद्वै
श्यजातिषु ॥ द्विजसेविषु शूद्रेषु सत्संसर्गस्थितेषु च ॥ ४१ ॥ एषु त्वं सततं पूर्णो धर्मराज विराजसे ॥ युगेयुगे तदाधारा यत्र पुण्य
तमा जनाः ॥ ४२ ॥ अश्वत्थवटबिल्वेषु तुलसीचंदनेषु च ॥ दीक्षापरीक्षाशपथगोष्ठगोष्पदभूमिषु ॥ ४३ ॥ विवाहेषु च पुण्येषु
विद्यमानोऽसि शाखिषु ॥ देवालयेषु तीर्थेषु सतां शश्वद्गृहेषु च ॥ ४४ ॥ वेदवेदांगश्रवणे जलेषु च सभासु च ॥ श्रीकृष्णगुणनामोक्त
श्रुतिगीतस्थलेषु च ॥ ४५ ॥ व्रतपूजातपोन्याययज्ञसाक्षिस्थलेषु च ॥ गवां गृहेषु गोष्ठेव विद्यमानो हि पश्यसि ॥ ४६ ॥ कृशता
तेन भविता धर्म तेषु स्थलेषु च ॥ एतदन्येषु कृशता यदगम्यं च तच्छृणु ॥ ४७ ॥ पुंश्चलीषु च सर्वासु गृहेषु नरघातिनाम् ॥
नरघातिषु नीचेषु मूर्खेषु च खलेषु च ॥ ४८॥ देवतागुरुविप्रेष्टपाल्यानां धनहारिषु ॥ असन्नरेषु धूर्तेषु चौरेषु रतिभूमिषु ॥ ४९ ॥
दुरोदरसुरापानकलहानां स्थलेषु च ॥ शालग्रामसाधुतीर्थपुराणरहितेषु च ॥ ५० ॥ दस्युम्लेच्छेषु वादेषु तालच्छायासु गविषु ॥ असि
जीविमषीजीविदेवलग्रामयाजिषु ॥ ५१ ॥ वृषवाहस्वर्णकारजीवहिंसोपजीविषु ॥ भर्तृनिंदितनारीषु स्त्रीजितेषु च पुंसु च ॥ ५२ ॥
दीक्षासंध्याविष्णुभक्तिविहीनेषु द्विजेषु च ॥ स्वांगकन्याविक्रयिषु स्वयोषिद्विक्रयेष्वथ ॥ ५३ ॥ शालग्रामसुरग्रंथभूमिविक्रयिषु 
प्रभो ॥ मित्रद्रोहिकृतघ्नेषु सत्यविश्वासघातिषु ॥५४॥ शरणागतदीनेषु चाश्रितघ्नेषु नृष्वपि ॥ शश्वन्मिथ्योक्तिशीलेषु तथा सीमाप

दारिषु ॥ ९५ ॥ कामात्क्रोधात्तथा लोभान्मिथ्यासाक्षिप्रवादिषु ॥ पुण्यकर्मविहीनेषु पुण्यकर्मविरोधिषु ॥ ९६ ॥ स्थातुमेतेषु निंद्येषु नाधिकारस्तव प्रभो ॥ ममापि वचनं सत्यं बभूव तत्क्षणं तव ॥ ९७ ॥ यास्यामि पतिसेवायै गच्छ तात स्वमंदिरम् ॥ इत्येवंवादिनीं साध्वीमुवाच विधिनंदनः ॥ प्रसन्नवदनः श्रीमानतीव विनयं वचः ॥ ९८ ॥ ॥ धर्म उवाच ॥ ॥ धन्यासि पतिभक्तासि स्वस्ति तेऽस्तु च संततम् ॥ ९९ ॥ वरं गृहाण दास्यामि मत्परित्राणकारिणि ॥ युवा भवतु भर्ता ते रतिशूरश्च कन्यके ॥ ॥ ६० ॥ रूपवान्गुणवान्साध्वि संततं स्थिरयौवनः ॥ परमैश्वर्यसंयुक्ता त्वं भव स्थिरयौवना ॥ ६१ ॥ चिरजीवी भवतु स मार्कंडेयात्परः सुते ॥ कुबेराद्धनवांश्चैव शक्रादैश्वर्यवानपि ॥ ६२ ॥ विष्णुभक्तः शिवसमः सिद्धस्तु कपिलात्परः ॥ स्वामिसौभाग्यसंयुक्ता भव त्वं जीवनावधि ॥ ६३ ॥ गृहा भवंतु ते साध्वि कुबेरभवनाधिकाः ॥ माता त्वं दशपुत्राणां गुणिनां चिरजीविनाम् ॥ ॥ ६४ ॥ स्वभर्तुरधिकानां च भविष्यसि न संशयः ॥ इत्येवमुक्त्वा संतस्थौ धर्मराजश्च पर्वत ॥ ६५ ॥ सा तं प्रदक्षिणीकृत्य प्रणम्य स्वगृहं ययौ ॥ धर्मस्तामाशिषं युक्त्वा जगाम निजमंदिरम् ॥ ६६ ॥ पतिव्रतां प्रशशंस प्रतिसंसदि संसदि ॥ सा रेमे स्वामिना सार्द्धं यूना रहसि संततम् ॥ ६७ ॥ पश्चाद्बभूव सत्पुत्रा तद्भर्तुरधिका गुणैः ॥ शैलेंद्र कथितं सर्वमितिहासं पुरातनम् ॥ ६८ ॥ दत्त्वाऽनरण्यः स्वसुतां ररक्ष सर्वसंपदम् ॥ त्वमेव कन्यकां दत्त्वा सर्वेषामीश्वराय च ॥ ६९ ॥ रक्ष सर्वबंधुवर्गानात्मनः सर्वसंपदम् ॥ सप्ताहे समतीते च दुर्लभेऽतिशुभे क्षणे ॥ ७० ॥ लग्नाधिपे च लग्नस्थे चंद्रे स्वतनयान्विते ॥ मोदते रोहिणीयुक्ते विशुद्धे चंद्रतारके ॥ ७१ ॥ मार्गशीर्षे चंद्रवारे सर्वदोषविवर्जिते ॥ सर्वसद्ग्रहसंदृष्टे ह्यसद्ग्रहविवर्जिते ॥ ७२ ॥ सदपत्यप्रदेतीव पतिसौभाग्यदायिनि ॥ अवैधव्यप्रदे सौख्यप्रदे जन्मनि जन्मनि ॥ ७३ ॥ अत्यंतप्रेमाविच्छेदप्रदायिनि परात्परे ॥ कन्यां प्रदाय देवाय त्वं कृती भव पर्वत ॥ ७४ ॥ जगदंबां जगत्पित्रे मूलप्रकृतिमीश्वरीम् ॥ तेजःस्वरूपां सर्वेषां देवानां देवपूजिताम् ॥ ७५ ॥ आविर्भूता पुरा कल्पे देवानां रक्षणाय च ॥ तेजोराशिः सुरौघाणां प्रज्वलंती दिशो दश ॥ ७६ ॥ अस्याः स्वतेजसा दैत्याः केचिद्दग्धाः पला

सिताः ॥ केचिद्बभूवुः शैलेंद्र भस्मीभूताश्च भूतले ॥ ७७ ॥ बिलं प्रविविशुः केचिन्मूर्च्छां प्रापुश्च केचन ॥ केचिद्दंते तृणं
कृत्वा जग्मुः शरणमीश्वरीम् ॥ ७८ ॥ केचिच्चिक्षिपुरस्त्राणि स्तंभिता अपि केचन ॥ केचिच्चिरं रणं कृत्वा ययुः स्वर्ग
मनामयम् ॥ ७९ ॥ निःशत्रवो बभूवुस्ते सुरा अस्याः प्रसादतः ॥ कृष्णाज्ञया सा कल्पांते दक्षकन्या बभूव ह ॥ ८० ॥
दक्षश्च विधिवद्देवीं प्रददौ शूलपाणये ॥ देवेन मत्पितुर्यज्ञे सहसा सुरसंसदि ॥ ८१ ॥ बभूव कलहः शैल तेन शूलभृता महान् ॥
ब्रह्माणं च नमस्कृत्य ययौ रुष्टस्त्रिलोचनः ॥ ८२ ॥ दक्षश्च सगणो रुष्टः प्रययौ स्वालयं तदा ॥ कोपात्संभृतसंभारो दक्षो यज्ञं च
कार ह ॥ ८३ ॥ न ददौ यज्ञभागं च मात्सर्याच्छूलपाणये ॥ दृष्ट्वा सती प्रकुपिता जनकं रक्तलोचना ॥ ८४ ॥ . निर्भर्त्स्य च
बहुतरं हृदयेन विदूयता ॥ यज्ञस्थानात्समुत्थाय जगाम मातुरंतिकम् ॥ ८५ ॥ भविष्यं कथयामास त्रिकालज्ञा परात्परा ॥ यज्ञ
भंगादिकं वापि स्वपितुश्च पराभवम् ॥ ८६ ॥ पलायनं च देवानां यज्ञस्थानाद्गिरीश्वरम् ॥ मुनीनामृत्विजां चैव पर्वतानां तथैव
च ॥ ८७ ॥ जयं शंकरसैन्यानां स्वात्मनो मृत्युमेव च ॥ शोकात्पर्यटनं भर्तुर्विरहातुरचेतसा ॥ ८८ ॥ निर्माणं नेत्रसरसः प्रबोधं
च जनार्दनात् ॥ मूर्तिभेदात्पुनः प्राप्तिं विहारं तस्य तत्समम् ॥ ८९ ॥ अपरं भवितव्यं च सर्वमुक्त्वा जगाम सा ॥ स्वमात्रा भगि
नीभिश्च प्रतिषिद्धा च दुःखिता ॥ ९० ॥ बभूवादर्शनायोगात्सर्वासां सिद्धियोगिनी ॥ गत्वा सा जाह्नवीतीरं स्मृत्वा संपूज्य शंकरम्
॥ ९१ ॥ स्मृत्वा तच्चरणांभोजं देहं तत्याज सुंदरी ॥ गंधमादनद्रोणीस्थं शरीरं प्रविवेश ह ॥ ९२ ॥ संजहार पुरा येन दैत्यानाम
खिलं कुलम् ॥ हाहाकारं प्रचक्रुश्च सुराः सर्वेतिविस्मिताः ॥ ९३ ॥ जग्मुः शंकरसेनाश्च दक्षयज्ञं विनश्य च ॥ पराभवं च सर्वेषां
कृत्वा शोकातुराः पराः ॥ ९४ ॥ सत्वरं सर्ववृत्तांतं कथयामासुरीश्वरम् ॥ श्रुत्वा प्रवृत्तिं संहर्ता सर्वरुद्रगणैर्वृतः ॥ जगाम स्वर्णदी
तीरं यत्र देवीकलेवरम् ॥ ९५ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे सतीदेहत्यागो नाम द्विच
त्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ दुर्गां महादेवस्सतीमूर्तिं मनोहराम् ॥ अम्लानपद्मवक्त्रां तां शया

नां जाह्नवीतटे ॥ १ ॥ दधतीमक्षमालां च प्रतप्तकांचनप्रभाम् ॥ तेजसा प्रज्वलंतीं च दधानां शुक्लवाससम् ॥ २ ॥ दृष्ट्वा सतीश
रीरं च प्रदग्धो विरहाग्निना ॥ तत्त्वराशिर्मूर्तिमांश्च मूर्च्छां प्राप तथापि च ॥ ३ ॥ कलत्रशोको बलवान्स्वात्मारामं परात्परम् ॥
बाधते वेदबीजं तं योगींद्राणां गुरोर्गुरुम् ॥ ४ ॥ क्षणेन चेतनां प्राप्य तामुवाच त्रिलोचनः ॥ निरीक्ष्य वदनांभोजं स्थाणुः स्थाणुरि
वापरः ॥ ५ ॥ साश्रुनेत्रोऽतिदीनश्च दीनानां शरणप्रदः ॥ दीनदैन्यापहारी च विललाप परं वचः ॥ ६ ॥ ॥ शंकर उवाच ॥ ॥
उत्तिष्ठोत्तिष्ठ सुभगे सति प्राणेश्वरि प्रिये ॥ शंकरोऽहं तव स्वामी पश्य मां निकटागतम् ॥ ७ ॥ शिवं शिवप्रदं सर्वसंपद्रूपं च सिद्धि
दम् ॥ सर्वात्मानं च सर्वेशं शवतुल्यं त्वया विना ॥ ८ ॥ शक्तोऽहं च त्वया सार्द्धं सर्वशक्तिस्वरूपया ॥ शक्तिहीनः शवसमो निश्चे
ष्टः सर्वकर्मसु ॥ ९ ॥ यश्च शक्तिं न जानाति ज्ञानहीनश्च निंदति ॥ तं त्यक्तुमुचित विज्ञे कथं मां त्यजसि प्रिये ॥ १० ॥ स्वयं ब्रह्मा
स्वयं विष्णुः साध्यभूता वयं तव ॥ सस्मितं सकटाक्षं च वद किंचित्सुधोपमम् ॥ ११ ॥ मधुराभासदृष्ट्या च मां दग्धं सेचनं
कुरु ॥ मां दृष्ट्वा दूरतः शीघ्रं स्निग्धं वदसि सस्मितम् ॥ १२ ॥ कथमद्यापि रुष्टेव विलपंतं न भाषसे ॥ प्राणाधिके समुत्तिष्ठ रुदंतं
मां न पश्यसि ॥ १३ ॥ परित्यज्य च नः प्राणान्गंतुं नार्हसि सुन्दरि ॥ जगदंबे समुत्तिष्ठ प्राणाधारे परात्परे ॥ १४ ॥ पति
व्रते समुत्तिष्ठ कथं मां नाद्य सेवसे ॥ कथं करोषि विज्ञाय व्रतभंगं श्रुतिप्रसूः ॥ १५ ॥ इत्युक्त्वा मृतदेहं च प्रियाया विरहातुरः ॥
निधायोरसि संश्लिष्य चुचुंब च पुनःपुनः ॥ १६ ॥ अधरे चाधरं दत्त्वा वक्षो वक्षसि शंकरः ॥ पुनःपुनः समाश्लिष्य पुनर्मूर्च्छाम
वाप सः ॥ १७ ॥ पुनः स चेतनां प्राप्य वेगादुत्थाय शोकतः ॥ दुद्राव च यथोन्मत्तो ज्ञानिनां च गुरोर्गुरुः ॥ १८ ॥ सप्तद्वीपं सप्तसिं
धुं लोकालोकं च कांचनम् ॥ बभ्राम भ्रांतवज्ज्ञानी सतीं कृत्वा स्ववक्षसि ॥ १९ ॥ शतशृंगगिरेः पार्श्वे जंबुद्वीपे च भारते ॥ सु
निर्जनेऽक्षयवटे गंगातीरे सरित्तटे ॥ २० ॥ रुरोदोच्चैः स्वयं कृत्वा सति साध्वीत्युदीर्य च ॥ त्रिनेत्रनेत्रनीरेण संबभूव सरोवरम्
॥ २१ ॥ तत्रैतं च सरो नाम मुनीनां तपसः स्थलम् ॥ योजनद्वयविस्तीर्णं पुण्यतीर्थं मनोहरम् ॥ २२ ॥ यत्र स्नात्वा पुनर्जन्म

प्रज्वलन्नतिकोपतः ॥ सर्पान्प्रस्थापयामासासंख्यांश्चैव विषोल्बणान् ॥ ८ ॥ सर्पसेनाग्रणीनां च मुख्यान्पंच विशारदान् ॥ द्रोणकालीयकर्कोटपुंडरीकधनंजयान् ॥ ९ ॥ सर्वे नागाः समाजग्मुर्यत्र धन्वंतरिः स्वयम् ॥ भयमापुः शिष्यगणा दृष्ट्वा नागा संख्यकान् ॥ १० ॥ नागनिश्वासवातेन सर्वे शिष्या मृता इव ॥ निश्चेष्टा ज्ञानरहिताः शेरते धरणीतले ॥ ११ ॥ धन्वतरिश्च भगवान्पीयूषवर्षणेन च ॥ जीवयामास शिष्यांश्च मंत्रेण च गुरुं स्मरन् ॥ १२ ॥ ॥ चेतनां कारयित्वा च शिष्याणां च जगद्गुरुः ॥ चकार जृंभितं मंत्रैः सर्पसंघं विषोल्बणम् ॥ १३ ॥ सर्वे बभूवुर्निश्चेष्टा जृंभितास्ते मृता इव ॥ कोपि नालं ततो देवि वार्तां दातुं गणेषु च ॥ १४ ॥ वासुकिर्बुबुधे सर्वं सर्वज्ञः सर्वसंकटम् ॥ आजुहाव जगद्गौरीं भगिनीं ज्ञानरूपिणीम् ॥ १५ ॥ ॥ वासुकिरुवाच ॥ ॥ मनसे त्वं समागच्छ नागात्रक्षातिसंकटात् ॥ जगत्त्रये महाभागे पूजा तव भविष्यति ॥ १६ ॥ वासुकेर्वचनं श्रुत्वा प्रहस्योवाच कन्यका ॥ वाक्यं पीयूषतुल्यं च विनयावनतस्थिता ॥ १७ ॥ ॥ मनसोवाच ॥ ॥ नागेंद्र शृणु मद्वाक्यं यास्यामि समरं प्रति ॥ भद्राभद्रं देवसाध्यं करिष्यामि यथोचितम् ॥ १८ ॥ तं शत्रुं संहरिष्यामि लीलया समरस्थले ॥ अहं यं निहनिष्यामि तं को रक्षितुमीश्वरः ॥ १९ ॥ यदि ब्रह्मादयो देवाः समायांति रणस्थले ॥ तथापि तव शत्रुं च प्रजेष्यामि न संशयः ॥ २० ॥ गुरुर्मे भगवाञ्छेषः सिद्धमंत्रं च दत्तवान् ॥ नारायणस्य जगतामीशस्य परमाद्भुतम् ॥ २१ ॥ बिभर्मि कवचं कंठे परं त्रैलोक्यमंगलम् ॥ संसारं भस्मसात्कृत्वा पुनः स्रष्टुमहं क्षमा ॥ २२ ॥ शिष्याहं मंत्रशास्त्रेषु शंभोर्भगवतः पुरा ॥ महाज्ञानं दत्तवान्स मह्यं च कृपया विभुः ॥ २३ ॥ शभोश्च शिष्यो गरुडो गणयामि न तं ध्रुवम् ॥ धन्वंतरिस्तच्छिष्याणामेकः किं गणयामि तम् ॥ २४ ॥ इत्युक्त्वा सा जगामैका त्यक्त्वा नागगणान्रुषा ॥ प्रणम्य श्रीहरिं शंभुं शेषं च हृष्टमानसा ॥ २५ ॥ यत्र धन्वंतरिर्देवः प्रसन्नवदनेक्षणः ॥ तत्राजगाम सा देवी कोपरक्तेक्षणा रुषा ॥ २६ ॥ दृष्टिमात्रेण सर्वांश्च जीवयामास सुन्दरी ॥ विषदृष्ट्या शत्रुशिष्यान्निश्चेष्टांश्च चकार ह ॥ २७ ॥ धन्वंतरिस्तु भगवान्मंत्रशास्त्रविशारदः ॥ मंत्रेण यत्नं कृतवान्नोत्थापयितुमीश्वरः ॥ २८ ॥ दृष्ट्वा धन्वं

तारिं देवी प्रहस्योवाच सत्वरम् ॥ बहूक्तिमर्थयुक्तां च साहंकारां सुरेश्वरि ॥ २९ ॥ ॥ मनसोवाच ॥ ॥ मंत्रार्थं मंत्रशिल्पं च मंत्रभेदं महौषधम् ॥ वद जानासि किं सिद्ध शिष्योऽसि गरुडस्य च ॥ ३० ॥ अहं च वैनतेयश्च शिष्यौ शंभोश्च विश्रुतौ ॥ सुक ल्पकालं सुचिरमहं धन्वंतरे शृणु ॥ ३१ ॥ इत्युक्त्वा सरसः पद्मं समानीय जगत्प्रसूः ॥ मंत्रसंवलितं कृत्वा प्रेरयामास कोपतः ॥ ३२ ॥ दृष्ट्वागतं पद्मपुष्पं ज्वलदग्निशिखोपमम् ॥ ( धन्वंतरिश्च निःश्वासैर्भस्मसात्तच्चकार ह ) ॥ ३३ ॥ तच्च धन्वंतरिर्दृष्ट्वा समं त्ररेणुमुष्टिना ॥ चकार निष्फलं भस्म तां प्रहस्यावलीलया ॥ ३४ ॥ देवी जग्राह शक्तिं च ग्रीष्मसूर्यसमप्रभाम् ॥ मंत्रसंवलितां कृत्वा प्रेरयामास तं रिपुम् ॥ ३५ ॥ दृष्ट्वा जाज्वल्यमानां तां शक्तिं धन्वंतरिः स्वयम् ॥ विष्णुदत्तेन शूलेन स तु चिच्छेद लीलया ॥ ३६ ॥ तां च शक्तिं वृथा दृष्ट्वा प्रजज्वालेश्वरी रुषा ॥ जग्राह नागपाशं च घोरमव्यर्थमुल्बणम् ॥ ३७ ॥ नागलक्षसमायुक्तं सिद्धमंत्रेण मंत्रितम् ॥ प्रेरयामास कोपेन कालांतकसमप्रभम् ॥ ३८ ॥ धन्वंतरिर्नागपाशं दृष्ट्वा च सस्मितो मुदा ॥ सस्मार गरुडं तूर्णमाजगाम खगेश्वरः ॥ ३९ ॥ सर्पास्त्रमागतं दृष्ट्वा गरुडो हरिवाहनः ॥ विधाय चंचुना शीघ्रं बुभुजे क्षुधितश्चिरम् ॥ ४० ॥ नागास्त्रं निष्फलं दृष्ट्वा कोपरक्तेक्षणा भृशम् ॥ जग्राह भस्ममुष्टिं च शिवदत्तां पुरा प्रिये ॥ ४१ ॥ भस्ममुष्टिं मंत्रपूतां दृष्ट्वा च प्रेरितां यथा ॥ पक्षवातेन चिक्षेप शिष्यं पश्चान्निधाय च ॥ ४२ ॥ निरस्तां भस्ममुष्टिं च दृष्ट्वा देवी चुकोप ह ॥ जग्राह शूलमव्यर्थं हंतुं धन्वंतरिं स्वयम् ॥ ४३ ॥ शिवदत्तं च शूलं च शतसूर्यसमप्रभम् ॥ अव्यर्थशूलं लोकेषु प्रलयाग्निसमप्रभम् ॥ ४४ ॥ अथ ब्रह्मा तथा शंभुराजगाम रणाजिरम् ॥ धन्वंतरेश्च रक्षार्थं शमनार्थं खगस्य च ॥ ४५ ॥ दृष्ट्वा शंभुं जगद्गौरी विधिं च जगतां पतिम् ॥ भक्त्या ननाम तावेव निःशंका शूलधारिणी ॥ ४६ ॥ धन्वंतरिश्च गरुडः प्रणनाम सुरेश्वरौ ॥ तुष्टाव परया भक्त्या तौ च चक्रतुराशिषम् ॥ ४७ ॥ उवाच ब्रह्मा मधुरं हितं धन्वंतरिं मुदा ॥ पूजार्थं मनसायाश्च लोकानां हितकाम्यया ॥ ॥ ४८ ॥ ॥ ब्रह्मोवाच ॥ ॥ धन्वंतरे महाभाग सर्वशास्त्रविशारद ॥ रणं ते मनसासार्द्धं न हि साम्यं च मे मतम् ॥ ४९ ॥

शिवदत्तेन शूलेन दुर्निवार्येण सर्वतः ॥ त्रैलोक्यं भस्मसात्कर्तुं क्षमेयं त्रिदशेश्वरी ॥ ५० ॥ ध्यानं कौथुमशाखोक्तं कृत्वा भक्त्या समाहितः ॥ दत्त्वा षोडशोपचारं देव्याश्च कुरु पूजनम् ॥ ५१ ॥ आस्तिकोक्तेन स्तोत्रेण स्तवनं कर्तुमर्हसि ॥ परितुष्टा च मनसा वरं तुभ्यं प्रदास्यति ॥ ५२ ॥ ब्रह्मणो वचनं श्रुत्वा चकारानुमतिं शिवः ॥ वैनतेयश्च संप्रीत्या बोधयामास यत्नतः ॥ ५३ ॥ एषां च वचनं श्रुत्वा स्नात्वा शुचिरलंकृतः ॥ विधिं पुरोहितं कृत्वा पूजां कर्तुं समुद्यतः ॥ ५४ ॥ ॥ धन्वंतरिरुवाच ॥ ॥ इहागच्छ जगद्गौरि गृहाण मम पूजनम् ॥ पूज्या त्वं त्रिषु लोकेषु पुरा कश्यपकन्यके ॥ ५५ ॥ त्वया जितं जगत्सर्वं देवि विष्णुस्वरूपया ॥ तेन तेऽस्त्रप्रयोगश्च न कृतो रणभूमिषु ॥ ५६ ॥ इत्युक्त्वा संयतो भूत्वा भक्तिनम्रात्मकंधरः ॥ गृहीत्वा शुक्लकुसुमं ध्यानं कर्तुं समुद्यतः ॥ ५७ ॥ चारुचंपकवर्णाभां सर्वांगसुमनोहराम् ॥ ईषद्धास्यप्रसन्नास्यां शोभितां सूक्ष्मवाससा ॥ ५८ ॥ सुचारुकबरीं शोभां रत्नाभरणभूषिताम् ॥ सर्वाभयप्रदां देवीं भक्तानुग्रहकातराम् ॥ ५९ ॥ सर्वविद्याप्रदां शांतां सर्वविद्याविशारदाम् ॥ नागेंद्रवाहिनीं देवीं भजे नागेश्वरीं पराम् ॥ ६० ॥ ध्यात्वैवं कुसुमं दत्त्वा नानाद्रव्यसमन्वितम् ॥ दत्त्वा षोडशोपचारं पूजयामास तां प्रिये ॥ ६१ ॥ स्तोत्रं चकार यत्नाच्च पुलकांचितविग्रहः ॥ पुटांजलियुतो भूत्वा भक्तिनम्रात्मकंधरः ॥६२॥ ॥ धन्वंतरिरुवाच ॥ ॥ नमः सिद्धिस्वरूपायै सिद्धिदायै नमोनमः ॥ नमः कश्यपकन्यायै वरदायै नमोनमः ॥ ६३ ॥ नमः शंकरकन्यायै शंकरायै नमोनमः ॥ नमस्ते नागवाहिन्यै नागेश्वर्यै नमोमनः ॥ ६४ ॥ नम आस्तीकजननि जनन्यै जगतां मम ॥ नमो जगत्कारणायै जरत्कारुस्त्रियै नमः ॥६५॥ नमो नागभगिन्यै च योगिन्यै च नमोनमः ॥ नमश्चिरं तपस्विन्यै सुखदायै नमोनमः ॥ ६६ ॥ नमस्तपस्यारूपायै फलदायै नमोनमः ॥ सुशीलायै च साध्व्यै च शांतायै च नमोनमः ॥ ६७ ॥ इत्येवमुक्त्वा भक्त्या च प्रणनाम प्रयत्नतः ॥ तुष्टा देवी वरं दत्त्वा सत्वरं स्वालयं ययौ ॥ ६८ ॥ ब्रह्मरुद्रवैनतेयाः समाजग्मुर्निजालयम् ॥ धन्वंतरिश्च भगवाञ्जगाम निजमंदिरम् ॥ ६९ ॥ जग्मुर्नागाः प्रहृष्टाश्च फणाराजिविराजिताः ॥ इत्येवं कथितं सर्वं स्तवराजं मया तव ॥ ७० ॥ विधिना मातरं भक्तिमास्तीकश्च चकार

ह ॥ तदा तुष्टा जगद्गौरी पुत्रं तं मुनिपुंगवम् ॥ ७१ ॥ इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत् ॥ ॥ वंशजानां नागभयं नास्ति तस्य न संशयः ॥ ७२ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे धन्वंतरिदर्पभंगमनसाविजयो नामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सर्वेषां दर्पभंगश्च कथितश्च श्रुतस्त्वया ॥ क्षुद्राणां महतां चैव कृत एव न संशयः ॥ १ ॥ अधुना च समुत्तिष्ठ गच्छ वृंदावनं वनम् ॥ गोपिका विरहार्ताश्च शीघ्रं पश्यामि सुन्दरि ॥ २ ॥ ॥ ॥ श्रीनारायण उवाच ॥ ॥ इत्येवं वचनं श्रुत्वा मानिनी रसिकेश्वरी ॥ उवाच कृष्णं नय मां न शक्ता गंतुमीश्वर ॥ ३ ॥ राधिका वचनं श्रुत्वा प्रहस्य मधुसूदनः ॥ मामारुहेत्यैवमुक्त्वा सोंतर्धानं चकार ह ॥ ४ ॥ सा मनोयायिनी राधा कृत्वा च रोदनं क्षणम् ॥ इतस्ततस्तमन्वेष्य वृंदारण्यं जगाम सा ॥ ५ ॥ विवेश चंदनवनं रुदंती शोककातरा ॥ ददर्श गोपिकास्तत्र शोकार्ता भयविह्वलाः ॥ ॥ ६ ॥ ताम्रास्या घूर्णनयना भ्रमंतीः सर्वकाननम् ॥ नाथ नाथेति कुर्वंतीर्निराहारा रुषान्विताः ॥ ७ ॥ ता दृष्ट्वा राधिका सा च प्रेमविच्छेदकातरा ॥ कथयामास वृत्तांतं मलयभ्रमणादिकम् ॥ ८ ॥ ताभिः सार्धं च सा राधा रुरोद विरहातुरा ॥ हा नाथ नाथे त्युच्चार्य विलप्य च मुहुर्मुहुः ॥ ९ ॥ विनिंद्य कृष्णं कोपेन तर्जयामास च क्षणम् ॥ क्षणं शरीरमुत्स्रष्टुं कोपात्सर्वाः समुद्यताः ॥ ॥ १० ॥ एतस्मिन्नंतरे कृष्णस्तत्र चंदनकानने ॥ स्वात्मानं दर्शयामास राधिकां गोपिकागणम् ॥ ११ ॥ राधा गोपांगनाभिश्च दृष्ट्वा प्राणेश्वरं मुदा ॥ सस्मिता च प्रदुद्राव पुलकांचितविग्रहा ॥ १२ ॥ तूर्णं कृष्णं समाश्लिष्य जहार मुरलीं रुषा ॥ मालां च पीत वसनं भग्नं कृत्वा च मानिनी ॥ १३ ॥ पुनः संधारयामास वस्त्रं मालां मनोहराम् ॥ विनोदमुरलीं तुष्टा वृंदावनविनोदिनी ॥ १४ ॥ चंदनागुरुकस्तूरीकुंकुमाक्तं च कातरम् ॥ मुहुर्मुहुर्मुखं वीक्ष्य चुचुंब परमादरम् ॥ १५ ॥ क्षणं संतर्जयामास क्षणं स्तोत्रं चकार ह ॥ सकर्पूरं च तांबूलं क्षणं तस्मै ददौ मुदा ॥ १६ ॥ अथ गोपांगनाः सर्वा रुरुदुः प्रेमविह्वलाः ॥ सर्वं निवेदनं चक्रुः स्वदुःखं विरहो द्भवम् ॥ १७ ॥ देहत्यागं च स्नानं च स्वाहारस्य विसर्जनम् ॥ वनेवनेहर्निशं च शश्वद्भ्रमणमेव च ॥ १८ ॥ क्षणं तं भर्त्सयामासुः स्तोत्रं

चक्रुः क्षणं मुदा ॥ क्षणं ददुर्भूषणं च क्षणं तस्मै च चंदनम् ॥ १९ ॥ काश्चिदूचुः प्राणचोरं पश्य रक्षेति संततम् ॥ एवं पुनर्न कर्तव्य मनेनेति च काश्चन ॥ २० ॥ काश्चिदूचुरिमं मध्ये यूयं कुरुत सत्वरम् ॥ निबद्धप्रेमपाशेन हृदये चेति काश्चन ॥ २१ ॥ काश्चिदूचुरयं नास्ति प्रतीतिर्नि कदाचन ॥ यत्नाच्चेतनचोरं च पश्य पश्येति काश्चन॥२२॥ काश्चिदूचुर्निष्ठुरोऽयं नरघातीतिकोपतः॥ न पुनर्वदते मां च काश्चनेति च नारद ॥ २३ ॥ निर्जनानि च रम्याणि यानि यानि वनानि च ॥ भ्रमेयुर्गोपिकास्तानि कृष्णेन सह कौतुकात् ॥ २४ ॥ एवं तं गोपिकाः सर्वा मध्ये कृत्वा सदीश्वरम् ॥ ययुर्वनांतरे यत्र सुरम्यं रासमंडलम् ॥ २५ ॥ रासं गत्वा स्वर्णपीठे तस्थौ स रसिकेश्वरः ॥ निशि भाति यथाकाशे चंद्रस्तारागणैः सह ॥ २६ ॥ नानामूर्तीर्विधायात्र सह ताभिर्जनार्दनः॥ चकार च पुनः क्रीडां कामुकीनां मनोहराम् ॥ २७ ॥ स्वयं राधां करे धृत्वा पूर्वोक्तं रतिमंदिरम् ॥ विश्वकर्मविनिर्माणमारुरोह स्मरातुरः ॥ २८ ॥ चंदनागुरुकस्तूरीकुंकुमाक्तं सुवासितम् ॥ तत्र चंपकतल्पे स सुष्वाप च तया सह ॥ २९ ॥ नानाप्रकारशृंगारं कामशास्त्रविशारदः ॥ चकार कामी क्रीडां च कामिन्या सह कौतुकी ॥ ३० ॥ बभूव सुरतिस्तत्र सुचिरं च तयोर्मुने ॥ रतिनिष्ठा तयो रम्या विरतिर्नास्ति तत्क्षणम् ॥ ३१ ॥ एवं तौ तस्थतुस्तत्र राधाकृष्णौ रसोत्सुकौ ॥ तस्थुस्ता गोपिकाभिश्च सुरतौ कृष्णमूर्तयः ॥ ३२ ॥ ॥ नारद उवाच ॥ ॥ आदौ राधां समुच्चार्य पश्चात्कृष्णं विदुर्बुधाः ॥ निमित्तमस्य मां भक्त वद भक्तजनप्रिय ॥३३॥ ॥ श्रीनारायण उवाच ॥ ॥ निमित्तमस्य त्रिविधं कथयामि निशामय ॥ जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता ॥ ३४ ॥ गरीयसी त्रिजगतां माता शतगुणैः पितुः ॥ राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ श्रुतः ॥ ३५ ॥ कृष्णराधेशगौरीति लोके न च कदा श्रुतः ॥ प्रसीद रोहिणीचंद्र गृहाणार्घ्यमिदं मम ॥ ३६ ॥ गृहाणार्घ्यं मया दत्तं संज्ञया सह भास्कर ॥ प्रसीद कमलाकांत गृहाण मम पूजनम् ॥ ३७ ॥ इति दृष्टं सामवेदे कौथुमे मुनिसत्तम ॥ राशब्दोच्चारणादेव स्फीतो भवति माधवः ॥ ३८ ॥ धाशब्दोच्चारतः पश्चाद्धावत्येव ससंभ्रमः ॥ आदौ पुरुषमुच्चार्य पश्चात्प्रकृतिमुच्चरेत् ॥ ३९ ॥ स भवेन्मातृघाती च वेदातिक्रमणे मुने ॥ त्रैलोक्ये

भारतं धन्यं कर्मक्षेत्रं च पुण्यदम् ॥ ४० ॥ ततो वृंदावनं पुण्यं राधापादाब्जरेणुना ॥ षष्टिवर्षसहस्राणि तपस्तप्तं च वेधसा ॥ राधिका
चरणांभोजपादरेणूपलब्धये ॥ ४१ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे राधामाधवयो
रासवर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ नारद उवाच ॥ ॥ समतीते पूर्णमासे किं चकार जगत्पतिः ॥ रहस्यं किं
बभूवाथ तद्भवान्वक्तुमर्हति ॥१॥ ॥ श्रीनारायण उवाच॥ ॥ रासं निवर्त्य रासे च रासेश्वर्या समन्वितः ॥ स्वयं रासेश्वरस्तस्माद्यमुना
पुलिनं ययौ ॥ २ ॥ तत्र स्नात्वा जलं पीत्वा निर्मलं निर्मले जले ॥ सार्द्धं गोपांगनाभिश्च जलक्रीडां चकार सः ॥ ३ ॥ ततो
जगाम भगवान्भांडीरं राधया सह ॥ गोपांगनाश्च स्वगृहान्प्रययुर्विरहातुराः ॥ ४ ॥ क्रीडां चकार रहसि भांडीरे मालतीवने ॥
मालतीपुष्पशय्यायां रम्यायां रमणोत्सुकः ॥ ५ ॥ कृत्वा क्रीडां च तत्रैव वासंतीकाननं ययौ ॥ रेमे तत्रैव रासेशो वसंते सुमनोहरे
॥ ६ ॥ तत्रैव रमणं कृत्वा ययौ चंदनकाननम् ॥ चंदनोक्षितसर्वांगो गृहीत्वा चंदनोक्षितम् ॥ ७ ॥ रम्ये चंदनतल्पे च स्निग्धे चंदन
पल्लवे ॥ पूर्णचंद्रे समुदिते विजहार तया सह ॥ ८ ॥ कृत्वा विहारं तत्रैव ययौ चंपककाननम् ॥ रम्ये चंपकतल्पे च चकार रतिमी
श्वरीम् ॥ ९ ॥ रतिं निर्वृत्य तत्रैव ययौ पद्मवनं प्रभुः ॥ पद्मपत्रसमाकीर्णे तल्पेतिसुमनोहरे ॥१०॥ सार्धं तत्र पद्ममुख्या शीतेन पद्म
वायुना ॥ चकार सुखसंभोगं ययौ निद्रां तया सह ॥ ११ ॥ विहाय निद्रां निद्रेशो ददर्श निद्रितां प्रियाम् ॥ शयानां पद्मतल्पे च
सुखसंभोगमात्रतः ॥ १२ ॥ दृष्ट्वा मुखं च घर्माक्तं शरच्चंद्रविनिंदितम् ॥ अतिसंलुप्तसिंदूरं लुप्तं कज्जलमुल्बणम् ॥ १३ ॥ संलुप्ता
धररागं च संलुप्तगंडपत्रकम् ॥ विस्रस्तकबरीभारं नेत्रोत्पलविमुद्रितम् ॥ १४ ॥ रत्नकुंडलयुग्मेनामूल्येन परिशोभितम् ॥ राजितं
मौक्तिकेनैव गजराजोद्भवेन च ॥ १५ ॥ प्रेम्णा स्वसूक्ष्मवस्त्रेण वह्निशुद्धेन माधवः ॥ चकार मार्जनं भक्त्या तद्वक्त्रं भक्तवत्सलः
॥ १६ ॥ केशसंमार्जनं कृत्वा निर्माय कबरीं हरिः ॥ माधवीमालतीमालाजालेन परिशोभिताम् ॥ १७ ॥ रत्नपट्टसूत्रबद्धां वाम
वक्रां मनोहराम् ॥ अतीव वर्तुलाकारां कंदपुष्पसुशोभिताम् ॥ १८ ॥ ददौ सिंदूरतिलकमधश्चंदनमुज्ज्वलम् ॥ कस्तूरीबिंदुना

सार्द्धं परितः परिशोभिताम् ॥ १९ ॥ चकार पत्रकं गंडयुग्मे चित्रविचित्रितम् ॥ प्रददौ कज्जलं भक्त्या नेत्रोत्पलसमुज्ज्वलम् ॥ ॥ २० ॥ चकाराधररागं च राधायाश्चानुरागतः ॥ कर्णभूषणयुग्मं च चकारातीव निर्मलम् ॥ २१ ॥ अमूल्यरत्नहारं च स्तनभार युगोज्ज्वलम् ॥ ददौ कंठे च वैकुंठो मणिराजिविराजितम् ॥ २२ ॥ वह्निशुद्धांशुकं दिव्यममूल्यं विश्वरत्नतः ॥ वासयामास वसनं कस्तूरीकुंकुमाक्तकम् ॥ २३ ॥ प्रददौ पादयुगुले रत्नमंजीररंजितम् ॥ चकारालक्तकं भक्त्या पादांगुलिनखेषु च ॥ २४ ॥ चकार सेवां सेव्यायाः सेव्यस्त्रिजगतां सताम् ॥ अहो सेवकसंभक्त्या श्वेतेन चामरेण च ॥ २५ ॥ सर्वभावविदां श्रेष्ठो बोधज्ञः कामशास्त्रवित् ॥ कामिनीं बोधयामास वासयामास वक्षसि ॥ २६ ॥ प्रेम्णा च प्रददौ तस्यै सद्रत्नदर्पणं शुभम् ॥ सुवेषदर्शनार्थं च मुखचन्द्रं च मार्जितुम् ॥ २७ ॥ नानापुष्पैर्विरचितामम्लानां चंदनोक्षिताम् ॥ गंडे सौभाग्ययुक्तायाः सौभाग्येन ददौ हरिः ॥ २८ ॥ कस्तूरीकुंकुमाक्तं च सुगंधि चंदनं ततः ॥ ददौ प्रियायाः सर्वांगे प्रियः प्रेमभरेण च ॥ २९ ॥ पारिजातस्य कुसुमं दत्तं रहसि ब्रह्मणा ॥ प्रददौ तत्कबर्यां च ललितायाश्च नारद ॥ ३० ॥ कमलं निर्मलं दिव्यं सहस्रदलमुज्ज्वलम् ॥ शिवेन दत्तं रहसि ददौ तद्दक्षिणे करे ॥ ३१ ॥ अतिसारं मणींद्राणां मणिरत्नं च कौस्तुभम् ॥ दत्तं रहसि धर्मेण तस्यै सुप्रीतये ददौ ॥ ३२ ॥ आसवं रत्नपात्रस्थं दस्रदत्तं च निर्जने ॥ पानार्थं प्रददौ तस्यै कामोन्मादकरं परम् ॥ ३३ ॥ मालतीमाधवीकुंदमंदारचंपकादिकम् ॥ पुष्पं सद्रत्नपात्रस्थं तस्यै सुप्रीतये ददौ ॥ ३४ ॥ सुदुर्लभं च तांबूलं कर्पूरादिसुसंस्कृतम् ॥ भक्षणं कारयामास समयज्ञश्च तां प्रियाम् ॥ ३५ ॥ सुदुर्लभं च विश्वेषु वाक्पतेः परिनिर्मितम् ॥ अनुत्तमममूल्यं च वरुणेन रहःस्थले ॥ ३६ ॥ अतिसूक्ष्ममनुपमं दत्तं भक्त्या विराजितम् ॥ वासयामास वसनं कृत्वा नग्नां च कौतुकात् ॥ ३७ ॥ देवराजेन दत्तं च गजराजेंद्रमौक्तिकम् ॥ नासिकाभूषणं चारु तस्यै सुप्रीतये ददौ ॥ ३८ ॥ एतस्मिन्नंतरे तत्र सुशीलाद्याश्च गोपिकाः ॥ षष्टिः सत्सहचर्यश्च राधायाः सुप्रतिष्ठिताः ॥ ३९ ॥ षष्टिसत्कोटिगोपीभिः सार्धं संहृष्टमानसाः ॥ आययुः पादचिह्नेन प्रियस्य वहतः प्रियाम् ॥ ४० ॥

काश्चिच्चंदनहस्ताश्च काश्चिच्चामरवाहिकाः ॥ काश्चित्कस्तूरिहस्ताश्च मालाहस्ताश्च काश्चन ॥ ४१ ॥ काश्चित्सिंदूरहस्ताश्च काश्चित्कंकतिकाकराः ॥ काश्चिदलक्तककरा वस्त्रहस्ताश्च काश्चन ॥ ४२ ॥ काश्चिद्दर्पणहस्ताश्च पुष्पपात्रधरा वराः ॥ काश्चित्क्रीडापद्महस्ता मालाहस्ताश्च काश्चन ॥ ४३ ॥ काश्चिदासवहस्ताश्च काश्चिद्भूषणवाहिकाः ॥ करतालकराः काश्चिन्मृगंवाहिकाः पराः ॥ ४४ ॥ स्वरयंत्रकराः काश्चिद्वीणाहस्ताश्च काश्चन ॥ षट्त्रिंशद्रागरागिण्यो गोपिकारूपधारिकाः ॥ ४५ ॥ गोलोकादागता याश्च भारतं राधया सह ॥ काश्चिज्जगुश्च ननृतुस्तत्रागत्य च काश्चन ॥ ४६ ॥ काश्चिच्चक्रुश्च सेवां च राधायाः श्वेतचामरैः ॥ काश्चिच्चक्रुश्च देव्याश्च पादसंवाहनं मुदा ॥ ४७ ॥ काचिद्ददौ च तांबूलं भक्षणार्थे महामुने ॥ एवं कौतुकयुक्तश्च पुण्ये वृंदावने वने ॥ ॥ ४८ ॥ प्रतस्थौ गोपिकासार्द्धं राधावक्षःस्थलस्थितः ॥ क्षणं पपौ च माध्वीकं प्रियया सह माधवः ॥ ४९ ॥ क्षणं चखाद तांबूलं क्षणं निद्रां ययौ मुदा ॥ क्षणं चकार शृंगारं रत्ननिर्मितमंदिरे ॥ ५० ॥ क्षणं जलविहारं च चकार यमुनाजले ॥ इत्येवं कथिता वत्स रासक्रीडा हरेरहो ॥ ५१ ॥ स्वेच्छामयस्यात्मनश्च परिपूर्णतमस्य च ॥ निर्गुणस्य स्वतंत्रस्य परस्य प्रकृतेः प्रभोः ॥ ५२ ॥ ब्रह्मविष्णुशिवादीनामीश्वरस्य परस्य च ॥ कृष्णजन्मरहस्यं च बालक्रीडनमीप्सितम्॥५३॥ उक्तं किशोरचरितं किं भूयः श्रोतुमिच्छसि ॥ ॥ ५४ ॥ इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे श्रीकृष्णरासक्रीडावर्णनं नाम त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ नारद उवाच ॥ ॥ अतः परं किं रहस्यं बभूव मुनिसत्तम ॥ कथं जगाम भगवान्मथुरां नंदमंदिरात् ॥ १ ॥ नंदो दधार प्राणांश्च विच्छेदेन हरेः कथम् ॥ गोपांगना यशोदा वा कृष्णैकतानमानसाः ॥२॥ चक्षुर्निमेषविच्छेदाद्या राधा न हि जीवति ॥ कथं दधार सा देवी प्राणान्प्राणेश्वरं विना ॥ ३ ॥ येये तत्संगिनो गोपाः शयनासनभोगतः ॥ कथं विसस्मरुस्ते च तादृशं बांधवं व्रजे ॥४॥ श्रीकृष्णो मथुरां गत्वा किं किं कर्म चकार सः ॥ स्वर्गारोहणपर्यंतं तद्भवान्वक्तुमर्हति ॥ ५ ॥ ॥ श्रीनारायण उवाच ॥ कंसश्चकार यज्ञं च समाहूतो धनुर्मखम् ॥ जगाम तत्र भगवान् तेन राज्ञा निमंत्रितः ॥ ६ ॥ राजा प्रस्थापयामास चाक्रूरं भग

वत्प्रियम् ॥ अक्रूरः प्रेरितो राज्ञा गत्वा च नंदमंदिरम् ॥ ७ ॥ श्रीकृष्णं च गृहीत्वा स सगणं मथुरां गतः ॥ कृष्णः. श्रीमथुरां गत्वा
जघान नृपतिं मुने ॥ ८ ॥ जघान रजकं चैव चाणूरं मुष्टिकं गजम् ॥ चकार पित्रोरुद्धारं बांधवानां च बांधवः ॥ ९ ॥ कुब्जया सह
शृंगारं कृत्वा च कौतुकेन च ॥ तां च प्रस्थापयामास गोलोकं गोपिकापतिः ॥ १० ॥ चकार कृपया विष्णुर्मालाकारस्य मोक्षण
म् ॥ कृपया चोद्धवद्वारा बोधयामास गोपिकाः ॥ ११ ॥ तदोपनीतो भगवानवंतीनगरं ययौ ॥ चकार विद्याग्रहणं मुनेः सांदीप
नेर्गुरोः ॥ १२ ॥ ततो जित्वा जरासंधं निहत्य यवनेश्वरम् ॥ उग्रसेनं च नृपतिं चकार विधिपूर्वकम् ॥ १३ ॥ गत्वा समुद्रनिकटं
निर्माय द्वारकां पुरीम् ॥ जहार रुक्मिणीं देवीं जित्वा नृपतिसंघकम् ॥ १४ ॥ कालिंदीं लक्ष्मणां शैब्यां सत्यां जांबवतीं सतीम् ॥
मित्रविंदां नाग्नजितीं समुद्वाहं चकार सः ॥ १५ ॥ निहत्य नरकं भूपं रणेन दारुणेन च ॥ पत्नीषोडशसाहस्रं विहारं च चकार सः ॥
॥ १६ ॥ जहार पारिजातं च जित्वा शक्रं च लीलया ॥ चिच्छेद बाणहस्तांश्च जित्वा च चंद्रशेखरम् ॥ १७ ॥ पौत्रस्य मोक्षणं
कृत्वा पुनरागत्य द्वारकाम् ॥ आत्मानं दर्शयामास लोकांश्च प्रतिमंदिरम् ॥ १८ ॥ योगे च वसुदेवस्य तीर्थयात्राप्रसंगतः ॥ प्राणा
धिष्ठातृदेवीं च ददर्श तत्र राधिकाम् ॥ १९ ॥ पूर्णे च शतवर्षे च सुदाम्नः शापमोक्षणे ॥ पुनर्ययौ तया सार्द्धं पुण्यं वृन्दावनं
वनम् ॥ २० ॥ पुनश्चतुर्दशाब्दं च तया सार्धं जगत्पतिः ॥ चकार रासं रासे च पुण्यक्षेत्रे च भारते ॥ २१ ॥ पूर्णमेकादशाब्दं
च निवृत्य नंदमंदिरे ॥ मथुरायां द्वारकायां पूर्णमब्दशतं विभुः ॥ २२ ॥ चकार भारहरणं पृथिव्यां पृथुविक्रमः ॥ पंचविंशतिवर्षं
च शतवर्षाधिकं मुने ॥ २३ ॥ तिष्ठञ्जगाम गोलोकं पृथिव्यां च पुरातनः ॥ यशोदायै च नंदाय वृषभानाय धीमते ॥ २४ ॥
राधामात्रे कलावत्यै ददौ सामीप्यमोक्षणम् ॥ कृष्णेन सार्द्धं गोपी च राधिका च कुतूहलात् ॥ २५ ॥ निबध्य धर्मसेतुं च वेदोक्तं
च युगे युगे ॥ इत्येवं कथितं सर्वं समासेन महामुने ॥ २६ ॥ श्रीकृष्णचरितं रम्यं चतुर्वर्गफलप्रदम् ॥ ब्रह्मादिस्तंबपर्यंतं सर्वं नश्वरमेव ॥१४२॥
च ॥ २७ ॥ भजंतं परमानंदं सानंदं नंदनंदनम् ॥ स्वेच्छामयं परं ब्रह्म परमात्मानमीश्वरम् ॥ २८ ॥ परमव्ययमव्यक्तं भक्तानुग्रहवि

ब्रह्म ॥ सत्यं नित्यं स्वतंत्रं च सर्वेशं प्रकृतेः परम् ॥ २९ ॥ निर्गुणं च निरीहं च निराकारं निरंजनम् ॥ ३० ॥ इतिश्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे श्रीकृष्णराधिकासंवादो नाम चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ पूर्वार्द्धं समाप्तम् ॥ ॥ ॥ शुभं भवतु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

---

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजेन खेमराजेन स्वकीये श्रीवेङ्कटेश्वरयन्त्रालयेऽङ्कित्वा प्रकाशितम् । संवत् १९६६ शके १८३१.



॥ अथ ब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्ध प्रारंभः ॥

श्रीगणेशाय नमः ॥ ॥ श्रीनारायण उवाच ॥ ॥ स एव भगवान्कृष्णः सर्वात्मा पुरुषः परः ॥ दुराराध्योतिसाध्यश्च सर्वाराध्यः सुखप्रदः ॥ १ ॥ निजभक्तातिसाध्यश्च भक्तस्याराध्य एव च ॥ शश्वद्दश्यः स्वभक्तस्याभक्तस्याद्दश्य एव च ॥२॥ दुर्ज्ञेयं तस्य चरितं कार्यं हृदय एव च ॥ बद्धास्तन्मायया सर्वे मोहिताश्च दुरंतया ॥ ३ ॥ यद्भयाद्वाति वातोयं कूर्मं धत्ते निराश्रयः ॥ कूर्मोनंतं विधत्ते च यद्भयेन निरंतरम् ॥ ४ ॥ बिभर्ति शेषो विश्वं च यद्भयेन च नारद ॥ सहस्रशीर्षा पुरुषः शिरसश्चैकदेशतः ॥.५ ॥ सप्तसागरसंयुक्ता सप्तद्वीपा वसुंधरा ॥ शैलकाननसंयुक्ता पातालाः सप्त एव च ॥ ६ ॥ सप्तस्वर्गाश्च विविधा ब्रह्मलोकसमन्विताः ॥ एवं विश्वं त्रिभुवनं कृत्रिमं परिकीर्तितम् ॥ ७ ॥ यद्भयेन विधात्रा च प्रतिसृष्टौ च निर्मितम् ॥ एवं विश्वान्यसंख्यानि लोमकूपैर्महान्विराट् ॥८॥ यद्भयेन विधत्ते च यदंशो ध्यायते हि यम् ॥ विष्णुः पाति च संसारं यद्भयेन कृपानिधिः ॥ ९ ॥ कालाग्निरुद्रो यद्भीतः कालः संहरते प्रजाः ॥ मृत्युंजयो महादेवो यद्भयाद्ध्यायते च यम् ॥ १० ॥ षड्गुणैरनुरागैश्च विरागी विरतः सदा ॥ यद्भयेन दहत्यग्निः सूर्यस्तपति यद्भयात् ॥ ११ ॥ यद्भयाद्वर्षतींद्रश्च मृत्युश्चरति जंतुषु ॥ यद्भयेन यमः शास्ता पापिनां धर्म एव च ॥ १२ ॥ धत्ते च धरणी लोकान्यद्भयेन चराचरान् ॥ सूयते प्रकृतिः सृष्टौ यद्भयान्महदादिकम् ॥ १३ ॥ दुर्ज्ञेयं तदभिप्रायं को वा जानाति पुत्रक ॥ यत्प्रभावं न जानंति ब्रह्मविष्णुमहेश्वराः ॥ १४ ॥ कथं जानामि तच्चेष्टामहं वत्स सुमंदधीः ॥ कथं जगाम मथुरां त्यक्त्वा वृन्दावनं वनम् ॥ १५ ॥ कथं तत्याज गोपीश्च राधां प्राणाधिकां प्रियाम् ॥ यशोदां बांधवादींश्च नंदं वा नंदनंदनः ॥ १६ ॥ दर्पहा दर्पदः सोपि सर्वेषां सर्वदः सदा ॥ बभंज राधा दर्पं च सुदाम्नः शापकारणात् ॥ १७ ॥ अन्येषां भावनाहेतोर्ब्रह्मप्राप्तिस्तथा भवेत् ॥ एवं किंचिद्वितर्कं च कुरुते कमलोद्भवः ॥ १८ ॥ चकार दर्पभंगं च महाविष्णुः पुरा विभुः ॥ ब्रह्मणश्च तथा विष्णोः शेषस्य च शिवस्य च ॥ १९ ॥ धर्मस्य च यमस्यापि सांबस्य चंद्रसूर्ययोः ॥ गरुडस्य च वह्नेश्च गुरोर्दुर्वाससस्तथा ॥ २० ॥ दौवारिकस्य भक्तस्य जयस्य विजयस्य च ॥ सुराणामसुराणां च भवतः कामशक्रयोः ॥ २१ ॥ लक्ष्मणस्यार्जुनस्यापि बाणस्य च भृगोस्तथा ॥

सुमेरोश्च समुद्राणां वायोश्च वरुणस्य च ॥ २२ ॥ सरस्वत्याश्च दुर्गायाः पद्मायाश्च भुवस्तथा ॥ सावित्र्याश्चैव गंगाया मनसायास्तथैव च ॥२३॥ प्राणाधिष्ठातृदेव्याश्च प्रियायाः प्राणतोपि च ॥ प्राणाधिकाया राधाया अन्येषामपि का कथा ॥२४॥ हत्वा दर्पं च सर्वेषां प्रसादं च चकार सः ॥ कर्ता हर्ता पालयिता स्रष्टा स्रष्टुश्च सर्वतः ॥ २५ ॥ यं स्तोतुमीशो नालं च पंचवक्त्रैस्तु शंकरः ॥ स्तोतुं नालं चतुर्वक्त्रो विधाता जगतामपि ॥ २६ ॥ स्तोतुं नालमनंतश्च सहस्रवदनैरहो ॥ स्वयं विष्णुर्विश्वव्यापी नालं स्तोतुं जनार्दनः ॥ २७ ॥ महाविराण्न शक्तोपि यं स्तोतुं परमेश्वरम् ॥ कंपिता यस्य पुरतः प्रकृतिः परमात्मनः॥२८॥ सरस्वती जडीभूता यं स्तोतुं परमेश्वरम् ॥ महिमानं न जानंति वेदा यस्य च नारद ॥२९॥ इत्येवं कथितो ब्रह्मन्प्रभावः परमात्मनः ॥ निर्गुणस्य च कृष्णस्य किं भूयः श्रोतुमिच्छसि ॥३०॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे श्रीकृष्णप्रभाववर्णनं नाम पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ नारद उवाच ॥ ॥ किमपूर्वं श्रुतं ब्रह्मन्रहस्यं परमाद्भुतम् ॥ अनंतचरितं धन्यमनंतस्याच्युतस्य च ॥ १ ॥ कथं कृष्णो महाविष्णोर्दर्पभंगं चकार सः ॥ अन्येषां वा कथमहो तद्भवान्वक्तुमर्हति ॥ २ ॥ स्वतः श्रीकृष्णचारितमतीव मधुरं श्रुतौ ॥ अतीव मधुरं रम्यं काव्यं कविमुखात्ततः ॥ ३ ॥ ॥ श्रीनारायण उवाच ॥ ॥ महाविष्णोरहंकारो बभूव सहसेति च ॥ सर्वं मल्लोमकूपेषु विश्वान्येवाहमीश्वरः ॥४॥ संहारभैरवो भूत्वा तं सजग्रास लीलया ॥ स्थिते मूर्धावशेषे च प्रसादं तं चकार सः ॥ ५ ॥ सर्वात्मना ध्यायमानस्तुतौ भीतं कृपानिधिः ॥ तच्छरीरं सुसंपन्नं पुनरेव चकार सः ॥ ६ ॥ ब्रह्मणः सहसा ब्रह्मन्निति दर्पो बभूव ह ॥ अहं त्रिजगतां धाता कर्ताहमीश्वरः स्वयम् ॥ ७ ॥ मत्परः पूजितो नास्ति मत्परः पूजितेंद्रियः ॥ इत्येवं मनसा कृत्वा बहुदर्पो बभूव ह ॥ ८ ॥ तं ब्रह्मणां समूहं च दर्शयामास तत्क्षणम् ॥ गोलोके स्वसमीपे च वसंतं पुरतो विभोः ॥ पंचवक्त्रं चतुर्वक्त्रं षड्वक्त्रं च ततोधिकम् ॥ ९ ॥ शतवक्त्रं च प्रत्येकं ब्रह्मांडौघं च लीलया ॥ त्यक्तुकामं स्वदेहं च व्रीडया नतकंधरम् ॥ ॥ १० ॥ पुनः प्रसादं कृपया तं चकार कृपानिधिः ॥ कालेन मोहिनीद्वारा तमपूज्यं चकार सः ॥ ११ ॥ स्वकन्यां

दर्शयित्वा तं सकामं च चकार ह ॥ पुनस्तद्दर्पभंगं च शिवद्वारा चकार सः ॥ १२ ॥ तत्याज लज्जया देहं पुनर्देहं दधार
सः ॥ पुनश्चकार तं पूज्यं ब्रह्माणं ब्राह्मणः प्रभुः ॥ १३ ॥ ज्ञानं ददौ महाज्ञानी ज्ञानानंदः सनातनः ॥ विष्णोर्बभूव गर्वश्च
जगत्पाताहमीश्वरः ॥ १४ ॥ तमात्मविस्मृतं कृष्णश्चकार रामजन्मनि ॥ अहं विश्वं बिभर्मीति शेषो दर्पी बभूव ह ॥ १५ ॥
तद्दर्पं गरुडद्वारा चूर्णीभूतं चकार सः ॥ एकदा पूजितो नागैर्गरुडः कृष्णवाहनः ॥ १६ ॥ न पूजितश्च शेषेण स्वदर्पेण
पुरा मुने ॥ गरुडेन जितं क्रोधात्तमनंतं मनस्विनम् ॥ १७ ॥ चकार मोक्षणं तस्य श्रीकृष्णश्च कृपानिधिः ॥ स्वयं
शिवः स्वदर्पाच्च विवाहं न चकार सः ॥ १८ ॥ तं कृत्वा मायया मोहं कारयामास स्त्रीयुतम् ॥ पुनर्जहार पत्नीं च दक्षकन्यां
महासतीम् ॥ १९ ॥ वर्षं शुशोच तद्देहं क्रोडे कृत्वा च शंकरः ॥ नानास्थानं च बभ्राम रुदञ्छोकान्मुहुर्मुहुः ॥ २० ॥
जन्मांतरे पुनः प्राप्य तां सतीं पार्वतीं मुदा ॥ विसस्मार च स्वज्ञानं दक्षशप्तः पुनः शिवः ॥ २१ ॥ पुनश्चांगिरसद्वारा
स्मारयामास सत्वरम् ॥ एकदा सरथः शंभुः प्रेरितस्त्रिपुरे पुरा ॥ २२ ॥ हत्वा दैत्यं शिवद्वारा त्रिपुरारिं चकार तम् ॥ सर्वं
वरं च सर्वस्मै दातुं शंभुः कृपानिधिः ॥ २३ ॥ स्वयं कल्पतरुर्भूत्वा प्रतिज्ञां च चकार सः ॥ वृकासुरोऽनुष्ठानं च कृत्वा वव्रे वरं
विभुम् ॥ २४ ॥ दास्यामि हस्तं यन्मूर्ध्नि भस्मासाद्भवतु क्षणात् ॥ जगाद जगतां नाथ ईप्सितं ते भविष्यति ॥ २५ ॥ इति लब्ध्वा
वरं रुद्राद्गच्छंतं शंकरं विभुम् ॥ हस्तं दातुं च तन्मूर्ध्नि प्राधावत्सत्वरं पुरा ॥ २६ ॥ अतीव भीतः शंभुश्च जगाम शरणं हरिम् ॥
भगवांश्च शिवस्यार्थे दैत्यं भस्मीचकार सः ॥ २७ ॥ शिवं युद्धं च कुर्वंतं बाणयुद्धे पुरा विभुः ॥ लीलया जृंभणास्त्रेण जडीभूतं चकार
सः ॥ २८ ॥ समागतं दक्षयज्ञे शंभुं दंभेन लीलया ॥ वारयामास भगवान्हस्तं दत्त्वा च तद्गले ॥ २९ ॥ केदारकन्यकाद्वारा शप्तो
धर्मोऽतिदैवतः ॥ बभूवातिकृशो भीतः कुहामेव यथा शशी ॥ ३० ॥ तदा तस्य च शापांते सत्ये पूर्णो बभूव ह ॥ त्रिपाद्बभूव त्रेतायां
द्वापरे च द्विपादिति ॥ ३१ ॥ एकपाच्च कलौ सोऽपि कलेरंते पुनः क्षयः ॥ षोडशांशोऽति क्लिष्टश्च सस्मार चरणं विभोः ॥ ३२ ॥

तदा सत्ययुगारंभे परिपूर्णोभवत्पुनः ॥ पुनर्युगानुरोधेन क्रमेण च पुनः क्षयः ॥ ३३ ॥ यमो मांडव्यशापेन शूद्रयोनिमवाप ह ॥
तदा पुनः शताब्दांते पुनः शुद्धो बभूव ह ॥ ३४ ॥ सांबो विमातृशापेन गलत्कुष्ठी बभूव सः ॥ चंद्रो दर्पमदेनैव जहार च गुरोः
प्रियाम् ॥ ३५ ॥ बभूव दर्पभंगोस्य यक्ष्मग्रस्तो बभूव सः ॥ सूर्यो दर्पात्तेजसश्च हंतुं शंकरकिंकरम् ॥ ३६ ॥ सुमालीत्यभिधं दैत्यं
जगामाशु गिरिं प्रति ॥ अहर्निशं दीप्तिकरं कुर्वंतं विषयं रवेः ॥ ३७ ॥ सूर्येण भीतो दैत्यश्च शंकरं शरणं ययौ ॥ सूर्यं दृष्ट्वा शंकरश्च
जग्राह शूलमेव च ॥ भीतो दुद्राव सूर्यश्च दृष्ट्वा तं शूलिनं मुने ॥ ३८ ॥ जघान काश्यां शूलेन शूली काशीश्वरो रविम् ॥ मूर्च्छां
संप्राप्य शूलेन दर्पभंगो बभूव ह ॥ ३९ ॥ सांद्रांधकारः सहसा जग्राह पृथिवीतलम् ॥ आशुतोषो महादेवो जीवयामास तत्क्षणम्
॥ ४० ॥ तुष्टाव शंकरं सूर्यो लज्जितोपि भयेन च ॥ कृत्वा तमाशिषं तुष्टो ययौ गेहं कृपानिधिः ॥ ४१ ॥ विभुर्गरुत्मतो दर्पं बभंज
लीलया पुरा ॥ निःश्वासैः प्रेरितस्यापि शिवस्य वृषभस्य च ॥ ४२ ॥ आगच्छतश्च वैकुंठं पृष्ठे कृत्वा शिवं पुरा ॥ द्रष्टुं समागतं
भक्त्या देवं नारायणं परम् ॥ ४३ ॥ ॥ वह्निर्दर्पी भृगोः शापात्सर्वभक्षो बभूव ह ॥ गुरोः स्वभार्याहरणाद्दर्पश्चूर्णो बभूव ह ॥
॥ ४४ ॥ दुर्वाससो दर्पभंगो बभूव ह्यंबरीषतः ॥ सुदर्शनेन चक्रेण विष्णोर्दुर्विषहेण च ॥ ४५ ॥ जयस्य विजयस्यापि दर्पभंगं
चकार सः ॥ वैकुंठात्पतितस्यापि ब्रह्मशापच्छलेन च ॥ ४६ ॥ नृसिंहेण हतः सोपि हिरण्यकशिपुर्यथा ॥ सुकरेण हिरण्याक्षो
लीलया च रसातले ॥ ४७ ॥ रावणः कुंभकर्णश्च निहतौ रामबाणतः ॥ जन्मांतरे च लंकायां ब्रह्मणा प्रार्थितस्य च ॥ ४८ ॥ शिशु
पालो हि निहतः कृष्णबाणेन लीलया ॥ दंतवक्रश्च सहसा परिपूर्णेत्र जन्मनि ॥ ४९ ॥ सुराणां दर्पभंगं च दैत्यद्वारा चकार ह ॥
असुराणां सुरद्वारा विरोधेन परस्परम् ॥ ५० ॥ विधिद्वारा दर्पभंग भवतश्च चकार सः ॥ भवानासीन्नारदश्च पुरा पुत्रः प्रजापतेः
॥ ५१ ॥ गंधर्वश्च पितुः शापाच्छूद्रीपुत्रस्ततः क्रमात् ॥ ततः पुनर्नारदश्च प्रसादादधुना विभोः ॥ ५२ ॥ मम साध्यं विश्वमिति
कामदर्पो बभूव ह ॥ तं प्रमत्तं हरद्वारा भस्मसाच्च चकार सः ॥ ५३ ॥ पुनः कृत्वा प्रसादं तं जीवयामास लीलया ॥ ऐकांतिकं

च तद्रक्तं स च नास्त्रं करोति हि ॥ ५४ ॥ चकार दर्पभंगं च दर्पिणो लक्ष्मणस्य च ॥ रणे शंकरशूलेन रावणप्रेरितेन च ॥ ५५ ॥ पुनस्तं जीवयामास रामस्य स्तवनेन च ॥ स्वयं विस्मृतविष्णोश्च ब्रह्मशापेन नारद ॥ ५६ ॥ चकार दर्पभंगं च कार्तवीर्यार्जुनस्य च ॥ जामदग्न्यस्य शस्त्रेणामोघेन पर्शुना पुरा ॥ ५७ ॥ विप्रपुत्रस्य मरणे हरणे कृष्णयोषिताम् ॥ कर्णेन सार्द्धं समरे पार्थदर्पं बभंज सः ॥ ५८ ॥ बाणस्य चोषाहरणे चिच्छेद च भुजान्विभुः ॥ भृगोश्च दक्षयज्ञे च दर्पभंगं चकार सः ॥ ५९ ॥ पर्शुरामस्य रामस्य विवाहे पथि गच्छतः ॥ बभंज दर्पं समरे रामद्वारा पुरा विभुः ॥ ६० ॥ सुमेरोः शृंगभंगं च वायुद्वारा चकार सः ॥ समुद्राणां दर्पभंगं चकारागस्त्यभक्षणात् ॥ ६१ ॥ अकाले सृष्टिहरणे तत्पुत्रमरणे पुरा ॥ कोपयुक्तस्य वायोश्च दर्पभंगं चकार सः ॥ ६२ ॥ उषाहरणयात्रायां द्वारकागमने हरेः ॥ बाणस्य च गवां हेतोर्वरुणं च शशाप सः ॥ ६३ ॥ कलहे गंगया सार्द्धं वाण्या नारायणाग्रतः ॥ सरस्वतीं च तत्याज तस्या दर्पं बभंज सः ॥ ६४ ॥ दर्पयुक्तां च दुर्गां च त्यक्त्वा शंभुर्हिमालये ॥ कामं च भस्मसात्कृत्वा तपसे च ययौ विभुः ॥ ६५ ॥ लज्जामवाप सा देवी तस्या दर्पं बभंज सः ॥ सा ययौ तपसे विष्णोः प्रीतिहेतोः शिवस्य च ॥ ६६ ॥ भारते सुचिरं तप्त्वा देवी विष्णोर्वरेण च ॥ चकार स्वामिनं शंभुं भगवंतं सनातनम् ॥ ६७ ॥ महासौभाग्ययुक्ता सा बभूव शंकरप्रिया ॥ विश्वेषु सर्वदेवीषु पूज्या वंद्या स्तुता सुरैः ॥ ६८ ॥ दर्पयुक्ता महालक्ष्मीर्बभूव सा महामुने ॥ पराभूता पुरा देवी जयेन विजयेन च ॥ ६९ ॥ प्रविशंती विभोर्द्वारं दत्त्वा भक्ताय वांछितम् ॥ निवारिता सा द्वाराच्च तेन दौवारिकेण वै ॥ ७० ॥ यदात्मनस्तिरस्कारं साभिमाना महासती ॥ स्मृत्वा हरेः पादपद्मं देहं त्यक्तुं समुद्यता ॥ ७१ ॥ तदा ब्रह्मा महेशश्च विष्णुर्धर्मश्च भास्करः ॥ चंद्रश्च कामदेवश्च वैश्वानरो धनेश्वरः ॥ ७२ ॥ ऋषयो मुनयश्चैव मनवो विघ्ननाशकाः ॥ महेंद्रो वरुणश्चैव जगत्प्राणो हुताशनः ॥ ७३ ॥ समाययू रुदंतस्ते पद्मायाः पुरतः पुरः ॥ तुष्टुवुश्च महालक्ष्मीं मूलप्रकृतिमीश्वरीम् ॥ ७४ ॥ ॥ देवा ऊचुः ॥ ॥ क्षमस्व भगवत्यंब क्षमाशीले परात्परे ॥ शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते ॥ ७५ ॥ उपमे

सर्वसाध्वीनां देवीनां देवपूजिते ॥ त्वया विना जगत्सर्व मृततुल्यं च निष्फलम् ॥ ७६ ॥ सर्वसंपत्स्वरूपा त्वं सर्वेषां सर्वरूपिणी ॥
रासेश्वर्यधिदेवी त्वं त्वत्कलाः सवयोषितः ॥ ७७ ॥ कैलासे पार्वती त्वं च क्षीरोदे सिंधुकन्यका ॥ स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्य
लक्ष्मीश्च भूतले ॥ ७८ ॥ वैकुंठे च महालक्ष्मीर्देवदेवी सरस्वती ॥ गंगा च तुलसी त्वं च सावित्री ब्रह्मलोकतः ॥ ७९ ॥ कृष्ण
प्राणाधिदेवी त्वं गोलोके राधिका स्वयम् ॥ रासे रासेश्वरी त्वं च वृन्दा वृन्दावने वने ॥ ८० ॥ कृष्णप्रिया त्वं भांडीरे चंद्रा चंद
नकानने ॥ विरजा चंपकवने शतशृंगे च सुन्दरी ॥ ८१ ॥ पद्मावती पद्मवने मालती मालतीवने ॥ कुंददंती कुंदवने सुशीला केत
कीवने ॥ ८२ ॥ कदंबमाला त्वं देवी कदंबकाननेपि च ॥ राजलक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे ॥ ८३ ॥ इत्युक्त्वा देवताः सर्वे
मुनयो मनवस्तथा ॥ रुरुदुर्नम्रवदनाः शुष्ककंठोष्ठतालुकाः ॥ ८४ ॥ इतिलक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम् ॥ यः पठेत्प्रा
तरुत्थाय स वै सर्वं लभेद्ध्रुवम् ॥ ८५ ॥ अभार्यो लभते भार्यां विनीतां च सुतां सतीम् ॥ सुशीलां सुन्दरीं रम्यामतिसुप्रियवादिनीम
॥ ८६ ॥ पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम् ॥ अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् ॥ ८७ ॥ परमैश्वर्ययुक्तं च विद्या
वंतं यशस्विनम् ॥ भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम् ॥८८॥ हतबंधुर्लभेद्बंधुं धनभ्रष्टो धनं लभेत् ॥ कीर्तिहीनो लभेत्कीर्तिं
प्रतिष्ठां च लभेद्ध्रुवम् ॥ ८९ ॥ सर्वमंगलदं स्तोत्रं शोकसंतापनाशनम् ॥ हर्षानंदकरं शश्वद्धर्ममोक्षसुहृत्प्रदम् ॥ ९० ॥ इति श्रीब्रह्म
वैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे भगवद्गुणवर्णने लक्ष्मीस्तोत्रकथनंनाम षट्पंचाशत्तमोऽध्यायः ॥
॥ ५६ ॥ ॥ नारायण उवाच ॥ ॥ देवानां स्तवनं श्रुत्वा त्यक्त्वा च रोदनं सती ॥ उवाच सुप्रसन्ना तांस्तेषां स्तोत्रेण नारद
॥ १ ॥ ॥ महालक्ष्मीरुवाच ॥ ॥ त्यजामि देहं न क्रोधान्न वैराग्येण सांप्रतम् ॥ इदं हृदि समालोच्य देवास्तच्छ्रूयता
मिति ॥ २ ॥ यस्मिन्सदीशे महति सर्वसाम्ये च निर्गुणे ॥ सर्वात्मनि सदानंदे समता तृणशैलयोः ॥ ३ ॥ भ्रूभंगलीलया लक्ष्मी
लक्षं स्रष्टुमलं च यः ॥ भृत्ये स्त्रियां यत्समता किं काय तस्य सेवया ॥ ४ ॥ तत्पत्नीनां प्रधानाहं निरस्ता द्वारिणाधुना ॥

तद्भृत्यभृत्यभृत्येन परिपूर्णेन नेप्सिता ॥ ५ ॥ त्यक्ष्यामि जीवनमहमसौभाग्या च स्वामिनि ॥ वह्नौ च कामनां कृत्वा यथा भद्रं भवेत्पुरा ॥ ६ ॥ या स्त्री भर्तुरसौभाग्या सासौभाग्या च सर्वतः ॥ शयने भोजने तस्या न सुखं जीवनं वृथा ॥ ७ ॥ यस्या नास्ति प्रियप्रेम तस्या जन्म निरर्थकम् ॥ तत्किं पुत्रे धने रूपे संपत्तौ यौवनेथवा ॥ ८ ॥ यद्भक्तिर्नास्ति कांते च सर्वप्रियतमे परे ॥ साऽशुचिर्धर्महीना च सर्वकर्मविवर्जिता ॥ ९ ॥ पतिर्बंधुर्गतिर्भर्ता दैवतं गुरुरेव च ॥ सर्वस्माच्च परः स्वामी न गुरुः स्वामिनः परः ॥ १० ॥ पिता माता सुतो भ्राता क्लिष्टा दातुमिदं धनम् ॥ सर्वस्वदाता स्वामी च मूढानां योषितां सुराः ॥ ११ ॥ काचिदेव हि जानाति महासाध्वी च स्वामिनम् ॥ अतिसद्वंशजाता च सुशीला कुलपालिका ॥ १२ ॥ असद्वंशप्रसूता या दुःशीला धर्मवर्जिता ॥ मुखदुष्टा योनिदुष्टा पतिं निंदति कोपतः ॥ १३ ॥ या स्त्री सर्वपरं द्वेष्टि पतिं विष्णुसमं गुरुम् ॥ कुंभीपाके पचति सा यावदिंद्राश्चतुर्दश ॥ १४ ॥ व्रतं चानशनं दानं सत्यं पुण्यं तपश्चिरम् ॥ पतिभक्तिविहीनाया भस्मीभूतं निरर्थकम् ॥ १५ ॥ अतः किंचिन्न वक्ष्यामि निष्ठुरं पतिमीश्वरम् ॥ भृत्यापराधैर्देवस्य प्राणांस्त्यक्ष्यामि निश्चितम् ॥ १६ ॥ पतिदोषे महासाध्वी पतिं चानिष्ठुरं वदेत् ॥ यदि सोढुमशक्ता च प्राणांस्त्यजति धर्मतः ॥ १७ ॥ पतिसेवा व्रतं स्त्रीणां पतिसेवा परं तपः ॥ पतिसेवा परो धर्मः पतिसेवा सुरार्चनम् ॥ १८ ॥ पतिसेवा परं सत्यं दानतीर्थानुकीर्तनम् ॥ सर्वदेवमयः स्वामी सर्वदेवमयः शुचिः ॥ १९ ॥ सर्वपुण्यस्वरूपश्च पतिरूपी जनार्दनः ॥ या सती भर्तुरुच्छिष्टं भुंक्ते पादोदकं सदा ॥ २० ॥ तस्या दर्शमुपस्पर्शं नित्यं वांछंति देवताः ॥ ततः सर्वाणि तीर्थानि पुनंति पापिनो ह्यवात् ॥ २१ ॥ इत्युक्त्वा च महासाध्वी रुरोद च मुहुर्मुहुः ॥ उवाच ब्रह्मा भीतश्च भक्तिनम्रात्मकंधरः ॥ २२ ॥ ॥ ब्रह्मोवाच ॥ ॥ भविष्यति न भद्रं च जयस्य विजयस्य च ॥ त्वया न शप्तौ तौ मूढौ प्रियापराधभीतया ॥ २३ ॥ सापराधं च धर्मिष्ठः क्षमया न शपेद्यदि ॥ सर्वनाशो भवेत्तस्य निश्चितं मा चिरं सति ॥२४॥ यदि शप्तुं न शक्तश्च न दंडं कर्तुमीश्वरः ॥ सापराधे च पुरुषे धर्मो दंडं करोति च ॥ २५ ॥ सर्वं क्षमस्व हे मातर्गच्छ गच्छ प्रियांतिकम् ॥ मां च त्वत्स्वा

भिनो भक्तं नियोज्य सृष्टिकर्मणि ॥ २६ ॥ इत्युक्त्वा तां पुरस्कृत्वा सार्द्धं देवैर्मुनींद्रकैः ॥ शीघ्रं जगाम वैकुंठं वैकुंठं स्तोतुमीश्वरः
॥२७॥ तत्र गत्वा जगन्नाथं तुष्टाव कमलासनः ॥ चतुर्वक्त्रैश्चतुर्वक्त्रश्चतुर्वेदविदां गुरुम् ॥२८॥ ब्रह्मणः स्तवनं श्रुत्वा दृष्ट्वा लक्ष्मीं पुरः
सराम् ॥ रुदतीं नम्रवदनामुवाच कमलापतिः ॥२९॥ ॥ श्रीभगवानुवाच ॥ ॥ सर्वं जानामि सर्वज्ञः सर्वात्मा सर्वपालकः ॥ सर्वशास्ता
च सर्वादिकारणं कमलोद्भव ॥३०॥ भक्ते कलत्रे बंधौ च सर्वत्र समता मम ॥ विशेषतोतिमद्भक्तः कलत्रात्पर एव च ॥३१॥ मद्भक्तौ तव
पुत्रौ च द्वारपालौ दुरंतकौ ॥ क्षम मामपराधं च तयोश्च भक्तिपूर्णयोः ॥ ३२ ॥ मद्भक्तिपूर्णो बलवान्दैत्येभ्यो न बिभेति च ॥ रक्षितो
मम चक्रेण भक्तिमाध्वीकदुर्मदः ॥ ३३ ॥ इत्युक्त्वा जगतां नाथो लक्ष्मीं कृत्वा स्ववक्षसि ॥ समानीय द्वारपालं तमुवाचेदमेव च ॥
॥ ३४ ॥ माभैर्वत्स सुखं तिष्ठ भयं किं ते मयि स्थिते ॥ मद्भक्तानां च कः शास्ता गच्छ वत्सात्मनः पदम् ॥३५॥ इत्युक्त्वा भगवां
स्तत्र विरराम महामुने ॥ ययुर्देवाश्च स्वस्थानं प्रणम्य जगदीश्वरम् ॥ ३६ ॥ नारायणवचः श्रुत्वा द्वारपाल उवाच तम् ॥ पुलकांचित
सर्वांगो भक्तिनम्रात्मकंधरः ॥ ३७ ॥ ॥ जय उवाच ॥ ॥ नाहं बिभेमि देवांश्च लक्ष्मीं मुनिगणांस्तथा ॥ त्वदीयचरणांभोजध्या
नैकतानमानसः ॥ ३८ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे उत्तरार्द्धे वैराग्यमोचनंनाम सप्तपंचा
शत्तमोऽध्यायः ॥५७॥ ॥ श्रीनारायण उवाच ॥ ॥ बभूव दर्पः पृथ्व्याश्च सर्वाधाराहमेव च ॥ पृथुद्वारा च तद्दर्पं जघान चैव तत्प्रभुः
॥१॥ बभूव दर्पः सावित्र्या वेदमाताहमेव च ॥ काले चकार तस्याश्च सपुत्राया अदर्शनम् ॥ २ ॥ बभूव दर्पो गंगाया अहं निर्वाणदेति
च ॥ जह्नुद्वारा च तद्दर्पं जहार जगतां पतिः ॥ ३ ॥ जहार मनसादर्पं दुर्गाद्वारा पुरा मुने ॥ विरजोपगतं कृष्णं भर्त्सयामास कोपतः ॥
॥ ४ ॥ प्रविशंतं रासगृहं गोपीभिर्विनिवारितम् ॥ दौवारिकाभिर्वेत्रैश्च ताडितं तं च दर्पतः ॥५॥ सुदाम्ना निजभक्तेन राधा शप्ता बभूव
ह ॥ देवेन सहसा ध्वस्ता गोलोकादागता धराम् ॥६॥ वृषभानुस्त्रियां जाता कलावत्यां च नारद ॥ कृष्णस्तदनुरोधेन कंसभीति
च्छलेन च ॥७॥ समागतो नन्दगेहं तेनाहं नंदनंदनः ॥ सुदाम्नः शापविच्छेदपालनार्थं जगत्पतिः ॥८॥ पुनर्जगाम मथुरामित्याह कम

लोद्भवः ॥ अस्याः परमभिप्रायं को वा जानाति नारद ॥ ९ ॥ कथं जातः समायातो मथुरायाश्च गोकुलम् ॥ इत्येवं कथितं सर्वम
परं श्रूयतामिति ॥ १० ॥ यथा जगाम मथुरां नंदात्स नंदनंदनः ॥ शोकं नंदो यशोदा च यथा संप्राप दैवतः ॥ ११ ॥ यथा गोपा
श्च गोप्यश्च गावो वृंदावने वने ॥ वने वने वा वन्यास्ते वन्या जानंति किंचन ॥ १२ ॥ वृत्तं स्वयं वन्यपदमपि त्यक्त्वा वनेवने ॥
श्मशाने वाश्मशाने वा बभ्राम भामिनी मुने ॥ १३ ॥ ग्रामं त्यक्त्वा च बभ्राम चेतनाचेतना क्षणम् ॥ क्षणेन वर्जिता सा च प्रार्थ
यंती प्रतिक्षणम् ॥ १४ ॥ क्षणं क्षणं सा श्वसंती चिंतनं कुर्वती क्षणम् ॥ क्षणं विशंती तल्पे च क्षणमुत्थाय तिष्ठति ॥ १५ ॥ इति
श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ श्रीनारायण उवा
च ॥ ॥ इत्येवं कथितं सर्वं सर्वेषां दर्पभंजनम् ॥ इंद्रस्य दर्पभंगं च विस्तरेण निशामय ॥ १ ॥ इंद्रो दर्पात्सभायां च रत्नसिं
हासनाद्वरात् ॥ नोत्तस्थौ स्वगुरुं दृष्ट्वा ब्रह्मिष्ठं च बृहस्पतिम् ॥ २ ॥ गुरुर्जगामातिरुष्टः स्वापमाने समत्सरः ॥ तथापि कृपया धर्मी
स्नेहाच्च न शशाप तम् ॥ ३ ॥ विना शापेन तद्दर्पश्चूर्णीभूतो बभूव ह ॥ अन्यश्चेन्न शपेद्धर्मात्प्रेम्णा वाचातिकिल्बिषम् ॥ ४ ॥ तथा
ऽपि तं च फलति धर्मस्तं हंति नारद ॥ यो यं हिंस्रं सापराधं शपेत्कोपेन धार्मिकः ॥ ५ ॥ विनाशः सापराधस्य धर्मो नष्टश्च धर्मि
णः ॥ तेनाधर्मेण शक्रस्य ब्रह्महत्यां बभूव ह ॥ ६ ॥ भीतस्त्यक्त्वा स्वराज्यं च प्रययौ स सरोवरम् ॥ सरसः पद्मसूत्रे च निवासं
च चकार सः ॥ ७ ॥ गंतुं न शक्ता हत्या च पुण्यं विष्णुसरोवरम् ॥ श्रेष्ठं भरतवर्षे च तपस्थानं तपस्विनाम् ॥ ८ ॥ तदेव पुष्क
रं तीर्थं प्रवदंति पुराविदः ॥ राज्यभ्रष्टं हरिं दृष्ट्वा हरिभक्तो नराधिपः ॥ ९ ॥ बलाज्जहार तद्राज्यं नहुषो नाम धार्मिकः ॥ दृष्ट्वा शचीं
वरारोहामनपत्यां च सुन्दरीम् ॥ १० ॥ स्वर्गगंगां च गच्छंतीं हृदयेन विदूयता ॥ नवयौवनसंपन्नां रत्नालंकारभूषिताम्
॥ ११ ॥ सुकोमलां तां सुदतीं वदंतीं च महासतीम् ॥ मूर्च्छां संप्राप राजेंद्रः कामेन यौवनेन च ॥ उवाच तत्पुरः स्थित्वा
सुविनीतश्च दासवत् ॥१२॥ ॥ नहुष उवाच ॥ ॥ धातुर्गतिर्विचित्राहो न बोध्या च सतामपि ॥ १३ ॥ ईदृशी स्त्री भगांगस्य

लुब्धस्य परयोषिति ॥ ईदृशी सुन्दरी यस्य परभार्यासु तन्मनः ॥ १४ ॥ अस्या अग्रे च का रंभा कोर्वशी का तिलोत्तमा ॥ का वा मेना घृताची वा रत्नमाला कलावती ॥१५॥ कालिका सुन्दरी भद्रावती चंपावती तथा ॥ एताश्चाप्सरसश्चान्याः कलां नार्हंति षोडशीम् ॥१६॥ इमां विहाय मूढोन्यां कथं गच्छति मंदधीः ॥ अस्माकं योषितो याश्च चेटीतुल्याश्च निश्चितम् ॥१७॥ मां भजस्व वरारोहे सुप्रीता भव किंकरम् ॥ यथा राधा च गोलोके कृष्णवक्षसि राजते ॥ १८ ॥ वैकुंठोरसि वैकुंठे यथा लक्ष्मीः सरस्वती ॥ ब्रह्मलोके च ब्रह्माणी यथैव ब्रह्मवक्षसि ॥ १९ ॥ यथा मूर्तिर्महासाध्वी धर्मवक्षःस्थलस्थिता ॥ पातालतललक्ष्मीर्वा यथैवानंतवक्षसि ॥ २० ॥ यथा पुष्टिर्गणेशे च देवसेना च कार्तिके ॥ वरुणे वरुणानी च यथा स्वाहा हुताशने ॥ २१ ॥ यथा रतिः कामदेवे यथा संज्ञा दिनेश्वरे ॥ वायोः पत्नी यथा वायौ यथा चंद्रे च रोहिणी ॥ २२ ॥ यथादितिर्देवमाता तव श्वश्रूश्च कश्यपे ॥ यथा हिमालये मेना पितृकन्या च मानसी ॥ २३ ॥ लोपामुद्रा यथागस्त्ये यथा तारा बृहस्पतौ ॥ कर्दमे देवहूती च वसिष्ठेरुंधती यथा ॥ २४ ॥ मनौ च शतरूपेव दमयंती नले यथा ॥ तथा भव त्वं सौभाग्या मम वक्षसि सुन्दरि ॥ २५ ॥ लीलया च सहस्रेंद्रान्छेत्तुं शक्तोहमीश्वरः ॥ नारी वांछति जारं च स्वामिनो बलवत्तरम् ॥ २६ ॥ सुमेरुगिरिकूटे च दुर्गमेति रहःस्थले ॥ अथवा मलये रम्ये रम्ये चंदनवायुना ॥ २७ ॥ विश्रंभके सुरसने किं वा नंदनकानने ॥ निकटे शतशृंगस्य पुष्पभद्रानदीतटे ॥ २८ ॥ गोदावरीतीरनीरे समीपे शीतवायुना ॥ चंपावती नदीतीरे रम्ये चंपककानने ॥ २९ ॥ श्मशानेतिश्मशाने च रम्येतिनिर्जने वने ॥ शैले शैलेतिरहसि कंदरे कंदरे वने ॥ ३० ॥ द्वीपे द्वीपे दुर्गदुर्गे नद्यां नद्यां नदे नदे ॥ समुद्रपुलिने रम्ये सर्वजंतुविवर्जिते ॥ ३१ ॥ विदग्धाया विदग्धेन संगमो निर्जने सुखः ॥ पुष्पचंदनशय्यायां पुष्पचंदनचर्चिते ॥३२॥ मां गृहीत्वा कुरु रतिं पुष्पचन्दनचर्चितम् ॥ ब्रह्मणश्च वरैर्देवि जरामृत्युविवर्जितम् ॥३३॥ मां कुरुष्व पतिं भद्रे नित्यं सुस्थिरयौवनम् ॥ सुवेषं सुंदरं धीरं कामशास्त्रविशारदम् ॥३४॥ शरत्पार्वणचंद्रास्यं चंद्रवंशसमुद्भवम् ॥ आगता सुरेशीं भद्रां त्यक्तवंतं च याचतीम् ॥३५॥ न मे स्पृहा परस्त्रीषु त्वां दृष्ट्वा लोलुपं मनः ॥ त्यक्ता मया स्वभार्याश्च रत्नभूषणभूषिताः॥३६॥

अथवा रक्षिताः सर्वा दासीः कृत्वा वरानने ॥ रत्नेंद्रसारां मालां ते दास्यामि वरुणस्य च ॥ ३७ ॥ निर्जित्य वरुणं युद्धे ब्रह्मास्त्रेणातितेजसा ॥ वह्निशुद्धं वस्त्रयुगं जित्वा वह्निं सुदुर्बलम् ॥ ३८ ॥ दास्याम्यद्यैव ते देवि नियोज्यं मां नियोजय ॥ मणींद्रसार निर्माणमकराकारकुण्डले ॥ ३९ ॥ दास्यामि देवान्निर्जित्य देवमातुश्च सुंदरि ॥ करभूषणयुग्मं चात्यमूल्यरत्ननिर्मितम् ॥४०॥ दास्याम्यद्यैव रोहिण्याश्चंद्रं जित्वातिदुर्लभम् ॥ यक्ष्मग्रस्तमतिकृशं ममैव पूर्वपुरुषम् ॥ ४१ ॥ विना युद्धेन भीतो मां कृपया वा प्रदास्यति॥ अल्परत्नविनिर्माणं क्वणन्मंजीरयुग्मकम् ॥ ४२ ॥ दास्याम्यद्यैव पार्वत्या भिक्षां कृत्वा महेश्वरम् ॥ आशुतोषं स्तुतिवशं भक्तेशं च कृपामयम् ॥ ४३ ॥ सर्वसंपत्तिदातारं परं कल्पतरुं शुभे ॥ अमूल्यरत्ननिर्माणकेयूरयुगलं प्रिये ॥ ४४ ॥ दास्यामि तेद्य गंगाया युद्धं कृत्वा सुदुर्लभम् ॥ बहुलीयुगलं चारु सूर्यपत्न्या मनोहरम् ॥ ४५ ॥ सद्रत्नसारनिर्माणं दास्याम्यद्य सुशोभने ॥ अमूल्यरत्ननिर्माणं दर्पणं चातिनिर्मलम् ॥ ४६ ॥ दास्यामि ते कामपत्न्याः कामं जित्वा च लीलया ॥ क्रीडाकमलमम्लानं कमलायाश्च सुन्दरि ॥४७॥ भिक्षां कृत्वा च दास्यामि स्तुत्वा च कमलापतिम् ॥ अंगुलीयकरत्नानि विश्वेषु दुर्लभानि च ॥ ४८ ॥ सावित्र्याश्च प्रदास्यामि कृत्वा च ब्रह्मणस्तथा ॥ स्वयं गीतं प्रगायंतीं मूर्च्छनाश्रुतिसंयुताम् ॥४९॥ वाणीवीणां प्रदास्यामि कृत्वा नारायणव्रतम् ॥ रत्नपाशक संघं च विश्वकर्मविनिर्मितम् ॥ ५० ॥ कुबेरपत्न्या दास्यामि पादांगुलिविभूषणम् ॥ इत्येवमुक्त्वा नहुषः पपात तत्पदांबुजे ॥ ५१ ॥ उवाच तं शची त्रस्ता राजमार्गगतं नृपम् ॥ उत्थाप्य तं करे धृत्वा शुष्ककंठोष्ठतालुका ॥ स्मारं स्मारं पदांभोजं महासाध्वी हरेर्गुरोः ॥ ॥५२॥ ॥ शच्युवाच ॥ ॥ शृणु वत्स महाराज हे तात भयभंजन ॥५३॥ भयत्राता च राजा च सर्वेषां पालकः पिता ॥ भ्रष्टश्रीश्च महेंद्रोद्य त्वं च स्वर्गे नृपोधुना ॥ ५४ ॥ यो राजा स पिता पाता प्रजानामेव निश्चितम् ॥ गुरुपत्नी राजपत्नी देवपत्नी तथा वधूः॥ ॥ ५५ ॥ पित्रोः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली ॥ पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनी सुता ॥५६॥ गर्भधात्रीष्टदेवी च पुंसः षोडश मातरः ॥ त्वं नरो देवभार्याहं माता ते देवसंमता ॥५७॥ गच्छ वत्सादितिं रंतुं यदि चेच्छसि मातरम्॥ सर्वेषां निष्कृति

श्चास्ति न वत्स मातृगामिनाम् ॥ ५८ ॥ कुंभीपाके ते पचंति यावद्वै ब्रह्मणो वयः ॥ ततो भवंति कृमयः कल्पाः सप्त भवंति
ये ॥ ५९ ॥ ततश्च कुष्ठिनो म्लेच्छा भवंति सप्तजन्मसु ॥ नास्त्येव निष्कृतिस्तेषामित्याह कमलोद्भवः ॥ ६० ॥ एवं विट्क्षत्र
शूद्राणां ब्राह्मणीगमने नृप ॥ वेदेषु निष्कृतिर्नास्ति चेत्यांगिरसभाषितम् ॥ ६१ ॥ स्वर्गसंपत्तिभोगश्च सुखं संसारिणां ध्रुवम् ॥
मुमुक्षूणां च मोक्षश्च तपश्चैव तपस्विनाम् ॥ ६२ ॥ ब्राह्मणानां च ब्राह्मण्यं मुनीनां मौनमेव च ॥ वेदाभ्यासो वैदिकानां कवीनां
काव्यवर्णनम् ॥ ६३ ॥ विष्णुदास्यं वैष्णवानां विष्णुभक्तिरसं परम् ॥ विष्णुभक्तिं विना नैव मुक्तिं वांछंति वैष्णवाः ॥ ६४ ॥
मलाढ्येषु च क्लेदेषु दुर्गंधिनिलयेषु च ॥ साधूनां किं सुखं साधो स्त्रीणां योनिषु मां वद ॥ ६५ ॥ कुलप्रदीपे राजेंद्र राज्ञां मण्ड
लवर्तिनाम् ॥ लब्धं च भारते जन्म पुण्येन बहुजन्मनाम् ॥ ६६ ॥ पद्मानां चंद्रवंश्यानां नृपाणां दीप्तिहेतवे ॥ त्वमाविरासीस्ते
जस्वी ग्रीष्ममध्याह्नभास्करः ॥ ६७ ॥ सर्वेषामाश्रमाणां च स्वधर्मश्च यशः परम् ॥ स्वधर्महीना नरके पतंति मूढचेतसः ॥ ६८ ॥
ब्राह्मणस्य स्वधर्मश्च त्रिसंध्यमर्चनं हरेः ॥ तत्पादोदकनैवेद्यभक्षणं च सुधाधिकम् ॥ ६९ ॥ अन्नं विष्ठा जलं मूत्रमनिवेद्यं हरेर्नृप ॥
भवंति सूकराः सर्वे ब्राह्मणा यदि भुंजते ॥ ७० ॥ आजीवं भुंजते विप्रा एकादश्यां न भुंजते ॥ कृष्णजन्मदिने चैव शिवरात्रौ सुनि
श्चितम् ॥ ७१ ॥ तथा रामनवम्यां च यत्नतः पुण्यवासरे ॥ ब्राह्मणानां स्वधर्मश्च कथितो ब्रह्मणा नृप ॥ ७२ ॥ व्रतं पतिव्रतानां च
पतिसेवापरं तपः ॥ यथा पुत्रः परपतिरेषधर्मश्च योषिताम् ॥ ७३ ॥ पालयंति यथा भूपाः प्रजाः पुत्रानिवौरसान् ॥ प्रजाश्रियं च
पश्यंति राजानो मातरं यथा ॥ ७४ ॥ यज्ञं कुर्वंति विष्णोश्च सेवनं देवविप्रयोः ॥ निवारणं च दुष्टानां शिष्टानां प्रतिपालनम् ॥
॥ ७५ ॥ इति धर्मः क्षत्रियाणां कथितो ब्रह्मणा पुरा ॥ वाणिज्यं चैव वैश्यानां स्वधर्मो धर्मसंचयः ॥७६॥ शूद्राणां विप्रसेवा च परो
धर्मो विधीयते ॥ सर्वन्यासो हरौ भूप धर्मः संन्यासिनां ध्रुवम् ॥ ७७ ॥ रक्तैकवासा दंडी च बिभर्ति मृत्कमंडलुम् ॥ सर्वत्र समदर्शी

१ वेश्यायोनिषु कल्पकान्–इति पुस्तकान्तरे।

च स्मरेन्नारायणं सदा ॥ ७८ ॥ करोति भ्रमणं नित्यं गेहेगेहे न तिष्ठति ॥ विद्यामंत्रं च कस्मैचिन्न ददाति च लोभतः ॥ ७९ ॥
करोति नाश्रमं भिक्षुः करोति नान्यवासनाम् ॥ करोति नान्यसंगं च निर्मोहः संगवर्जितः ॥८०॥ न स्वादु भुङ्क्ते लोभाच्च स्त्रीमुखं
न हि पश्यति ॥ न वांछितं भक्ष्यवस्तु याचते गृहिणं व्रती ॥ ८१ ॥ इति संन्यासिनां धर्ममित्याह कमलोद्भवः ॥ इति ते
कथितं पुत्र गच्छ वत्स यथासुखम् ॥ ८२ ॥ इत्युक्त्वा च महेंद्राणी विरराम च वर्त्मनि ॥ उवाच नहुषो राजा शचीं वक्रकंधरः
॥ ८३ ॥ ॥ नहुष उवाच ॥ ॥ त्वया यत्कथितं देवि सर्वं तत्तु विपर्ययम् ॥ यथार्थधर्मं वेदोक्तं निबोध कथयामि ते ॥ ८४ ॥
कर्मणां फलभोगश्च सर्वेषां सुरसुंदरि ॥ नैव स्वर्गे न पाताले नान्यद्वीपे श्रुतौ श्रुतम् ॥ ८५ ॥ कृत्वा शुभाशुभं कर्म पुण्यक्षेत्रे च
भारते ॥ अन्यत्र तत्फलं भुंक्ते कर्मी कर्मनिबंधनात् ॥ ८६ ॥ हिमालयादासमुद्रं पुण्यक्षेत्रं च भारतम् ॥ श्रेष्ठं सर्वस्थलानां च मुनी
नां च तपःस्थलम् ॥ ८७ ॥ तत्र लब्ध्वा जन्म जीवी वंचितो विष्णुमायया ॥ शश्वत्करोति विषयं विहाय सेवनं हरेः ॥ ८८ ॥
कृत्वा तत्र महत्पुण्यं स्वर्गं गच्छति पुण्यवान् ॥ गृहीत्वा सर्वकन्याश्च चिरं स्वर्गे प्रमोदते ॥ ८९ ॥ स्वर्गमागच्छति नरो विहाय
मानवीं तनुम् ॥ स्वशरीरेणागतोऽहं मत्पुण्यं पश्य सुंदरि ॥ ९० ॥ अनेकजन्मपुण्येन चागतः स्वर्गमीप्सितम् ॥ ततः किं केन पुण्ये
न दर्शनं मे त्वया सह ॥ ९१ ॥ न हि कर्मस्थलमिदं स्वभोगस्थलमेव च ॥ भोगस्थले भोगवस्तु न हि त्यक्तुं प्रशस्यते ॥ ९२ ॥
भावानुरक्ता रसिका भोग्या त्वं भोगिनामिह ॥ द्रव्यमस्वामिकं भोग्यं सुखं त्यजति मंदधीः ॥ ९३ ॥ अविरोधसुखत्यागी पशुरेव न
संशयः ॥ गच्छ कांते गृहं गत्वा कुरु तल्पं मनोहरम् ॥ ९४ ॥ रमणीयं च रहसि वरं रतिकरं परम् ॥ त्यज द्वैधं च मनसो निश्चितं
वरवर्णिनि ॥ ९५ ॥ वरानने मया सार्द्धं मोदस्व वरमंदिरे ॥ अमूल्यरत्नमालां च मणिराजविराजिताम् ॥ ९६ ॥ भिक्षां कृत्वा च
दास्यापि लक्ष्मीवक्षसि शोभिताम् ॥ मणिं चानंतशिरसः सर्वेषामतिदुर्लभम् ॥ ९७ ॥ दुष्प्राप्यं त्रिषु लोकेषु तुभ्यं दास्यामि सुन्द
रि ॥ मणिरत्नं कौस्तुभं च यो नारायणवक्षसि ॥ ९८ ॥ भिक्षां कृत्वा तु दास्यामि कृत्वा नारायणव्रतम् ॥ चंद्रशेखरमौलेश्च यदर्द्धं

चंद्रभूषणम् ॥ ९९ ॥ जरामृत्युव्याधिहरं शक्तं क्रीडाकरं वरम् ॥ अतीव विश्वदुष्प्राप्यं विश्ववंद्यं च सुन्दरम् ॥ १०० ॥ विश्वनाथव्रतं कृत्वा तुभ्यं दास्यामि निश्चितम् ॥ दास्यामि ते श्रीसूर्यस्य मणिश्रेष्ठं स्यमंतकम् ॥ १ ॥ भक्त्या सूर्यव्रतं कृत्वा त्रिषु लोकेषु दुर्लभम् ॥ अष्टौ भारान्सुवर्णं च यश्च नित्यं प्रसूयते ॥ २ ॥ जरामृत्युहरं चैव परं क्रीडाकरं प्रिये ॥ अमूल्यरत्ननिर्माणं पात्ररत्नं मनोहरम् ॥ ३ ॥ संततं मधुपूर्णं च दास्यामि मदनस्य च ॥ अमूल्यरत्ननिर्माणं सूर्यतुल्यं च तेजसा ॥ ४ ॥ नानाचित्रविचित्राढ्यं निर्माणमीश्वरेच्छया ॥ निर्मलं मंडलाकारं मणिराजविराजितम् ॥ ५ ॥ हस्तलक्षपरिमितं चतुरस्रं च सुन्दरि ॥ पद्मापद्मासनं श्रेष्ठं श्रेष्ठं तस्याः सुदुर्लभम् ॥ ६ ॥ ध्रुवं तुभ्यं प्रदास्यामि कृत्वा पद्मालयाव्रतम् ॥ इत्येवमुक्त्वा नहुषः कृत्वा वर्त्मनिरोधनम् ॥ ७ ॥ पुनः पपात चरणे महेंद्राण्या मुहुर्मुहुः ॥ नृपस्य वचनं श्रुत्वा शुष्ककंठोष्ठतालुका ॥ तमुवाच महेंद्राणी स्मारं स्मारं गुरुं हरिम् ॥ ८ ॥ ॥ ॥ शच्युवाच ॥ ॥ अचेतनस्य मूढस्य कार्याकार्यमजानतः ॥ ९ ॥ श्रोष्याम्यद्य कतिविधां कथां कामातुरस्य च ॥ मधुमत्तः सुरामत्तः काममत्तो विचेतनः ॥ ११० ॥ मृत्युं न गणयेत्कामी कामेन हतमानसः ॥ त्यज मामद्य हे मत्त मातृतुल्यां रजस्वलाम् ॥ ११ ॥ ऋतोः प्रथमो दिवसो ह्यद्य हे नृप मे ध्रुवम् ॥ प्रथमे दिवसे स्त्री च चांडाली सा रजस्वला ॥ १२ ॥ द्वितीये दिवसे म्लेच्छा तृतीये रजकी तथा ॥ शुद्धा भर्तुश्चतुर्थेह्नि न शुद्धा दैवपैत्र्ययोः ॥ १३ ॥ असच्छूद्रासमा सा च तद्दिने च परं प्रति ॥ प्रथमे दिवसे कांतां यो हि गच्छेद्रजस्वलाम् ॥ १४ ॥ ब्रह्महत्याचतुर्थांशं लभते नात्र संशयः ॥ स पुमान्न हि कर्मार्हो दैवे पित्र्ये च कर्मणि ॥ १५ ॥ अधमः स च सर्वेषां निंदितश्चायशस्करः ॥ द्वितीये दिवसे नारीं यो व्रजेच्च रजस्वलाम् ॥ १६ ॥ कामतः परिपूर्णश्च गोहत्यां लभते ध्रुवम् ॥ आजीवनं नाधिकारी पितृविप्रसुरार्चने ॥ १७ ॥ अमनुष्योऽयशस्यः स्यादित्यांगिरसभाषितम् ॥ तृतीये दिवसे जायां यो हि गच्छेद्रजस्वलाम् ॥ १८ ॥ स मूढो भ्रूणहत्यां च लभते नात्र संशयः ॥ पूर्ववत्पतितः सोपि न चार्हः सर्वकर्मसु ॥ १९ ॥ असच्छूद्रा चतुर्थेह्नि न गच्छेत्तां विचक्षणः ॥ यदि मां मातरं

मूढ ग्रहीष्यसि बलेन च ॥ १२० ॥ ऋतावतीते दिवसे गमनं च कारिष्यसि ॥ शच्याश्च वचनं श्रुत्वा प्रहस्य नहुषस्तथा ॥ २१ ॥ उवाच मधुरं शांतः शक्रकांतां च सुव्रताम् ॥ देवपत्नी सदा शुद्धा तन्न्यूनं मानवं प्रति ॥ २२ ॥ शयने भोजने देवी नाशुद्धा मानवं प्रति ॥ रजस्वलायाः संभोगे कर्मक्षेत्रे च भारते ॥ २३ ॥ त्वयोक्तं च भवेत्पापं नात्र दुर्गे च सुंदरि ॥ कर्मक्षेत्रेऽपि तत्कर्म यद्वेदोक्तं शुभाशुभम् ॥ २४ ॥ न भवेद्वैष्णवानां च ज्वलतां ब्रह्मतेजसा ॥ यथा प्रदीप्ते वह्नौ च शुष्काणि च तृणानि च ॥ ॥ २५ ॥ भवंति भस्मीभूतानि तथा पापानि वैष्णवे ॥ वह्निसूर्यब्राह्मणेभ्यस्तेजीयान्वैष्णवः सदा ॥ २६ ॥ रक्षितो विष्णुचक्रेण स्वतंत्रो मत्तकुंजरः ॥ न विचारो न भोगश्च वैष्णवानां स्वकर्मणाम् ॥ २७ ॥ लिखितं साम्नि कौथुम्यां कुरु प्रश्नं बृहस्पतिम् ॥ अस्मांश्च सर्वे जानंति चंद्रवंश्यांश्च वैष्णवान् ॥ २८ ॥ देवमन्यं न सेवंते चंद्रवंश्या हरिं विना ॥ सद्वंशप्रभवो यो हि ब्राह्मणः क्षत्रियोथवा ॥ २९ ॥ विष्णुमंत्रं न गृह्णाति वंचितो देवमायया ॥ को वा मंत्रश्च के देवा न हि शास्ता यमो मम ॥ १३० ॥ सर्वाञ्छास्तुं समर्थोऽहं ब्रह्मविष्णुशिवान्विना ॥ शय्यां कुरु गृहं गत्वा शीघ्रं यास्यामि ते गृहम् ॥ ३१ ॥ ऋतुपापं मयि भवेत्तव किं गच्छ शोभने ॥ इत्युक्त्वा नहुषो राजा प्रफुल्लवदनेक्षणः ॥ ३२ ॥ रत्नयानं समारुह्य ययौ नंदनकाननम् ॥ न ययौ सा शची गेहं प्रजगाम गुरोर्गृहम् ॥ ३३ ॥ गत्वा कुशासनस्थं च ददर्श च बृहस्पतिम् ॥ तारासेवितपादाब्जं ज्वलंतं ब्रह्मतेजसा ॥ ३४ ॥ जपमालाकरं शश्वज्जपंतं कृष्णमीप्सितम् ॥ परमं परमानंदं परमात्मानमीश्वरम् ॥ ३५ ॥ निर्गुणं च निरीहं च स्वतंत्रं प्रकृतेः परम् ॥ स्वेच्छामयं परं ब्रह्म भक्तानुग्रहविग्रहम् ॥ ३६ ॥ तमानंदाश्रुनेत्रं च ननाम शिरसा भुवि ॥ रुदती साश्रुनेत्रा सा मज्जंती भक्तिसागरे ॥ ३७ ॥ शोकार्णवे निमज्जंती हृदयेन विदूयता ॥ तुष्टाव भीता स्वगुरुं ब्रह्मिष्ठं च कृपानिधिम् ॥ ३८ ॥ ॥ शच्युवाच ॥ ॥ रक्षरक्ष महाभाग मां भीतां शरणागताम् ॥ त्वमीश्वरः स्वदासीं च निमग्नां शोकसागरे ॥ ३९ ॥ अनीश्वरश्चेश्वरो वा बलवान्वा सुदुर्बलः ॥ स्वशिष्यभार्यां पुत्रांश्च शासितुं च सदा क्षमः ॥ १४० ॥ दूरीभूतः स्वराज्याच्च स्वशिष्यश्च कृतस्त्वया ॥ शांतिर्बभूव दोषस्य, चाधुना निग्रहं

कुरु ॥ ४१ ॥ अनाथां सर्वशून्यां मां शून्यांताममरावतीम् ॥ संपच्छून्यमाश्रमं मे पश्य रक्ष कृपानिधे ॥ ४२ ॥ दस्युग्रस्तां च मां रक्ष देशं किंकरमानय ॥ दत्त्वा चरणरेणूंस्तं शुभाशीर्वचनं कुरु ॥ ४३ ॥ सर्वेषां च गुरूणां च जन्मदाता परो गुरुः ॥ पितुः शतगुणा माता पूज्या वंद्या गरीयसी ॥ ४४ ॥ विद्यादाता मंत्रदाता ज्ञानदो हरिभक्तिदः ॥ पूज्यो वंद्यश्च सेव्यश्च मातुः शतगुणो गुरुः ॥ ४५ ॥ मंत्राद्युद्गिरणेनैव गुरुरित्युच्यते बुधैः ॥ अन्यो वंद्यो गुरुरयमन्यश्चारोपितो गुरुः ॥ ४६ ॥ अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया ॥ चक्षुरुन्मीलितं येन तस्मै श्रीगुरुवे नमः ॥ ४७ ॥ अदीक्षितस्य मूर्खस्य निष्कृतिर्नास्ति निश्चितम् ॥ सर्वकर्मस्वनर्हस्य नरके तत्पशोः स्थितिः ॥ ४८ ॥ जन्मदाताऽन्नदाता च माताऽन्ये गुरवस्तथा ॥ पारं कर्तुं न शक्तास्ते घोरसंसारसागरे ॥ ॥ ४९ ॥ विद्यामंत्रज्ञानदाता निपुणः पारकर्मणि ॥ स शक्तः शिष्यमुद्धर्तुमीश्वरश्चेश्वरात्परः ॥ १५० ॥ गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुर्देवो महेश्वरः ॥ गुरुर्धर्मो गुरुः शेषः सर्वात्मा निर्गुणो गुरुः ॥ ५१ ॥ सर्वतीर्थाश्रयश्चैव सर्वदेवाश्रयो गुरुः ॥ सर्वदेवस्वरूपश्च गुरुरूपी हरिः स्वयम् ॥ ५२ ॥ अभीष्टदेवे रुष्टे च गुरुः शक्तो हि रक्षितुम् ॥ गुरौ रुष्टेऽभीष्टदेवो न हि शक्तश्च रक्षितुम् ॥ ५३ ॥ सर्वे ग्रहाश्च यं रुष्टा रुष्टाश्च देवब्राह्मणाः ॥ त्वमेव रुष्टो भवसि गुरुरेव हि देवताः ॥ ५४ ॥ न गुरोश्च प्रियश्चात्मा न गुरोश्च प्रियः सुतः ॥ धनं प्रियं च न गुरोर्न च भार्या प्रिया तथा ॥ ५५ ॥ न गुरोश्च प्रियो धर्मो न गुरोश्च प्रियं तपः ॥ न गुरोश्च प्रियं सत्यं न पुण्यं च गुरोः परम् ॥ ५६ ॥ गुरोः परो न शास्ता च न हि बंधुर्गुरोः परः ॥ देवो राजा च शास्ता च शिष्याणां च सदा गुरुः ॥ ५७ ॥ यावच्छक्तो दातुमन्नं तावच्छास्ता तमन्नदः ॥ गुरुः शास्ता च शिष्याणां प्रतिजन्मनि जन्मनि ॥ ५८ ॥ मंत्रो विद्यागुरुर्देवः पूर्वलब्धो यथा पतिः ॥ प्रतिजन्मनि बंधेन सर्वेषामुपरि स्थितः ॥ ५९ ॥ पिता गुरुश्च वंद्यश्च यत्र जन्मनि जन्मदः ॥ गुरवोन्ये तथा माता गुरुश्च प्रतिजन्मनि ॥ १६० ॥ विप्राणां त्वं वरिष्ठश्च गरिष्ठश्च तपस्विनाम् ॥ ब्रह्मिष्ठो ब्रह्मविद्ब्रह्मन् धर्मिष्ठः सर्वधार्मिणाम् ॥ ६१ ॥ तुष्टो भव मुनिश्रेष्ठ मां च शक्रं च सांप्रतम् ॥ त्वयि तुष्टे सदा तुष्टा भवंति ग्रहदेवताः ॥ ६२ ॥ इत्युक्त्वा सा शची ब्रह्मन्पुनरुच्चैरुरोद ह ॥ दृष्ट्वा तद्रो

दनं तारा रुरोदोच्चैर्मुहुर्मुहुः ॥ ६३ ॥ पपात चरणे तारा रुरोद च पुनःपुनः ॥ अपराधं क्षमेत्युक्त्वा गुरुस्तुष्टोप्युवाच ताम् ॥ ६४ ॥ गुरु
रुवाच ॥ ॥ उत्तिष्ठ तारे शच्याश्च सर्वं भद्रं भविष्यति ॥ सद्यः प्राप्स्यति भर्त्तारं महेंद्रं च मदाशिषा ॥ ६५ ॥ इत्युक्त्वा स गुरु
स्तत्र विरराम च नारद ॥ पपात चरणे तारा पुनरेव रुरोद च ॥ ६६ ॥ गृहीत्वा च शचीं तारा संस्थाप्य च स्ववक्षसि ॥ बोधयामा
स विविधमध्यात्मकमनुत्तमम् ॥ ६७ ॥ शचीकृतं गुरुस्तोत्रं पूजाकाले च यः पठेत् ॥ गुरुश्चाभीष्टदेवश्च संतुष्टः प्रतिजन्मनि
॥ ६८ ॥ महदेवद्विजास्तं च परितुष्टाश्च संततम् ॥ राजानो बांधवाश्चैव संतुष्टाः सर्वतः सदा ॥ ६९ ॥ गुरुभक्तिं विष्णुभक्तिं
वांछितं लभते ध्रुवम् ॥ सदा हर्षो भवेत्तस्य न च शोकः कदाचन ॥ १७० ॥ पुत्रार्थी लभते पुत्रं भार्यार्थी लभते प्रियाम् ॥ सुस्वरू
पां गुणवतीं सतीं पुत्रवतीं ध्रुवम् ॥ ७१ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बंधनात् ॥ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पंडितः
॥ ७२ ॥ कदाचिद्बंधुविच्छेदो न भवेत्तस्य निश्चितम् ॥ नित्यं तद्वर्द्धते धर्मो विपुलं निर्मलं यशः ॥ ७३ ॥ लभते परमैश्वर्यं पुत्र
पौत्रधनान्वितम् ॥ इह सर्वसुखं भुक्त्वा प्राप्यते श्रीहरेः पदम् ॥ ७४ ॥ न भवेत्तत्पुनर्जन्म हरिदास्यं लभेद्ध्रुवम् ॥ विष्णुभक्ति
रसाब्धौ च निमग्नश्च भवेद्ध्रुवम् ॥ ७५ ॥ शश्वत्पिबति शांतश्च विष्णुभक्तिरसामृतम् ॥ जन्ममृत्युजराव्याधिशोकसंतापनाशनम्
॥ १७६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे महेंद्रदर्पभंगप्रकरणे शचीशोकापनो
दने शचीकृतगुरुस्तोत्रकथनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ शचीस्तोत्रं समाकर्ण्य परि
तुष्टो बृहस्पतिः ॥ उवाच मधुरं शांतः कांतामिंद्रस्य नारद ॥ १ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ त्यज वत्से भयं सर्वं भयं किं
ते मयि स्थिते ॥ यथा कचस्य पत्नी मे तथा त्वमपि शोभने ॥ २ ॥ यथा पुत्रस्तथा शिष्यो न भेदः पुत्रशिष्ययोः ॥ तर्पणे पिं
डदाने च पालने परितोषणे ॥ ३ ॥ यथाग्निदाता पुत्रश्च तथा शिष्यश्च निश्चितम् ॥ इतीदं कण्वशाखायामुवाच कमलोद्भवः ॥ ४ ॥
पिता माता गुरुर्भार्या शिशुश्चानाथबांधवाः ॥ एते पुंसां नित्यपोष्या इत्याह कमलोद्भवः ॥ ५ ॥ यश्चैतांश्च न पुष्णाति भस्मांतं

तस्य सूतकम् ॥ देवे पित्र्ये न कर्मार्हः सोपीत्याह महेश्वरः ॥ ६ ॥ कुरुते नरबुद्धिं च मातरं पितरं गुरुम् ॥ अयशस्तस्य सर्वत्र
विघ्न एव पदेपदे ॥ ७ ॥ संपन्मत्तो यः करोति स्वगुरोश्च पराभवम् ॥ अचिरात्सर्वनाशश्च भवेत्तस्य सुनिश्चितम् ॥ ८ ॥
मां च दृष्ट्वा सभामध्ये नोत्तस्थौ पाकशासनः ॥ तत्फलं भुज्यते साक्षात्सद्यः पश्य च सांप्रतम् ॥ ९ ॥ अहं कारोमि मोक्षं च तव
रक्षां सुनिश्चितम् ॥ शासितुं रक्षितुं शक्तः स एव गुरुरुच्यते ॥ १० ॥ न पश्यति सती त्वं च हृच्छुद्धायाश्च योषितः ॥ यन्मानसे
विकल्पश्च तस्य धर्मश्च नश्यति ॥ ११ ॥ भविष्यति प्रभावस्ते दुर्गायाश्च समः सति ॥ लक्ष्मीसमा प्रतिष्ठा च यशस्तद्यशसा स
मम् ॥ १२ ॥ सौभाग्यं राधिकातुल्यं तत्समं प्रेम भर्त्तरि ॥ तत्तुल्यं गौरवं मान्यं प्रीतिः प्राधान्यमीश्वरे ॥ १३ ॥ रोहिण्याश्च समा
पेक्षा पूज्या च भारतीसमा ॥ शुद्धा निरुपमा शश्वत्सावित्रीसदृशी सदा ॥ १४ ॥ एतस्मिन्नंतरे तत्र आगतो नहुषाचरः ॥ उवाच
वचनं भीतो वाक्पतेर्गोचरे ततः ॥ १५ ॥ ॥ दूत उवाच ॥ ॥ उत्तिष्ठ देवि शीघ्रं त्वं गच्छस्व नहुषंप्रति ॥ क्रीडां कर्तुं च
रहसि रम्ये नंदनकानने ॥ १६ ॥ दूतस्य वचनं श्रुत्वा तमुवाच बृहस्पतिः ॥ कंपितावयवः कोपाद्रक्तपंकजलोचनः ॥ १७ ॥
॥ ॥ गुरुरुवाच ॥ ॥ नहुषं वद गत्वा त्वं शचीं चेद्भोक्तुमिच्छसि ॥ अपूर्वं यानमारुह्य निशायामागमिष्यसि ॥ १८ ॥ सप्त
र्षीणां च स्कंधे च दत्त्वा स्वशिबिकां शुभाम् ॥ तामारुह्य सुवेषश्च गमनं कर्तुमर्हसि ॥ १९ ॥ वाक्पतेर्वचनं श्रुत्वा गत्वोवाच
नृपं तदा ॥ दूतस्य वचनं श्रुत्वा प्रहस्योवाच किंकरम् ॥ २० ॥ गच्छगच्छ त्वरन् गच्छ सप्तर्षीञ्छीघ्रमानय ॥ उपायं च करिष्या
मि तैः सार्द्धं सांप्रतं चर ॥ २१ ॥ नृपस्य वचनं श्रुत्वा गत्वा दूतस्तदंतिकम् ॥ उवाच सर्वांस्तत्रैव यथोक्तं नहुषेण च ॥ २२ ॥ दूत
स्य वचनं श्रुत्वा ययुः सप्तर्षयो मुदा ॥ राजा दृष्ट्वा च तान्सर्वान्ननामोवाच सादरम् ॥ २३ ॥ ॥ नहुष उवाच ॥ ॥ यूयं च
ब्रह्मणः पुत्रा ज्वलंतो ब्रह्मतेजसा ॥ ब्रह्मणः सदृशाः सर्वे सततं भक्तवत्सलाः ॥ २४ ॥ नारायणपराः शश्वच्छुद्धसत्त्वस्वरूपिणः ॥
मोहमात्सर्यहीनाश्च दर्पाहंकारवर्जिताः ॥ २५ ॥ नारायणसमाः सर्वे तेजसा यशसा सदा ॥ गुणेन कृपया प्रेम्णा वरदानेन निश्चि

तम् ॥ २६ ॥ इत्युक्त्वा प्रणतो राजा तुष्टाव च रुरोद च ॥ दृष्ट्वा ते कातरं भूपमूचुः परहितैषिणः ॥ २७ ॥ ॥ ऋषय ऊचुः ॥ ॥ वरं वृणीष्व हे वत्स यत्ते मनसि वांछितम् ॥ सर्वं दातुं वयं शक्ता नासाध्यं नश्च किंचन ॥ २८ ॥ इंद्रत्वं वा मनुत्वं वा चिरायुर्वा ततः परम् ॥ सप्तद्वीपेश्वरत्वं चाप्यतीव सुचिरं सुखम् ॥ २९ ॥ अथापि सर्वसिद्धित्वं सर्वैश्वर्यं सुदुर्लभम् ॥ मुक्तिं वा हरिभक्तिं वा तपसा या सुदुर्लभा ॥ ३० ॥ किमीप्सितं ते हे वत्स ब्रूहि नः सांप्रतं मुदा ॥ सर्वं तुभ्यं प्रदायैव यास्यामस्तपसे मुदा ॥ ३१ ॥ युगलक्षसमं यच्च क्षणं कृष्णार्चनं विना ॥ दुर्दिनं दुर्दिनं यत्तद्ध्यानसेवनवर्जितम् ॥ ३२ ॥ विना तत्सेवनं यो हि विषयान्यं च वांछति ॥ विषमत्ति प्रणाशाय विहायामृतमीप्सितम् ॥३३॥ ब्रह्मा शिवश्च धर्मश्च विष्णुश्चापि महान्विराट् ॥ गणेशश्च दिनेशश्च शेषश्च सनकादयः ॥ ३४ ॥ एते यच्चरणांभोजं ध्यायंतोऽहर्निशं मुदा ॥ जन्ममृत्युजराव्याधिहरं तन्निरता वयम् ॥ ३५ ॥ तेषां च वचनं श्रुत्वा तानुवाच नृपेश्वरः ॥ सलज्जितो नम्रवक्त्रो मायामोहितमानसः ॥ ३६ ॥ ॥ नहुष उवाच ॥ ॥ सर्वं दातुं समर्थाश्च यूयं च भक्तवत्सलाः ॥ अधुना देहि मे तूर्णं शचीदानमभीप्सितम् ॥ ३७ ॥ सप्तर्षिवाहनं कांतं शचीच्छति महासती ॥ एतदेव मम वरं निष्पन्नं कुरुताचिरम् ॥ ३८ ॥ नहुषस्य वचः श्रुत्वा मुनयश्च परस्परम् ॥ अत्युच्चैर्जहसुः सर्वे कौतुकेन च नारद ॥ ३९ ॥ राजानं मोहितं मत्वा वेष्टितं विष्णुमायया ॥ चक्रुः प्रतिज्ञां वोढुं च कृपया दीनवत्सलाः ॥ ४० ॥ चक्रुः स्कंधे तच्छिबिकां मुक्तामाणिक्यभूषिताम् ॥ राजा ययौ सुवेषश्च रत्नभूषणभूषितः ॥ ४१ ॥ दृष्ट्वा चातिविलंबं च भर्त्सयामास तान्नृपः ॥ क्रुधा शशाप दुर्वासाश्चाग्रगामी च वर्त्मनि ॥ ४२ ॥ महानजगरो भूत्वा पत वै मूढमानस ॥ दर्शनाद्धर्मपुत्रस्य तव मोक्षो भविष्यति ॥ ४३ ॥ रत्नयानेन वैकुंठं गत्वा वैकुंठसेवनम् ॥ करिष्यसि महाराज न कर्म निष्फलं भवेत् ॥ ४४ ॥ इत्युक्त्वा प्रययुः सर्वे प्रहस्य मुनिसत्तमाः ॥ राजा पपात तच्छापात्सर्पो भूत्वा महामुने ॥ ४५ ॥ शची जगाम तच्छ्रुत्वा गुरुं नत्वामरावतीम् ॥ ययौ बृहस्पतिः शीघ्रं यत्रेंद्रः पद्मतंतुषु ॥ ४६ ॥ गत्वा सरोवराभ्याशमाजुहाव सुरेश्वरम् ॥ अतिप्रसन्नवदनः कृपया च कृपानिधिः ॥४७॥

॥ बृहस्पतिरुवाच ॥ ॥ अयि वत्स त्वमागच्छ भयं किं ते मयि स्थिते ॥ त्यज भीतिमिहागच्छ गुरुस्तेहं बृहस्पतिः ॥ ४८ ॥
स्वगुरोश्च स्वरं श्रुत्वा महेंद्रो हृष्टमानसः ॥ रूपं विहाय सूक्ष्मं च स्वरूपेण समाययौ ॥ ४९ ॥ पपात दंडवन्मूर्ध्ना भक्त्या चरणयो
र्गुरोः ॥ तं रुदंतं महाभीतं मुदोरसि चकार सः ॥ ५० ॥ कारयित्वा सोमयागं प्रायश्चित्तार्थमेव च ॥ रत्नसिंहासने रम्ये वासया
मास तं गुरुः ॥ ५१ ॥ प्रददौ परमैश्वर्यं पूर्वस्माच्च चतुर्गुणम् ॥ आगत्य सर्वदेवाश्च चक्रुः सेवां मुदान्विताः ॥ ५२ ॥ शची संप्राप
भर्तारं महेंद्रं त्रिदशेश्वरम् ॥ मंदिरे पुष्पतल्पे च मुमुदे सा मुदान्विता ॥ ५३ ॥ इत्येवं कथितं वत्स महेंद्रदर्पभंजनम् ॥ शचीसतीत्व
रक्षा च किं भूयः श्रोतुमिच्छसि ॥ ५४ ॥ नारद उवाच ॥ ॥ सोमयागविधानं च ब्रूहि मां मुनिसत्तम ॥ कथं तं कारयामास गुरुश्च
किं फलं परम् ॥ ५५ ॥ ॥ नारायण उवाच ॥ ॥ ब्रह्महत्याप्रशमनं सोमयागफलं मुने ॥ वर्षं सोमलतापानं यजमानः करोति
च ॥ ५६ ॥ वर्षमेकं फलं भुंक्ते वर्षमेकं जलं मुदा ॥ त्रैवार्षिकं व्रतमिदं सर्वपापप्रणाशनम् ॥ ५७ ॥ यत्र त्रैवार्षिकं धान्यं निहितं
भृतवृद्धये ॥ अधिकं वापि विद्येत स सोमं पातुमर्हति ॥ ५८ ॥ महाराजश्च देवो वा यागं कर्तुमलं मुने ॥ न सर्वसाध्यो यज्ञोयं
बह्वन्नो बहुदक्षिणः ॥ ५९ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे शक्रदर्पभंगप्रकरणे शक्रमो
क्षकथनं नाम षष्टिमोऽध्यायः ॥ ६० ॥ ॥ श्रीनारायण उवाच ॥ इति ते कथितं किंचिदिंद्रस्य दर्पभंजनम् ॥ अपरं श्रूयतां
ब्रह्मन्सावधानं निगूढकम् ॥ १ ॥ समुद्रमथनं कृत्वा पीत्वामृतरसं पुरा ॥ निर्जित्य दैत्यसंघांश्च बहुदर्पो बभूव ह ॥२॥ तदा कृष्णो
बलिद्वारा शक्रदर्पं बभंज ह ॥ भ्रष्टश्रियो बभूवुस्ते देवा इंद्रपुरोगमाः ॥ ३ ॥ तदा बृहस्पतेः स्तोत्राददितेश्च व्रतेन ते ॥ जातश्च स्वांश
कलयाप्यदित्यां वामनो विभुः ॥ ४ ॥ याच्ञां कृत्वा बलिं राज्यं कृपया च कृपानिधिः ॥ तस्मै ददौ महेंद्राय देवेभ्यश्चापि संपदम्
॥ ५ ॥ बभूव शक्रदर्पश्च पुनः कल्पांतरे पुरा ॥ विभुर्दुर्वाससो द्वारा जहार तच्छ्रियं मुने ॥ ६ ॥ पुनर्ददौ च कृपया कृपालुर्भक्तव ॥१५४॥
त्सलः ॥ पुनः श्रीदुर्मदः सोपि जहार गौतमप्रियाम् ॥ ७ ॥ तदा गौतमशापेन भगांगश्च बभूव सः ॥ संप्राप यातनामिंद्रः स्वांग

वेदनया पुरा ॥ ८ ॥ उर्वशीं दृष्ट्वा ऋषयो मनवस्तथा ॥ देवाश्च लज्जिताः सर्वे मृततुल्यो बृहस्पतिः ॥ ९ ॥ तदा सहस्रवर्षं च तपस्तप्त्वा रवेः पुरा ॥ रवेर्वरेण शक्रः स सहस्राक्षो बभूव ह ॥ १० ॥ कलंकरूपमिंद्रस्य तच्चक्षुर्निकरं परम् ॥ यथा चंद्रे कलंकश्च तारकाहरणादभूत् ॥ ११ ॥ ॥ नारद उवाच ॥ ॥ ब्रह्मन् केन प्रकारेण जहार गौतमप्रियाम् ॥ महासतीमहल्यां च पूज्यां भुवन पावनीम् ॥ १२ ॥ शुद्धाशयां महाभागां निर्मलां कमलाकलाम् ॥ एतद्वेदितुमिच्छामि वद वेदविदां वर ॥ १३ ॥ ॥ श्रीनारायण उवाच ॥ ॥ पुष्करे तीर्थयात्रायां सूर्यपर्वणि नारद ॥ तत्रागतामहल्यां च ददर्श पाकशासनः ॥१४॥ सुस्मितां सुदतीं शांतां पीनश्रोणिपयोधराम् ॥ मूर्च्छामवाप चेंद्रश्च दृष्टिमात्रेण तत्क्षणात् ॥ १५ ॥ अथापरदिने तां च दृष्ट्वा मंदाकिनीतटे ॥ एकाकिनीं सुस्मितां च स्नातीं नग्नां सलज्जिताम् ॥ १६ ॥ दृष्ट्वा श्रोणिं स्तनयुगमतीव विपुलं हरिः ॥ मूर्च्छामवाप कामार्तो जहार चेतनां पुनः ॥ १७ ॥ क्षणेन चेतनां प्राप्य गत्वा कामी तदंतिकम् ॥ उवाच श्लक्ष्णया वाचा विनयेन पतिव्रताम् ॥ १८ ॥ ॥ महेंद्र उवाच ॥ ॥ अहो गुणमहो रूपमहो किं वा नवं वयः ॥ अहो किं वा मुखश्रीस्ते शरच्चंद्रं विनिंदती ॥ १९ ॥ अहो कटाक्षं कुटिलं पुंसां चित्तविकर्षणम् ॥ किमहो लोचनं पद्मप्रभामोचनमीप्सितम् ॥ २० ॥ गमनं रमणीयं च गजखंजनभंजनम् ॥ अहो वाक्यं तु मधुरं पीयूषादपि दुर्लभम् ॥ २१ ॥ किमहो विपुलश्रोणी कामाधारा मनोहरा ॥ कामदा कामुकायैव मुनिमानसमोहिनी ॥ २२ ॥ अतीव कठिना पीना रंभास्तंभविडंबिता ॥ अहो नितंबयुगलं वर्तुलं चंद्रबिंबवत् ॥ २३ ॥ श्रीयुक्तं श्रीफलयुगतुल्यं ते स्तनयुग्मकम् ॥ अत्युन्नतं सुकठिनं त्रैलोक्यचित्तमोहनम् ॥ २४ ॥ अहो किं वा तपस्तेपे गौतमश्च तपोधनः ॥ संप्राप यत्फलेनैव सुदतीं सुन्दरीं वराम् ॥२५॥ निषेव्य प्रकृतिं दुर्गां विष्णुमायां सनातनीम् ॥ लक्ष्मीं च लक्ष्मीसदृशीं तपसा प्राप्य पद्मिनीम् ॥२६॥ सुकोमलां सुवदनां ललनां नलिनाननाम् ॥ शुद्धां च सुदतीं श्यामां न्यग्रोधदलमध्यमाम् ॥ २७ ॥ त्वत्पालनं च जानामि कामशास्त्रविचक्षणः ॥ कामो वा कामुकश्चंद्रः किं त्वां जानाति गौतमः ॥ २८ ॥ मां प्रशंसंति नित्यं ते कामशास्त्रविचक्षणाः ॥ उर्वश्या

याश्चाप्सरसो मां प्रशंसंति संततम् ॥ २९ ॥ दासीं कृत्वा च दास्यामि शचीं तुभ्यं वरानने ॥ त्रैलोक्यलक्ष्मीं विपुलां गृहाण त्यज
गौतमम् ॥३०॥ अनभिज्ञं कामशास्त्रे दुर्बलं च तपस्विनम् ॥ अव्यवहार्यं निष्कामं नारायणपरायणम् ॥ ३१ ॥ अविदग्धो विधाता
च योजयामास योक्षमम् ॥ ईदृशीं कामुकीं रम्यां ददाति च तपस्विने ॥३२॥ इत्युक्त्वा कामुकः शक्रः पपात चरणे मुदा ॥ तमुवाच
महासाध्वी वेदोक्तं च यथोचितम् ॥ ३३ ॥ ॥ अहल्योवाच ॥ ॥ अभाग्याद्ब्राह्मणश्चापि मरीचेश्च तपस्विनः ॥ अभाग्यात्कश्य
पस्यापि त्वं पुत्रः पापमानसः ॥ ३४ ॥ किं तज्जपेन तपसा मौनेन च व्रतेन च ॥ सुरार्चनेन तीर्थेन स्त्रीभिर्यस्य मनो हृतम् ॥
॥ ३५ ॥ स्त्रीरूपं निर्मितं सृष्टौ मोहाय कामिनां मनः ॥ अन्यथा न भवेत्सृष्टिः स्रष्ट्रा तेन पुराज्ञया ॥ ३६ ॥ सर्वं मायाकरंडश्च धर्म
मार्गार्गलं नृणाम् ॥ व्यवधानं च तपसां दोषाणामाश्रयं परम् ॥३७॥ कर्मबंधनिबंधानां निगडं कठिनं स्मृतम् ॥ प्रदीपरूपं कीटानां
मीनानां बडिशं यथा ॥ ३८ ॥ विषकुंभं दुग्धमुखमारंभे मधुरोपमम् ॥ परिणामे दुःखबीजं सोपानं नरकस्य च ॥ ३९ ॥ ऋषयः
सनकाद्याश्च नोद्वाहं चक्रुरीप्सितम् ॥ परस्त्रीषु मनो येषां तेषां सर्वं च निष्फलम् ॥४०॥ परस्त्रीसेवनं शक्र इहैवात्ययशस्करम् ॥
परत्र नरकं घोरं ददाति कामुकाय च ॥ ४१ ॥ इत्युक्त्वा च महासाध्वी विहाय तं च कामुकम् ॥ प्रययौ स्वगृहं तूर्णं गृहिणी गौत
मस्य च ॥ ४२ ॥ तत्सर्वं कथयामास गौतमाय तपस्विने ॥ तस्थौ प्रहस्य स मुनिर्महेंद्रं च विनिंद्य च ॥ ४३ ॥ एकदा गौतमः शीघ्रं
जगाम शंकरालयम् ॥ शक्रो गौतमरूपेण तां संभोगं चकार सः ॥४४॥ सर्वं ज्ञात्वा च सर्वज्ञः स्वयं मंदिरमाययौ ॥ निर्गच्छंतं महेंद्रं
च ददर्श मुनिपुंगवः ॥ ४५ ॥ नग्नामहल्यां रहसि पीनश्रोणिपयोधराम् ॥ मुनिः शशाप शक्रं च भगांगश्च भवेति च ॥ ४६ ॥ कोपा
च्छशाप पत्नीं च रुदंतीं भयविह्वलाम् ॥ त्वं च पाषाणरूपा च महारण्ये भवेति च ॥ ४७ ॥ ययौ च स्वगृहं शक्रो लज्जैकतानमा
नसः ॥ उवाच मधुरं भीता स्वामिनं शोककर्शितम् ॥ ४८ ॥ ॥ अहल्योवाच ॥ ॥ मां च दासीं च निर्दोषां कथं त्यजसि धा
र्मिक ॥ त्वं च वेदविदां श्रेष्ठो विचारं कुरु धर्मतः ॥ ४९ ॥ ॥ गौतम उवाच ॥ ॥ त्वां जानामि मनःशुद्धां सुव्रतां च पतिव्रताम् ॥

त्यक्ष्यामि च तथापि त्वां परवीर्यं च बिभ्रतीम् ॥५०॥ परभोग्या च या कान्ता साऽशुद्धा सर्वकर्मसु ॥ तां यो गच्छेन्महामूढो नरकं तस्य कल्पकम् ॥ ५१ ॥ अन्नं विष्ठा जलं मूत्रं परभोग्याश्च निश्चितम् ॥ उपस्पृशेन्न तस्याश्च हंति पुण्यं पुराकृतम् ॥ ५२ ॥ अनिच्छया च शृंगारे स्त्री जारेण न दुष्यति ॥ दुष्टा स्त्री निश्चितं साध्वी स्वेच्छाशृङ्गारकर्मणि ॥ ५३ ॥ त्वं शक्रं स्वामिनं मत्वा सुखं भुक्त्वा रतिं गृहे ॥ पश्चाद्बभूव ते ज्ञानं मां दृष्ट्वा च निशामय ॥ ५४ ॥ गच्छगच्छ महारण्यं भव पाषाणरूपिणी ॥ रामपादांगुलिस्पर्शात्सद्यः पूता भविष्यसि ॥ ५५ ॥ मां संप्राप्स्यसि तत्पुण्यात्पुनरेवागमिष्यसि ॥ गच्छ कांते महारण्यमित्युक्त्वा तपसे ययौ ॥ ५६ ॥ इत्येवं कथितं सर्वं महेंद्रदर्पभंजनम् ॥ पुनः संप्राप्य लक्ष्मीं च विभोश्च कृपया मुने ॥ ५७ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे एकषष्टितमोऽध्यायः ॥ ६१ ॥

॥ नारद उवाच ॥ ॥ ब्रह्मन् केन प्रकारेण रामो दाशरथिः स्वयम् ॥ चकार मोक्षणं कुत्र युगे गौतमयोषितः ॥ १ ॥ रामावतारं सुखदं समासेन मनोहरम् ॥ कथयस्व महाभाग श्रोतुं कौतूहलं मम ॥ २ ॥ ॥ श्रीनारायण उवाच ॥ ॥ ब्रह्मणा प्रार्थितो विष्णुर्जातो दशरथात्स्वयम् ॥ कौशल्यायां च भगवांस्त्रेतायां च मुदान्वितः ॥ ३ ॥ कैकेय्यां भरतश्चैव रामतुल्यो गुणेन च ॥ लक्ष्मणश्चापि शत्रुघ्नः सुमित्रायां गुणार्णवः ॥ ४ ॥ विश्वामित्रप्रेषितश्च श्रीरामश्च सलक्ष्मणः ॥ प्रययौ मिथिलां रम्यां सीताग्रहणहेतवे ॥ ५ ॥ दृष्ट्वा पाषाणरूपां च रामो वर्त्मनि कामिनीम् ॥ विश्वामित्रं च पप्रच्छ कारणं जगदीश्वरः ॥ ६ ॥ रामस्य वचनं श्रुत्वा विश्वामित्रो महातपाः ॥ उवाच तत्र धर्मिष्ठो रहस्यं सर्वमेव च ॥ ७ ॥ कारणं तन्मुखाच्छ्रुत्वा रामो भुवनपावनः ॥ पस्पर्श पादांगुलिना सा बभूव च पद्मिनी ॥ ८ ॥ सा राममाशिषं कृत्वा प्रययौ भर्तृमंदिरम् ॥ शुभाशिषं ददौ तस्मै भार्यां संप्राप्य गौतमः ॥ ९ ॥ रामस्स मिथिलां गत्वा धनुर्भंगं शिवस्य च ॥ चकार पाणिग्रहणं सीतायाश्चैव नारद ॥ १० ॥ कृत्वा विवाहं राजेंद्रो भृगुदर्पं निहत्य च ॥ अयोध्यां प्रययौ रम्यां क्रीडाकौतुकमंगलैः ॥ ११ ॥ राजा पुत्रं नृपं कर्तुमियेष कृतसादरम् ॥ सप्ततीर्थोदकं तूर्णमानीय मुनिपुंगवान् ॥ १२ ॥ कृताधिवासं श्रीरामं सर्वं मंगलसंयुतम् ॥ दृष्ट्वा भरतमाता

च कैकेयी शोकविह्वला ॥ १३ ॥ वरयामास राजनं पूर्वमंगीकृतं वरम् ॥ रामस्य वनवासं च राजत्वं भरतस्य च ॥ १४ ॥ वरं दातुं महाराजो नेयेष प्रेममोहितः ॥ धर्मसत्यभयेनैवोवाच रामो नृपं सुधीः ॥ १५ ॥ ॥ श्रीराम उवाच ॥ ॥ तडागशतदानेन यत्पुण्यं लभते नरः ॥ ततोधिकं च लभते वापीदानेन निश्चितम् ॥ १६ ॥ दशवापीप्रदानेन यत्पुण्यं लभते नरः ॥ ततोधिकं च लभते पुण्यं कन्याप्रदानतः ॥ १७ ॥ दशकन्याप्रदानेन यत्पुण्यं लभते नरः ॥ ततोधिकं च लभते यज्ञेकेन नराधिप ॥ १८ ॥ शतयज्ञेन यत्पुण्यं लभते पुण्यकृज्जनः ॥ ततोधिकं च लभते पुत्रास्यदर्शनेन च ॥ १९ ॥ दर्शने शतपुत्राणां यत्पुण्यं लभते नरः ॥ तत्पुण्यं लभते नूनं पुण्यवान्सत्यपालनात् ॥ २० ॥ न हि सत्यात्परो धर्मो नानृतात्पातकं परम् ॥ न हि गंगासमं तीर्थं न देवः केशवात्परः ॥ २१ ॥ नास्ति धर्मात्परो बंधुर्नास्ति धर्मात्परं धनम् ॥ धर्मात्प्रियः परः को वा स्वधर्मं रक्ष यत्नतः ॥ २२ ॥ स्वधर्मे रक्षिते तात शश्वत्सर्वत्र मंगलम् ॥ यशस्यं सुप्रतिष्ठा च प्रतापः पूजनं परम् ॥ २३ ॥ चतुर्दशाब्दं धर्मेण त्यक्त्वा गृहसुखं भ्रमन् ॥ वनवासं करिष्यामि सत्यस्य पालनाय ते ॥ २४ ॥ कृत्वा सत्यं च शपथमिच्छयानिच्छयाथ वा ॥ न कुर्यात्पालनं यो हि भस्मांतं तस्य सूतकम् ॥ २५ ॥ कुंभीपाके स पचति यावच्चंद्रदिवाकरौ ॥ ततो मूको भवेत्कुष्ठी मानवः सप्तजन्मसु ॥ २६ ॥ इत्येवमुक्त्वा श्रीरामो विधाय वल्कलं जटाम् ॥ प्रययौ च महारण्ये सीतया लक्ष्मणेन च ॥ २७ ॥ पुत्रशोकान्महाराजस्तत्याज स्वतनुं मुने ॥ पालनाय पितुः सत्यं रामो बभ्राम कानने ॥ २८ ॥ कालांतरे महारण्ये भगिनी रावणस्य च ॥ भ्रमंती कानने घोरे भर्त्रा सार्द्धं सुकौतुकात् ॥ २९ ॥ ददर्श रामं कुलटा कामार्ता राक्षसी तदा ॥ पुलकांचितसर्वांगी मूर्च्छामाप स्मरेण च ॥ ३० ॥ श्रीरामनिकटं गत्वा सस्मितोवाच कामुकी ॥ शश्वद्यौवनसंयुक्तातिप्रौढा कामदुर्मदा ॥ ३१ ॥ ॥ शूर्पणखोवाच ॥ ॥ हे राम हे घनश्याम रूपधाम गुणान्वित ॥ भावानुरक्तां वनितां मां गृहाण सुनिर्जने ॥ ३२ ॥ श्रुत्वा शूर्पणखावाक्यं धर्मं संस्मृत्य धार्मिकः ॥ उवाच मधुरं वाक्यं शापभीतश्च नारद ॥ ३३ ॥ ॥ श्रीराम उवाच ॥ ॥ अंब मातः सभार्योहमभार्यं

गच्छ मेनुजम् ॥ दुंःखं प्रियोन्यां प्रभजेदितरं च सुखालयम् ॥ ३४ ॥ रामस्य वचनं श्रुत्वा प्रययौ लक्ष्मणं मुदा ॥ ददर्श लक्ष्मणं शांतं कांतं च लक्षणान्वितम् ॥ ३५ ॥ मां भजस्व महाभागेत्युवाच च पुनःपुनः ॥ लक्ष्मणस्तद्वचः श्रुत्वा तामुवाच कुतूहलात् ॥ ॥ ३६ ॥ ॥ लक्ष्मण उवाच ॥ ॥ विहाय रामं सर्वेशं हे मूढे दासमिच्छसि ॥ सीतादासी च मत्पत्नी सीतादासोहमेव च ॥ ३७ ॥ भव सीतासपत्नी त्वं गच्छ रामं मदीश्वरम् ॥ तव पुत्रो भविष्यामि सीतायाश्च यथा सति ॥ ३८ ॥ लक्ष्मणस्य वचः श्रुत्वा कामेन हृतमानसा ॥ उवाच लक्ष्मणं मूढा शुष्ककंठोष्ठतालुकी ॥ ३९ ॥ ॥ शूर्पणखोवाच ॥ ॥ यदि त्यजसि मां मूढ कामात्स्वयमुपस्थिताम् ॥ युवयोश्च विपत्तिश्च भविष्यति न संशयः ॥ ४० ॥ ब्रह्मा च मोहिनीं त्यक्त्वा विश्वेऽपूज्यो बभूव सः ॥ रंभाशापेन दक्षश्च छागमस्तो बभूव सः ॥ ४१ ॥ स्वर्वैद्यश्चोर्वशीशापाद्यज्ञभागविवर्जितः ॥ रूपहीनः कुबेरश्च मेनाशापेन लक्ष्मण ॥ ४२ ॥ कामो घृताचीशापेन बभूव भस्मसाच्छिवात् ॥ बलिर्मंदालसाशापाद्भ्रष्टराज्यो बभूव ह ॥ ४३ ॥ शापेन मिश्रकेश्याश्च हृतभार्यो बृहस्पतिः ॥ मम शापात्तथा रामो हृतभार्यो भविष्यति ॥ ४४ ॥ कामातुरां यौवनस्थां भार्यां स्वयमुपस्थिताम् ॥ न त्यजेद्धर्मभीतश्च श्रुतं माध्यंदिने पुरा ॥ ४५ ॥ इह त्यक्त्वा विपद्ग्रस्तः परत्र नरकं व्रजेत् ॥ श्रुत्वा शूर्पणखावाक्यमर्द्धचंद्रेण लक्ष्मणः ॥ ४६ ॥ चिच्छेद नासिकां तस्याः क्षुरधारेण लीलया ॥ तस्या भ्राता च युयुधे बलवान्खरदूषणः ॥ ४७ ॥ ससैन्यो लक्ष्मणास्त्रेण स जगाम यमालयम् ॥ चतुर्दशसहस्रं च राक्षसान्खरदूषणम् ॥ ४८ ॥ मृतान्दृष्ट्वा शूर्पणखा भर्त्सयामास रावणम् ॥ सर्वं निवेदनं कृत्वा जगाम पुष्करं तदा ॥ ४९ ॥ ब्रह्मणश्च वरं प्राप कृत्वा च दुष्करं तपः ॥ उवाच तादृशीं दृष्ट्वा निराहारां तपस्विनीम् ॥५०॥ सर्वज्ञस्तन्मनो मत्वा कृपासिंधुश्च नारद ॥ ५१ ॥ ॥ ब्रह्मोवाच ॥ ॥ अप्राप्य रामं दुष्प्रापं करोषि दुष्करं तपः ॥ जितेंद्रियाणां प्रवरं लक्ष्मणं धर्मलक्षणम् ॥ ब्रह्मविष्णुशिवादीनामीश्वरं प्रकृतेः परम् ॥५२॥ जन्मांतरे च भर्तारं प्राप्स्यसि त्वं वरानने॥

१ भजेत्प्रियजनं दुःखम्-इ० पा० ।

ब्र. वै. क. इत्येवमुक्त्वा ब्रह्मा च जगाम स्वालयं मुदा ॥ ५३ ॥ देहं तत्याज सा वह्नौ सा च कुब्जा बभूव ह ॥ अथ शूर्पणखावाक्यात्कोपात्क खं० ४ उ
॥१५७॥ पितविग्रहः ॥५४॥ जहार मायया सीतां मायावी राक्षसेश्वरः ॥ सीतां न दृष्ट्वा रामश्च मूर्च्छां प्राप चिरं मुने ॥ ५५ ॥ चेतनां कारया
मास भ्राता चाध्यात्मिकेन च ॥ ततो बभ्राम गहनं शैलं च कंदरं नदम् ॥ ५६ ॥ अहर्निशं च शोकार्तो मुनीनामाश्रमं मुने ॥ चिर अ० ६२
मन्वेषणं कृत्वा न दृष्ट्वा जानकीं विभुः ॥ ५७ ॥ चकार मित्रतां रामः सुग्रीवेण स्वयं प्रभुः ॥ निहत्य वालिनं बाणैर्ददौ राज्यं
च लीलया ॥ ५८ ॥ सुग्रीवाय च मित्राय स्वीकारपालनाय वै ॥ दूतान्प्रस्थापयामास सर्वत्र वानरेश्वरः ॥५९॥ तस्थौ सुग्रीवभवने
श्रीरामश्च सलक्ष्मणः ॥ हनूमते वरं दत्त्वा रम्यं रत्नांगुलीयकम् ॥ ६० ॥ सीतायै शुभसंदेशं प्राणधारणकारणम् ॥ तं च प्रस्थापया
मास दक्षिणां दिशमुत्तमाम् ॥ ६१ ॥ सुप्रीत्यालिंगनं दत्त्वा पादरेणून्सुदुर्लभान् ॥ हनूमान्प्रययौ लंकां सीतान्वेषणहेतवे ॥ ६२ ॥
रामादधीतसंदेशो ययौ रुद्रकलोद्भवः ॥ अशोककानने सीतां ददर्श शोककर्शिताम् ॥ ६३ ॥ निराहारामतिकृशां कुह्वां चंद्रकला
मिव ॥ सततं रामरामेति जपंतीं भक्तिपूर्वकम् ॥ ६४ ॥ बिभ्रतीं च जटाभारं तप्तकांचनसन्निभाम् ॥ ध्यायमानां पदाब्जं च श्रीरा
मस्य दिवानिशम् ॥ ६५ ॥ शुद्धशय्यां सुशीलां च सुव्रतां च पतिव्रताम् ॥ महालक्ष्मीलक्ष्मयुक्तां प्रज्वलंतीं स्वतेजसा ॥ ६६ ॥
पुण्यदां सर्वतीर्थानां दृष्ट्वा भुवनपावनीम् ॥ प्रणम्य मातरं दृष्ट्वा रुदंतीं वायुनंदनः ॥ ६७ ॥ रत्नांगुलीयं रामस्य ददौ तस्यै मुदा
न्वितः ॥ रुरोद धर्मी तां दृष्ट्वा धृत्वा तच्चरणांबुजम् ॥ उवाच रामसंदेशं सीताजीवनरक्षणम् ॥ ६८ ॥ ॥ हनुमानुवाच ॥ ॥
पारं समुद्रे श्रीरामः सन्नद्धश्च सलक्ष्मणः ॥ ६९ ॥ बभूव राममित्रं च सुग्रीवो बलवान्कपिः ॥ रामश्च वालिनं हत्वा राज्यं निष्कंटकं
ददौ ॥ ७० ॥ सुग्रीवाय च मित्राय तद्भार्यां वालिना हृताम् ॥ सुग्रीवश्च तवोद्धारं स्वीचकार च धर्मतः ॥ ७१ ॥ वानराश्च ययुः
सर्वे तवान्वेषणकारणात् ॥ प्राप्य मंगलवार्तां च मत्तो राजीवलोचनः ॥ ७२ ॥ गंभीरं सागरं बद्ध्वा सोऽचिरेणागमिष्यति ॥ नि ॥१५७॥
हत्य रावणं पापं सपुत्रं च सबांधवम् ॥ ७३ ॥ करिष्यत्यचिरेणैव हे मातस्तव मोक्षणम् ॥ अद्य रत्नमयीं लंकां निःशंकस्त्वत्प्रसा

द्तः ॥ ७४ ॥ भस्मीभूतां करिष्यामि मातः पश्य च सस्मितम् ॥ मर्कटीर्डिंभतुल्यां च लंकां पश्यामि सुव्रते ॥ ७५ ॥ मूत्रतुल्यं समुद्रं च शरावमिव भूतलम् ॥ पिपीलिकासंघमिव ससैन्यं रावणं तथा ॥ ७६ ॥ संहर्तुं च समर्थोहं मुहूर्तार्धेन लीलया ॥ रामप्रतिज्ञारक्षार्थं न हनिष्यामि सांप्रतम् ॥ ७७ ॥ स्वस्था भव महाभागे त्यज भीतिं मदीश्वरि ॥ वानरस्य वचः श्रुत्वा रुरोदोच्चैर्मुहुर्मुहुः ॥ उवाच वचनं भीता सीता रामपतिव्रता ॥ ७८ ॥ ॥ सीतोवाच ॥ ॥ अये जीवति मे रामो मच्छोकार्णवदारुणात ॥ ७९ ॥ अपि मे कुशली नाथः कौसल्यानंदनः प्रभुः ॥ कीदृशश्च कृशांगश्च जानकीजीवनोधुना ॥ ८० ॥ किमाहारश्च किं भुंक्ते मम प्राणाधिकः प्रियः ॥ अपि पारे समुद्रस्य सत्यं सीतापतिः स्वयम् ॥ ८१ ॥ अपि सत्यं स सन्नद्धो न शोकेन हतः प्रभुः ॥ अपि स्मरति मां पापां स्वामिनो दुःखरूपिणीम् ॥ ८२ ॥ मदर्थे कति दुखं वा संप्राप स मदीश्वरः ॥ हारो नारोपितः कंठे पुरा व्यवहितो रतौ ॥ ८३ ॥ अधुनैवावयोर्मध्ये समुद्रः शतयोजनः ॥ अपि द्रक्ष्यामि तं रामं करुणासागरं प्रभुम् ॥ ८४ ॥ कांतं शांतं नितांतं च धर्मिष्ठं धर्मकर्मणि ॥ अयि सेवां करिष्यामि पादपद्मे पुनः प्रभोः ॥ ८५ ॥ पतिसेवाविहीनाया मूढाया जीवनं वृथा ॥ अयि मे धर्मपुत्रश्च सत्यं जीवति लक्ष्मणः ॥ ८६ ॥ मच्छोकसागरे मग्नो भग्नदर्पो मया विना ॥ वीराणां प्रवरो धर्मी देवकल्पश्च देवरः ॥ ८७ ॥ अपि सत्यं स सन्नद्धो मत्प्रभोरनुजः सदा ॥ अपि द्रक्ष्यामि सत्यं तं लक्ष्मणं धर्मलक्षणम् ॥ प्राणान्ममधिकं प्रेम्णा धन्यं पुण्यस्वरूपिणम् ॥ ८८ ॥ इत्येवं वचनं श्रुत्वा दत्त्वा प्रत्युत्तरं शुभम् ॥ भस्मीभूतां च लंकां च चकार लीलया मुने ॥ ८९ ॥ पुनः प्रबोधं तस्यै च दत्त्वा वायुसुतः कपिः ॥ प्रययौ लीलया वेगाद्यत्र राजीवलोचनः ॥ ९० ॥ सर्वं तत्कथयामास वृत्तांतं मातुरेव च ॥ सीतामंगलवृत्तांतं श्रुत्वा रामो रुरोद च ॥ ९१ ॥ रुरोदोच्चैर्लक्ष्मणश्च सुग्रीवश्चापि नारद ॥ वानरा रुरुदुः सर्वे महाबलपराक्रमाः ॥ ९२ ॥ निबध्य सेतुं लंकां च प्रययौ रघुनंदनः ॥ ससैन्यः सानुजः शीघ्रं सन्नद्धश्चापि नारद ॥ ९३ ॥ निहत्य रावणं रामो रणं कृत्वा सबांधवम् ॥ चकार मोक्षणं ब्रह्मन् सीतायाश्च शुभेक्षणे ॥ ९४ ॥ कृत्वा पुष्पकयानेन सीतां सत्यपरायणाम् ॥ अयोध्यां

प्रययौ शीघ्रं क्रीडाकौतुकमंगलैः ॥९५॥ क्रीडां चकार भगवान् सीतां कृत्वा च वक्षसि ॥ विजहौ विरहज्वालां सीतारामश्च तत्क्षणम्
॥ ९६ ॥ सप्तद्वीपेश्वरो रामो बभूव पृथिवीतले ॥ बभूव निखिला पृथ्वी आधिव्याधिविवर्जिता ॥ ९७ ॥ बभूवतू रामपुत्रौ धार्मिकौ च
कुशीलवौ ॥ तयोश्च पुत्रैः पौत्रैश्च सूर्यवंशोद्भवा नृपाः ॥ ९८ ॥ इति ते कथितं वत्स श्रीरामचरितं शुभम् ॥ सुखदं मोक्षदं सारं पारपोतं
भवार्णवे ॥९९॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे श्रीरामचरितं नाम द्विषष्टितमोऽध्यायः
॥ ६२ ॥ ॥ नारायण उवाच ॥ ॥ अथ कंसो विचिंत्यैवं दृष्ट्वा दुःस्वप्नमेव च ॥ समुद्विग्नो महाभीतो निराहारो निरुत्सुकः ॥ १ ॥
पुत्रं मित्रं बंधुगणं बांधवं च पुरोहितम् ॥ समानीय सभामध्ये तानुवाच सुदुःखितः ॥ २ ॥ ॥ कंस उवाच ॥ ॥ मया दृष्टो निशीथे यो
दुःस्वप्नो हि भयप्रदः ॥ निबोधत बुधाः सर्वे बांधवाश्च पुरोहिताः ॥ ३ ॥ बिभ्रती रक्तपुष्पाणां मालां सा रक्तचंदनम् ॥ रक्तांबरं खड्ग
तीक्ष्णं खर्परं च भयंकरम् ॥४॥ प्रकृत्वाट्टाट्टहासं च लोलजिह्वा भयंकरी ॥ अतीव वृद्धा कृष्णांगी नगरे मम नृत्यति ॥ ५ ॥ मुक्तकेशी छि
न्ननासा कृष्णा कृष्णांबरप्रिया ॥ विधवा सा महाशूद्री मामालिंगितुमिच्छति ॥६॥ मलिनं चैलखंडं च बिभ्रती रूक्षमूर्द्धजान् ॥ दधतीं चू
र्णतिलकं कपोले मम वक्षसि ॥ ७ ॥ कृष्णवर्णानि पक्वानि छिन्नभिन्नानि सत्यक ॥ पतंति कृत्वा शब्दांश्च शश्वत्तालफलानि च ॥
॥ ८ ॥ कुचैलो विकृताकारो म्लेच्छो हि रूक्षमूर्द्धजः ॥ ददाति मह्यं भूषायां च्छिन्नभिन्नकर्पद्दकान् ॥ ९ ॥ महारुष्टा च दिव्या स्त्री
पतिपुत्रवती सती ॥ बभंज पूर्णकुंभं च साभिशप्य पुनःपुनः ॥ १० ॥ अम्लानामूढमालां च रक्तचंदनचार्चिताम् ॥ ददाति मह्यं विप्र
श्च महारुष्टोतिशप्य च ॥ ११ ॥ क्षणमंगारवृष्टिश्च भस्मवृष्टिः क्षणं क्षणम् ॥ क्षणंक्षणं रक्तवृष्टिर्भवेच्च नगरे मम ॥ १२ ॥ वानरं वाय
सं श्वानं भल्लूकं सूकरं खरम् ॥ पश्यामि विकटाकारं शब्दं कुर्वंतमुल्बणम् ॥ १३ ॥ पश्यामि शुष्ककाष्ठानां राशिमम्लानकज्जलम् ॥
अरुणोदयवेलायां कर्पौश्छिन्ननखानि च ॥ १४ ॥ पीतवस्त्रपरीधाना शुक्लचंदनचर्चिता ॥ बिभ्रती मालतीमालां रत्नभूषणभूषिता ॥
॥ १५ ॥ क्रीडाकमलहस्ता सा सिंदूरबिंदुशोभिता ॥ कृत्वाभिशापं मां रुष्टा याति मन्मंदिरात्सती ॥ १६ ॥ पाशहस्तांश्च पुरुषा

न्मुक्तकेशान्भयंकरान् ॥ अतिरूक्षांश्च पश्यामि विशतो नगरं मम ॥ १७॥ नग्ननारीं मुक्तकेशीं नृत्यंतीं च गृहेगृहे ॥ अतीव विकृ
ताकारां पश्यामि सस्मितां सदा॥१८॥ छिन्ननासा च विधवा महाशूद्री दिगंबरा ॥ सा तैलाभ्यंगितं मां च करोत्यतिभयंकरी ॥१९॥
निर्वाणांगारयुक्ताश्च भस्मपूर्णा दिगंबराः ॥ अतिप्रभातसमये चित्राः पश्यामि सस्मिताः ॥ २० ॥ पश्यामि च विवाहं च नृत्यगी
तमनोहरम् ॥ रक्तवस्त्रपरीधानान्पुरुषान्रक्तमूर्द्धजान् ॥ २१ ॥ रक्तं वमंतं पुरुषं नृत्यंतं नग्नमुल्बणम् ॥ धावंतं च शयानं च पश्यामि
सस्मितं सदा ॥ २२ ॥ राहुग्रस्तं च गगने मंडलं चंद्रसूर्ययोः ॥ एककाले च पश्यामि सर्वग्रासं च बांधवाः ॥ २३ ॥ उल्कापातं
धूमकेतुं भूकंपं राष्ट्रविप्लवम् ॥ झंझावातं महोत्पातं पश्यामि च पुरोहित ॥ २४ ॥ वायुना घूर्णमानांश्च च्छिन्नस्कंधान्महीरुहान् ॥ पति
तान्पर्वतांश्चैव पश्यामि पृथिवीतले ॥ २५ ॥ पुरुषं छिन्नशिरसं नृत्यंतं नग्नमुच्छ्रितम् ॥ मुंडमालाकरं घोरं पश्यामि च गृहेगृहे ॥ २६ ॥
दग्धं सर्वाश्रमं भस्म पूर्णमंगारसंकुलम् ॥ हाहाकारं च कुर्वंतं सर्वं पश्यामि सर्वतः ॥ २७ ॥ इत्येवमुक्त्वा राजा स विरराम सभात
ले ॥ दृष्ट्वा स्वप्नं बांधवाश्च न तमुक्त्वा निशश्वसुः॥२८॥ जहार चेतनां सद्यः सत्यकश्च पुरोहितः ॥ मत्वा विनाशं कंसस्य यजमानस्य
नारद ॥२९॥ रुरोद नारीवर्गश्च पिता माता च शोकतः ॥ मेने विनाशकालं च सद्यः स्वयमुपस्थितम् ॥३०॥ इति श्रीब्रह्मवैवर्त्ते महा
पुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे कंसदुःस्वप्नकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ श्रीनारायण
उवाच ॥ ॥ सर्वं कृत्वा परामर्शं सत्यकश्च पुरोहितः ॥ बुद्धिमाञ्छुक्रशिष्यश्च तमुवाच हितं मुने ॥ १ ॥ ॥ सत्यक उवाच ॥ ॥
भयं त्यज महाभाग भयं किं ते मयि स्थिते ॥ कुरु यागं महेशस्य सर्वारिष्टविनाशनम् ॥ २ ॥ यागो धनुर्मखो नाम बह्वन्नो बहुद
क्षिणः ॥ दुःस्वप्नानां नाशकरः शत्रुभीतिविनाशकः ॥ ३ ॥ आध्यात्मिकमाधिदैवमाधिभौतिकमुत्कटम् ॥ एषां त्रिविधोत्पातानां
खंडनो भूतिवर्धनः ॥ ४ ॥ यागे समाप्ते शंभुश्च जरामृत्युहरं वरम् ॥ ददाति साक्षाद्भवति दाता च सर्वसंपदाम् ॥ ५ ॥ चकारेमं च
यागं च पुरा बाणो महाबलः ॥ नंदी परशुरामश्च भल्लुश्च बलिनां वरः ॥६॥ पुरा ददौ धनुरिदं शिवो नंदीश्वराय च ॥ यागेन भूत्वा

सिद्धः स ददौ बाणय धार्मिकः ॥ ७ ॥ कृत्वा यागं महासिद्धो ददौ रामाय पुष्करे ॥ तुभ्यं ददौ परशुरामः कृपया च कृपानिधिः ॥ ॥ ८ ॥ सहस्रहस्तपरिमितं दैर्ध्येतिकठिनं नृप ॥ दशहस्तप्रशस्तं च शंकरेच्छाविनिर्मितम् ॥ ९ ॥ पशुपतेः पाशुपतं युक्तयानेन दुर्वहम् ॥ सर्वे भंक्तुं न शक्ताश्च देवं नारायणं विना ॥ १० ॥ यागे च धनुषः पूजां शंकरस्य तु शंकरे ॥ कुरु शीघ्रं शुभार्थं च सर्वान्कुरु निमंत्रणम् ॥ ११ ॥ अस्मिन्यागे धनुर्भंगो भवेद्यदि नराधिप ॥ विनाशो यजमानस्य भविष्यति न संशयः ॥ १२ ॥ भग्ने धनुषि यागश्च भग्नो भवति निश्चितम् ॥ फलं ददाति को वात्र चानिष्पन्ने च कर्मणि ॥१३॥ ब्रह्मा च धनुषो मूले मध्ये नारायणः स्वयम् ॥ अग्रे चोग्रप्रतापश्च महादेवो महामते ॥ १४ ॥ धनुर्हि त्रिविकारं च सद्रत्नखचितं वरम् ॥ग्रीष्ममध्याह्नमार्तंडप्रभाप्रच्छन्नकारणम् ॥ ॥ १५ ॥ अशक्तश्च नमयितुमनंतश्च महाबलः ॥ सूर्यश्च कार्तिकेयश्च का कथान्यस्य भूमिप ॥ १६ ॥ त्रिपुरारिः पुरानेन जघान त्रिपुरं मुदा ॥ निर्भयं कुरु स्वच्छंदं मंगलार्हं महोत्सवे ॥ १७ ॥ सत्यकस्य वचः श्रुत्वा चंद्रवंशविवर्धनः ॥ उवाच कंसः सर्वार्थे सततं च हितैषिणम् ॥ १८ ॥ ॥ कंस उवाच ॥ ॥ वसुदेवगृहे जज्ञे मद्वधी कुलनाशनः ॥ स्वच्छंदं नंदगेहे च वर्धते नंदनंदनः ॥ ॥ १९ ॥ मद्बंधुवर्गाञ्छूरांश्च मंत्रिणः सुविशारदान् ॥ भगिनीं पूतनां पूतां जघान बालको बली ॥ २० ॥ गोवर्धनं दधारैककरेण बलवर्धनः ॥ महेंद्रस्य च शूरस्य चकार च पराभवम् ॥ २१ ॥ ब्रह्माणं दर्शयामास ब्रह्मरूपं चराचरम् ॥ निवहं बालवत्सानां चकार कृत्रिमं मुदा ॥ २२ ॥ तमेव बलिनं हंतुं मंत्रणं कुरु सत्यक ॥ मम शत्रुर्विना तेन नास्तीह धरणीतले ॥ २३ ॥ न हि स्वर्गे न पाताले त्रिषु लोकेषु निश्चितम् ॥ संति संतश्च राजानः सर्वत्र मम बांधवाः ॥ २४ ॥ महातपस्वी ब्रह्मा च तपस्वी शंकरः स्वयम् ॥ विष्णुः सर्वत्र सर्वात्मा समदर्शी सनातनः ॥ २५ ॥ नंदपुत्रं निहत्याहं त्रिषु लोकेषु पूजितः ॥ सार्वभौमो भविष्यामि सप्तद्वीपेश्वरो महान् ॥ २६ ॥ स्वर्गे निहत्य शक्रं च दुर्बलं दैत्यनिर्जितम् ॥ भविष्यामि महेंद्रश्च तत्र निर्जित्य भास्करम् ॥ २७ ॥ यक्ष्मग्रस्तं च चंद्रं च ममैव पूर्वपुरुषम् ॥ वायुं कुबेरं वरुणं यमं जेष्यामि निश्चितम् ॥ २८ ॥ गच्छ

नंदव्रजं शीघ्रं नंदं च नंदनंदनम् ॥ तद्भ्रातरं च बलिनं बलमानय सांप्रतम् ॥ २९ ॥ कंसस्य वचनं श्रुत्वा तमुवाच स सत्यकः ॥
हितं सत्यं नीतिसारं परं सामयिकं तथा ॥ ३० ॥ ॥ सत्यक उवाच ॥ ॥ अक्रूरमुद्धवं वापि वसुदेवमथापि वा ॥ प्रस्थापय महा
भाग नंदव्रजमभीप्सितम् ॥ ३१ ॥ सत्यकस्य वचः श्रुत्वा वसंतं तत्र संसदि ॥ स्वर्णसिंहासनस्थं च वसुदेवमुवाच सः ॥ ३२ ॥
॥ ॥ राजेंद्र उवाच ॥ ॥ तत्त्वज्ञो नीतिशास्त्राणां त्वमुपायविशारदः ॥ व्रज नंदव्रजं बंधो वसुदेवसुतालयम् ॥ ३३ ॥ वृषभानुं
च नंदं च बलं च नंदनंदनम् ॥ शीघ्रमानय यत्नेन सर्वं गोकुलवासिनम् ॥ ३४ ॥ गृहीत्वा पत्रिकां दूता गच्छंतु च चतुर्दिशम् ॥
नृपान्मुनिगणान्सर्वान्कर्तुं विज्ञापनं मुदा ॥ ३५ ॥ नृपस्य वचनं श्रुत्वा शुष्ककंठोष्ठतालुकः ॥ उवाच वचनं ब्रह्मन् हृदयेन विदूयता
॥ ३६ ॥ ॥ वसुदेव उवाच ॥ नियुक्तमत्र राजेंद्र गमनं मम सांप्रतम् ॥ विज्ञापितुं नदव्रजं वसुदेवस्य नंदनम् ॥ ३७ ॥ यद्या
यातो नंदपुत्रो यागे ते च महोत्सवे ॥ अवश्यं तद्विरोधश्च भविष्यति त्वया सह ॥ ३८ ॥ तमहं च समानीय कारयिष्यामि संयुतम् ॥
इति मे न हि भद्रं च विघ्नस्तस्य तवापि च ॥ ३९ ॥ पित्रानीतो मृतः कृष्ण इति सर्वो वदिष्यति ॥ वसुदेवः सुतद्वारा जघान नृप
मेव च ॥ ४० ॥ द्वयोरेकतरस्यापि सद्यो मृत्युर्भविष्यति ॥ पतिष्यंति च शूराश्च नास्ति युद्धं निरामिषम् ॥ ४१ ॥ वसुदेववचः
श्रुत्वा रक्तपंकजलोचनः ॥ खड्गं गृहीत्वा तं हंतुं प्रययौ नृपतीश्वरः ॥ ४२ ॥ हाहेति कृत्वा पुत्रं च वारयामास तत्क्षणम् ॥ उग्रसेनो
महाराजमतीव बलवान्मुने ॥ ४३ ॥ स्वपीठाद्वसुदेवश्च कोपाविष्टो गृहं ययौ ॥ अक्रूरं प्रेरयामास गंतुं नंदव्रजं नृपः ॥ ४४ ॥
दूतान्प्रस्थापयामास शीघ्रं प्रतिदिशं तथा ॥ आययुर्मुनयः सर्वे नृपाश्च सपरिच्छदाः ॥ ४५ ॥ दिक्पालाश्च सुराः सर्वे ब्राह्मणाश्च त
पस्विनः ॥ सनकश्च सनंदश्च वोढुः पंचशिखस्तथा ॥ ४६ ॥ सनत्कुमारो भगवान्प्रज्वलन्ब्रह्मतेजसा ॥ कपिलश्चासुरिः पैलः
सुमंतुश्च सनातनः ॥ ४७ ॥ पुलहश्च पुलस्त्यश्च भृगुश्च क्रतुरंगिराः ॥ मरीचिः कश्यपश्चैव दक्षोत्रिश्च्यवनस्तथा ॥ ४८ ॥ भरद्वा
जश्च व्यासश्च गौतमश्च पराशरः ॥ प्रचेताश्च वसिष्ठश्च संवर्तश्च बृहस्पतिः ॥ ४९ ॥ कात्यायनो याज्ञवल्क्योप्युत्तंकः क्षौभरिस्तथा ॥

पर्वतो देवलश्चैव जैगीषव्यश्च जैमिनिः ॥ ५० ॥ विश्वामित्रश्च सुतपाः पिप्पलः शाकटायनः ॥ जाबालिर्जांगलिश्चैव पिशलि
श्च शिलालिकः ॥ ५१ ॥ आस्तिकश्च जरत्कारुस्तथा कल्याणमित्रकः ॥ दुर्वासा वामदेवश्च ऋष्यशृंगो विभांडकः ॥ ५२ ॥ पथिः
कविः कणादश्च कौशिकः पाणिनिस्तथा ॥ कौत्सोघमर्षणश्चैव वाल्मीकिर्लोमहर्षणः ॥ ५३ ॥ मार्कंडेयो मृकंडुश्च परशुरामश्च सांकृ
तिः ॥ अगस्त्यश्च तथा वांतस्तथाऽन्ये मुनयो मुने ॥ ५४ ॥ सशिष्याश्च सपुत्राश्च ब्राह्मणाश्च तपस्विनः ॥ जरासंधो दंतवक्रो दां
भिको द्रविडाधिपः ॥ ५५ ॥ शिशुपालो भीष्मकश्च भगदत्तश्च मुद्गलः ॥ धार्तराष्ट्रो धूमकेशो धूम्रकेतुश्च शंबरः ॥ ५६ ॥ शल्यः स
त्राजितः शंकुर्नृपाश्चान्ये महाबलाः ॥ भीष्मो द्रोणः कृपाचार्यो ह्यश्वत्थामा महाबलः ॥ ५७ ॥ भूरिश्रवाश्च शाल्वश्च केकेयः कौशल
स्तथा ॥ सर्वान्संभाषयामास महाराजो यथोचितम् ॥ सत्यको यज्ञदिवसं चकार च शुभक्षणम् ॥ ५८ ॥ ॥ इति श्रीब्रह्मवैवर्ते
महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे कंसयज्ञकथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ श्रीनारा
यण उवाच ॥ ॥ कंसस्य वचनं श्रुत्वा सोक्रूरो धर्मिणां वरः ॥ उवाच चोद्धवं शांतं शांतः प्रहृष्टमानसः ॥ १ ॥ ॥ अक्रूर उवाच ॥
सुप्रभाताद्य रजनी बभूव मे शुभं दिनम् ॥ तुष्टाश्च गुरवो विप्रा देवा मामिति निश्चितम् ॥ २ ॥ कोटिजन्मार्जितं पुण्यं मम स्वयमुप
स्थितम् ॥ बभूव मे समुत्पन्नं यद्यत्कर्म शुभाशुभम् ॥ ३ ॥ चिच्छेद बंधनिगडं मम बद्धस्य कर्मणा ॥ कारागाराच्च संसारान्मुक्तो
यामि हरेः पदम् ॥ ४ ॥ सुहृदर्थी कृतोहं च कंसेन विदुषा रुषा ॥ वरेण तुल्यो देवस्य क्रोधो मम बभूव ह ॥ ५ ॥ व्रजराजं समा
हर्तुं व्रजं यास्यामि सांप्रतम् ॥ द्रक्ष्यामि परमं पूज्यं भुक्तिमुक्तिप्रदायिनम् ॥ ६ ॥ नवीनजलदश्यामं नीलेंदीवरलोचनम् ॥ पीतवस्त्र
समायुक्तकटिदेशविराजितम् ॥ ७ ॥ धूलिधूसरितांगं च किं वा चंदनचर्चितम् ॥ अथवा नवनीताक्तमंगं द्रक्ष्यामि सस्मितम्
॥ ८ ॥ किं वा विनोदमुरलीं वादयंतं मनोहरम् ॥ किं वा गवां समूहं च चारयंतमितस्ततः ॥ ९ ॥ किं वा वसंतं गच्छंतं

१ कपिपथः-इ० पा० ।

शयानं वा मुनिश्चितम् ॥ निदेशं कीदृशं चाद्य सुदृष्ट्वा च शुभे क्षणे ॥ १० ॥ यत्पादपद्मं ध्यायंते ब्रह्मविष्णुशिवा
दयः ॥ न हि जानंति यस्यांतमनंतोनंतविग्रहः ॥ ११ ॥ यत्प्रभावं न जानंति देवाः संतश्च संततम् ॥ तस्य स्तोत्रे
जडीभूता भीता देवी सरस्वती ॥ १२ ॥ दासीनियुक्ता यद्दास्ये महालक्ष्मीश्च लक्षिता ॥ गंगा यस्य पदांभोजान्निः
सृता सत्त्वरूपिणी ॥ १३ ॥ जन्ममृत्युजराव्याधिहरा त्रिभुवनात्परा ॥ दर्शनस्पर्शनाभ्यां च नृणां पातकनाशिनी ॥ १४ ॥
ध्यायते यत्पदांभोजं दुर्गा दुर्गार्तिनाशिनी ॥ त्रैलोक्यजननी देवी मूलप्रकृतिरीश्वरी ॥ १५ ॥ लोम्नां कूपेषु विश्वानि महावि
ष्णोश्च यस्य च ॥ असंख्यानि विचित्राणि स्थूलात्स्थूलतरस्य च ॥ १६ ॥ स च यत्षोडशांशश्च यस्य सर्वेश्वरस्य च ॥ तं द्रष्टुं
यामि हे बंधो मायामानुषरूपिणम् ॥ १७ ॥ सर्वं सर्वांतरात्मानं सर्वज्ञं प्रकृतेः परम् ॥ ब्रह्मज्योतिःस्वरूपं च भक्तानुग्रहविग्रहम् ॥
॥ १८ ॥ निर्गुणं च निरीहं च निरानंदं निराश्रयम् ॥ परमं परमानंदं सानंदं नंदनंदनम् ॥ १९ ॥ स्वेच्छामयं सर्वपरं सर्वबीजं सना
तनम् ॥ वदंति योगिनः शश्वद्ध्यायंतेहर्निशं शिशुम् ॥ २० ॥ मन्वंतरसहस्रं च निराहारः कृशोदरः ॥ पद्मे पाद्मस्तपस्तेपे पुरा
पाद्मे तु यत्कृते ॥ २१ ॥ पुनः कुरु तपस्यां च तदा द्रक्ष्यसि मामिति ॥ सकृच्छब्दं च शुश्राव न ददर्श तथापि तम् ॥ २२ ॥
तावत्कालं पुनस्तप्त्वा वरं प्राप ददर्श तम् ॥ ईदृशं परमेशं च द्रक्ष्याम्यद्य तमुद्धव ॥ २३ ॥ पुरा शंभुस्तपस्तेपे यावद्वै ब्रह्मणो वयः ॥
ज्योतिर्मंडलमध्ये च गोलोके तं ददर्श सः ॥ २४ ॥ सर्वतत्त्वं सर्वसिद्धं मम तत्त्वं परं वरम् ॥ संप्राप तत्पदांभोजे भक्तिं च निर्मलां
पराम् ॥ २५ ॥ चकारात्मसमं तं च यो भक्तो भक्तवत्सलः ॥ ईदृशं परमेशं च द्रक्ष्याम्यद्य तमुद्धव ॥ २६ ॥ सहस्रशक्रपातांतं निरा
हारः कृशोदरः ॥ यस्यानंतस्तपस्तेपे भक्त्या च परमात्मनः ॥ २७ ॥ तदा चात्मसमं ज्ञानं ददौ तस्मै य ईश्वरः ॥ ईदृशं परमेशं च
द्रक्ष्याम्यद्य तमुद्धव ॥ २८ ॥ सहस्रशक्रपातांतं धर्मस्तेपे च यत्तपः ॥ तदा बभूव साक्षी स धर्मिणां सर्वकर्मिणाम् ॥ २९ ॥ शास्ता
च फलदाता च यत्प्रसादान्नृणामिह ॥ सर्वेशमीदृशमहो द्रक्ष्याम्यद्य तमुद्धव ॥ ३० ॥ अष्टाविंशतिरिंद्राणां पतने यद्दिवानिशम् ॥

एवं क्रमेण मासाब्दैः शताब्दं ब्रह्मणो वयः ॥ ३१ ॥ अहो यस्य निमेषेण ब्रह्मणः पतनं भवेत् ॥ ईदृशं परमात्मानं द्रक्ष्याम्यद्य
तमुद्धव ॥ ३२ ॥ नास्ति भूरजसां संख्या यथैव ब्रह्मणां तथा ॥ तथैव बंधो विश्वानां तदाधारो महाविराट् ॥ ३३ ॥ विश्वे विश्वे च
प्रत्येकं ब्रह्मविष्णुशिवादयः ॥ मुनयो मनवः सिद्धा मानवाद्याश्चराचराः ॥ ३४ ॥ यत्षोडशांशः स विराट् सृष्टो नष्टश्च लीलया ॥
ईदृशं सर्वशास्तारं द्रक्ष्याम्यद्य तमुद्धव ॥ ३५ ॥ इत्येवमुक्त्वाक्रूरश्च पुलकांचितविग्रहः ॥ मूर्च्छां प्राप साश्रुनेत्रो दध्यौ तच्चरणां
बुजम् ॥ ३६ ॥ बभूव भक्तिपूर्णश्च स्मारं स्मारं पदांबुजम् ॥ कृत्वा प्रदक्षिणं वापि कृष्णस्य परमात्मनः ॥ ३७ ॥ उद्धवश्च तमा
श्लिष्य प्रशशंस पुनःपुनः ॥ स च शीघ्रं ययौ गेहमक्रूरोपि स्वमंदिरे ॥ ३८ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड
उत्तरार्द्धे नारायणनारदसंवाद अक्रूरहर्षोत्कर्षकथनं नाम पंचषष्टितमोऽध्यायः ॥६५॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ रासेश्वरीयुक्तो
रासे रासेश्वरः स्वयम् ॥ स च रेमे तया सार्द्धमतीव रमणोत्सुकः ॥ १ ॥ सुखसंभोगमात्रेण ययौ निद्रां च राधिका ॥ दृष्ट्वा स्वप्नं
समुत्थाय दीनोवाच प्रियं दिने ॥ २ ॥ ॥ राधिकोवाच ॥ ॥ अहो स्वामिन्निहागच्छ त्वां करोमि स्ववक्षसि ॥ परिणामे वि
धाता मे न जाने किं करिष्यति ॥ ३ ॥ इत्युक्त्वा सा महाभागा प्रियं कृत्वा स्ववक्षसि ॥ दुःस्वप्नं कथयामास हृदयेन विदूयता
॥ ४ ॥ ॥ राधिकोवाच ॥ ॥ रत्नसिंहासनेऽहं च रत्नछत्रं च बिभ्रती ॥ तदातपत्रं जग्राह रुष्टो विप्रश्च मे प्रभो ॥ ५ ॥ सागरे
कज्जलाकारे महाघोरे च दुस्तरे ॥ गभीरे प्रेरयामास मामेव दुर्बलां स च ॥ ६ ॥ तत्र स्रोतसि शोकार्ता भ्रमामि च मुहुर्मुहुः ॥ महो
र्मीणां च वेगेन व्याकुला नक्रसंकुलैः ॥ ७ ॥ त्राहि त्राहीति हे नाथ त्वां वदामि पुनःपुनः ॥ त्वां न दृष्ट्वा महाभीता करोमि प्रार्थनां
सुरम् ॥ ८ ॥ कृष्ण तत्र निमज्जंती पश्यामि चंद्रमंडलम् ॥ निपतंतं च गगनाच्छतखंडं च भूतले ॥ ९ ॥ क्षणांतरे च पश्यामि गग
नात्सूर्यमंडलम् ॥ बभूव च चतुःखंडं निपत्य धरणीतले ॥ १० ॥ एककाले च गगने मंडलं चंद्रसूर्ययोः ॥ अतीव कज्जलाकारं सर्वं
ग्रस्तं च राहुणा ॥ ११ ॥ क्षणांतरे च पश्यामि ब्राह्मणो दीप्तिमानिति ॥ मत्क्रोडस्थसुधाकुंभं बभंज च रुषेति च ॥ १२ ॥ क्षणांतरे

च पश्यामि महारुष्टं च ब्राह्मणम् ॥ गृहीत्वा च व्रजंतं च चक्षुषोः पुरुषं मम ॥ १३ ॥ क्रीडाकपालदंडं च हस्ताद्धस्तं मम प्रभो ॥ सहसा खंडखंडं च बभूव सह हेतुना ॥ १४ ॥ हस्ताद्धस्तं च सहसा सद्रत्नसारदर्पणः ॥ निर्मलः कज्जलाकारः खंडखंडो बभूव ह ॥ १५ ॥ हारो मे रत्नसाराणां छिन्नो भूत्वा च वक्षसः ॥ अतीव मलिनं पद्मं पपात धरणीतले ॥ १६ ॥ सौधपुत्तलिकाः सर्वा नृत्यंति च हसन्ति च ॥ आस्फोटयंति गायन्ति रुदंति च क्षणंक्षणम् ॥१७॥ कृष्णवर्णं बृहच्चक्रं खे भ्रमंतं मुहुर्मुहुः ॥ निपतंतं चोत्पतंतं पश्यामि च भयंकरम् ॥ ॥ १८ ॥ प्राणाधिदेवः पुरुषो निःसृत्याभ्यंतरान्मम ॥ राधे विदार्यं देहीति ततो यामीत्युवाच ह ॥१९॥ कृष्णवर्णा च प्रतिमा मामाश्लिष्यति चुंबति ॥ कृष्णवस्त्रपरीधाना चेति पश्यामि सांप्रतम् ॥२०॥ इतीदं विपरीतं च दृष्ट्वा च प्राणवल्लभ ॥ नृत्यंति दक्षिणांगानि प्राणा आंदोलयंति मे ॥२१॥ रुदंति शोकात्कर्षंति समुद्विग्नं च मानसम् ॥ किमिदं किमिदं नाथ वद वेदविदांवर ॥ २२ ॥ इत्युक्त्वा राधिका देवी शुष्ककंठोष्ठतालुका ॥ पपात तत्पदांभोजे भीता सा शोकविह्वला ॥२३॥ श्रुत्वा स्वप्नं जगन्नाथो देवीं कृत्वा स्ववक्षसि ॥ आध्यात्मिकेन योगेन बोधयामास तत्क्षणम् ॥ २४ ॥ तत्याज शोकं सा देवी ज्ञानं संप्राप्य निर्मलम् ॥ शांतं च भगवंतं च कृत्वा कांतं स्ववक्षसि ॥२५॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे श्रीराधाशोकापनोदने षट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ श्रीनारायण उवाच ॥ ॥ विरहव्याकुलां दृष्ट्वा कामिनीं काममोहनः ॥ कृत्वा वक्षसि तां कृष्णो ययौ क्रीडासरोवरम् ॥ १ ॥ राजराजेश्वरी राधा कृष्णवक्षसि राजते ॥ सौदामिनीव जलदे नवीने गगने मुने ॥ २ ॥ रेमे स रमया सार्द्धं कृपया च कृपानिधिः ॥ द्वयोर्द्वयोर्यथा स्वर्णमण्योर्मारकतो मणिः ॥ ३ ॥ रत्ननिर्माणपर्यंके रत्नेंद्रसारनिर्मिते ॥ रत्नप्रदीपे ज्वलति रत्नभूषणभूषितः ॥ ४ ॥ रत्नभूषाभूषितया रासरत्नश्च कौतुकात् ॥ रसरत्नाकरे रम्ये निमग्नो रसिकेश्वरः ॥ ५ ॥ रासे रासेश्वरी राधा रासेश्वरमुवाच सा ॥ सुरतौ विरतौ सत्यां विरतेन मनोरथे ॥६॥ ॥ राधिकोवाच ॥ ॥ प्रफुल्लाहं त्वया नाथ मृता म्लाना च त्वां विना ॥ यथा महौषधिगणः प्रभाते भाति भास्करे ॥ ७ ॥ नक्तं दीपशिखेवाहं त्वया सार्द्धं त्वया विना ॥ दिने दिने यथा क्षीणा

कृष्णपक्षे विधोः कला ॥ ८ ॥ तव वक्षसि मे दीप्तिः पूर्णचंद्रप्रभा समा ॥ सद्यो मृता त्वया त्यक्ता कुहूवां चंद्रकला यथा ॥ ९ ॥ ज्वल
दग्निशिखेवाहं घृताहुत्या त्वया सह ॥ त्वया विनाहं निर्वाणा शिशिरे पद्मिनी यथा ॥ १० ॥ चिंताज्वरजराग्रस्ता मत्तस्त्वयि गतेप्य
हम् ॥ अस्तंगते रवौ चंद्रे ध्वांतग्रस्ता धरा यथा ॥ ११ ॥ भ्रष्टो वेषस्त्वां विना मे रूपं यौवनचेतनम् ॥ तारावली परिभ्रष्टा सूर्यमृतो
दये यथा ॥ १२ ॥ त्वमेवात्मा च सर्वेषां मम नाथो विशेषतः ॥ तनुर्यथात्मना त्यक्ता तथाहं च त्वया विना ॥ १३ ॥ पंचप्राणात्म
कस्त्वं मे मृताहं च त्वया विना ॥ दृष्टेश्च गोलकौ यद्वद्दृष्टिः पुत्तलिकां विना ॥ १४ ॥ स्थलं यथा चित्रयुक्तं त्वया सार्द्धमहं तथा ॥
असंस्कृता त्वया हीना तृणछन्ना यथा मही ॥ १५ ॥ त्वया सार्द्धमहं कृष्ण चित्रयुक्तेव मृन्मयी ॥ त्वां विना जलधौताहं विरूपा मृ
न्मयीव च ॥ १६ ॥ गोपांगनानां शोभा च त्वया रासेश्वरेण च ॥ हारे स्वर्णविकारे च श्वेतेन मणिना सह ॥ १७ ॥ व्रजराज त्वया
सार्द्धं राजंते राजराजयः ॥ यथा चंद्रेण नभसि ताराराजिर्विराजते ॥ १८ ॥ त्वया शोभा यशोदाया नन्दस्य नन्दनंदन ॥ यथा
शाखाफलस्कंधैस्तरुराजिर्विराजते ॥ १९ ॥ त्वया सार्द्धं गोकुलेश शोभा गोकुलवासिनाम् ॥ यथा सर्वा लोकराजी राजेंद्रेण विरा
जते ॥ २० ॥ रासस्यापि च रासेश त्वया शोभा मनोहरा ॥ राजते देवराजेन यथा स्वर्गेमरावती ॥ २१ ॥ वृंदावनस्य वृक्षाणां त्वं च
शोभा पतिर्गतिः॥ अन्येषां च वनानां च बलवान्केसरी यथा ॥ २२ ॥ त्वया विना यशोदा च निमग्ना शोकसागरे ॥ अप्राप्य वत्सं
सुरभिः क्रोशंती व्याकुला यथा ॥२३॥ आंदोलयंति नंदस्य प्राणा दग्धं च मानसम् ॥ त्वया विना तप्तपात्रे यथा धान्यसमूहकः ॥
॥ २४ ॥ इत्युक्त्वा परमप्रेम्णा सा पतंती हरेः पदे ॥ पुनराध्यात्मिकेनैव बोधयामास तां विभुः ॥ २५ ॥ आध्यात्मिको महायोगो
मोहसंच्छेदकारणम् ॥ यथा पर्शुश्च वृक्षाणां तीक्ष्णधारश्च नारद ॥ २६ ॥ ॥ नारद उवाच ॥ ॥ आध्यात्मिकं महायोगं वद वेदविदां
वर ॥ शोकच्छेदं च लोकानां श्रोतुं कौतूहलं मम ॥ २७ ॥ ॥ श्रीनारायण उवाच ॥ ॥ आध्यात्मिको महायोगो न ॥१६२॥
ज्ञातो योगिनामपि ॥ स च नानाप्रकारश्च सर्वं वेत्ति हरिः स्वयम् ॥ २८ ॥ किंचिदाध्यात्मिकं चैव गोलोके राधिकेश्वरः ॥ सुप्रीतः

कथयामास त्रिपुरारिं यथा मुने ॥ २९ ॥ सहस्रेंद्रनिपातांतं तपः कुर्वंतमीश्वरम् ॥ श्रेष्ठं ज्येष्ठं वैष्णवानां वरिष्ठं च तपस्विनाम् ॥३०॥ पुष्करे दुष्करं तप्त्वा पाद्मे पाद्मं च पद्मजः ॥ दृष्ट्वा तं सादरं कृत्वा उवाच किंचिदेव तम् ॥३१॥ शतेंद्रपातपर्यंतं कठोरेण कृशोदरम् ॥ निश्चेष्टमस्थिसारं च कृपया च कृपानिधिः ॥ ३२ ॥ सिंहक्षेत्रे पुरा धर्मं मत्तातं चर्मिणां वरम् ॥ चतुर्दशेंद्रावच्छिन्नं तपस्तप्त्वा कृशोदरम् ॥ ३३ ॥ पपाठाध्यात्मिकं किंचित्कृपया च कृपानिधिः ॥ किञ्चिच्छतेंद्रावच्छिन्नमातपं तमुवाच सः॥३४॥ किंचित्सनत्कुमारं च तपंतं सुचिरं चिरम् ॥ सुतपंतमनंतं च किंचिच्चोवाच नारद ॥३५॥ चिरं तपंतं कपिलं हिमशैले तपस्विनम् ॥ पुष्करे भास्करे किंचित्तपंतं दुष्करं तपः ॥३६॥ उवाच किंचित्प्रह्लादं किंचिद्दुर्वाससं भृगुम् ॥ एवं निगूढं भक्तं च कृपया भक्तवत्सलः ॥३७॥ क्रीडासरोवरे रम्ये यदुवाच कृपानिधिः ॥ शोकार्तां राधिकां तच्च कथयामि निशामय ॥ ३८ ॥ विरसां रसिकां दृष्ट्वा वासयित्वा च वक्षसि ॥ उवाचाध्यात्मिकं किञ्चिद्योगिनीं योगिनां गुरुः ॥ ३९ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ जातिस्मरे स्मरात्मानं कथं विस्मरसि प्रिये ॥ सर्वं गोलोकवृत्तांतं सुदाम्नः शापमेव च ॥ ४० ॥ शापात्किंचिद्दिनं दीने त्वद्विच्छेदो मया सह ॥ भविष्यति महाभागे मेलनं पुनरावयोः ॥ ४१ ॥ पुनरेव गमिष्यामि गोलोकं तन्निजालयम् ॥ गत्वा गोपांगनाभिश्च गोपैर्गोलोकवासिभिः ॥ ॥ ४२ ॥ अधुनाध्यात्मिकं किंचित्त्वां वदामि निशामय ॥ शोकघ्नं हर्षदं सारं सुखदं मानसस्य च ॥ ४३ ॥ अहं सर्वांतरात्मा च निर्लिप्तः सर्वकर्मसु ॥ विद्यमानश्च सर्वेषु सर्वत्रादृष्ट एव च ॥ ४४ ॥ वायुश्चरति सर्वत्र यथैव सर्ववस्तुषु ॥ न च लिप्तस्तथैवाहं साक्षी च सर्वकर्मणाम् ॥ ४५ ॥ जीवो मत्प्रतिबिंबश्च सर्वः सर्वत्रः जीविषु ॥ भोक्ता शुभाशुभानां च कर्ता च कर्मणां सदा ॥ ४६ ॥ यथा जलघटेष्वेव मंडलं चंद्रसूर्ययोः ॥ भग्नेषु तेषु संश्लिष्टस्तयोरेव तथा मयि ॥ ४७ ॥ जीवः श्लिष्टस्तथा काले मृतेषु जीविषु प्रिये ॥ आवां च विद्यमानौ च संततं सर्वजंतुषु ॥ ४८ ॥ आधारश्चाहमाधेयं कार्यं च कारणं विना ॥ अये सर्वाणि द्रव्याणि नश्वराणि च सुन्दरि ॥ ४९ ॥ आविर्भावाधिकाः कुत्र कुत्रचिन्न्यूनमेव च ॥ ममांशाः केपि देवाश्च केचिद्देवाः कलास्तथा ॥ ५० ॥ केचित्कलाः कलांशांशास्तदं

शांशाश्च केचन ॥ मदंशा प्रकृतिः सूक्ष्मा सा च मूर्त्या च पंचधा ॥ ५१ ॥ सरस्वती च कमला दुर्गा त्वं चापि वेदसूः ॥ सर्वे देवाः प्राकृतिका यावंतो मूर्त्तिधारिणः ॥ ५२ ॥ अहमात्मा नित्यदेही भक्तध्यानानुरोधतः ॥ येये प्राकृतिका राधे ते नष्टाः प्राकृते लये ॥ ५३ ॥ अहमेवासमेवाग्रे पश्चादप्यहमेव च ॥ यथाहं च तथा त्वं च यथा धावल्यदुग्धयोः ॥५४ ॥ भेदः कदापि न भवेन्निश्चितं च तथावयोः ॥ अहं महान्विराट् सृष्टौ विश्वानि यस्य लोमसु ॥५५॥ अंशस्त्वं तत्र महती स्वांशेन तस्य कामिनी ॥ अहं क्षुद्रविराट् सृष्टौ विश्वं यन्नाभिपद्मतः ॥५६॥ अयं विष्णोर्लोमकूपे वासो मे चांशतः सति ॥ तस्य स्त्री त्वं च बृहती स्वांशेन सुभगा तथा ॥ ५७ ॥ तस्य विश्वे च प्रत्येकं ब्रह्मविष्णुशिवादयः ॥ ब्रह्मविष्णुशिवा अंशाश्चान्याश्चापि च मत्कलाः ॥ ५८ ॥ मत्कलांशांशकलया सर्वे देवि चराचराः ॥ वैकुंठे त्वं महालक्ष्मीरहं तत्र चतुर्भुजः ॥५९॥ स च विश्वाद्बहिश्चोर्द्ध्वं यथा गोलोक एव च ॥ सरस्वती त्वं सत्ये च सावित्री ब्रह्मणः प्रिया ॥ ६० ॥ शिवलोके शिवा त्वं च मूलप्रकृतिरीश्वरी ॥ विनाश्य दुर्गं दुर्गा च सर्वदुर्गतिनाशिनी ॥ ६१ ॥ सा एव दक्षकन्या च सा एव शैलकन्यका ॥ कैलासे पार्वती तेन सौभाग्या शिववक्षसि ॥ ६२ ॥ स्वांशेन त्वं सिंधुकन्या क्षीरोदे विष्णुवक्षसि ॥ अहं स्वांशेन सृष्टौ च ब्रह्मविष्णुमहेश्वराः ॥ ६३ ॥ त्वं च लक्ष्मीः शिवा धात्री सावित्री च पृथक्पृथक् ॥ गोलोके च स्वयं राधा रासे रासेश्वरी सदा ॥ ६४ ॥ वृन्दा वृंदावने रम्ये विरजा विरजातटे ॥ सा त्वं सुदामशापेन भारतं पुण्यमागता ॥६५॥ पूतं कर्तुं भारतं च वृन्दारण्यं च सुन्दरि ॥ त्वत्कलांशांशकलया विश्वेषु सर्वयोषितः॥६६॥ या योषित्सा च भवती यः पुमान्सोहमेव च ॥ अहं च कलया वह्निस्त्वं स्वाहा दाहिका प्रिया ॥ ६७ ॥ त्वया सह समर्थोहं नालं दग्धुं च त्वां विना ॥ अहं दीप्तिमतां सूर्यः कलया त्वं प्रभाकरी ॥ ६८ ॥ संज्ञा त्वं च त्वया भामि त्वां विनाहं न दीप्तिमान् ॥ अहं च कलया चंद्रस्त्वं च शोभा च रोहिणी ॥ ६९ ॥ मनोहरस्त्वया सार्द्धं त्वां विना न च सुन्दरः ॥ अहमिंद्रश्च कलया सर्वलक्ष्मीश्च त्वं शची ॥ ७० ॥ त्वया सार्द्धं देवराजो हतश्रीश्च त्वया विना ॥ अहं धर्मश्च कलया त्वं च मूर्तिश्च धर्मिणी ॥ ७१ ॥ नाहं शक्तो धर्मकृत्ये त्वां च धर्मक्रियां विना ॥

अहं यज्ञश्च कलया त्वं स्वाहांशेन दक्षिणा ॥ ७२ ॥ त्वया सार्द्धं च फलदोप्यसमर्थस्त्वया विना ॥ कलया पितृलोकोऽहं स्वांशेन त्वं स्वधा सती ॥ ७३ ॥ त्वयालं कव्यदाने च सदा नालं त्वया विना ॥ अहं पुमांस्त्वं प्रकृतिर्न स्रष्टाऽहं त्वयां विना ॥ ७४ ॥ त्वं च संपत्स्वरूपाहमीश्वरश्च त्वया सह ॥ लक्ष्मीयुक्तस्त्वया लक्ष्म्या निःश्रीकश्च त्वया विना ॥ ७५ ॥ यथा नालं कुलालश्च घटं कर्तुं मृदा विना ॥ अहं शेषश्च कलया स्वांशेन त्वं वसुंधरा ॥ ७६ ॥ त्वां सस्यरत्नाधारां च बिभर्मि मूर्ध्नि सुन्दरि ॥ त्वं च कांतिश्च शांतिश्च भूतिमूर्तिमती सती ॥ ७७ ॥ तुष्टिः पुष्टिः क्षमा लज्जा क्षुधा तृष्णा परा दया ॥ निद्रा श्रद्धा च तंद्रा च मूर्च्छा च सन्नतिः क्रिया ॥ ७८ ॥ मूर्तिरूपा भक्तिरूपा देहिनां देहरूपिणी ॥ ममाधारा सदा त्वं च तवात्माहं परस्परम् ॥ ७९ ॥ यथा त्वं च तथाहं च समौ प्रकृतिपूरुषौ ॥ न हि सृष्टिर्भवेद्देवि द्वयोरेकतरं विना॥ ८०॥ इत्युक्त्वा परमात्मा च राधां प्राणाधिकां प्रियाम् ॥ कृत्वा वक्षसि सुप्रीतो बोधयामास नारद ॥ ८१ ॥ स च क्रीडानियुक्तश्च बभूव रत्नमंदिरे ॥ तया च राधया सार्द्धं कामुकया सह कामुकः ॥ ८२ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे आध्यात्मिकयोगकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ श्रीनारायण उवाच ॥ ॥ कृत्वा क्रीडां समुत्थाय पुष्पतल्पात्पुरातनः ॥ निद्रितां प्राणसदृशीं बोधयामास तत्क्षणम् ॥ १ ॥ वस्त्रांचलेन संस्कृत्य कृत्वा तन्निर्मलं मुखम् ॥ उवाच मधुरं शांतं शांतां च मधुसूदनः ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अयि तिष्ठ क्षणं रासे रासेश्वरि शुचिस्मिते ॥ व्रज वृंदावनं वापि व्रजं व्रज व्रजेश्वरि ॥३॥ रासाधिष्ठातृदेवि त्वं रासं रासे कुरु क्षणम् ॥ ग्रामेग्रामे यथा संति सर्वत्र ग्रामदेवताः॥ ४ ॥ प्रियालिनिवहैः सार्द्धं क्षणं चंदनकाननम् ॥ क्षणं वा चंपकवनं गच्छ वा तिष्ठ सुंदरि ॥ ५ ॥ क्षणं गृहं च यास्यामि विशिष्टं कार्यमस्ति मे ॥ विरामं देहि मे प्रीत्या क्षणं मां प्राणवल्लभे ॥ ६ ॥ प्राणाधिष्ठातृदेवि त्वं प्राणाश्च त्वयि संति मे ॥ प्राणी विहाय प्राणांश्च कुत्र स्थातुं क्षमः प्रिये ॥ ७ ॥ त्वयि मे मानसं शश्वत्त्वं मे संसारवासना ॥ त्वत्तो मम प्रिया नास्ति त्वमेव शंकरात्प्रिया ॥ ८ ॥ प्राणा मे शंकरः सत्यं त्वं च प्राणाधिका सति ॥ इत्युक्त्वा तां समा

श्लिष्य भगवान् गंतुमुद्यतः ॥९॥ अक्रूरागमनं ज्ञात्वा सर्वज्ञः सर्वसाधनः ॥ आत्मा पाता च सर्वेषां सर्वोपकारकारकः ॥ १० ॥ दृष्ट्वा
तमेव गच्छंतमुत्सुकं भिन्नमानसम् ॥ उवाच राधिका देवी हृदयेन विदूयता ॥११॥ ॥ राधिकोवाच ॥ ॥ हे नाथ रमणश्रेष्ठ श्रेष्ठश्च प्रेयसां
मम ॥ हे कृष्ण हे रमानाथ व्रजेश मा व्रज व्रजम् ॥ १२ ॥ अधुना त्वां प्राणनाथ पश्यामि भिन्नमानसम् ॥ गते त्वयि मम प्रेम
गतं सौभाग्यमेव च ॥ १३ ॥ क्व यासि मां विनिक्षिप्य गंभीरे शोकसागरे ॥ विरहव्याकुलां दीनां त्वय्येव शरणागताम् ॥ १४ ॥
न यास्यामि पुनर्गेहं यास्यामि काननांतरम् ॥ कृष्ण कृष्णेति कृष्णेति गायंगायं दिवानिशम् ॥ १५ ॥ न यास्याम्यथवारण्यं
यास्यामि कामसागरे ॥ तत्र त्वत्कामनां कृत्वा त्यक्ष्यामि च कलेवरम् ॥ १६ ॥ यथाकाशो यथात्मा च यथा चंद्रो यथा रविः ॥
तथा त्वं यासि मत्पार्श्वे निबद्धो वसनांचले ॥ १७ ॥ अधुना यासि नैराश्यं कृत्वा मे दीनवत्सल ॥ न युक्तं हि परित्यक्तुं दीनां मां
शरणागताम् ॥ १८ ॥ यत्पादपद्मं ध्यायंते ब्रह्मविष्णुशिवादयः ॥ त्वां मायया गोपवेषं कथं जानामि मत्सरी ॥ १९ ॥ कृतं यद्देव
दुर्नीतमपराधसहस्रकम् ॥ यदुक्तं पतिभावेन चाभिमानेन तत्क्षम ॥२०॥ चूर्णीभूतश्च मद्गर्वो दूरीभूतो मनोरथः ॥ विज्ञातुमात्मसौभाग्यं
किमन्यत्कथयामि ते ॥२१॥ ज्ञात्वा गर्गमुखाच्छ्रुत्वा मोहिता तव मायया ॥ त्वां च वक्तुं न शक्नोमि प्रेम्णा वा भक्तिपाशतः ॥ २२ ॥
यासि चेन्मां परित्यज्य सकलंको भविष्यसि ॥ त्वत्पुत्रपौत्रा नश्यंति ब्रह्मकोपानलेन च ॥ २३ ॥ क्षणं युगशतं मन्ये त्वां विना
प्राणवल्लभम् ॥ कथं शताब्दं त्वां त्यक्त्वा बिभर्मि जीवनं प्रभो ॥२४॥ इत्युक्त्वा राधिका कोपात्पपात धरणीतले ॥ मूर्च्छां संप्राप
सहसा जहार चेतनां मुने ॥२५॥ कृष्णस्तां मूर्च्छितां दृष्ट्वा कृपया च कृपानिधिः ॥ चेतनां कारयित्वा च वासयामास वक्षसि ॥२६॥
बोधयामास विविधं योगैः शोकविखण्डनैः ॥ तथापि शोकं त्यक्तुं च न शशाक शुचिस्मिता ॥ २७ ॥ सामान्यवस्तुविश्लेषो नृणां
शोकाय केवलम् ॥ देहात्मनोश्च विच्छेदः क्व सुखाय प्रकल्पते ॥२८॥ न ययौ तत्र दिवसे व्रजराजो व्रजं प्रति ॥ क्रीडासरोवराभ्याशं
प्रययौ राधया सह ॥ २९ ॥ तत्र गत्वा पुनः क्रीडां चकार च तया सह ॥ विजहौ विरहज्वालां रासे रासेश्वरी मुदा ॥ ३० ॥ राधा सा

स्वामिना सार्द्धं पुष्पचंदनचर्चिता ॥ पुष्पचंदनतल्पे च तस्थौ रहसि नारद ॥ ३१ ॥ ॥ इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म खण्ड उत्तरार्धे नारायणनारदसंवादे राधाशोकविमोचनं नाम अष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ नारद उवाच ॥ ॥ अतः परं किं रहस्यं राधाकेशवयोर्वद ॥ निगूढतत्त्वमस्पष्टं तन्मे व्याख्यातुमर्हसि ॥ १ ॥ ॥ श्रीनारायण उवाच ॥ ॥ शृणु नारद वक्ष्यामि रहस्यं परमाद्भुतम् ॥ गोपनीयं च वेदेषु पुराणेषु पुराविदाम् ॥ २ ॥ पुनः सकामो भगवान्कृष्णः स्वेच्छामयो विभुः ॥ रेमे स रमया सार्द्धं विदग्धश्च विदग्धया ॥ ३ ॥ चतुःषष्टिकलाशक्त्या यथा कांता कलावती ॥ कामशास्त्रेषु निपुणा विदग्धा रसिकेश्वरी ॥ ॥ ४ ॥ शृंगारलीलानिपुणा शश्वत्कामा च कामुकी ॥ सुंदरी सुंदरीष्वेव शश्वत्सुस्थिरयौवना ॥ ५ ॥ पितॄणां मानसी कन्या धन्या मान्या च मानिनी ॥ शंभोः शिष्या ज्ञानयुता शतकल्पांतजीविनी ॥ ६ ॥ वेदवेदांगनिपुणा योगनीतिविशारदा ॥ नानारूपधरा साध्वी प्रसिद्धा सिद्धयोगिनी ॥ ७ ॥ तत्कन्या राधिका देवी मातृतुल्या च कामुकी ॥ चकार नानाभावं सा सुशीला स्वामिनं प्रति ॥ ८ ॥ चतुःषष्टिकलामानं शृंगारं च चकार सः ॥ तथा विशिष्टया साकं रासे रासरसोत्सुकः ॥ ९ ॥ तां नखाग्रक्षतश्रोणीं नखक्षतपयोधराम् ॥ लुप्तचंदनसिंदूरां कबरीशिथिलां सतीम् ॥ १० ॥ सुखसंभोगमग्नां च नग्नां च शोकमूर्च्छिताम् ॥ पुलकांचितसर्वांगीं निद्रादेवीं समाययौ ॥ ११ ॥ दृष्ट्वा तां निद्रितां कृष्णः कृपया च कृपानिधिः ॥ रुरोद मायया मायी मायेशो लोकशिक्षया ॥ १२ ॥ कृत्वा वक्षसि राधां च चुचुंब च पुनःपुनः ॥ स्नातां च नेत्रसलिलैः प्राणाधिष्ठातृदेवताम् ॥ १३ ॥ प्राणाधिकां प्रियतमां धारयामास वाससी ॥ वह्निशुद्धेतिसूक्ष्मे चामूल्ये विश्वसुदुर्लभे ॥ १४ ॥ कबरीं रचयामास ददौ कुंकुमचंदनम् ॥ तद्गात्रे च गले हारममूल्यं रत्ननिर्मितम् ॥ १५ ॥ सिंदूरं च ददौ तस्याः सीमंताधःस्थलेऽमले ॥ दाडिमीकुसुमाकारं युक्तं चंदनबिंदुभिः ॥ १६ ॥ चकार पत्रकं गंडे नानाचित्रविचित्रकम् ॥ ददौ तत्पादपद्मे च रत्नमंजीररंजितम् ॥ १७ ॥ पादांगुलिनखाग्रे च सुन्दरालक्तकं ददौ ॥ नानासुवेषोज्ज्वलितां तां निद्राकुलितां विभुः ॥ १८ ॥ पुनश्चकार मोहेन गाढालिंगनमीप्सितम् ॥ पुनश्च चुंबनं कृत्वा निवेश्य च स्ववक्षसि ॥ १९ ॥

सुष्वाप जगतां स्वामी कामी विरहकातरः ॥ एतस्मिन्नंतरे काले ब्रह्मा लोकपितामहः ॥ २० ॥ शिवशेषादिभिर्देवैर्मुनींद्रैस्सा
र्द्धमाययौ ॥ आगत्य नत्वा शिरसा तुष्टाव संपुटांजलिः ॥२१॥ सामवेदोक्तस्तोत्रेण परिपूर्णतमं विभुम् ॥ २२ ॥ ॥ ब्रह्मोवाच ॥ ॥ जय
जय जगदीश वंदितचरण निर्गुण निराकार स्वेच्छामय भक्तानुग्रह नित्यविग्रह गोपवेष मायया मायेश सुवेष सुशील शांत सर्वकांत दांत
नितांतज्ञानानंद परात्परतर प्रकृतेः पर सर्वांतरात्मरूप निर्लिप्त साक्षिस्वरूप व्यक्ताव्यक्त निरंजन भारावतारण करुणार्णव शोकसंता
पग्रसन जरामृत्युभयादिहरण शरणपंजर भक्तानुग्रहकातर भक्तवत्सल भक्तसंचितधन ओं नमोस्तु ते ॥ २३ ॥ सर्वाधिष्ठातृदेवायेत्यु
क्त्वा वै प्रीणनाय च ॥ पुनःपुनरुवाचेदं मूर्च्छितश्च बभूव ह ॥ २४ ॥ इति ब्रह्मकृतं स्तोत्रं यः शृणोति समाहितः ॥ तत्सर्वा
भीष्टसिद्धिश्च भवत्येव न संशयः ॥ २५ ॥ अपुत्रो लभते पुत्रं प्रियाहीनो लभेत्प्रियाम् ॥ निर्धनो लभते सत्यं परिपूर्णतमं धनम्
॥ २६ ॥ इह लोके सुखं भुक्त्वा चांते दास्यं लभेद्धरेः ॥ अचलां भक्तिमाप्नोति मुक्तेरपि सुदुर्लभाम् ॥ २७ ॥ स्तुत्वा च जगतां धाता
प्रणम्य च पुनःपुनः ॥ शनैः शनैः समुत्थाय भक्त्या पुनरुवाच ह ॥२८॥ ॥ ब्रह्मोवाच ॥ ॥ उत्तिष्ठ देवदेवेश परमानंदकारण ॥ नंदनं
दन सानंद नित्यानंद नमोस्तु ते ॥ २९ ॥ व्रज नंदालयं नाथ त्यज वृंदावनं वनम् ॥ स्मर सुदामशापं च शतवर्षनिबंधनम् ॥
॥ ३० ॥ भक्तशापानुरोधेन शतवर्षं प्रियां त्यज ॥ पुनरेतां च संप्राप्य गोलोकं च गमिष्यसि ॥ ३१ ॥ गत्वा पितृगृहं देव पश्या
क्रूरं समागतम् ॥ पितृव्यमतिथिं मान्यं धन्यं वैष्णवमीश्वरम् ॥ ३२ ॥ तेन सार्द्धं मधुपुरीं भगवन् गच्छ सांप्रतम् ॥ कुरु शंभोर्ध
नुर्भंगं भग्नं वैरिगणं हरे ॥ ३३ ॥ हन कंसं दुरात्मानं तातं बोधय मातरम् ॥ निर्माणं द्वारकायाश्च भारावतरणं भुवः ॥ ३४ ॥ दह
वाराणसीं शंभोः शक्रस्य सदनं विभो ॥ शिवस्य जृंभणं युद्धे बाणस्य भुजकृंतनम् ॥ ३५ ॥ रुक्मिणीहरणं नाथ घातनं नरकस्य
च ॥ षोडशानां सहस्रं च स्त्रीणां पाणिग्रहं कुरु ॥ ३६ ॥ त्यज प्रियां प्राणसमां व्रजेश्वर व्रजं व्रज ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते यावद्राधा
न जाग्रति ॥ ३७ ॥ इत्येवमुक्त्वा ब्रह्मा च सेंद्रैर्देवगणैः सह ॥ जगाम ब्रह्मलोकं च शेषश्च शंकरस्तथा ॥ ३८ ॥ पुष्पचंदनवृष्टिं च

कृष्णस्योपरि देवताः ॥ चक्रुः प्रीत्या च भक्त्या च वाग्बभूवाशरीरिणी ॥ ३९ ॥ वध कंसं वधार्हं च स्वपित्रोर्मोक्षणं कुरु ॥ क्षयं कुरु भुवो भारं नारदेत्येवमेव च ॥ ४० ॥ इत्येवं तद्वचः श्रुत्वा भगवान् भूतभावनः ॥ राधां भगवतीं त्यक्त्वा समुत्तस्थौ शनैः शनैः ॥ ४१ ॥ ययौ हरिः कियद्दूरं निरीक्ष्य च पुनःपुनः ॥ क्षणं तस्थौ चंदनानां वने वाससमीपतः ॥ ४२ ॥ विहाय राधा निद्रां सा समुत्तस्थौ स्वतल्पतः ॥ न निरीक्ष्य हरिं शांतं कांतं च प्राणवल्लभम् ॥ ४३ ॥ हा नाथ रमण प्रेष्ठ प्राणेश. प्राणवल्लभ ॥. प्राणचोर प्रियतम क्व गतोसीत्युवाच ह ॥ ४४ ॥ क्षणमन्वेषणं कृत्वा बभ्राम मालतीवनम् ॥ उवास क्षणमुत्तस्थौ क्षणं सुष्वाप भूतले ॥ ४५ ॥ रुरोद क्षणमत्युच्चैर्विललाप मुहुर्मुहुः ॥ आगच्छागच्छ हे नाथेत्येवमुक्त्वा पुनःपुनः ॥ ४६ ॥ मूर्च्छां संप्राप संतापात्संतप्ता विरहानलैः ॥ भूतले च तृणाच्छन्ने पपात च यथा मृता ॥ ४७ ॥ आययुस्तत्र गोप्यश्च ब्रह्मञ्छतसहस्रशः ॥ काश्चिच्चामरहस्ताश्च गृहीत्वा चंदनद्रवम् ॥ ४८ ॥ तासां मध्ये प्रियाली तां कृत्वा राधां स्ववक्षसि ॥ मृतामिव प्रियां दृष्ट्वा रुरोद प्रेमविह्वला ॥ ४९ ॥ सजलं पंकजदलं पंकोपरि निधाय च ॥ स्थापयामास तां राधां निश्चेष्टां च मृतामिव ॥ ५० ॥ गोपीभिः सेवितां तत्र रुचिरैः श्वेतचामरैः ॥ चंदनद्रवयुक्तां च स्निग्धवस्त्रान्वितां सतीम् ॥ ५१ ॥ ददर्श कृष्णस्तत्रैत्य तामेव प्राणवल्लभाम् ॥ निवारितश्च गोपीभिर्बलिष्ठाभिश्च नारद ॥ ५२ ॥ यथा नीतः सापराधो दंड्यो राजभयादिभिः ॥ चकार राधां क्रोडे च समागत्य कृपानिधिः ॥ ५३ ॥ चेतनां कारयामास बोधयामास बोधनैः ॥ संप्राप्य चेतनां देवी ददर्श प्राणवल्लभम् ॥ ५४ ॥ बभूव सुस्थिरा देवी तत्याज विरहज्वरम् ॥ चकार कांतं सा कांता गात्रालिंगनमीप्सितम् ॥ ५५ ॥ नानाप्रकारशृंगारं चकार मधुसूदनः ॥ उवास रत्नतल्पे च राधां कृत्वा स्ववक्षसि ॥ ५६ ॥ राधासखी रत्नमाला विदग्धा सर्वपूजिता ॥ उवाच कृष्णं मधुरं नीतिसारमनुत्तमम् ॥ ५७ ॥ ॥ रत्नमालोवाच ॥ ॥ शृणु कृष्ण प्रवक्ष्यामि परिणामसुखावहम् ॥ हितं तथ्यं नीतिसारं दंपत्योः प्रीतिकारणम् ॥ ५८ ॥ संमतं कामशास्त्रेषु नीतौ वेदपुराणयोः ॥ लौकिकव्यवहारेषु प्रशस्यं सुयशस्करम् ॥ ५९ ॥ नारीणां च यथा माता प्रियो भ्राता च बंधुषु ॥ ततः

प्रियश्च पुत्रश्च पुत्रादेव प्रियः पतिः ॥ ६० ॥ शतपुत्रात्प्रियः स्वामी साध्वीनां साधुसंमतः ॥ रसिकानां विदग्धानां न हि भर्तुः परः
प्रियः ॥ ६१ ॥ यदि भर्ता विदग्धश्च विदग्धानां सुखावहः ॥ अन्यथा विषतुल्यश्च विषमश्चेत्खलः खलु ॥ ६२ ॥ संसारे चानृते
वत्स दंपत्योः प्रीतिरेव च ॥ परस्परं च समता प्रियसौभाग्यमीप्सितम् ॥ ६३ ॥ ॥ दंपत्योः समता नास्ति यत्रयत्र हि
मंदिरे ॥ अलक्ष्मीस्तत्र तत्रैव विफलं जीवनं तयोः ॥ ६४ ॥ सुस्वामिनां विभेदश्च परं दुःखं च योषिताम् ॥ शोकसंतापबीजं च
जीवितं मरणाधिकम् ॥ ६५ ॥ स्वप्ने जागरणे चापि पतिः प्राणाश्च योषितः ॥ पतिरेव गुरुः स्त्रीणामिह लोके परत्र च ॥ ६६ ॥
अस्मात्त्वयि गते नाथे मूर्च्छां संप्राप राधिका ॥ पपात सहसा भूमौ तृणाच्छन्ने च भूतले ॥ ६७ ॥ मया दत्तं मुखेस्याश्च
शीतलं जलमुत्तमम् ॥ तदाश्वासो बभूवास्याश्चेतनं बाल्यमेव च ॥ ६८ ॥ क्षणं वदति हे नाथ हे कृष्णेति क्षणं
सखी ॥ क्षणं रोदिति संतप्ता मूर्च्छां प्राप्नोति तत्क्षणम् ॥ ६९ ॥ राधिकायाः शरीरं च संतप्तं विरहानलैः ॥ दग्धलोह
यष्टिसममस्पृश्यमनलोपमम् ॥ ७० ॥ स्वप्ने जागरणे रात्रौ दिवासु च गृहे वने ॥ जले स्थले चांतरिक्षेभ्युदये चंद्र
सूर्ययोः ॥ ७१ ॥ नास्ति भेदश्च राधाया मृततुल्या जडाकृतिः ॥ शश्वत्पश्यति स्थानस्था सर्वं विष्णुमयं जगत् ॥ ७२ ॥
स्निग्धपंके पंकजानां सजलानि दलानि च ॥ निपत्य तत्कृते तल्पे सुष्वाप विरहातुरा ॥ ७३ ॥ सेविता सा प्रियालीभिः संततं श्वेत
चामरैः ॥ चंदनद्रवसंसिक्ता स्निग्धवस्त्रसमन्विता ॥ ७४ ॥ राधांगस्पर्शमात्रेण पंकः संप्राप शुष्कताम् ॥ स्निग्धानि पद्मपत्राणि बभूवु
र्भस्मसात्क्षणम् ॥ ७५ ॥ चंदनं शुष्कतां प्राप वर्णश्चंपकसन्निभः ॥ बभूव कज्जलाकारः केशस्य वर्णतो हरे ॥ ७६ ॥ सिंदूरबिंदू रुचिरः
श्यामतां प्राप तत्क्षणम् ॥ वेषो विलासो लीला च क्रीडा त्यक्ता बभूव ह ॥ ७७ ॥ रत्नमाला तु तां दृष्ट्वा गत्वा कृष्णांतिकं तदा ॥
उवाच मधुरं वाक्यं राधाहितकरं परम् ॥ ७८ ॥ ॥ रत्नमालोवाच ॥ ॥ हे कृष्ण कमलाकांत त्वद्वियोगेन मत्सखी ॥ प्राणांस्त्य
क्ष्यति शीघ्रं सा यदि नायास्यसि ध्रुवम् ॥ ७९ ॥ विचार्य मनसा कृष्ण यत्तत्समुचितं कुरु ॥ न भवेत्कामिनीहत्या येन नीति

विशारद ॥ ८० ॥ रत्नमालावचः श्रुत्वा प्रहस्योवाच माधवः ॥ हितं सत्यं नीतिसारं परिणामसुखावहम् ॥ ८१ ॥ ॥ श्रीभ
गवानुवाच ॥ ॥ ईशो यद्यपि शक्तोहं निषेधं खंडितुं प्रिये ॥ तथापि न क्षमो रत्ने नियतेर्न करोम्यहम् ॥ ८२ ॥ ब्रह्मांडेषु च सर्वे
षु मर्यादा स्थापिता मया ॥ तया कर्म प्रकुर्वंति मुनयश्च सुरा नराः ॥ ८३ ॥ सुदामशापाद्विच्छेदः शतवर्षमनीप्सितः ॥ भवि
ष्यत्येव दंपत्योरावयोरेव सुन्दरि ॥ ८४ ॥ भेदो जागरणेस्याश्च मया सह सुमध्यमे ॥ संश्लेषः संततं स्वप्ने मद्वरेण भविष्यति
॥ ८५ ॥ आध्यात्मिकी मया दत्ता शोकच्छेदो भविष्यति ॥ राधां बोधय भद्रं ते यास्यामि नंदमंदिरम् ॥ ८६ ॥ इत्युक्त्वा जगता
न्नाथो ययौ नंदालयं प्रति ॥ राधिकां बोधयामासुरालिसंघाश्च नारद ॥ ८७ ॥ गत्वा गृहं च पितरं ननाम मातरं तथा ॥ चकार मा
ता क्रोडे च नवनीतं च नूतनम् ॥ ८८ ॥ मातृदत्तं च तांबूलं चखाद शीतलं जलम् ॥ उवास तत्र जगतां नाथो मातृसमीपतः
॥ ८९ ॥ सर्वैर्गोपसमूहैश्च सेवितः श्वेतचामरैः ॥ माल्यचंदनतांबूलं ते च तस्मै ददुर्मुदा ॥ ९० ॥ इति श्रीब्रह्मवैवर्ते महापुराणे
श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे श्रीकृष्णागमनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ श्रीनारायण उवाच ॥ ॥
यथाक्रूरः स्वशरणं गंत्वा कंसेन प्रेषितः ॥ चकार शयनं तल्पे भुक्त्वा मिष्टान्नमुत्तमम् ॥ १ ॥ सकर्पूरं च तांबूलं चखाद वासितं जल
म्॥ जगाम निद्रां सुखतः सुखसंभोगमात्रतः ॥ २ ॥ ततो ददर्श सुस्वप्नं पुराणश्रुतिसंमितम् ॥ निशावशेषसमये वाद्यादिपरिवर्जिते
॥ ३ ॥ अरोगी बद्धकेशश्च वस्त्रयुग्मसमन्वितः ॥ सुतल्पशायी सुस्निग्धश्चिंताशोकविवर्जितः ॥ ४ ॥ किशोरवयसं श्यामं द्विभुजं मु
रलीधरम् ॥ पीतवस्त्रपरीधानं वनमालाविभूषितम् ॥ ५ ॥ चंदनोक्षितसर्वांगं मालतीमाल्यशोभितम् ॥ भूषितं भूषणार्हं च सद्रत्न
मणिभूषणैः ॥ ६ ॥ मयूरपिच्छचूडं च सस्मितं पद्मलोचनम् ॥ एवंभूतं द्विजशिशुं ददर्श प्रथमं मुने ॥ ७ ॥ ततो ददर्श रुचिरां पति
पुत्रवतीं सतीम् ॥ पीतवस्त्रपरीधानां रत्नभूषणभूषिताम् ॥ ८ ॥ ज्वलत्प्रदीपहस्तां च शुक्लधान्यकरां वराम् ॥ शरच्चंद्रनिभास्यां च
सस्मितां वरदां शुभाम् ॥ ९ ॥ ततो ददर्श विप्रं च प्रकुर्वंतं शुभाशिषम् ॥ श्वेतपद्मं राजहंसं तुरगं च सरोवरम् ॥ १० ॥ ददर्श चि

त्रितं चारु फलितं पुष्पितं शुभम् ॥ आम्रनिंबनारिकेलगुर्वर्ककदलीतरुम् ॥ ११ ॥ दर्शतं श्वेतसर्पं च स्वात्मानं पर्वतस्थितम् ॥ वृक्ष
स्थं च गजस्थं च तरिस्थं तुरगस्थितम् ॥ १२ ॥ वीणां वादितवंतं च भुक्तवंतं च पायसम् ॥ दधिक्षीरयुतान्नं च पद्मपत्रस्थमीप्सि
तम् ॥ १३ ॥ कृमिविट्संहितांगं च रुदंतं मोहितं तदा ॥ शुक्लधान्यपुष्पकरं क्षणं चंदनचर्चितम् ॥ १४ ॥ प्रासादस्थं समुद्रस्थमा
त्मानं च सलोहितम् ॥ छिन्नभिन्नं क्षतांगं च मेदपूयसमन्वितम् ॥ १५ ॥ ततो ददर्श रजतं मणिं शुभ्रं च कांचनम् ॥ मुक्तामाणिक्य
रत्नं च पूर्णकुंभजलं शुभम् ॥ १६ ॥ सुरभिं च सवत्सां च वृषभेन्द्रं मयूरकम् ॥ शुकं च सारसं हंसं चिल्लं खंजनमेव च ॥ १७ ॥
तांबूलं पुष्पमाल्यं च ज्वलदग्निं सुरार्चनम् ॥ पार्वतीप्रतिमां कृष्णप्रतिमां शिवलिंगकम् ॥ १८ ॥ विप्रबालां च बालां च सुपक्कफ
लितां कृषिम् ॥ देवस्थलीं च राजेंद्रं सिंहं व्याघ्रं गुरुं सुरम् ॥ १९ ॥ दृष्ट्वा स्वप्नं समुत्तस्थौ चकाराह्निकमीप्सितम् ॥ उद्धवं कथया
मास सर्वं वृत्तांतमेव च ॥ २० ॥ उद्धवाज्ञां समादाय कृत्वा गुरुसुरार्चनम् ॥ यात्रां चकार श्रीकृष्णं ध्यत्वा मनसि नारद ॥ २१ ॥
ददर्श वर्त्मन्येवं च मंगलार्हं शुभप्रदम् ॥ वांछाफलप्रदं रम्यं पुरो मंगलसूचकम् ॥ २२ ॥ वामे शिवं शिवां पूर्णं कुंभं नकुलचाष
कम् ॥ पतिपुत्रवतीं साध्वीं दिव्याभरणभूषिताम् ॥ २३ ॥ शुक्लपुष्पं च माल्यं च धान्यं च खंजनं शुभम् ॥ दक्षिणे ज्वलदग्निं च
विप्रं च वृषभं गजम् ॥ २४ ॥ वत्सप्रयुक्तां धेनुं च श्वेताश्वं राजहंसकम् ॥ वेश्यां च पुष्पमालां च पताकां दधि पायसम् ॥ २५ ॥
मणिं सुवर्णं रजतं मुक्तामाणिक्यमीप्सितम् ॥ मद्यं मांसं चंदनं च माध्वीकं घृतमुत्तमम् ॥ २६ ॥ कृष्णसारं फलं लाजसिद्धान्नं
दर्पणं तथा ॥ विचित्रितं विमानं च सुदीप्तां प्रतिमां तथा ॥ २७ ॥ शुक्लोत्पलं पद्मवनं शंखचिल्लं च कोरकम् ॥ मार्जारं पर्वतं मेघं
मयूरं शुकसारसम् ॥ २८ ॥ शंखकोकिलवाद्यानां ध्वनिं शुश्राव मंगलम् ॥ विचित्रकृष्णसंगीतं हरिशब्दं जयध्वनिम् ॥ २९ ॥
एवंभूतं शुभं दृष्ट्वा श्रुत्वा प्रहृष्टमानसः ॥ प्रविवेश हरिं स्मृत्वा पुण्यं वृन्दावनं वनम् ॥ ३० ॥ ददर्श पुरतो रम्यं रासमंडल
मीप्सितम् ॥ चंदनागुरुकस्तूरीपुष्पचंदनवायुना ॥ ३१ ॥ वासितं मंगलघटै रंभास्तंभैर्विराजितम् ॥ आम्रपल्लवसंघैश्च

पट्टसूत्रविचित्रितैः ॥ ३२ ॥ शोभितैः परितः शश्वत्पद्मरागविनिर्मितम् ॥ शोभितं शोभनार्हं च त्रिकोटिरत्नमंदिरैः ॥ ३३ ॥ रम्यैः कुंजकुटीरैश्च राजितं शतकोटिभिः ॥ रासं वृंदावनं दृष्ट्वा कियद्दूरं ययौ च सः ॥ ३४ ॥ ददर्श पुरतो रम्यं नंदव्रजमनुत्तमम् ॥ परं वैकुंठसंकाशं वैकुंठनिलयं शुभम् ॥ ३५ ॥ रत्नसोपानसंयुक्तं रत्नस्तंभैर्विराजितम् ॥ नानाचित्रविचित्राढ्यं सद्रत्नवलयान्वितम् ॥ ॥ ३६ ॥ खचितं मणिसारेण रचितं विश्वकर्मणा ॥ द्वारि दृष्टेन मार्गेण राजद्वारं विवेश सः ॥ ३७ ॥ पताकारत्नजालाढ्यं मुक्ता माणिक्यभूषितम् ॥ रत्नदर्पणशोभाढ्यं रत्नचित्रविचित्रितम् ॥३८॥ रत्नवीथीविरचितं मंगलं मंगलैर्घटैः ॥ अक्रूरागमनं श्रुत्वा सा ह्लादो नंद एव च ॥ सहितो रामकृष्णाभ्यां जगामानुव्रजाय वै ॥ ३९ ॥ वृषभान्वादिभिर्युक्तः कृत्वा वेश्यां पुरःसराम् ॥ पूर्णकुंभं गजेंद्रं च कृत्वाग्रे शुक्लधान्यकम् ॥ ४० ॥ कृष्णां गां मधुपर्कं च पाद्यं रत्नासनादिकम् ॥ गृहीत्वा सादरः शांतः सस्मितो विनतस्त था ॥ ४१ ॥ आनंदयुक्तो नंदश्च सगणः सह बालकः ॥ दृष्ट्वाक्रूरं महाभागं तूर्णमालिंगनं ददौ ॥ ४२ ॥ प्रणेमुः शिरसा सर्वे गोपा जग्मुर्हुराशिषम् ॥ परस्परं च संयोगो बभूव गुणवान्मुने ॥४३॥ क्रोडे चकाराक्रूरश्च कृष्णं रामं क्रमेण च ॥ चुचुंब गंडयुगले पुलकां चितविग्रहः ॥ ४४ ॥ साश्रुनेत्रोतिसाह्लादः कृतार्थः सिद्धवांछितः ॥ ददर्श कृष्णं द्विभुजं क्षणं श्यामलसुंदरम् ॥४५॥ पीतवस्त्रपरीधा नं मालतीमाल्यभूषितम् ॥ चंदनोक्षितसर्वांगं परं वंशीधरं वरम् ॥ ४६ ॥ स्तुतं ब्रह्मेशशेषाद्यैर्मुनींद्रैः सनकादिभिः ॥ वीक्षितं गोपक न्याभिः परिपूर्णतमं विभुम् ॥ ४७ ॥ क्षणं ददर्श क्रोडस्थं सस्मितं च चतुर्भुजम् ॥ लक्ष्मीसरस्वतीयुक्तं वनमालाविभूषितम् ॥४८॥ सुनंदनंदकुमुदैः पार्षदैः परिसेवितम् ॥ सेवितं सिद्धसंघैश्च भक्तिनम्रैः परात्परम् ॥ ४९ ॥ क्षणं ददर्श देवं तं पंचवक्त्रं त्रिलोचनम् ॥ शुद्धस्फटिकसंकाशं नागराजविराजितम् ॥ ॥ ५० ॥ दिगंबरं परब्रह्म भस्मांगं च जटायुतम् ॥ जपमालाकरं ध्याननिष्ठं श्रेष्ठं च योगिनाम् ॥ ५१ ॥ क्षणं चतुर्मुखं ध्याननिष्ठं श्रेष्ठं मनीषिणाम् ॥ क्षणं धर्मस्वरूपं च शेषरूपं क्षणं क्षणम् ॥ ५२ ॥ क्षणं भास्कररूपं च ज्योतीरूपं सनातनम् ॥ क्षणं परमशोभाढ्यं कोटिकंदर्पनिंदितम् ॥ ५३ ॥ कामिनीकमनीयं च कामुकं कामसंयु

तम् ॥ एवंभूतं शिशुं दृष्ट्वा स्थापयामास वक्षसि ॥ ५४ ॥ रत्नसिंहासने रम्ये नंददत्ते च नारद ॥ कृत्वा प्रदक्षिणं भक्त्या पुलकांचित विग्रहः ॥ प्रणम्य शिरसा भूमौ तुष्टाव पुरुषोत्तमम् ॥ ५५ ॥ ॥ अक्रूर उवाच ॥ ॥ नमः कारणरूपाय परमात्मस्वरूपिणे ॥ ॥ ५६ ॥ सर्वेषामपि विश्वानामीश्वराय नमोनमः ॥ पराय प्रकृतेरीशपरात्परतराय च ॥ ५७ ॥ निर्गुणाय निरीहाय नीरूपाय स्वरूपिणे ॥ सर्वदेवस्वरूपाय सर्वदेवेश्वराय च ॥ ५८ ॥ सर्वदेवाधिदेवाय विश्वादिभूतरूपिणे ॥ असंख्येषु च विश्वेषु ब्रह्मविष्णुशि वात्मक ॥ ५९ ॥ स्वरूपायादिबीजाय तदीशविश्वरूपिणे ॥ नमो गोपांगनेशाय गणेशेश्वररूपिणे ॥ ६० ॥ नमः सुरगणेशाय राधेशाय नमोनमः ॥ राधारमणरूपाय राधारूपधराय च ॥ ६१ ॥ राधाराध्याय राधायाः प्राणाधिकतराय च ॥ राधासाध्याय राधाधिदेवप्रियतमाय च ॥ ६२ ॥ राधाप्राणाधिदेवाय विश्वरूपाय ते नमः ॥ वेदस्तुतात्मवेदज्ञरूपिणे वेदिने नमः ॥ ६३ ॥ वेदा धिष्ठातृदेवाय वेदबीजाय ते नमः ॥ यस्य लोमसु विश्वानि चासंख्यानि च नित्यशः ॥ ६४ ॥ महद्विष्णोरीश्वराय विश्वेशाय नमो नमः ॥ स्वयं प्रकृतिरूपाय प्राकृताय नमोनमः ॥ ६५ ॥ प्रकृतीश्वररूपाय प्रधानपुरुषाय च ॥ इत्येवं स्तवनं कृत्वा मूर्च्छामाप सभातले ॥ ६६ ॥ पपात सहसा भूमौ पुनरीशं ददर्श सः ॥ बहिःस्थं हृदयस्थं च परमात्मानमीश्वरम् ॥ ६७ ॥ परितः श्यामरू पं च विश्वस्थं विश्वमेव च ॥ अक्रूरं मूर्च्छितं दृष्ट्वा नंदः सादरपूर्वकम् ॥ ६८ ॥ रत्नसिंहासने रम्ये वासयामास नारद ॥ पप्रच्छ सर्व वृत्तांतं किंस्विद्दृष्टमिति त्वया ॥ ६९ ॥ मिष्टान्नं भोजयामास कुशलं च पुनःपुनः ॥ अक्रूरः कथयामास कंसवृत्तांतमीप्सितम् ॥ ॥ ७० ॥ स्वपित्रोर्मोक्षणार्थं च गमनं रामकृष्णयोः ॥ इत्यक्रूरकृतं स्तोत्रं यः पठेत्सुसमाहितः ॥ ७१ ॥ अपुत्रो लभते पुत्रमभार्यो लभते प्रियाम् ॥ अधनो धनमाप्नोति निर्भूमिरुर्वरां महीम् ॥ ७२ ॥ हतप्रजः प्रजालाभं प्रतिष्ठां चाप्रतिष्ठितः ॥ यशः प्राप्नोति विपु लमयशस्वी च लीलया ॥ ७३ ॥ अथ सुष्वाप समये परं संहृष्टमानसः ॥ रम्ये चंपकतल्पे च कृष्णं कृत्वा स्ववक्षसि ॥ ७४ ॥ प्रातरुत्थाय सहसा कृत्वाह्निकमनुत्तमम् ॥ स्वरथे स्थापयामास रामं कृष्णं जगत्पतिम् ॥ ७५ ॥ गव्यं पंचप्रकारं च नानाद्रव्यं

सुदुर्लभम् ॥ वृषभानं च नंदं च सुनंदं चंद्रभानकम् ॥ ७६ ॥ नानाप्रकारं वाद्यं च मृदंगमुरजादिकम् ॥ पटहं पणवं चैव ढक्कां दुंदुभिमानकम् ॥ ७७ ॥ सज्जां संनहनीं कांस्यपट्टमर्दलमंडवीम् ॥ वादयामास सानंदं नंदगोपो व्रजेश्वरः ॥ ७८ ॥ श्रुत्वा वाद्यं च गोप्यश्च गमनं रामकृष्णयोः ॥ दृष्ट्वा कृष्णं रथस्थं तमाययुः कोपपीडिताः ॥ ७९ ॥ कृष्णेन वारिताः सर्वाः प्रेरिता राधया द्विज ॥ बभंजुरीश्वररथं पादाघातेन लीलया ॥ ८० ॥ तत्र सर्वेषु गोपेषु हाहाकारं कृतेषु च ॥ प्रययुर्बलवत्यश्च कृष्णं कृत्वा स्ववक्षसि ॥ ८१ ॥ काचित्क्रूरं तमक्रूरं भर्त्सयामास कोपतः ॥ काश्चिद्बद्ध्वा च वस्त्रेण चाक्रूरं प्रययुस्ततः ॥ ८२ ॥ काचित्तं ताडयामास कंकणेन करेण च ॥ तद्वस्त्रं हारयामास कृत्वा विवसनं मुने ॥ ८३ ॥ क्षतविक्षतसर्वांगं दृष्ट्वाक्रूरं च माधवः ॥ जगाम राधानिकटं बोधयामास तां पुनः ॥ ८४ ॥ अध्यात्मिकेन योगेन विनयेन च सादरम् ॥ अक्रूरं बोधयामास बोधयामास तां विभुः ॥ ८५ ॥ आकाशात्पतितं दिव्यं मंत्रप्रस्थापितं रथम् ॥ विचित्रवस्त्रसंयुक्तं ददर्श पुरतो हरिः ॥ ८६ ॥ खचितं मणिराजेन रचितं विश्वकर्मणा ॥ तं दृष्ट्वा मातृभवनमाजगाम जगत्पतिः ॥ ८७ ॥ भुक्त्वा पीत्वा सुखं सुप्त्वा भगवान्सह बांधवः ॥ तस्थौ मुनींद्रदेवेंद्रब्रह्मेशशेषवंदितः ॥ ८८ ॥ सुषुपुर्गोपिकाः सर्वाः परं संहृष्टमानसाः ॥ पुष्पतल्पे च रम्ये च राधया सह नारद ॥ ८९ ॥ सर्वे चानंदयुक्ताश्च जना गोकुलवासिनः ॥ केचिद्गोपाश्च ननृतुः केचित्संगीततत्पराः ॥ ९० ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे गोपीविषयो नाम सप्ततितमोऽध्यायः ॥ ॥ ७० ॥ ॥ श्रीनारायण उवाच ॥ ॥ राधिकायां च सुप्तायां सुप्तासु गोपिकासु च ॥ पुष्पचंदनतल्पे च वायुना सुरभीकृते ॥ १ ॥ तृतीयप्रहरेतीते निशायां च शुभेक्षणे ॥ शुभचंद्रर्क्षयोगे चाऽमृतयोगसमन्विते ॥ २ ॥ सौम्यस्वामियुते लग्ने सौम्यग्रहविलोकिते ॥ पापग्रहसमासक्तदुष्टदोषादिवर्जिते ॥ ३ ॥ यशोदां बोधयामास कारयामास मंगलम् ॥ बंधूनाश्वासयामास समुत्थाय हरिः स्वयम् ॥ ४ ॥ वाद्यं निषेधयामास राधिकाभयभीतवत् ॥ स्वतंत्रो विश्वकर्ता च पाता भर्ता स्वतंत्रवत् ॥ ५ ॥ प्रक्षाल्य पादयु

गुलं धृत्वा धौते च वाससी ॥ उवास संस्कृते स्थाने विलिप्ते चंदनादिना ॥ ६ ॥ फलपल्लवसंयुक्तं संस्कृतं चंदनादिभिः ॥ वामे कृत्वा पूर्णकुंभं वह्निं विप्रं स्वदक्षिणे ॥ ७ ॥ पतिपुत्रवतीं दीपं दर्पणं पुरतस्तथा ॥ दूर्वाकांडं च सुस्निग्धं पुष्पं धान्यं सितं शुभम् ॥ ॥ ८ ॥ गुरुदत्तं गृहीत्वा च प्रददौ मस्तकोपरि ॥ घृतं ददर्श माध्वीकं रजतं कांचनं दधि ॥ ९ ॥ चंदनं लेपनं कृत्वा पुष्पमाला गले दधौ ॥ गुरुवर्गं ब्राह्मणं च वंदयामास भक्तितः ॥ १० ॥ शंखध्वनिं वेदपाठं संगीतं मंगलाष्टकम् ॥ विप्राशीर्वचनं रम्यं शुश्राव परमादरम् ॥ ११ ॥ ध्यात्वा मंगलरूपं च सर्वत्र मंगलप्रदम् ॥ चिक्षेप दक्षिणं पादं सुंदरं स्वात्मविग्रहम् ॥ १२ ॥ विधृत्य नासिकां वामभागं मध्यमया विभुः ॥ विसृज्य वायुसंपूर्णं नासादक्षिणरंध्रतः ॥ १३ ॥ ततो ययौ नंदनंदो नंदस्य प्रांगणं वरम् ॥ सानंदः परमानंदो नित्यानंदः सनातनः ॥ १४ ॥ नित्योऽनित्यो नित्यबीजस्वरूपो नित्यविग्रहः ॥ नित्यांगभूतो नित्येशो नित्यकृत्यविशारदः ॥ १५ ॥ नित्यंनूतनरूपश्च नित्यनूतनयौवनः ॥ नित्यो नूतवेषश्च वयसा नित्यनूतनः ॥ १६ ॥ नित्यनूतनसंभाषो यत्प्रेम नित्यनूतनम् ॥ नित्यनूतनसंप्राप्तिः सौभाग्यं नित्यनूतनम् ॥ १७ ॥ सुधारसपरं मिष्टं यद्वाक्यं नित्यनूतनम ॥ नित्यनूतनभक्तं च यत्पदं नित्यनूतनम् ॥ १८ ॥ स्थायंस्थायं प्रांगणेस्मिन्मायेशो मायया युतः ॥ अतीव रम्ये सुस्निग्धो बभूव गमनोन्मुखः ॥ १९ ॥ रंभास्तंभसमूहैश्च रसालपल्लवान्वितैः ॥ पटसूत्रनिबद्धैश्च सुंदरैश्च सुसंस्कृते ॥ २० ॥ पद्मरागेण खचिते रचिते विश्वकर्मणा ॥ कस्तूरीकुंकुमाक्तैश्च चंदनैश्च सुसंस्कृते ॥ २१ ॥ तत्र तस्थौ स्वयं कृष्णः सहाक्रूरः सबांधवः ॥ यशोदया समाश्लिष्टो वामपार्श्वेन मायया ॥ २२ ॥ नंदेनानंदयुक्तेनाऽश्लिष्टो दक्षिणपार्श्वतः ॥ संभाषितो बांधवैश्च पित्रा मात्रा च चुंबितः ॥ २३ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे यात्रामंगलं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ कृष्णो गुरुं नत्वा निर्गम्य शिबिरान्मुने ॥ आरुह्य स्वर्गयानं च शुभां मधुपुरीं ययौ ॥ १ ॥ विवेश मथुरां रम्यां सहाक्रूरगणैः समम् ॥ निर्जित्य शक्रनगरीं शोभायुक्तां मनोहराम् ॥ २ ॥ रत्नश्रेष्ठेन खचितां रचितां विश्वकर्मणा ॥ अमूल्य

रत्नकलशै राजितैश्च विराजिताम् ॥ ३ ॥ राजमार्गशतैरिष्टैर्वेष्टितां रुचिरैर्वरैः ॥ चंद्राकारैश्चंद्रसारैर्मणिभिः परिसंस्कृतैः ॥ ४ ॥
विचित्रैर्मणिसारैश्च वीथीशतविनिर्मितैः ॥ शोभितैर्वणिजैः श्रेष्ठैः पुण्यवस्तुसमन्वितैः ॥ ५ ॥ सरोवरसहस्रैश्च परितः परिशोभि
ताम् ॥ शुद्धस्फटिकसंकाशैः पद्मरागविराजितैः ॥ ६ ॥ रत्नालंकारभूषाढ्यैः शोभितां पद्मिनीगणैः ॥ स्थिरयौवनसंयुक्तैर्निमेषर
हितैः परैः ॥ ७ ॥ साक्षतैरूर्ध्ववदनैः कृष्णदर्शनलालसैः ॥ भ्रूभंगलीलालोलैश्च शश्वच्चंचललोचनैः ॥ ८ ॥ शश्वत्कामसमायुक्तैः
पीनश्रोणिपयोधरैः ॥ कोमलांगैर्मध्यकूपै रतिरासविशारदैः ॥ ९ ॥ रत्ननिर्माणयानानां कोटिभिः परिशोभिताम् ॥ भूषणैर्भूषिता
भिश्च चित्रिताभिश्च चित्रकैः ॥ १० ॥ नानाप्रकारश्रीयुक्तां पुष्पोद्यानत्रिकोटिभिः ॥ नानापुष्पैः पुष्पिताभिर्युक्ताभिर्मधु
सूदनैः ॥ ११ ॥ माधुर्यमधुसंयुक्तैर्मधुलुब्धैर्मुदान्वितैः ॥ माध्वीकमधुमत्तैश्च युक्तैर्मधुकरीचयैः ॥ १२ ॥ नानाप्रकारदुर्गैश्च
दुर्गम्यां वैरिणां गणैः ॥ रक्षितां रक्षकैः शश्वद्रक्षाशास्त्रविशारदैः ॥ १३ ॥ त्रिकोट्यट्टालिकाभिश्च संयुक्तां सुमनोहराम् ॥
रचितां किल सद्रत्नैर्विचित्रैर्विश्वकर्मणा ॥ १४ ॥ एवंभूतां च मथुरां दृष्ट्वा कमललोचनः ॥ ददर्श पथि कुब्जां तां वृद्धाम
तिजरातुराम् ॥ १५ ॥ यांतीं दंडसहायेन चातिनम्रां नमद्गलीम् ॥ रुषितां विकृताकारां बिभ्रतीं चंदनद्रवम् ॥ १६ ॥ कस्तूरीकुंकुमा
क्तं च स्पृष्टमात्रेण नारद ॥ सुगंधिमकरंदेन गंधाढ्यं सुमनोहरम् ॥ १७ ॥ सा दृष्ट्वा सस्मिता वृद्धा श्रीकांतं शांतमीश्वरम् ॥ श्रीयुक्तं
श्रीनिवासं तं श्रीबीजं श्रीनिकेतनम् ॥ १८ ॥ प्रणम्य सहसा मूर्ध्ना भक्तिनम्रा पुटांजलिः ॥ प्रददौ चंदनं तस्य गात्रे श्यामलसुन्दरे
॥ १९ ॥ गात्रेषु तद्गणानां च स्वर्णपात्रकरा वरा ॥ कृत्वा प्रदक्षिणं कृष्णं प्रणनाम पुनःपुनः ॥ २० ॥ श्रीकृष्णदृष्टिमात्रेण श्रीयु
क्ता सा बभूव ह ॥ सहसा श्रीसमा रम्या रूपेण यौवनेन च ॥२१॥ वह्निशुद्धा सुवसना रत्नभूषणभूषिता ॥ यथा द्वादशवर्षीया कन्या
धन्या मनोहरा ॥ २२ ॥ बिंबोष्ठी सस्मिता श्यामा तप्तकांचनसन्निभा ॥ सुश्रोणी सुदती बिल्वफलतुल्यपयोधरा ॥ २३ ॥ अमूल्य
रत्ननिर्माणहारसारविराजिता ॥ गजेंद्रराजगमना रत्नमंजीररंजिता ॥ २४ ॥ बिभ्रती कबरीभारं मालतीमाल्यवेष्टितम् ॥ रक्षितं वाम

भागेन रुचिरं वर्तुलाकृतिम् ॥ २५ ॥ सिंदूरबिंदुं दधती दाडिमीकुसुमाकृतिम् ॥ कस्तूरीबिंदुमुपरि सार्द्धं चंदनबिंदुभिः ॥२६॥ रत्न
दर्पणहस्ता च प्रशस्ता रतिकर्मसु ॥ श्रीकृष्णं वरयामास लोललोचनकोणतः ॥ २७ ॥ श्रीवासस्तां समाश्वास्य ययौ स्थानांतरं पर
म् ॥ कृतार्थरूपा सा प्रीत्या ययौ पद्मा यथालयम् ॥ २८ ॥ सा ददर्श स्वभवनं यथा पद्मालयालयम् ॥ रत्नशय्याविरचितं सद्रत्नसा
रनिर्मितम् ॥ २९ ॥ रत्नप्रदीपराजीभी राजिताभिश्च राजितम् ॥ रत्नदर्पणराजैश्च राजितं परितस्ततः ॥ ३० ॥ सिंदूरवस्त्रतांबूलं श्वे
तचामरमाल्यकम् ॥ बिभ्रतीभिश्च दासीभिर्वेष्टितं दाससंघकैः ॥ ३१ ॥ तत्र गत्वा च भुक्त्वा च मिष्टान्नं परमं मुदा ॥ सुष्वाप रत्नप
र्यंके सा दासीभिश्च सेविता ॥ ३२ ॥ सकर्पूरं च तांबूलं कस्तूरीकुंकुमान्वितम् ॥ चंदनं स्थापयामास स्वतल्पे हरये सती ॥ ३३ ॥
मालतीमाल्ययुगुलं कर्पूरादिसुवासितम् ॥ शीतलं सलिलं स्वादु मिष्टान्नं स्वसमीपतः ॥ ३४ ॥ कर्मणा मनसा वाचा चिंतयंती हरेः
पदम् ॥ हरेरागमनं चापि मुखचंद्रं मनोहरम् ॥ ३५ ॥ जगत्कृष्णमयं शश्वत्पश्यंती कामुकी मुने ॥ कोटिकंदर्पलीलाभं कामसक्तं च
कामुकम् ॥ ३६ ॥ ततो ददर्श श्रीकृष्णो मालाकारं मनोहरम् ॥ मालासमूहं बिभ्रंतं गच्छंतं राजमंदिरम् ॥ ३७ ॥ सोपि दृष्ट्वा च
श्रीकांतं प्रणम्य शिरसा भुवि ॥ ददौ माल्यसमूहं च कृष्णाय परमात्मने ॥ ३८ ॥ कृष्णस्तस्मै वरं दत्त्वा स्वदास्यमतिदुर्लभम् ॥
माल्यं गृहीत्वा प्रययौ राजमार्गं वरं वरः ॥ ३९ ॥ ततो ददर्श रजकं बिभ्रंतं वस्त्रपुंजकम् ॥ अहंकृतिबलिष्ठं च सततं यौवनोद्धतम् ॥
॥ ४० ॥ वस्त्रं ययाचे तं कृष्णो विनयेन महामुने ॥ स तस्मै न ददौ वस्त्रं तमुवाच च निष्ठुरम् ॥ ४१ ॥ ॥ रजक उवाच ॥ ॥ गोर
क्षकानां त्वयोग्यं वस्त्रमेतत्सुदुर्लभम् ॥ राजयोग्यं च हे मूढ हे गोपजनवल्लभ ॥४२॥ गृहीत्वा गोपकन्याश्च कन्यालोलुप लंपट ॥ यद्वि
हारः कृतस्तत्र वृन्दारण्येप्यराजके ॥ ४३ ॥ न चात्र तादृशं कर्म राज्ञः कंसस्य वर्त्मनि ॥ विद्यमानोत्र राजेंद्रः शास्ता दुष्टस्य तत्क्ष
णम् ॥ ४४ ॥ रजकस्य वचः श्रुत्वा जहास मधुसूदनः ॥ जहास बलदेवश्च साक्रूरो गोपवर्गकः ॥ ४५ ॥ तं निहत्य चपेटेन ज
ग्राह वस्त्रपुंजकम् ॥ वस्त्रं संधारयामास श्रीकृष्णः सगणस्तथा ॥ ४६ ॥ रत्नयानेन गोलोकं पार्षदैर्वेष्टितेन च ॥ ययौ रजकराजश्च

धृत्वा दिव्यकलेवरम् ॥ ४७ ॥ शश्वद्यौवनयुक्तं च जरामृत्युहरं वरम् ॥ पीतवस्त्रसमासक्तं सस्मितं श्यामसुन्दरम् ॥ ४८ ॥ बभूव सोपि गोलोके पार्षदेषु च पार्षदः ॥ कृष्णस्यागमनं तत्र सस्मार सततं वशी ॥ ४९ ॥ अस्तं गतो दिनकरोप्यक्रूरः स्वगृहं ययौ ॥ कृष्णस्यानुमतिं प्राप्य कृष्णोपि कस्यचिद्गृहम् ॥ ५० ॥ वैष्णवस्य कुविंदस्य तस्मिन्नस्तधनस्य च ॥ सानंदो नंदसहितो बलदेवादिभिर्युतः ॥ ५१ ॥ स भक्तः पूजयामास प्रणम्य श्रीनिकेतनम् ॥ तस्मै ददौ स्वदास्यं च वरं ब्रह्मादिदुर्लभम्॥ ५२ ॥ पर्यंके सुषुपुः सर्वे भुक्त्वा मिष्टान्नमुत्तमम् ॥ निद्रां च लेभे सा कुब्जा निद्रेशोपि ययौ मुदा ॥ ५३ ॥ गत्वा ददर्श कुब्जां तां रत्नतल्पे च निद्रिताम् ॥ दासीगणैः परिवृतां सुन्दरीं कमलामिव ॥ ५४ ॥ बोधयामास तां कृष्णो न दासीश्चापि निद्रिताः ॥ तामुवाच जगन्नाथो जगन्नाथप्रियां सतीम् ॥ ५५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ त्यज निद्रां महाभागे शृंगारं देहि सुन्दरि ॥ पुरा शूर्पणखा त्वं च भगिनी रावणस्य च ॥ ५६ ॥ रामजन्मनि मद्धेतोस्त्वया कांते तपः कृतम् ॥ तपःप्रभावान्मां कांतं भज श्रीकृष्णजन्मनि ॥ ५७ ॥ अधुना सुखसंभोगं कृत्वा गच्छ ममालयम् ॥ सुदुर्लभं च गोलोकं जरामृत्युहरं परम् ॥ ५८ ॥ इत्युक्त्वा श्रीनिवासश्च कृत्वा तामेव वक्षसि ॥ नग्नां चकार शृंगारं चुंबनं चापि कामुकीम् ॥ ५९ ॥ सा सस्मिता च श्रीकृष्णं नवसंगमलज्जिता ॥ चुचुंबे गंडे क्रोडे तां चकार कमलां यथा ॥ ६० ॥ सुरतेर्विरतिर्नास्ति दंपती रतिपंडितौ ॥ नानाप्रकारसुरतं बभूव तत्र नारद ॥ ६१ ॥ स्तनश्रोणियुगं तस्या वीक्षितं च चकार ह ॥ भगवान्नखरैस्तीक्ष्णैर्दशनैरधरं वरम् ॥ ६२ ॥ निशावसानसमये वीर्याधानं चकार सः ॥ सुखसंभोगभोगेन मूर्च्छामाप च सुंदरी ॥ ६३ ॥ तत्राजगाम तां तंद्रा कृष्णवक्षःस्थलस्थिताम् ॥ बुबुधे न दिवारात्रं स्वर्गं मर्त्यं जलं स्थलम् ॥ ६४ ॥ सुप्रभाता च रजनी बभूव रजनीपतिः ॥ पत्युर्व्यतिक्रमेणैव लज्जयेव मलीमसः ॥ ॥ ६५ ॥ अथाजगाम गोलोकाद्रथो रत्नविनिर्मितः ॥ जगाम तेन तं लोकं धृत्वा दिव्यकलेवरम् ॥ ६६ ॥ वह्निशुद्धांशुकाधानं

१ ब्रह्मादिदेवदुर्लभम्–इ० पा० ।

रत्नभूषणभूषितम् ॥ प्रतप्तकांचनाभासं नित्यं जन्मादिवर्जितम् ॥ ६७ ॥ सा बभूव च तत्रैव गोपी चंद्रमुखी मुने ॥ गोप्यः कतिवि
धास्तस्या बभूवुः परिचारिकाः ॥ ६८ ॥ भगवानपि तत्रैव क्षणं स्थित्वा स्वमंदिरम् ॥ जगाम यत्र नंदश्च सानंदो नंदनंदनः ॥
॥ ६९ ॥ अथ कंसो निशायां च निद्रायां भयविह्वलः ॥ ददर्श दुःखदुःस्वप्नमात्मनो मृत्युसूचकम् ॥ ७० ॥ ददर्श सूर्यं भूमिस्थं
चतुःखंडं नभश्च्युतम् ॥ दशखंडं चंद्रबिंबं भूमिस्थं खाच्युतं मुने ॥ ७१ ॥ पुरुषान्विकृताकारान्रज्जुहस्तान्दिगंबरान् ॥ विधवां
शूद्रपत्नीं च नग्नां च च्छिन्ननासिकाम् ॥ ७२ ॥ हसंतीं चूर्णतिलकां श्वेतकृष्णोच्चमूर्द्धजाम् ॥ खड्गखर्परहस्तां च लोलजिह्वां च
बिभ्रतीम् ॥ ७३ ॥ रुंडमालासमायुक्तां गर्दभं महिषं वृषम् ॥ सूकरं भल्लुकं काकं गृध्रं कंकं च वानरम् ॥ ७४ ॥ क्रिजं कुक्कुरं नक्रं
शृंगालं भस्मपुंजकम् ॥ अस्थिराशिं तालफलं केशं कार्पासमुल्बणम् ॥७५॥ निर्वाणांगारमुल्कां च शवं मर्त्यं चिताश्रितम् ॥ कुलाल
तैलकाराणां चक्रं वक्रं कपर्दकम् ॥७६॥ श्मशानं दग्धकाष्ठं च शुष्ककाष्ठं कुशं तृणम् ॥ गच्छंतं च कबंधं च नदंतं मृतमस्तकम् ॥७७॥
दग्धस्थानं भस्मयुतं तडागं जलवर्जितम् ॥ दग्धमत्स्यं च लोहं च निर्वाणदग्धकाननम् ॥ ७८ ॥ गलत्कुष्ठं च वृषलं नग्नं च मुक्त
मूर्द्धजम् ॥ अतीव रुष्टं विप्रं च शपंतं गुरुमीदृशम् ॥ ७९ ॥ अतीव रुष्टं भिक्षुं च योगिनं वैष्णवं नरम् ॥ एवं दृष्ट्वा समुत्थाय कथया
मास मातरम् ॥ ८० ॥ पितरं भ्रातरं पत्नीं रुदंतीं प्रेमविह्वलाम् ॥ मंचकान्कारयामास स्थापयामास हस्तिनम् ॥ ८१ ॥ मल्लं सैन्यं
च योद्धारं कारयामास मंगलम् ॥ सभां च कारयामास पुण्यं स्वस्त्ययनं शिवम् ॥ यत्नेन योजयामास योगे युक्तं पुरोहितम् ॥
॥ ८२ ॥ उवास मंचके रम्ये धृत्वा खड्गं विलक्षणम् ॥ रणे नियोजयामास योद्धारं युद्धकोविदम् ॥ ८३ ॥ वासयामास राजेंद्रा
न्ब्राह्मणांश्च मुनीश्वरान् ॥ ब्राह्मणांश्च सुहृद्वर्गान्धर्मिष्ठान्रणकोविदान् ॥ ८४ ॥ अथाजगाम गोविंदो रामेण सह नारद ॥ महेशस्य
धनुर्मध्यं बभंज तत्र लीलया ॥८५॥ शब्देन तस्य मथुरा बधिरा च बभूव ह ॥ विषादं प्राप कंसश्च मुदं च देवकीसुतः ॥८६॥ उपस्थि
तः सभामध्ये गजमल्लं निहत्य च ॥ योगी ददर्श तं देवं परमात्मानमीश्वरम् ॥८७॥ यथाहृत्पद्ममध्यस्थं तादृशं बहिरेव च ॥ राजेंद्र

रूपं राजानः शास्तारं दंडधारिणाम् ॥ ८८ ॥ पिता माता दुग्धमुखं स्तनांधं बालकं यथा ॥ कामिन्यः कोटिकंदर्पलीलालावण्यधा
रिणम् ॥ ८९ ॥ कंसश्च कालपुरुषं वैरिणं तस्य बांधवाः ॥ मल्ला मृत्युप्रदं चैव प्राणतुल्यं च यादवाः ॥ ९० ॥ नमस्कृत्य मुनीन्वि
प्रान्पितरं मातरं गुरुम् ॥ जगाम मंचकाभ्याशं हस्ते कृत्वा सुदर्शनम् ॥ ९१ ॥ दृष्ट्वा भक्तं भक्तबंधुः कृपया च कृपानिधिः ॥
आकृष्य मंचकात्कंसं जघान लीलया मुने ॥ ९२ ॥ राजा ददर्श विश्वं च सर्वं कृष्णमयं परम् ॥ पुरतो रत्नयानं च हीरकाहार
भूषितम् ॥ ९३ ॥ ययौ विष्णुपदं स्फीतो दिव्यरूपं विधाय च ॥ तेजो विवेश परमं कृष्णपादांबुजे मुने ॥ ९४ ॥ निवृत्य तस्य
सत्कारं ब्राह्मणेभ्यो धनं ददौ ॥ ददौ राज्यं राजछत्रमुग्रसेनाय धीमते ॥ ९५ ॥ स बभूव नृपेंद्रश्च चंद्रवंशसमुद्भवः ॥ विललाप कंस
माता पत्नीवर्गश्च तत्पिता ॥९६॥ बांधवा मातृवर्गश्च भगिनी भ्रातृकामिनी ॥ दर्शनं देहि राजेंद्र समुत्तिष्ठ नृपासने ॥९७॥ राज्यं रक्ष
धनं रक्ष बांधवं बलमेव च ॥ क्व यासि बांधवान्हित्वा त्वमनाथान्महाबल ॥ ९८ ॥ ब्रह्मादिस्तंबपर्यंतमसंख्यं विश्वमेव च ॥ सर्वं चरा
चराधारं यः सृजत्येव लीलया ॥ ९९ ॥ ब्रह्मेशशेषधर्माश्च दिनेशश्च गणेश्वरः ॥ मुनींद्रवर्गो देवेंद्रो ध्यायते यमहर्निशम् ॥ १०० ॥
वेदाः स्तुवंति यं कृष्णं स्तौति भीता सरस्वती ॥ स्तौति यं प्रकृतिर्हृष्टा प्राकृतं प्रकृतेः परम् ॥ १ ॥ स्वेच्छामयं निरीहं च निर्गुणं च
निरंजनम् ॥ परात्परतरं ब्रह्म परमात्मानमीश्वरम् ॥ २ ॥ नित्यं ज्योतिःस्वरूपं च भक्तानुग्रहविग्रहम् ॥ नित्यानंदं च नित्यं च
नित्यमक्षरविग्रहम् ॥ ३ ॥ सोवतीर्णो हि भगवान्भारावतरणाय च ॥ गोपालबालवेषश्च मायेशो मायया प्रभुः ॥ ४ ॥ स यं हंति
च सर्वेशो रक्षिता तस्य कः पुमान् ॥ स यं रक्षति सर्वात्मा तस्य हंता न कोपि च ॥ ५ ॥ इत्येवमुक्त्वा सर्वश्च विरराम महामुने ॥
ब्राह्मणान्भोजयामास तेभ्यः सर्वं धनं ददौ ॥ ६ ॥ भगवानपि सर्वात्मा जगाम पितुरंतिकम् ॥ छित्वा च लोहनिगडं तयोर्मोक्षं चकार सः
॥ ७ ॥ ननाम दंडवद्भूमौ मातरं पितरं तथा ॥ तुष्टाव भक्त्या देवेशो भक्तिनम्रात्मकंधरः ॥ ८ ॥ ॥ श्रीभगवानुवाच ॥ ॥
पितरं मातरं विद्यामंत्रदं गुरुमेव च ॥ यो न पुष्णाति पुरुषो यावज्जीवं च सोऽशुचिः ॥ ९ ॥ सर्वेषामपि पूज्यानां पिता वंद्यो महान्

गुरुः ॥ पितुः शतगुणैर्माता गर्भधारणपोषणात् ॥ ११० ॥ माता च पृथिवीरूपा सर्वेभ्यश्च हितैषिणी ॥ नास्ति मातुः परो बंधुः
सर्वेषां जगतीतले ॥ ११ ॥ विद्यामंत्रप्रदः सत्यं मातुः परतरो गुरुः ॥ न हि तस्मात्परः कोपि वंद्यः पूज्यश्च वेदतः ॥ १२ ॥ इत्येव
मुक्त्वा श्रीकृष्णो बलभद्रो ननाम च ॥ माता चकार तौ क्रोडे पिता च सादरं मुने ॥ १३ ॥ मिष्टान्नं परमं तौ च भोजयामास सा
दरम् ॥ नंदं च भोजयामास गोपालान्परमादरम् ॥ १४ ॥ मंगलं कारयामास भोजयामास ब्राह्मणान् ॥ वसुर्वसुसमूहं च ब्राह्मणेभ्यो
ददौ मुदा ॥ ११६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे कंसवधवसुदेवदेवकीमोक्षणं नाम
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ कृष्णश्च सानंदं नंदं तं पितरं बलः ॥ बोधयामास शोकार्तं
दिव्यैराध्यात्मिकादिभिः ॥ १ ॥ उच्चै रुदंतं निश्चेष्टं पुत्रविच्छेदकातरम् ॥ दत्त्वा तस्मै मणिश्रेष्ठमित्युवाच जगत्पतिः ॥ २ ॥
॥ ॥ श्रीभगवानुवाच ॥ ॥ निबोध नंद सानंदं त्यज शोकं मुदं लभ ॥ ज्ञानं गृहाण मद्दत्तं यद्दत्तं ब्रह्मणे पुरा ॥ ३ ॥ यद्यद्दत्तं
च शेषाय गणेशायेश्वराय च ॥ दिनेशाय मुनीशाय योगीशाय च पुष्करे ॥ ४ ॥ कः कस्य पुत्रः कस्तातः का माता कस्यचि
त्कुतः ॥ आयांति यांति संसारं परं स्वकृतकर्मणा ॥ ५ ॥ कर्मानुसाराज्जंतुश्च जायते स्थानभेदतः ॥ कर्मणा कोपि जंतुश्च योगीं
द्राणां नृपस्त्रियाम् ॥ ६ ॥ द्विजपत्न्यां क्षत्रियाणां वैश्यायां शूद्रयोनिषु ॥ तिर्यग्योनिषु कश्चिच्च कश्चित्पश्वादियोनिषु ॥ ७ ॥ ममै
व मायया सर्वे सानंदा विषयेषु च ॥ देहत्यागे विषण्णाश्च विच्छेदे बांधवस्य च ॥ ८ ॥ प्रजाभूमिधनादीनां विच्छेदो मरणाधिकः ॥
नित्यं भवति मूढश्च न च विद्वाञ्छुचा युतः ॥ ९ ॥ मद्भक्तो भक्तियुक्तश्च मद्याजी विजितेंद्रियः ॥ मन्मंत्रोपासकश्चैव मत्सेवानिरतः
शुचिः ॥ १० ॥ मद्भयाद्वाति वातोयं रविर्भाति च नित्यशः ॥ भाति चंद्रो महेंद्रश्च कालभेदे च वर्षति ॥११॥ वह्निर्दहति मृत्युश्च चर
त्येव हि जंतुषु ॥ बिभर्ति वृक्षः कालेन पुष्पाणि च फलानि च ॥ १२ ॥ निराधारश्च वायुश्च वाय्वाधारश्च कच्छपः ॥ शेषश्च कच्छपा
धारः शेषाधाराश्च पर्वताः ॥ १३ ॥ तदाधाराश्च पातालाः सप्त एव हि पंक्तितः ॥ निश्चलं च जलं तस्माज्जलस्था च वसुन्धरा ॥१४॥

सप्तस्वर्गं धराधारं ज्योतिश्चक्रं ग्रहाश्रयम् ॥ निराधारश्च वैकुंठो ब्रह्मांडेभ्यः परो वरः ॥ १५ ॥ तत्परश्चापि गोलोकः पंचा
शत्कोटियोजनात् ॥ ऊर्ध्वं निराश्रयश्चापि रत्नसारविनिर्मितः ॥ १६ ॥ सप्तद्वारः सप्तसारः परिखासप्तसंयुतः ॥ लक्षप्राकारयुक्त
श्च नद्या विरजया युतः ॥ १७ ॥ वेष्टितो रत्नशैलेन शतशृंगेण चारुणा ॥ योजनायुतमानं च यस्यैकं शृंगमुज्ज्वलम् ॥ १८ ॥ शत
कोटियोजनश्च शैल उच्छ्रित एव च ॥ दैर्घ्यं तस्य शतगुणं प्रस्थं च लक्षयोजनम् ॥ १९ ॥ योजनायुतविस्तीर्णस्तत्रैव रासमंडलः ॥
अमूल्यरत्ननिर्माणो वर्तुलश्चंद्रबिंबवत् ॥ २० ॥ पारिजातवनेनैव पुष्पितेन च वेष्टितः ॥ कल्पवृक्षसहस्रेण पुष्पोद्यानशतेन च ॥२१॥
नानाविधैः पुष्पवृक्षैः पुष्पितेन च चारुणा ॥ त्रिकोटिरत्नभवनो गोपीलक्षैश्च रक्षितः ॥२२॥ रत्नप्रदीपयुक्तश्च रत्नतल्पसमन्वितः ॥
नानाभोगसमायुक्तो मधुवापीशतैर्वृतः ॥२३॥ पीयूषवापीयुक्तश्च कामभोगसमन्वितः ॥ गोलोकगृहसंख्यानवर्णने वा विशारदः॥२४॥
न कोपि वेद विद्वान्वा वेद विद्वान्व्रजेश्वरः ॥ अमूल्यरत्ननिर्माणभवनानां त्रिकोटिभिः ॥२५॥ शोभितं सुन्दरं रम्यं राधाशिबिरमुत्त
मम् ॥ अमूल्यरत्नकलशैरुज्ज्वलं रत्नदर्पणैः ॥ २६ ॥ अमूल्यरत्नस्तंभानां राजिभिश्च विराजितम् ॥ नानाचित्रविचित्रैश्च चित्रितं
श्वेतचामरैः ॥ २७ ॥ माणिक्यमुक्तासंसक्तं हारिवारसमन्वितम् ॥ रत्नप्रदीपसंसक्तं रत्नसोपानसुंदरम् ॥ २८ ॥ अमूल्यरत्नपात्रैश्च
तल्पराजिविराजितम् ॥ अमूल्यरत्नचित्रैश्च त्रिभिश्चित्रविचित्रितैः ॥ २९ ॥ तिसृभिः परिखाभिश्च त्रिभिर्द्वारैश्च दुर्गमैः ॥ युक्तं षोडश
कक्षाभिः प्रतिद्वारेषु वांतरम् ॥ ३० ॥ गोपीषोडशलक्षैश्च सन्नियुक्तैरितस्ततः ॥ वह्निशुद्धांशुकाधानै रत्नभूषणभूषितैः ॥ ३१ ॥ तप्त
कांचनवर्णाभैः शतचंद्रसमन्वितैः ॥ राधिकाकिंकरीवर्गैर्युक्तमभ्यंतरं वरम् ॥ ३२ ॥ अमूल्यरत्ननिर्माणप्रांगणं सुमनोहरम् ॥ अमूल्य
रत्नस्तंभानां समूहैश्च सुशोभितम् ॥ ३३ ॥ रत्नमंगलकुंभैश्च फलपल्लवसंयुतैः ॥ संयुतं रत्नवेदीभिर्युक्तायुक्ताभिरीप्सितम् ॥ ३४ ॥
अमूल्यरत्नमुकुरैः शोभितं सुन्दरैरहो ॥ अमूल्यरत्ननिर्माणं भवनानां वरं गृहम् ॥ ३५ ॥ रत्नसिंहासनस्था च गोपीलक्षैश्च सेविता ॥
कोटिपूर्णं सुशोभाढ्या श्वेतचंपकसन्निभा ॥ ३६ ॥ अमूल्यरत्ननिर्माणभूषणैश्च विभूषिता ॥ अमूल्यरत्नवसना बिभ्रती रत्नदर्प

नम् ॥ ३७ ॥ रत्नपद्मं च रुचिरं सव्यदक्षिणहस्ततः ॥ दाडिंबकुसुमाकारं सिंदूरं सुमनोहरम् ॥ ३८ ॥ सुशोभितं मृगमदैरिष्टैश्चंदन
बिंदुभिः ॥ दधती कबरीभारं मालतीमाल्यमंडिम् ॥ ३९ ॥ रचितं वामभागेन मुनींद्राणां मनोहरम् ॥ एवंभूतं तत्र राधा
गोपीभिः परिसेविता ॥ ४० ॥ श्वेतचामरहस्ताभिस्तत्तुल्याभिश्च सर्वतः ॥ अमूल्यरत्ननिर्माणैर्भूषिताभिश्च भूषणैः ॥ ४१ ॥
मत्प्राणाधिष्ठातृदेवी देवीनां प्रवरा वरा ॥ सुदाम्नः सा च शापेन वृषभानसुताधुना ॥ ४२ ॥ शताब्दिको हि विच्छेदो
भविष्यति मया सह ॥ तेन भारावतरणं करिष्यामि भुवः पितः ॥ ४३ ॥ तदा यास्यामि गोलोकं तया सार्द्धं सुनिश्चितम् ॥
त्वया यशोदया चापि गोपैर्गोपीभिरेव च ॥ ४४ ॥ वृषभानेन तत्पत्न्या कलावत्या च बांधवैः ॥ एवं च नंदं सानंदं यशोदां
कथयिष्यसि ॥ ४५ ॥ त्यज शोकं महाभाग व्रजैः, सार्द्धं व्रजं व्रज ॥ अहमात्मा च साक्षी च निर्लिप्तः सर्वजीविषु ॥ ४६ ॥
जीवो मत्प्रतिर्बिंबश्च इत्येवं सर्वसंमतम् ॥ प्रकृतिर्मद्विकारा च साप्यहं प्रकृतिः स्वयम् ॥ ४७ ॥ यथा दुग्धे च धावल्यं न तयोर्भेद
एव च ॥ यथा जले तथा शैत्यं यथा वह्नौ च दाहिका ॥ ४८ ॥ यथाकाशे तथा शब्दो भूमौ गंधो यथा नृप ॥ यथा शोभा च चंद्रे
च यथा दिनकरे प्रभा ॥ ४९ ॥ यथा जीवस्तथात्मानं तथैव राधया सह ॥ त्यज त्वं गोपिकाबुद्धिं राधायां मयि पुत्रताम् ॥ ५० ॥
अहं सर्वस्य प्रभवः सा च प्रकृतिरीश्वरी ॥ श्रूयतां नंद सानंद मद्विभूतिं सुखावहाम् ॥ ५१ ॥ पुरा या कथिता तात ब्रह्मणे व्यक्त
जन्मने ॥ कृष्णोहं देवतानां च गोलोके द्विभुजः स्वयम् ॥ ५२ ॥ चतुर्भुजोहं वैकुंठे शिवलोके शिवः स्वयम् ॥ ब्रह्मलोके च ब्रह्माहं
सूर्यस्तेजस्विनामहम् ॥ ५३ ॥ पवित्राणामहं वह्निर्जलमेव द्रवेषु च ॥ इंद्रियाणां मनश्चास्मि समीरः शीघ्रगामिनाम् ॥ ५४ ॥
यमोहं दंडकर्तॄणां कालः कलयतामहम् ॥ अक्षराणामकारोस्मि साम्नां च साम एव च ॥ ५५ ॥ इंद्रश्चतुर्दशेंद्रेषु कुबेरो धनिनाम
हम् ॥ ईशानोहं दिगीशानां व्यापकानां नभस्तथा ॥ ५६ ॥ सर्वांतरात्मा जीवेषु ब्राह्मणश्चाश्रमेषु च ॥ वनानां च रत्नमहममूल्यं
सर्वदुर्लभम् ॥ ५७ ॥ तैजसानां सुवर्णोहं मणीनां कौस्तुभः स्वयम् ॥ शालग्रामस्तथार्च्यानां पत्राणां तुलसीति च ॥ ५८ ॥ पुष्पा

णां पारिजातोहं तीर्थानां पुष्करः स्वयम् ॥ वैष्णवानां कुमारोहं योगींद्राणां गणेश्वरः ॥ ५९ ॥ सेनापतीनां स्कंदोहं लक्ष्मणो हं धनु
ष्मताम् ॥ राजेंद्राणां च रामोहं नक्षत्राणामहं शशी ॥६०॥ मासानां मार्गशीर्षोहमृतूनामस्मि माधवः ॥ वारेष्वादित्यवारोहं तिथिष्वे
कादशीति च ॥ ६१ ॥ सहिष्णूनां च पृथिवी माताहं बांधवेषु च ॥ अमृतं भक्ष्यवस्तूनां गव्येष्वाज्यमहं तथा ॥ ६२ ॥ कल्पवृक्षश्च
वृक्षाणां सुरभिः कामधेनुषु ॥ गंगाहं सरितां मध्ये कृतपापविनाशिनी ॥ ६३ ॥ वाणीति पंडितानां च मंत्राणां प्रणवस्तथा ॥ विद्यासु
बीजरूपोहं सस्यानां धान्यमेव च ॥ ६४ ॥ अश्वत्थः फलिनामेव गुरूणां मंत्रदः स्वयम् ॥ कश्यपश्च प्रजेशानां गरुडः पक्षिणां तथा
॥६५॥ अनंतोहं च नागानां नराणां च नराधिपः ॥ ब्रह्मर्षीणां भृगुरहं देवर्षीणां च नारदः॥६६॥ राजर्षीणां च जनको महर्षीणां शुक
स्तथा ॥ गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ ६७ ॥ बृहस्पतिर्बुद्धिमतां कवीनां शुक्र एव च ॥ ग्रहाणां च शनिरहं विश्व
कर्मा च शिल्पिनाम् ॥ ६८ ॥ मृगाणां च मृगेंद्रोहं वृषाणां शिववाहनम् ॥ ऐरावतो गजेंद्राणां गायत्री छंदसामहम् ॥ ६९ ॥ वेदाश्च
सर्वशास्त्राणां वरुणो यादसामहम् ॥ उर्वश्यप्सरसामेव समुद्राणां जलार्णवः ॥ ७० ॥ सुमेरुः पर्वतानां च रत्नवत्सु हिमालयः ॥
दुर्गा च प्रकृतीनां च देवीनां कमलालया ॥ ७१ ॥ शतरूपा च नारीणां मत्प्रियाणां च राधिका ॥ साध्वीनामपि सावित्री वेद
माता च निश्चितम् ॥ ७२ ॥ प्रह्लादश्चापि दैत्यानां बलिष्ठानां बलिः स्वयम् ॥ नारायणर्षिर्भगवाञ्ज्ञानिनां मध्य एव च ॥ ७३ ॥
हनूमान्वानराणां च पांडवानां धनंजयः॥ मनसा नागकन्यानां वसूनां द्रोण एव च ॥७४॥ द्रोणो जलधराणां च वर्षाणां भारतं तथा ॥
कामिनां कामदेवोहं रंभा च कामुकीषु च ॥ ७५ ॥ गोलोकश्चास्मि लोकानामुत्तमः सर्वतः परः ॥ मातृकासु शांतिरहं रतिश्च सुंद
रीषु च ॥ ७६ ॥ धर्मोहं साक्षिणां मध्ये संध्या च वासरेषु च ॥ देवेष्वहं च माहेंद्रो राक्षसेषु विभीषणः ॥ ७७ ॥ कालाग्निरुद्रो रुद्राणां
संहारो भैरवेषु च ॥ शंखेषु पांचजन्योहमंगेष्वपि च मस्तकः ॥ ७८ ॥ परं पुराणसूत्रेषु चाहं भागवतं वरम् ॥ भारतं चेति हासेषु
पंचरात्रेषु कापिलम् ॥ ७९ ॥ स्वायंभुवो मनूनां च मुनीनां व्यासदेवकः ॥ स्वधाहं पितृपत्नीषु स्वाहा वह्निप्रियासु च ॥ ८० ॥

यज्ञानां राजसूयोऽहं यज्ञपत्नीषु दक्षिणा ॥ शस्त्रास्त्रज्ञेषु रामोऽहं जमदग्निसुतो महान् ॥ ८१ ॥ पौराणिकेषु सूतोऽहं नीतिवत्स्वंगिरा मुनिः ॥ विष्णुव्रतं व्रतानां च बलानां दैवमेव च ॥ ८२ ॥ ओषधीनामहं दूर्वा तृणानां कुशमेव च ॥ धर्मकर्मसु सत्यं च स्नेहपात्रेषु पुत्रकः ॥ ८३ ॥ अहं व्याधिश्च शत्रूणां ज्वरो व्याधिष्वहं तथा ॥ मद्भक्तिष्वपि मदास्यं वरेषु च वरः स्मृतः ॥ ८४ ॥ आश्रमाणां गृहस्थोऽहं संन्यासी च विवेकिनाम् ॥ सुदर्शनं च शस्त्राणां कुशलं च शुभाशिषाम् ॥ ८५ ॥ ऐश्वर्याणां महाज्ञानं वैराग्यं च सुखेष्वहम् ॥ मिष्टवाक्यं प्रीतिदेषु दानेषु चात्मदानकम् ॥ ८६ ॥ संचयेषु धर्मकर्म कर्मणां च मदर्चनम् ॥ कठोरेषु तपश्चाहं फलेषु मोक्ष एव च ॥८७॥ अष्टसिद्धिषु प्राकाम्यमहं काशी पुरीषु च ॥ नगरेषु तथा कांची सदेशो यत्र वैष्णवः ॥८८॥ सर्वाधारेषु स्थूलेषु अहमेव महान्विराट् ॥ परमाणुरहं विश्वे महासूक्ष्मेषु नित्यशः ॥ ८९ ॥ वैद्यानामश्विनीपुत्रौ चौषधीषु रसायनम् ॥ धन्वंतरिर्मंत्रविदां विषादः क्षयकारिणाम् ॥ ९० ॥ रागाणां मेघमल्लारः कामोदस्तत्प्रियासु च ॥ मत्पार्षदेषु श्रीदामा मद्बंधुष्वहमुद्धवः ॥ ९१ ॥ पशुजंतुषु गौश्चाहं चंदनं काननेषु च ॥ तीर्थपूतश्च पूतेषु निःशंकेषु च वैष्णवः ॥९२॥ न वैष्णवात्परः प्राणी मन्मंत्रोपासकश्च यः ॥ वृक्षेष्वंकुररूपोऽहमाकारः सर्ववस्तुषु ॥ ९३ ॥ अहं च सर्वभूतेषु मयि सर्वे च संततम् ॥ यथा वृक्षे फलान्येव फलेषु चांकुरस्तरोः ॥ ९४ ॥ सर्वकारणरूपोऽहं न च मत्कारणं परम् ॥ सर्वेशोऽहं न मेऽपीशो ह्यहं कारणकारणम् ॥९५॥ सर्वेषां सर्वबीजानां प्रवदंति मनीषिणः ॥ मन्मायामोहितजना मां न जानंति पापिनः ॥ ९६ ॥ पापग्रस्तेन दुर्बुद्ध्या विधिना वंचितेन च ॥ स्वात्माहं सर्वजंतूनां स्वाम्यहं नादृतः स्वयम् ॥९७॥ यत्राहं शक्तयस्तत्र क्षुत्पिपासादयस्तथा ॥ गते मयि तथा यांति नरदेहे यथानुगाः ॥ ९८ ॥ हे व्रजेश नंद तात ज्ञानं ज्ञात्वा व्रजं व्रज ॥ कथयस्व च तां राधां यशोदां ज्ञानमेव च ॥९९॥ ज्ञात्वा ज्ञानं व्रजेशश्च जगाम स्वानुगैः सह ॥ गत्वा च कथयामास ते द्वे च योषितां वरे ॥१००॥ ते च सर्वे जहुः शोकं महाज्ञानेन नारद ॥ कृष्णो यद्यपि निर्लिप्तो मायेशो मायया रतः ॥ १०१ ॥ यशोदया प्रेरितश्च पुनरागत्य माधवम् ॥ तुष्टाव परमानंदं नंदश्च नंदनंदनम् ॥ १०२ ॥ सामवेदोक्तस्तोत्रेण कृतेन ब्रह्मणा पुरा ॥ पुत्रस्य पुरतः

स्थित्वा रुरोद च पुनःपुनः ॥ १०२ ॥ इति श्रीब्रह्मवैवर्ते महापुराण श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे नंदादिशोकप्र
मोचनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ श्रीनारायण उवाच ॥ ॥ श्रीकृष्णः परमानंदः परिपूर्णतमः प्रभुः ॥ परमात्मा
च परमो भक्तानुग्रहकारकः ॥ १ ॥ भुवो भारावतरणे निर्गुणः प्रकृतेः परः ॥ परात्परस्तु भगवान्ब्रह्मेशशेषवंदितः ॥ २ ॥ तुष्टो
नंदस्तवं श्रुत्वा तमुवाच जगत्पतिः ॥ आगच्छंतं गोकुलाच्च विरहज्वरकातरम् ॥ ३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ गच्छ नंद
व्रजं नंद त्यज शोकं भ्रमं भुवि ॥ शृणु सत्यं परं ज्ञानं शोकग्रंथिनिकृंतनम् ॥ ४ ॥ वायुश्च भूमिराकाशो जलं तेजश्च पंकजम् ॥ उक्तः
श्रुतिगणैरेतैः पंचभूतैश्च नित्यशः ॥ ५ ॥ सर्वेषां देहिनां तात देहश्च पांचभौतिकः ॥ मिथ्याभ्रमः कृत्रिमश्च स्वप्नवन्माययान्वितः ॥
॥ ६ ॥ देहं गृह्णंति सर्वेषां पंचभूतानि नित्यशः ॥ मायासंकेतरूपं तदभिज्ञानं भ्रमात्मकम् ॥ ७ ॥ को वा कस्य सुतस्तात का स्त्री
कस्य पतिस्तु वा ॥ कर्मणा भ्रमणं शश्वत्सर्वेषां भूरि जन्मनि ॥८॥ कर्मणा जायते जंतुः कर्मणैव प्रलीयते ॥ सुखं दुःखं भयं शोकं
कर्मणा च प्रपद्यते ॥ ९ ॥ केषां वा जन्मसर्गेषु केषां वा ब्राह्मणो गृहे ॥ केषां विप्रेषु क्षत्रेषु केषां वा वैश्यशूद्रयोः ॥१०॥ अतिनीचेषु
केषां वा केषां कृमिषु विट्सु च ॥ पशुपक्षिषु केषां वा केषां वा क्षुद्रजंतुषु ॥ ११ ॥ पुनःपुनर्भ्रमंत्येव सर्वे तात स्वकर्मणा ॥ करोति
कर्म निर्मूलं मद्भक्तो मत्प्रियः सदा ॥ १२ ॥ सत्यं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ॥ पचविंशत्सहस्राणां युगांते निधनं मनोः ॥
॥ १३ ॥ मनोः समं महेंद्रस्य परमायुर्विनिर्मितम् ॥ चतुर्दशेंद्रविच्छित्तौ ब्रह्मणो दिनमुच्यते ॥ १४ ॥ एवं परिमिता रात्रिः कालवि
द्भिर्विनिर्मिता ॥ एवं परिमिता मासा वर्षं च परिनिश्चितम् ॥ १५ ॥ ब्रह्मणश्च वर्षशतं परमायुर्विनिर्मितम् ॥ निमेषमात्रं कालोयं
ब्रह्मणो निधने मम ॥ १६ ॥ ब्रह्मादितृणपर्यंतं सर्वं विश्वे विनिश्चितम् ॥ सत्योहं परमात्मा च भक्तानुग्रहविग्रहः ॥ १७ ॥ मन्मंत्रो
पासकः सत्यो देहं त्यक्त्वा धरासु च ॥ यास्यत्येव हि गोलोकं छित्वा कर्म पुरातनम् ॥ १८ ॥ असंख्यब्रह्मणां पाते न भवेत्तस्य पात
नम् ॥ गृह्णाति नित्यं स्वं देहं जन्ममृत्युजरापहम् ॥ १९ ॥ न नंद मम भक्तानामशुभं विद्यते क्वचित् ॥ नित्यं सुदर्शनं तं च परिरक्षति

सवतः ॥२०॥ मत्ता हे वत्सवान्भक्तश्चिंतितोहं न चिंतितः ॥ अहं स्वामी च तस्यैव न मे स्वामी पिता प्रभुः॥२१॥पुत्रबुद्धिं परित्यज्य
भज मां ब्रह्मरूपिणम् ॥ छित्त्वा च अज्ञाननिगडं गोलोकं तद्व्रज स्वयम् ॥ २२ ॥ कथयस्व यशोदां च गोपीं गोपगणं व्रज ॥ तैश्च सर्वैर्जे
नैः शोकं त्यजस्व मंदिरं व्रज ॥ २३ ॥ इत्येवमुक्त्वा भगवान्विरराम च संसदि ॥ पप्रच्छ पुनरेवं तं नंदश्चानंदसंप्लुतः ॥ २४ ॥
॥ ॥ नन्द उवाच ॥ ॥ वद सांसारिकं ज्ञानं येन यास्यामि त्वत्पदम् ॥ मूढोहं परमानंद श्रुतीनां जनको भवान् ॥ २५ ॥ नंद
स्य वचनं श्रुत्वा सर्वज्ञो भगवान्स्वयम् ॥ आह्निकं कथयामास श्रुतिभिर्न श्रुतं हि यत् ॥ २६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्री
कृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे भगवन्नंदसंवादे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणु
नंद प्रवक्ष्यामि ज्ञानं च परमाद्भुतम् ॥ सुगोपनीयं वेदेषु पुराणेषु च दुर्लभम् ॥ १ ॥ न विश्वासो हि नारीषु संततं कुलटासु च ॥
मोक्षमार्गार्गलास्वेव भ्रममायासु भूमिषु ॥ २ ॥ हरिभक्तेरसाध्वीनां विरुद्धासु युतासु च ॥ बीजरूपासु नाशानां प्रमदासु व्रजेश्वर
॥ ३ ॥ नित्यं च प्रातरुत्थाय रात्रिवासो विहाय च ॥ अभीष्टदेवं हृत्पद्मे ब्रह्मरंध्रे गुरुं परम् ॥ ४ ॥ विचिंत्य मनसा प्रातःकृत्यं कृत्वा
सुनिश्चितम् ॥ स्नानं करोति सुप्राज्ञो निर्मलेषु जलेषु च ॥ ५ ॥ न संकल्पं च कुरुते भक्तः कर्मनिकृंतनः ॥ स्नात्वा हरिं स्मरेत्संध्यां
कृत्वा याति गृहं प्रति ॥ ६ ॥ प्रक्षाल्य पादौ प्रविशेन्निधाय धौतवाससी ॥ पूजयेत्परमात्मानं मामेव मुक्तिकारणम् ॥ ७ ॥ शाल
ग्रामे मणौ यंत्रे प्रतिमायां जलेपि च ॥ तथा च विप्रे गवि च गुरुष्वेव विशेषतः ॥ ८ ॥ घटेष्टदलपद्मे च पात्रे चंदननिर्मिते ॥ आवा
हनं च सर्वत्र शालग्रामे जलेन च ॥ ९ ॥ मंत्रानुरूपध्यानेन ध्यात्वा मां पूजयेद्व्रती ॥ षोडशोपचारद्रव्याणि दद्यान्मूलेन भक्तितः॥
॥ १० ॥ श्रीदामानं सुदामानं वसुदामानमेव च ॥ वीरभानुं शूरभानुं गोपान्पंच प्रपूजयेत् ॥ ११ ॥ सुनंदनंदकुमुदं पार्षदं मे सुदर्श
नम् ॥ लक्ष्मीं सरस्वतीं दुर्गां राधां गंगां वसुंधराम् ॥ १२ ॥ गुरुं च तुलसीं शंभुं कार्तिकेयं विनायकम् ॥ नवग्रहांश्च दिक्पाला
[illegible] पूजयेत्सुधीः ॥ १३ ॥ देवषट्कं च संपूज्य सर्वादौ विघ्नविघ्नतः ॥ गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम् ॥ १४ ॥

गुरो विनिर्मितान्देवान्मोक्षदान्कर्मकृत्तनान् ॥ गणेशं विघ्ननाशाय सूर्यं व्याधिविनाशिने ॥ १५ ॥ वह्निं प्राप्तिनिमित्तेन शांतौ शुद्धो भवेद्ध्रुवम् ॥ विष्णुं मोक्षनिमित्तेन ज्ञानदानाय शंकरम् ॥ १६ ॥ बुद्धिमुक्तिनिमित्तेन पार्वतीं पूजयेत्सुधीः ॥ पुष्पांजलित्रयं दत्त्वा स्वस्तोत्रं कवचं पठेत् ॥ १७ ॥ गुरुं प्रणम्य संपूज्य तत्पश्चात्प्रणमेत्सुरम् ॥ कृत्वाह्निकं च संपूज्य यथा सुखमुदीरितम् ॥ १८ ॥ समाचरेत्स्वकर्मैतद्वेदोक्तं स्वात्मशुद्धये ॥ विष्ठां न पश्येत्प्राज्ञश्च व्याधिबीजस्वरूपिणीम् ॥ १९ ॥ मूत्रं च व्याधिबीजं च परं नरककारणम् ॥ लिंगयोनिं पापदुःखव्याधिदारिद्र्यदायिनीम् ॥ २० ॥ उरोमुखं स्तनं स्त्रीणां कटाक्षं हास्यमेव च ॥ विनाशबीजं रूपं च विपदां कारणं सदा ॥ २१ ॥ दिवाभोगं च स्वस्त्रीणां स्वलोपं परिवर्जयेत् ॥ रोगाणां कारणं चैव चक्षुषोः कर्णयोस्तथा ॥ २२ ॥ एकतारं च गगनं न पश्येत्तु रुजां भयात् ॥ देवान्दृष्ट्वा हरिं स्मृत्वा सप्तधा नारदं जपेत् ॥ २३ ॥ अस्तकाले रविं चंद्रं न पश्येद्व्याधिकारणम् ॥ खंडं समुदितं चंद्रं न पश्येद्व्याधिकारणम् ॥ २४ ॥ जलस्थं च रविं चंद्रं दृष्ट्वा शोकं लभेन्नरः ॥ बंधुविविच्छेदहेतुं च न पश्येत्परमैथुनम् ॥ २५ ॥ एकत्र शयनस्थानं भोजनं च गतिं तथा ॥ न कुर्यात्पापिना सार्द्धं सर्वं नाशस्य लक्षणम् ॥ २६ ॥ आलापाद्गात्रसंस्पर्शाच्छयनाश्रयभोजनात् ॥ संचरंति ध्रुवं पापास्तैलबिंदुरिवांभसा ॥ २७ ॥ हिंस्रजंतुसमीपं च न गच्छेद्दुःखकारणम् ॥ खलेन सार्द्धं मिलनं न कुर्याच्छोककारणम् ॥२८॥ ब्राह्मणानां गवां चैव वैष्णवानां विशेषतः ॥ न कुर्याद्धिंसनं हानिं सर्वनाशस्य कारणम् ॥ २९ ॥ देवदेवलविप्राणां वैष्णवानां तथैव च ॥ वित्तं धनं च न हरेत्सर्वनाशस्य कारणम् ॥३०॥ स्वदत्तं परदत्तं वा ब्रह्मवित्तं हरेत्तु यः ॥ षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ३१ ॥ गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः ॥ श्वापदः शतजन्मानि गंडकः सप्तजन्मनि ॥ ३२ ॥ घोटकः सप्तजन्मानि कुंभीरः पंचजन्मसु ॥ पुंश्चलीनां योनिकीटं शतजन्मसु निश्चितम् ॥ ३३ ॥ ब्रह्मकीटं च तेषां च शतजन्मसु नारद ॥ गोपिका सप्तजन्मानि गर्दभः सप्तजन्मसु ॥ ३४ ॥ सप्तजन्मानि मार्जारो नकुलस्त्रिषु जन्मसु ॥ उच्चैःश्रवा जन्मशतं खरश्चापि तथैव च ॥ ३५ ॥ क्रूरसर्पश्च शार्दूलो महिषः सप्तजन्मसु ॥ भेकश्च श

तजन्मानि च्छागलः सप्तजन्मसु ॥ ३६ ॥ भल्लूकः शतजन्मानि सृगालो लक्षजन्मसु ॥ ततो जलौका भवति ब्रह्मस्वहरणाद्ध्रुवम् ॥
॥ ३७ ॥ कुंभीपाके च पच्यंते पापिनो ब्रह्मणः शतम् ॥ दक्षिणां विप्रमुदिश्य तत्कालं चेन्न दीयते ॥३८॥ एकरात्रे व्यतीते तु तद्दानं
द्विगुणं भवेत् ॥ मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम् ॥ ३९ ॥ संवत्सरे व्यतीते तु स दाता नरकं व्रजेत् ॥ दात्रा न दीयते
मूर्खो गृहीता च न याचते ॥ ४० ॥ उभौ तौ नरकं यातो दाता व्याधियुतो भवेत् ॥ विप्राणां हिंसनं कृत्वा वंशहानिं लभेद्ध्रुवम्
॥ ४१ ॥ धनं लक्ष्मीं परित्यज्य भिक्षुकश्च भवेद्व्रजन् ॥ देवं च ब्राह्मणं दृष्ट्वा न नमेद्यो लभेच्छुचम् ॥ ४२ ॥ न कुर्याद्गुरुभक्तिं यो
लभते रौरवं शुचम् ॥ या स्त्री मूढा दुराचारा स्वपतिं हरिरूपिणम् ॥ ४३ ॥ न पश्येत्तर्जनं कृत्वा कुंभीपाके व्रजेद्ध्रुवम् ॥ वाक्त
र्जनाद्भवेत्काको हिंसनात्सूकरो भवेत् ॥ ४४ ॥ सर्पो भवति कोपेन दर्पेण गर्दभो भवेत् ॥ कुक्कुरी च कुवाक्येनाप्यंधश्च विषदर्शनात्
॥ ४५ ॥ पतिव्रता च वैकुंठं पत्या सह व्रजेद्ध्रुवम् ॥ शिवं दुर्गां गणपतिं सूर्यं विप्रं च वैष्णवम् ॥ ४६ ॥ विष्णुं निंदति यो
मूढः स महारौरवं व्रजेत् ॥ पितरं मातरं पुत्रं सतीं भार्यां गुरुं तथा ॥ ४७ ॥ अनाथां भगिनीं कन्यां विनिंद्य नरकं व्रजेत् ॥ विप्र
भक्तिविहीनाश्च क्षत्रविट्शूद्रयोनिजाः ॥४८॥ हरिभक्तिविहीनाश्च पच्यंते नरके ध्रुवम् ॥ पतिभक्तिविहीनाश्च युवत्यश्च नराधमाः
॥ ४९ ॥शालग्रामजलं विष्णुप्रसादं ये च भुंजते ॥ तीर्थं पुनंति ते विप्राः शतं पुंसां वसुन्धराम् ॥५०॥ पितॄन्देवान्समभ्यर्च्य खादन्मां
सं द्विजः शुचिः ॥यो भक्षति वृथा मांसं स महारौरवं व्रजेत् ॥ ५१ ॥ मत्स्यांश्च कामतो दग्ध्वा चोपवासं वसेद्द्विजः ॥प्रायश्चित्तं ततः
कुर्याद्व्रतं चांद्रायणं चरेत् ॥ ५२ ॥ सोऽशुचिः सततं नंद हंति पुण्यं पुराकृतम् ॥कामतो ब्राह्मणो मत्स्यं भुंक्ते ज्ञो ज्ञानदुर्बलः ॥ ५३ ॥
विष्णोरुच्छिष्टभोजी यो मत्स्यं मांसं न खादति ॥ पदेपदेऽश्वमेधस्य लभते निश्चितं फलम् ॥५४॥ एकादशीं ये कुर्वंति कृष्णजन्माष्टमी
व्रतम् ॥ शतजन्मकृतात्पापान्मुच्यंते नात्र संशयः ॥५५॥ यद्बाल्ये यच्च कौमारे वार्द्धके यच्च यौवने ॥ भस्मीभूतानि कुर्वंति पातकानि कृ
तानि च ॥५६॥ एकादशीदिने भुंक्ते कृष्णजन्माष्टमीव्रते ॥ त्रैलोक्यजनितं पापं सोपि भुंक्ते न संशयः ॥ ५७ ॥ आतुरे नियमो न

स्यादपि वृद्धे च बालके ॥ भक्तस्य द्विगुणं दत्त्वा ब्राह्मणाय शुचिर्भवेत् ॥ ५८ ॥ यो भुंक्ते शिवरात्रौ च श्रीरामनवमीदिने ॥ उपावसे समर्थश्च स महारौरवं व्रजेत् ॥ ५९ ॥ कुहूपूर्णेंदुसंक्रांतिचतुर्दश्यष्टमीषु च ॥ नरश्चांडालयोनिः स्यात्स्त्रीतैलमांससेवनात् ॥ ६० ॥ मत्स्यं मांसं मसूरं च कांस्यपात्रे च भोजनम् ॥ आर्द्रकं रक्तशाकं च रवौ च परिवर्जयेत् ॥ ६१ ॥ अन्यथा नरकं याति कुंभीपाकं न संशयः ॥ रजस्वलान्नं वेश्यान्नं मदिरान्नं व्रजेश्वर ॥ ६२ ॥ यो भुंक्ते ब्राह्मणो देवाद्विट्भोजी स भवेद्ध्रुवम् ॥ यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत् ॥ ६३ ॥ स भवेदशुचिर्नित्यं भस्मांतं तस्य सूतकम् ॥ नारी वेश्या प्रतिज्ञेया चतुष्पुरुषगामिनी ॥ ६४ ॥ पाके च पितृदेवानामधिकारो न तद्भवेत् ॥ यद्रामयाजिनामन्नं शूद्रश्राद्धान्नभोजनम् ॥ ६५ ॥ भुक्त्वा च नरकं याति यावच्चंद्रदिवाकरौ ॥ शूद्राणां श्राद्धदिवसे तदन्नं भुंजते द्विजाः ॥ ६६ ॥ कुंभीपाके च पच्यंते यावद्वै ब्रह्मणः शतम् ॥ यः शूद्रेणाभ्यनुज्ञातो भुंक्ते श्राद्धदिनेन्यतः ॥ ६७ ॥ सुरापीति स विज्ञेयः सर्वधर्मबहिष्कृतः ॥ असिजीवी मषीजीवी देवलो वृषवाहकः ॥ ॥ ६८ ॥ शूद्राणां शवदाही च यो हि शूद्रापतिर्द्विजः ॥ स शूद्रवद्बहिष्कार्यस्तदन्नं विट्समं सताम् ॥ ६९ ॥ नोपतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ॥ स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ ७० ॥ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत् ॥ ७१ ॥ वाममंत्रोपासकश्च ब्राह्मणो नरकं व्रजेत् ॥ नदीगर्भे च गर्ते च वृक्षमूले जलांतिके ॥ ॥ ७२ ॥ देवांतिके सस्यभूमौ पुरीषं नोत्सृजेद्बुधः ॥ वल्मीकमूषकोत्खातां मृदमंतर्जलां तथा ॥ ७३ ॥ शौचावशिष्टां गेहाच्च नादद्याल्लेपसंभवाम् ॥ अंतःप्राणिपिपीलयां च हलोत्खातां व्रजेश्वर ॥ ७४ ॥ आलवालोत्थितां चैव सस्यक्षेत्रोत्थितां तथा ॥ वृक्षमूलोत्थितां नंद नदीगर्भोत्थितां तथा ॥ ७५ ॥ परित्यजेन्मृदस्त्वेताः सकलाः शौचसाधने ॥ कूष्मांडघातिका या स्त्री दीपनिर्वाणकः पुमान् ॥ ७६ ॥ सप्तजन्म भवेद्रोगी दरिद्रो जन्मजन्मनि ॥ प्रदीपं शिवलिंगं च शालग्रामं मणिं तथा ॥ ७७ ॥

१ राममंत्रविहीनश्च—इ० पा० ।

प्रतिमां यज्ञसूत्रं च सुवर्णं शंखमेव च ॥ हीरकं च तथा मुक्तां गोमूत्रं गोमयं घृतम् ॥ ७८ ॥ शालग्रामशिलातोयं भूमौ त्य
क्त्वा व्रजेदधः ॥ दरिद्रः कृपणः कुष्ठी वंशहीनोप्यभार्यकः ॥ ७९ ॥ भूमिहीनः प्रजाहीनो बंधुहीनश्च कुत्सितः ॥ अंधः
पुंगुर्वा खर्वश्च खंजश्चैवांगहीनकः ॥ ८० ॥ भवेत्क्रमेण पापी स ह्येतान्भूमौ त्यजेत्तु यः ॥ दिवसे संध्ययोर्निद्रां स्त्रीसंभोगं करो
ति यः ॥ ८१ ॥ सप्तजन्म भवेद्रोगी दरिद्रः सप्तजन्मसु ॥ उदिते जगतीनाथे यः कुर्याद्दंतधावनम् ॥ ८२ ॥ स पापिष्ठः कथं
ब्रूते पूजयामि जनार्दनम् ॥ मृद्भस्मगोशकृत्पिंडैस्तथा वालुकयापि वा ॥ ८३ ॥ कृत्वा लिंगं सकृत्पूज्य वसेत्कल्पशतं दिवि ॥
सहस्रपूजनात्सोपि लभते वाञ्छितं फलम् ॥ ८४ ॥ लक्षं च पूजयेद्यस्तु शिवत्वं लभते ध्रुवम् ॥ जीवन्मुक्तो भवेद्विप्रो लिंगम
भ्यर्चयेत्तु यः ॥ ८५ ॥ शिवपूजाविहीनश्च ब्राह्मणो नरकं व्रजेत् ॥ मत्पूजितं प्रियतमं शिवं निंदंति ये नराः ॥ ८६ ॥ पच्यं
ते निरये तावद्यावद्वै ब्रह्मणः शतम् ॥ पूजिते शिवलिंगे च यदि स्यात्केशवालुका ॥ ८७ ॥ स महांधो वालुकया केशेन यवनो
भवेत् ॥ क्षुद्रो दरिद्रः कृपणो व्याधिः स्यात्कुत्सिते यथा ॥ ८८ ॥ सर्वेभ्यो मानहानिः स्याज्जायते नीचयोनिषु ॥ सर्वेषु प्रिय
पात्रेषु ब्राह्मणश्च मम प्रियः ॥ ८९ ॥ ब्राह्मणाच्च प्रिया लक्ष्मीः सततं वक्षसि स्थिता ॥ ततोऽधिका प्रिया राधा प्रिया भक्तास्ततो
धिकाः ॥९०॥ ततोधिकः शंकरो मे नास्ति मे शंकरात्प्रियः ॥ महादेवमहादेवमहादेवेति वादिनः ॥९१॥ पश्चाद्यामि च संतृप्तो नामश्र
वणलोभतः ॥ मनो मे भक्तमूले च प्राणा राधात्मिका ध्रुवम् ॥ ९२ ॥ आत्मा मे शंकरस्थानं शिवः प्राणाधिकश्च यः ॥ आद्या नारा
यणी शक्तिः सृष्टिस्थित्यंतकारिणी ॥ ९३ ॥ करोमि च यथा सृष्टिं यया ब्रह्मादिदेवताः ॥ यया जयति विश्वं च यया सृष्टिः
प्रजायते ॥ ९४ ॥ यया विना जगन्नास्ति मया दत्ता शिवाय सा ॥ दया निद्रा च क्षुत्तृप्तिस्तृष्णा श्रद्धा क्षमा धृतिः ॥ ९५ ॥ तुष्टिः
पुष्टिस्तथा शांतिर्लज्जाधिदेवता हि सा ॥ वैकुंठे सा महालक्ष्मीर्गोलोके राधिका सती ॥ ९६ ॥ मर्त्ये लक्ष्मीश्च क्षीरोदे दक्षकन्या सती ॥१७७॥
च सा ॥ सा दुर्गा मेनकाकन्या दैन्यदुर्गतिनाशिनी ॥९७॥ स्वर्गलक्ष्मीश्च दुर्गा सा शक्रादीनां गृहेगृहे ॥ सा वाणी सा च सावित्री विद्या

विष्ठातृदेवता ॥ ९८ ॥ वह्नौ सादाहिकाशक्तिः प्रभाशक्तिश्च भास्करे ॥ शोभाशक्तिः पूर्णचंद्रे जले शक्तिश्च शीतता ॥ ९९ ॥ सस्यप्रसूता शक्तिश्च धारणा च धरासु सा ॥ ब्रह्मण्यशक्तिर्विप्रेषु देवशक्तिः सुरेषु सा ॥ १०० ॥ तपस्विनां तपस्या सा गृहिणां गृहदेवता ॥ मुक्तिशक्तिश्च मुक्तानामाशा सांसारिकस्य सा ॥ १ ॥ मद्भक्तानां भक्तिशक्तिर्मयि भक्तिप्रदा सदा ॥ नृपाणां राज्यलक्ष्मीश्च वणिजां लभ्यरूपिणी ॥ २ ॥ पारे संसारसिंधूनां त्रयीतत्त्वा तु तारिणी ॥ सत्सु सद्बुद्धिरूपा सा मेधाशक्तिस्वरूपिणी ॥ ३ ॥ व्याख्याशक्तिः श्रुतौ शास्त्रे दातृशक्तिश्च दातृषु ॥ क्षत्रादीनां विप्रभक्तिः पतिभक्तिः सतीषु च ॥ एवंरूपा च या शक्तिर्मया दत्ता शिवाय सा ॥ ४ ॥ एवं ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ प्रश्नं करोषि यद्यन्मां तत्सर्वं कथयामि ते ॥ १०५ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे भगवन्नंदसंवादे पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ श्रीनंद उवाच ॥ ॥ येषां च दर्शने पुण्यं पापं यस्य च दर्शने ॥ तत्सर्वं वद सर्वेश श्रोतुं कौतूहलं मम ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ ॥ सुब्राह्मणानां तीर्थानां वैष्णवानां च दर्शने ॥ देवताप्रतिमादर्शी तीर्थस्नायी भवेन्नरः ॥ २ ॥ सूर्यस्य दर्शने भक्त्या सतीनां दर्शने तथा ॥ संन्यासिनां यतीनां च तथैव ब्रह्मचारिणाम् ॥ ३ ॥ भक्त्या गवां च वह्नीनां गुरूणां च विशेषतः ॥ गजेंद्राणां च सिंहानां श्वेताश्वानां तथैव च ॥ ४ ॥ शुकानां च पिकानां च खंजनानां तथैव च ॥ हंसानां च मयूराणां चाषाणां शंखपक्षिणाम् ॥ ५ ॥ वत्सप्रयुक्तधेनूनामश्वत्थानां तथैव च ॥ पतिपुत्रवतीनां च नराणां तीर्थयायिनाम् ॥ ६ ॥ प्रदीपानां सुवर्णानां मणीनां च विशेषतः ॥ मुक्तानां हीरकाणां च माणिक्यानां महाशय ॥ ७ ॥ तुलसीशुक्लपुष्पाणां दर्शनं पापनाशनम् ॥ फलानि शुक्लधान्यानि घृतं दधि मधूनि च ॥ ८ ॥ पूर्णकुंभं च लाजांश्च राजेंद्र दर्पणं जलम् ॥ मालां च शुक्लपुष्पाणां दृष्ट्वा पुण्यंल भेन्नरः ॥ ॥ ९ ॥ गोरोचनं च कर्पूरं रजतं च सरोवरम् ॥ पुष्पोद्यानं पुष्पितं च दृष्ट्वा पुण्यं लभेन्नरः ॥ १० ॥ शुक्लपक्षस्य चंद्रं च पीयूषं चंदनं तथा ॥ कस्तूरीं कुंकुमं दृष्ट्वा नंद पुण्यं लभेन्नरः ॥ ११ ॥ पताकामक्षयवटतरुं देवोत्थितं शुभम् ॥ देवालयं देवखातं दृष्ट्वा पुण्यं

लभेन्नरः ॥ १२ ॥ देवाश्रितं देवघटं सुगंधिपवनं तथा ॥ शंखं च दुंदुभिं दृष्ट्वा सद्यः पुण्यं लभेन्नरः ॥ १३ ॥ शुक्तिं प्रवालं रजतं
स्फटिकं कुशमूलकम् ॥ गंगामृदं कुशं ताम्रं दृष्ट्वा पुण्यं० ॥ १४ ॥ पुराणपुस्तकं शुद्धं सबीजं विष्णुयंत्रकम् ॥ स्निग्धदूर्वाक्षतं रत्नं
दृष्ट्वा पु० ॥ १५ ॥ तपस्विनां सिद्धमंत्रं समुद्रं कृष्णसारकम् ॥ यज्ञं महोत्सवं दृष्ट्वा स पुण्यं लभते नरः ॥ १६ ॥ गोमूत्रं गोमयं दुग्धं
गोधूलिं गोष्ठगोष्पदम् ॥ पक्कसस्यान्वितं क्षेत्रं दृष्ट्वा पुण्यं लभेद्ध्रुवम् ॥ १७ ॥ रुचिरां पद्मिनीं श्यामां न्यग्रोधंपरिमंडलाम् ॥
सुवेषकां सुवसनां दिव्यभूषणभूषिताम् ॥ १८ ॥ वेश्यां क्षेमकरीं गंधं सुदूर्वाक्षततंडुलम् ॥ सिद्धान्नं परमान्नं च दृष्ट्वा पुण्यं लभेन्नरः ॥
॥ १९ ॥ कार्तिकीपूर्णिमायां च राधिकाप्रतिमां शुभाम् ॥ संपूज्य दृष्ट्वा नत्वा च करोति जन्मखंडनम् ॥ २० ॥ हिंगुलायां तथा
छम्याभिषे मासि सिते शुभे ॥ श्रीदुर्गाप्रतिमां दृष्ट्वा करोति जन्मखंडनम् ॥ २१ ॥ शिवरात्रौ च काश्यां च विश्वनाथस्य दर्शनम् ॥
कृत्वोपवासं पूजां च करोति जन्मखंडनम् ॥ २२ ॥ जन्माष्टमीदिने भक्तो दृष्ट्वा मां बिंदुमाधवम् ॥ प्रणम्य पूजां कृत्वा च करोति
जन्मखंडनम् ॥ २३ ॥ पौषे मासि शुक्लरात्रौ यत्र यत्र स्थले नरः ॥ पद्मायाः प्रतिमां दृष्ट्वा करोति जन्म० ॥ २४ ॥ सप्तजन्म भवे
त्तस्य पुत्रः पौत्रो धनेश्वरः ॥ उपोष्यैकादशीं स्नात्वा प्रभाते द्वादशीदिने ॥ दृष्ट्वा काश्यामन्नपूर्णां करोति ज० ॥२५॥ चैत्रे मासि चतु
र्दश्यां कामरूपेषु पुण्यदे ॥ दृष्ट्वा नत्वा भद्रकालीं करोति ज० ॥२६॥ अयोध्यायां च रामं च श्रीरामनवमीदिने ॥ संपूज्य नत्वा
दृष्ट्वा च करोति० ॥ २७ ॥ उपोष्य पुष्करे स्नात्वा किं वा बदरिकाश्रमे ॥ संपूज्य दृष्ट्वा मामेकं करोति० ॥ २८ ॥ दत्त्वा विष्णुपदे
पिंडं विष्णुं यश्च प्रपूजयेत् ॥ पितॄणां स्वात्मनश्चैव करो० ॥ २९ ॥ प्रयागे मुंडनं कृत्वा दानं च कुरुते यदि ॥ उपोष्य नैमिषारण्ये
करोति० ॥ ३० ॥ सिद्धिं कृत्वा च बदरीं भुंक्ते बदरिकाश्रमे ॥ दृष्ट्वा मत्प्रतिमां नंद करोति० ॥ ३१ ॥ दोलायमानं गोविंदं पुण्ये
वृंदावने च माम् ॥ दृष्ट्वा संपूज्य नत्वा च करोति जन्म० ॥ ३२ ॥ भद्रे दृष्ट्वा च मंचस्थं मामेव मधुसूदनम् ॥ संपूज्य नत्वा भक्तश्च
करोति० ॥ ३३ ॥ रथस्थं च जगन्नाथं यो द्रक्ष्यति कलौ नरः ॥ संपूज्य नत्वा भक्त्या च करोति० ॥ ३४ ॥ उत्तरायणसंक्रान्त्यां

परिशुद्धं च यथाभ्यस्तं च संततम् ॥ ८ ॥ व्यवस्थापारिशुद्ध्यर्थं विचारो वेदसंमतः ॥ शास्त्रार्थाचरणं चैव कर्तव्यं स्वयमेव च ॥ ९ ॥
देवाह्निकेषु नैपुण्यं वेदाचरणमीप्सितम् ॥ वेदोक्तभक्षणं चैव पवित्राचरणं सदा ॥ १० ॥ पतिव्रतानां यं धर्मं तन्निबोध व्रजेश्वर ॥
नित्यं तु भर्तर्य्यौत्सुक्यात्तत्पादोदकमीप्सितम् ॥ ११ ॥ भक्तिभावेन सततं भोक्तव्यं तदनुज्ञया ॥ व्रतं तपस्यां देवार्चां परित्यज्य
प्रयत्नतः ॥ १२ ॥ कुर्याच्चरणसेवां च स्तवनं परितोषणम् ॥ तदाज्ञारहितं कर्म न कुर्याद्धैरतः सती ॥ १३ ॥ नारायणात्परं
कांतं ध्यायते सततं सती ॥ परपुंसां मुखं चैव सुवेषपुरुषं परम् ॥ १४ ॥ यात्रामहोत्सवं नृत्यं नर्तनं गायनं व्रज ॥ परक्रीडां
च संततं न हि पश्यति सुव्रता ॥ १५ ॥ यद्भक्ष्यं स्वामिनो नित्यं तदेवमपि योषिताम् ॥ नहि त्यजेत्तु तत्संगं क्षणमेव च
सुव्रता ॥ १६ ॥ उत्तरे नोत्तरं दद्यात्स्वामिनश्च पतिव्रता ॥ न कोपं कुरुते शुद्धा ताडिता चापि कोपंतः ॥ १७ ॥ क्षुधितं
भोजयेत्कांतं दद्यात्पानं च भोजनम् ॥ न बोधयेत्तं निद्रालुं प्रेरयेन्नैव कर्मसु ॥ १८ ॥ पुत्राणां च शतगुणं स्नेहं
कुर्य्यात्पतिं सती ॥ पतिबन्धुर्गतिर्भर्ता दैवतं कुलयोषितः ॥ १९ ॥ शुभं दृष्ट्वा सुधातुल्यं कांतं पश्यति सुंदरी ॥ सस्मितं
वदनं कृत्वा भक्तिभावेन यत्नतः ॥ २० ॥ पुरुषाणां सहस्रं च सती स्त्री च समुद्धरेत् ॥ पतिः पतिव्रतानां च मुच्यते सर्व
पातकात् ॥ २१ ॥ नास्ति तेषां कर्मभोगः सतीनां व्रततेजसाम् ॥ तया सार्धं च निष्कर्मी मोदते हरिमंदिरे ॥ २२ ॥ पृथिव्यां यानि
तीर्थानि सतीपादेषु तान्यापि ॥ तेजश्च सर्वदेवानां मुनीनां च सतीषु च ॥ २३ ॥ तपस्विनां तपः सर्वं व्रतिनां यत्फलं व्रज ॥
दाने फलं यद्दातॄणां तत्सर्वं तासु संततम् ॥ २४ ॥ स्वयं नारायणः शंभुर्विधाता जगतामपि ॥ सुराः सर्वे च मुनयो भीतास्ताभ्यां
च संततम् ॥ २५ ॥ सतीनां पादरजसा सद्यः पूता वसुंधरा ॥ पतिव्रतां नमस्कृत्वा मुच्यते पातकान्नरः ॥ २६ ॥ त्रैलोक्यं भस्म
सात्कर्तुं क्षणेनैव पतिव्रता ॥ स्वतेजसा समर्था सा महापुण्यवती सदा ॥ २७ ॥ सतीनां च पतिः साधुः पुत्रो निःशंक एव च ॥
न हि तस्य भयं किंचिद्देवेभ्यश्च यमादपि ॥ २८ ॥ शतजन्मपुण्यवतां गेहे जाता पतिव्रता ॥ पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता

तथा ॥ २९ ॥ सती श्री प्रातरुत्थाय त्यक्त्वा च रात्रिवाससम् ॥ भर्तारं च नमस्कृत्य करोति स्तवनं मुदा ॥ ३० ॥ गृहकार्यं ततः कृत्वा स्नात्वा धौते च वाससी ॥ गृहीत्वा शुक्लपुष्पं च भक्तितः पूजयेत्पतिम् ॥ ३१ ॥ स्नापयित्वा सुपूतेन जलेन निर्मलेन च ॥ तस्मै दत्त्वा धौतवस्त्रं तत्पादौ क्षालयेन्मुदा ॥ ३२ ॥ आसने वासयित्वा च दत्त्वा भाले च चंदनम् ॥ सर्वांगलेपनं कृत्वा दत्त्वा माल्यं गलेऽपि च ॥ ३३ ॥ सामवेदोक्तमंत्रेण भोगद्रव्यैः सुधोपमैः ॥ संपूज्य भक्तितः कांतं स्तुत्वा च प्रणमेन्मुदा ॥ ३४ ॥ ओं नमः कांताय शांताय सर्वदेवाश्रयाय स्वाहा ॥ इत्यनेनैव मंत्रेण दत्त्वा पुष्पं च चंदनम् ॥ ३५ ॥ पाद्यार्घ्यं धूपदीपौ च वस्त्रं नैवेद्यमुत्तमम् ॥ जलं सुवासितं शुद्धं तांबूलं च सुवासितम् ॥ ३६ ॥ दत्त्वा स्तोत्रं पठेद्यद्यत्कृतं वै पाठ्यमेव च ॥ ओं नमः कांताय भर्त्रे च शिरश्चंद्रस्वरूपिणे ॥ ३७ ॥ नमः शांताय दांताय सर्वदेवाश्रयाय च ॥ नमो ब्रह्मस्वरूपाय सतीप्राणपराय च ॥ ३८ ॥ नमस्याय च पूज्याय हृदाधाराय ते नमः ॥ पंचप्राणाधिदेवाय चक्षुषस्तारकाय च ॥ ज्ञानाधाराय पत्नीनां परमानंदरूपिणे ॥ ॥ ३९ ॥ पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः ॥ पतिश्च निर्गुणाधारो ब्रह्मरूप नमोस्तु ते ॥ ४० ॥ क्षमस्व भगवन् दोषं ज्ञाना ज्ञानकृतं च यत् ॥ पत्नीबंधो दयासिंधो दासीदोषं क्षमस्व मे ॥ ४१ ॥ इदं स्तोत्रं महापुण्यं सृष्ट्यादौ पद्मया कृतम् ॥ सरस्वत्या च धरया गंगया च पुरा व्रज ॥ ४२ ॥ सावित्र्या च कृतं पूर्वं ब्रह्मणे चापि नित्यशः ॥ पार्वत्या च कृतं भक्त्या कैलासे शंकराय च ॥ ४३ ॥ मुनीनां च सुराणां च पत्नीभिश्च कृतं पुरा ॥ पतिव्रतानां सर्वासां स्तोत्रमेतच्छुभावहम् ॥ ४४ ॥ इदं स्तोत्रं महापुण्यं या शृणोति पतिव्रता ॥ नरोन्यो वापि नारी वा लभते सर्ववांछितम् ॥ ४५ ॥ अपुत्रो लभते पुत्रं निर्धनो लभते धनम् ॥ रोगी च मुच्यते रोगाद्बद्धो मुच्येत बंधनात् ॥ ४६ ॥ पतिव्रता च स्तुत्वा च तीर्थस्नानफलं लभेत् ॥ फलं च सर्वं तपसां व्रतानां च व्रजेश्वर ॥ ४७ ॥ इदं स्तुत्वा नमस्कृत्वा भुंक्ते सा तदनुज्ञया ॥ उक्तः पतिव्रताधर्मो गृहिणां श्रूयतां व्रज ॥ ४८ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे भगवन्नंदसंवादे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ श्रीभगवानुवाच ॥

॥ द्विजदेवार्चनं चैव करोति सततं गृही ॥ स्वधर्माचरणं चैव चातुर्वर्ण्यं च नित्यशः ॥ १ ॥ कुर्वंति गृहिणामाशां सर्वे देवादय स्तथा ॥ अकृत्वातिथिपूजां च गृहस्थश्च सदाऽशुचिः ॥ २ ॥ पितरः कर्मकाले चातिथिकाले च देवताः ॥ सर्वे गृहस्थमायांति निपानमिव धेनवः ॥ ३ ॥ समायाति प्रयत्नेन सायाह्ने क्षुधितोऽतिथिः ॥ पूजां कृत्वाशिषं लब्ध्वा प्रयाति गृहिणो गृहात् ॥ ४ ॥ अकृत्वातिथिपूजां च गृही भवति पातकी ॥ त्रैलोक्यजनितं पापं लभते नात्र संशयः ॥ ५ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ॥ पितरस्तस्य देवाश्च वह्नयश्च तथैव च ॥ ६ ॥ निराशाः प्रतिगच्छंति गृहिणोतिथयो गृहात् ॥ स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्राह्मणैर्गुरुतल्पगैः ॥ ७ ॥ तुल्यदोषो भवत्येव येनातिथिरनर्चितः ॥ स्वात्मनः पातकं दत्त्वा पुण्यमादाय गच्छति ॥ ८ ॥ तस्मात्कृत्वा सर्वसेवां देवादींश्च शुभाशयः ॥ पोष्याणां भरणं कृत्वा पश्चाद्भुंक्ते स धर्मवित् ॥ ९ ॥ यस्य माता गृहे नास्ति भार्या च पुंश्चली तथा ॥ अरण्यं तेन गंतव्यमरण्याद्दुःखदं गृहम् ॥ १० ॥ पतिं द्वेष्टि सदा दुष्टा विषतुल्यं च पश्यति ॥ ददाति तस्मै नाहारं भर्त्सनं कुरुते सदा ॥ ११ ॥ पूजितं मुनितुल्यं च सा च पापीयसी परम् ॥ संततं तृणवन्मत्वा न्यक्कारं कुरुते सदा ॥ १२ ॥ दुर्वाक्यवह्निना दग्धो मृततुल्यश्च जीवति ॥ यावज्जीवनपर्यंतं संप्राप्य दुष्टवंशजाम् ॥ १३ ॥ गृहिणीनां सदाचारं श्रूयतां तच्छ्रुतौ श्रुतम् ॥ गृहिणी पतिभक्ता च देवब्राह्मणपूजिता ॥ १४ ॥ सा शुद्धा प्रातरुत्थाय नमस्कृत्य पतिं सुरम् ॥ प्रांगणे मंगलं दद्याद्गोमयेन जलेन च ॥ १५ ॥ गृहकृत्यं च कृत्वा च स्नात्वागत्य गृहं सती ॥ सुरं विप्रं पतिं नत्वा पूजयेद्गृहदेवताम् ॥ १६ ॥ गृहकृत्यं सुनिर्वृत्य भोजयित्वा पतिं सती ॥ अतिथिं पूजयित्वा च स्वयं भुंक्ते सुखं सती ॥ १७ ॥ पुत्रैश्च पूजितस्तातः शिष्यैश्च पूजितो गुरुः ॥ आज्ञया कुरुते कर्म पुत्रः शिष्यश्च भृत्यवत् ॥१८॥ न प्रेरयेन् गुरुं तातं पुत्रं शिष्यश्च कर्मसु ॥ पित्रे च गुरवे नित्यं सर्वस्वं च समर्पयेत् ॥ १९ ॥ न कुर्यान्नरबुद्धिं च गुरौ पितरि संततम् ॥ कृत्वा च नरबुद्धिं च ब्रह्महत्यां लभेद्ध्रुवम् ॥२०॥ मातरं पूजयेद्भक्त्या पितुश्चाप्यधिकां तथा ॥ मातुः परं गुरुं चैव पूजयेद्भक्तियोगतः ॥ २१ ॥ पिता माता गुरुर्भार्या शिष्यः पुत्रः स

ब्राश्रमः ॥ अनाथा भगिनी कन्या नित्यं पोष्या गुरुप्रिया ॥२२॥ एवं च कथितं तात सर्वेषां धर्ममुत्तमम् ॥ स्त्रीजातिर्वास्तवी शुद्धा ताश्च सर्वाः पतिव्रताः ॥ २३ ॥ सर्वा जातिरेकविधा चादौ सृष्टा च ब्रह्मणा ॥ ताः सर्वाः प्रकृतेरंशाः पवित्राः पंडिताधिकाः ॥२४॥ केदारकन्याशापेन स हि धर्मः क्षयं गतः ॥ तदा कोपेन धात्रा च कृत्या स्त्री च विनिर्मिता ॥२५॥ कृत्या स्त्री त्रिविधा जातिर्ब्रह्मणा निर्मिता पुरा ॥ उत्तमा प्रथमा सा च मध्यमा चाधमा व्रज ॥२६॥ उत्तमा पतिभक्ता सा किंचिद्धर्मसमन्विता ॥ प्राणांतेपि न कुरुते तं जारमयशस्करम् ॥ २७ ॥ पूजयेत्सा यथा कांतं तथा देवद्विजातिथीन् ॥ व्रतानि चोपवासांश्च कुरुते सर्वपूजनम् ॥ २८ ॥ गुरुणा रक्षिता यत्नाज्जारं च न भजेद्भयात् ॥ सा कृत्रिमा मध्यमा च यथा किंचित्पतिं भजेत् ॥२९॥ स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः ॥ तेन हे नंद तासां च सतीत्वमुपजायते ॥ ३० ॥ अधमा परमा दुष्टात्यंताऽसद्वंशजा तथा ॥ अधर्मशीला दुःशीला दुर्मुखा कलहान्विता ॥ ३१ ॥ पतिं भर्त्सयते नित्यं जारं च सेवते सदा ॥ दुःखं ददाति कांताय विषतुल्यं च पश्यति ॥ ३२ ॥ जारद्वारमुपायेन हंति कांतं मनोहरम् ॥ धार्मिष्ठं च वरिष्ठं च गरिष्ठं च महीतले ॥ ३३ ॥ कामदेवसमं चापि जारं पश्यति कामतः ॥ शुभदृष्ट्या कटाक्षेण शश्वत्पापीयसी मुदा ॥ ३४ ॥ सुवेषं पुरुषं दृष्ट्वा युवानं रतिशूकरम् ॥ योनिः क्लिद्यति नारीणां कामिनीनां निरंतरम् ॥ ३५ ॥ ददाति भर्त्रे नाहारं विषोक्तिं वक्ति संततम् ॥ अधर्मं चिंतयेच्छश्वज्जारं च परमं मुदा ॥ ३६ ॥ गुरुभिर्भर्त्सिता सा च रक्षिता च शतेन च ॥ तथापि जारं कुरुते नापि साध्या नृपैरपि ॥ ३७ ॥ नास्ति तस्याः प्रियं किंचित्सर्वं कार्यवशेन च ॥ गावस्तृणमिवारण्ये प्रार्थयंति नवंनवम् ॥ ३८ ॥ विद्युदाभा जले रेखा तस्याः प्रीतिस्तथैव च ॥ अधर्मयुक्ता सततं कपटं वक्ति निश्चितम् ॥ ३९ ॥ व्रते तपसि धर्मे च न मनो गृहकर्मणि ॥ न गुरौ न च देवेषु जारे स्निग्धं च चंचलम् ॥ ४० ॥ स्त्रीजातित्रिविधानां च कथा च कथिता मया ॥ भक्तानां त्रिविधानां च लक्षणं श्रूयतामिति ॥४१॥ तृणशय्यारतो भक्तो मन्नामगुणकीर्तिषु ॥ मनो निवेशयेत्त्यक्त्वा संसारसुखकारणम् ॥४२॥ ध्यायते मत्पदाब्जं च पूजयेद्भक्तिभावतः ॥ अहैतुकीं तस्य देवाः संकल्परहितस्य च ॥४३॥

सर्वसिद्धिं न वांछंति,तेऽणिमादिकमीप्सितम् ॥ ब्रह्मत्वममरत्वं वा सुरत्वं सुखकारणम् ॥ ४४ ॥ दास्यं विना नहीच्छंति सालोक्या
दिचतुष्टयम् ॥ नैव निर्वाणमुक्तिं च सुधापानमभीप्सितम् ॥ ४५ ॥ वांछंति निश्चलां भक्तिं मदीयामतुलामपि ॥ स्त्रीपुंविभेदो ना
स्त्येव सर्वजीवेषु भिन्नता ॥ ४६ ॥ तेषां सिद्धेश्वराणां च प्रवराणां व्रजेश्वर ॥ क्षुत्पिपासादिकं निद्रालोभमोहादिकं रिपुम् ॥४७॥ त्य
क्त्वा दिवानिशं मां च ध्यायंते च दिगंबराः ॥ स मद्भक्ततमो नंद श्रूयतां मध्यमादिकम् ॥ ४८ ॥ नासक्तः कर्मसु गृही पूर्वप्राक्तन
तः शुचिः ॥ करोति सततं कर्म पूर्वकर्मनिकृंतनम् ॥ ४९ ॥ न करोत्यपरं यत्नात्संकल्परहितः स च ॥ सर्वं कृष्णस्य यत्किंचिन्नाहं
कर्ता च कर्मणः ॥ ५० ॥ कर्मणा मनसा वाचा सततं चिंतयेदिति ॥ न्यूनभक्तश्च तन्न्यूनः स च प्राकृतिकः श्रुतौ ॥ ५१ ॥ यमं
वा यमदूतं वा स्वप्नेपि न च पश्यति ॥ पुरुषाणां सहस्रं च पूर्वभक्तः समुद्धरेत् ॥ ५२ ॥ पुंसां शतं मध्यमश्च तच्चतुर्थं च प्राकृतः ॥
भक्तश्च त्रिविधस्तात कथितश्च तवाज्ञया ॥ ५३ ॥ ब्रह्मांडरचनाख्यानं श्रूयतां सावधानतः ॥ ब्रह्मांडरचनार्थं च भक्ता जानंति यत्न
तः ॥ ५४ ॥ मुनयश्च सुराः संतः किंचिज्जानंति दुःखतः ॥ जानामि विश्वं सर्वार्थं ब्रह्मानंतो महेश्वरः ॥ ५५ ॥ धर्मः सनत्कुमा
रश्च नरनारायणावृषी ॥ कपिलश्च गणेशश्च दुर्गा लक्ष्मीः सरस्वती ॥ ५६ ॥ वेदाश्च वेदमाता च सर्वज्ञा राधिका स्वयम् ॥ एते जा
नंति विश्वार्थं नान्यो जानाति कश्चन ॥ ५७ ॥ वैषम्यार्थं च सुधियः सर्वे विज्ञातुमक्षमाः ॥ नित्याकाशो यथात्मा च तथा नित्या
दिशो दश ॥ ५८ ॥ यथा नित्या च प्रकृतिस्तथैव विश्वगोलकः ॥ गोलोकश्च यथा नित्यस्तथा वैकुंठ एव च ॥ ५९ ॥ एकदा म
यि गोलोके रासे नित्यं प्रकुर्वति ॥ आविर्भूता च वामांगाद्बाला षोडशवार्षिकी ॥६०॥ श्वेतचंपकवर्णाभा शरच्चंद्रसमप्रभा ॥ अतीव
सुंदरी रामा रमणीनां परावरा॥६१॥ ईषद्धास्यप्रसन्नास्या कोमलांगी मनोहरा ॥ वह्निशुद्धांशुकाधाना रत्नाभरणभूषिता॥६२॥ यथा ज
लदपंक्तिश्च बलाकाभिर्विभूषिता ॥ सिंदूरबिंदुना चारुचंद्रचंदनबिंदुभिः ॥६३॥ कस्तूरीबिंदुभिः सार्धं सीमंताधः स्थलोज्ज्वला ॥ अमू
ल्यरत्ननिर्माणसुस्निग्धकिरणोज्ज्वला ॥६४॥ रत्नकुंडलयुग्मेन गंडस्थलसमुज्ज्वला ॥ कुंकुमालक्तकस्तूरीचारुचंदनपत्रकैः ॥६५॥ वि

चित्रैश्च सुचित्रैश्च सुकपोलस्थलोज्ज्वला ॥ खगेंद्रचंचुविजितनासामौक्तिकशोभिता ॥ ६६ ॥ गजेंद्रगंडनिर्मुक्तमुक्ताभूषणभूषिता ॥ शुक्त्या विमुक्तमुक्ताभदंतपंक्तिमनोहरा ॥६७॥ वलिताकलितातीव पक्वबिंबाधरा वरा ॥ शश्वत्पूर्णेंदुनिंदास्या पद्मनिंदितलोचना॥६८॥ कृष्णसारनिभोद्भिन्नसुचारुकज्जलोज्ज्वला॥ अमूल्यरत्ननिर्माणकेयूरकंकणोज्ज्वला ॥६९॥ मणींद्रराजिराजीभिः शंखयुग्मकरोज्ज्वला॥ रत्नांगुलीयकैरेभिरमृतांगुलिभूषिता ॥ ७० ॥ रत्नेंद्रराजराजेन क्वणन्मंजीररंजिता ॥ रत्नपाशकराजीभिः पादांगुलिविराजिता.॥ ॥ ७१ ॥ सुंदरालक्तरागेण चरणाधः स्थलोज्ज्वला ॥ गजेंद्रगामिनी रामा कामिनी वामलोचना ॥ ७२ ॥ मां ददर्श कटाक्षेण रमणी रमणोत्सुका ॥ रासे संभूय रामा सा दधार पुरतो मम ॥ ७३ ॥ तेन राधा समाख्याता पुराविद्भिः प्रपूजिता ॥ प्रहृष्टा प्रकृतिश्चास्या स्तेन प्रकृतिरीश्वरी ॥ ७४ ॥ शक्ता स्यात्सर्वकार्येषु तेन शक्तिः प्रकीर्तिता ॥ सर्वाधारा सर्वरूपा मंगलार्हा च सर्वतः ॥ ७५ ॥ सर्व मंगलदक्षा सा तेन स्यात्सर्वमंगला ॥ वैकुंठे सा महालक्ष्मीर्मूर्तिभेदे सरस्वती ॥ ७६ ॥ प्रसूय वेदान्विदिता वेदमाता च सा सदा ॥ सावित्री सा च गायत्री धात्री त्रिजगतामपि ॥ ७७ ॥ पुरा संहृत्य दुर्गं च सा दुर्गा च प्रकीर्तिता ॥ तेजसः सर्वदेवानामाविर्भूता पुरा सती ॥ ७८ ॥ तेनाद्या प्रकृतिर्ज्ञेया सर्वासुरविमर्दिनी ॥ सत्रानंदा च सानंदा दुःखदारिद्र्यनाशिनी ॥ ७९ ॥ शत्रूणां भयदात्री च भक्तानां भयहारिणी ॥ दक्षकन्या सती सा च शैलजातेति पार्वती ॥ ८० ॥ सर्वाधारस्वरूपा सा कलया सा वसुंधरा ॥ कलया तुलसी गंगा कलया सर्वयोषितः ॥ ८१ ॥ सृष्टिं करोमि च यया तात शक्त्या पुनःपुनः ॥ दृष्ट्वा तां रासमध्यस्थां मम क्रीडा तया सह ॥ ८२ ॥ बभूव सुचिरं तात यावद्वै ब्रह्मणः शतम् ॥ अत्यद्भुतं कौतुकं च महाशृंगारमीक्षितम् ॥ ८३ ॥ तयोर्द्वयोर्घर्मराशिः सुस्राव रासमंडले ॥ तस्मान्मनोहरं जज्ञे नाम्नाकारसरोवरम् ॥ ८४ ॥ पपात घमधाराधो वेगेन विश्वगोलके ॥ बभूव जलपूर्णं च ब्रह्मांडानां च गोलकम् ॥ ८५ ॥ जलपूर्णं पुरा सर्वं सृष्टिशून्यं व्रजेश्वर ॥ शृंगारांते च तस्यां च वीर्याधानं मया कृतम् ॥ ८६ ॥ दधार गर्भं सा राधा यावद्वै ब्रह्मणः शतम् ॥ सुस्राव सा तदंते च डिंभं च परमाद्भुतम् ॥ ८७ ॥ चुकोप देवी तं दृष्ट्वा रुरोद विषसाद

सा ॥ पादेन प्रेरयामास तमधो विश्वगोलके ॥ ८८ ॥ स पपात जले तात सर्वाधारो महान्विराट् ॥ दृष्ट्वापत्यं जलस्थं च मया शप्ता
च सा पुरा ॥८९॥ अनपत्यो स सा राधा मच्छापेन पुरा विभो ॥ तेन प्रभूताः क्रमतो दुर्गा लक्ष्मीः सरस्वती॥९०॥चतस्रः परिपूर्णा
स्ताः प्रसूताश्च सुनिश्चितम् ॥ देव्योऽन्याश्चापि कामिन्यस्ताः प्रसूता व्रजेश्वर ॥ ९१ ॥ कलया प्रभवो यासां कलांशांशेन वा व्रज ॥
जज्ञे महान्विराडयेन डिंभेन कलयाश्रयः ॥ ९२ ॥ अमृतांगुष्ठपीयूषं मया दत्तं पपौ च सः ॥ जले स्थावररूपश्च शेते च निजकर्म
णः ॥ ९३ ॥ उपाधानं जलं तल्पं तस्य योगबलेन च ॥ तस्य लोम्नां च कूपानि जलपूर्णानि संततम् ॥ ९४ ॥ प्रत्येकं क्रमतस्तेषु शेते
क्षुद्रविराट् पुनः ॥ सहस्रपत्रं कमलं जज्ञे क्षुद्रस्य नाभितः ॥ ९५ ॥ तत्र जज्ञे वरो ब्रह्मा तेनायं कमलोद्भवः ॥ तत्राविर्भूय सविधिश्चिं
ताग्रस्तो बभूव सः ॥ ९६ ॥ कस्मादहं क्व माता मे पिता वा क्व च बांधवः ॥ दिव्यं त्रिलक्षवर्षं च बभ्राम कमलांतरे ॥ ९७ ॥ ततो
दिव्यं पंचलक्षं सस्मार तपसा च माम् ॥ तदा मया दत्तमंत्रं जजाप कमलांतरे ॥ ९८ ॥ दिव्यसप्तवर्षलक्षं नियतं संयतः शुचिः ॥
तदा मत्तो वरं लब्ध्वा स्रष्टा सृष्टिं चकार सः ॥ ९९ ॥ मायया प्रतिब्रह्मांडे ब्रह्मविष्णुशिवात्मकाः ॥ दिक्पाला द्वादशादित्या रुद्राश्चै
कादशापि च ॥१००॥ नवग्रहाष्टौ वसवो देवाः कोटित्रयं तथा ॥ ब्राह्मणक्षत्रविट्शूद्रा यक्षगंधर्वकिन्नराः ॥ १ ॥ भूतादयो राक्षसाश्चा
प्येवं सर्वं चराचरम् ॥ विश्वेविश्वे विनिर्माणाः स्वर्गाः सप्त क्रमेण च ॥ २ ॥ सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा ॥ कांचनीभूमिसंयु
क्ता तमोयुक्तं स्थलं तथा ॥ ३ ॥ पातालाश्च तथा सप्त ब्रह्मांडमेभिरेव च ॥ विश्वेविश्वे चंद्रसूर्यौ पुण्यक्षेत्रं च भारतम् ॥ ४ ॥
तीर्थान्येतानि सर्वत्र गंगादीनि व्रजेश्वर ॥ यावंति लोमकूपानि महाविष्णोः क्रमेण च ॥ ५ ॥ विश्वान्येव हि तावंति ह्यसंख्यांता
नि च ध्रुवम् ॥ विश्वेषामूर्ध्वभागे च वैकुंठश्च निराश्रयः ॥ ६ ॥ मदिच्छया विनिर्माणा वेदाः कथितुमक्षमाः ॥ कुयोगिनामदृष्टश्चा
भक्तानां च विनिश्चितम् ॥ ७ ॥ तस्मादुपरि गोलोकः पंचाशत्कोटियोजनः ॥ वायुना धार्यमाणश्च विचित्रः परमाश्रयः ॥ ८ ॥
अतीव रम्यनिर्माणो नित्यरूपो मदिच्छया ॥ शतशृंगेण शैलेन पुण्यवृंदावनेन च ॥ ९ ॥ सुरासमंडलेनापि नद्या विरजया युतः ॥

कोटियोजनविस्तीर्णा प्रस्थेन विरजा व्रज ॥११०॥ दैर्घ्यं तस्याः शतगुणं परितः परमा शुभा ॥ अमूल्यरत्ननिकरैर्हरिमाणिक्ययोस्त
था ॥ ११ ॥ मणीनां कौस्तुभादीनामसंख्यानां मनोहरम् ॥ अमूल्यरत्ननिर्माणं तत्रापि प्रतिमंदिरम् ॥ १२ ॥ मनोहरं च प्राका
रमदृष्टं विश्वकर्मणा ॥ गोपीभिर्गोपनिकरैर्वेष्टितं कामधेनुभिः ॥ १३ ॥ कल्पवृक्षैः पारिजातैरसंख्येश्च सरोवरैः ॥ पुष्पो
द्यानैः कोटिभिश्च संवृतं रासमंडलम् ॥ १४ ॥ वेष्टितं वेष्टितैर्गोपैर्मंदिरैः शतकोटिभिः ॥ रत्नप्रदीपयुक्तैश्च पुष्पतल्पसमन्वितैः
॥ १५ ॥ सुगंधिचंदनामोदैः कस्तूरीकुंकुमान्वितैः ॥ क्रीडोपयुक्तैर्भोगैश्च तांबूलैर्वासितैर्जलैः ॥ १६ ॥ धूपैः सुरभिरम्यैश्च
माल्यैश्च रत्नदर्पणैः ॥ रक्षकै रक्षितं शश्वद्राधादासीत्रिकोटिभिः ॥ १७ ॥ अमूल्यरत्नाभरणैर्वह्निशुद्धांशुकैरपि ॥ लक्षमत्तगजेंद्राणां
वेष्टितं च बलैः क्रमात् ॥ १८ ॥ नवयौवनसंपन्नै रूपैर्निरुपमैरपि ॥ रम्यं च वर्तुलाकारं चंद्रबिंबं यथा व्रज ॥ १९ ॥ अमूल्यरत्नरचितं
दशयोजनविस्तृतम् ॥ कस्तूरीकुंकुमै रम्यैः सुगंधिचंदनार्चितम् ॥ १२० ॥ आवृतं मंगलघटं फलपल्लवसंयुतैः ॥ दधिलाजैश्च पर्णैश्च
स्निग्धदूर्वांकुरैः फलैः ॥ २१ ॥ श्रीरामकदलीस्तंभैरसंख्यैश्च मनोहरैः ॥ पट्टसूत्रनिबद्धैश्च स्निग्धश्चंदनपल्लवैः ॥ २२ ॥ चंदनास
क्तमाल्यैश्च भूषणैश्च विभूषितम् ॥ अमूल्यरत्नरचितं शतशृंगमनोहरम् ॥ २३ ॥ कोटियोजनमूर्ध्वं च दैर्घ्यं दशगुणोत्तरम् ॥ शैलप्र
स्थंपरिमितं पंचाशत्कोटियोजनम् ॥ २४ ॥ अतीव कमनीयं च वेदानिर्वचनीयकम् ॥ प्राकारमिव तस्यापि गोलोकस्य मनोह
रम् ॥ २५ ॥ परितो वेष्टितं रम्यं हीरहारसमन्वितम् ॥ तत्र वृन्दावनं रम्यं युक्तं चंदनपादपैः ॥ २६ ॥ कल्पवृक्षैश्च रम्यैश्च मंदारैः का
मधेनुभिः ॥ शोभितं शोभनाढ्यैश्च पुष्पोद्यानैर्मनोहरैः ॥ २७ ॥ क्रीडासरोवरै रम्यैः सुरम्यैरतिमंदिरैः ॥ अतीव रम्यं रहसि रासयो
ग्यस्थलान्वितम् ॥ २८ ॥ रक्षितं रक्षकै रम्यैरसंख्यैर्गोपिकागणैः ॥ परितो वर्तुलाकारं त्रिलक्षयोजनं वरम् ॥ २९ ॥ षट्पदध्वनिसं
युक्तं पुंस्कोकिलरुतान्वितम् ॥ तत्राक्षयो वटो रम्यो रहस्ये बहुविस्तृतः ॥ १३० ॥ सहस्रयोजनोर्ध्वश्च परितश्च चतुर्गुणः ॥ गोपी
नां कल्पवृक्षश्च सर्ववांछाफलप्रदः ॥ ३१ ॥ क्रीडान्वितैरावृतश्च राधादासीत्रिलक्षकैः ॥ विरजातीरनीराणां वायुना शीतलेन च ॥३२॥

पुष्पान्वितेन मंदेन पवित्रश्च सुगंधिना ॥ दासीगणैरसंख्यैश्च वृन्दावनविनोदिनी ॥ ३३ ॥ तत्र क्रीडति राधा सा मम प्राणा
धिदेवता ॥ सेयं श्रीदामशापेन वृषभानसुताधुना ॥ ३४ ॥ ब्रह्मादिदेवैः सिद्धेंद्रैर्मुनींद्रैः पूजिता व्रज ॥ सिद्धैर्गुणैर्बलैर्बुद्धया ज्ञान
योगैश्च विद्यया ॥ ३५ ॥ तात सर्वप्रकारेण वंद्या मत्सदृशी प्रिया ॥ इत्येवं कथितं नंद ब्रह्मांडानां च वर्णनम् ॥ यथोचित परिमि
तं किं भूयः श्रोतुमिच्छसि ॥ १२६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे भगवन्नंद
संवादे चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ नंद उवाच ॥ ॥ वर्णानां च चतुर्णां च भक्ष्याभक्ष्यं च सांप्रतम् ॥ विपाकं कर्मणां
चैव सर्वेषां प्राणिनामपि ॥ १ ॥ कथयस्व महाभाग कारणानां च कारणम् ॥ त्वत्तोन्यं कं च पृच्छामि नितांतं संतमीश्वरम् ॥ २ ॥
॥ ॥ श्रीभगवानुवाच ॥ भक्ष्याभक्ष्यं चतुर्णां च वर्णानां च यथोचितम् ॥ वेदोक्तं श्रूयतां तात सावधानं निशामय ॥ ३ ॥ अयः
पात्रे पयःपानं गव्यं सिद्धान्नमेव च ॥ अष्ट्रादिकं मधु गुडं नालिकेरोदकं तथा ॥ ४ ॥ फलं मूलं च यत्किंचिदभक्ष्यं मनुरब्रवीत् ॥
दग्धान्नं तत्सौवीरमभक्ष्यं ब्रह्मनिर्मितम् ॥ ५ ॥ नालिकेरोदकं कांस्ये ताम्रपात्रे स्थितं मधु ॥ गव्यं च ताम्रपात्रस्थं सर्वं मद्यं घृतं
विना ॥ ६ ॥ ताम्रपात्रे पयःपानमुच्छिष्टं घृतभोजनम् ॥ दुग्धं सलवणं चैव सद्यो गोमांसभक्षणम् ॥ ७ ॥ अभक्ष्यं मधुमिश्रं
च घृतं तैलं गुडं तथा ॥ आर्द्रकं गुणसंयुक्तमभक्ष्यं श्रुतिसंमतम् ॥ ८ ॥ पीतशेषजलं चैव माघे च मूलकं तथा ॥ जपादिकं च
शयने सदा प्राज्ञः परित्यजेत् ॥९॥ द्विर्भोजनं च दिवसे संध्ययोर्भोजनं तथा ॥ भक्ष्य च रात्रिशेषे च ध्रुवं प्राज्ञः परित्यजेत् ॥ १० ॥
पानीयं पायसं चूर्णं घृतं लवणमेव च ॥ स्वस्तिकं गुडकं चैव क्षीरं तक्रं तथा मधु ॥ ११ ॥ हस्ताद्धस्तगृहीतं च सद्यो गोमांसमेव
च ॥ कर्पूरं रौप्यपात्रस्थमभक्ष्यं श्रुतिसंमतम् ॥ १२ ॥ परिवेषणकारी चेद्गोकारं स्पृशते यदि ॥ अभक्ष्यं च तदन्नं च सर्वेषामेव
संमतम् ॥ १३ ॥ नकुलानां गंडकानां महिषाणां च पक्षिणाम् ॥ सर्पाणां सूकराणां च गर्दभानां विशेषतः ॥ १४ ॥ मार्जा
राणां सृगालानां कुक्कुटानां व्रजेश्वर ॥ व्याघ्राणामपि सिंहानां त्याज्यं मांसं नृणां सदा ॥ १५ ॥ जलौकसां च नक्राणां गो

धिकानां तथैव च ॥ मंडूकानां कर्कटीनां चुंचुकानां च निश्चितम् ॥ १६ ॥ गवां च चमरीणां च न कलौ मांसभक्षणम् ॥ हस्तिनां घोटकानां च नृणामेव च रक्षसाम् ॥ १७ ॥ दंशश्च मशकश्चैव मक्षिका च पिपीलिका ॥ अन्येषां च निषिद्धानां लोके वेदे व्रजेश्वर ॥ १८ ॥ वानराणां भल्लुकानां शरभाणां तथैव च ॥ निषिद्धं मृगनाभीनां गर्दभानां च मांसकम् ॥ १९ ॥ अभक्ष्यं महिषीणां च दुग्धं दधि घृतं तथा ॥ स्वस्तिकं च तथा तत्र विप्राणां नवनीतकम् ॥ २० ॥ मांसमुच्चैश्रवसकं तस्य दुग्धादिकं तथा ॥ वर्णानां च चतुर्णां चाप्यभक्ष्यं च श्रुतौ श्रुतम् ॥ २१ ॥ अभक्ष्यमार्द्रकं चैव सर्वेषां च रवेर्दिने ॥ पर्युषितं जलं चान्नं विप्राणां दुग्धमेव च ॥ २२ ॥ वर्णानां च चतुर्णां चाप्यवीरान्नस्य भक्षणम् ॥ तदन्नं च सुरातुल्यं गोमांसाधिकमेव च ॥ २३ ॥ अवीरान्नं च यो भुंक्ते ब्राह्मणो ज्ञानदुर्बलः ॥ पितृदेवार्चनं तस्य निष्फलं मनुरब्रवीत् ॥ २४ ॥ ब्राह्मणानां वैष्णवानामभक्ष्यं मात्स्यमेव च ॥ इतरेषामभक्ष्यं च पंचपर्वसु निश्चितम् ॥ २५ ॥ पितृदेवावशेषे च भक्ष्यं मांसं न दूषितम् ॥ पंचपर्वसु त्याज्यं च सर्वेषां मनुरब्रवीत् ॥ २६ ॥ असंस्कृतं च लवणं तैलं चाभक्ष्यमेव च ॥ भक्ष्यं पवित्रं सर्वेषां व्यंजनं वह्निसंस्कृतम् ॥ २७ ॥ एकहस्ते घृतं तोयमभक्ष्यं सर्वसंमतम् ॥ आविलं कृमियुक्तं चापरिशुद्धं च निर्मलम् ॥ २८ ॥ अभक्ष्यं ब्राह्मणानां च वैष्णवानां विशेषतः ॥ अनिवेद्यं हरेरेव यतीनां ब्रह्मचारिणाम् ॥ २९ ॥ पिपीलिकामिश्रितं च मधु गव्यं गुडं तथा ॥ यत्किंचिद्वस्तु वा तात न भक्ष्यं च श्रुतौ श्रुतम् ॥ ३० ॥ पक्षिभक्ष्यं कीटभक्ष्यं शुद्धं पक्वफलं तथा ॥ काकभक्ष्यमभक्ष्यं च सर्वेषां द्रव्यमेव च ॥ ३१ ॥ घृतपक्वं तैलपक्वं मिष्टान्नं शूद्रसंस्कृतम् ॥ अभक्ष्यं ब्राह्मणानां च शूद्रभक्ष्यं च पीठकम् ॥ ३२ ॥ सर्वेषामशुचीनां च जलमन्नं परित्यजेत् ॥ अशौचांतात्परदिने शुद्धमेव न संशयः ॥ ३३ ॥ विपाकं कर्मणामेव दुष्करं श्रुतिसंमतम् ॥ भक्ष्याभक्ष्यं च कथितं यथाज्ञानं व्रजेश्वर ॥ ३४ ॥ क्रमाच्चतुर्षु वेदेषु चोक्तं मतचतुष्टयम् ॥ सर्वेषां सारभूतं च कथयामि पितः शृणु ॥ ३५ ॥ नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ३६ ॥ तीर्थानां च सुराणां च सहाय्यो न नृणामपि ॥ किंचि

 भवति साहाय्यं कायव्यूहेन सर्वतः ॥ ३७ ॥ प्रायश्चित्तानि चीर्णानि निश्चितं मत्पराङ्मुखम् ॥ न निष्पुनंति हे तात सुराकुंभमि 
वापगाः ॥ ३८ ॥ प्रायश्चित्तेन पुण्येन न हि शुद्ध्यंति मानवाः ॥ सर्वारंभेण वैश्येंद्र दानेन योगतोपि वा ॥ ३९ ॥ शुभाशुभं च
 यत्कर्म विना भोगान्न च क्षयः ॥ भोगेन शुद्धिमाप्नोति ततो मुक्तिर्भवेन्नृणाम् ॥ ४० ॥ न नष्टं दुष्कृतं कर्म सुकृतेन च कर्मणा ॥ 
न नष्टं सुकृतं कर्म कृतेन दुष्कृतेन च ॥ ४१ ॥ यज्ञेन तपसा वापि व्रतेनानशनेन च ॥ तीर्थस्नानेन दानेन जपेन नियमेन च ॥
॥ ४२ ॥ भुवः प्रदक्षिणेनैव पुराणश्रवणेन च ॥ उपदेशेन पुण्येन पूजया गुरुदेवयोः ॥ ४३ ॥ स्वधर्माचरणेनैवातिथीनां पूजनेन
च ॥ ब्राह्मणानां पूजनेनैव भोजनेन विशेषतः ॥ ४४ ॥ यद्दत्तमपि विप्राय तत्प्राप्तं पूर्णरूपतः ॥ बीजरूपं च तद्दानं क्षेत्ररूपं च ब्राह्मणः
॥ ४५ ॥ एकेन कर्मणा तात स्वर्गं प्राप्नोति मानवः ॥ कर्मणा न हि मोक्षं च तदेव मम सेवया ॥ ४६ ॥ स्वर्गं च सुकृतेनैव नरकं
दुष्कृतेन च ॥ व्याधिर्जन्म च योनौ च कुत्सितेन ततः शुचिः ॥ ४७ ॥ गोघ्नो यो ब्राह्मणानां च कामतश्चोपपातकी ॥ दंदशूकत्व
माप्नोति गोलोमसमवर्षकम् ॥ ४८ ॥ सर्पेण भक्षितस्तेन ज्वालया गरलस्य च ॥ तृषितो व्यथितश्चैव निराहारः कृशोदरः ॥
॥ ४९ ॥ ततः कुंडात्समुत्थाय गौर्भवेल्लोमवर्षकम् ॥ ततः कुष्ठी च चांडालो वर्षलक्षं ततो नरः ॥ ५० ॥ तदा भवेद्ब्राह्मणश्च कुष्ठ
युक्तो हि कर्मणा ॥ भोजयित्वा विप्रलक्षं निर्व्याधिश्च भवेच्छुचिः ॥ ५१ ॥ अकामतस्तदर्धं च क्षत्रियस्यापि कामतः ॥ अकामत
स्तदर्धं च तदर्धं च विशस्तथा ॥ ५२ ॥ तदर्धं शूद्रगोघ्नश्च भुंक्ते पापं न संशयः ॥ प्रायश्चित्तेन शुद्धश्च भुंक्ते शेषं च कर्मणः ॥ ५३ ॥
अनुकल्पे चतुर्थं च पापं भुंक्ते न संशयः ॥ चतुर्गुणं च गोघ्नानां ब्राह्मणानां च पातकम् ॥ ५४ ॥ भुंक्ते पापं च ब्रह्मघ्नो ब्राह्मणश्चे
तरोपि वा ॥ क्रमेणानेन बोध्यं च कामतोऽकामतोपि वा ॥ ५५ ॥ प्रायश्चित्तं जन्म कर्म व्याधिरेव न संशयः ॥ गोघ्नो भवति
गौश्चापि यावद्वर्षं च निश्चितम् ॥ ५६ ॥ चतुर्गुणं च तेषां च ब्रह्मघ्नो विट्कृमिर्भवेत् ॥ ततो भवति म्लेच्छश्च तावद्वर्षचतुर्गुणम् 
॥ ५७ ॥ इतश्चांधो भवेद्विप्रः पूर्वेषां च चतुर्गुणम् ॥ ब्राह्मणानां चतुर्लक्षं भोजयित्वा शुचिर्भवेत् ॥ ५८ ॥ चक्षुष्मांश्च यशस्वी च

भवेत्सोप्यतिपातकात् ॥ स्त्रीघ्नश्चतुर्णां वर्णानां वेदे सोप्यतिपातकी ॥ ५९ ॥ कालसूत्रं च प्राप्नोति स्त्रीलोमसमवर्षकम् ॥ भक्षितः कृमिणा तत्र निराहारो व्यथायुतः ॥ ६० ॥ ततो भवति लोके च तावद्वर्षं च पातकी ॥ ततः पापी भवेत्सोपि यक्ष्मग्रस्तश्च कर्मणा ॥ ६१ ॥ वर्षाणां शतकं चैव विप्रलक्षं च भोजयेत् ॥ ततः शुद्धो ब्राह्मणश्च विद्वांस्तपसि संयतः ॥ ६२ ॥ किंचिद्भुक्ते पापशेषं स्वर्णदानाच्छुचिर्भवेत् ॥ गर्भघ्नश्च महापापी संप्राप्नोति शुनीमुखम् ॥ ६३ ॥ वर्षाणां शतकं चैव घोटकश्च भवेद्ध्रुवम् ॥ वर्षाणां शतकं चैव सूक्ष्मशस्त्रेण पीडितः ॥ ६४ ॥ ततः पापी भवेद्वैश्यो द्रव्ययुक्तो हि कर्मणा ॥ पंचाशद्वर्षपर्यंतं स्वर्णदानाद्भवेच्छुचिः ॥ ६५ ॥ ततः स्वकुलजातोपि निर्व्याधिर्ब्राह्मणः शुचिः ॥ ब्राह्मणः क्षत्रियघ्नश्च क्षत्रियो वा विना रणात् ॥ ६६ ॥ तप्तशूलं च प्राप्नोति वर्षाणां च सहस्रकम् ॥ क्वथितं तप्तलोहेन चार्तनादं करोति च ॥ ६७ ॥ ततो भवेन्मत्तगजो वर्षाणां शतकं तथा ॥ ततो रक्तविकारी च शूद्रो वर्षशतं तथा ॥ ६८ ॥ गजदानेन मुक्तश्च व्याधितश्च ततो द्विजः ॥ वैश्यघ्नश्चापि वैश्यश्च शूद्रघ्नो वैश्य एव च ॥ ६९ ॥ वैश्यघ्नश्चापि शूद्रश्च समं पापं लभेद्ध्रुवम् ॥ कृमिकुंडं च प्राप्नोति वर्षाणां शतकं तथा ॥७०॥ कृमिभिर्भक्षितो दुःखी किरातश्च भवेत्ततः ॥ वर्षाणां शतकं चैव कृमिव्याधिसमन्वितः ॥७१॥ ततो मंदाग्नियुक्तश्च ब्राह्मणो दैन्यवान्व्रज ॥ पंचाशद्वर्षपर्यंतं दुर्बलश्च कृशोदरः ॥ ७२ ॥ मुक्तिर्भवति युक्तेन तीर्थे चाश्वप्रदानतः ॥ शूद्रघ्नो ब्राह्मणश्चैव कामतोकामतोपि वा ॥ ७३ ॥ सावित्री लक्षजाप्येन तदर्धेन शुचिर्भवेत् ॥ चतुर्वर्णः कुक्कुटघ्नो ह्यविशप्तश्च शंभुना ॥७४॥ वर्षाणां शतकं चैव प्राप्नोति रौरवं नरः ॥ ततो भुंक्ते कुक्कुटश्च वर्षाणामपि षोडश ॥७५॥ ततः शुद्धो भवेद्विप्रो भक्षितः कुक्कुटेन च ॥ गंगास्नानेन दानेन स्वर्णस्यापि भवेच्छुचिः ॥७६॥ मार्जारघ्नश्चतुर्वर्णो गंगास्नानाद्भवेच्छुचिः ॥ विप्राय लवणं दत्त्वा षट्पलं च प्रमुच्यते ॥ ७७ ॥ हत्वा सर्पांश्चतुर्वर्णो मम पादेन चिह्नितान् ॥ ब्रह्महत्याचतुर्थं च पातकं च लभेद्ध्रुवम् ॥ ७८ ॥ असिपत्रं च नरकं वर्षाणां शतकं तथा ॥ प्राप्नोति यातनायुक्तो विच्छिन्नस्तीक्ष्णधारया ॥ ७९ ॥ ततो भवति सर्पश्च डुंडुभो वर्षपंचकम् ॥ नरेण ताडितो दुःखी मृत्योर्भवति पीडितः ॥८०॥ ततो भवेन्नरः पापी ज्वरयुक्तो हि दुर्बलः ॥ वर्षाणां पंचकेनैव

मृतो भवति कर्मणा ॥ ८१ ॥ ततो भवति हस्ती च घोटको वा व्रजेश्वर ॥ यावद्विंशतिवर्षं च ततः शूद्रो भवेद्ध्रुवम् ॥ ८२ ॥ अहं
कृती व्याधियुक्तो रौप्यदानेन मुच्यते ॥ ब्राह्मणानां च शतकं भोजयित्वा शुचिर्भवेत् ॥८३॥क्षुद्रजंतुवधेनैव क्षुद्रजंतुर्भवेन्नरः ॥ वर्षाणां
शतकं चैव क्षुद्रव्याधिं तरेत्ततः ॥ ८४ ॥ कृपा कार्या सता शश्वदहिंसिषु च जंतुषु ॥ हिंसायां न हि दोषश्च हिंस्राणां च व्रजेश्वर ॥
॥ ८५ ॥ अश्वत्थघ्नश्चतुर्वर्णो ब्रह्महत्याचतुर्थकम् ॥ पापं च लभते तात चासिपत्रं व्रजेद्ध्रुवम् ॥ ८६ ॥ स तीक्ष्णेनापि शस्त्रेण विच्छि
न्नश्च दिवानिशम् ॥ वर्षाणां शतकं चैव भुंक्ते परमयातनाम् ॥ ८७ ॥ ततो भवति वृक्षश्च शाल्मलिर्वर्षलक्षकम् ॥ ततो भवति शूद्रश्च
छिन्नांगो व्याधिसंयुतः ॥ ८८ ॥ यावज्जीवनपर्यंतं ततो विप्रो भवेद्ध्रुवम् ॥ व्रणव्याधिसमायुक्तो मुच्यते स्वर्णदानतः ॥ ८९ ॥ मिथ्या
साक्ष्यप्रदाता च कृतघ्नोतिकृतघ्नकः ॥ विश्वासघाती मित्रघ्नो विप्राणां धनहारकः ॥ ९० ॥ शूद्रश्राद्धान्नभोजी च शूद्राणां शवदाहकः॥
शूद्राणां सूपकश्चैव वृषवाहकपातकी ॥ ९१ ॥ धावको देवलश्चापि चैतेतिपापिनस्तथा ॥ कुंभीपाकं प्रयांत्येव वर्षाणां च सहस्र
कम् ॥ ९२ ॥ तत्रैव तप्ततैलेन संतप्तश्च दिवानिशम् ॥ भक्षितो व्याधितश्चैव सर्पाकारेण जंतुना ॥ ९३ ॥ गृध्रः कोटिसहस्राणि शत
जन्मानि शूकरः ॥ श्वापदः शतजन्मानि शूद्रो रोगी भवेत्ततः ॥ ९४ ॥ मंदाग्निज्वरसंयुक्तः पंचाशद्वर्षकं तथा ॥ सुवर्णानां शतपलं
दत्त्वा शुद्धो भवेद्ध्रुवम् ॥ ९५ ॥ चतुर्वर्णो वस्त्रहारी गव्यहारी च मानवः ॥ रौप्यमुक्तापहारी च शूद्रद्रव्यापहारकः ॥ ९६ ॥ वर्षाणां
च सहस्रं च बकजातिर्भवेद्ध्रुवम् ॥ मूत्रकुंडे च वै भुक्त्वा वर्षाणां शतकं तथा ॥ ९७ ॥ ततो भवेच्छूद्रजातिर्वर्षाणां शतकं व्रज ॥
कुष्ठव्याधिसमायुक्तो गलितश्चैव पातकी ॥ ९८ ॥ ततो भवेद्ब्राह्मणश्च कुष्ठावशेषसंयुतः ॥ स्वर्णषट्पलदानेन व्याधितो मुच्यते शुचिः
॥ ९९ ॥ कोशापहारकश्चैव फलापहारकस्तथा ॥ यक्षः पृथिव्यां संभूतो लीलाद्रव्यापहारकः ॥ १०० ॥ वर्षाणां शतकं चैव चाष
पक्षी भवेद्ध्रुवम् ॥ ततो भवेत्कृष्णवर्णः शूद्रश्च भारते भुवि ॥ १ ॥ ततो भवेद्ब्राह्मणश्चाप्यधिकांगोपि जन्मभिः ॥ पुनर्जन्मद्विजो भूत्वा
मुच्यते विप्रभोजनात् ॥ २ ॥ पक्वद्रव्यापहारी च पशुयोनिर्भवेद्ध्रुवम् ॥ यस्यांडकोशो गंधाक्तः कस्तूरी यस्य नाम च ॥ ३ ॥ सप्त

जन्ममृगो भूत्वा ततो भवति गंधकः ॥ जन्मैकं च ततः शूद्रो गलत्कुष्ठी च जन्मनि ॥४॥ ततो रोगावशेषेण संयुतो ब्राह्मणः कृशः॥ स्वर्णषट्पलदानेन मुच्यते नात्र संशयः ॥ ५ ॥ धान्यापहारी दुःखी च कृपणः सप्तजन्मसु ॥ विष्ठाकुंडं वर्षशतं संप्राप्य मुच्यते भिया ॥ ६ ॥ स्वर्णापहारी कुष्ठी च मानवः पतितो भवेत् ॥ स्वर्णदानप्रतिग्राही विट्कुंडं च प्रयाति च ॥७॥ ततो वर्षशतं भुक्त्वा पुरीषं च दिवानिशम् ॥ ततो व्याधो भवेच्छूद्रो रक्तदोषेण संयुतः ॥ ८ ॥ तज्जन्मपातकं भुक्त्वा ब्राह्मणश्च पुनर्भवेत् ॥ व्याधि शेषोपयुक्तश्च मुच्यते स्वर्णदानतः ॥ ९ ॥ अगम्यानां च गामी च पूर्वोक्तं रौरवं व्रजेत् ॥ कुंभीपाकं महाघोरं वर्षाणां चाप्यसंख्यकम् ॥ ११० ॥ ततो भवेत्पुंश्चलीनां योनीनां च कृमिस्तथा ॥ वर्षाणां च सहस्रं च विट्कृमिर्वर्षलक्षकम् ॥ ११ ॥ पशुयोनिर्भवेत्तस्मात्त स्माच्च क्षुद्रजंतवः ॥ ततो भवेन्म्लेच्छजातिस्ततःशूद्राधमस्तदा ॥ १२ ॥ ततो भवति विप्रश्च व्याधियुक्तो नपुंसकः ॥ पुनश्च ब्राह्मणो भूत्वा तीर्थपर्यटनेन च ॥ १३ ॥ क्रमेण शुद्धो भवति वंशहीनश्च पातकात् ॥ भोजयित्वा विप्रलक्षं पुत्रं च लभते शुचिः ॥ १४ ॥ मानवः क्रोधयुक्तश्च गर्दभः सप्तजन्मसु ॥ मानवः कलहाविष्टः सप्तजन्मसु वायसः ॥ १५ ॥ शालग्रामप्रतिग्राही कालसूत्रं व्रजेद्ध्रुवम् ॥ वर्षाणां शतकं चैव खंजरीटो भवेत्ततः ॥ १६ ॥ लोहचोरश्च निर्वंशो मषीचोरश्च कोकिलः ॥ शुक्रोप्यंजनचोरश्च मिष्टचोरः कृमिर्भ वेत् ॥ १७ ॥ विप्रद्वेषी गुरुद्वेषी शिरसां च कृमिर्भवेत् ॥ पुंश्चलीं कामिनीं तात भुक्त्वा च रौरवं व्रजेत् ॥ १८ ॥ ततो वृथा कृमिश्चैव वर्षाणां शतकं तथा ॥ ततोपि विधवा चैव वंध्या च सप्तजन्मसु ॥ १९ ॥ अस्पृश्या जातिहीना च छिन्ननासा भवेत्क्रमात् ॥ रक्त द्रव्यापहारी च रक्तदोषान्वितो भवेत्॥१२०॥ आचारहीनो यवनः खंजो भवति हिंसकः ॥ अदीक्षितो वंखरश्च दुष्टदर्शी च कानकः ॥ ॥ २१ ॥ अहंकारी कर्णहीनो बधिरो वेदनिंदकः ॥ वाक्यहर्ता च मूकश्च हिंसकः क्लेशहीनकः ॥ २२ ॥ मिथ्यावादी श्मश्रुहीनो दुर्वाक्यो दंतहीनकः ॥ जिह्वाहीनः सत्यहारी दुष्टोप्यंगुलिहीनकः ॥ २३ ॥ ग्रंथापहारी मूर्खश्च व्याधियुक्तो भवेद्ध्रुवम् ॥ अश्वग्राही च तच्चोरो लालामूत्रं व्रजेदिति ॥ २४ ॥ वर्षाणां च शतं स्थित्वा घोटकश्च भवेद्ध्रुवम् ॥ गजचोरो गजग्राही विट्कुंडे च सहस्रकम् ॥२५॥

स्थित्वा वर्षं भवेद्धस्ती तत्पश्चाद्वृषलो भवेत् ॥ अयज्ञे छागहंता च छागचोरप्रतिग्रही ॥ २६ ॥ पूयकुंडे वर्षशतं
स्थित्वा चांडालतां व्रजेत् ॥ छागश्च वर्षपर्यंतं तदा भवति मानवः ॥ २७ ॥ शत्रुशस्त्रेण छिन्नश्च तदा मुक्तो भवेद्द्विजः ॥ दत्तापहारी
वाग्दानं कृत्वापहरते पुनः ॥ २८ ॥ स भवेन्म्लेच्छयोनौ च भुक्त्वा च नरकं व्रजेत् ॥ एकाकी मिष्टमश्नाति कालसूत्रं व्रजेद्ध्रुवम्
॥ २९ ॥ तत्र वर्षशतं स्थित्वा प्रेतो वर्षसहस्रकम् ॥ तदा भवति जन्मैकं मक्षिका च पिपीलिका ॥ १३० ॥ जन्मैकं भ्रमरश्चैव जन्मैकं
मधुमक्षिका ॥ जन्मैकं वरलश्चैव जन्मैकं दंश एव च ॥ ३१ ॥ जन्मैकं मशकश्चैव जन्मैकं पूतिकं स्मृतम् ॥ जन्मैकं तल्पकीटश्च
तदा शूद्रो भवेद्ध्रुवम् ॥ ३२ ॥ असद्बुद्धिर्व्याधियुक्तस्तदा मुक्तो भवेद्द्विजः ॥ तैलचोरस्तैलकारो मूर्ध्निकीटस्त्रिजन्मकम् ॥ ३३ ॥
तदा भवेत्स्वर्णकारो जन्मैकं दुष्टमानसः ॥ विश्वैकलिपिकर्ता च भक्ष्यदातुर्धनं हरेत् ॥ ३४ ॥ तमःकुंडे वर्षशतं स्थित्वा स्वर्णवणि
ग्भवेत् ॥ जन्मैकं च दुराचारो जन्मैकं करणो भवेत् ॥ ३५ ॥ कायस्थेनोदरस्थेन मातुर्मांसं न खादितम् ॥ तत्र नास्ति कृपा तस्य
दंताभावेन केवलम् ॥ ३६ ॥ स्वर्णकारः स्वर्णवणिक् कायस्थश्च व्रजेश्वर ॥ नरेषु मध्ये ते धूर्ताः कृपाहीना महीतले ॥ ३७ ॥ हृदयं
क्षुरधाराभं तेषां नास्ति च सादरम् ॥ शतेषु सज्जनः कोपि कायस्थो नेतरौ च तौ ॥ ३८ ॥ सुबुद्धिः शिवयुक्तश्च शास्त्रज्ञो धर्ममा
नसः ॥ न विश्वसेत्तेषु तात स्वात्मकल्याणहेतवे ॥ ३९ ॥ सीमापहारी दुष्टश्च भूमिचोरश्च हिंसकः ॥ भूमिदानापहारी च काल
सूत्रं व्रजेद्ध्रुवम् ॥ १४० ॥ षष्टिवर्षसहस्राणि क्षुत्पिपासार्दितः स्थितः ॥ ततोपि तानि नामानि विष्ठायां जायते कृमिः ॥ ४१ ॥
ततो भवेदसच्छूद्रो जन्मैकं च ततः शुचिः ॥ तस्माज्ज्ञानैः सावधानं भवेत्प्राज्ञश्च यत्नतः ॥ ४२ ॥ रक्तवस्त्रापहारी च जन्मैकं रक्त
कीटकः ॥ ततः शूद्रश्च जन्मैकं ततो विप्रो भवेच्छुचिः ॥ ४३ ॥ त्रिसंध्यहीनो विप्रश्च प्रातःशायी च यो नरः ॥ संध्याशायी दिवा
शायी यज्ञसूत्रापहारकः ॥ ४४ ॥ अशुद्धः संध्याकारी च वेदवेदांगनिंदकः ॥ तद्विरुद्धः स्वर्गमार्गस्त्रिजन्मपतितो द्विजः ॥ ४५ ॥ यः 
शूद्रो ब्राह्मणीगामी कुंभीपाके व्रजेद्ध्रुवम् ॥ वर्षाणां च त्रिलक्षं च पच्यते तत्र पीडितः ॥ ४६ ॥ दिवानिशं प्रदग्धश्च तप्ततैले च

दारुणे ॥ ततो भवेद्योनिकीटः पुंश्चलीनां च पातकी ॥ ४७ ॥ षष्टिवर्षसहस्राणि चाहारं तस्य तन्मलम् ॥ ततो भवति चांडालो जन्मलक्षं क्रमेण च ॥ ४८ ॥ ततः शूद्रो गलत्कुष्ठी जन्मैकं च ततः शुचिः ॥ सोपि विप्रो व्याधिशेषस्तीर्थपर्यटनाच्छुचिः ॥ ४९ ॥ असच्छूद्रश्च भवति सोऽस्थानेऽसुरपूजिते ॥ दत्त्वा देवाय नैवेद्यमपवित्रं च मानवः ॥ १५० ॥ सकेशं पार्थिवं लिंगं संपूज्य यवनो भवेत् ॥ दुर्बलेन भवेदंधः कुत्सितेन च कुत्सितः ॥ ५१ ॥ अंगहीनो दरिद्रश्च व्याधियुक्तश्च मानवः ॥ अश्रद्धया च निर्माणे निर्माण सदृशं फलम् ॥ ५२ ॥ मृद्भस्मगोशकृत्पिंडैस्तथा वालुकयापि वा ॥ कृत्वा लिंगं सकृत्पूज्य वसेत्कल्पायुषं दिवि ॥ ५३ ॥ ततो भवति विप्रश्च महाप्राज्ञश्च भूमिमान् ॥ राजा भवेद्भारते च लिंगानां शतपूजनात् ॥५४॥ सहस्रपूजनात्सोपि लभते निश्चितं फलम् ॥ स्थित्वा च सुचिरं स्वर्गे राजेंद्रो भारते भवेत् ॥ ५५ ॥ अयुते च तदीशश्च लक्षे च पृथिवीश्वरः ॥ पूजने चातिभक्त्या चाप्यतिरिक्तं फलं लभेत् ॥ ५६ ॥ तीर्थस्नानेन दानेन विप्राणां भोजनेन च ॥ नारायणार्चया चैव विप्रजातिश्च कर्मणा ॥ ५७ ॥ अतिरिक्तेन तपसा पंडितो ब्राह्मणो भवेत् ॥ पंडितो ब्राह्मणश्चैव वैष्णवश्च जितेंद्रियः ॥ ५८ ॥ अनेकजन्मपुण्येन जायते भारते भुवि ॥ तस्यांघ्रिस्पर्शनेनैव सद्यः पूता वसुंधरा ॥ ५९ ॥ तीर्थाः कुर्वंति तीर्थानि जीवन्मुक्ताश्च वैष्णवाः ॥ स्वपुंसां च सहस्रं च पुनंतीति श्रुतौ श्रुतम् ॥ १६० ॥ पापेन वैद्यजन्मैव दुश्चिकित्सोपि ब्राह्मणः ॥ दुश्चिकित्सस्तथा वैद्यो व्यालग्राही त्रिजन्मसु ॥ ६१ ॥ अतिक्रूरो दुराचारो द्वेष्टा च सुरविप्रयोः ॥ स भवेत्कुटिलव्यालो वर्षाणां च सहस्रकम् ॥ ६२ ॥ पुंश्चलीलंपटानां च दूती या कामिनी व्रज ॥ कालसूत्रे वर्षशतं स्थित्वा च गोधिका भवेत् ॥ ६३ ॥ जन्मैकं गोधिका भूत्वा हरिणश्च त्रिजन्मसु ॥ जन्मैकं महिषश्चैव जन्मैकं भल्लुको भवेत् ॥ ६४ ॥ जन्मैकं गंडकश्चैव सृगालश्च त्रिजन्मसु ॥ परकीयतडागं च सुतसस्यं ददाति च ॥ ६५ ॥ स भवेन्नक्रजातिश्च कच्छपश्च त्रिजन्मसु ॥ वृथा मांसं च यो भुंक्ते मत्स्यलुब्धश्च ब्राह्मणः ॥ ६६ ॥ भुंक्ते मांसमदत्तं च स मीनश्च मृगो भवेत् ॥ वर्षाणां च सहस्रं च तात भुक्त्वा च किल्बिषम् ॥ ६७ ॥ कर्मभोगाच्छुचिर्भूत्वा स पुनर्ब्राह्मणो भवेत् ॥ एकादशीविहीनश्च

ब्राह्मणः पतितो भवेत् ॥ ६८ ॥ भक्ष्यस्य द्विगुणं दत्त्वा तेन पापेन मुच्यते ॥ मम जन्मदिने चैव यो भुंक्ते मानवोऽधमः ॥ ६९ ॥ त्रैलोक्यजनितं पापं सोपि भुंक्ते न संशयः ॥ भुक्त्वा च नरकं सर्वं पश्चाच्चांडालतां व्रजेत् ॥ १७० ॥ एवं च शिव रात्रौ च श्रीरामनवमीदिने ॥ उपवासासमर्थश्च हविष्यान्नं समाचरेत् ॥ ७१ ॥ ततोऽशक्तो दुर्बलश्च भोजयेद्ब्राह्मणानपि ॥ कृत्वा महोत्सवं पुण्यं मदीयं पातकाच्छुचिः ॥ ७२ ॥ तस्माद्यत्नेन कर्तव्यं नामसंकीर्तनं मम ॥ गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः ॥ ७३ ॥ श्वापदः शतजन्मानि भवेच्च निशि भोजनात् ॥ अदीक्षितो द्विजश्चैव शंखश्चिल्लः शुको भवेत् ॥ ७४ ॥ अनुद्राही द्विजश्चैव राजहंसो भवेद्ध्रुवम् ॥ चित्रवस्त्रापहारी च मयूरश्च त्रिजन्मसु ॥ ७५ ॥ तेजःपात्रापहारी च भवेत्कारंडवश्चिरम् ॥ सुराणां प्रतिमाचोरोप्यंधश्च सप्तजन्मसु ॥ ७६॥ दरिद्रो व्याधियुक्तश्च बधिरश्चापि कुब्जकः ॥ स्त्रीतैलमधुमांसानि रवौ वा पंचपर्वसु ॥ ७७ ॥ सेवते यो महामूढो वज्रदंष्ट्रं व्रजेद्ध्रुवम् ॥ पातकी दुःखितस्तत्र वर्षाणां च सहस्रकम् ॥ ७८ ॥ ततो भवति म्लेच्छश्च चांडालः सप्तजन्मसु ॥ व्याधियुक्तस्ततः शूद्रो ब्राह्मणश्च ततः शुचिः ॥ ७९ ॥ तस्माद्यत्नान्न भोक्तव्यं भारते धर्मभीरुणा ॥ ब्राह्मणं च सुरं दृष्ट्वा न नमेद्यो नराधमः ॥ १८० ॥ यावज्जीवनपर्यंतमशुचिर्यवनो भवेत् ॥ अभ्युत्थानं न कुरुते दृष्ट्वा चागतब्राह्मणम् ॥ ८१ ॥ स भवेद्ब्रह्मघाती च सप्तजन्मसु निश्चितम् ॥ शिवद्वेषी कुक्कुटश्च देवलः सप्तजन्मसु ॥ ८२ ॥ पितृदेवार्चनं हंति वेदोक्तं ज्ञानदुर्बलः ॥ स याति नरकं पापी वर्षाणां च सहस्रकम् ॥ ८३ ॥ ततश्च रौरवं भुक्त्वा तीर्थकाकस्त्रिजन्मसु ॥ त्रिजन्मसु शृगालश्च तीर्थे भुङ्क्ते शवं व्रज ॥ ८४ ॥ त्रिजन्मसु भवेत्सोपि तीर्थेषु शवरक्षकः ॥ शवानां करमादत्ते कर्मणा कृतपातकी ॥ ८५ ॥ नित्यं सुरार्चनं कृत्वा दांभिको ज्ञानदुर्बलः ॥ गुरुं च नार्चयेद्भक्त्या तस्मै नान्नं ददाति यः ॥ ८६ ॥ स भवेद्देवलो दुःखी देवशापेन पातकी ॥ नित्यं सुरार्चनं कृत्वा दांभिको ज्ञानदुर्बलः ॥ ८७ ॥ पूजाफलं न लभते देवद्रोही स दारुणः ॥ दीपनिर्वाणकर्ता च खद्योतः सप्तजन्मसु ॥ ८८ ॥ अतीव मत्स्यलुब्धश्चाप्यनैवेद्यं च खादति ॥ स भवेन्मत्स्यरंगश्च मार्जारः सप्तजन्मसु ॥ ८९ ॥ गोणीहर्ता कपोतश्च

मालाहर्ता विहंगमः ॥ चटको धान्यचोरश्च मांसचोरश्च कुंजरः ॥ १९० ॥ कविः प्रहर्ता विदुषां मंडूकः सप्तजन्मसु ॥ असत्कवि
र्ग्रामविप्रो नकुलः सप्तजन्मसु ॥ ९१ ॥ कुष्ठी भवेच्च जन्मैकं कृकलासस्त्रिजन्मसु ॥ जन्मैकं वरलश्चैव ततो वृक्षपिपीलिका
॥ ९२ ॥ ततः शूद्रश्च वैश्यश्च क्षत्रियो ब्राह्मणस्तथा ॥ कन्याविक्रयकारी च चतुर्वर्णो हि मानवः ॥ ९३ ॥ सद्यः प्रयाति तामि
स्रं यावच्चंद्रदिवाकरौ ॥ ततो भवति व्याधश्च मांसविक्रयकारकः ॥ ९४ ॥ ततो व्याधिर्भवेत्पश्चाद्यो यथापूर्वजन्मनि ॥ मन्नामवि
क्रयी विप्रो न हि मुक्तो भवेद्ध्रुवम् ॥ ९५ ॥ मृत्युलोके च मन्नामस्मृतिमात्रं न विद्यते ॥ पश्चाद्भवेत्स गोयोनौ जन्मैकं ज्ञानदु
र्बलः ॥ ९६ ॥ ततश्छागस्ततो मेषो महिषः सप्तजन्मसु ॥ महाचक्री च कुटिलो धर्महीनस्तु मानवः ॥ ९७ ॥ जन्मैकं तैलकारश्च
कुंभकारस्तथैव च ॥ मिथ्याकलंकवक्ता च देवब्राह्मणनिंदकः ॥ ९८ ॥ स भवेत्स्वर्णकारश्च रजकः सप्तजन्मसु ॥ ब्राह्मणक्षत्रवि
ट्शूद्राः कुत्सिताः शौचवर्जिताः ॥ ९९ ॥ जन्म तेषां म्लेच्छयोनौ वर्षाणामयुतं तथा ॥ कामतो योषितां श्रोणीस्तनास्ये यश्च पश्य
ति ॥ २०० ॥ स भवेद्दृष्टिहीनश्च परत्रापि नपुंसकः ॥ विप्रोभिचारकर्ता च हिंसको ज्ञानदुर्बलः ॥ १ ॥ यात्येवमंधतामिस्रं वर्षा
णामयुतं तथा ॥ तदा भवति देवज्ञोप्यग्रदानी च दुर्मतिः ॥ २ ॥ ततः शूद्रो भवेद्विप्रो भोगेन कर्मणस्तथा ॥ शास्त्रज्ञाता च देवज्ञो
मिथ्या वदति लोभतः ॥ ३ ॥ स भवेच्च ध्रुवं ज्येष्ठी वानरः सप्तजन्मसु ॥ अनेकजन्मतपसा भारते ब्राह्मणो भवेत् ॥ ४ ॥ सुबुद्धि
रतिधर्मिष्ठो धर्महीनश्च पातकी ॥ स्वधर्मनिरतो विप्रः परमाच्च हुताशनात् ॥ ५ ॥ पवित्रश्चातितेजस्वी तस्माद्भीताः सुराः सदा ॥
नदीषु च यथा गंगा तीर्थेषु पुष्करं यथा ॥ ६ ॥ पुरीषु च यथा काशी यथा ज्ञानिषु शंकरः ॥ शास्त्रेषु च यथा वेदा यथाश्वत्थ
श्च पादपे ॥ ७ ॥ मम पूजातपस्यासु व्रतेष्वनशनं यथा ॥ तथा जातिषु सर्वासु ब्राह्मणः श्रेष्ठ एव च ॥ ८ ॥ विप्रपादेषु तीर्थानि
पुण्यानि च व्रतानि च ॥ विप्रपादरजः शुद्धं पापव्याधिविमर्दनम् ॥ ९ ॥ शुभाशीर्वचनं तेषां सर्वकल्याणकारणम् ॥ एतत्ते
कथितं तात विपाकः कर्मणामहो ॥ २१० ॥ यथाश्रुतं यथाज्ञातं तदशेषं निशामय ॥ श्रुत्वा धर्मविपाकं च वाचकाय सुवर्णकम् ॥ ११ ॥

दद्यात्तस्मै च रौप्यं च वस्त्रं तांबूलमेव च ॥ सुवर्णशतकं दद्यात्सद्यो देही च गोकुलम् ॥ रौप्यं वस्त्रं च तांबूलं मत्प्रीत्या ब्राह्मणाय
च ॥ २१२ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे भगवन्नंदसंवादे पंचाशीतित
मोऽध्यायः ॥ ८५ ॥ ॥ नंद उवाच ॥ ॥ केदारकन्याप्रस्तावात्कथितं कर्मकीर्तनम् ॥ कृत्यास्त्रीणां प्रसंगेन तद्व्या
सेन वद प्रभो ॥ १ ॥ केदारकन्या सा का वा को वा केदारभूपतिः ॥ कस्य वंशे च तज्जन्म तन्मे व्याख्यातुमर्हसि ॥ २ ॥ ॥ श्री
भगवानुवाच ॥ ॥ पुरा तु ब्रह्मणः पुत्रो मनुः स्वायंभुवस्तथा ॥ तस्य स्त्री शतरूपा च धन्या मान्या च योषिताम् ॥ ३ ॥
प्रियव्रतोत्तानपादौ तयोः पुत्रौ बभूवतुः ॥ उत्तानपादपुत्रश्च ध्रुव एव महायशाः ॥ ४ ॥ तत्पुत्रो नंदसावर्णिः केदारश्च तदा
त्मजः ॥ सप्तद्वीपपतिः श्रीमान्केदारो वैष्णवः स्वयम् ॥ ५ ॥ तस्य रक्षानिमित्तेन तत्सभायां सुदर्शनम् ॥ गवां लक्षं नवं शुद्धं
स्वर्णशृंगं च भूषितम् ॥ ६ ॥ वह्निशुद्धानि वस्त्राणि दत्तानि वरुणेन च ॥ सुवर्णानां तथा लक्षं सर्वसस्या वसुंधरा ॥ ७ ॥
मणिरत्नं च मुक्ताश्च हीरकं परमं तथा ॥ माणिक्यमश्वरत्नानां लक्षं लक्षं च हस्तिनाम् ॥ ८ ॥ रौप्यं प्रवालं मिष्टान्नं शत
धान्याचलं वरम् ॥ नित्यं नित्यं ब्राह्मणेभ्यो ददौ च रत्नभूषणम् ॥ ९ ॥ शतलक्षं ब्राह्मणानां भोजयामास नित्यशः ॥
जलभोजनपात्राणि सुवर्णानां ददौ नृपः ॥ १० ॥ सुवर्णानां यज्ञसूत्रमंगुलीयकमुत्तमम् ॥ आसनं स्वर्णरत्नानां ब्राह्मणेभ्यो
ददौ मुदा ॥ ११ ॥ ब्राह्मणानां च लक्षं च सूपकारं नृपस्य च ॥ ब्राह्मणानां द्विलक्षं च परिवेषणकारकम् ॥ १२ ॥
घृतकुल्या मधुकुल्या दधिकुल्या मनोहराः ॥ गुडकुल्या दुग्धकुल्या नित्यं प्रार्थनमीप्सितम् ॥ १३ ॥ प्रातरारभ्य संध्यांतं
विप्राणां भोजनं तथा ॥ दुःखिनां भिक्षुकाणां च धनदानं यथोचितम् ॥ १४ ॥ फलमूलाशनो राजा वैष्णवश्च जितेंद्रियः ॥
सर्वं मदर्पणं कृत्वाऽजन्पमां च दिवानिशम् ॥ १५ ॥ एकदा सूपकारश्च तमुवाच नृपेश्वरम् ॥ विप्राणां भोजनायैव दशलक्षमुपस्थि ॥२००॥
तम् ॥ १६ ॥ भुंजते ब्राह्मणाश्चाद्य रूक्षमन्नं वद प्रभो ॥ कुर्वंतु भक्षणं ते वै विप्राः सूपादिना नृप ॥ १७ ॥ चतुर्योजनपर्यंतमधिकारो

नृपस्य च ॥ यो राजा तच्छतगुणः स एव मंडलेश्वरः ॥ १८ ॥ तत्तद्दशगुणो राजा राजेंद्रः परिकीर्तितः ॥ राजेंद्राणां पंचलक्षं नित्यं केदारसंसदि ॥ १९ ॥ अमूल्यरत्नमाणिक्यं मुक्ताहारं मणीश्वरम् ॥ गजरत्नमश्वरत्नं केदाराय करं ददौ ॥ २० ॥ कमला कलया जाता यज्ञकुंडसमुद्भवा ॥ वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ॥ २१ ॥ कामुकी कामिनीश्रेष्ठा कन्या कमललोचना ॥ कन्यास्मि ते महाराजेत्युवाच नृपतिं च सा ॥ २२ ॥ राजा संपूज्य तां भक्त्या तस्थौ पत्नीं समर्प्य च ॥ सा विज्ञाय प्रसूं तातं कृत्वा चं विनयं मुदा ॥२३॥ ययौ पुण्यवनं रम्यं तपसे यमुनांतिकम् ॥ तत्तपस्यावनं यस्मात्तस्माद्वृंदावनं स्मृतम् ॥२४॥ तपसा वरयामास मां वरं च वरंवरम् ॥ ब्रह्मा ददौ वरं तस्यै पश्चात्कृष्णं लभिष्यसि ॥ २५ ॥ सा चैकदा नदीतीरे वसंते सस्मिता सती ॥ शयाना पुष्पशय्यायां रत्नाभरणभूषिता ॥ २६ ॥ ब्रह्मा परीक्षितुं यातः साध्वीं च सुमनोहराम् ॥ ददर्श कन्या रहसि युवानं पुरुषं परम् ॥२७॥ चंदनोक्षितसर्वांगं रत्नभूषणभूषितम् ॥ सस्मितं कामुकं रम्यं रमणीनां च वांछितम् ॥ २८ ॥ यथा षोडशवर्षीयं कुमारं कनकप्रभम् ॥ कोटिकंदर्पलीलाभं पीतांबरधरं वरम् ॥ २९ ॥ शरत्पार्वणचंद्रास्यं शरत्पद्मसुलोचनम् ॥ दृष्ट्वा तं च समुत्थाय वासयामास सन्निधौ ॥ ॥ ३० ॥ पूजां चकार भक्त्या च फलं मूलं ददौ मुदा ॥ सुवासितं जलं दत्त्वा प्रणनाम मुदान्विता ॥ ३१ ॥ पूजां गृहीत्वा मुदितः सादरं तामुवाच ह ॥ विप्ररूपी च भगवान्प्रज्वलन्ब्रह्मतेजसा ॥ कामुकीनां च काम्यं च सतीनां दुष्करं व्रज ॥ ३२ ॥ ॥ धर्म उवाच ॥ ॥ भवती कस्य कन्या वा किं ते नाम मनोहरे ॥ किं करोषि रहस्येव तन्मे कथितुमर्हसि ॥ ३३ ॥ कस्य हेतोस्तपस्याते किं वा वांछसि सुन्दरि ॥ वरं वृणीष्व भद्रं ते यत्ते मनसि वांछितम् ॥ ३४ ॥ ॥ वृंदोवाच ॥ ॥ विप्र केदारकन्याहं वृंदा वृंदावने स्थिता ॥ तपः करोमि रहसि चिंतयामि हरिं पतिम् ॥ ३५ ॥ यदि दातुं समर्थोसि देहि मे वांछितं वरम् ॥ असमर्थोसि चेद्गच्छ किं ते प्रश्नेन ब्राह्मण ॥ ३६ ॥ ॥ धर्म उवाच ॥ ॥ निरीहमवितर्क्यं च परमात्मानमीश्वरम् ॥ निर्गुणं च निराकारं भक्तानुग्रहविग्रहम् ॥ ॥ ३७ ॥ कां क्षया तं पतिं कर्तुं विना लक्ष्मीं सरस्वतीम् ॥ चतुर्भुजस्य द्वे भार्ये हरे वैंकुंठशायिनः ॥ ३८ ॥ गोलोके द्विभुजस्यापि

श्रीवंशीवदनस्य च ॥ किशोरगोपवेषस्य परिपूर्णतमस्य च ॥ ३९ ॥ तस्य माया स्वयं राधा महालक्ष्मीः परात्परा ॥ ब्रह्मस्वरूपा परमा परमात्मानमीश्वरम् ॥ ४० ॥ भजते सततं शांतं सुरम्यं श्यामसुन्दरम् ॥ कोटिकंदर्पसौंदर्यनिंदितं सुकलेवरम् ॥ ४१ ॥ अमूल्यरत्नाभरणं सत्यं च नित्यविग्रहम् ॥ पीतांबरधरं रम्यं दातारं सर्वसंपदाम् ॥ ४२ ॥ श्रीकृष्णश्च द्विधारूपो द्विभुजश्च चतुर्भुजः ॥ चतुर्भुजश्च वैकुंठे गोलोके द्विभुजः स्वयम् ॥ ४३ ॥ यन्निमेषो भवेद्वृंदे ब्रह्मणः पतनेन च ॥ पंचविंशत्सहस्रेण युगेनेंद्रस्य पातनम् ॥ ॥ ४४ ॥ चतुर्दशेंद्रावच्छिन्नकालेन ब्रह्मणो दिनम् ॥ तावतीति निशा तस्य विधातुर्जगतामपि ॥ ४५ ॥ एवं त्रिंशद्दिनैर्मासं द्विषट्के मासि वर्षकम् ॥ एवं शतायुस्तस्यैव निबोध बोधतत्परम् ॥ ४६ ॥ यावज्जीवनपर्यंतं सेवंते सनकादयः ॥ कल्पानां कोटिकोटिं च तत्र साध्यश्च यो विभुः ॥ ४७ ॥ सहस्रवक्त्रः शेषश्च सेवते च जपेत्सदा ॥ दिवानिशं च यं भक्त्या कल्पकोटिशतं शतम् ॥ ४८ ॥ तत्र साध्यो हितकरो दुराराध्यः परात्परः ॥ ब्रह्मा ब्रह्मस्वरूपं तं भजेज्जन्मनि जन्मनि ॥ ४९ ॥ वक्त्रैश्चतुर्भिः सततं स्तौति नित्यं सनातनम् ॥ वेदे निर्वचनीयश्च वेदानां जनको विधिः ॥ ५० ॥ विधाता फलदाता च दाता च सर्वसंपदाम् ॥ तत्र साध्यो हि भगवान्कालकालांतकांतकः ॥ ५१ ॥ संहारकर्ता जगतां कलया रुद्ररूपतः ॥ स स्तौति पंचवक्त्रैस्तु कोन्योन्यस्यापि का कथा ॥ ५२ ॥ तत्परश्च प्रियो नास्ति वृंदे भगवतः शृणु ॥ सर्वशक्तिस्वरूपा सा दुर्गा दुर्गतिनाशिनी ॥ ५३ ॥ ब्रह्मस्वरूपा परमा मूलप्रकृतिरीश्वरी ॥ नारायणी विष्णुमाया वैष्णवी सा सनातनी ॥ ५४ ॥ यन्मायया जगद्भ्रांतमनित्ये भ्रमते सदा ॥ सा स्तौति भक्त्या यं देवं वृंदेप्यंगे दिवानिशम् ॥ ५५ ॥ स्तौति भक्त्या स्वशक्त्या च गजवक्त्रः षडाननः ॥ ध्यायते यं गणेशश्च सर्वादौ यस्य पूजनम् ॥ ५६ ॥ भगवान्सर्वदेवेशो ज्ञानिनां च गुरोर्गुरुः ॥ सिद्धेंद्रेषु च देवेंद्रे योगींद्रे ज्ञानिनां गुरौ ॥ ५७ ॥ न गणेशात्परो विद्वान्गणेशश्च सुराधिपः ॥ सरस्वती च यं स्तोतुमशक्ता परमेश्वरी ॥ ५८ ॥ दिवानिशं पादपद्मं भक्त्या पद्मा न सेवते ॥ यत्कटाक्षाज्जगत्सर्वं परिपूर्णतमं शिवम् ॥ ५९ ॥ यद्भयाद्वातिवातोयं सूर्यस्तपति यद्भयात् ॥ वर्षतींद्रो दहत्यग्निर्मृत्युश्चरति जंतुषु ॥ ६० ॥ पृथिवीसेवया यस्य सर्वाधारा वसुंधरा ॥

समुद्रा निश्चलाः शैला यस्य भीताश्च सुन्दरि ॥ ६१ ॥ तीर्थसारा च सा गंगा पवित्रा मुक्तिदायिनी ॥ जगतां पावनी देवी यस्य
पादाब्जसेवया ॥ ६२ ॥ पवित्रा तुलसी देवी स्मरणाद्यस्य सेवनात् ॥ नवग्रहाश्च दिक्पाला भीता यस्य प्रतापतः ॥ ६३ ॥ ब्रह्मां
डेषु च सर्वेषु ब्रह्मविष्णुशिवात्मकाः ॥ अन्ये ये ये सुरेशाश्च शेषाद्या मुनयस्तथा ॥ ६४ ॥ केचित्कलास्वरूपाश्चाप्यंशरूपाश्च
केचन ॥ केचित्कलांशाः कृष्णस्य केचिच्च परमात्मनः ॥ ६५ ॥ पतिमिच्छसि कल्याणि प्रकृतेः परमीश्वरम् ॥ गोलोके राधिका
साध्यो नान्येषां च कदाचन ॥ ६६ ॥ मां भजस्व महाभागे नृपाणामीश्वरं पतिम् ॥ बलवंतं च देवेभ्यो दैत्येभ्यश्च वरानने ॥ ६७ ॥
सुखानि यानि कल्याणि त्रिषु लोकेषु संति वै ॥ भुंक्ष्व तान्येव सर्वाणि मत्प्रसादान्न संशयः ॥ ६८ ॥ सप्तसागरपारे च कांचनी
रुचिरा वरे ॥ देवानां क्रीडनार्थाय विधात्रा निर्मिता पुरी ॥ ६९ ॥ तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ महेंद्रस्य प्रियवनं
पुष्पोद्यानसमन्वितम् ॥ ७० ॥ गच्छ स्वर्णमयीं लंकां नानारत्नविभूषिताम् ॥ तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७१ ॥
विस्पंदकं सुवसनं नंदकं पुष्पभद्रकम् ॥ तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७२ ॥ सुमेरुगह्वरं वापि क्षीरोदं वा मनोहरम् ॥
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७३ ॥ सत्यलोकं ब्रह्मलोकं रम्यं सद्म रहःस्थलम् ॥ तत्रैव गच्छ भद्रं ते रम रामे० ॥
॥ ७४ ॥ मलयं निलयं रम्यं महेंद्रसारनिर्मितम् ॥ सुगंधियुक्तं सततं शुद्धं चंदनवायुना ॥ ७५ ॥ मालती यूथिका रम्या केतकी
माधवी तथा ॥ चारुचंपकपुष्पाणां गंधेन सुमनोहरम् ॥ तत्रैव० ॥ ७६ ॥ पिकानां भ्रमराणां च मधुरध्वनिसंयुतम् ॥ तत्रैव०
॥ ७७ ॥ इंद्रस्य वरुणस्यैव वायोरपि यमस्य च ॥ धनेश्वरस्य वह्नेश्च धर्मस्य शशिनस्तथा ॥ ७८ ॥ सुरम्यं लोकमेतेषां मध्ये
देवि यथेच्छसि ॥ तत्रैव० ॥ ७९ ॥ रत्नद्वीपं मणिद्वीपं रम्यं चंद्रसरोवरम् ॥ तत्रैव गच्छ भद्रं ते० ॥ ८० ॥ इत्येवमुक्त्वा संभोक्तुं
गच्छंतं तं छलेन च ॥ न वास्तवपरीक्षार्थं सतीत्वं बोधितुं व्रज ॥ ८१ ॥ उवाच सा नृपसुता कोपवक्रास्यलोचना ॥ हितं सत्यं योग
युक्तं धर्मार्थं च यशस्करम् ॥ ८२ ॥ ॥ श्रीवृंदोवाच ॥ ॥ धैर्यं कुरु महाभाग श्रेष्ठो जातिषु ब्राह्मणः ॥ ब्राह्मणानां तपो मूलं सत्यं वेदव्रतं

 धृतिः॥ ८३ ॥ परस्त्रीसहसंभोगः स्वभावश्चाप्यधर्मिणाम् ॥ अधर्मेणैव हे विप्र दुष्टोऽभद्राणि पश्यति ॥ ततः सपत्ने जयति समूलस्थो 
॥२०२॥ विनश्यति ॥ ८४ ॥ पतिव्रतानां गमने बलात्कारेण निश्चितम् ॥ मातृगामी भवेत्सद्यो ब्रह्महत्याशतं भवेत् ॥ ८५ ॥ कुंभीपाके
पच्यते च यावच्चंद्रदिवाकरौ ॥ प्रदग्धस्तैलतप्तेषु न मृतः सूक्ष्मदेहतः ॥ ८६॥ ताडितो यमदूतैश्च लोहदंडेन मूर्धनि ॥ क्षणं सुखं चिरं अ० ८६
दुःखं सर्वनाशस्य कारणम् ॥ ८७ ॥ अगम्यागमनं दुःखं धर्मिष्ठो नैव वांछति ॥ क्षमस्व गच्छ भद्रं ते ब्राह्मण ज्ञानदुर्बल ॥ ८८ ॥
यथा दीपशिखां दृष्ट्वा कीटः पतति निश्चितम् ॥ मिष्टं दृष्ट्वा बडीशाग्रे लुब्धमीनो मृगो यथा ॥ ८९ ॥ यथाविषाक्तं भक्ष्यं च भुंक्ते
भोक्ता बुभुक्षितः ॥ गृह्णाति दुष्टो दुष्टं च विषकुंभं पयोमुखम् ॥ ९० ॥ तथा दृष्ट्वा परस्त्रीणां मुखपद्मं मनोहरम् ॥ विनाशबीजं मोहे
न भ्रांतो भवति लंपटः ॥ ९१ ॥ मुखं च रुचिरं स्त्रीणां श्रोणियुग्मं स्तनौ तथा ॥ कामाधारं नाशबीजमधर्मस्थलमेव च ॥ ९२ ॥
भगं नरककुंडं च लालामूत्रसमन्वितम् ॥ दुर्गंधियुक्तं पापं च यमदंडस्य कारणम् ॥ ९३ ॥ यथा लिंगं विशत्येव पापयोनौ च यो
षिताम् ॥ तथा पुमान्विशत्येव रौरवे च युगेयुगे ॥ ९४ ॥ रहस्यं चापदं दृष्ट्वा मां त्वं धर्षितुमिच्छसि ॥ अत्रैव सर्वदेवाश्च लोकपाला
श्च ब्राह्मण ॥ ९५ ॥ जाज्वल्यमानो धर्मश्च साक्षी शास्ता च कर्मणाम् ॥ यमश्च दंडकर्ता च स्थापितो हरिणा स्वयम् ॥ ९६ ॥ स्व
यं कृष्णश्च धर्मात्मा ज्ञानरूपो महेश्वरः ॥ दुर्गा बुद्धिर्मनो ब्रह्मा चेंद्रियाणि सुरास्तथा ॥ ९७ ॥ सर्वप्राणिषु तिष्ठंति साक्षिणः कर्मणां
द्विज ॥ क्व गुप्तं क्व रहस्यं वा ब्राह्मण ज्ञानदुर्बल ॥ ९८ ॥ क्षमस्व गच्छ भद्रं ते अवध्याश्च द्विजातयः ॥ शक्ताहं भस्मसात्कर्तुं
गच्छ वत्स यथासुखम् ॥ ९९ ॥ तपस्यासु मम गतमष्टोत्तरशतं युगम् ॥ नास्ति गोत्रं मत्पितुश्च न माता न पिता मम ॥ १०० ॥
सर्वांतरात्मा भगवान्कृष्णो रक्षति मां द्विज ॥ कृष्णेन स्थापितो धर्मो मां च रक्षति नित्यशः ॥ १ ॥ आदित्यश्च तथा चंद्रः पवनश्च
हुताशनः ॥ ब्रह्मा शंभुर्भगवती दुर्गा रक्षति मां सदा ॥ २ ॥ येन शुक्लीकृता हंसाः शुकाश्च हरिताः कृताः ॥ मयूराश्चित्रिता येन स मे ॥२०४॥
रक्षां करिष्यति ॥ ३ ॥ अनाथबालवृद्धानां रक्षकाः सर्वदेवताः ॥ नारीबुद्ध्या न मां धर्मस्त्यक्त्वा गच्छेद्धि सर्वदा ॥ ४ ॥ मां मातरं

परित्यज्य गच्छ वत्स यथासुखम् ॥ इत्येवमुक्त्वा देवी सा तस्थौ तत्र धरा यथा ॥ ५ ॥ आगच्छंतं च संभोक्तुं मायातं बोध
नेन च ॥ शशापेति च सा कोपाद्ब्रह्मबंधो क्षयो भव ॥ ६ ॥ क्षयो भव दुराचार हे पापिष्ठ क्षयो भव ॥ पुनः शप्तं स्वयं सूर्यो
वारयामास यत्नतः ॥ ७ ॥ एतस्मिन्नंतरे तात तत्रैव जगदीश्वराः ॥ आजग्मुरतिसंत्रस्ता ब्रह्मविष्णुशिवादयः ॥ ८ ॥ धर्मं
दृष्ट्वा कलारूपं रुरुदुस्त्रिदशेश्वराः ॥ कृत्वा क्रोडेतीव कृशं कुह्वा भीतं यथा विधुम् ॥ निश्चेष्टं मलिनं दग्धं सतीकोपाग्निना
व्रज ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ क्षमस्व वृन्दे मद्भक्ते जन्ममृत्युजराहरे ॥ धर्मं जीवय मद्भक्तं रक्ष धर्मं पतिव्रते ॥
॥ ११० ॥ ॥ ब्रह्मोवाच ॥ ॥ ध्वांतपूर्णं जगत्सर्वं विना धर्मं बभूव ह ॥ कंपितौ चंद्रसूर्यौ च शेषश्चापि वसुंधरा ॥ ११ ॥
॥ ॥ महादेव उवाच ॥ ॥ प्रनष्टं च जगत्सर्वं विना धर्मेण सुन्दरि ॥ धर्मं जीवय भद्रं ते स्वस्ति तेस्तु वरानने
॥ १२ ॥ ॥ सूर्य उवाच ॥ ॥ वरं वृणीष्व भद्रं ते यत्ते मनसि वांछितम् ॥ धर्मं जीवय भद्रं ते रक्ष सृष्टिं पतिव्रते ॥ १३ ॥
॥ ॥ अनंत उवाच ॥ ॥ धर्मं करोषि तपसा कथं धर्मं विहंसि च ॥ धर्मं जीवय भद्रं ते सर्वधर्मो भवेत्तव ॥ १४ ॥ ॥ चंद्र
उवाच ॥ ॥ द्विजरूपधरो धर्मस्त्वां परीक्षितुमागतः ॥ ब्रह्मणा प्रेरितश्चैव निर्दोषश्च विहिंसितः ॥ १५ ॥ ॥ महेंद्र उवाच ॥ ॥
तपसोपार्जितो धर्मो धर्मेण च फलं नृणाम् ॥ कथं फलं च तपसां यदि धर्मः क्षयं गतः ॥ १६ ॥ ॥ वरुण उवाच ॥ ॥ धर्मं
जीवय धर्मिष्ठे धर्मं रक्ष सनातनम् ॥ निष्फलं कर्मिणां कर्म विना धर्मेण धार्मिके ॥ १७ ॥ ॥ पवन उवाच ॥ ॥ जगत्पूतं
कुरु शुभे धर्मं जीवय सांप्रतम् ॥ धर्मे प्रनष्टे तपसां तवापूर्वं विनंक्ष्यति ॥ १८ ॥ ॥ वह्निरुवाच ॥ ॥ स्वधर्मोपार्जनं कर्तुमाग
तासि च भारतम् ॥ विहंसि धर्ममज्ञात्वा पुनर्जीवय सुंदरि ॥ १९ ॥ ॥ यम उवाच ॥ ॥ वेदोक्तकर्मकर्तॄणामहं विश्वेश्वरा
नने ॥ धर्मानुसारात्फलदो धर्मं जीवय सत्वरम् ॥ १२० ॥ देवानां वचनं श्रुत्वा समुत्थाय पतिव्रता ॥ नमस्कृत्य सुरेशांश्च तानुवा
च तपस्विनी ॥ २१ ॥ ॥ वृन्दोवाच ॥ ॥ अहं देव न जानामि धर्मं ब्राह्मणरूपिणम् ॥ कृतः क्षयो मया कोपान्मां परीक्षि

तुमागतः ॥ २२ ॥ जीवयामि ध्रुवं धर्मं युष्माकं च प्रसादतः ॥ इत्येवमुक्त्वा सा वृन्दा चेत्युवाच व्रजेश्वर ॥ २३ ॥ तपः सत्यं
यदि मम सत्यं च विष्णुपूजनम् ॥ तेन पुण्येन सद्योत्र द्विजो भवतु विज्वरः ॥ २४ ॥ यदि मे च भवेत्सत्यं व्रतं सत्यं तपः शुचि ॥
तेन पुण्येन सत्येन द्विजो भवतु विज्वरः ॥ २५ ॥ यदि नारायणः सत्यः सर्वात्मा नित्यविग्रहः ॥ ज्ञानात्मकः शिवः सत्यो द्विजो
भवतु विज्वरः ॥ २६ ॥ ब्रह्म सत्यं च ते देवाः प्रकृतिः परमा यदि ॥ यज्ञः सत्यस्तपः सत्यं द्विजो भवतु विज्वरः ॥ २७ ॥ इत्येव
मुक्त्वा सा वृंदा धर्मं क्रोडे चकार च ॥ तं दृष्ट्वा च कलारूपं रुरोद कृपया सती ॥ २८ ॥ एतस्मिन्नंतरे मूर्तिधर्मभार्या शुचा
कुला ॥ निपत्य विष्णुपादे च शिरसा चेत्युवाच सा ॥ २९ ॥ ॥ मूर्तिरुवाच ॥ ॥ हे नाथ करुणासिंधो दीनबंधो कृपां कुरु ॥
तूर्णं जीवय कांतं मे जगन्नाथ कृपामय ॥ १३० ॥ पतिहीना च या नारी पापिनी सा भवार्णवे ॥ यथास्यं चक्षुर्विरतं प्राणहीना
यथा तनूः ॥ ३१ ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः ॥ मितं बंधुर्मितं माता सर्वदाता पतिः प्रभुः ॥ ३२ ॥ इत्येवमु
क्त्वा सा देवी तत्र तस्थौ रुरोद च ॥ उवाच वृन्दां भगवान्सर्वात्मा प्रकृतेः परः ॥ ३३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ त्वयाऽऽयु
स्तपसा लब्धं यावदायुश्च ब्रह्मणः ॥ तदेव देहि धर्माय गोलोकं गच्छ सुंदरि ॥ ३४ ॥ तन्वानया च तपसा पश्चान्मां च लभिष्यसि ॥
पश्चाद्गोलोकमागत्य वाराहे च वरानने ॥ वृषभानसुता त्वं च राधाच्छाया भविष्यसि ॥ ३५ ॥ मत्कलांशश्च रापाणस्त्वां विवाहे ग्रही
ष्यति ॥ मां लभिष्यसि रासे च गोपीभी राधया सह ॥ ३६ ॥ राधा श्रीदामशापेन वृषभानसुता यदा ॥ सा चैव वास्तवी राधा त्वं
च छायास्वरूपिणी ॥ ३७ ॥ विवाहकाले रापाणस्त्वां च छायां ग्रहीष्यति ॥ त्वां दत्त्वा वास्तवी राधा सांतर्धाना भविष्यति ॥
॥ ३८ ॥ राधैवेति विमूढाश्च विज्ञास्यंति च गोकुले ॥ स्वप्ने राधापदांभोजं न हि पश्यंति बल्लवाः ॥ ३९ ॥ स्वयं राधा मम क्रोडे
छाया रापाणकामिनी ॥ विष्णोश्च वचनं श्रुत्वा ददावायुश्च सुंदरी ॥ १४० ॥ उत्तस्थौ पूर्णधर्मश्च तप्तकांचनसन्निभः ॥ पूर्वस्मात्सुन्दरः
श्रीमान्प्रणनाम परात्परम् ॥ ४१ ॥ ॥ वृन्दोवाच ॥ ॥ देवाः शृणुत मद्वाक्यं दुर्लंघ्यं सावधानतः ॥ न हि मिथ्या भवेद्वाक्यं

मदीयं च निशामय ॥ ४२ ॥ क्षयो भवेति वाक्यं च मयोक्तं कोपभीतया ॥ वारत्रयं पुनर्वक्तुं वारयामास भास्करः ॥ ४३ ॥ सत्ये च परिपूर्णोयं यथा पूर्वो यथाधुना ॥ त्रिपादश्चापि त्रेतायां द्विपादो द्वापरे तथा ॥ ४४ ॥ एकपादश्च धर्मोयं कलेश्च प्रथमे हरे ॥ शेषः कलाषोडशांशः पुनः सत्ये यथा पुरा ॥ ४५ ॥ त्रिर्निर्गतं मम मुखात्क्षयस्तेन ततः क्रमात् ॥ पुनरुक्ते च मनसि वारयामास भास्करः ॥ ४६ ॥ तेनैव हेतुनायं च कलिशेषे कलामयः ॥ तथा शप्तः स्थितो दुर्गे कलिशेषे तथा ध्रुवम् ॥ ४७ ॥ एतस्मिन्नंतरे नंद ददृशुर्देवता रथम् ॥ गोलोकादागतं वेगादतीव सुन्दरं शुभम् ॥ ४८ ॥ अमूल्यरत्ननिर्माणहीरहारपरिष्कृतम् ॥ मणिमाणिक्य मुक्ताभिर्वस्त्रैश्च श्वेतचामरैः ॥ ४९ ॥ विभूषितं भूषणैश्च रुचिरै रत्नदर्पणैः ॥ नत्वा हरिं हरं वृन्दा ब्रह्माणं सर्वदेवताः ॥ १५० ॥ समारुह्य रथं दृष्ट्वा गोलोकं च जगाम सा ॥ देवा जग्मुश्च स्वस्थानं किं भूयः श्रोतुमिच्छसि ॥१५१॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे भगवन्नंदसंवादे षडशीतितमोऽध्यायः ॥८६॥ ॥ नंद उवाच॥ ॥ त्वां ज्ञातुं नहि शक्ताश्च वेदा वेदप्रभुं स्वयम् ॥ सुरा ब्रह्मेशशेषाद्या मुनिसिद्धादयस्तथा ॥ १ ॥ को भवानिति विज्ञातुं परं कौतूहलं मम ॥ तत्सर्वं स्वात्मयाथार्थ्यं निर्जने कथय प्रभो ॥ २ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एतस्मिन्नंतरे तत्र कृष्णं द्रष्टुं मुनीश्वराः ॥ आजग्मुः सहसा वत्स ज्वलंतो ब्रह्मतेजसा ॥ ३ ॥ पुलहश्च पुलस्त्यश्च क्रतुश्च भृगुरंगिराः ॥ प्रचेताश्च वसिष्ठश्च दुर्वासाः कण्व एव च ॥ ४ ॥ कात्यायनः पाणिनिश्च कणादो गौतमस्तथा ॥ सनकश्च सनंदश्च तृतीयश्च सनातनः ॥ ५ ॥ कपिलश्चासुरिश्चैव वायुः पंचशिखस्तथा ॥ विश्वामित्रो वाल्मीकिश्च कश्यपश्च पराशरः ॥ ६ ॥ विभांडको मरीचिश्च शुक्रोत्रिश्च बृहस्पतिः ॥ गार्ग्यश्चापि तथा वात्स्यो व्यासश्च जैमिनिस्तथा ॥ ७ ॥ मितवागृष्यशृंगश्च याज्ञवल्क्यः शुकस्तथा ॥ सौभरिः शुद्धजटिलो भरद्वाजः सुभद्रकः ॥८॥ मार्कंडेयो लोमशश्च आसुरिश्च विटंकणः ॥ अष्टावक्रः शतानंदो वामदेवश्च भागुरिः ॥ ९ ॥ संवर्तश्चाप्युतथ्यश्च नरोहं चापि नारदः ॥ जाबालिः पर्शुरामश्चाप्यगस्त्यः पैल एव च ॥ १० ॥ युवामन्युर्गौरमुखोप्युपमन्युः श्रुतश्रवाः ॥ मैत्रेयश्च्यवनश्चैव वररुच्यर्षिरेव च ॥ ११ ॥ तान्दृष्ट्वा सहसोत्थाय नमस्कृत्य पुटांजलिः ॥

सिंहासनेषु रम्येषु वासयामास सादरम् ॥ १२ ॥ पूजयामास विधिवत्कुशलप्रश्नपूर्वकम् ॥ परस्परं च संभाष्य मध्ये कृष्ण उवास
सः ॥ १३ ॥ एतस्मिन्नंतरे कृष्णस्तेजोराशिं ददर्श सः ॥ ददृशुस्ते च मुनयोप्याकाशे च समुज्ज्वलम् ॥ १४ ॥ तेजसोभ्यंतरे वत्स
कुमारं कनकप्रभम् ॥ यथैवं पंचवर्षीयं नग्नं बालकमीप्सितम् ॥ १५ ॥ आविर्बभूव सहसा सभामध्ये च नारद ॥ उत्तिष्ठमानं सहसा
तद्दृष्ट्वा मुनिपुंगवाः ॥ १६ ॥ प्रणेमुर्मुनयः सर्वे शौरिश्च प्रणनाम तम् ॥ सस्मितं स्निग्धनेत्रं च कृत्वा युक्तिं च सादरम् ॥ १७ ॥
स सर्वानाशिषं कृत्वा समुवास च संसदि ॥ उवाच तांश्च शौरिं च भगवंतं सनातनम् ॥ १८ ॥ ॥ सनत्कुमार उवाच ॥ ॥
भद्रं वो मुनयः शश्वत्तपसां फलमीप्सितम् ॥ कृष्णस्य कुशलप्रश्नं शिवबीजस्य निष्फलम् ॥ १९ ॥ सांप्रतं कुशलं वश्च दर्शनं पर
मात्मनः ॥ भक्तानुरोधाद्देहस्य परस्य प्रकृतेरपि ॥ २० ॥ निर्गुणस्य निरीहस्य सर्वबीजस्य तेजसा ॥ भारावतरणायैव चाविर्भूतः
स्य सांप्रतम् ॥ २१ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शरीरधारिणश्चापि कुशलप्रश्नमीप्सितम् ॥ तत्कथं कुशलप्रश्नं मयि विप्र न
विद्यते ॥ २२ ॥ ॥ सनत्कुमार उवाच ॥ ॥ शरीरे प्राकृते नाथ संततं च शुभावहम् ॥ नित्यदेहे क्षेमबीजे शिवप्रश्नमनर्थकम्
॥ २३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ योयो विग्रहकारी च स च प्राकृतिकः स्मृतः ॥ देहो न विद्यते विप्र तां नित्यां प्रकृतिं
विना ॥ २४ ॥ ॥ सनत्कुमार उवाच ॥ ॥ रक्तबिंदूद्भवा देहास्ते च प्राकृतिकाः स्मृताः ॥ कथं प्रकृतिनाथस्य बीजस्य प्राकृतं
वपुः ॥ २५ ॥ सर्वबीजस्य सर्वादिर्भवांश्च भगवान्स्वयम् ॥ सर्वेषामवताराणां प्रधानं बीजमव्ययम् ॥ २६ ॥ कृत्वा वदंति वेदाश्च
नित्यं नित्यं सनातनम् ॥ ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम् ॥ २७ ॥ मायया सगुणं चैव मायेशं निर्गुणं परम् ॥ प्रवदंति
च वेदांगास्तथा वेदविदः प्रभो ॥ २८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सांप्रतं वासुदेवोहं रक्तवीर्याश्रितं वपुः ॥ कथं न प्राकृतो विप्र
शिवप्रश्नमभीप्सितम् ॥ २९ ॥ ॥ सनत्कुमार उवाच ॥ ॥ वासुः सर्वनिवासश्च विश्वानि यस्य लोमसु ॥ तस्य देहः परं ब्रह्म
वासुदेव इतीरितः ॥ ३० ॥ वासुदेवेति तन्नाम वेदेषु च चतुर्षु च ॥ पुराणेष्वितिहासेषु यात्रादिषु च दृश्यते ॥ ३१ ॥ रक्तवीर्याश्रितो

देहः कृते वेदे निरूपितः ॥ साक्षिणो मुनयश्चैव धर्मः सर्वत्र एव च ॥ साक्षिणो मम वेदाश्च रविचंद्रौ च सांप्रतम् ॥ ३२ ॥ ॥ भृगु
रुवाच ॥ ॥ सत्यं वदसि विप्रेंद्र त्वमेव वैष्णवाग्रणीः ॥ स्वागतं कुशलं शश्वत्किंनिमित्तमिहागतः ॥३३॥ ॥ सनत्कुमार उवाच ॥ ॥
श्रूयतां मुनयः सर्वे श्रूयतां कृष्ण सांप्रतम् ॥ अहो येन निमित्तेन चातिशीघ्रमिहागतः ॥ ३४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥
भगवन्सर्वधर्मज्ञ किंनिमित्तमिहागतः ॥ सर्वं जानासि सर्वज्ञ त्वमेव विदुषां वर ॥ ३५ ॥ ॥ सनत्कुमार उवाच ॥ ॥ धन्योसि
भगवञ्छश्वन्मान्योसि जगतामपि ॥ सर्वेश्वरेश्वरोसि त्वं त्वत्परो नास्ति विश्वतः ॥ ३६ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥
यज्ञानां च व्रतानां च तपस्यानां द्विजेश्वर ॥ सततं फलदाताहं दक्षिणाभिः सहेति च ॥३७॥ इति श्रुत्वा कुमारश्च जवेन प्रययौ च ते ॥
मत्वाश्चर्यं च वचनं वारयामास तेपि तम् ॥ ३८ ॥ ॥ ऋषय ऊचुः ॥ ॥ हे सिद्धेंद्र महाभाग कुमार करुणामय ॥ का शंकि
तकथा प्रोक्ता भगवत्कृष्णसंनिधौ ॥ ३९ ॥ किं पुत्र दृष्टमाश्चर्यं श्रुतं किमपि कुत्रचित् ॥ अतीव कृत्वा विस्तीर्णमस्माकं वक्तुमर्हसि ॥
॥ ४० ॥ एतस्मिन्नंतरे ब्रह्मा पार्वत्या सह शंकरः ॥ अनंतश्चापि धर्मश्च श्रीसूर्यश्च निशाकरः ॥ ४१ ॥ आदित्या वसवो रुद्रा दिक्पा
लाद्याश्च देवताः ॥ श्रीकृष्णं सहसोत्थाय संभाव्य च पृथक्पृथक् ॥ ४२ ॥ मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः ॥ प्रणेमुर्ऋषयः
सर्वे शेषं शंभुं विधिं शिवाम् ॥ ४३ ॥ परस्परं च संभाषा बभूव द्विजदेवयोः ॥ समुवासासने मध्ये कुमारः कनकप्रभः ॥ कथां कथितु
मारेभे संसदि द्विजदेवयोः ॥ ४४ ॥ ॥ सनत्कुमार उवाच ॥ मया गतश्च गोलोको न दृष्टो राधिकापतिः ॥ ततो गतं च वैकुंठं
तत्र नास्ति चतुर्भुजः ॥ ४५ ॥ ततो गतश्च क्षीरोदस्तत्र नास्ति हरिः स्वयम् ॥ परिश्रांतो विषण्णश्च स्नातं क्षीरोदधेस्तटे ॥ ४६ ॥
विस्तीर्णवालुकामध्ये कच्छपः शतयोजनः ॥ भीतश्च कंपितस्तत्र दृष्टो दुःखी च शुष्कितः ॥ ४७ ॥ निःसा
रितो राघवेण मीनेन च महात्मना ॥ धन्योसीति मयोक्तश्च नाहं धन्य उवाच सः ॥ ४८ ॥ क्षीरोदः सागरो धन्यो जंतवो यत्र
मद्विधाः ॥ मत्तो महत्तराश्चापि ह्यसंख्याश्च महामुने ॥ ४९ ॥ भवान्धन्योसि क्षीरोद तेनोक्तो नाहमेव च ॥ धन्या वसुंधरा देवी यत्रैव

ब्र. वै. ख० ४ अ० ८७

सप्तसागराः ॥ ५० ॥ धन्यासि वसुधेत्युक्त्वा नाहमेवेत्युवाच सा ॥ धन्योऽनंतो ममाधारः कृष्णांशो नागराड्विभुः ॥ ५१ ॥ सहस्रमूर्ध्नां
मध्येऽहं मूर्ध्नि शूर्पे च सर्षपः ॥ धन्योऽसि शेषेत्युक्तोऽयं धन्यो नाहमुवाच वै ॥५२॥ धन्यः कूर्मो ममाधारो गच्छ तत्रैव वै मुने ॥ धन्योऽसि
कूर्मेत्युक्तोऽयं नाहं धन्योऽस्मि वै मुने ॥ ५३ ॥ वायुना धार्यमाणोऽहं मत्तो धन्यतमश्च सः ॥ धन्योऽसीत्युक्तः पवनो धन्यो नाहमुवाच
सः ॥ धन्यश्च भगवान्ब्रह्मा विधाता जगतामपि ॥ ५४ ॥ धन्योऽसि तत्र धाता च धन्यो नाहमुवाच सः ॥ धन्यो महेश्वरो देवो
योगींद्राणां गुरोर्गुरुः ॥५५॥ सर्वाराध्यः सर्वपूज्यो धर्मरूपः सनातनः ॥ कालकालश्च संहर्ता स्वयं मृत्युंजयः प्रभुः ॥ धन्योऽसि तत्र
शंभुश्च धन्यो नाहमुवाच सः ॥ ५६ ॥ सर्वादौ पूजनं यस्य ज्ञानिनां च गुरुः ॥ धन्यो गणेश्वरो देवो देवानां प्रवरः परः ॥५७ ॥
सिद्धेंद्रेषु मुनींद्रेषु देवेंद्रेषु श्रुतौ श्रुतम् ॥ योगींद्रेषु च प्राज्ञेषु न गणेशात्परः पुमान् ॥५८॥ निम्नगासु यथा गंगा तीर्थेषु पुष्करं यथा ॥
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ ५९ ॥ वेदो नारायणः साक्षाद्वयं पूज्या व्यवस्थया ॥ तस्माच्छास्त्राणि सर्वाणि पुराणानि च
संति वै ॥ ६० ॥ तस्मान्निरूपितो धर्मश्चेतिहासश्च संहिताः ॥ तस्माद्धन्याश्च ते वेदा वदंत्यत्र मनीषिणः ॥ ६१ ॥ यूयं धन्याश्च
मान्याश्चेत्युक्ता वेदा मया ततः ॥ ऊचुस्ते न वयं न्या यज्ञसंघश्च सांप्रतम् ॥ ६२ ॥ वयं व्यवस्थाकर्तारो यज्ञौघः फलदः स्वयम् ॥
तस्माद्धन्यः स एवापि गच्छगच्छ महामुने ॥ ६३ ॥ धन्योऽसि यज्ञसंघोऽसीत्युक्तस्तत्र मया विभो ॥ ऊचुस्ते न वयं धन्या
धन्यं कर्म शुभं मुने ॥ ६४ ॥ शुभकर्मासि धन्यं त्वं नाहं धन्यमुवाच तत् ॥ कर्मणां फलदाता यः कर्महेतुश्च सांप्रतम् ॥ ६५ ॥
धातुर्विधाता भगवान्सर्वादिः सर्वकारकः ॥ श्रीकृष्णः परमात्मा च धन्यो मान्यश्च निश्चितम् ॥ ६६ ॥ धर्मालयं ततो गत्वा न
दृष्ट्वा जगदीश्वरम् ॥ मथुरामागतं द्रष्टुं परिपूर्णतमं प्रभुम् ॥ ६७ ॥ यज्ञानां तपसां चैव व्रतानां शुभकर्मणाम् ॥ ईश्वरं फलदा
तारं परमात्मानमेव च ॥ ६८ ॥ कारणं कारणानां च ब्रह्मादीनां पुरःसरम् ॥ धन्योऽसीति मयोक्तश्च दक्षिणाभिः सहेति च
॥ ६९ ॥ इत्युक्तेन भगवता कथितं सर्वकारणम् ॥ दक्षिणाभिश्च फलदो हतयज्ञो ह्यदक्षिणः ॥ ७० ॥ दक्षिणा विप्रमुद्दिश्य तत्काले

तु न दीयते ॥ एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत् ॥ ७१ ॥ मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम् ॥ संवत्सरे व्यतीते तु स दाता नरकं व्रजेत् ॥ ७२ ॥ वर्षाणां च सहस्रं च मूत्रकुंडे निपत्य च ॥ ततश्चांडालतां याति व्याधियुक्तश्च पातकी ॥ ७३ ॥ दात्रा न दीयते दानं गृहीत्रा चेन्न गृह्यते ॥ उभौ तौ नरकं प्राप्तौ वर्षाणां च सहस्रकम् ॥ ७४ ॥ यजमानश्च चांडालो ब्राह्मणस्तत्पुरोहितः ॥ व्याधियुक्तावुभौ तौ च पापिनौ कर्मणः फलात् ॥ ७५ ॥ सर्वे देवाश्च मुनयो जहसुर्विस्मयं ययुः ॥ विस्मयं च ययौ नंदस्तत्याज पुत्रभावकम् ॥ ७६ ॥ रुरोद च सभामध्ये लज्जाहीनः शुचाकुलः ॥ त्यज मोहमितीत्युक्त्वा बोधयामास पार्वती ॥ ७७ ॥ ॥ श्रीनंद उवाच ॥ ॥ अमूल्यरत्नं माणिक्यं यथा कुजन्मनो गृहे ॥ स्थितं तेन च देवेश तथाहं वंचितः प्रभो ॥ ७८ ॥ ममापराधं भगवन् क्षमस्व प्रकृतेः पर ॥ यास्यामि न पुनर्गेहं गोकुलं यमुनातटम् ॥ ७९ ॥ वृंदावनं तथावासं क्रीडावासं गदाग्रज ॥ तत्सर्वं च यशोदाया गोपिकांतिकमेव च ॥ ८० ॥ किं ब्रवीमि यशोदां च प्रेयसीं राधिकामपि ॥ प्रेमपात्रं च बालौघं वद भो कथयामि किम् ॥ ८१ ॥ इत्युक्त्वा च सभामध्ये मूर्च्छां संप्राप नारद ॥ क्रोडे कृत्वा जगन्नाथो बोधयामास तत्क्षणम् ॥ ८२ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्ण जन्मखंड उत्तरार्धे नारायणनारदसंवादे भगवन्नंदसंवादे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ चेतनं कुरु हे तात हे तात चेतनं कुरु ॥ जलबुद्बुदवत्सर्वं संसारं सचराचरम् ॥ १ ॥ त्यज मोहं महाभाग मायां स्तौहि परात्पराम् ॥ ब्रह्मस्वरूपां परमां सर्वमोहनिकृंतनीम् ॥ मुक्तिप्रदां महाभागां विष्णुमायां सनातनीम् ॥ २ ॥ त्रिपुरस्य वधे घोरे महायुद्धे भयाकुले ॥ येन स्तोत्रेण शंभुश्च तया दैत्यं जघान सः ॥ ३ ॥ स्तोत्रराजं प्रदास्यामि सर्वमोहनिकृंतनम् ॥ सर्ववांछाप्रदं नंद श्रूयतामत्र संसदि ॥ ४ ॥ ॥श्रीनंद उवाच॥ ॥ सर्वविघ्नविनाशाय दुःस्वप्नप्रशमनाय च ॥ विभूतये च यशसे नृणां वांछितसिद्धये॥५॥ स्तोत्रमेकं महादेव्या जगन्मातुर्जगत्प्रभो ॥ परं दुर्गतिनाशिन्या गोपनीयं सुदुर्लभम् ॥ ६ ॥ देहि मह्यं विनीताय भक्ताय भक्तवत्सल ॥ वेदानां जनकस्त्वं च

निर्गुणश्च परात्परः ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणु वक्ष्यामि वैश्येंद्र स्तोत्रं यत्परमाद्भुतम् ॥ सर्वविघ्नविनाशार्थं मोहपाशनि
कृंतनम् ॥८॥ रणत्रस्तेन विभुना शंकरेण पुरा कृतम् ॥ नारायणोपदेशेन प्रेरितेन च ब्रह्मणा ॥९॥ शत्रुग्रस्तं शिवं दृष्ट्वा स ब्रह्माणमुवाच
ह ॥ उवाच शंकरं ब्रह्मा रथस्थं पतितं रणे ॥ १० ॥ शूरसंकटशांत्यर्थं दुर्गां दुर्गतिनाशिनीम् ॥ मूलप्रकृतिमाद्यां तां स्तौहि ब्रह्मस्व
रूपिणीम् ॥ ११ ॥ हरिणा प्रेरितोहं च त्वां वदामि सुरेश्वर ॥ विना शक्तिसहायेन को वा कं जेतुमीश्वरः ॥ १२ ॥ ब्रह्मणश्च वचः
श्रुत्वा दुर्गां सस्मार शंकरः ॥ पुटांजलिपरो भूत्वा भक्तिनम्रात्मकंधरः ॥ १३ ॥ स्नातः पादौ च प्रक्षाल्य धृत्वा धौते च वाससी ॥
आचांतः कुशहस्तश्च शुचिर्विष्णुं च संस्मरन् ॥ १४ ॥ ॥ श्रीमहादेव उवाच ॥ ॥ रक्षरक्ष महादेवि दुर्गे दुर्गतिनाशिनि ॥ मां
भक्तमनुरक्तं च शत्रुग्रस्ते कृपा मयि ॥ १५ ॥ विष्णुमाये महाभागे नारायणि सनातनि ॥ ब्रह्मस्वरूपे परमे नित्यानंदस्वरूपिणि
॥ १६ ॥ त्वं च ब्रह्मादिदेवानामंबिके जगदंबिके ॥ त्वं साकारे च गुणतो निराकारे च निर्गुणात् ॥ १७ ॥ मायया पुरुषस्त्वं
च मायया प्रकृतिः स्वयम् ॥ तयोः परं ब्रह्म परं त्वं बिभर्षि सनातनि ॥ १८ ॥ वेदानां जननी त्वं च सावित्री च परात्परा ॥ वैकुंठे
च महालक्ष्मीः सर्वसंपत्स्वरूपिणी ॥ १९ ॥ मर्त्यलक्ष्मीश्च क्षीरोदे कामिनी शेषशायिनः ॥ स्वर्गेषु स्वर्गलक्ष्मीस्त्वं राजलक्ष्मीश्च
भूतले ॥ २० ॥ नागादिलक्ष्मीः पाताले गृहेषु गृहदेवता ॥ सर्वसस्यस्वरूपा त्वं सर्वैश्वर्यविधायिनी ॥ २१ ॥ रागाधिष्ठातृदेवी
त्वं ब्रह्मणश्च सरस्वती ॥ प्राणानामधिदेवी त्वं कृष्णस्य परमात्मनः ॥ २२ ॥ गोलोके च स्वयं राधा श्रीकृष्णस्यैव वक्षसि ॥
गोलोकाधिष्ठिता देवी वृन्दावनवने वने ॥ २३ ॥ श्रीरासमंडले रम्या वृन्दावनविनोदिनी ॥ शतशृंगाधिदेवी त्वं नाम्ना चित्राव
लीति च ॥ २४ ॥ दक्षकन्या कुत्रकल्पे कुत्रकल्पे च शैलजा ॥ देवमाता दितिस्त्वं च सर्वाधारा वसुन्धरा ॥ २५ ॥ त्वमेव गंगा
तुलसी त्वं च स्वाहा स्वधा सती ॥ त्वदंशांशांशकलया सर्वदेवादियोषितः ॥ २६ ॥ स्त्रीरूपं चातिपुरुषं देवि त्वं च नपुंसकम् ॥
वृक्षाणां वृक्षरूपा त्वं सृष्टा चांकुररूपिणी ॥ २७ ॥ वह्नौ च दाहिका शक्तिर्जले शैत्यस्वरूपिणी ॥ सूर्ये तेजःस्वरूपा च प्रभारूपा

च संततम् ॥ २८ ॥ गंधरूपा च भूमौ च आकाशे शब्दरूपिणी ॥ शोभास्वरूपा चंद्रे च पद्मसंघे च निश्चितम् ॥ २९ ॥ सृष्टौ
सृष्टिस्वरूपा च पालने परिपालका ॥ महामारी च संहारे जले च जलरूपिणी ॥ ३० ॥ क्षुत्त्वं दया त्वं निद्रा त्वं तृष्णा त्वं बु
द्धिरूपिणी. ॥ तुष्टिस्त्वं चापि पुष्टिस्त्वं श्रद्धा त्वं च क्षमा स्वयम् ॥ ३१ ॥ शांतिस्त्वं च स्वयं भ्रांतिः कांतिस्त्वं कीर्तिरेव च ॥
लज्जा त्वं च तथा माया भुक्तिमुक्तिस्वरूपिणी ॥ ३२ ॥ सर्वशक्तिस्वरूपा त्वं सर्वसंपत्प्रदायिनी ॥ वेदे निर्वचनीया त्वं त्वां न
जानाति कश्चन ॥ ३३ ॥ सहस्रवक्त्रस्त्वां स्तोतुं न च शक्तः सुरेश्वरि ॥ वेदा न शक्ताः को विद्वान्न च शक्तः सरस्वती॥ ३४ ॥
स्वयं विधाता शक्तो न न च विष्णुः सनातनः ॥ किं स्तौमि पंचवक्त्रैस्तु रणत्रस्तो महेश्वरि ॥ ३५ ॥ कृपां कुरु महामाये मम शत्रु
क्षयं कुरु ॥ इत्युक्त्वा च सकरुणं रथस्थे पतिते रणे ॥ ३६ ॥ आविर्बभूव सा दुर्गा सूर्यकोटिसमप्रभा ॥ नारायणेन कृपया प्रेरिता
परमात्मना ॥ ३७ ॥ शिवस्य पुरतः शीघ्रं शिवाय च जयाय च ॥ इत्युवाच महादेवी मायाशक्त्यासुरं जहि ॥ ३८ ॥
॥ ॥ श्रीदुर्गोवाच ॥ ॥ वरं वृणीष्व भद्रं ते यत्ते मनसि वांछितम् ॥ भवान्वरः सुराणां च जयं तुभ्यं ददाम्यहम् ॥ ३९ ॥
॥ ॥ श्रीमहादेव उवाच ॥ ॥ क्षयो भवतु दैत्यस्य इति मे वरमीश्वरि ॥ देहीति वांछितं दुर्गे परमाद्ये सनातनि ॥ ४० ॥
॥ भगवत्युवाच ॥ ॥ हरिं स्मर महाभाग जय दैत्यं जगद्गुरो ॥ स्वयं विधाता भगवांस्त्वमेव ज्योतिरीश्वरः ॥ ४१ ॥ एतस्मिन्नंतरे
विष्णुर्वृषरूपो बभूव ह ॥ दधार कलया मूर्ध्नां शूलपाणे रथं विभुः ॥ ४२ ॥ ऊर्ध्वचक्रमथोग्रं च प्रकृतिं च चकार सः ॥ अस्त्रं ददौ
मंत्रपूतमुद्धार ततो रथम् ॥ ४३ ॥ शिवः शस्त्रं गृहीत्वा च ध्यात्वा विष्णुं महेश्वरीम् ॥ जघान त्रिपुरं शीघ्रं स पपात महीत
ले ॥ ४४ ॥ तुष्टुवुः शंकरं देवाश्चक्रुश्च पुष्पवर्षणम् ॥ दुर्गा तस्मै ददौ शूलं पिनाकं विष्णुरेव च ॥ ४५ ॥ ब्रह्मा शुभाशिषं
चैव मुनयश्चापि हर्षिताः ॥ ननृतुर्देवताः सर्वा जगुर्गंधर्वकिन्नराः ॥ ४६ ॥ एतस्मिन्नंतरे तात स्तवराजमनुत्तमम् ॥ विघ्नं विघ्नकरं शी
घ्रं शत्रुसंहारकारणम् ॥ ४७ ॥ परमैश्वर्यजनकं सुखदं परमं शुभम् ॥ निर्वाणमोक्षदं चैव हरिभक्तिप्रदं ध्रुवम् ॥ ४८ ॥ गोलो

कवासदं चैव सर्वसिद्धिप्रदं वरम् ॥ स्तोत्रराजप्रपठनात्प्रसन्ना पार्वती सदा ॥ ४९ ॥ लोभमोहकामक्रोधकर्ममूलनिकृंतनम् ॥ बल
बुद्धिकरं चैव जन्ममृत्युविनाशनम् ॥ ५० ॥ धनपुत्रप्रियाभूमिसर्वसंपत्प्रदं नृणाम् ॥ शोकदुःखहरं चैव सर्वसिद्धिप्रदं वरम् ॥
॥ ५१ ॥ स्तोत्रराजप्रपठनान्महावंध्या प्रसूयते ॥ बंधनान्मुच्यते दुःखी भयान्मुच्येत निश्चितम् ॥ ५२ ॥ रोगाद्विमुच्यते रोगी
दरिद्रश्च धनी भवेत् ॥ दावाग्निमध्ये न मृतो मग्नः पोतो महार्णवे ॥ ५३ ॥ दस्युग्रस्तो रिपुग्रस्तो हिंस्रजंतुसमन्वितः ॥ स्तोत्रेणानेन
वैश्र्यैद्ध कल्याणं लभते नरः ॥ ५४ ॥ तैजसानां यथा रत्नमाश्रमाणां द्विजो यथा ॥ नदीनां च यथा गंगा मंत्राणां प्रणवो यथा ॥
॥ ५५॥ तुलसी सर्वपत्राणां धराणां च वसुंधरा ॥ पुष्पाणां पारिजातं च काष्ठानां चंदनं यथा ॥५६॥ विष्णुपूजा च तपसां व्रतेष्वेकादशी
यथा ॥ ज्ञानिनां च यथा शंभुः सिद्धानां च गणेश्वरः॥५७॥देवानां च यथा विष्णुर्वेदाः शास्त्रेषु तंत्रतः ॥ देवीनां च यथा दुर्गा शांता
नां कमला यथा ॥ ५८॥ सरस्वती च विदुषां राधिका सुन्दरीषु च ॥ तथा स्तोत्रेष्विदं स्तोत्रं नातः परतरं व्रज ॥ ५९ ॥ पुरा
दत्तं ब्रह्मणे च पुष्करे सूर्यपर्वणि ॥ दैत्यग्रस्ताय भीताय सर्वदुर्गहरं परम् ॥ ६० ॥ शिवाय शत्रुग्रस्ताय ददौ ब्रह्मा मदाज्ञया ॥
शिवश्च सनकादिभ्यः पुरा दुर्वाससे ददौ ॥ ६१ ॥ सनत्कुमारो भगवान्कृपया गौतमाय च ॥ पुलहाय पुलस्त्याय ददौ चांगिरसे
मुदा ॥ ६२ ॥ तथा चंद्राय सूर्याय सूर्यश्चापि यमाय च ॥ यमश्च चित्रगुप्ताय कृपया च पुरा ददौ ॥ ६३ ॥ नित्यं पठिष्यसि स्तोत्रं
गोलोकगमनाय वै ॥ साक्षात्पश्यसि भो तात तामेव पार्वतीमिह ॥ ६४ ॥ यस्मै कस्मै न दातव्यं पापिने गोपनं कुरु ॥ नारायण
स्य भक्ताय शांताय विदुषे तथा ॥ ६५ ॥ सर्वज्ञाय च विप्राय प्रदातव्यं प्रयत्नतः ॥ विप्राय वृषवाहाय वृषलीपतये तथा ॥ ६६ ॥
शूद्राणां सूपकाराय शूद्रश्राद्धान्नभोजिने ॥ कन्याविक्रयिणे चैव ब्राह्मणाय विशेषतः ॥ ६७ ॥ सर्वसिद्धिं च लभते सिद्धस्तोत्रो
भवेद्यदि ॥ दशायुतजपेनैव सिद्धस्तोत्रो भवेन्नरः ॥ ६८ ॥ अग्निस्तंभं जलस्तम्भं मृत्स्तंभं मनसस्तथा ॥ अश्वमेधसहस्राच्च पृथिव्याश्च
प्रदक्षिणात्॥ ६९ ॥ स्नानाच्च सर्वतीर्थानां स्तोत्रमेतच्च पुण्यदम् ॥ दत्तं तुभ्यं मया तात मम प्राणसमं व्रज ॥७०॥ स्तवनं कुरु पार्व

त्याश्वेदानां मम संसदि ॥ श्रीकृष्णस्य वचः श्रुत्वा नंदस्तुष्टाव पार्वतीम् ॥७१॥ स्तोत्रेणानेन विप्रेंद्र सर्वसंपत्प्रदायिनीम् ॥ वरं तस्मै ददौ दुर्गा गोलोकवासमीप्सितम् ॥७२॥ दुर्लभं परमं ज्ञानं वेदे यन्न श्रुतं मुने ॥ राजेंद्रत्वं गोकुले च कृष्णभक्तिं सुदुर्लभाम् ॥७३॥ तदास्यं चाप परतो महत्त्वं सिद्धमेव च ॥ वरं दत्त्वा ययौ दुर्गा संभाष्य शंभुना सह ॥ जग्मुर्देवाश्च मुनयः स्तुत्वा च नंदनंदनम् ॥ ॥ ७४ ॥ उवाच नंदं श्रीकृष्णो व्रज नंद व्रजान्वितः ॥ प्रहृष्टस्त्यक्तमोहश्च बोधेन दुर्लभेन च ॥ ७५ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे श्रीभगवन्नंदसंवादे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ गच्छगच्छ गृहं गच्छ व्रजराज व्रजं व्रज ॥ सर्वतत्त्वं त्वया ज्ञातं दृष्टाश्च मुनयः सुराः ॥ १ ॥ श्रुतं मे धन्यमाख्यानं नानाख्यानं सुदुर्लभम् ॥ दुर्गायाः स्तोत्रराजं च जन्मपापनिकृंतनम् ॥ २ ॥ स्थितं तत्ते निगदितं हर्षेण च सुखेन च ॥ मत्कृतं बालभावेन चापराद्धं च तत्क्षम ॥ ३ ॥ यत्सुखं न कृतं तात पित्रोश्च नृपमंदिरे ॥ कृतं सुखं तत्परं च स्वर्गादपि सुदुर्लभम् ॥ ४ ॥ मदीयं प्रियवाक्यं च प्रह्वत्वं विनयं नयम् ॥ परिहासं बहुतरं यशोदां गोपिकागणम् ॥ ५ ॥ बालकानां समूहं च राधां चापि विशेषतः ॥ एकत्र च स्थितं तेषु बंधुवर्गेषु कर्मणा ॥ ६ ॥ इहैवापि सुखं भुक्त्वा गच्छ गोलोकमुत्तमम् ॥ सार्द्धं यशोदया तात रोहिण्या गोपिकागणैः ॥ ७ ॥ गोपानां बालकैः सार्द्धं वृषभानेन गोपकैः ॥ राधामात्रा कलावत्या राधया सह यास्यसि ॥ ८ ॥ रथानां शतलक्षं च गोलोकादागतं पितः ॥ अमूल्यरत्ननिर्माणं हीरहारपरिष्कृतम् ॥ ९ ॥ मणिमाणिक्यमुक्तानां मालाजालविभूषितम् ॥ वह्निशुद्धांशुके रम्यैराच्छन्नं पीतवर्णकैः ॥ १० ॥ पार्षदप्रवरै रम्यैर्वेष्टितं श्वेतचामरैः ॥ सद्रत्नदर्पणै रम्यैर्गोपिकाभिश्च गोपकैः ॥ वेष्टितं च तदारुह्य कौतुकाद्यास्यसि ध्रुवम् ॥ ११ ॥ त्यक्त्वा च पार्थिवं देहं दिव्यदेहं विधाय च ॥ अयोनिसंभवा राधा राधामाता कलावती ॥ १२ ॥ यास्यत्येव हि तेनैव नित्यदेहेन निश्चितम् ॥ पितॄणां मानसी कन्या धन्या मान्या कलावती ॥ १३ ॥ धन्या च सीतामाता च दुर्गामाता च मेनका ॥ अयोनिसंभवा दुर्गा तारा सीता च सुन्दरी ॥१४॥

अयोनिसंभवास्ताश्च धन्या मेना कलावती ॥ इत्येवं कथितं तात गोपनीयं सुदुर्लभम् ॥ वरोयं दत्तस्तुभ्यं च मया च दुर्गया
तथा ॥ १५ ॥ श्रीकृष्णस्य वचः श्रुत्वा प्रत्युवाच व्रजेश्वरः ॥ पुनरेव जगन्नाथं तद्भक्तो भक्तवत्सलम् ॥ १६ ॥ . ॥ नंद उवाच ॥
॥ युगानां च चतुर्णां च यंयं धर्मं सनातनम् ॥ क्रमेण कृष्ण विस्तीर्णं कृत्वा मां कथय प्रभो ॥ १७ ॥ कलिशेषे भवेद्यद्यद्गुणदोषं
कलेस्तथा ॥ का गतिर्वा पृथिव्याश्च धर्मस्य प्राणिनां तथा ॥१८॥ नंदस्य वचनं श्रुत्वा हृष्टः कमललोचनः ॥ कथां कथितुमारेभे
विचित्रां मधुरान्विताम् ॥ १९ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरभागे नारायणनारदसंवादेभगवन्नंदसं
वादे एकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु नंद प्रवक्ष्यामि सानंदं मानसं यथा ॥ कथां रम्यां सुमधुरां
पुराणेषु परिष्कृताम् ॥ १ ॥ परिपूर्णतमो धर्मो धार्मिकाश्च कृते युगे ॥ परिपूर्णतमं सत्यं परिपूर्णतमा दया ॥ २ ॥ अतीव प्रज्व
लद्रूपा वेदाश्चत्वार एव च ॥ वेदांगाश्चापि विविधाश्चेतिहासाश्च संहिताः ॥ ३ ॥ पुराणानि सुरम्याणि पंचरात्राणि पंच च ॥ रुचि
राणि सुभद्राणि धर्मशास्त्राणि यानि च ॥ ४ ॥ विप्रा वेदविदः सर्वे पुण्यवंतस्तपस्विनः ॥ नारायणं ते ध्यायंति तन्मनस्का जपंति
च ॥५॥ ब्राह्मणाः क्षत्रिया वैश्याश्चतुर्वर्णाश्च वैष्णवाः ॥ शूद्रा ब्राह्मणभृत्याश्च सत्यधर्मपरायणाः ॥ ६ ॥ राजानो धार्मिकाश्चैव प्रजा
पालनतत्पराः ॥ गृह्णंत्येव प्रजानां च षोडशांशकरान्नृपाः ॥ ७ ॥ करशून्याश्च विप्राश्च पूज्याः स्वच्छंदगामिनः ॥ संततं सर्वसस्याढ्या
रत्नाधारा वसुंधरा ॥८॥ गुरुभक्ताश्च शिष्याश्च पितृभक्ताः सुतास्तथा ॥ योषितः पतिभक्ताश्च पतिव्रतपरायणाः ॥९॥ ऋतौ संभोगिनः
सर्वे न स्त्रीलुब्धा न लंपटाः ॥ न भयं दस्युचौर्याणां न तत्र पारदारिकाः ॥ १० ॥ तरवः पूर्णफलिनः पूर्णक्षीराश्च धेनवः ॥ बल
वन्तो जनाः सर्वे दीर्घाः सौंदर्यसंयुताः ॥ ११ ॥ लक्षवर्षायुषः केचित्पुण्यवंतो ह्यरोगिणः ॥ यथा विप्रा विष्णुभक्तास्त्रिवर्णा विष्णुसे
विनः ॥ १२ ॥ जलपूर्णा नदा नद्यः संततं कंदरास्तथा ॥ तीर्थपूताश्चतुर्वर्णास्तपःपूता द्विजातयः ॥ १३ ॥ मनःपूताश्च निखिलाः
खलहीनं जगत्त्रयम् ॥ सत्कीर्तिपरिपूर्णं च यशस्यं मंगलान्वितम् ॥ १४ ॥ पितरः सर्वकालेषु तिथिकालेषु देवताः ॥ सर्वकालेष्वतिथ

यः पूजिताश्च गृहेगृहे ॥ १९ ॥ त्रिवर्णा विप्रभक्ताश्च विप्रभोजनतत्पराः ॥ ब्राह्मणस्य मुखं क्षेत्रमनूषरमकंटकम् ॥ १६ ॥ नारायणोत्की
र्तनेन हर्षयुक्तास्तदुत्सवे ॥ न देवानां द्विजानां च विदुषां तत्र निंदकाः ॥ १७ ॥ नात्मप्रशंसकाः केचित्सर्वे परगुणोत्सुकाः ॥ न
शत्रवो जनानां च सर्वे सर्वहितैषिणः ॥ १८ ॥ पुरुषा योषितश्चापि न हि मूर्खाश्च पंडिताः ॥ न दुःखिनो जनाः सर्वे सर्वेषां रत्न
मंदिरम् ॥ १९ ॥ मणिमाणिक्यरत्नौघरत्नस्वर्णसमन्वितम् ॥ न भिक्षुका न रोगार्ताः शोकहीनाश्च हर्षिताः ॥ २० ॥ न हि भूष
णहीनाश्च नरा नार्यश्च केचन ॥ न पापिनो न धूर्ताश्च न क्षुधार्ता न कुत्सिताः ॥ २१ ॥ जराहीनाः प्राणिनश्च शश्वद्यौवनसंस्थि
ताः ॥ आधिव्याधिविहीनाश्च निर्विकाराश्च देहिनः ॥ २२ ॥ यदुक्तो वै सत्ययुगे धर्मः सत्यं दयादिकम् ॥ पादहीनश्च त्रेतायां स
त्यार्द्धं द्वापरेपि च ॥ २३ ॥ धर्मैकपाच्च प्रथमे कलेश्चापि कृशोऽबलः ॥ दुष्टानां दस्युचौर्याणामंकुरः प्रभवेद्व्रज ॥२४॥ अधर्मनिरताः
केचिद्भीताः संगोपिनस्तथा ॥ भीता गुप्ताश्च पुंश्चल्यो भीताश्च पारदारिकाः ॥ २५ ॥ धर्मिष्ठानां भयं शश्वदधर्मिष्ठाश्च कंपिताः ॥
स्वल्पधर्मरता भूपाः स्वल्पवेदरता द्विजाः ॥ २६ ॥ व्रतधर्मरताः केचित्सर्वे स्वच्छंदगामिनः ॥ यावत्तिष्ठंति तीर्थानि यावत्तिष्ठंति
साधवः ॥ २७ ॥ यावत्तिष्ठंति ग्रामाणां देवाः शास्त्राणि पूजनम् ॥ तावत्किंचित्तपः सत्यं स्वर्गधर्मांश एव च ॥ २८ ॥ कलेर्दोषनि
धेस्तात गुण एको महानपि ॥ मानसं च भवेत्पुण्यं सुकृतं न हि दुष्कृतम् ॥ २९ ॥ तीर्थादिके गते तात नष्टो धर्मांश एव च ॥
कलारूपश्च धर्मश्च यथा कुहूां निशाकरः ॥ ३० ॥ ॥ नंद उवाच ॥ ॥ तीर्थान्येतानि सर्वाणि तिष्ठंत्येव कियद्दिनम् ॥ साध
वो ग्राम्यदेवाश्च शास्त्राण्येतानि वत्सक ॥ ३१ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कलौ दशसहस्राणि हरिस्तिष्ठति मेदिनीम् ॥ देवा
नां प्रतिमा पूज्या शास्त्राणि च पुराणकम् ॥ ३२ ॥ तदर्धमपि तीर्थानि गंगादीनि सुनिश्चितम् ॥ तदर्धं ग्रामदेवाश्च वेदाश्च विदु
षामपि ॥ ३३ ॥ अधर्मः परिपूर्णश्च तदंते च कलौ पितः ॥ एकवर्णा भविष्यंति वर्णाश्चत्वार एव च ॥ ३४ ॥ न मंत्रपूतोद्वाहश्च न
हि सत्यं न च क्षमा ॥ स्त्रीस्वीकाररतो नित्यं ग्राम्यधर्मप्रधानतः ॥ ३५ ॥ न यज्ञसूत्रं तिलकं ब्राह्मणानां च नित्यशः ॥ संध्याशास्त्रवि

हीनाश्च विप्रवंशाः श्रुता अपि ॥३६॥ सर्वैः सार्द्धं च सर्वेषां भक्षणं नियमच्युतम् ॥ अभक्ष्यभक्षा लोकाश्च चतुर्वर्णाश्च लंपटाः ॥३७॥
नारीषु न सती काचित्पुंश्चली च गृहेगृहे ॥ करोति तर्जनं कांतं भृत्यतुल्यं च कंपितम् ॥ ३८ ॥ जाराय दत्त्वा मिष्टान्नं तांबूलं वस्त्रचंदन
म् ॥ न ददात्येव चाहारं स्वामिने दुःखिने पितः ॥३९॥ पुत्रेण भर्त्सितस्तातः शिष्येण भर्त्सितो गुरुः ॥ प्रजाभिस्ताडितो भूपो भू
पेन ताडिताः प्रजाः ॥४०॥ दस्युचोरैश्च दुष्टैश्च शिष्टाश्च परिपीडिताः ॥ सस्यहीना च वसुधा क्षीरहीनाश्च धेनवः ॥४१॥ स्वल्पक्षीरे
घृतं नास्ति नवनीतं च नित्यंशः ॥ सत्यहीना जनाः सर्वे नित्यं मिथ्या वदंति च ॥४२॥ शौचसंध्याशास्त्रहीना ब्राह्मणा वृषवाहकाः ॥
सूपकाराश्च शूद्राणां शूद्राणां शवदाहकाः ॥४३॥ शूद्रस्त्रीनिरताः शश्वच्छूद्रा विप्रवधूरताः ॥ खादंति यस्य विप्रस्य भक्ष्यं च परिपाचकाः ॥
॥४४॥ मातुः परां तस्य पत्नीं शूद्रा गृह्णंति लंपटाः ॥ भृत्यश्च हत्वा राजानं स्वयं राजा भविष्यति ॥४५॥ नारी हत्वा पतिं कामाज्जे
ष्यारं च कौतुकात् ॥ पुत्रश्च पितरं हत्वा स्वयं भूपो भविष्यति ॥ ४६ ॥ सर्वे स्वच्छंदनिरताः शिश्नोदरपरायणाः ॥ वंखरा व्याधि
युक्ताश्च कुत्सिताश्च कुचैलकाः ॥ ४७ ॥ विक्षुण्णमंत्रलिप्ताश्च मिथ्यायंत्रप्रचारकाः ॥ जातिहीनाश्च गुरवो वयोहीनाश्च निंदकाः ॥
॥ ४८ ॥ राजानश्चापि म्लेच्छाश्च यवना धर्मनिंदकाः ॥ सत्कीर्तिमपि साधूनां कुर्वंत्युन्मूलनं मुदा ॥ ४९ ॥ पितृदेवद्विजातीनाम
तिथीनां च नित्यशः ॥ पूजा नास्ति गुरूणां च पित्रोश्च पूजनं स्त्रियाः ॥ ५० ॥ स्त्रीबंधूनां गौरवं च स्त्रीणां च सततं पितः ॥ चोरः
सत्कुलजातिश्च ब्राह्मणो देवहारकः ॥ ५१ ॥ मानं वहंति लोभेन युगे धर्मेण कौतुकात् ॥ देवायतनहीनं च जगत्सर्वं भयाकुलम् ॥
॥ ५२ ॥ अराजकं च दुर्नीतं संततं कलिदोषतः ॥ बुभुक्षिताः कुचैलाश्च दरिद्रा व्याधिनो नराः ॥ ५३ ॥ कपर्दकट्टाध्यक्षो राजें
द्रो हि घटेश्वरः ॥ वृद्धांगुष्ठसमा लोका वृक्षाः शाकसमास्तथा ॥ ५४ ॥ तालानां नारिकेराणां पनसानां तथैव च ॥ फलानि सर्षपा
ण्येव तत्क्षुद्रं च ततः परम् ॥ ५५ ॥ जलभाजनपात्रेण शस्येन वाससा तथा ॥ विहीनं मंदिरं सर्वं गृहाणामपरिष्कृतम् ॥ ५६ ॥

गंधकेन परिवृतं दीपहीनं तमोयुतम् ॥ हिंस्रजंतुभयाद्भीता जनाः सर्वे च पापिनः ॥ ५७ ॥ सर्वे च फललोभिष्ठाः पुंश्चल्यः कलह

प्रियाः ॥ रूपवत्यो न कामिन्यो नराश्चापि न रूपिणः॥५८॥नद्यो नदाः कंदराश्च तडागाश्च सरोवराः ॥ जलपद्मविहीनाश्च जलहीना वनास्तथा॥५९॥अपत्यहीना नार्यश्च कामुक्यो जारसंयुताः ॥ अश्वत्थच्छेदिनः सर्वे वृक्षहीना वसुंधरा॥६०॥फलहीनाश्च तरवःशाखा स्कंधविहीनकाः ॥ फलानि स्वादुहीनानि चान्नानि च जलानि च ॥६१॥ मानवाः कूटवक्तारो निर्दया धर्मवर्जिताः ॥ तदंते द्वादशादित्याः संहरिष्यंति मानवान् ॥ ६२॥ सर्वाञ्जंतूंश्च तापेन बहुवृष्ट्या व्रजेश्वर ॥ अवशिष्टा च पृथिवी कथामात्रावशेषिता ॥ ६३ ॥ कलौ गते च पृथिवी क्षेत्रं वर्षागते तथा॥ पुनः सत्यप्रवृत्तिश्च भविष्यति क्रमेण वै ॥६४॥ इत्येवं कथितं सर्वं गच्छ तात व्रजं सुखम् ॥ अहं दुग्धमुखो बालः पुत्रस्ते कथयामि किम् ॥ ६५ ॥ नवनीतं घृतं दुग्धं दधि तक्रं परिष्कृतम् ॥ स्वस्तिकं शुभकर्मार्हं मिष्टान्नं च सुधोपमम् ॥ ६६ ॥ मिष्टद्रव्यं च यत्किंचित्पितृदेवनिमित्तकम् ॥ भुक्तं बलाच्च तत्सर्वं बालानां रोदनं बलम् ॥ ६७ ॥ तत्क्षमस्वापराधं मे बालदोषः पदेपदे ॥ त्वं पिता तव पुत्रोहं यशोदा जननी मम ॥ ६८ ॥ मदीयं परिहासं च यशोदां रोहिणीं वद ॥ कुमारास्याच्छ्रुतं सर्वं सोहमित्येवमीप्सितम् ॥ ६९ ॥ कीर्तयिष्यसि तत्सर्वं सर्वं गोकुलवासिनम् ॥ कालः करोति संसर्गं बंधूनां बंधुभिः सह ॥ ७० ॥ कालः करोति विच्छेदं विरोधं प्रीतिमेव च ॥ कालः सृष्टिं च कुरुते कालश्च परिपालनम् ॥ ७१ ॥ कालः करोति सानंदं कालः संहरते प्रजाः ॥ सुखं दुःखं भयं शोकं जरां मृत्युं च जन्म च ॥ ७२ ॥ सर्वं कर्मानुरोधेन काल एव करोति च ॥ सर्वं कालकृतं तात विस्मयं न व्रज व्रज ॥ ७३ ॥ कुतस्त्वं गोकुले वैश्यो नंदो वैश्याधिपो नृपः ॥ वसुदेवसुतोहं च मथुरायामहो कुतः॥ ॥ ७४ ॥ पित्रा मे कंसभीतेन त्वद्गृहे च समर्पितः ॥ पितुः परः पिता त्वं च माता मातुः परापि वा ॥ ७५ ॥ मया दत्तेन ज्ञानेन पार्वत्या च व्रजेश्वर ॥ त्यज मोहं महाभाग गच्छ तात सुखं गृहम ॥ ७६ ॥ ॥ नंद उवाच ॥ ॥ स्मर वृन्दावनं तात रम्यं पुण्यं महोत्सवम् ॥ गोकुलं गोकुलं रम्यं सुन्दरं यमुनातटम् ॥७७॥ रमणीनां सुरम्यं च तत्रतिप्रियं रासमंडलम् ॥ गोपालिका गोपबालान्यशोदां रोहिणीं प्रियाम् ॥ ७८ ॥ प्राणाधिकां राधिकां न कथं स्मरसि पुत्रक ॥ वारमेकं स्वल्पदिनं गोकुलं गच्छ वत्सक ॥ ७९ ॥

इत्येवमुक्त्वा नंदश्च क्रोडे कृष्णं चकार सः ॥ नेत्राश्रुणा च पूर्णेन तं सिषेच शुचान्वितः ॥ ८० ॥ चुचुंब तद्गंडयुगं कृत्वा वक्षसि मोहतः ॥ सानंदः परमानंदो भगवांस्तमुवाच सः ॥ ८१ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरभागे नारायण नारदसंवादे नवतितमोऽध्यायः ॥ ९० ॥ ॥ श्रीभगवानुवाच ॥ ॥ निषेकेन परिष्वंगो विभेदस्तेन वा भवेत् ॥ क्षणेन दर्शनं तेन निषेकः केन वार्यते ॥१॥ गमनागमनार्थं चाप्युद्धवः कथयिष्यति ॥ प्रस्थापयामि तं शीघ्रं विज्ञास्यसि ततः पितः ॥ २ ॥ यशोदां रोहिणीं चैव गोपिकां गोपबालकान् ॥ प्राणाधिकां राधिकां तां गत्वा संबोधयिष्यति ॥ ३ ॥ एतस्मिन्नंतरे तत्र वसुदेवश्च देवकी ॥ बलदेवश्चोद्धवश्च तथाक्रूरश्च सत्वरम् ॥ ४ ॥ ॥ वसुदेव उवाच ॥ ॥ नंद त्वं बलवान्ज्ञानी सद्बंधुश्च सखा मम ॥ त्यज मोहं गृहं गच्छ वत्सस्तेयं यथा मम ॥ ५ ॥ द्वारभूता गोकुलाच्च मथुरा नास्ति बांधवः ॥ महोत्सवे सदानंदे नंद द्रक्ष्यसि पुत्रकम् ॥ ६ ॥ ॥ श्रीदेवक्युवाच ॥ ॥ यथायमावयोः पुत्रस्तथैव भवतो ध्रुवम् ॥ सालसः केन हे नंद शुचा देहो हि लक्ष्यते ॥ ७ ॥ एकाद शाब्दं सबलः स्थित्वा ते मंदिरे सुखम् ॥ कथं स्वल्पदिनेनैव शोकग्रस्तो भविष्यसि ॥ ८ ॥ तिष्ठ पुत्रेण सार्द्धं च मथुरायां किय द्दिनम् ॥ पूर्णचंद्राननं पश्य जन्म त्वं सफलं कुरु ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ गच्छोद्धव सुखं भद्रं भविष्यति तव प्रियम् ॥ प्रहर्षं गोकुलं गत्वा यशोदां रोहिणीं प्रसूम् ॥ १० ॥ गोपबालसमूहं च राधिकां गोपिकागणम् ॥ प्रबोधयाध्यात्मिकेन मद्दत्तेन च शुक्छिदा ॥ ११ ॥ नंदस्तिष्ठतु सानंदं मन्मातुराज्ञया शुचा ॥ नंदस्थितिं मद्विनयं यशोदां कथयिष्यसि ॥ १२ ॥ इत्येवमुक्त्वा श्रीकृष्णः पित्रा मात्रा बलेन च ॥ अक्रूरेण समं तूर्णं ययावभ्यंतरं गृहम् ॥ १३ ॥ उद्धवो रजनीं स्थित्वा मथुरायां च नारद ॥ प्रभाते प्रययौ शीघ्रं रम्यं वृन्दावनं वनम् ॥ १४ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरभागे नारायणनारदसंवादे एकनवतितमोध्यायः ॥ ९१ ॥ ॥ श्रीनारायण उवाच ॥ ॥ श्रीकृष्णप्रेरितो हृष्टः प्रणम्य च गणेश्वरम् ॥ स्मरन्नारायणं शंभुं दुर्गां लक्ष्मीं सरस्वतीम् ॥ १ ॥ गंगां च मनसि ध्यात्वा दिगीशं तं महेश्वरम् ॥ प्रजगामो

एवमेव दृष्ट्वा मंगलसूचकम् ॥ २ ॥ शुश्राव दुंदुभिं घंटानादं शंखध्वनिं तथा ॥ हरिशब्दं च संगीतं शुश्राव मंगलध्वनिम् ॥ ३ ॥
पतिपुत्रवतीं साध्वीं प्रदीपं माल्यदर्पणम् ॥ परिपूर्णतमं कुंभं दधिलाजफलानि च ॥ ४ ॥ दूर्वांकुरं शुक्लधान्यं रजतं कांचनं मधु ॥
ब्राह्मणानां समूहं च कृष्णसारं वृषं घृतम् ॥५॥ सद्योमांसं गजेंद्रं च नृपेंद्रं श्वेतघोटकम् ॥ पताकां नकुलं चाषं शुक्लं पुष्पं च चंदनम् ॥
॥ ६ ॥ दृष्ट्वैवं पथि कल्याणं प्राप वृंदावनं वनम् ॥ ददर्श पुरतो वृक्षं भांडीरवटमक्षयम् ॥ ७ ॥ स्निग्धपूर्णं रक्तवर्णं पुण्यदं तीर्थमी
प्सितम् ॥ सुवेषान्बालकांश्चैव रक्तभूषणभूषितान् ॥ ८ ॥ वदतो बलकृष्णेति रुदतश्च शुचान्वितान् ॥ तानाश्वास्य
ययौ दूरं प्रविश्य नगरं मुदा ॥ ९ ॥ ददर्श नंदशिबिरं रचितं विश्वकर्मणा ॥ मणिरत्नविनिर्माणं मुक्तामाणिक्यहीरकैः ॥
॥ १० ॥ परिच्छन्नं मनोरम्यं सद्रत्नकलशान्वितम् ॥ द्वारं चित्रं विचित्राढ्यं दृष्ट्वा च प्रविवेश सः ॥ ११ ॥ अवरुह्य रथात्तूर्णं त
स्थौ तत्प्रांगणे मुदा ॥ यशोदा रोहिणी शीघ्रं पप्रच्छ कुशलं परम् ॥ १२ ॥ आसनं च जलं गां च मधुपर्कं ददौ मुदा ॥ क्व नंदः
क्व बलः कृष्णः सत्यं तत्कथयोद्धव ॥ १३ ॥ उद्धवः कथयामास सर्वं भद्रं क्रमेण च ॥ सार्द्धं च बलकृष्णाभ्यां नंदः सानंदपूर्वकम्
॥ १४ ॥ आयास्यति विलंबेन कृष्णोपनयनावधि ॥ युष्माकं कुशलं तत्त्वं विज्ञाय विधिपूर्वकम् ॥ १५ ॥ अहं यास्यामि मथुरां य
शोदे शृणु सांप्रतम् ॥ श्रुत्वा मंगलवार्तां च यशोदा रोहिणी मुदा ॥ १६ ॥ ब्राह्मणाय ददौ रत्नं सुवर्णं वस्त्रमीप्सितम् ॥ उद्धवं भोज
यामास मिष्टान्नं च सुधोपमम् ॥ १७ ॥ मणिश्रेष्ठं च रत्नं च ददौ तस्मै च हीरकम् ॥ वाद्यं च वादयामास भद्रं नानाविधं तथा
॥ १८ ॥ ब्राह्मणान्भोजयामास कारयामास मंगलम् ॥ वेदांश्च पाठयामास परमानंदपूर्वकम् ॥ १९ ॥ शंकरं पूजयामास विप्रद्वा
रा परं विभुम् ॥ नानोपहारैर्नैवेद्यैः पुष्पधूपप्रदीपकैः ॥ २० ॥ चंदनैर्वस्त्रतांबूलैर्मधुगव्यघृतादिभिः ॥ भवानीं पूजयामास श्रीवृन्दा
रण्यदेवताम् ॥ २१ ॥ षोडशोपचारैर्द्रव्यैश्च बलिभिर्विविधैर्मुने ॥ महिषाणां शतं शुद्धं छागलानां सहस्रकम् ॥ २२ ॥ मेषाणामयुतं
शुद्धं शुकमादाय पंचकम् ॥ ब्राह्मणेभ्यः स्वर्णशतं धेनूनां च शतं तथा ॥ २३ ॥ प्रददौ दक्षिणां तूर्णं कृष्णकल्याणहेतवे ॥ उद्धवं पूज

प्रणनाम सादरं च पुनःपुनः ॥ २४ ॥ समाश्वास्य यशोदां च रोहिणीं गोपबालकान् ॥ वृद्धान्गोपालिकाः सर्वाः प्रययू रासमंडलम् ॥ २५ ॥ ददर्श रासं रुचिरं चंद्रमंडलवर्तुलम् ॥ श्रीरामकदलीस्तंभशतकैरुपशोभितम् ॥ २६ ॥ युक्तैश्च स्निग्धवसनैश्चंदनानां च पल्लवैः ॥ पट्टसूत्रनिबद्धैश्च श्रीयुक्तमाल्यजालकैः ॥ २७ ॥ दधिलाजफलैः पट्टैः पुष्पैर्दूर्वांकुरैरपि ॥ चंदनागुरुकस्तूरीकुंकुमैः परिसंस्कृतम् ॥ २८ ॥ वेष्टितं रक्षितं यत्नाद्गोपिकानां त्रिकोटिभिः ॥ त्रिलक्षैः सुंदरै रम्यैः संसिक्तं रतिमंदिरैः ॥ २९ ॥ लक्षगोपैः परिवृतं कृष्णागमनशंकितैः ॥ यमुनां दक्षिणां कृत्वा प्रययौ मालतीवनम् ॥ ३० ॥ चंदनानां चंपकानां यूथिकानां तथैव च ॥ केतकीमाधवीनां च वनं कृत्वा प्रदक्षिणम् ॥ ३१ ॥ बकुलानां वंजुलानामशोकानां च काननम् ॥ मल्लिकानां पलाशानां शिरीषाणां तथैव च ॥ ३२ ॥ धात्रीणां कांचनानां च कर्णिकानां वनं तथा ॥ नागेश्वराणां विपिनं लवंगानां तथैव च ॥ ३३ ॥ वनं च शालतालानां हिंतालानां वनं तथा ॥ पनसानां रसालानां लांगलीनां मनोहरम् ॥ ३४ ॥ मंदारकाननं रम्यं वामं कृत्वा च सत्वरम् ॥ दृष्ट्वा कुंदवनं रम्यं संप्राप्य मधुकाननम् ॥ ३५ ॥ पुंस्कोकिलानां शब्देन मधुरेण समन्वितम् ॥ मधुव्रतसमूहानां मधुरध्वनिपूरितम् ॥ ३६ ॥ वन्यवृक्षैः परिवृतं माध्वीकाधारमीप्सितम् ॥ वातेन वन्यपुष्पाणां परितः सुरभीकृतम् ॥ ३७ ॥ तद्दृष्ट्वा राजमार्गेण यशोदोक्तेन सांप्रतम् ॥ ययौ शीघ्रं निरुद्विग्नं रहस्यं बदरीवनम् ॥ ३८ ॥ श्रीफलानां च निंबानां नारिंगाणां वनं तथा ॥ पद्मानां करवीराणां तुलसीनां च काननम् ॥ ३९ ॥ दृष्ट्वा रक्तिमवर्णं च सुपक्वफलमीप्सितम् ॥ तदेव वामतः कृत्वा विवेश कदलीवनम् ॥ ४० ॥ अतीव निर्जने रम्ये ददर्श राधिकाश्रमम् ॥ मणींद्राणां च प्राकारं परिखादुर्गवेष्टितम् ॥ ४१ ॥ अत्यगम्यं रिपूणां च मित्राणां सुगमं सुखम् ॥ गोप्यं संकेतमार्गं च रक्षकैः परिरक्षितम् ॥ ४२ ॥ नानाचित्रविचित्राढ्यं निर्मितं विश्वकर्मणा ॥ मणींद्रमु[illegible] परम् ॥ ४३ ॥ रत्नेंद्रसाररचितं रत्नस्तंभैः सुशोभितम् ॥ रत्नसोपानसंसक्तमंदिरेण मनोहरम् ॥ ४४ ॥ अमूल्यरत्नरचितं कलशैः परिशोभितम् ॥ वह्निशुद्धांशुकाभिश्च पताकाभिः परिष्कृतम् ॥ ४५ ॥ [illegible]

भ्रो ॥ ददर्श सिंहद्वारं च युक्तं रत्नकपाटकैः ॥ ४६ ॥ द्वारोपरि विचित्रं च रम्यं वृन्दावनं वनम् ॥ कदंबकाननं रम्यं तदभ्यंतरगा मिकम् ॥ ४७ ॥ विश्वकर्मविरचितं सुरम्यं रासमंडलम् ॥ नानारत्नकुटीरं च गोपगोपीसमन्वितम् ॥ ४८ ॥ रक्षितं गोपिकालक्षै र्वेत्रहस्तैर्मनोहरैः ॥ स्वच्छंदाचरणैः शश्वदमितैर्बलिभिर्मुदा ॥ ४९ ॥ तद्द्वारं पुरतो दृष्ट्वा विलंघ्य च जगाम सः ॥ द्वितीयं द्वारमुल्लंघ्य तस्मादुत्तममीप्सितम् ॥ ५० ॥ द्वारं चतुर्थं संप्राप्य सर्वस्माच्च विलक्षणम् ॥ तत्पश्चात्पंचमं द्वारं ददर्श चित्रमुत्तमम् ॥ ५१ ॥ द्वार षट्कं च प्रययौ सर्वत्र रुचिरं परम् ॥ रामरावणयोर्युद्धं भित्तिचित्रं मनोहरम् ॥ ५२ ॥ दशावतारं विष्णोश्च कृत्रिमं रासमंडलम् ॥ यमुनां जलकेलिं च रचितां विश्वकर्मणा ॥ ५३ ॥ गोपिकानां सहस्रेण षष्ठं द्वारं च रक्षितम् ॥ रत्नेंद्रसारनिर्माणभूषणैर्भूषितेन च ॥५४॥ सद्रत्नदंडहस्तेन हीरकैर्भूषितेन च ॥ मणींद्रमुक्तामाणिक्यहीरहारान्वितेन च ॥५५॥ माधवी तत्प्रधाना सा पप्रच्छ सांप्रतं शिवम् ॥ ददौ प्रत्युत्तरं सर्वं क्रमेण च स उद्धवः ॥ ५६ ॥ गत्वा विज्ञापयामास राधाप्रियसखीगणम् ॥ सा माधवी महाहृष्टा तत्र सं स्थाप्य तं मुदा ॥ ५७ ॥ श्रुत्वा मंगलवार्तां च राधाप्रियसखीगणैः ॥ कृत्वा शंखध्वनिं घंटामृदंगपटहस्वनम् ॥ ५८ ॥ कृत्वा निर्मंछ नं शीघ्रमुद्धवं प्रियमागतम् ॥ दृष्ट्वा प्रवेशयामास राधाभ्यंतरमुत्तमम् ॥ ५९ ॥ अमूल्यरत्ननिर्माणं गत्वा मंदिरमुत्तमम् ॥ ददर्श पुरतो राधां कृशां चंद्रकलोपमाम् ॥ ६० ॥ सुपक्वपद्मनेत्रां च शयानां शोकमूर्छिताम् ॥ रुदंतीं रक्तवदनां क्लिष्टां च त्यक्तभूषणाम् ॥ ॥ ६१ ॥ निश्चेष्टां च निराहारां सुवर्णवर्णकुंडलाम् ॥ शुष्किताधरकंठां च किंचिन्निश्वाससंयुताम् ॥ ६२ ॥ प्रणनाम च तां दृष्ट्वा भक्तिनम्रात्मकंधरः ॥ पुलकांचितसर्वांगो भक्त्या भक्तः स उद्धवः ॥ ६३ ॥ ॥ उद्धव उवाच ॥ ॥ वंदे राधापदांभोजं ब्रह्मादिसुर वंदितम् ॥ यत्कीर्तिकीर्तनेनैव पुनाति भुवनत्रयम् ॥ ६४ ॥ नमो गोकुलवासिन्यै राधिकायै नमोनमः ॥ शतशृंगनिवासिन्यै चंद्रव त्यै नमोनमः ॥ ६५ ॥ तुलसीवनवासिन्यै वृंदारण्यै नमोनमः ॥ रासमंडलवासिन्यै रासेश्वर्यै नमोनमः ॥ ६६ ॥ विरजातीरवा सिन्यै वृंदायै च नमोनमः ॥ वृंदावनविलासिन्यै कृष्णायै च नमोनमः ॥ ६७ ॥ नमः कृष्णप्रियायै च शांतायै च नमोनमः ॥

 

कृष्णवक्षःस्थितायै च तत्प्रियायै नमोनमः ॥ ६८ ॥ नमो वैकुंठवासिन्यै महालक्ष्म्यै नमोनमः ॥ विद्याधिष्ठातृदेव्यै च सरस्वत्यै
नमोनमः ॥ ६९ ॥ सर्वैश्वर्याधिदेव्यै च कमलायै नमोनमः ॥ पद्मनाभप्रियायै च पद्मायै च नमोनमः ॥ ७० ॥ महाविष्णोश्च
मात्रे च पराद्यायै नमोनमः ॥ नमः सिंधुसुतायै च मर्त्यलक्ष्म्यै नमोनमः ॥ ७१ ॥ नारायणप्रियायै च नारायण्यै नमोनमः ॥
नमोस्तु विष्णुमायायै वैष्णव्यै च नमोनमः ॥ ७२ ॥ महामायास्वरूपायै संपदायै नमोनमः ॥ नमः कल्याणरूपिण्यै शुभायै च
नमोनमः ॥ ७३ ॥ मात्रे चतुर्णां वेदानां सावित्र्यै च नमोनमः ॥ नमो दुर्गविनाशिन्यै दुर्गादेव्यै नमोनमः ॥ ७४ ॥ तेजःसुसर्व
देवानां पुरा कृतयुगे मुदा ॥ अधिष्ठानकृतायै च प्रकृत्यै च नमोनमः ॥ ७५ ॥ नमस्त्रिपुरहारिण्यै त्रिपुरायै नमोनमः ॥ सुन्दरीषु
च रम्यायै निर्गुणायै नमोनमः ॥ ७६ ॥ नमो निद्रास्वरूपायै निर्गुणायै नमोनमः ॥ नमो दक्षसुतायै च नमः सत्यै नमोनमः ॥
॥ ७७ ॥ नमः शैलसुतायै च पार्वत्यै च नमोनमः ॥ नमोनमस्तपस्विन्यै ह्युमायै च नमोनमः ॥ ७८ ॥ निराहारस्वरूपायै ह्यप
र्णायै नमोनमः ॥ गौरीलोकविलासिन्यै नमो गौर्यै नमोनमः ॥ ७९ ॥ नमः कैलासवासिन्यै माहेश्वर्यै नमोनमः ॥ निद्रायै च
दयायै च श्रद्धायै च नमोनमः ॥ ८० ॥ नमो धृत्यै क्षमायै च लज्जायै च नमोनमः ॥ तृष्णायै क्षुत्स्वरूपायै स्थितिकर्त्र्यै नमोनमः॥
॥ ८१ ॥ नमः संहाररूपिण्यै महामार्यै नमोनमः ॥ भयायै चाभयायै च मुक्तिदायै नमोनमः ॥ ८२ ॥ नमः स्वधायै स्वाहायै शांत्यै
कांत्यै नमोनमः ॥ नमस्तुष्ट्यै च पुष्ट्यै च दयायै च नमो नमः ॥ ८३ ॥ नमो निद्रास्वरूपायै श्रद्धायै च नमोनमः ॥ क्षुत्पिपासास्व
रूपायै लज्जायै च नमोनमः ॥ ८४ ॥ नमो धृत्यै क्षमायै च चेतनायै नमोनमः ॥ सर्वशक्तिस्वरूपिण्यै सर्वमात्रे नमोनमः ॥ ८५ ॥
नमो दाहस्वरूपायै भद्रायै च नमोनमः ॥ शोभायै पूर्णचंद्रे च शरत्पद्मे नमोनमः ॥ ८६ ॥ नास्ति भेदो यथा देवि दुग्धधावल्ययोः
सदा ॥ यथैव गंधभूम्योश्च यथैव जलशैत्ययोः ॥ ८७ ॥ यथैव शब्दनभसोर्ज्योतिःसूर्यकयोर्यथा ॥ लोके वेदे पुराणे च राधामा
धवयोस्तथा ॥ ८८ ॥ चेतनं कुरु कल्याणि देहि मामुत्तरं सति ॥ इत्युक्त्वा चोद्धवस्तत्र प्रणनाम पुनः पुनः ॥ ८९ ॥ इत्युद्धवकृतं

स्तोत्रं यः पठेद्भक्तिपूर्वकम् ॥ इह लोके सुखं भुक्त्वा यात्यंते हरिमंदिरम् ॥ ९० ॥ न भवेद्बंधुविच्छेदो रोगः शोकः सुदारुणः ॥ प्रोषिता स्त्री लभेत्कांतं भार्याभेदी लभेत्प्रियाम् ॥ ९१ ॥ अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् ॥ निर्भूमिर्लभते भूमिं प्रजाहीनो लभेत्प्रजाम् ॥ ९२ ॥ रोगाद्विमुच्यते रोगी बद्धो मुच्येत बंधनात् ॥ भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पंडितः ॥ ९३ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे राधास्तोत्रे द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ श्रीनारायण उवाच ॥ ॥ उद्धवस्तवनं श्रुत्वा चेतनां प्राप्य राधिका ॥ विलोक्य कृष्णाकारं च तमुवाच शुचान्विता ॥ १ ॥ ॥ श्रीराधिकोवाच ॥ ॥ किन्नाम भवतो वत्स केन वा प्रेरितो भवान् ॥ आगतो वा कुत इति ब्रूहि मां केन हेतुना ॥ २ ॥ कृष्णाकृतिस्त्वं सर्वांगैर्मन्ये त्वां कृष्णपार्षदम् ॥ कृष्णस्य कुशलं ब्रूहि बलदेवस्य सांप्रतम् ॥३॥ नंदस्तिष्ठति तत्रैव हेतुना केन तद्वद ॥ समायास्यति गोविंदो रम्य वृन्दावन वनम् ॥ ४ ॥ पुनर्द्रक्ष्यामि तस्यैव पूर्णचंद्रमुखं शुभम् ॥ पुनः क्रीडां करिष्यामि तेनाहं रासमंडले ॥ ५ ॥ जले च विहरिष्यामि पुनर्वा सखिभिः सह ॥ श्रीनंदनंदनांगे च पुनर्दास्यामि चंदनम् ॥ ६ ॥ ॥ उद्धव उवाच ॥ ॥ उद्धवेत्यभिधानं मे क्षत्रियोहं वरानने ॥ प्रेषितः शुभवार्तार्थं कृष्णेन परमात्मना ॥७॥ तवांतिकं समायातः पार्षदोहं हरेरपि ॥ कृष्णस्य बलदेवस्य शिवं नंदस्य सांप्रतम् ॥८॥ ॥ श्रीराधिकोवाच ॥ ॥ अस्ति तद्यमुनाकूलं सुगंधि पवनोस्ति सः ॥ तस्य केलिकदंबानां मूलमस्त्येव सांप्रतम् ॥ ९ ॥ पुण्यं वृन्दावनं रम्यं तद्विद्यमानभीप्सितम् ॥ पुंस्कोकिलानां विरुतं तल्पं चंदनचर्चितम् ॥१०॥ चतुर्विधं च भोज्यं च मधुपानं च सुन्दरम् ॥ दुरंतो दुःखदोप्यस्ति पापिष्ठो मन्मथस्तथा ॥ ११ ॥ ते च रत्नप्रदीपाश्च ज्वलंति रासमंडले ॥ मणींद्रसारनिर्माणमस्त्येवं रतिमंदिरम् ॥१२॥ गोपांगनागणोस्त्येव पूर्णचंद्रोस्ति शोभितः ॥ सुगंधिपुष्पप्रचितं तल्पं चंदनचर्चितम् ॥१३॥ तांबूलं रतिभोगार्हं कर्पूरादिसुसंस्कृतम् ॥ सुगंधिमालतीमाल्यं श्वेतचामरदर्पणम् ॥१४॥ मुक्तामाणिक्यसंसक्तहारहारमनोहरम् ॥ नानोपकाननं रम्यं रम्यक्रीडासरोवरम् ॥१५॥ सुगंधिपुष्पोद्यानं च पद्मश्रेणीमनोहरम् ॥ अस्त्येवं सर्वविभवः

ब्र. वै. क. ॥२१३॥ ...पः कुतो मम ॥ १६ ॥ हा कृष्ण हा रमानाथ क्वासि मे प्राणवल्लभ ॥ क्व वापराधो दास्याश्च दासीदोषः पदेपदे ॥ १७ ॥ अ० ४ ह
इत्येवमुक्त्वा सा देवी पुनर्मूर्च्छामवाप सा ॥ चेतनां कारयामास पुनरेव स उद्धवः ॥ तां दृष्ट्वा परमाश्चर्यं मेने क्षत्रियपुंगवः ॥ १८ ॥
सखीभिः सप्तभिः शश्वत्सेवितां श्वेतचामरैः ॥ गोपीनां च त्रिलक्षैश्च सुप्रियः प्रियसेविताम् ॥ १९ ॥ दिवानिशं वेष्टितां च गोपी अ० ९३
नां शतकोटिभिः ॥ काचित्कज्जलहस्ता च काचिन्माल्यधरापरा ॥ २० ॥ काचित्सिंदूरहस्ता च काचिद्गोरोचनाकरा ॥ काचि
च्चंदनपात्रं च हस्ते कृत्वा च तिष्ठति ॥ २१ ॥ काचिद्दर्पणहस्ता च काचित्कुंकुमवाहिका ॥ कस्तूरीपात्रमिष्टं च काचिद्वहति तत्र
वै ॥ २२ ॥ काचिच्चंपकपात्रं च करे धृत्वा च तिष्ठति ॥ मधुभिर्मधुरैः पूर्णपात्रं धृत्वा शुचान्विता ॥ २३ ॥ काचित्सुगंधि तैलं च
गृहीत्वा परितिष्ठति ॥ काचिद्वहति तांबूलं कर्पूरादिसुवासितम् ॥२४॥ काचिद्वासितमिष्टं च जलं धृत्वा च तिष्ठति ॥ क्रीडापुत्तलिकां
काचिच्चित्राब्जां परिरक्षति ॥ २५ ॥ काचिद्वहति कंदुकं काचिच्च रत्नभूषणम् ॥ वह्निशुद्धांशुकं काचिदमूल्यं परिरक्षति ॥ २६ ॥
काचिद्रत्नोपहारं च गृहीत्वा परिवर्तते ॥ काचिच्च केशवेशार्थं करोति माल्यमीप्सितम् ॥ २७ ॥ काचित्कंकतिकां धृत्वा पुरतः
परितिष्ठति ॥ काचिद्यावकहस्ता च काचिद्धात्रीरसं मुदा ॥ २८ ॥ दूरतोपि वहत्येवं भीता च परितिष्ठति ॥ काचिद्भीता भिया
स्तौति काचिद्रोदिति शोकतः ॥ २९ ॥ काचित्तां बोधयत्येव विदग्धा विरहातुराम् ॥ काचिदुत्तापतप्ता च स्निग्धतल्पे मनोहरे ॥
॥ ३० ॥ स्थापयेद्दाहदूरार्थं स्निग्धपद्मदले शुभे ॥ एवंभूतां च तां दृष्ट्वा चोवाच पुनरुद्धवः ॥ सुप्रियं कर्णपीयूषं विनयेन च भीतवत् ॥
॥ ३१ ॥ ॥ उद्धव उवाच ॥ ॥ जाने त्वां देवदेवीशां सुस्निग्धां सिद्धयोगिनीम् ॥ ३२ ॥ सर्वशक्तिस्वरूपां च मूलप्रकृति
मीश्वरीम् ॥ श्रीदामशापाद्धरणीं प्राप्तां गोलोककामिनीम् ॥ ३३ ॥ कृष्णप्राणाधिकां देवीं तद्वक्षःस्थलवासिनीम् ॥ सर्वशक्तिस्वरूपां
च मूलप्रकृतिमीश्वरीम् ॥ ३४ ॥ शृणु देवि प्रवक्ष्यामि शुभवार्तामभीप्सिताम् ॥ सुस्थिरं सखिभिः सार्द्धं हृदयस्निग्धकारिणीम् ॥ ॥२१३॥
॥ ३५ ॥ दुःखदावाग्निरूपायाः सुधावर्षणरूपिणीम् ॥ विरहव्याधियुक्ताया रसायनसमां शुभाम् ॥ ३६ ॥ तत्र तिष्ठति नंदोयं

सानंदो मुदितः सदा ॥ निमंत्रितश्च वसुना कृष्णोपनयनावधि ॥ ३७ ॥ गृहीत्वा सबलं कृष्णं सांगे मंगलकर्मणि ॥ सनंदः परमा
नंदो मुदा यास्यति गोकुलम् ॥ ३८ ॥ आगत्य कृष्णो मुदितः प्रणम्य मातरं पुनः ॥ नक्तमायास्यति मुदा पुण्यं वृंदावनं वनम् ॥
॥ ३९ ॥ अचिराद्द्रक्ष्यसि सति श्रीकृष्णमुखपंकजम् ॥ सव विरहदुःखं च संत्यक्ष्यसि च सांप्रतम् ॥ ४० ॥ सुस्थिरा भव मातस्त्वं
त्यज शोकं सुदारुणम् ॥ वह्निशुद्धांशुकं रम्यं परिधाय प्रहर्षिता ॥ ४१ ॥ अमूल्यरत्ननिर्माणभूषणग्रहणं कुरु ॥ गृहाण चंदनं स्निग्धं
कस्तूरीकुंकुमान्वितम् ॥ ४२ ॥ कुरुष्व केशसंस्कारं मालतीमाल्यभूषितम् ॥ सुवेषं कुरु कल्याणि गंडे च चित्रपत्रकम् ॥ ४३ ॥
सिंदूरबिंदुं सीमंते कस्तूरीचंदनान्वितम् ॥ अलक्तकाक्तं चरणं युक्तं यावकभूषणैः ॥ ४४ ॥ कुरुष्व तिष्ठ चोत्तिष्ठ रत्नसिंहासने वरे॥
सपंकपंकजं तल्पं त्यज सार्द्धं शुचा सति ॥ ४५ ॥ भुंक्ष्व कृष्णेन मनसा विशुद्धं मधुरं मधु ॥ संस्कृतं भासितं तोयं तांबूलं च
सुवासितम् ॥ ४६ ॥ रत्नेंद्रसारनिर्माणपर्यंके सुमनोहरे ॥ वह्निशुद्धांशुकांते च मालतीमाल्यभूषिते ॥ ४७ ॥ सुगंधियुक्ते कस्तूरी
जातीचंपकचंदनैः ॥ परितो मालतीमाल्यहीरहारविभूषिते ॥ ४८ ॥ मणींद्रमुक्तामाणिक्यसुंदरैश्च परिष्कृते ॥ पुष्पमाल्योपधाने
च मंगलार्हे मुदान्विता ॥ ४९ ॥ शयनं कुरु देवेशि गोपीभिः सेविता सदा ॥ करोति सेवनं शश्वत्प्रियालिः श्वेतचामरैः ॥ ५० ॥
पदारविंदसेवां च गोपीभक्ता मनोहरे ॥ सद्रत्नसारनिर्माणपर्यंके सुमनोहरे ॥५१॥ इत्येवमुक्त्वा स मुने पुनस्तूष्णीं बभूव ह ॥ प्रणम्य
पादपद्मं च ब्रह्मादिसुरवंदितम् ॥ ५२ ॥ उद्धवस्य वचः श्रुत्वा सस्मिता राधिका सती ॥ कौतुकं च ददौ तस्मै रत्नसारांगुलीयकम्॥
॥ ५३ ॥ अमूल्यं सुंदरं रम्यं विश्वकर्मविनिर्मितम् ॥ सुखशोभं पीतवर्णं सुदीप्तं सुप्रदीपवत् ॥ ५४ ॥ कृष्णाय वह्निना दत्तमपूर्वं
रासमंडले ॥ मणिकुंडलयुग्मं चामूल्यरत्नविनिर्मितम् ॥५५॥ अमूल्यरत्ननिर्माणं सर्वभूषणमीप्सितम् ॥ वह्निशुद्धांशुकयुगं रत्ननिर्माण
नायकम् ॥ ५६ ॥ हीरहारविनिर्माणं हारं च सुमनोहरम् ॥ पुरा दत्तं च सुप्रीत्या कृष्णाय वरुणेन च ॥ ५७ ॥
श्रीसूर्येण च यद्दत्तं श्रीकृष्णाय स्यमंतकम् ॥ प्रदत्तं कौतुकं तस्मै यद्दत्तं हरिणा पुरा ॥ ५८ ॥ यद्दत्तं च महेंद्रेण रत्नसिंहासनं

परम् ॥ तत्प्रदत्तं मुदा देव्या तस्मै प्रीत्या च राधया ॥ ५९ ॥ मणींद्रसारनिर्माणं छत्ररत्नं मनोहरम् ॥ मुक्तामाणिक्यसारेण हीरहारसमन्वितम् ॥ ६० ॥ विचित्ररत्नपद्मेन चित्रितं वारुणं सदा ॥ शोभितं परितश्चान्ये रत्ननिर्माणदर्पणैः ॥ ६१ ॥ यद्दत्तं ब्रह्मणा प्रीत्या हरते रासमंडले ॥ सुप्रीत्या राधया तत्र प्रदत्तमुद्धवाय च ॥ ६२ ॥ मणिसारविनिर्माणं मणिराजविराजितम् ॥ जपामाल्यं संस्कृतं च यद्दत्तं शंभुना पुरा ॥ ६३ ॥ तदेव दत्तं तस्मै चाप्यमूल्यं पुण्यदं शुभम् ॥ जन्ममृत्युजराव्याधिहरं चातिमनोहरम् ॥ ६४ ॥ चंद्रकांतमणिं रम्यं चंद्रदत्तं परिष्कृतम् ॥ चंद्रावली ददौ तस्मै सुदीप्तं पूर्णचंद्रवत् ॥ ६५ ॥ विशुद्धं मधुपर्कं च मधुपात्रं यदक्षयम् ॥ धर्मेण यत्प्रदत्तं च तद्दत्तं प्रियया हरेः ॥ ६६ ॥ जलभोजनपात्रं च शुद्धं स्वर्णविनिर्मितम् ॥ मिष्टान्नं परमान्नं च ददौ सुस्वादुमिष्टकम् ॥ ६७ ॥ भोजनं कारयित्वा च कर्पूरादिसुवासितम् ॥ तांबूलं च ददौ शीघ्रं माल्यं सुस्निग्धचंदनम् ॥ ६८ ॥ शुभाशिषं च प्रददौ वांछितं प्रवरं वरम् ॥ ज्ञानं कृष्णेन यद्दत्तं गोलोके रासमंडले ॥ ६९ ॥ पुरुषाणां शतं यावन्निश्चलां कमलां ददौ ॥ विद्यां यशस्करीं शुद्धां यशः कीर्तिं सुनिर्मलाम् ॥ ७० ॥ सर्वसिद्धिं हरेर्दास्यं हरिभक्तिं च निश्चलाम् ॥ पार्षदप्रवरत्वं च पार्षदं च हरेरिति ॥ ७१ ॥ वरं प्रसादं दत्त्वा च समुत्थाय मुदान्वितम् ॥ वह्निशुद्धांशुके धृत्वा चामूल्यं रत्नभूषणम् ॥ ॥ ७२ ॥ हीरहारं रत्नमालां परिधाय मनोहराम् ॥ सिंदूरं कज्जलं पुष्पमाल्यं सुस्निग्धचंदनम् ॥ ७३ ॥ रत्नसिंहासनस्थं तं पूजिता पूजितं मुदा ॥ वेष्टिता हर्षनिरतं गोपीनां शतकोटिभिः ॥ तप्तकांचनवर्णाभा शतचंद्रसमप्रभा ॥ ७४ ॥ ॥ श्रीराधिकोवाच ॥ ॥ सत्यमायास्यति हरिः सत्यं निष्कपटं वद ॥ ७५ ॥ वद तथ्यं भयं त्यक्त्वा सत्यं ब्रूहि सुसंसदि ॥ वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ॥ ७६ ॥ वरं क्रतुशतात्पुत्रः सत्यं पुत्रशतात्किल ॥ न हि सत्यात्परो धर्मो नानृतात्पातकं परम् ॥ ७७ ॥ ॥ उद्धव उवाच ॥ ॥ सत्यमायास्यति हरिः सत्यं द्रक्ष्यसि सुंदरि ॥ ध्रुवं त्यक्ष्यसि संतापं दृष्ट्वा चंद्रमुखं हरेः ॥ ७८ ॥ अहं प्रस्थापयास्यामि गत्वा मधुपुरीं हरिम् ॥ विधाय तत्प्रबोधं च कार्यमन्यत्करिष्यति ॥ ७९ ॥ विदायं कुरु मे मातर्यास्यामि हरिसंनिधिम् ॥

सर्वं तं कथयिष्यामि त्वद्वृत्तांतं यथोचितम् ॥ ८० ॥ ॥ श्रीराधिकोवाच ॥ ॥ गमिष्यसि यदा वत्स मथुरां सुमनोहराम् ॥ शृणु
दुःखकथां कांचित्तिष्ठ वत्स स्थिरो भव ॥ ८१ ॥ मां विस्मृतो न भवसि विरहज्वरकातराम् ॥ कथयिष्यामि मत्कांतं ध्रुवं प्रस्थापयि
ष्यसि ॥ ८२ ॥ नारीणां मनसो वार्तां को वा जानाति पंडितः ॥ किंचिच्छास्त्रानुसारेण प्रकरोति निरूपणम् ॥ ८३ ॥ वेदा
वक्तुं न शक्ताश्च शास्त्राणि किं वदंति च ॥ कथयिष्यामि त्वां सर्वं पुत्र कृष्णं च वक्ष्यसि ॥ ८४ ॥ गेहे वने न भेदो मे पश्वादिषु
यथा नृषु ॥ किं वा जलं किमु स्वप्नमज्ञानं च दिवानिशम् ॥ ८५ ॥ आत्मानं च न जानामि चोदयं चंद्रसूर्ययोः ॥ क्षणं प्राप्य हरे
र्वार्तां चेतनं मे बभूव ह ॥ ८६ ॥ कृष्णाकृतिं च पश्यामि शृणोमि मुरलीध्वनिम् ॥ कुलं लज्जां भयं त्यक्त्वा चिंतयामि हरेः प
दम् ॥ ८७ ॥ संप्राप्य सर्वजगतामीश्वरं प्रकृतेः परम् ॥ न ज्ञानं मायया तस्य ज्ञात्वा गोपपतेर्मम ॥ ८८ ॥ ध्यायंते यत्पदांभोजं
वेदा ब्रह्मादयः सुराः ॥ स भर्त्सितो मया कोपाद्धृदि शल्यमिदं मम ॥ ८९ ॥ तत्पदांभोजसेवाभिर्गुणप्रस्तावतोपि वा ॥ तद्भक्त्या
यत्क्षणो नीतो ध्यानेन पूजयाथ वा ॥ ९० ॥ तत्रापि मंगलं सर्वं हर्षमायुर्व्यवस्थितम् ॥ विघ्नं च हृदि संतापस्तद्विच्छेदे सदोद्धव
॥ ९१ ॥ क्रीडाप्रीतिर्न भविता तादृशीष्टा पुनर्मम ॥ तादृशं प्रेमसौभाग्यं निर्जने न च संगमः ॥९२॥ वृन्दावनं न यास्यामि तत्संगे
पुनरुद्धव ॥ चंदनं वा न दास्यामि नंदनंदनवक्षसि ॥ ९३ ॥ मालां तस्मै न दास्यामि न द्रक्ष्यामि मुखांबुजम् ॥ मालतीनां केत
कीनां चंपकानां च काननम् ॥ ९४ ॥ पुनरेव न यास्यामि सुन्दरं रासमंडलम् ॥ हरिसंगे न यास्यामि रम्यं चंदनकाननम् ॥९५॥
पुनरेव न यास्यामि मलयं रत्नमंदिरे ॥ माधवीनां वनं रम्यं रहस्यं मधुकाननम् ॥९६॥ श्रीखंडकाननं रम्यं स्वच्छं चंद्रसरोवरम् ॥
विस्पंदकं सुरवनं नंदनं पुष्पभद्रकम् ॥ ९७ ॥ भद्रकं हरिणा सार्द्धं न यास्यामि पुनः पुनः ॥ क्व सा रम्या विकसिता माधवे माध
वीलता ॥ ९८ ॥ क्व गता माधवीरात्रिः क्व मधुः क्वापि माधवः ॥ इत्येवमुक्त्वा सा राधा ध्यात्वा कृष्णपदांबुजम् ॥ ९९ ॥ पुन
र्मूर्च्छां च संप्राप्य रुदती पुलकान्विता ॥१००॥ इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे राधो

द्धवसंवादे त्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ श्रीनारायण उवाच ॥ ॥ उद्धवो विस्मयं प्राप्य भयं च विपुलं मुने ॥ चेतनं
कारयामास तामुवाच मृतामिव ॥ १ ॥ तद्भक्तिं समभिज्ञाय स्वात्मानं भक्तसंस्तवकम् ॥ तुच्छं मेने जगत्सर्वं दृष्ट्वा भाग्यवतीं
सतीम् ॥ २ ॥ ॥ उद्धव उवाच ॥ ॥ चेतनं कुरु कल्याणि जगन्मातर्नमोस्तु ते ॥ त्वमेव प्राक्तनं सर्वं कृष्णं द्रक्ष्यसि सांप्र
तम् ॥ ३ ॥ त्वत्तो विश्वं पवित्रं च त्वत्पादरजसा मही ॥ सुपवित्रं त्वद्वदनं पुण्यवत्यश्च गोपिकाः ॥ ४ ॥ लोकास्त्वामेव
गायंति संगीतैर्मंगलस्तवैः ॥ त्वत्सुकीर्तिं च देवाश्च सनकाद्याश्च संततम् ॥ ५ ॥ कृतपापहरां पुण्यां तीर्थपूजां च निर्मलाम् ॥
हरिभक्तिप्रदां भद्रां सर्वविघ्नविनाशिनीम् ॥ ६ ॥ त्वमेव राधा त्वं कृष्णस्त्वं पुमान्प्रकृतिः परा ॥ राधामाधवयोर्भेदो न
पुराणे श्रुतौ तथा ॥ ७ ॥ राधिकां मूर्च्छितां दृष्ट्वा पश्चात्कृत्वा तमुद्धवम् ॥ उवाच माधवी गोपी राधायाः पुरतः स्थिता ॥ ८ ॥
॥ ॥ माधव्युवाच ॥ ॥ किं वा चोरस्य कृष्णस्य रूपं वा वेषमुत्तमम् ॥ किं सुखं विभवं किं वा गौरवं चाप्यनुत्तमम् ॥ ९ ॥ किं वा
तद्वीर्यमैश्वर्यं शौर्यं वा दुरतिक्रमम् ॥ किं वा सिद्धं प्रसिद्धं वा किं वा तुल्यं गुणोत्तमम् ॥ १० ॥ इतो वा कुत आयातः पुनरेव कुतो
गतः ॥ बालको गोपवेषश्च न हि राजात्मजः पुमान् ॥ ११ ॥ त्वं किं स्मरसि कल्याणि गोपालं नंदनंदनम् ॥ आत्मानं रक्ष यत्नेन
कः प्रियः स्वात्मनः परः ॥ १२ ॥ ॥ ॥ मालत्युवाच ॥ ॥ धिक्त्वां राधेतिऽनिर्लज्जां तवैव जीवनं वृथा ॥ जगतो युवतीनां च
करोषि सुयशःक्षयम् ॥ १३ ॥ नारीणां गोपनं कार्यं सुव्यक्ते स्वयशःक्षयम् ॥ यत्नेन चक्षुषो वाई सखि संचरणं कुरु ॥ अंतरे पति
भावं च संगोप्य भावनं कुरु ॥ १४ ॥ न वै जातिश्च शत्रूणां मित्राणां च सुरेश्वरि ॥ शत्रुः कार्यवशेनैव मित्रं च कर्मणा भवेत् ॥ १५ ॥
स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसेन मूर्खता ॥ कः कस्य वल्लभो राधे कः कस्याप्रिय एव च ॥ १६ ॥ कार्यं च समयं ज्ञात्वा संतः
कुर्वंति संततम् ॥ सत्पुर्वनापहारी च प्राणहर्ता ततः परः ॥ १७ ॥ कटुवक्ता दुःखदाता शत्रूणां लक्षणं शृणु ॥ स्वकुलात्त्वां बहिष्कृत्य
विसृज्य शोकसागरे ॥ १८ ॥ गृहीत्वा चेतनं प्राणान्निष्ठुरो दारुणो गतः ॥ किं किं स्मरसि मूढे हि त्यज शोकं सुदारुणम् ॥ १९ ॥

आत्मानं रक्ष यत्नेन कः प्रियः स्वात्मनः परः ॥ २० ॥ ॥ पद्मावत्युवाच ॥ ॥ भवता कथितं पूर्वं यमुनावल्लभीयो ॥ भरतस्य रतिर्दूरं नारीणां न सुखं प्रिये ॥ विद्युज्ज्वाला जले रेखा खलानां प्रीतिरेव च ॥ २१ ॥ न नीतिर्नो तिशास्त्रेषु सुविश्वासः खलेषु च ॥ यदा त्वं यमुनाकूले मुखं वीक्ष्य हरेरहो ॥ २२ ॥ सस्मितं मुकटाक्षं च पुनः कृत्वास्य गोपनम् ॥ पुनः पुनस्त्वं संवीक्ष्य त्वया त्यक्तं च चेतनम् ॥ २३ ॥ गृहं त्यक्त्वा गुरुभयं सखीनां वचनं शुभम् ॥ संततं ध्यायते कृष्णो नाहारं जीवनं तथा ॥ २४ ॥ क कृष्णो मथुरायां च कापि त्वं कदलीवने ॥ त्वं यदि त्यजसि प्राणान्निर्भवति सोधुना ॥ काले द्रक्ष्यसि स्वात्मानं यदि रक्षसि सुंदरि ॥ २५ ॥ ॥ चंद्रमुख्युवाच ॥ ॥ प्राक्तनेन शुभं सर्वं सुखं च विभवश्चिरम् ॥ २६ ॥ दुःखं शोको प्राक्तनेन विपत्सं पच्च सांप्रतम् ॥ भारते पुण्यभूमौ च सर्वेषामीप्सिते वदे ॥ २७ ॥ लभेत्पतिं हरिं कांतं तपसा प्रकृतेः परम् ॥ तथा विप्रदहेद्गात्रं काम बाणेन सांप्रतम् ॥ २८ ॥ अस्याः शत्रुः कथं चंद्रो मधुर्वा मधुमाधवौ ॥ शंकरेण प्रदग्धोभूत्पुनरेव स मन्मथः ॥ २९ ॥ चंद्र भक्षतु राहुश्च पुनश्चोद्गमनं तथा ॥ मधुश्च मित्रशोकेन प्राणांस्त्यक्त्वा ययौ वनम् ॥ ३० ॥ सुधासिंधुश्च चेंदुर्यो विषासिंधुश्च मां प्रति ॥ सुवेषः स्याज्ज्वलद्वह्निश्चंदनं तद् घृताहुतिः ॥ ३१ ॥ संततं प्रदहेद्गात्रं सुगंधिश्च समीरणः ॥ त्यक्ताहारा मम सखी पश्य श्वसित जीवतीम् ॥३२॥ प्रशंसां कुरु कृष्णस्य मुखेन कुरुनंदन ॥ तन्नामस्मृतिमात्रेण तद्गुणश्रवणेन च ॥ तद्वार्तया च शुभया सहसा चेतनं भवेत् ॥ ३३ ॥ ॥ शशिकलोवाच ॥ ॥ त्वं किं माधवि जानासि कृष्णमात्मानमीश्वरम् ॥ ३४ ॥ यं तं ब्रह्मादयो देवा वेदाश्च त्वार एव च ॥ ध्यायंति संततं संतः पादपद्मं सुरेप्सितम् ॥ ३५ ॥ पद्मा सरस्वती दुर्गा सोनंतोपि महेश्वरः ॥ यं न जानंति सिद्धेंद्रा मुनींद्रा मनवस्तथा ॥ ३६ ॥ सर्वात्मनः कुतो रूपं निर्गुणस्य कुतो गुणाः ॥ सत्यमुक्तं च सत्यस्य यत्तदेव यथोचितम् ॥ ३७ ॥ धत्ते भारावतरणे पृथिव्याश्च मनोहरम् ॥ सुखमाह्लादकं रम्यं भक्तानुग्रहविग्रहम् ॥ ३८ ॥ किमनिर्वचनीयं च रूपं जनमनोहरम् ॥ कोटिकंदर्पलावण्यं लीलाधाम शुभाश्रयम् ॥ ३९ ॥ यत्पादपद्ममधुरं मधु मंदाकिनीजलम् ॥ दध्रे शिरसि भक्त्या च सर्वेशः शंकरः

अपरः ॥ ४० ॥ शश्वत्करोति वैरागी तीर्थकीर्तेश्च कीर्तनम् ॥ क्षणं नृत्यति भक्त्या च पंचवक्त्रेण गायति ॥ ४१ ॥ अहारं भू
षणं वस्त्रं परित्यज्य दिगंबरः ॥ ब्रह्म ज्योतिःस्वरूपं च ध्यात्वा शुभ्रं सुनिर्मलम् ॥ ४२ ॥ ब्रह्मा च तपसा जन्म नयंत्येव हि सेवया ॥
शेषः सनत्कुमारश्च सिद्धसंघश्च योगवित् ॥ ४३ ॥ ॥ सुशीलोवाच ॥ ॥ निर्मंथनार्हं न भवेत्तस्य कामशतं शतम् ॥ चंद्रोऽश्वि
नीकुमारो वा रूपेषु केन गुण्यते ॥ ४४ ॥ असंख्येषु च विश्वेषु ब्रह्मविष्णुशिवादयः ॥ मुनयो मनवः सिद्धा भक्ताः संतश्च संततम् ॥
॥ ४५ ॥ ध्यायंते यत्पदांभोजं निर्गुणस्यात्मनश्च वै ॥ वेदाः स्तोतुं न शक्ताश्च यमीशं च सरस्वती ॥४६॥ जडीभूता च भीता च स्तव
नेन क्षमापयेत् ॥ सहस्रवक्त्रः स्तवने कंपितश्च निरंतरम् ॥ ४७ ॥ वेदानां जनको ब्रह्मा स्तोत्रेण तस्य ईश्वरः ॥ तं सत्यं नित्यमीशं
च माधवी परिनिंदति ॥ ४८ ॥ अपवित्रा सभा भूता गोपीनां जीवनं वृथा ॥ तासु पुण्यवती राधा ध्यायते यं दिवानिशम् ॥ ४९ ॥
यन्नामस्मृतिमात्रेण कोटिजन्मार्जितं सखि ॥ कृतपापभयं शोकः प्रणश्यति न संशयः ॥५०॥ ॥ रत्नमालोवाच ॥ ॥ दधार वामहस्तेन
शैलं गोवर्धनं हरिः ॥ ततः किं तद्यशः शौर्यं जगतां जनकस्य च ॥५१॥ शैलानां च सहस्रं यो भेत्तुं शक्तश्च दैत्यराट् ॥ लीलामात्रेण तेषां
च लक्षं हंतुं क्षमो हरिः ॥ ५२ ॥ यदंशकलया जातः सूकरो विष्णुरीश्वरः ॥ वसुधां दशनाग्रेण चोद्दधार च लीलया ॥५३॥ शैलानां च सह
स्राणि यत्र संति महीतले ॥ दैत्याश्च वाप्यसंख्याश्च वीराः शूरास्तथैव च ॥ ५४ ॥ तेनैव कर्मणा तस्य न शौर्यं न च पौरुषम् ॥
न यशश्च प्रशंसा वा सखि सर्वात्मनात्मना ॥ ५५ ॥ ॥ पारिजातोवाच ॥ ॥ सप्तद्वीपा च वसुधा सशैलवनसागरा ॥ कांचनीभू
मिसहिता सर्वाधारा मनोहरा ॥ ५६ ॥ सप्तस्वर्गाश्च विविधा ब्रह्मलोकावधिप्रिये ॥ विचित्राः सुन्दराश्चैव पातालानां च सप्त च
॥ ५७ ॥ एतैः परिमितं विश्वं ब्रह्मांडं ब्रह्मणा कृतम् ॥ महद्विष्णोर्लोमकूपे तदेवं चाणुवत्स्थितम् ॥ ५८ ॥ तस्य यावंति लोमा
नि तानि विश्वानि संति च ॥ स एव षोडशांशश्च कृष्णस्य परमात्मनः ॥ ५९ ॥ तस्यैव किं यशः शौर्यं महिमानमनूपमम् ॥
यत्स्मरी गोपकन्या च किं वा जानाति माधवी ॥ ६० ॥ ॥ माधव्युवाच ॥ ॥ मया यदुक्तं न ज्ञात्वा मूढा जल्पंति गोपिकाः ॥

उद्धव शृणु मे वाक्यं यन्मया कथितं शुभम् ॥ ६१ ॥ स्वेच्छया सगुणो विष्णुः स्वेच्छया निर्गुणो भवेत् ॥ भुवो भारावतर
णे गोपवेषः शिशुर्विभुः ॥ ६२ ॥ यदि वेदाः पुराणानि सिद्धाः संतश्च संततम् ॥ ब्रह्मेशशेषभक्ताश्च न जानंति यमीश्वरम् ॥ ६३ ॥
तं किं जानामि मूढाहं यत्स्मरी गोपकन्यका ॥ तथापि मद्वचः सत्यं श्रूयतां वत्स तत्क्षणम् ॥ ६४ ॥ किमनिर्वचनीयं च रूपं शौ
र्यं यशो बलम् ॥ वीर्यं वेषं च सिद्धिं चाप्यन्यो वा यो गुणो हरेः ॥ ६५ ॥ स्वेच्छामयस्य तस्यैव सगुणस्य च सांप्रतम् ॥ किम
निर्वचनीयं च वर्तते तद्विशेषणम् ॥ ६६ ॥ निर्गुणस्य च विष्णोश्च देहहीनश्च स्वात्मवान् ॥ वर्तते च किमाख्येयं तस्य रूपादिकं च
किम् ॥ ६७ ॥ मां निंदति महामूढा न बुद्ध्वा वचनं मम ॥ एषा जानाति किं मूढा तं सत्यं प्रकृतेः परम् ॥ ६८ ॥ ज्योतिःस्व
रूपं परमं परमात्मानमीश्वरम् ॥ तमनिर्वचनीयं च भक्तानुग्रहविग्रहम् ॥ ६९ ॥ यत्पादपद्मं पद्मा सा त्रैलोक्यजननी परा ॥ सेवते
कल्पिता भीता दासीवत्सततं भिया ॥ ७० ॥ विष्णुमाया च प्रकृतिर्मूलरूपा सनातनी ॥ ब्रह्मस्वरूपा परमा भीता दक्षिणपार्श्वे
तः ॥ ७१ ॥ सरस्वती जडीभूता भीता च परमेश्वरी ॥ स्तोतुं न शक्ता वेदाः किं स्तुवंति परमेश्वरम् ॥ ७२ ॥ तासां तद्वचनं श्रुत्वा
चोद्धवो भक्तिविह्वलः ॥ पुलकांचितसर्वांगो रुरोद च पपात च ॥ ७३ ॥ मूर्च्छां संप्राप्य भक्त्या च ध्यात्वा तं परमेश्वरम् ॥ तुच्छं
मेने स चात्मानं गोपीं भक्त्याप्युवाच सः ॥ ७४ ॥ ॥ उद्धव उवाच ॥ ॥ धन्यं यशस्यं द्वीपानां जंबूद्वीपं मनोहरम् ॥ यत्र
भारतवर्षं च पुण्यदं शुभदं तथा ॥ ७५ ॥ वणिजां च पुण्यकृतं वाणिज्यस्थलमीप्सितम् ॥ अत्र कृत्वा सुपुण्यं च भुंक्तेन्यत्र शुभं फ
लम् ॥ ७६ ॥ धन्यं भारतवर्षं च पुण्यदं शुभदं वरम् ॥ गोपीपादाब्जरजसा पूतं परमनिर्मलम् ॥ ७७ ॥ ततोपि गोपिका धन्या मा
न्या योषित्सु भारते ॥ नित्यं पश्यंति राधायाः पादपद्मं सुपुण्यदम् ॥ ७८ ॥ षष्टिवर्षसहस्राणि तपस्ततं च ब्रह्मणा ॥ राधिकापाद
पद्मस्य रेणूनामुपलब्धये ॥ ७९ ॥ गोलोकवासिनी राधा कृष्णप्राणाधिका परा ॥ तत्र श्रीदामशापेन वृषभानसुताधुना ॥ ८० ॥
ये ये भक्ताश्च कृष्णस्य देवा ब्रह्मादयस्तथा ॥ राधायाश्चापि गोपीनां कलां नार्हंति षोडशीम् ॥ ८१ ॥ कृष्णभक्तिं विजानाति योगीं

द्रश्च महेश्वरः ॥ राधा गोप्यश्च गोपाश्च गोलोकवासिनश्च ये ॥ ८२ ॥ किंचित्सनत्कुमारश्च ब्रह्मा चेद्विषयी तथा ॥ किंचिदेव विजा
नंति सिद्धा भक्ताश्च निश्चितम् ॥ ८३ ॥ धन्योहं कृतकृत्योहमागतो गोकुलं यतः ॥ गोपिकाभ्यो गुरुभ्यश्च हरिभक्तिं लभेचलाम्
॥ ८४ ॥ मथुरां च न यास्यामि तीर्थकीर्तेश्च कीर्तनम् ॥ श्रोष्यामि किंकरो भूत्वा गोपीनां जन्मजन्मनि ॥ ८५ ॥ न गोपीभ्यः
परो भक्तो हरेश्च परमात्मनः ॥ यादृशीं लेभिरे गोप्यो भक्तिं नान्ये च तादृशीम् ॥ ८६ ॥ ॥ कलावत्युवाच ॥ ॥ पितॄणां मान
सी कन्या धन्या मेना कलावती ॥ वयं तिस्रो भगिन्यश्च भ्रमामः पृथिवीतले ॥ ८७ ॥ धन्या जनकपत्नी च सीतामाता पतिव्रता ॥
अयोनिसंभवा राधा अहं चायोनिसंभवा ॥ ८८ ॥ राधा श्रीदामशापेन वृषभानसुता भुवि ॥ सनत्कुमारशापेन वयमेव महीतले
॥ ८९ ॥ क्षीरोदसागरं रम्यं श्वेतद्वीपं मनोहरम् ॥ तिस्रो भगिन्यो भक्त्या च विष्णुं द्रष्टुं गता वयम् ॥ ९० ॥ अभ्युत्थानादि न कृ
तं कोपादस्मान्छशाप ह ॥ सनत्कुमारो भगवान्योगींद्राणां गुरुर्गुरुः ॥ ९१ ॥ ॥ सनत्कुमार उवाच ॥ ॥ मूढास्तिष्ठत भूमौ च
पुनः स्वर्गं न यास्यथ ॥ मर्त्यप्राणिप्रिया भूत्वा चाहंकारेण हेतुना ॥ ९२ ॥ पुनर्वरं च प्रत्येकं ददौ तुष्टो द्विजेश्वरः ॥ विष्णोर्वंशस्य
शैलस्य हिमाधारस्य कामिनी ॥ ९३ ॥ ज्येष्ठा भवतु त्वत्कन्या भविष्यत्येव पार्वती ॥ धन्या प्रिया तु भवतु योगिनो जनकस्य
च ॥ ९४ ॥ तस्य कन्या महालक्ष्मीः सीतादेवी भविष्यति ॥ वृषभानस्य वैश्यस्य योगिनां प्रवरस्य च ॥ ९५ ॥ दुर्वाससश्च शि
ष्यस्य कनिष्ठा च कलावती ॥ भविष्यति प्रिया साध्वी द्वापरांते च गोकुले ॥ ९६ ॥ कलावतीसुता राधा देवी गोलोक
वासिनी ॥ श्रीदामगोपशापेन भविष्यति न संशयः ॥ ९७ ॥ ईशो ब्रह्मेशशेषाणां भारावतरणेन च ॥ आगमिष्यति पृथ्वीं च
पुण्यक्षेत्रं च भारतम् ॥ ९८ ॥ कलावती वृषभानः कौतुकात् कन्यया सह ॥ जीवन्मुक्तश्च गोलोकं गमिष्यति न
संशयः ॥ ९९ ॥ धन्या च सीतया सार्द्धं वैकुण्ठं च गमिष्यति ॥ मेनका योगिनी सिद्धा पार्वत्याश्च वरेण च ॥ १०० ॥
कल्पांते विष्णुलोके च लक्ष्मीवन्मोदते चिरम् ॥ विना विपत्त्या महिमा केषां कुत्र भविष्यति ॥ १ ॥ कर्मणा च गते

दुःखे प्रभवेद्दुर्लभं सुखम् ॥ पुरा पितॄणां कन्याश्च स्वर्गभोगविलासिकाः ॥ २ ॥ लक्ष्मीसमा वरेणापि विप्रस्य विष्णुदर्शनात् ॥
कर्मक्षयं चाप्यस्माकं बभूव विष्णुदर्शनात् ॥ ३ ॥ पुण्येन तेन तीव्रेण कुमारस्यापि दर्शनम् ॥ श्रुतं तत्र कुमारास्याज्ज्ञानं परम
दुर्लभम् ॥ ४ ॥ ब्रह्मविष्णुशिवादीनां सिद्धानां जगतामपि ॥ ईश्वरः परमात्मा च श्रीकृष्णः प्रकृतेः परः ॥ निर्गुणश्च निरीहश्च
परः स्वेच्छामयो वरः ॥५॥ ॥ तुलस्युवाच ॥ ॥ सर्वप्राणिषु देवाश्च तिष्ठंत्येव पृथक्पृथक् ॥ ६ ॥ प्राणो विष्णुश्च विषयी मनो ब्रह्मा
च चेतना ॥ प्रकृतिर्बुद्धिरूपा च सर्वशक्त्यधिदेवता ॥ ७ ॥ ज्ञानस्वरूपः शंभुश्च स्वयं धर्मश्च पूरुषः ॥ निर्गुणः परमात्मा च तद्ब्र
ह्म प्रकृतेः परम् ॥ ८ ॥ स एव कृष्णः साक्षी च कर्मणां जीविनामपि ॥ भोक्ता च सुखदुःखानां जीवस्तत्प्रतिबिंबकः ॥ ९ ॥
चक्षुषोश्चंद्रसूर्यौ च जिह्वायां च सरस्वती ॥ वसुंधरा त्वचि सदा बाह्वोस्ते लोकपालकाः ॥ १० ॥ आत्मनश्चापि ते सर्वे परिचारक
रूपिणः ॥ आत्मन्येव प्रियास्ते च सर्वे गच्छंति जीविनः ॥ ११ ॥ यथा संसदि संसारे नरदेहमिवानुगाः ॥ तस्मात्सर्वात्मना
त्मानं भजंति संततं सदा ॥ १२ ॥ संतश्च परया भक्त्या ध्यायंते योगिनो मुदा ॥ कर्मिणां कर्मणां साक्षी कुतः कर्म च गोपनम् ॥
अन्तर्यामी च कृष्णश्च प्रचारं कुरुते मुदा ॥१३॥ ॥ कालिकोवाच ॥ ॥ नरा बालाश्च वृद्धाश्च युवानस्त्रिविधास्तथा ॥ १४॥ देवाद्यश्च
ये सिद्धाः सर्वे जानंति तं परम् ॥ सांप्रतं मूर्च्छितां राधां युक्तो बोधयितुं बुधः ॥१५॥ अत्र युक्तिः प्रधाना च तां प्रबोधय चोद्धव ॥
॥ उद्धव उवाच ॥ ॥ चेतनं कुरु कल्याणि जगन्मातर्निबोध माम् ॥ १६ ॥ उद्धवं कृष्णभक्तस्य किंकरस्यापि किंकरम् ॥
प्रसादं कुरु मातर्मां यास्यामि मथुरां पुनः ॥ १७ ॥ न स्वतंत्रः पराधीनो योषा दारुमयी यथा ॥ यथा वृषो वशीभूतो वृषवाहस्य
संततम् ॥ १८ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे राधोद्धवसंवादे चतुर्नवति
तमोऽध्यायः ॥ ९४ ॥ ॥ श्रीनारायण उवाच ॥ ॥ उद्धवस्य वचः श्रुत्वा चेतनं प्राप्य राधिका ॥ सा चोवाच समुत्थाय रत्नसिंहा
सने वरे ॥ १ ॥ उवाच मधुरं देवी हृदयेन विदूयता ॥ गोपीभिः सप्तभिर्भक्त्या सेविता श्वेतचामरैः ॥ २ ॥ ॥ श्रीराधिकोवाच ॥ ॥

मधुरां गच्छ वत्स त्वं मां च विस्मर संपदा ॥ अतोप्यधर्मो नास्त्येव भवतो भवसागरे ॥ ३ ॥ मदीयं वचनं सर्वं गत्वा कथय सांप्रतम् ॥ श्रीकृष्णं परमानन्दं शीघ्रमानय मत्प्रभुम् ॥ ४ ॥ योषिज्जन्मनि योषित्सु संप्राप्य तादृशं पतिम् ॥ भेदो बभूव. कस्या वा मदन्या कापि दुःखिनी ॥ ५ ॥ किं ददासि प्रबोधं मे नास्ति मे बोधमौचितम् ॥ निष्फलो देहिनां देहो विनात्मानं सदोद्धव ॥ ॥ ६ ॥ संप्रीत्या सह सौभाग्यं गौरवं नित्यनूतनम् ॥ अतीव दुर्लभं प्रेम रहस्यं नवसंगमम् ॥ ७ ॥ स्मरास्मि मनसा शश्वन्नान्यो मनसि वर्तते ॥ रात्रौ निद्रां परित्यज्य स्मरणं शोकवर्धनम् ॥ ८ ॥ मामुद्धर ध्रुवं वत्स निमग्नां शोकसागरे ॥ जीवाभयप्रदानेन तीर्थे स्नानफलं नृणाम् ॥ ९ ॥ प्रबोधितुं न शक्नोमि दुर्निवारं च मानसम् ॥ चिंतये चरणांभोजं कृष्णस्य परमात्मनः ॥ १० ॥ तद्गुणं महिमानं च प्रीतिं च प्रेमसागरम् ॥ स्मारंस्मारं च सौभाग्यं मनो मे न स्थिरं चरम् ॥ ११ ॥ जगतां युवतीनां च कासां वा दुःखमीदृशम् ॥ श्रीकृष्णभेददुःखं च का वा जानाति मां विना ॥ १२ ॥ किंचिज्जानाति सीता साप्यहं च विधिबोधितम् ॥ मत्परा दुःखिनी नास्ति कामिनीषु जगत्त्रये ॥ १३ ॥ का वा याति प्रतीतिं मे श्रुत्वा च मानसीं व्यथाम् ॥ कासां वा मत्समं दुःखं युवतीनां सुतोद्धव ॥ १४ ॥ राधिकासदृशी स्त्रीषु न भूता न भविष्यति ॥ दुःखिनी विरहातप्ता सुखसौभाग्यवर्जिता ॥ १५ ॥ संप्राप्य कल्पवृक्षं च पतिं च जगतां पतिम् ॥ वंचिताहं विधात्रा च निर्दयेन च पापिना ॥ १६ ॥ जीवनं सफलं जन्म सुस्निग्धं चक्षुषी मनः ॥ तत्पादपद्मवक्त्रेंदुरूपवेषप्रदर्शनात् ॥ १७ ॥ यन्नामश्रुतिमात्रेण पंच प्राणाः प्रहर्षिताः ॥ स्मृतिमात्रात्प्रफुल्लयन्ते आत्मा सुस्निग्ध एव च ॥ १८ ॥ यश्च पस्पर्श सुरतौ यशस्त्रिभुवनेष्वपि ॥ कया वा संपदा वत्स विस्मरामि तमीश्वरम् ॥ १९ ॥ त्रैलोक्य विजयं रूपं गुणमेव बिभर्ति यत् ॥ न निर्मितो यो विधिना तेनैव निर्मितो विधिः ॥ २० ॥ तं विधेश्च विधातारं दातारं सर्वसंपदाम् ॥ कल्पवृक्षात्परं शांतं लक्ष्मीकांतं मनोहरम् ॥ २१ ॥ सर्वेशं सर्वबीजं च परमात्मानमीश्वरम् ॥ कया वा संपदा तात विस्मरामि च तं पतिम् ॥ २२ ॥ यस्य निर्मथनाहं च न चंद्रो न च मन्मथः ॥ नैवाश्विनीकुमारश्च गुणसाम्यं न विश्वतः ॥ २३ ॥

ध्यायंते यत्पदांभोजं ब्रह्मेशशेषसंज्ञकाः ॥ कया वा संपदा तात विस्मरामि च तं प्रभुम् ॥ २४ ॥ स्वप्ने पश्यंति ये रूपमतुलं च मनो
हरम् ॥ तेपि सर्वं परित्यज्य ध्यायंते तमहर्निशम् ॥ २५ ॥ गुणेन शैलः सलिलं शुष्ककाष्ठं द्रवेदिति ॥ मृतवृक्षो मुकुलितः स्तंभितश्च
समीरणः ॥ २६ ॥ सूर्यश्च जलधिश्चैव स्थगितो भक्तिभावतः ॥ कया वा संपदा पुत्र विस्मरामि च तं प्रियम् ॥ २७ ॥ यद्भयाद्वाति
वातोयं सूर्यस्तपति यद्भयात् ॥ वर्षतींद्रो दहत्यग्निर्मृत्युश्चरति जंतुषु ॥ २८ ॥ यद्भयात्फलिता वृक्षाः पुष्पिताः समयेपि च ॥ समुद्राः
स्वात्मविषये ग्रहाश्च मुनयः सुराः ॥ २९ ॥ कालस्य कालः संवर्तः संहर्ता स्रष्टुरीश्वरः ॥ स्वाधीनश्च स्वतंत्रश्च स्वयमेवात्मसंज्ञकः ॥
॥ ३० ॥ कया वा संपदा भक्त विस्मरामि च तं प्रभुम् ॥ प्रबोधो नास्ति तद्भेदे येन मां बोधयेद्बुधः ॥ ३१ ॥ मां च बोधयितुं शक्ता
न सावित्री सरस्वती ॥ न वेदा न च वेदांगाः के वा संतश्च के सुराः ॥ ३२ ॥ सहस्रवक्त्रोनंतश्च वेदानां जनको विधिः ॥ न शंभुर्न
गणेशश्च योगींद्राणां गुरोर्गुरुः ॥ ३३ ॥ स्थितेर्गतिश्चिंतनीया मार्गशून्ये कुतो गतिः ॥ कालसाध्यं च सर्वं च सुखं दुःखं शुभाशुभम् ॥
॥ ३४ ॥ दुर्निवारः स कालश्च कालसाध्यं जगत्सु च ॥ उत्तिष्ठ मथुरां गच्छ सुखं वत्स मनोहरम् ॥ ३५ ॥ व्रजवासं परित्यज्य भवां
श्च गमनोत्सुकः ॥ सुचिरं कृष्णविच्छेदो दुःखाय न सुखाय च ॥ ३६ ॥ पश्य चंद्रमुखं तस्य जन्ममृत्युजरापहम् ॥ राधिकावचनं
श्रुत्वा रुरोद भृशमुद्धवः ॥ रुदंतीं राधिकां दृष्ट्वा बंधुविच्छेदकातराम् ॥ ३७ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्त
रार्धे नारायणनारदसंवादे राधोद्धवसंवादे पंचनवतितमोऽध्यायः ॥९५॥ ॥ श्रीनारायण उवाच ॥ ॥ श्रीकृष्णस्मरणं कृत्वा गम
नोन्मुखमुद्धवम् ॥ नतं राधापदांभोजे शिरसा पुलकांचितम् ॥ १ ॥ उवाच माधवी गोपी रुदंती प्रेमविह्वला ॥ भक्तं रुदंतमुच्चैश्च
राधाविच्छेदकातरम् ॥ २ ॥ ॥ माधव्युवाच ॥ ॥ उद्धव शृणु वक्ष्यामि क्षणं तिष्ठ यथोचितम् ॥ निगूढं परमं ज्ञानं यत्ते मन
सि वाञ्छितम् ॥ ३ ॥ सुदुर्लभं पुराणेषु वेदेषु गोपनीयकम् ॥ प्रश्नं कुरु महाभाग राधिकां त्रिजगत्प्रसूम् ॥ ४ ॥ इत्युक्त्वा सा च
गोपीशा समुवास सुसंसदि ॥ उवाच मधुरं शांतामुद्धवश्चापि राधिकाम् ॥ ५ ॥ ॥ उद्धव उवाच ॥ ॥ एकाकी भर्वमायाति

यात्येकाकी पुनःपुनः ॥ प्राणी कर्मानुरोधेन स्वकर्मफलभुक्पुमान् ॥ ६ ॥ कर्मणा जायते जंतुः कर्मणैव प्रलीयते ॥ सुखं दुःखं भयं शोकं कर्मणैवाभिपद्यते ॥ ७ ॥ जंतुर्भोगावशेषेण भोगं भुंक्ते भवेषु च ॥ पुनश्च कर्मणो भोगात्समायाति च याति च ॥८॥ रत्नादिकं च यत्किंचिन्मह्यं दत्तं त्वया सति ॥ मया सार्द्धं न यात्येव तेन मे किं प्रयोजनम् ॥ ९ ॥ भवाब्धितारणे देवी भवती तरणिवरा ॥ कर्णधारः स्वयं कृष्णः सर्वेषां पारकारकः ॥ १० ॥ किंचिद्दानं देहि मह्यं भवाब्धिपारकारणम् ॥ प्राप्य प्रसादं यास्यामि मथुरां कृष्णमूलकम् ॥ ११ ॥ यां यां कालगतिं मातः सुराणां च नृणामपि ॥ पितृणां ब्रह्मलोकस्य तदूर्ध्वस्य च तां वद ॥१२॥ तामेव दुस्तरां घोरां तीर्त्वा यामि हरेः पदम् ॥ एवंभूतमुपायं च देहि मे कमलालये ॥ १३ ॥ दूरतो यत्पदांभोजं ध्यायंते च दिवानिशम् ॥ देवा ब्रह्मेशशेषाद्यास्त्वं तद्वक्षःस्थलस्थिता ॥ १४ ॥ उद्धवस्य वचः श्रुत्वा जहास कमलालया ॥ वाससा नेत्रनीरं च संमार्ज्यंतमुवाच सा ॥ १५ ॥ ॥ श्रीराधोवाच ॥ ॥ माधवीवचनेनैव करोषि प्रश्नमुद्धव ॥ स्त्रीजातिरबला लोके किं वा ज्ञानं ददामि ते ॥ १६ ॥ शुद्धां कालगतिं वत्स जानाति भगवान्हरिः ॥ ब्रह्मा महेशः शेषश्च वेदाश्चत्वार एव च ॥ १७ ॥ किंचिद्वेदानुसारेण संतो जानंति पुत्रक ॥ श्रूयतां कृष्णवक्त्रेण गोलोके रासमंडले ॥ १८ ॥ गोलोके चापि वैकुंठे ब्रह्मलोके च सांप्रतम् ॥ या च दृष्टा कालगतिस्तामेव कथयामि ते ॥ १९ ॥ नृणां पितृणां देवानां ब्रह्मलोकादिकस्य च ॥ बहिर्लोकस्य ब्रह्मांडात्पातालानां च निश्चितम् ॥ २० ॥ दुरत्ययां कालगतिं येनोपायेन पंडिताः ॥ निस्तरंति बुधश्रेष्ठ कथयामि निशामय ॥ २१ ॥ भजंति जगतां नाथं कालकालं जगद्गुरुम् ॥ निर्गुणं च निरीहं च परमात्मानमीश्वरम् ॥२२॥ सद्यः पतति देहोयं विना येन सदात्मना ॥ तं निषेव्य कालगतिं तरत्येव हि केवलम् ॥ २३ ॥ आयुर्हरति सर्वेषां प्राणिनां रविरेव च ॥ श्रीहरेः शुद्धभक्तानां सतां पुण्यवतां विना ॥ २४ ॥ विधेर्मानसिकान्पुत्रांश्चतुरः पश्य पुत्रक ॥ सनकादीन्भागवतान्येषां च सुस्थिरं वयः ॥ २५ ॥ रुद्राद्यान्वयसा ॥२११॥
दित्यान्ज्ञानिनां च गुरोर्गुरून् ॥ बालाननुपनीतांश्च पंचवर्षशिशून्यथा ॥ २६ ॥ अभ्यंतरे महास्फीतान्सस्मितांश्च दिगंबरान् ॥

श्रीकृष्णध्यानपूतांश्च तीर्थपूतांश्च वैष्णवान् ॥ २७ ॥ वेदवेदांगशास्त्राणां चिंताहीनान्प्रफुल्लितान् ॥ भक्त्या दिवानिशं शश्वद्धरिभा
वेन तत्परान् ॥ २८ ॥ बाह्यपूजाविहीनांश्च पूतान्मानसिकांस्तथा ॥ मृत्युंजयान्महाभागान्कालव्यालजितस्तथा ॥ २९ ॥ सनकं च
सनंदं च तृतीयं च सनातनम् ॥ परं सनत्कुमारं च ये स्मरंति च सर्वशः ॥ ३० ॥ तीर्थस्नानफलं लब्ध्वा मुच्यंते कृतपातकात् ॥
हरिभक्तिर्भवत्येषां हरिदास्यं लभंति च ॥ ३१ ॥ मृकंडुबालकं पश्य कर्मणा च द्विजोत्तमम् ॥ दशवर्षायुतं तीव्रं ज्वलंतं ब्रह्मतेजसा ॥
॥ ३२ ॥ हरिमेवमतः पश्चात्सप्तकल्पांतजीविनम् ॥ वोढुं पंचशिखं पश्य लोमकं चासुरिं तथा ॥ ३३ ॥ सर्वकर्मविहीनं च हरिसेवनतत्परम् ॥
शतकल्पायुषं चैव ध्यायमानं हरेः पदम् ॥ ३४ ॥ जमदग्नेः सुतं पश्य रामं तं चिरजीविनम् ॥ हनुमंतं बलिं व्यासमश्वत्थामानमेव च ॥
॥ ३५ ॥ विभीषणं कृपं विप्रं जांबवंतं च भल्लुकम् ॥ हरिभावनया चैते शुद्धाः सुचिरजीविनः ॥ ३६ ॥ सिद्धेंद्रेषु मुनींद्रेषु नरेष्वन्येषु चो
द्धव ॥ हरिभावेन शुद्धाश्च सर्वे ते चिरजीविनः ॥ ३७ ॥ प्रह्लादं पश्य दैत्येषु हिरण्यकशिपोः सुतम् ॥ हरिद्विषो दुरंतस्य हरिभावनत
त्परम् ॥ ३८ ॥ चिरायुषं कालजितं पश्यान्यं चाप्यसंज्ञकम् ॥ अनेकजन्मतपसा लब्ध्वा जन्म च भारते ॥ ३९ ॥ ये हरिं तं न सेवंते ते
मूढाः कृतपापिनः ॥ वासुदेवं परित्यज्य विषये निरतो जनः ॥ ४० ॥ त्यक्त्वामृतं महामूढो विषं भुंक्ते निजेच्छया ॥ कस्य स्त्री कस्य
वा पुत्रः कस्य वा बांधवास्तथा ॥ ४१ ॥ कः कस्य बंधुर्विपदि श्रीकृष्णेन विना भुवि ॥ तस्मात्संतः सदा कृष्णं भजंत्येव दिवानि
शम् ॥ ४२ ॥ जन्ममृत्युजराव्याधिहरं सर्वहरं परम् ॥ कालस्य तरणोपायं भजनं परमात्मनः ॥ ४३ ॥ आनंदनंदनस्यैव परिपूर्ण
तमस्य च ॥ शृणु कालगतिं वत्स मदीयज्ञानगोचराम् ॥ ४४ ॥ नराणां च पितॄणां च सुराणां चापि ब्रह्मणः ॥ नागानां राक्षसादीनां
तत्परेषां च पुत्रक ॥ ४५ ॥ कथयामि निगूढार्थं सावधानं निशामय ॥ सर्वस्माच्च परस्थानं सर्वाधारो महान्विराट् ॥ ४६ ॥ यस्य
लोमसु विश्वानि चासंख्यानि च तानि च ॥ सर्वस्माच्च परं सूक्ष्मं परमाणुं निशामय ॥ कालारंभात्मकं सर्वमंतृहं परमीप्सितम् ॥
॥ ४७ ॥ परमः सद्विशेषाणामनेकोऽसंयुतः सदा ॥ परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ ४८ ॥ परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते

त्रयः ॥ त्रसरेणुत्रिकेणापि त्रुटिरुक्ता मनीषिभिः ॥ ४९ ॥ वेधस्त्रुटिशतेनैव त्रिवेधेन लवस्तथा ॥ त्रिलवेन निमेषश्च त्रिनिमेषेण च क्षणः ॥ ५० ॥ काष्ठा पंचक्षणेनैव लघुश्च दशकाष्ठया ॥ लघुपंचदशं दंडस्तत्प्रमाणं निशामय ॥ ५१ ॥ द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरंगुलैः ॥ स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ॥ ५२ ॥ दंडद्वये मुहूर्तः स्यात्षष्टिदंडात्मिका तिथिः ॥ तदष्टभागः प्रहरः प्रमाणं च निरूपणम् ॥ ५३ ॥ चतुर्भिः प्रहरै रात्रिश्चतुर्भिर्दिनमुच्यते ॥ तिथिपंचदशेनैव पक्षमानं प्रकीर्तितम् ॥ ५४ ॥ पक्षद्वयेन मासः स्याच्छुक्लकृष्णाभिधेन च ॥ ऋतुर्मासद्वयेनैव तत्षट्केनैव वत्सरः ॥ ५५ ॥ वसंतग्रीष्मवर्षाश्च शरद्धेमंतशीतकाः ॥ वर्षाः पंचविधा ज्ञेयाः कालविद्भिर्निरूपिताः ॥ ५६ ॥ संवत्सरः प्रवत्सर इलावत्सर एव च ॥ अनुवत्सरो वत्सरोयमिति कालविदो विदुः॥ ॥ ५७ ॥ अब्दो द्विषट्कमासैश्च तन्नाम शृणु चोद्धव ॥ वैशाखो ज्येष्ठ आषाढः श्रावणो भाद्र एव च ॥ ५८ ॥ आश्विनः कार्तिको मार्गः पौषो माघस्तु फाल्गुनः ॥ चैत्रस्तु चरमो ज्ञेयो वर्षशेषो निरूपितः ॥ ५९ ॥ वसंतश्चैत्रवैशाखमासयुग्मेन कीर्तितः ॥ ज्येष्ठाषाढद्वयेनैव ग्रीष्मस्तु परिकीर्तितः ॥ ६० ॥ वर्षा श्रावणभाद्रे च ह्याश्विने कार्तिके शरत् ॥ मार्गे पौषे च हेमंतः शिशिरो माघफाल्गुने ॥ ६१ ॥ अब्दस्तु चायने द्वे वै चोत्तरे दक्षिणायने ॥ माघादिषड्भिर्निर्मितमुत्तरायणमीप्सितम् ॥ ६२ ॥ श्रावणादिमासषट्कं दक्षिणायनमेव च ॥ ६३ ॥ नक्तवृद्धिः श्रावणाच्च पौषपर्यंतमेव च ॥ प्रतिपत्पूर्णिमांतस्य शुक्लपक्षः प्रकीर्तितः ॥ ६४ ॥ पूर्णिमायाः प्रतिपदश्चामावास्यांत एव च ॥ कृष्णपक्षस्तु विज्ञेयो वेदविद्भिर्निरूपितः ॥ ६५ ॥ द्वितीया च तृतीया च चतुर्थी पंचमी तथा ॥ षष्ठी च सप्तमी चैव ह्यष्टमी नवमी तथा ॥ ६६ ॥ दशम्येकादशी चापि द्वादशी च त्रयोदशी ॥ चतुर्दशी कुहूर्यावद्दिनं तु गणनं स्मृतम् ॥ ६७ ॥ अश्विनी भरणी चापि कृत्तिका रोहिणी तथा ॥ मृगशिरस्तथार्द्रा च नक्षत्रे द्वे पुनर्वसू ॥ ६८ ॥ पुष्याश्लेषे मघा चैव पूर्वा चोत्तरफाल्गुनी ॥ हस्तचित्रे तथा स्वाती विशाखा चानुराधिका ॥ ६९ ॥ ज्येष्ठा मूलं तथा ज्ञेया पूर्वाषाढोत्तरा तथा॥ श्रवणाभिजिती चैव धनिष्ठा च प्रकीर्तिता ॥ ७० ॥ ततः शतभिषा ज्ञेया पूर्वाभाद्रपदा तथा ॥ तथोत्तरा तु विज्ञेया रेवती चरमा

स्मृता ॥ ७१ ॥ अष्टाविंशति नक्षत्रं कलत्रं शशिनस्तथा ॥ क्रमेण ताभिः सार्द्धं च चंद्रस्तिष्ठति नित्यशः ॥ ७२ ॥ सप्तविंशति नक्षत्रं कलत्रं च श्रुतौ श्रुतम् ॥ अभिजिच्छ्रवणच्छाया तेनाष्टाविंशतिः स्मृता ॥ ७३ ॥ एकदा च मधौ चंद्रो रोहिण्या वामया सह ॥ रेमे दिवानिशं नित्यं श्रवणा च चुकोप सा ॥ ७४ ॥ छायां च दत्त्वा चंद्राय ययौ तातांतिकं भिया ॥ ततः पितरमादाय सा चक्रे च विभागकम् ॥ ७५ ॥ बभूव तेन नक्षत्रमभिजिन्नामकं पुरा ॥ एतच्छ्रुत्वा कृष्णमुखाच्छतशृंगे च पर्वते ॥ ७६ ॥ नक्षत्रं कथितं वत्स तिथ्या भ्रमति नित्यशः ॥ योगं च करणं चैव मद्वक्त्रेण निशामय ॥ ७७ ॥ विष्कंभः प्रीतिरायुष्मान्सौभाग्यः शोभनस्तथा ॥ अतिगंडः सुकर्मा च धृतिः शूलस्तथैव च ॥ ७८ ॥ गंडो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ॥ वज्रं सिद्धिर्व्यतीपातो वरीयान्परिघः शिवः ॥ ७९ ॥ सिद्धिः साध्यः शुभः शुक्लो ब्रह्मेंद्रो वैधृतिस्तथा ॥ कीर्तितस्ते योगगणो करणं श्रूयतामिति ॥ ॥ ८० ॥ बवश्च बालवश्चैव कौलवस्तैतिलस्तथा ॥ गरश्च वणिजश्चापि विष्टिश्च शकुनिस्तथा ॥ ८१ ॥ चतुष्पाच्चापि नागश्च किंस्तुघ्न इति कीर्तितम् ॥ नराणां चापि मासेन पितॄणां च दिवानिशम् ॥ ८२ ॥ शुक्ले चापि दिनं तेषां कृष्णे नक्तं प्रकीर्तितम् ॥ वत्सरेण नराणां च सुराणां च दिवानिशम् ॥८३॥ दिनं तेषामुत्तरे च नक्तं च दक्षिणायने ॥ मन्वंतरं तु दिव्यानां युगानामेकसप्ततिः ॥ ८४ ॥ मनोरायुःपरिमितं शक्रस्यायुः प्रकीर्तितम् ॥ पंचविंशत्सहस्रं च तथा पंचशतं परम् ॥ ८५ ॥ तत्र सूर्यगतिर्नास्ति शक्रपातानुसारतः ॥ दिवानिशं च जानंति ब्रह्मलोकनिवासिनः ॥ ८६ ॥ दंडद्वयं नरपलं शक्रपातेन तत्पलम् ॥ एवं त्रिंशद्दिनेनैव धातुर्मासः प्रकीर्तितः ॥ ८७ ॥ अब्दो द्वादशभिर्मासैरेवं तस्य शतायुषः ॥ ब्रह्मणः पतनेनैव निमेषाच्छ्रीहरेरपि ॥ ८८ ॥ धातुः पातानुसारेण वैकुंठे न दिवानिशम् ॥ तत्र सूर्यगतिर्नास्ति चैवं गोलोकतः स्मृतम् ॥ ८९ ॥ वैकुंठवासिनः सर्वे न वै जानंत्यहर्निशम् ॥ चंद्रस्यापि ग्रहाणां च गतिर्नास्ति च तत्र वै ॥ ९० ॥ चक्रं नैव भ्रमत्येव राशीनामिच्छया हरेः ॥ दिनं च तेजसा दीप्तं कृष्णस्य परमात्मनः ॥ ९१ ॥ नक्तं तेजोविहीनं च हरौ च मंदिरं गते ॥ एवं कालगतिस्तत्र विष्णुलोकेऽस्ति संततम् ॥ ९२ ॥ कालस्व

रूपो भगवान्परमात्मा निराकृतिः ॥ चन्द्रसूर्यगतिर्नास्ति पातालेषु च सप्तसु ॥ ९३ ॥ तद्वासिनश्च जानंति शंकंते न दिवानिश
म् ॥ दिने च मूर्ध्नि नागानां मणिर्ज्वलति नित्यशः ॥ ९४ ॥ संध्यायां दीप्तमग्निश्च रात्रिश्च तमसावृता ॥ कालं ताम्रीप्रमाणेन जानं
ति तन्निवासिनः ॥ ९५ ॥ यथा भुवि तथा तत्र परिमाणं प्रकीर्तितम् ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ ९६ ॥ दिव्यै
र्द्वादशसाहस्रैर्वत्सरैश्चापि तन्मितम् ॥ अष्टौ शतान्यप्यधिकं सहस्राणां चतुष्टयम् ॥९७॥ दिव्यैर्वर्षैः कृतयुगं कालविद्भिर्निरूपितम् ॥
अष्टाविंशत्सहस्राण्यप्यधिकं परिमाणकम् ॥ ९८ ॥ लक्षाणां च सप्तदशं नृमानं परिकीर्तितम् ॥ अधिकं षट्शतान्येव सहस्राणां
शतं तथा ॥ ९९ ॥ दिव्यैर्वर्षैश्च त्रेतेति वत्स कालविदो विदुः ॥ षण्णवतिसहस्राणि लक्षैर्द्वादशभिः सह ॥ १०० ॥ नृणां वर्षैश्च त्रेतेति
कालविद्भिः प्रकीर्तितः ॥ चतुष्टयं शतानां चाप्यधिकं द्विज सहस्रकम् ॥ १ ॥ वर्षं दिव्यं द्वापरं च कालज्ञैः परिकीर्तितम् ॥ चतुःषष्टि
सहस्राणि लक्षैरष्टभिरेव च ॥ २ ॥ नृणां वर्षैर्द्वापरं च कालज्ञैः परिकीर्तितम् ॥ अधिकं द्विशतं चैव दिव्यं वर्षसहस्रकम् ॥ ३ ॥ ए
वंमितं कलियुगं वत्स प्राज्ञैर्निरूपितम् ॥ द्वात्रिंशच्च सहस्रं च चतुर्लक्षं नृमानकम् ॥ ४ ॥ वर्षं चेति कलियुगे चकार कालकोविदः ॥
लक्षैर्द्विचत्वारिंशद्भिः सह विंशत्सहस्रकैः ॥ नृमानवर्षैः कालज्ञैर्व्यक्तमेव चतुर्युगम् ॥ ५ ॥ इति ते कथितं वत्स कालसंख्यानिरू
पणम् ॥ यथाश्रुतं यथाज्ञानं गच्छ वत्स हरेः पुरम् ॥ ६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायण
नारदसंवादे राधोद्धवसंवादे कालनिरूपणं नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ श्रीनारायण उवाच ॥ ॥ गच्छंतमुद्धवं
दृष्ट्वा संत्रस्ता श्रीहरेः प्रियाः ॥ समुत्थायासनाच्छीघ्रं हृदयेन विदूयता ॥ १ ॥ गोपीभिः सहिता शीघ्रं समुद्विग्ना महासती ॥ ददौ
शुभाशिषं तस्मै तस्य मूर्ध्नि करं तथा ॥ २ ॥ स्निग्धदूर्वाक्षतं शुक्लधान्यं पुष्पं च मंगलम् ॥ प्रेरयामास लाजांश्च फलं पर्णं तथा दधि
॥ ३ ॥ दर्पणं दर्शयामास पूर्णकुंभं सपल्लवम् ॥ सफलं गंधसिंदूरकस्तूरीचंदनान्वितम् ॥४॥ पुष्पमाल्यं प्रदीपं च रक्तगंधं द्विजोत्तम ॥
पतिपुत्रवती साध्वी कांचनं रजतं तथा ॥ ५ ॥ तमुवाच महासाध्वी हितं सत्यं च मंगलम् ॥ संगोप्य साश्रुनेत्रं च पतितं दुःखि

ता हृदि ॥ ६ ॥ शुभं भवतु मार्गस्ते कल्याणमस्तु संततम् ॥ ज्ञानं लभ हरेः स्थानात्कृष्णस्य सुप्रियो भव ॥ ७ ॥ कृष्णभक्तिः
कृष्णदास्यं वरेषु च वरं वरम् ॥ श्रेष्ठा पंचविधा मुक्तेर्हरिभक्तिर्गरीयसी ॥ ८ ॥ ब्रह्मत्वादपि देवत्वादिंद्रत्वादमरादपि ॥ अमृतात्सि
द्धिलाभाच्च-हरिदास्यं सुदुर्लभम् ॥ ९ ॥ अनेकजन्मतपसा संभूय भारते द्विजः ॥ हरिभक्तिर्यदि लभेत्तस्य जन्म सुदुर्लभम् ॥ १० ॥
सफलं जीवनं तस्य कुर्वतः कर्मणः क्षयम् ॥ पितॄणां च सहस्राणि स्वस्य मातुश्च निश्चितम् ॥ ११ ॥ मातामहानां पुंसां च शतानां
सोदरस्य च ॥ बांधवस्यापि पत्न्याश्च गुरूणां शिष्यभृत्ययोः ॥ १२ ॥ तत्कर्म शोभनं वत्स यच्च कृष्णे समर्पणम् ॥ तत्कर्म शोभनं
शुद्धं कृष्णसंतोषणं यतः ॥ १३ ॥ संकल्पसाधनं कर्म संप्रीतिविधिपूर्वकम् ॥ तदेव मंगलं धन्यं परिणामसुखावहम् ॥ १४ ॥ त
द्व्रतं तत्तपः सत्यं तद्भक्तिः पूजनं तथा ॥ तदुद्देश्यमनशनं केवलं दास्यकारणम् ॥ १५ ॥ समस्तपृथिवीदानं प्रादक्षिण्यं भुवस्तथा ॥
समस्ततीर्थस्नानं च समस्तं च व्रतं तपः ॥ १६ ॥ समस्तयज्ञकरणं सर्वदानफलं तथा ॥ समस्तवेदवेदांगपठनं पाठनं तथा ॥ १७ ॥
भीतस्य रक्षणं चैव ज्ञानदानं सुदुर्लभम् ॥ अतिथीनां पूजनं च शरणागतरक्षणम् ॥ १८ ॥ सर्वदेवार्चनं चैव वन्दनं जपनं मनोः ॥
भोजनं विप्रदेवानां पुरश्चरणपूर्वकम् ॥ १९ ॥ गुरुशुश्रूषणं चैव पित्रोर्भक्तिश्च पोषणम् ॥ सर्वं श्रीकृष्णदास्यस्य कलां नार्हति षोड
शीम् ॥ २० ॥ तस्मादुद्धव यत्नेन भज कृष्णं परात्परम् ॥ निर्गुणं च निरीहं च परमात्मानमीश्वरम् ॥ २१ ॥ नित्यं सत्यं परं ब्रह्म
प्रकृतेः परमीश्वरम् ॥ परिपूर्णतमं शुद्धं भक्तानुग्रहविग्रहम् ॥ २२ ॥ कर्मिणां कर्मणां साक्ष्यप्रदं निर्लिप्तमेव च ॥ ज्योतिःस्वरूपं
परमं कारणानां च कारणम् ॥ २३ ॥ सर्वस्वरूपं सर्वेशं सर्वसंपत्प्रदं शुभम् ॥ भक्तिदं दास्यदं स्वस्य निजसंपत्पदप्रदम्
॥ २४ ॥ विसृज्य ज्ञातिबुद्धिं च मात्सर्यमशुभप्रदम् ॥ भज तं परमानंदं सानंदं नंदनंदनम् ॥ २५ ॥ वेदे कौथुमिशा
खायां तस्य नाम्नां सहस्रकम् ॥ नंदनंदननामोक्तं कृतविघ्नसुदुर्लभम् ॥ २६ ॥ उद्धवः सर्वमाकर्ण्य परमं विस्मयं ययौ ॥ ज्ञानं
संप्राप्य संपूर्णं परिपूर्णो बभूव ह ॥ २७ ॥ स्ववस्त्रं च गले बद्ध्वा दंडवत्प्रणनाम ताम् ॥ मूर्ध्नः केशैश्च तत्पादं निबध्य च पुनः

पुनः ॥ २८ ॥ पुलकांचितसर्वांगः साश्रुनेत्रश्च भक्तितः ॥ तद्विच्छेदशुचा प्रेम्णा रुरोदोच्चैश्च नारद ॥ २९ ॥ रुरोद राधा तत्प्रेम्णा
रुरोद बल्लवीगणः ॥ उद्धवस्य गलं धृत्वा स्थापयामास लोभतः ॥ ३० ॥ उद्धवं मूर्च्छितं दृष्ट्वा जृंभितं त्यक्तचेतनम् ॥ शीघ्रमु
त्थापयामास राधिका कृष्णमानसम् ॥ ३१ ॥ चेतनं कारयामास जलं दत्त्वा मुखांबुजे ॥ शुभाशिषं च प्रददौ वत्स जीवेति नारद ॥
॥ ३२ ॥ उद्धवश्चेतनां प्राप्य तामुवाच सुसंसदि ॥ रुदतीनां च गोपीनां पुरतः परमार्थदम् ॥३३॥ ॥ उद्धव उवाच ॥ ॥ धन्यो यश
स्यो द्वीपानां जंबूद्वीपः सुदुर्लभः ॥ यत्र भारतवर्षं तु सर्वेषामीप्सितं वरम् ॥ ३४ ॥ अहो भारतवर्षे तु पुण्यो वृन्दावनं वनम् ॥
राधापादाब्जसंस्पर्शरजःपूतं सुरेप्सितम् ॥ ३५ ॥ धन्या मान्या च पृथिवी त्रिषु लोकेषु पूजिता ॥ राधायास्तीर्थपूताया पादाब्जर
जसा वरा ॥३६॥ षष्टिवर्षसहस्राणि दिव्यानि पुष्करे पुरा ॥ ब्रह्मणा च तपस्तप्तं वेदोक्तं भक्तिपूर्वकम् ॥३७॥ गोलोके राधिकाकृष्ण
दर्शनार्थं मनोरथात् ॥ गोलोके राधिकाकृष्णो न दृष्टः स्वप्नतस्तदा ॥ ३८ ॥ श्रुता तेनाकाशवाणी सत्यरूपा च लीलया ॥ वाराहे
भारते वर्षे पुण्ये वृन्दावने वने ॥ ३९ ॥ रासोत्सवे महारम्ये तत्रैव रासमंडले ॥ द्रक्ष्यसीति च देवानां मध्ये सुस्थो न संशयः ॥४०॥
श्रुत्वा च विरतो ब्रह्मा तपसः स्वगृहं गतः ॥ कृष्णो दृष्टश्च हृष्टश्च परिपूर्णमनोरथः ॥ ४१ ॥ गोपानां गोपिकानां च सफलं जन्म
जीवनम् ॥ नित्यं पश्यंति ते पादपद्मं ब्रह्मादिदुर्लभम् ॥ ४२ ॥ मानिनीं राधिकां संतः सदा सेवंति नित्यशः ॥ योगींद्राश्च मुनींद्रा
श्च सिद्धेंद्रा वैष्णवास्तथा ॥ ४३ ॥ सतीं पुण्यां तीर्थपूतां स्वतःशुद्धां सुदुर्लभाम् ॥ सुलभं यत्पदांभोजं ब्रह्मादीनां सुदुर्लभम् ॥
॥ ४४ ॥ यत्पादपद्मनखरं कृतं यावकचिह्नितम् ॥ सर्वेश्वरेश्वरेणैव कृष्णेन परमात्मना ॥ ४५ ॥ चकार यस्याः पूजां च स्तोत्रराजं सु
दुर्लभम् ॥ शतशृंगे स्वयं कृष्णो गोलोके रासमंडले ॥ ४६ ॥ पारिजातप्रसूनानामंजलिं गंधचंदनम् ॥ ददौ दूर्वाक्षतं स्निग्धं यस्याः
पादारविंदयोः ॥ ४७ ॥ त्रिंशत्सहस्रकोटीनां गोपीनामीश्वरी च या ॥ तत्षट्त्रिंशत्सखीनां च ईश्वरी राधिकाभिधा ॥ ४८ ॥
ये वा द्विषंति निंदंति पापिनश्च हसंति च ॥ कृष्णप्राणाधिकां देवदेवीं च राधिकां वराम् ॥ ४९ ॥ ब्रह्महत्याशतं ते च लभंते नात्र

संशयः ॥ तत्पापेन च पच्यंते कुंभीपाके च रौरवे ॥ ५० ॥ तप्ततैले महाघोरे ध्वांते कीटे च यंत्रके ॥ चतुर्दशेंद्रावच्छिन्नं पितृभिः सप्तभिः सह ॥ ५१ ॥ ततः परं च जायेत जन्मैकं लोकजन्मतः ॥ दिव्यं वर्षसहस्रं च विष्ठाकीटाश्च पापतः ॥ ५२ ॥ पुंश्चलीनां योनिकीटास्तद्रक्तमलभक्षकाः ॥ मलकीटाश्च तन्मानवर्षं च पूयभक्षकाः ॥ ५३ ॥ वेदे च काण्वशाखायामित्याह कमलोद्भवः ॥ इत्युक्तवंतं तं यांतमुवाच राधिका पुनः ॥ रुदंतं च रुदंती सा कृष्णविच्छेदकातरा ॥ ५४ ॥ ॥ राधिकोवाच ॥ ॥ गच्छ वत्स मधुपुरीं सर्वं बोधय माधवम् ॥ ५५ ॥ यथा पश्यामि गोविंदं प्रयत्नेन तथा कुरु ॥ निष्फलं च गतं जन्म गच्छ मिथ्यादुराशया ॥ ५६ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ पश्चाद्विचिंत्य गोविंदं जीवन्मुक्ता बभूव सा ॥ ५७ ॥ इत्युक्त्वा राधिका तत्र रुरोद च भृशं पुनः ॥ प्रणम्य तां रुदंतीं च यशोदाभवनं ययौ ॥५८॥ अथोद्धवे गते राधा मूर्च्छां संप्राप नारद ॥ तत्याज चेतनां शश्वद्बभूव ध्यानतत्परा ॥ ५९ ॥ पंकस्थे पंकजदले सजले शयने मुने॥ गोप्यस्तां स्थापयामासुः साश्रुनेत्रोत्पला वराः ॥ ६० ॥ तत्स्पर्शमात्राच्छयनं भस्मीभूतं बभूव ह ॥ पुनः स्निग्धस्थले स्निग्धनिचोले चंदनांतिके ॥ ६१ ॥ पुनस्तां स्थापयामासुर्विरहज्वरकातराम् ॥ सहसा शुष्कतां प्राप सुगंधि चंदनोदकम् ॥ ६२ ॥ निमेषेण शतयुगं तद्बभूवोद्धवं विना ॥ हाहोद्धवोद्धव हरिं शीघ्रं गत्वा वदेति च ॥ ६३ ॥ समानय हरिं शीघ्रं मत्प्राणेश्वरमित्यपि ॥ इत्युक्तवचनां दीनां संतापहृतचेतनाम् ॥ ६४ ॥ रुरुदुर्गोपिकाः सर्वा राधां कृत्वा स्ववक्षसि ॥ चेतनां कारयामासुर्बोधयामासुरीप्सितम् ॥६५॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे राधोद्धवसंवादे सप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथोद्धवो यशोदां च प्रणम्य त्वरया मुदा ॥ खर्जूरकाननं वामे कृत्वा च यमुनां ययौ ॥१॥ स्नात्वा भुक्त्वा च तत्रैव जगाम मथुरां पुनः ॥ ददर्श वटमूले च गोविंदं रहसि स्थितम् ॥२॥ प्रफुल्लोप्युद्धवं दृष्ट्वा सस्मितं तमुवाच सः ॥ रुदंतं शोकदग्धं च साश्रुनेत्रं च कातरम् ॥ ३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ आगच्छोद्धव कल्याण राधा जीवति जीवति ॥ कल्याणयुक्ता गोप्यश्च जीवंति विरहज्वरात् ॥ ४ ॥ शुभं गोपशिशूनां च वत्सानां

च गवामपि ॥ माता मे पुत्रविरहाद्यशोदा कीदृशी च सा ॥ ५ ॥ वद बंधो यथार्थं तत्त्वां दृष्ट्वा किमुवाच सा ॥ त्वयोक्ता जननी किं वा
पुनः सा किमुवाच माम् ॥ ६ ॥ दृष्टं तद्यमुनाकूलं पुण्यं वृंदावनं वनम् ॥ निर्जनोपवनौघैश्च सुरम्यं रासमंडलम् ॥ ७ ॥ रम्यं कुंजकुटीरौघे
रम्यं क्रीडासरोवरम् ॥ पुष्पोद्यानं विकसितं संकुलं च मधुव्रतैः ॥ ८ ॥ भांडीराख्यो वटो दृष्टः सुस्निग्धो बालकान्वितः ॥ दृष्टो गोष्ठो
गवां दृष्टं गोकुलं गोकुलव्रजम् ॥ ९ ॥ यदि जीवति राधा सा दृष्ट्वा त्वां किमुवाच माम् ॥ तत्सर्वं वद हे. बंधो चांदोलयति मे मनः ॥
॥ १० ॥ किमूचुर्गोपिकाः सर्वाः किमूचुर्गोपबालकाः ॥ गोपाश्च वृद्धाः किंवोचुर्वयस्या जनकस्य मे ॥ ११ ॥ बलदेवस्य जननी
किमूचे रोहिणी सती ॥ किमूचुरपरास्तात बंधुवल्लभबल्लवाः ॥ १२ ॥ किं भुक्तं किमपूर्वं वा दत्तं मात्रा च राधया ॥ कीदृग्वाक्यं सुम
धुरं संभाषा कीदृशीति च ॥ १३ ॥ गोपानां गोपिकानां च शिशूनां मातुरेव च ॥ राधायाश्चापि कीदृग्वा मयि प्रेमोर्द्धवाधिकम् ॥
॥ १४ ॥ मां च स्मरति माता मे मां च स्मरति रोहिणी ॥ मां च स्मरति सा राधा मत्प्रेमविरहाकुला ॥ १५ ॥ मां च स्मरंति
गोप्यश्च गोपाश्च गोपबालकाः ॥ भांडीरे वटमूले च बालाः क्रीडंति मां विना ॥ १६ ॥ दत्तमन्नं ब्राह्मणीभिर्यत्र भुक्तं सुधोपमम् ॥
प्रमदा बालकैः सार्द्धं यत्तद्दृष्टं परीप्सितम् ॥ १७ ॥ इंद्रयागस्थलं दृष्टं दृष्टो गोवर्धनो वरः ॥ ब्रह्मणा च हृता गावो यत्र तद्दृष्टमुत्तमम् ॥
॥ १८ ॥ श्रीकृष्णस्य वचः श्रुत्वा शोकोक्तं मधुसन्वितम् ॥ उद्धवः समुवाचेदं भगवंतं सनातनम् ॥ १९ ॥ ॥ उद्धव उवाच ॥ ॥
यद्यदुक्तं त्वया नाथ सर्वं दृष्टं यथेप्सितम् ॥ सफलं जीवनं जन्म कृतमत्रैव भारते ॥ २० ॥ दृष्टं भारतसारं च पुण्यं वृंदावनं वनम् ॥
तत्सारं व्रजभूमौ च सुरम्यं रासमंडलम् ॥ २१ ॥ तत्सारभूता गोलोकवासिन्यो गोपिका वराः ॥ दृष्टा तत्सारभूता च राधा रासेश्वरी
परा ॥ २२ ॥ कदलीवनमध्ये च निर्जने सुहृदस्थले ॥ पंकस्थे पंकजदले सजले चंदनार्चिते ॥ २३ ॥ शयनेतिविषण्णा सा रत्नभूषण
वर्जिता ॥ अतीव मलिना क्षीणाच्छादिता शुक्लवाससा ॥ २४ ॥ सेविता सखिभिस्तत्र सततं श्वेतचामरैः ॥ कृशोदरी निराहारा क्षणं
श्वसिति च क्षणम् ॥ २५ ॥ क्षणं जीवति किं सा वा विरहज्वरपीडिता ॥ किं वा जलं स्थलं किं वा नक्तं किं वा दिनं हरे ॥ २६ ॥

परं पशुं न जानाति किं परं कः सुबांधवः ॥ बाह्यज्ञानविरहिता ध्यायमाना पदं तव ॥ २७ ॥ त्रैलोक्ये यशसा भाति तन्मृ
त्युर्यशसंभवः ॥ स्त्रीहत्यां नैव वांछंति ज्ञानहीनाश्च दस्यवः ॥ २८ ॥ गच्छ शीघ्रं जगन्नाथ कदलीवनमीप्सितम् ॥ बहिर्भूता न
जगतां सा राधा त्वत्परायणा ॥ २९ ॥ अतीव भक्ता न त्याज्या प्रभुणा रक्षिता सदा ॥ न हि राधापरा भक्ता न भूता न भविष्यति
॥ ३० ॥ मन्मथः शंकराद्भीतो भवांश्च तत्पुरःसरः ॥ भवद्विधं पतिं प्राप्य कामदग्धा च राधिका ॥ ३१ ॥ तस्मात्सर्वपरं कर्म तच्च के
नापि वार्यते ॥ मधुर्दहति चंद्रश्च सततं किरणेन च ॥ ३२ ॥ शश्वत्सुगंधिवायुश्चाप्यनाथा सर्वपीडिता ॥ तप्तकांचनवर्णाभा साऽधुना
कज्जलोपमा ॥ ३३ ॥ सुवर्णवर्णकेशी च वासोवेषविवर्जिता ॥ स्वयं विधाता त्वद्भक्तः सुराणां प्रवरो विभुः ॥ त्वद्भक्तः शंकरो देवो यो
गींद्राणां गुरोर्गुरुः ॥ ३४ ॥ सनत्कुमारस्त्वद्भक्तो गणेशो ज्ञानिनां वरः ॥ मुनींद्राश्च कतिविधास्त्वद्भक्ता धरणीतले ॥ ३५ ॥ त्वद्भक्ता
यादृशी राधा न भक्तस्तादृशोऽपरः ॥ ध्यायते यादृशी राधा स्वयं लक्ष्मीर्न तादृशी ॥ ३६ ॥ हरिरायाति चेत्येवं राधाग्रे स्वीकृत
मया ॥ शीघ्रं गच्छ महाभाग तदेव सार्थकं कुरु ॥ ३७ ॥ उद्धवस्य वचः श्रुत्वा जहासोवाच माधवः ॥ वेदोक्तं कथयामास सहितं
सत्यसुव्रतम् ॥ ३८ ॥ ॥ श्रीभगवानुवाच ॥ ॥ स्त्रीषु नर्मविवाहेषु वृत्त्यर्थे प्राणसंकटे ॥ गवामर्थे ब्राह्मणार्थे नानृतं स्याज्जुगुप्सि
तम् ॥ ३९ ॥ तत्स्वीकारविहीनेन कुतस्त्वं नरकः कुतः ॥ गोलोकं याति मद्भक्तो नरकं न हि पश्यति ॥ ४० ॥ त्वदंगीकारसाफ
ल्यं करिष्यामि तथापि च ॥ यास्यामि स्वप्ने तन्मूलं गोपीनां मातुरेव च ॥ ४१ ॥ इत्याकर्ण्य ययौ गेहमुद्धवश्च महायशाः ॥ हरि
र्जगाम स्वप्ने च गोकुलं विरहाकुलम् ॥ ४२ ॥ स्वप्ने राधां समाश्वास्य दत्त्वा ज्ञानं सुदुर्लभम् ॥ संतोष्य क्रीडया तां च गोपिकाश्च
यथोचितम् ॥ ४३ ॥ बोधयित्वा यशोदां च स्तनं पीत्वा च निद्रिताम् ॥ गोपान्गोपशिशूंश्चैव बोधयित्वा ययौ पुनः ॥ ४४ ॥
॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे अष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ श्रीनारायण
उवाच ॥ ॥ एतस्मिन्नंतरे गर्गो वसुदेवाश्रमं ययौ ॥ दंडी छत्री च जटिलो दीप्तश्च ब्रह्मतेजसा ॥ १ ॥ शुक्लयज्ञोपवीती च तप

स्वी संयतः सदा ॥ शुक्लदंतः शुक्लवासा यदोः कुलपुरोहितः ॥ २ ॥ तं दृष्ट्वा सहसोत्थाय देवकी प्रणनाम च ॥ वसुदेवश्च भक्त्या
च रत्नसिंहासनं ददौ ॥ ३ ॥ मधुपर्कं कामधेनुं वह्निशुद्धांशुकं तथा ॥ दत्त्वा गंधं पुष्पमाल्यं पूजयामास भक्तितः ॥ ४ ॥ मिष्टान्नं
परमान्नं च पिष्टकं मधुरं मधु ॥ भोजयामास यत्नेन तांबूलं वासितं ददौ ॥ ५ ॥ प्रणम्य कृष्णं मनसा सबलं तं विलोक्य च ॥
उवाच वसुदेवं च देवकीं च पतिव्रताम् ॥ ६ ॥ ॥ गर्ग उवाच ॥ ॥ वसुदेव निबोधेदं सबलं पश्य पुत्रकम् ॥ उपनीतोचितं शुद्धं
वयसा सांप्रतं वरम् ॥ ७ ॥ ॥ वसुदेव उवाच ॥ ॥ शुभक्षणं कुरु गुरो यदूनां पूज्यदैवत ॥ उपनीतोचितं शुद्धं प्रशस्यं च
सतामपि ॥ ८ ॥ ॥ गर्ग उवाच ॥ ॥ सर्वेभ्यो बांधवेभ्योपि देह्यामंत्रणपत्रिकाम् ॥ संभारं कुरु यत्नेन वसुदेव वसूपम ॥ ९ ॥
परश्वः शुभमेवास्ति चोपनेतुमिहार्हसि ॥ दिनं सतामपि मतं विशुद्धं चन्द्रतारयोः ॥ १० ॥ गर्गस्य वचनं श्रुत्वा वसुदेवो वसूपमः ॥
प्रस्थापयामास सर्वान्बंधून्मंगलपत्रिकाम् ॥ ११ ॥ घृतकुल्यां दुग्धकुल्यां दधिकुल्यां मनोहराम् ॥ मधुकुल्यां गुडकुल्यां प्रचकार
समन्वितः ॥ १२ ॥ राशिं नानोपहाराणां मणिरत्नं सुवर्णकम् ॥ नानालंकारवस्त्रं च मुक्तामाणिक्यहीरकम् ॥ १३ ॥ श्रीकृष्णो देव
वर्गांश्च मुनींद्रसिद्धपुंगवान् ॥ सस्मार मनसा भक्त्या भक्तश्च भक्तवत्सलः ॥ १४ ॥ शुभे दिने च संप्राप्ते ते च सर्वे समाययुः ॥
मुनींद्रा बांधवा देवा राजानो बहुशस्तथा ॥ १५ ॥ देवकन्या नागकन्या राजकन्याश्च सर्वशः ॥ विद्याधर्यश्च गंधर्वाश्चाययुर्वाद्य
भांडकाः ॥ १६ ॥ ब्राह्मणा भिक्षुका भट्टा यतयो ब्रह्मचारिणः ॥ संन्यासिनश्चावधूता योगिनश्च समाययुः ॥ १७ ॥ स्त्रीबांधवाः स्व
बंधूनां वर्गा मातामहस्य च ॥ बंधूनां बांधवाः सर्वे स्वाययुः शुभकर्मणि ॥ १८ ॥ भीष्मो द्रोणश्च कर्णश्चाप्यश्वत्थामा कृपो द्विजः ॥
सपुत्रो धृतराष्ट्रश्च सभार्यश्च समाययौ ॥ १९ ॥ कुंती सपुत्रा विधवा हर्षशोकसमाप्लुता ॥ नानादेशोद्भवा योग्या राजानो राजपु
त्रकाः ॥ २० ॥ अत्रिर्वसिष्ठश्च्यवनो भरद्वाजो महातपाः ॥ याज्ञवल्क्यश्च भीमश्च गार्ग्यो गर्गो महातपाः ॥ २१ ॥ वत्सः सपुत्रश्च धर्मो
जैगीषव्यः पराशरः ॥ पुलहश्च पुलस्त्यश्चाप्यगस्त्यश्चापि सौभरिः ॥ २२ ॥ सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥ सनत्कुमारो

भगवान्वोढुः पंचशिखस्तथा ॥ २३ ॥ दुर्वासाश्चांगिरा व्यासो व्यासपुत्रः शुकस्तथा ॥ कुशिकः कौशिको राम ऋष्यशृंगो विभांडकः ॥२४॥ शृंगी च वामदेवश्च गौतमश्च गुणार्णवः ॥ क्रतुर्यतिश्चारुणिश्च शुक्राचार्यो बृहस्पतिः ॥ २५ ॥ अष्टावक्रो वामनश्च वाल्मीकिः पारिभद्रकः ॥ पैलो वैशंपायनश्च प्रचेताः पुरुजित्तथा ॥ २६ ॥ भृगुर्मरीचिर्मधुजित्कश्यपश्च प्रजापतिः ॥ अदितिर्देवमाता च दिति दैत्यप्रसूस्तथा ॥ २७ ॥ सुमंतुश्च सुभानुश्च एकः कात्यायनस्तथा ॥ मार्कंडेयो लोमशश्च कपिलश्च पराशरः ॥ २८ ॥ पाणिनिः पारियात्रश्च पारिभद्रश्च पुंगवः ॥ संवर्तश्चाप्युतथ्यश्च नरोऽहं चापि नारद ॥ २९ ॥ विश्वामित्रः शतानन्दो जाबालिस्तैतिलस्तथा ॥ सांदीपिनिश्च ब्रह्मांशो योगिनां ज्ञानिनां गुरुः ॥ ३० ॥ उपमन्युर्गौरमुखो मैत्रेयश्च श्रुतश्रवाः ॥ कठः कचश्च करखो भरद्वाजश्च धर्मवित् ॥ ३१ ॥ सशिष्या मुनयः सर्वे वसुदेवाश्रमं ययुः ॥ वसुदेवश्च तान्दृष्ट्वा ववंदे दंडवद्भुवि ॥ ३२ ॥ अथास्मिन्नंतरे ब्रह्मा सस्मितो हंसवाहनः ॥ रत्ननिर्माणयानेन पार्वत्या सह शंकरः ॥ ३३ ॥ नंदी स्वयं महाकालो वीरभद्रः सुभद्रकः ॥ मणिभद्रः पारिभद्रः कार्तिकेयो गणेश्वरः ॥ ३४ ॥ गजेंद्रेण महेन्द्रश्च धर्मश्चंद्रो रविस्तथा ॥ कुबेरो वरुणश्चैव पवनो वह्निरेव च ॥ ३५ ॥ यमः संयमिनीनाथो जयंतो नलकूबरः ॥ सर्वे ग्रहाश्च वसवो रुद्राश्च सगणास्तथा ॥३६॥ आदित्याश्च तथा शेषो नानादेवाः समाययुः ॥ वसुदेवश्च भक्त्या च ववंदे शिरसा भुवि ॥३७॥ तुष्टाव परया भक्त्या देवेंद्रांश्च तथा सुरान् ॥ भक्तिनम्रात्ममूर्धा च पुलकांचितविग्रहः ॥ ३८ ॥ ॥ ॥ वसुदेव उवाच ॥ ॥ परं ब्रह्म परं धाम परमेशः परात्परः ॥ स्वयं विधाता मद्गेहे जगतां परिपालकः ॥ ३९ ॥ वेदानां जनकः स्रष्टा सृष्टिहेतुः सनातनः ॥ सुराणां च मुनींद्राणां सिद्धेंद्राणां गुरोर्गुरुः ॥ ४० ॥ स्वप्ने यत्पादपद्मं च क्षणं द्रष्टुं सुदुर्लभम् ॥ शिवस्मरणमात्रेण सर्वानिष्टाः पलायिताः ॥४१॥ सर्वसंकटमुत्तीर्य कल्याणं लभते नरः ॥ सर्वाग्रे पूजनं यस्य देवानामग्रणीः परः ॥ ४२ ॥ घटेषु मंगलं मंत्रैर्भक्त्या चावाहनेन च ॥ स्वयं गणेशो भगवान् साक्षाद्विघ्नविनाशकः ॥ ४३ ॥ कार्तिकेयश्च भगवान्देवादीनां च पूजितः ॥ देवानां प्रवरा पूज्या महालक्ष्मीः परात्परा ॥ ४४ ॥ मद्गेहे पार्वती माता जगतामादिरूपिणी ॥ सर्वशक्ति

स्वरूपा च मूलप्रकृतिरीश्वरी ॥ ४५ ॥ परापराणां परमा परब्रह्मस्वरूपिणी ॥ यस्याः पादौ समाराध्य वांछितं लभते नरः ॥ ४६ ॥ शरत्काले च भक्त्या च सा साक्षान्मम मंदिरे ॥ सर्वदेवैश्च सहिता सगणा भक्तवत्सला ॥ ४७ ॥ कृपामयी च कृपया चाविर्भूता च भारते ॥ धन्योहं कृतकृत्योहं सफलं जीवनं मम ॥ ४८ ॥ आगतासि यतो दुर्गे परमाद्या च मद्गृहम् ॥ एवं सर्वांश्च तुष्टाव क्रमेण च परस्परम् ॥ ४९ ॥ सर्वान्मुनींद्रान्विप्रांश्च गले बद्ध्वांशुकं मुदा ॥ प्रत्येकं वासयामास रत्नसिंहासने वरे ॥५०॥ पूजयामास विधिवत्क्रमेण च पृथक्पृथक् ॥ प्रत्येकं वरयामास ब्रह्मादींश्च सुरानपि ॥ ५१ ॥ मुनिवर्गान्ब्राह्मणांश्च भक्त्या गर्गं पुरोहितम् ॥ रत्नैः प्रवालैर्मणिभिर्मुक्तामाणिक्यहीरकैः ॥ ५२ ॥ भूषणैर्वसनैश्चैव माल्यैश्च गंधचंदनैः ॥ रत्नसिंहासने रम्ये सर्वेषां मध्यदेशतः ॥५३॥ गणेशं वरयामास पूजार्थं शुभकर्मणि ॥ सप्ततीर्थोदकेनैव सुवर्णकलशेन च ॥ ५४ ॥ पुष्पचंदनयुक्तेन शीतेन वासितेन च ॥ स्वर्गगंगाजलेनैव पुष्करोदकपुण्यतः ॥ ५५ ॥ पंचामृतेन शुद्धेन पंचगव्येन भक्तितः ॥ हेरंबं स्नापयामास समुद्रोदेन मंत्रतः ॥ ५६ ॥ वारयामास माल्येन पारिजातस्य नारद ॥ रत्नेंद्रभूषणेनैव वह्निशुद्धेन वाससा ॥ ५७ ॥ गंधचंदनपुष्पैश्च रत्नमाल्यांगुलीयकम् ॥ तुष्टाव पार्वतीपुत्रं सर्वदेवाधिपं शुभम् ॥ विघ्ननिघ्नकरं शांतं भगवंतं सनातनम् ॥ ५८ ॥

॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे भगवदुपनयने गणेशाभिषेके नवनवतितमोऽध्यायः ॥ ९९ ॥

॥ श्रीनारायण उवाच ॥ ॥ अथादितिर्दितिश्चैव देवकी रोहिणी रतिः ॥ सरस्वती च सावित्री यशोदा च पतिव्रता ॥ १ ॥ लोपा मुद्रारुंधती च अहल्या तारका तथा ॥ ययुस्ताः पार्वतीं दृष्ट्वा वेगेन मंदिरादपि ॥ २ ॥ परस्परं च संभाष्य समाश्लिष्य पुनःपुनः ॥ प्रणम्य वेशयामासुर्मंदिरं रत्ननिर्मितम् ॥ ३ ॥ रत्नसिंहासने रम्ये वासयामासुरीश्वरीम् ॥ वरयामास माल्येन वाससा रत्नभूषणैः ॥ ४ ॥ पारिजातस्य पुष्पं च शक्रानीतं मनोहरम् ॥ ददौ तत्पादपद्मे च देवकी भक्तिपूर्वकम् ॥ ५ ॥ सिंदूरबिंदुं सीमंते भाले चंदनबिंदुकम् ॥ कस्तूरीकुंकुमादींश्च प्रददौ परितस्तयोः ॥ ६ ॥ मिष्टान्नं भोजयामास

शीततोयं सुवासितम् ॥ तांबूलं च वरं रम्यं कर्पूरादिसुवासितम् ॥ ७ ॥ अलक्तकं च प्रददौ नखेषु पादपद्मयोः ॥ कुंकुमस्यापि रागं च सिषेवे श्वेतचामरैः ॥ ८ ॥ संपूज्य पार्वतीं देवीं मुनिपत्नीः क्रमेण च ॥ पूजयामास विधिवत्पतिपुत्रवतीः सतीः ॥ ९ ॥ राजकन्या देवकन्या नागकन्या मनोहराः ॥ मुनिकन्या बंधुकन्याः पूजयामास सुव्रत ॥ १० ॥ वाद्यं नानाविधं रम्यं वादयामास कौतुकात् ॥ मंगलं कारयामास भोजयामास ब्राह्मणान् ॥ ११ ॥ भैरवीं पूजयामास मथुराग्रामदेवताम् ॥ उपचारैः षोडशभिः षष्ठीं मंगलचंडिकाम् ॥ १२ ॥ पुण्यं स्वस्त्ययनं शुद्धं कारयामास मंगलम् ॥ वेदांश्च पाठयामास वसुदेवस्य वल्लभा ॥ १३ ॥ स्वर्गंगासुजलेनैव सुवर्णकलशेन च ॥ स्नापयामास सबलं श्रीकृष्णं पुत्रवत्सला ॥ १४ ॥ वस्त्रचंदनमाल्यैश्च तयोर्वेषं चकार सा ॥ रत्नेंद्रसारनिर्माणभूषणैश्च मनोहरैः ॥ १५ ॥ मातृभूषणभूषाढ्यः सबलः कृष्ण एव च ॥ आययौ च सभां देवमुनींद्राणां च नारद ॥ १६ ॥ दृष्ट्वा तं जगतां नाथमुत्तस्थौ प्रजवेन च ॥ स्वयं विधाता शंभुश्च शेषो धर्मश्च भास्करः ॥ १७ ॥ देवाश्च मुनयश्चैव कार्तिकेयो गणेश्वरः ॥ पृथक्पृथक् क्रमेणैव तुष्टाव परमेश्वरम् ॥ १८ ॥ ॥ ब्रह्मोवाच ॥ ॥ नाथानिर्वचनीयोसि भक्तानुग्रहविग्रहः ॥ वेदानिर्वचनीयं च कस्त्वां स्तोतुमिहेश्वरः ॥ १९ ॥ ॥ श्रीमहादेव उवाच ॥ ॥ देहेषु देहिनं शश्वत्स्थितं निर्लिप्तमेव च ॥ कर्मिणां कर्मणां शुद्धं साक्षिणं साक्षतं विभुम् ॥ किं स्तौमि रूपशून्यं च गुणशून्यं च निर्गुणम् ॥२०॥ ॥ अनंत उवाच ॥ ॥ किं वा जानाम्यहं नाथ त्वामज्ञोनंतमीश्वरम् ॥ २१ ॥ अनंतकोटिब्रह्मांडकारणं दुःखतारणम् ॥ महाविष्णोश्च लोम्नां च विवरेषु जलेषु च ॥ २२ ॥ संति विश्वान्यसंख्यानि चित्राणि कृत्रिमाणि च ॥ संति संतश्च देवाश्च ब्रह्मविष्णुशिवात्मकाः ॥ २३ ॥ त्वदंशाः प्रतिबिंबेषु तीर्थानि भारतं तथा ॥ ब्रह्मांडैकस्थितोहं च सूक्ष्मनागस्वरूपकः ॥ २४ ॥ स्थापितश्च त्वया कूर्मे गजेंद्रे मशको यथा ॥ परमाणुपरं सूक्ष्मं विश्वेषु नास्ति कुत्रचित् ॥ २५ ॥ महाविष्णोः परं स्थूलं समो नास्ति च कुत्रचित् ॥ महाविष्णोः परस्त्वं च त्वत्परो नास्ति कश्चन ॥ २६ ॥ स्थूलात्स्थूलतरो देवः सूक्ष्मात्सूक्ष्मतमो महान् ॥ आधारश्च महाविष्णो जलरूपो भवान्स्वयम् ॥ २७ ॥ जलाधारो हि

गोलोकस्त्वं च स्थावररूपधृक् ॥ सर्वाधारो महान्वायुः श्वासनिःश्वासरूपकः ॥ २८ ॥ भक्तानुग्रहदेहस्य नित्यस्य भवतो विभो ॥
वक्रैर्बहुतरैस्तोथ त्वया दत्तैः पुरैव च ॥ स्तोतुमिच्छामि त्वद्योगं न दत्तं ज्ञानमैश्वरम् ॥ २९ ॥ ॥ देवा ऊचुः ॥ ॥ त्वामनंतं
यदि स्तोतुं देवोनंतो न ह्यीश्वरः ॥ ३० ॥ न हि स्वयं विधाता च न हि ज्ञानात्मकः शिवः ॥ सरस्वती जडीभूता किं कुर्मः स्त
वनं वयम् ॥ ३१ ॥ ॥ मुनींद्रा ऊचुः ॥ ॥ वेदा न शक्ताः स्तोतुं चेत्त्वां चैव ज्ञातुमीश्वरम् ॥ वयं वेदविदः संतः किं कुर्मः स्तवनं तव
॥ ३२ ॥ इदं स्तोत्रं महापुण्यं देवैश्च मुनिभिः कृतम् ॥ यः पठेत्संयतः शुद्धः पूजाकाले च भक्तितः ॥ ३३ ॥ इह लोके सुखं भुक्त्वा
लब्ध्वा ज्ञानं निरंजनम् ॥ रत्नयानं समारुह्य गोलोकं स च गच्छति ॥ ३४ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्म
खण्ड उत्तरार्धे नारायणनारदसंवादे भगवदुपनयने शततमोऽध्यायः ॥ १०० ॥ ॥ श्रीनारायण उवाच ॥ ॥ संस्तूय
देवा मुनयो विरेमुश्चैव मानसे ॥ ददृशुः प्रांगणे कृष्णं शोभितं पीतवाससा ॥ १ ॥ यथा सौदामिनीयुक्तं नवीनजलदं मुने ॥ बक
पंक्तियुतं चैव मालतीमालया तथा ॥ २ ॥ कपाले मंडलाकारकस्तूरीयुक्तचंदनम् ॥ सकलंकं मृगांकं च शोभितं जलदे तथा ॥३॥
द्विभुजं श्यामलं कांतं राधाकांतं मनोहरम् ॥ ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहविग्रहम् ॥ ४ ॥ रत्नकेयूरवलयरत्नमंजीररंजितम् ॥ रुदंतं
पितुरुत्संगे बलेन सहितं परम् ॥५॥ अथ मंगलकाले च शुभलग्ने मनोरमे ॥ संवीक्षिते ग्रहैः सौम्यैर्जामलग्नाधिपे स्थिते ॥ ६ ॥
असद्ग्रहैरदृष्टे च सद्ग्रहेक्षित एव च ॥ शुभकर्मसमारंभं स्वस्तिवाचनपूर्वकम् ॥ ७ ॥ चकार वसुदेवश्चाप्याज्ञया सुरविप्रयोः ॥ दत्त्वा
सुवर्णशतकं ब्राह्मणाय च सादरम् ॥ ८ ॥ देवेंद्रांश्च मुनींद्रांश्च नमस्कृत्य पुरोहितम् ॥ गणेशं च दिनेशं च वह्निं च शंकरं शिवम् ॥ ९ ॥
संपूज्य देवषट्कं च साक्षतैर्देवसंसदि ॥ उपचारैः षोडशभिः संयतो भक्तिपूर्वकम् ॥ १० ॥ पुत्राधिवासनं चक्रे वेदमंत्रेण संसदि ॥ संपू
ज्य नानादेवांश्च दिक्पालांश्च नवग्रहान् ॥ ११ ॥ दत्त्वा पंचोपचारांश्च भक्त्या षोडश मातृकाः ॥ दत्त्वा च वसुधारां च सप्तवा
रान्घृतेन च ॥ १२ ॥ चेदिराजं वसुं नत्वा संपूज्य प्रययौ पुनः ॥ वृद्धिश्राद्धं मुनिर्वाप्य यत्किंचिद्दैविकं तथा ॥ १३ ॥ यज्ञं कृत्वा

तु वेदोक्तं यज्ञसूत्रं ददौ मुदा ॥ बलदेवाग्रजायैव कृष्णाय परमात्मने ॥ १४ ॥ गायत्रीं च ददौ ताभ्यां मुनिः सांदीपिनिस्त
था ॥ भिक्षां ददौ च प्रथमं पार्वती परमादरात् ॥ १५ ॥ अमूल्यरत्नपात्रस्थं मुक्तामाणिक्यहीरकम् ॥ हीरसारविनिर्माणं पित्रा
दत्तं च हारकम् ॥ १६ ॥ शुभाशिषं च प्रददौ शुक्लपुष्पेण दूर्वया ॥ ततोऽदितिर्दितिश्चैव मुनिपत्न्यश्च देवकी ॥ १७ ॥ यशोदा
रोहिणी हृष्टा सावित्री च सरस्वती ॥ प्रत्येकं प्रददौ भिक्षां मणिकांचनभूषिताम् ॥ १८ ॥ देवकन्या नागकन्या राजकन्याः प्रति
व्रताः ॥ कामिन्यो बांधवानां च सस्मिताः स्निग्धलोचनाः ॥ १९ ॥ इंद्राणी वरुणानी च पवनानी च रोहिणी ॥ कुबेरपत्नी
स्वाहा च रतिः कामस्य कामिनी ॥ २० ॥ प्रत्येकं प्रददौ भिक्षां रत्नभूषणभूषिताम् ॥ भिक्षां गृहीत्वा भगवान्सबलो भक्तिपूर्व
कम् ॥ २१ ॥ किंचिद्ददौ च गर्गाय किंचित्स्वगुरवे तथा ॥ वैदिकं कर्म निर्वाप्य गर्गाय दक्षिणां ददौ ॥ २२ ॥ देवांश्च भोजया
मास ब्राह्मणांश्चापि सादरम् ॥ येये समाययुर्यज्ञे ते च दत्त्वा शुभाशिषम् ॥ २३ ॥ कृष्णाय बलदेवाय प्रहृष्टाः प्रययुर्गृहम् ॥ नंदः
सभार्यो निर्वाप्य शुभकर्म सुतस्य वै ॥ २४ ॥ क्रोडे कृत्वा बलं कृष्णं चुचुंब वदनं तयोः ॥ उच्चै रुरोद नंदश्च यशोदा च पतिव्रता ॥
श्रीकृष्णस्तं समाश्वास्य बोधयामास यत्नतः ॥ २५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सानंदं गच्छ हे मातर्यशोदे तात सत्वरम् ॥
त्वमेवं माता पोष्ट्री त्वं पिता च परमार्थतः ॥ २६ ॥ अवंतिनगरं तात यास्यामि सबलोऽधुना ॥ मुनेः सांदीपिनेः स्थानं वेद
पाठार्थमीप्सितम् ॥ २७ ॥ ततं आगत्य सुचिरं काले भवति दर्शनम् ॥ कालः करोति कलनं स च भेदं करोति च ॥
॥ २८ ॥ सर्वं कालकृतं मातर्भेदं संमीलनं नृणाम् ॥ सुखं दुःखं च हर्षं च शोकं च मंगलालयम् ॥ २९ ॥ मया दत्तं च तत्त्वं
च योगिनामपि दुर्लभम् ॥ सर्वं नंदश्च सानंदं त्वामेव कथयिष्यति ॥ ३० ॥ इत्युक्त्वा जगतां नाथो वसुदेवसभां ययौ ॥ तदा
ज्ञया क्षणं प्राप्य ययौ सांदीपिनेर्गृहम् ॥ ३१ ॥ वसुदेवं देवकीं च संभाष्य विनयेन च ॥ नंदः सभार्यः प्रययौ हृदयेन विदूयता ॥
॥ ३२ ॥ मुक्तामणिं सुवर्णं च माणिक्यहीरकं तथा ॥ वह्निशुद्धांशुकं रत्नं नंदाय देवकी ददौ ॥ ३३ ॥ श्वेताश्वं च गजेंद्रं च

 

सुवर्णरथमुत्तमम् ॥ नंदाय कृष्णः प्रददौ वसुदेवश्च सादरम् ॥ ३४ ॥ तयोरनुव्रजन्विप्रा देवकीप्रमुखाः स्त्रियः ॥ वसुदेवस्तथाक्रूरो
प्युद्धवश्च ययौ मुदा ॥ ३५ ॥ कालिंदीनिकटं गत्वा ते सर्वे रुरुदुः शुचा ॥ परस्परं च संभाष्य ते सर्वे स्वालयं ययुः ॥ ३६ ॥
कुंती सपुत्रा विधवा वसुदेवाज्ञया मुने ॥ नानारत्नमणिं प्राप्य प्रययौ स्वालयं मुदा ॥ ३७ ॥ वसुदेवो देवकी च पुत्रकल्याणहे
तवे ॥ नानारत्नमणिं वस्त्रं सुवर्णं रजतं तथा ॥ ३८ ॥ मुक्तामाणिक्यहारं च मिष्टान्नं च सुधोपमम् ॥ भट्टेभ्यो ब्राह्मणेभ्यश्च प्रददौ
सादरं मुदा ॥ ३९ ॥ महोत्सवं वेदपाठं हरेर्नामैकमंगलम् ॥ विप्राणां भोजनं चैव कारयामास यत्नतः ॥ ४० ॥ ज्ञातीनां बांध
वानां च पुरस्कारं यथोचितम् ॥ चकार मणिमाणिक्यमुक्तावस्त्रैर्मनोहरैः ॥ ४१ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्म
खण्ड उत्तरभागे नारायणनारदसंवादे भगवदुपनयनं नामैकशततमोऽध्यायः ॥ १०१ ॥ ॥ श्रीनारायण उवाच ॥ ॥ कृष्णः
सांदीपिनेर्गेहं गत्वा च सबलो मुदा ॥ नमश्चकार स्वगुरुं गुरुपत्नीं पतिव्रताम् ॥ १ ॥ शुभाशिषं गृहीत्वा च दत्त्वा रत्नमणिं हरिः ॥
गुरवे तस्य भार्यायै तमुवाच यथोचितम् ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ त्वत्तो विद्यां लभिष्यामि वांछितां वांछितं
मम ॥ कृत्वा शुभक्षणं विप्र मां पाठय यथोचितम् ॥ ३ ॥ ओमित्युक्त्वा मुनिश्रेष्ठः पूजयामास तं मुदा ॥ मधुपर्कप्राशनेन
गवा वस्त्रेण चंदनैः ॥ ४ ॥ मिष्टान्नं भोजयामास तांबूलं च सुवासितम् ॥ सुप्रियं कथयामास तुष्टाव परमेश्वरम् ॥ ५ ॥ ॥ सांदीपि
निरुवाच ॥ ॥ परं ब्रह्म परं धाम परमीश परात्पर ॥ स्वेच्छामयं स्वयंज्योतिर्निर्लिप्तैको निरंकुशः ॥ ६ ॥ भक्तैकनाथ भक्तेष्ट
भक्तानुग्रहविग्रह ॥ भक्तवांछाकल्पतरो भक्तानां प्राणवल्लभ ॥ ७ ॥ मायया बालरूपोसि ब्रह्मेशशेषवंदितः ॥ मायया भुवि
भूपाल भुवो भारक्षयाय च ॥ ८ ॥ योगिनो यं विदंत्येवं ब्रह्मज्योतिः सनातनम् ॥ ध्यायंते भक्तनिवहा ज्योतिरभ्यंतरे मुदा ॥ ९ ॥
द्विभुजं मुरलीहस्तं सुंदरं श्यामरूपकम् ॥ चंदनोक्षितसर्वांगं सस्मितं भक्तवत्सलम् ॥ १० ॥ पीतांबरधरं देवं वनमालाविभूषि ॥२२७॥
तम् ॥ लीलापांगतरंगैश्च निंदितानंगमूर्च्छितम् ॥ ११ ॥ अलक्तभवनं तद्वत्पादपद्मं सुशोभनम् ॥ कौस्तुभोद्भासितांगं च दिव्यमूर्तिं

मनोहरम् ॥ १२ ॥ ईषद्धास्यप्रसन्नं च सुवेषं प्रस्तुतं सुरैः ॥ देवदेवं जगन्नाथं त्रैलोक्यमोहनं परम् ॥ १३ ॥ कोटिकंदर्पलीलाभं
कमनीयमनीश्वरम् ॥ अमूल्यरत्ननिर्माणभूषणौघेन भूषितम् ॥ १४ ॥ वरं वरेण्यं वरदं वरदानामभीप्सितम् ॥ चतुर्णामपि वेदा
नां कारणानां च कारणम् ॥ १५ ॥ पाठार्थं मत्प्रियस्थानमागतोसि च मायया ॥ पाठं ते लोकशिक्षार्थं रमणं गमनं रणम् ॥
स्वात्मारामस्य च विभोः परिपूर्णतमस्य च ॥ १६ ॥ ॥ गुरुपत्न्युवाच ॥ ॥ अद्य मे सफलं जन्म सफलं जीवनं मम ॥
पातिव्रत्यं च सफलं सफलं च तपोवनम् ॥ १७ ॥ मद्दक्षहस्तः सफलो दत्तं येनान्नमीप्सितम् ॥ तदाश्रमं तीर्थपरं तीर्थपादपदांकितम्
॥ १८ ॥ तत्पादरजसा पूता गृहाः प्रांगणमुत्तमम् ॥ यस्य त्वत्पादपद्मं चैवावयोर्जन्मखंडनम् ॥ १९ ॥ तावद्दुःखं च शोकश्च तावद्रो
गश्च रोगकः ॥ तावज्जन्मानि कर्माणि क्षुत्पिपासादिकानि च ॥ यावत्त्वत्पादपद्मस्य भजनं नास्ति दर्शनम् ॥ २० ॥ हे कालकाल
भगवन्स्रष्टुः संहर्तुरीश्वर ॥ कृपां कुरु कृपानाथ मायामोहनिकृंतन ॥ २१ ॥ इत्युक्त्वा साश्रुनेत्रा सा क्रोडे कृत्वा हरिं पुनः ॥ स्वस्त
नं पाययामास प्रेम्णा च देवकी यथा ॥ २२ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ मातस्त्वं मां कथं स्तौषि बालं दुग्धमुखं सुतम् ॥
गच्छ गोलोकमिष्टं च स्वामिना सह सांप्रतम् ॥ २३ ॥ त्यक्त्वा प्राकृतिकं मिथ्या नश्वरं च कलेवरम् ॥ विधाय निर्मलं देहं
जन्ममृत्युजराहरम् ॥ २४ ॥ इत्युक्त्वा चतुरो वेदान्पठित्वा मुनिपुंगवात् ॥ मासेन परया भक्त्या दत्त्वा पुत्रं मृतं पुरा ॥ २५ ॥
रत्नानां च त्रिलक्षं च मणीनां पंचलक्षकम् ॥ हीरकाणां चतुर्लक्षं मुक्तानां पंचलक्षकम् ॥ २६ ॥ माणिक्यानां द्विलक्षं च वस्त्रं त्रैलो
क्यदुर्लभम् ॥ हारं च दुर्गया दत्तं हस्तरत्नांगुलीयकम् ॥ २७ ॥ दशकोटिं सुवर्णानां गुरवे दक्षिणां ददौ ॥ अमूल्यरत्ननिर्माणं नारीस
र्वांगभूषणम् ॥ २८ ॥ गुरुप्रियायै प्रददौ वह्निशुद्धांशुकं वरम् ॥ मुनिर्दत्त्वा च पुत्राय तत्सर्वं प्रियया सह ॥ २९ ॥ सद्रत्नरथमारुह्य
ययौ गोलोकमुत्तमम् ॥ तमद्भुतं हरिं दृष्ट्वा प्रययौ स्वालयं मुदा ॥३०॥ एवं ब्रह्मण्यदेवस्य चरित्रं शृणु नारद ॥ इदं स्तोत्रं महापुण्यं यः
पठेद्भक्तिपूर्वकम् ॥ ३१ ॥ श्रीकृष्णे निश्चलां भक्तिं लभते नात्र संशयः ॥ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पंडितः ॥ ३२ ॥ इह लो

के सुखं प्राप्य यात्यंते श्रीहरेः पदम् ॥ तत्र नित्यं हरेर्दास्यं लभते नात्र संशयः ॥ ३३ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्म
खंड उत्तरार्द्धे नारायणनारदसंवादे मुनिपत्नीस्तोत्रंनाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथा
गत्य मधुपुरीं प्रणम्य पितरं विभुः ॥ सबलो वटमूले च सस्मार गरुडं हरिः ॥ १ ॥ सादरं लवणोदं च विश्वकर्माणमीप्सितम् ॥
तत्याज गोपवेषं च नृपवेषं दधार सः ॥ २ ॥ एतस्मिन्नंतरे चक्रमाजगाम हरिं स्वयम् ॥ परं सुदर्शनं नाम सूर्यकोटिसमप्रभम् ॥ ३ ॥
तेजसा हरिणा तुल्यं परं वैरिविमर्दनम् ॥ अव्यर्थमस्त्रमस्त्राणां प्रवरं परमं परम् ॥ ४ ॥ रत्नयानं पुरः कृत्वा गरुडो हरिसंनिधिम् ॥
विश्वकर्मा सशिष्यश्च जलधिः कंपितस्तथा ॥ ५ ॥ हरिं प्रणेमुस्ते सर्वे मूर्ध्ना च भक्तिपूर्वकम् ॥ सस्मितं सादरं यत्नात्तानुवाच
क्रमाद्विभुः ॥ ६ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ हे समुद्र महाभाग स्थलं च शतयोजनम् ॥ देहि मे नगरार्थं च पश्चाद्दास्यामि
निश्चितम् ॥ ७ ॥ नगरं कुरु हे कारो त्रिषु लोकेषु दुर्लभम् ॥ रमणीयं च सर्वेषां कमनीयं च योषिताम् ॥ ८ ॥ वांछितं चापि भक्ता
नां वैकुंठसदृशं परम् ॥ सर्वेषामपि स्वर्गाणां परं पारमभीप्सितम् ॥ ९ ॥ दिवानिशं खगश्रेष्ठ सन्निधौ विश्वकर्मणः ॥ स्थितिं कुरु
महाभाग यावन्निर्माति द्वारकाम् ॥ १० ॥ दिवानिशं च मत्पार्श्वे चक्रश्रेष्ठ स्थितिं कुरु ॥ ओमित्युक्त्वा तु प्रययुः सर्वे चक्रं विना
मुने ॥ ११ ॥ कंसस्य पितरं भद्रमुग्रसेनं महाबलम् ॥ नृपं चकार नगरे क्षत्रियाणां सतामपि ॥ १२ ॥ विजित्य च जरासंधं निहत्य
यवनं तथा ॥ उपायेन महाभाग निर्माणकममीश्वरः ॥ १३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ शतयोजनपर्यंतं नगरं सुमनोहरम् ॥
पद्मरागैर्मरकतैरिंद्रनीलैरनुत्तमैः ॥ १४ ॥ रुचकैः पारिभद्रैश्च पलंकैश्च स्यमंतकैः ॥ गंधकैर्गोलिमैश्चैव चंद्रकांतादिभिस्तथा ॥ १५ ॥
सूर्यकांतादिभिश्चैव पुत्रैश्च स्फटिकाकृतैः ॥ हरिद्वर्णैश्च मणिभिः श्यामैर्गौरमुखैश्चैषैः ॥ १६ ॥ गोरोचनाभिः पीतैश्च दाडिमीबीजरू
पकैः ॥ पद्मबीजनिभैश्चैव नीलैः कमलवर्णकैः ॥ १७ ॥ मणिभिः कज्जलाकारैरुज्ज्वलैश्च परिष्कृतैः ॥ श्वेतचंपकवर्णाभैस्तप्तकांचन
सन्निभैः ॥ १८ ॥ स्वर्णमूल्यशतगुणैरीषद्रक्तैः सुशोभनैः ॥ गरिष्ठैश्च वरिष्ठैश्च मणिश्रेष्ठैश्च पूजितैः ॥ १९ ॥ यथाविधानं यद्योग्यं यत्र

यन्मुक्तमाप्सतम् ॥ मणीनां हरणं चैव यक्षसंघा हिमालयात् ॥२०॥ दिवानिशं करिष्यंति यावन्निर्माणपूर्वकम् ॥ यक्षैश्च सप्तभिर्लक्षैः कुबेरप्रेरितैरपि ॥ २१ ॥ वेताललक्षैः कूष्मांडलक्षैः शंकरयोजितैः ॥ दानवैर्ब्रह्मरक्षोभिः शैलकन्यानियोजितैः ॥ २२ ॥ कुरु दिव्यं च पत्नीनां सहस्राणां च षोडश ॥ अन्यपत्नीजनस्यापि चाष्टाधिकशतस्य च ॥ २३ ॥ शिबिरं परिखायुक्तमुच्चैः प्राकारवेष्टितम् ॥ युक्तं द्वादशशालं च सिंहद्वारपरिष्कृतम् ॥२४॥ युक्तं चित्रैर्विचित्रैश्च कृत्रिमैश्च कपाटकैः ॥ निषिद्धवृक्षरहितं प्रसिद्धैश्च परिष्कृतम् ॥ २५ ॥ सुलक्षणं चंद्रवेधं प्रांगणं च तथैव च ॥ यदूनामाश्रमं दिव्यं किंकराणां तथैव च ॥२६॥ सर्वत्र सिद्धं निलयमुग्रसेनस्य भूभृतः ॥ आश्रमं सर्वतोभद्रं वसुदेवस्य मत्पितुः ॥ २७ ॥ ॥ विश्वकर्मोवाच ॥ ॥ के ते वृक्षाः प्रशस्ताश्च निषिद्धाश्चापि केचन ॥ भद्राभद्रप्रदाश्चापि तान्वदस्व जगद्गुरो ॥२८॥ केषामस्थिनियुक्तं च शिबिरं च शुभाशुभम् ॥ दिशि कुत्र जलं भद्रमभद्रं च वद प्रभो ॥२९॥ भद्रप्रदश्च को वृक्षो दिशि कुत्र प्रवर्तते ॥ किं प्रमाणं गृहाणां च प्रांगणानां सुरेश्वर ॥३०॥ मंगलं कुसुमोद्यानं दिशि कुत्र तरोस्तथा ॥ प्राकाराणां किं प्रमाणं परिखाणां सुरेश्वर ॥ ३१ ॥ द्वाराणां च गृहाणां च प्राकाराणां प्रमाणकम् ॥ कस्यकस्य तरोः काष्ठं प्रशस्तं शिबिरे प्रभो ॥ ३२ ॥ अमंगलं वा केषां च सर्वं मां वक्तुमर्हसि ॥ ३३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ आश्रमे नारिकेलश्च गृहिणां च धनप्रदः ॥ शिबिरस्य यदीशाने पूर्वे पुत्रप्रदस्तरुः ॥ ३४ ॥ सर्वत्र मंगलार्हश्च तरुराजो मनोहरः ॥ रसालवृक्षः पूर्वस्मिन्नृणां संपत्प्रदस्तथा ॥ ३५ ॥ शुभप्रदश्च सर्वत्र सुरकारो निशामय ॥ बिल्वश्च पनसश्चैव जंबीरो बदरी तथा ॥३६॥ प्रजाप्रदश्च पूर्वस्मिन्दक्षिणे धनदस्तथा ॥ संपत्प्रदश्च सर्वत्र यतो हि वर्धते गृही ॥ ३७ ॥ जंबूवृक्षश्च दाडिंबः कदल्याम्रातकस्तथा ॥ बंधुप्रदश्च पूर्वस्मिन्दक्षिणे मित्रदस्तथा ॥ ३८ ॥ सर्वत्र शुभदश्चैव धनपुत्रशुभप्रदः ॥ हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ॥ ३९ ॥ ईशाने सुखदश्चैव सर्वत्रैव निशामय ॥ सर्वत्र चंपकः शुद्धो भुवि भद्रप्रदस्तथा ॥ ४० ॥ अलाबुश्चातिकूष्मांडमायाबुश्च सकिंशुकः ॥ खर्जूरी कर्कटी चापि शिबिरे मंगलप्रदा ॥ ४१ ॥ वास्तूककारविल्वश्च वार्ताकश्च शुभप्रदः ॥ लताफलं च शुभदं सर्वं सर्वत्र निश्चितम् ॥ ४२ ॥ प्रशस्तं कथितं कारो

निषिद्धं च निशामय ॥ वन्यवृक्षो निषिद्धश्च शिबिरे नगरेपि च ॥ ४३ ॥ वटो निषिद्धः शिबिरे नित्यं चोरभयं यतः ॥ नगरेषु प्रसिद्धश्च दर्शनात्पुण्यदस्तथा ॥ ४४ ॥ निषिद्धः शाल्मलिश्चैव शिबिरे नगरे पुरे ॥ दुःखप्रदश्च सततं भूमिपानां सदापि च ॥ ४५ ॥ न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ॥ विद्यामतिनिषिद्धस्तु सततं दुःखदस्तदा ॥ ४६ ॥ हे कारो तिंतिडीवृक्षो यत्नात्तं परिवर्जयेत् ॥ शतेन धनहानिः स्यात्प्रजाहानिर्भवेद्ध्रुवम् ॥ ४७ ॥ शिबिरेतिनिषिद्धश्च नगरे किंचिदेव च ॥ न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ॥ ४८ ॥ विद्यामतिनिषिद्धश्च प्राज्ञस्तं परिवर्जयेत् ॥ खर्जूरश्च गडुश्चैव निषिद्धः शिबिरे तथा ॥ ४९ ॥ न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ॥ वृक्षश्च चणकादीनां धान्यं च मंगलप्रदम् ॥ ५० ॥ ग्रामेषु नगरे चापि शिबिरे च तथैव च ॥ इक्षुवृक्षश्च शुभदः संततं शुभदस्तथा ॥ ५१ ॥ अशोकश्च शिरीषश्च कदंबश्च शुभप्रदः ॥ कचिद्दरिद्रा शुभदा शुभदश्चार्द्रकस्तथा ॥ ५२ ॥ हरीतकी च शुभदा ग्रामेषु नगरेषु च ॥ नवाद्या भद्रदा नित्यं तथा चामलकी ध्रुवम् ॥ ५३ ॥ गजानामस्थि शुभदमश्वानां च तथैव च ॥ कल्याणमुच्चैःश्रवसां वास्तौ स्थापनकारिणाम् ॥ ५४ ॥ न शुभप्रदमन्येषामुच्छिन्नकारणं परम् ॥ वानराणां नराणां च गर्दभानां गवामपि ॥ ५५ ॥ कुक्कुटानां शृगालानां मार्जाराणामभद्रकम् ॥ भेटकानां सूकराणां सर्वेषां च शुभप्रदम् ॥ ५६ ॥ ईशाने चापि पूर्वस्मिन्पश्चिमे च तथोत्तमे ॥ शिबिरस्य जलं भद्रमन्यत्राशुभमेव च ॥ ५७ ॥ दीर्घे प्रस्थे समान च न कुर्यान्मंदिरं बुधः ॥ चतुरस्रे गृहे कारो गृहिणां धननाशनम् ॥ ५८ ॥ दीर्घप्रस्थः परिमितो नेत्रांकेनापि संहृतम् ॥ शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम् ॥ ५९ ॥ प्रस्थे हस्तद्वयात्पूर्वं दीर्घं हस्तत्रयं तथा ॥ गृहाणां शुभदं द्वारं प्राकारस्य गृहस्य च ॥ ६० ॥ न मध्यदेशे कर्तव्यं किंचिन्न्यूनाधिके शुभम् ॥ ॥ चतुरस्रं चंद्रवेधं शिबिरं मंगलप्रदम् ॥ ६१ ॥ अभद्रदं सूर्यवेधं शिबिरं मंगलप्रदम् ॥ अभद्रदं सूर्यवेधं प्रांगणं च तथैव च ॥ ६२ ॥ शिबिराभ्यंतरे भद्रा स्थापिता तुलसी नृणाम् ॥ धनपुत्रप्रदात्री च पुण्यदा हरिभक्तिदा ॥ ६३ ॥ प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् ॥ मालती यूथिका कुंदं माधवी केतकी तथा ॥ ६४ ॥ नागेश्वरं मल्लिकां च कांचनं बकु

लं शुभम् ॥ अपराजिता च शुभदा तेषामुद्यानमीप्सितम् ॥ ६५ ॥ पूर्वे च दक्षिणे चैव शुभदं नात्र संशयः ॥ ऊर्ध्वं षोडशहस्तेभ्यो
नैव कुर्याद्गृहं गृही ॥ ६६ ॥ ऊर्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् ॥ सूत्रधारं तैलकारं स्वर्णकारं च हीरकम् ॥ ६७ ॥ वाटी
मूले ग्राममध्ये न कुर्यात्स्थापनं बुधः ॥ ब्राह्मणं क्षत्रियं वैश्यं सच्छूद्रं गणकं शुभम् ॥ ६८ ॥ भट्टं वैद्यं पुष्पकारं स्थापयेच्छिबिरां
तिके ॥ प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम् ॥ ६९ ॥ परितः शिबिराणां च गंभीरं दशहस्तकम् ॥ संकेतपूर्वकं चैव परि
खाद्वारमीप्सितम् ॥ ७० ॥ शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च ॥ शालमलीनां तिंतिडीनां हिंतालानां तथैव च ॥ ७१ ॥
निंबानां सिंधुवाराणामुंबराणामभद्रकम् ॥ धत्तूराणां वटानां चाप्येरंडानामवांछितम् ॥ ७२ ॥ एतेषामतिरिक्तानां शिबिरे काष्ठमीप्सि
तम् ॥ वृक्षं च वज्रहस्तं च भूधरो वर्जयेदधः ॥७३॥ पुत्रदारधनं हन्यादित्याह कमलोद्भवः ॥ कथितं लोकशिक्षार्थं कुरु काष्ठं विना पुरी
म् ॥ ७४ ॥ शुभक्षणं चाप्यधुना गच्छ वत्स यथासुखम् ॥ विश्वकर्मा हरिं नत्वा जगाम पक्षिणा सह ॥ ७५ ॥ समुद्रस्य समीपं च
वटमूलं मनोहरम् ॥ सुष्वाप तत्र नक्तं च कारुश्च पक्षिणा सह ॥ ७६ ॥ स्वप्ने द्वारवतीं रम्यां ददर्श गरुडस्तथा ॥ यत्किंचित्कथितं का
रुं कृष्णेन परमात्मना ॥७७॥ तदेव लक्षणं सर्वं ददर्श नगरे मुने ॥ कारुं हसंति स्वप्ने च सर्वे ते शिल्पकारिणः ॥७८॥ गरुडं गरुडा
श्चान्ये बलवंतश्च पक्षिणः ॥ बुद्धो ददर्श गरुडो विश्वकर्मा च लज्जितः ॥ ७९ ॥ अतीव द्वारकां रम्यां शतयोजनविस्तृताम् ॥
ब्रह्मादीनां च नगरं विजित्य च विराजिताम् ॥ ८० ॥ तेजसाच्छादितं सूर्यं रत्नानां च परिष्कृताम् ॥ ८१ ॥ ॥ इति श्रीब्रह्म
वैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे द्वारकानिर्माणारंभे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ श्रीनारायण उवाच ॥ ॥ एतस्मिन्नंतरे ब्रह्मा भवान्या च भवः स्वयम् ॥ अनंतश्चापि धर्मश्च भास्करश्च हुताशनः ॥ १ ॥ कुबेरो
वरुणश्चैव पवनश्च यमस्तथा ॥ महेंद्रश्चापि चंद्रश्च रुद्राश्चैकादशैव ते ॥ २ ॥ अन्ये देवाश्च मुनयो वसवः सप्त एव च ॥ आदित्या
श्चापि दैत्याश्च गंधर्वाः किन्नरास्तथा ॥ ३ ॥ आययुर्द्वारकां द्रष्टुं श्रीकृष्णं च बलं तथा ॥ आगच्छंतं च सहसा वटमूलं मनोह

रम् ॥ ४ ॥ दृष्ट्वा च देवताः सर्वास्तुष्टुवुः पुरुषोत्तमम् ॥ आकाशाच्च विमानैश्च संप्राप्य वटमूलकम् ॥ ५ ॥ ददृशुर्द्वारकां रम्या
मतीव सुमनोहराम् ॥ मुक्तामाणिक्यहीरेण रत्नराजिविराजिताम् ॥ ६ ॥ परितश्चसुरत्नां च शतयोजनसंमिताम् ॥ सप्तभिः परि
खाभिश्च गंभीराभिश्च वेष्टिताम् ॥ ७ ॥ प्राकारैर्नवभिर्युक्तां लक्षैः क्रीडासरोवरैः ॥ मनोहरैः सपद्मैश्च सहितैश्च मधुव्रतैः ॥ ८ ॥ शोभि
तां सर्वतोभद्रैः पुष्पोद्यानत्रिलक्षकैः ॥ प्रफुल्लपुष्पैः पवनैः सर्वत्र सुरभीकृताम् ॥ ९ ॥ आमोदितां च शीतेन मंदचंदनवायुना ॥ तरु
भिर्नारिकेराणां शोभितां शतकोटिभिः ॥ १० ॥ गुवाकानां च वृक्षैश्च भूषितां तच्चतुर्गुणैः ॥ चतुर्गुणैर्गुवाकानां युक्तामाम्रमहीरुहैः ॥
॥ ११ ॥ परीतां पनसानां च वृक्षैराम्रसमैर्मुने ॥ सुशोभितां च तालानां द्रुमैराम्रसमैर्मुने ॥ १२ ॥ अश्वत्थैर्बदरीभिश्च बिल्वैराम्रा
तकैर्वटैः ॥ शाल्मलीभिश्च जंबूभिः कदंबैश्चापि शोभिताम् ॥ १३ ॥ वंशैश्च तिंतिडीभिश्च चंपकैर्बकुलैस्तथा ॥ नागेश्वरैर्नागरंगैर्ज
बीरैर्दाडिमैर्युताम् ॥ १४ ॥ खर्जूरैरर्जुनैः पिष्टैरिक्षुभिः कांचनैरपि ॥ हरीतकीभिर्धात्रीभिरिंदुभिः परितः प्लुताम् ॥ १५ ॥ शालैः
प्रियालैर्हिंतालैः शिशिरैः सप्तपर्णकैः ॥ अन्यैर्नानाद्रुमैरिष्टैरिष्टां युक्तां परिप्लुताम् ॥ १६ ॥ असंख्यैर्मंदिरै रम्यैरत्युच्चैरपि संस्कृताम् ॥
रत्नेंद्रसारनिर्माणैर्मुक्तामाणिक्यभूषितैः ॥ १७ ॥ माणिक्यहीरकैश्चित्रैः सद्रत्नकलशान्वितैः ॥ मणिभिर्निर्मितैरिष्टैः सोपाननिकरैर्वरैः
॥ १८ ॥ कपाटैः कठिनैर्दिव्यैरर्गलाकीलकैर्युताम् ॥ हरिन्मणीनां स्तंभानां कदंबैरपि संयुतैः ॥ १९ ॥ नानाचित्रैर्विचित्रैश्च सुचित्रैश्च
परिष्कृतैः ॥ दर्पणैः सूक्ष्मवस्त्रैश्च शोभितैः श्वेतचामरैः ॥ २० ॥ प्रांगणैः पद्मरागाद्यैरिंद्रनीलपरिष्कृताम् ॥ वीथीभी रत्नखचितै राज
मार्गैः समन्विताम् ॥ २१ ॥ ग्रीष्ममध्याह्नसूर्याभां ज्वलितां रत्नतेजसा ॥ गवाक्षलक्षैः संयुक्तां वाजिशालापरिष्कृताम् ॥ २२ ॥
दृष्ट्वा च द्वारकां रम्यां ते देवा विस्मयं ययुः ॥ प्रसन्नवदनो देवो लांगली भगवानजः ॥ २३ ॥ सस्मार यदुवंशानां समूहमुग्रसे
नकम् ॥ वसुदेवं देवकीं च पांडवांश्च समातृकान् ॥ २४ ॥ नंदं यशोदां गोपालान्व्रजेंद्रमुनिपुंगवान् ॥ गंधर्वान्किन्नरांश्चैव सहि
तो यदुपुंगवैः ॥ २५ ॥ नंदो यशोदा गोपाश्च जनन्या सह पांडवाः ॥ गंधर्वाः किन्नराश्चैव विद्याधर्यश्च नारद ॥ २६ ॥ किन्नर्य

अपि नर्तक्यो गायका वाद्यभांडकाः ॥ भिक्षुका भांडकाश्चैव भट्टाश्च गणकास्तथा ॥ २७ ॥ नानादेशोद्भवा भूपा वैद्या
अन्ये च मानवाः ॥ संन्यासिनश्च यतयोऽवधूता ब्रह्मचारिणः ॥ २८ ॥ आययुर्मुनयः सर्वे सशिष्याः सिद्धपुंगवाः ॥ सनकश्च
सनंदश्च तृतीयश्च सनातनः ॥ २९ ॥ सनत्कुमारो भगवाञ्ज्ञानिनां च गुरोर्गुरुः ॥ शिष्यैस्त्रिकोटिभिः सार्द्धं पंचवर्षो दिगंबरः ॥
॥ ३० ॥ शिष्यैस्त्रिलक्षैः सहितो दुर्वासा भगवानजः ॥ लक्षशिष्यैः कश्यपश्च वाल्मीकिश्च त्रिलक्षकैः ॥ ३१ ॥ लक्षशिष्यैर्गौत
मश्च कोटिभिश्च बृहस्पतिः ॥ शुक्रस्त्रिकोटिभिः सार्द्धं भरद्वाजश्च लक्षकैः ॥ ३२ ॥ शिष्यैस्त्रिकोटिभिः सार्द्धमंगिरा भगवानजः ॥
वसिष्ठः कोटिभिः शिष्यैः प्रचेताः कोटिभिस्तथा ॥ ३३ ॥ त्रिलक्षैश्च पुलस्त्यश्चाप्यगस्त्यः कोटिभिः सह ॥ पुलहो लक्षशिष्यैश्च
क्रतुर्लक्षैस्तथैव च ॥ ३४ ॥ अत्रिस्त्रिकोटिभिः सार्द्धं भृगुश्च पंचकोटिभिः ॥ त्रिकोटिभिर्मरीचिश्च शतानंदः सहस्रकैः ॥ ३५ ॥ सार्द्धं
त्रिकोटिभिः शिष्यैर्ऋष्यशृंगो विभांडकः ॥ पाणिनिः कोटिभिः शिष्यैर्लक्षैः कात्यायनस्तथा ॥ ३६ ॥ याज्ञवल्क्यः सहस्रैश्च व्यासः
शिष्यत्रिकोटिभिः ॥ शिष्यैर्लक्षैश्च सहितो गर्गः कुलपुरोहितः ॥३७॥ गालवश्च सहस्रैश्च सहस्रैः सौभरिस्तथा ॥ त्रिकोटिभिर्लोमश
मार्कंडेयस्त्रिकोटिभिः ॥३८॥ सांदीपिनिर्देवलश्च सच्छिष्यैश्च त्रिकोटिभिः ॥३९॥ वोढुः शिष्यैः कोटिभिश्च लक्षैः पंचशिखस्तथा ॥
अहं नारायणश्चैव नरो मम सहोदरः ॥ ४० ॥ शिष्यैस्त्रिकोटिभिः सार्द्धं विश्वामित्रश्च कोटिभिः ॥ त्रिकोटिभिर्जरत्कारुरास्तीकश्च
त्रिकोटिभिः ॥ ४१ ॥ त्रिकोटिभिः पर्शुरामो वत्सो लक्षैश्च शिष्यकैः ॥ दक्षस्त्रिलक्षैः शिष्यैश्च कपिलः पंचकोटिभिः ॥ ४२ ॥
संवर्तश्च त्रिलक्षैश्चाप्युतथ्यश्च तथैव ॥ सहस्रैर्जैमिनिश्चैव पैलो लक्षैस्तथैव च ॥४३॥ सुवर्णश्च सहस्रैश्च वैशंपायन एव च ॥ शिष्यैर्लक्षैः
समेतश्च व्यासशिष्यः पुरोगमः ॥४४॥ लक्षैः शिष्यैस्तथा शृंगी चोपमन्युस्तथैव च ॥ सहस्रैश्च गौरमुखः कचो लक्षैर्गुरोः सुतः ॥४५॥
अश्वत्थामा तथा द्रोणः कृपाचार्यः सशिष्यकः ॥ भीष्मः कर्णश्च शकुनी राजा दुर्योधनस्तथा ॥ नृपस्य भ्रातरः सर्वे चान्ये भूपा
जगद्गुरुम् ॥४६॥ ॥ श्रीभगवानुवाच ॥ ॥ शुभकर्मणि निष्पन्ने यास्यंति ये समागताः ॥ शिवब्रह्मादयो देवा मुनयश्च तथापरे ॥४७॥

भवांश्च यादवैः सार्द्धं प्रविश द्वारकां पुरीम् ॥ मत्पित्रा मातृभिः सार्धं महेंद्रे च क्षणे नृपः ॥ ४८ ॥ अपरे यदवोऽन्ये च यास्यंति मथुरां पुरीम् ॥ श्रुत्वेति विरसो राजा तमुवाच भयाकुलः ॥ ४९ ॥ ॥ उग्रसेन उवाच ॥ ॥ वासुदेव न यास्यामि भूमिं तां पैतृकीं पुनः ॥ सर्वतीर्थपरां शुद्धां दैवे कर्मणि पैतृके ॥ ५० ॥ पावके भूमिदेशे च पितॄणां निर्वपेत्तु यः ॥ मद्भूमिः स्वामिपितृभिः श्राद्धकर्मणि इन्यते ॥ ५१ ॥ पितणां निष्फलं श्राद्धं देवानामपि पूजनम् ॥ किंचित्फलप्रदं चैव.संपूर्णं पैतृकें स्थले ॥ ५२ ॥ पुत्रपौत्रकलत्रेभ्यः प्राणेभ्यः प्रेयसी सदा ॥ दुर्लभा पैतृकी भूमिः पितुर्मातुर्गरीयसी ॥५३॥ तत्सत्यं च पवित्रं च दैवे कर्मणि पैतृके ॥ कीडां.च दत्ते दानं च परदत्तमशुद्धकम् ॥ ५४ ॥ म्रियते पैतृकीभूम्यां तीर्थतुल्यफलं लभेत् ॥ गंगाजलसमं पूतं पितृखातोदकं हरे ॥ ५५ ॥ तत्र स्नात्वा जले पूते गंगास्नानफलं लभेत् ॥ पितणां तर्पणं तत्र पवित्रं देवपूजनम् ॥ ५६ ॥ पैतृकी जन्मभूमिश्चेद्द्विगुणं तत्फलं लभेत् ॥ पैतृकीभूमितुल्या च दानभूमिः सतामपि ॥ ५७ ॥ ॥ वासुदेव उवाच ॥ ॥ भोगास्ते वचनं किं वा निषेकः केन वार्यते ॥ पैतृकीतीर्थतुल्या सा किं तीर्थं द्वारकापरम् ॥५८॥ सर्वतीर्थपरा श्रेष्ठा द्वारका बहुपुण्यदा ॥ यस्याः प्रवेशमात्रेण नराणां जन्मखंडनम् ॥ ५९ ॥ दानं च द्वारकायां च श्राद्धं च देवपूजनम् ॥ चतुर्गुणं च तीर्थानां गंगादीनां च भूमिप ॥ ६० ॥ गच्छ ब्रह्मादिभिः सार्द्धं मुनिभिर्यादवैः सह ॥ राजेंद्रभवनं तत्र गृहाणां सादरं पुनः ॥ ६१ ॥ करोति शश्वन्न्यक्कारंमहेंद्रस्यामरावतीम् ॥ निवस त्वं सुधर्मायां महेंद्रे च क्षणे नृप ॥ ६२ ॥ जंबुद्वीपस्थिता भूपा राजेंद्रमंडलेश्वराः ॥ करं दास्यंति तुभ्यं च महेंद्राय सुरा यथा ॥ ॥ ६३ ॥ भूयाज्जितः कुबेरश्च धनेन धनसंपदा ॥ तेजसा भास्करश्चापि महेंद्रः संपदा तथा ॥ ६४ ॥ देवा जिता रणेनैव पुण्येन मुनयो जिताः ॥ तपस्विनश्च तपसा व्रतिनश्च व्रतेन च ॥ ६५ ॥ उग्रसेनसमो राजा न भूतो न भविष्यति ॥ सभायां यस्य भगवान्बलदेवो महाबलः ॥ ६६ ॥ विश्वं च यस्य शिरसां सहस्राणां नरेश्वर ॥ एकस्मिञ्शिरसि न्यस्तं शूर्पे च सर्षपो यथा ॥ ६७ ॥ नह्यनंतसमो देवो बलेन बलवत्तरः ॥ यद्गुणानां च नास्त्यंतस्तेनानंतं जगुर्बुधाः ॥ ६८ ॥ वसवोष्टौ महाभागा रुद्राश्च शंकरं विना ॥

बलिनो द्वादशादित्या महेंद्रश्च सुरैः समः ॥ ६९ ॥ न समर्था ध्रुवं जेतुमुग्रसेनं नृपेश्वरम् ॥ कृष्णस्य वचनं श्रुत्वा प्रसन्नवदनो नृपः ॥
॥ ७० ॥ प्रययौ यादवैः सार्द्धं महेंद्रभवनात्परम् ॥ स्वालयं द्वारकामध्ये ज्वलंतं मणितेजसा ॥ ७१ ॥ सहस्रैर्द्वारपालैश्च शूलिभिर्दंडह
स्तकैः ॥ नियुक्ते रक्षित द्वारं ददर्श मानवेश्वरः ॥ ७२ ॥ अभ्यंतरे च शिबिरं द्वारेभ्यः षड्भ्य एव च ॥ मंदिराणां च शतके रत्नानां
परिभूषणम् ॥ ७३ ॥ कोटिं मत्तगजेंद्राणां ददर्श गजमंदिरे ॥ चतुर्युगं गजौघं च गजानां षड्गुणं तथा ॥ ७४ ॥ महाबलांश्च तुरगा
न्सूर्याश्वं च हसंति च ॥ गजेंद्रौघं च सर्वेषां वाहनानामपीश्वरम् ॥ ७५ ॥ हसत्यैरावतं शश्वन्महेंद्रस्य च नारद ॥ अत्युच्चैरुच्चैःश्रवसां
ददर्श कोटिमीप्सितम् ॥ ७६ ॥ खराणां दशकोटिं च पादातं षड्गुणं तथा ॥ निर्माणं रत्नसाराणां रथानां पंचलक्षकम् ॥ ७७ ॥ पंच
लक्षं सारथीनां तत्राश्वं षड्गुणं तथा ॥ अश्ववाटं तत्समं च सुधर्मां च सभामपि ॥ ७८ ॥ ददर्शाभ्यंतरे रम्ये देवौघमुनिसंयुताम् ॥ वह्नि
शुद्धांशुके रम्यैर्भूषितां रक्तकंबलैः ॥७९॥ रत्नसिंहासनै रम्यैर्भूषितां रक्तपिंगलैः ॥ अमूल्यरत्ननिर्माणवीथीनां तेजसोज्ज्वलाम् ॥८०॥
वेष्टितां चं महाभीतैः किंकरैः शतकोटिभिः ॥ प्रविवेश सभां रम्यां श्रुत्वा शंखध्वनिं शुभम् ॥ ८१ ॥ वाद्यं च दुंदुभीनां च मुनीनां
वेदमंत्रकम् ॥ दृष्ट्वा नृपं समुत्तस्थौ वेगेन सबलो हरिः ॥ ८२ ॥ ब्रह्मा महेश्वरश्चैव शेषश्च देवपुंगवाः ॥ समुत्तस्थुः सुराः सर्वे मुनयश्च
महाव्रताः ॥ ८३ ॥ राजेंद्राश्चापि सिद्धेंद्रा वसुदेवपुरोगमाः ॥ रत्नसिंहासने रम्ये चोग्रसेनो महाबलः ॥ ८४ ॥ समुवास महेंद्रस्य
मुनीनामाज्ञया हरेः ॥ देवानां च गुरूणां च गर्गस्यापि तथैव च ॥ ८५ ॥ सप्ततीर्थोदकेनैव पूर्णकुंभेन नारद ॥ चकार वेदमंत्रैश्च
नृपस्याप्यभिषेचनम् ॥ ८६ ॥ तस्मै वस्त्रयुग्मं दत्तं वह्निशुद्धं मनोहरम् ॥ वरुणेन पुरा दत्तं कृष्णाय परमात्मने ॥ ८७ ॥ माल्यं च
पारिजातानां त्वंदमं रत्नभूषणम् ॥ रत्नच्छत्रं ददौ तस्मै बलदेवो महाबलः ॥ ८८ ॥ ब्रह्मा कमंडलुं चैव शूलं चापि महेश्वरः ॥ पार्वती
रत्नमाल्यं च हारं च मालती सती ॥८९॥ अन्ये देवाश्च मुनयो राजेंद्राः सिद्धपुंगवाः ॥ यौतकं च ददौ तस्मै क्रमेण च पृथक्पृथक् ॥
॥ ९० ॥ वसुदेवो ददौ तस्मै शुभदं श्वेतचामरम् ॥ पवनेन पुरा दत्तं कृष्णाय परमात्मने ॥ ९१ ॥ नंदो ददौ च सुरभिं कामधेनुं च

पूजिताम् ॥ यशोदा देवकी तस्मै रत्नश्रेष्ठं ददौ मुदा ॥ ९२ ॥ सप्तभिः किंकरैश्चापि संवीतः श्वेतचामरैः ॥ दधार छत्रमक्रूरो
भक्त्या चैवाज्ञया हरेः ॥ ९३ ॥ रत्नसिंहासने रम्ये ददर्श रत्नदर्पणम् ॥ अतीव पुण्यमवाप्यं च हरिणा च पुरस्कृतः ॥ ९४ ॥
चक्रुः स्तुतिं च भट्टाश्च भिक्षुका ब्राह्मणास्तथा ॥ ददुः शुभाशिषं तस्मै देवाश्च मुनयस्तथा ॥ ९५ ॥ ब्राह्मणेभ्यो ददौ राजा रत्नको
टिं च भक्तितः ॥ भट्टेभ्यो रत्नशतकं भिक्षुकेभ्यस्तथैव च ॥ ९६ ॥ अभिषिच्य नृपेंद्रं च देवांश्च मुनिपुंगवान् ॥ संपूज्य ब्राह्मणांश्चा
पि भट्टान्भिक्षुं द्विजं गुरुम् ॥ ९७ ॥ स्वालयं च ययुः सर्वे यादवाश्च मुदान्विताः ॥ येये हरेः पार्षदाश्च ते सर्वे स्वालयं ययुः
॥ ९८ ॥ प्रभाते चाययुः सर्वे सुधर्मां च सभां हरेः ॥ नमस्कृत्य महेंद्रं च चोषुः सर्वे च संसदि ॥ ९९ ॥ ॥ ~ ॥ इति श्री
ब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे द्वारकाप्रवेश उग्रसेनाभिषेके चतुरधिकशततमोऽध्यायः
॥ १०४ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ वैदर्भराजेंद्रो महाबलपराक्रमः ॥ विदर्भदेशे पुण्यात्मा सत्यशीलश्च भीष्मकः
॥ १ ॥ राजा नारायणांशश्च दाता च सर्वसंपदाम् ॥ धर्मिष्ठश्च गरीयांश्च वरिष्ठश्चापि पूजितः ॥ २ ॥ तस्य कन्या महालक्ष्मी रुक्मि
णी योषितां वरा ॥ अतीव सुन्दरी रम्या रमा रामासु पूजिता ॥३॥ नवयौवनसंपन्ना रत्नाभरणभूषिता ॥ तप्तकांचनवर्णाभा तेजसो
ज्ज्वलिता सती ॥ ४ ॥ शुद्धसत्त्वस्वरूपा सा सत्यशीला पतिव्रता ॥ शांता दांता नितांता चाप्यनंतगुणशालिनी ॥ ५ ॥ इंद्राणी व
रुणानी च चंद्रनारी च रोहिणी ॥ कुबेरपत्नी सूर्यस्त्री स्वाहा शांता कलावती ॥ ६ ॥ अन्यासु रमणीयासु श्रेष्ठा च सुमनोहरा ॥
रुक्मिण्या भीष्मकन्यायाः कलां नार्हति षोडशीम् ॥ ॥ ७ ॥ तां दृष्ट्वा राजराजेंद्रो बालक्रीडारतां पराम् ॥ बालां सुशोभां कुर्वंतीं
यथाभ्रेषु विधोः कलाम् ॥ ८ ॥ शरत्पूर्णेंदुशोभाढ्यां शरत्कमललोचनाम् ॥ विवाहयोग्यां युवतीं लज्जानम्राननां शुभाम् ॥ ९ ॥
सहसा चिंतितो धर्मो धर्मशीलश्च सुव्रतः ॥ सुतां पप्रच्छ पुत्रांश्च ब्राह्मणांश्च पुरोहितान् ॥ १० ॥ ॥ भीष्मक उवाच ॥ ॥ कं वृणो
मि सुतार्थं च वरार्हं प्रवरं वरम् ॥ मुनिपुत्रं देवपुत्रं राजेंद्रसुतमीप्सितम् ॥ ११ ॥ विवाहयोग्या कन्या मे वर्धमाना मनोहरा ॥ शीघ्रं

पश्य वरं योग्यं नवयौवनसंस्थितम् ॥ १२ ॥ धर्मशीलं सत्यसंधं नारायणपरायणम् ॥ वेदवेदांगविज्ञं च पंडितं सुंदरं शुभम् ॥१३॥
शांतं दांतं क्षमाशीलं गुणिनं चिरजीविनम् ॥ महाकुलप्रसूतं च सर्वत्रैव प्रतिष्ठितम् ॥ १४ ॥ करोषि राजपुत्रं चेद्रणशास्त्रविशारदम् ॥
महारथं प्रतापार्हं रणमूर्ध्नि च सुस्थिरम् ॥ १५ ॥ करोषि देवपुत्रं चेद्देवं गुणयुतं तथा ॥ करोषि मुनिपुत्रं चेच्चतुर्वेदविशारदम् ॥
॥ १६ ॥ सुवाचकं विचारज्ञं सिद्धांतेषु नितांतकम् ॥ नृपेंद्रवचनं श्रुत्वा तमुवाच मुनेः सुतः ॥ १७ ॥ गौतमस्य शतानंदो वेदवेदांग
पारगः ॥ आप्तः प्रवक्ता विज्ञश्च धर्मी कुलपुरोहितः ॥ पृथिव्यां सर्वतत्त्वज्ञो निष्णातः सर्वकर्मसु ॥ १८ ॥ ॥ शतानंद उवाच ॥ ॥
राजेंद्र त्वं च धर्मज्ञो धर्मशास्त्रविशारदः ॥१९॥ पूर्वाख्यानं च वेदोक्तं कथयामि निशामय ॥ भुवो भारावतरणे स्वयं नारायणो भुवि
॥ २० ॥ वसुदेवसुतः श्रीमान्परिपूर्णतमः प्रभुः ॥ विधातुश्च विधाता च ब्रह्मेशशेषवंदितः ॥ २१ ॥ ज्योतिःस्वरूपः परमो भक्तानु
ग्रहविग्रहः ॥ परमात्मा च सर्वेषां प्राणिनां प्रकृतेः परः ॥ २२ ॥ निर्लिप्तश्च निरीहश्च साक्षी च सर्वकर्मणाम् ॥ राजेंद्र तस्मै कन्यां
च परिपूर्णतमाय च ॥ २३ ॥ दत्त्वा यास्यसि गोलोकं पितॄणां शतकैः सह ॥ लभ सारूप्यमुक्तिं च कन्यां दत्त्वा परत्र च ॥ २४ ॥
इहैव सर्वपूज्यश्च भव विश्वगुरोर्गुरुः ॥ सर्वस्वं दक्षिणां दत्त्वा महालक्ष्मीं च रुक्मिणीम् ॥ २५ ॥ समर्पणं कुरु विभो कुरुष्व जन्मखं
डनम् ॥ विधात्रा लिखितो राजन्संबंधः सर्वसंमतः ॥ २६ ॥ द्वारकानगरे कृष्णं शीघ्रं प्रस्थापय द्विजम् ॥ कृत्वा शुभक्षणं तूर्णं सर्वे
षामपि संमतम् ॥ २७ ॥ आनीय परमात्मानं भक्तानुग्रहविग्रहम् ॥ ध्यानानुरोधहेतुं च नित्यदेहमनुत्तमम् ॥ २८ ॥ दृष्टिमात्रात्कुरु
नृप स्वजन्मकर्मखंडनम् ॥ यं न जानंति चत्वारो वेदाः संतश्च देवताः ॥ २९ ॥ सिद्धेंद्राश्च मुनींद्राश्च देवा ब्रह्मादयस्तथा ॥ ध्यायंते
ध्यानपूताश्च योगिनो न विदंति यम् ॥ ३० ॥ सरस्वती जडीभूता वेदाः शास्त्राणि यानि च ॥ सहस्रवक्त्रः शेषश्च पंचवक्त्रः सदाशि
वः ॥ ३१ ॥ चतुर्मुखो जगद्धाता कुमारः कार्तिकस्तथा ॥ ऋषयो मुनयश्चैव भक्ताः परमवैष्णवाः ॥ ३२ ॥ अक्षमाः स्तवने यस्य
ध्यानासाध्यश्च योगिनाम् ॥ बालकोऽहं महाराज तद्गुणं कथयामि किम् ॥ ३३ ॥ शतानंदवचः श्रुत्वा प्रफुल्लवदनो नृपः ॥ आलिंग

नं ददौ तस्मै समुत्थाय जवेन च ॥ ३४ ॥ नानारत्नं सुवर्णं च वस्त्रं च रत्नभूषणम् ॥ ददौ तस्मै प्रदानं च प्रसादसुमुखो नृपः
॥ ३५ ॥ गजेंद्रं तुरगं श्रेष्ठं रथं च मणिनिर्मितम् ॥ रत्नसिंहासनं रम्यं धनं च विपुलं तथा ॥ ३६ ॥ भूमिं च सर्वसस्याढ्यां शश्व
द्वृष्टिकरीं शुभाम् ॥ अकृष्टसाध्यां पूज्यां च ग्रामं सर्वप्रशंसितम् ॥ ३७ ॥ एतस्मिन्नंतरे रुक्मिश्चुकोप नृपनंदनः ॥ कंपितोऽधर्मयु
क्तश्च रक्तास्यो रक्तलोचनः ॥३८॥ उवाच पितरं विप्रं सभायामस्थिरस्तदा ॥ उत्थाय तिष्ठन्पुरतः सर्वेषां च सभासदाम् ॥३९॥ ॥ रु
क्मिरुवाच ॥ ॥ शृणु राजेन्द्र वचनं हितं तथ्यं प्रशंसितम् ॥ त्यज वाक्यं भिक्षुकाणां लोभिनां क्रोधिनामहो ॥४०॥ नर्तकानां च
वेश्यानां भट्टानामर्थिनामपि ॥ कायस्थानां च भिक्षूणामसत्यं वचनं सदा ॥ ४१ ॥ घटकानां नाटकानां स्त्रीलुब्धानां च कामि
नाम् ॥ दरिद्राणां च मूर्खाणां स्तुतिपूर्वं वचः सदा ॥ ४२ ॥ निहत्य कालयवनं राजेंद्रं दूरतो भिया ॥ उपायेन महाबाहो
लब्धं कृष्णेन तद्धनम् ॥ ४३ ॥ द्वारकायां धनी कृष्णो यवनस्य धनेन च ॥ जरासंधभयेनैव समुद्राभ्यंतरे गृही ॥ ४४ ॥ जरा
संधशतं चैव क्षणेनैव च लीलया ॥ क्षमोहं हंतुमेकाकी राज्ञश्चान्यस्य का कथा ॥ ४५ ॥ दुर्वाससश्च शिष्योहं रणशास्त्रविशारदः ॥
ध्रुवं भीष्मक तेनैव विश्वं संहर्तुमीश्वरः ॥ ४६ ॥ मत्समः परशुरामश्च शिशुपालश्च मत्समः ॥ सखा च बलनाञ्छूरः स्वर्गं जेतुं स
च क्षमः ॥ ४७ ॥ महेंद्रं सगणं जेतुमहमीशः क्षणेन च ॥ जित्वा युद्धे जरासंधं दुर्बलं योगिनं नृप ॥ ४८ ॥ अहंकारयुतः कृष्णो वीरं
स्वं मन्यते धिया ॥ यद्यायास्यति मद्ग्रामं विवाहं कर्तुमीप्सितम् ॥ ४९ ॥ ध्रुवं प्रस्थापयिष्यामि क्षणेन यममंदिरम् ॥ अहो नंद
स्य वैश्यस्य तस्मै गोरक्षकाय च ॥ ५० ॥ साक्षाज्जाराय गोपीनां गोपालोच्छिष्टभोजिने ॥ करोषि कन्यास्वीकारं देवयोग्यां
च रुक्मिणीम् ॥ ५१ ॥ दातुमिच्छसि वाक्येन भिक्षुकस्य द्विजस्य च ॥ राजेंद्र बुद्धिहीनोसि वचनाद्बद्धलस्य च ॥ ५२ ॥ मां राज
पुत्रो मा शूरो मा कुलीनश्च माशुचिः ॥ मा दाता मा धनाढ्यश्च मा योग्यो मा जितेंद्रियः ॥ ५३ ॥ कन्यां देहि सुपुत्राय शिशुपाला
य भूमिप ॥ बलेन रुद्रतुष्टाय राजेंद्रतनयाय च ॥ ५४ ॥ निमंत्रणं कुरु नृप नानादेशभवान्नृपान् ॥ बांधवांश्च मुनींद्रांश्च पत्रद्वारा

त्वरान्वितः ॥ ५५ ॥ अंगं कालिंगं मगधं सौराष्ट्रं वल्कलं वरम् ॥ राटं वरेन्द्रं वंगं च गुर्जराटिं च पेठरम् ॥ ५६ ॥ महाराष्ट्रं विराटं च मुद्गलं च सुरंगकम् ॥ भल्लकं गल्लकं खर्वं दुर्गं प्रस्थापय द्विजम् ॥ ५७ ॥ घृतकुल्यासहस्रं च मधुकुल्यासहस्रकम् ॥ दधिकुल्यासहस्रं च दुग्धकुल्यासहस्रकम् ॥ ५८ ॥ तैलकुल्यापंचशतं गुडकुल्याद्विलक्षकम् ॥ शर्कराणां राशिशतं मिष्टान्नानां चतुर्गुणम् ॥ ५९ ॥ यवगोधूमचूर्णानां पिष्टराशिशतं शतम् ॥ पृथुकानां राशिलक्षमन्नानां च चतुर्गुणम् ॥ ६० ॥ गवां लक्षं छेदनं च हरिणानां द्विलक्षकम् ॥ चतुर्लक्षं शशानां च कूर्माणां च तथा कुरु ॥ ६१ ॥ दशलक्षं छागलानां भेटानां तच्चतुर्गुणम् ॥ पर्वणि ग्रामदेव्यै च बलिं देहि च भक्तितः ॥ ६२ ॥ एतेषां पक्वमांसं च भोजनार्थं च कारय ॥ परिपूर्णं व्यंजनानां सामग्रीं कुरु भूमिप ॥ ६३ ॥ अथ श्रुत्वा च तद्वाक्यं राजेंद्रः सपुरोहितः ॥ चकार मंत्रणं तूर्णं निजेन मंत्रिणा सह ॥ ६४ ॥ द्विजं प्रस्थापयामास द्वारकां योग्यमीप्सितम् ॥ कृत्वा च शुभलग्नं च सर्वेषामभिवांछितम् ॥ ६५ ॥ राजा संभृतसंभारो बभूव सत्वरं मुदा ॥ निमंत्रणं च सर्वत्र चकार च सुताज्ञया ॥ ६६ ॥ विप्रः सुधर्मां संप्राप्य नृपैर्देवैश्च वेष्टिताम् ॥ प्रददौ पत्रिकां भद्रामुग्रसेनाय भूभृते ॥ ६७ ॥ प्रफुल्लवदनो राजा श्रुत्वा पत्रं सुमंगलम् ॥ सुवर्णानां सहस्रं च ब्राह्मणेभ्यो ददौ मुदा ॥ ६८ ॥ दुंदुभिं वादयामास द्वारकायां च सर्वतः ॥ देवान्मुनीन्नृपांश्चैव ज्ञातिवर्गांश्च बांधवान् ॥ ६९ ॥ भट्टांश्च भिक्षुकांश्चैव भोजयामास सादरम् ॥ श्रीकृष्णस्य सुवेषं च कारयामास भूपतिः ॥ ७० ॥ अतीव रम्यमतुलं त्रिषु लोकेषु दुर्लभम् ॥ यात्रां च कारयामास जगतां प्रवरं वरम् ॥ ७१ ॥ वेदमंत्रेण रम्येण माहेंद्रे सुमनोहरे ॥ आदौ ब्रह्मा रथस्थश्च सावित्र्या सहितो ययौ ॥ ७२ ॥ रथस्थश्च महाहृष्टो भवान्या च भवः स्वयम् ॥ शेषश्चापि दिनेशश्च गणेशश्चापि कीर्तितः ॥ ७३ ॥ महेंद्रश्च तथा चंद्रो वरुणः पवनस्तथा ॥ कुबेरश्च यमो वह्निरीशानोपि ययौ मुदा ॥ ७४ ॥ देवानां च त्रिकोटयश्च मुनीनां षष्टिकोटयः ॥ गजेंद्राणां त्रिलक्षं च श्वेतच्छत्रं त्रिलक्षकम् ॥ ७५ ॥ उग्रसेनो बभौ राजा नक्षत्रेषु यथा शशी ॥ ययौ प्रसन्नवदनः कुंडिनाभिमुखो बली ॥ ७६ ॥ रत्ननिर्माणयानेन बलदेवो महाबलः ॥ वसुदेवश्चोद्धवश्च नंदोऽक्रूरश्च

सात्यकिः ॥ ७७ ॥ गोपाला यादवेंद्राश्च चंद्रवंश्याश्च ते ययुः ॥ धृतराष्ट्रसुताः सर्वे दुर्योधनपुरोगमाः ॥ ७८ ॥ युधिष्ठिरस्तथा भीमः फाल्गुनो नकुलस्तथा ॥ सहदेवश्च यानैश्च प्रययुः पंच पांडवाः ॥ ७९ ॥ भीष्मो द्रोणश्च कर्णश्चाप्यश्वत्थामा महाबलः ॥ कृपाचार्यश्च शकुनिः शल्यश्च प्रययौ मुदा ॥ ८० ॥ भटानां च त्रिकोटयश्च विप्राणां शतकोटयः ॥ संन्यासिनां सहस्रं च यतीनां ब्रह्मचारिणाम् ॥ ८१ ॥ द्विसहस्रं जितक्रोधाश्चावधूतास्तथैव च ॥ उत्पलानां सहस्रं च सहस्रं पुष्पकारिणाम् ॥ ८२ ॥ नानाशिल्पकराश्चैव विचित्रं चित्रमेव च ॥ लक्षं च वाद्यभांडानां नर्तकानां च लक्षकम् ॥ ८३ ॥ गंधर्वाणां गायकानां लक्षमेकं तु नारद ॥ तत्र कल्पे भवत्येव गंधर्वश्चोपबर्हणः ॥ ८४ ॥ पंचाशत्कामिनीभिश्च त्वमेव तेषु मध्यगः ॥ विद्याधारीणां लक्षं च लक्षमप्सरसां तथा ॥ ८५ ॥ किन्नराणां त्रिलक्षं च गंधर्वाणां त्रिलक्षकम् ॥ ८६ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे रुक्मिण्युद्वाहे षंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एतस्मिन्नंतरे राजा ककुद्मी च महाबलः ॥ वरार्थं कन्यकायाश्च ब्रह्मलोकात्समागतः ॥ १ ॥ प्रददौ रेवतीं कन्यां शश्वत्सुस्थिरयौवनाम् ॥ अमूल्यरत्नभूषाढ्यां त्रिषु लोकेषु दुर्लभाम् ॥ २ ॥ बलाय बलदेवाय संप्रदानेन कौतुकात् ॥ वयो यस्यां गतं सत्ये युगानां सप्तविंशतिः ॥ ३ ॥ दत्त्वा कन्यां विधानेन मुनिदेवेंद्रसंसदि ॥ गजेंद्राणां त्रिलक्षं च जामात्रे यौतुकं ददौ ॥ ४ ॥ दशलक्षं तुरंगाणां रथानां लक्षमेव च ॥ रत्नालंकारयुक्तानां दासीनां चापि लक्षकम् ॥ ५ ॥ मणिलक्षं रत्नलक्षं स्वर्णकोटिं च सादरम् ॥ वह्निशुद्धांशुकं रम्यं मुक्तामाणिक्यहीरकम् ॥ ६ ॥ दत्त्वा कन्यां च राजेंद्रो बलाय बलशालिने ॥ रत्नेंद्रसारयानेन तैः सार्द्धं कुंडिनं ययौ ॥ ७ ॥ अथांतरे च निर्बंधे सांगे मंगलकर्मणि ॥ रेवतीं वेशयामास योषितां कमलां कलाम् ॥ ८ ॥ देवकी रोहिणी चैव यशोदा नंदगेहिनी ॥ अदितिश्च दितिः शांतिर्जयं कृत्वा च मंदिरम् ॥ ९ ॥ ब्राह्मणान्भोजयामास ददौ तेभ्यो धनं मुदा ॥ मंगलं कारयामास वसुदेवस्य वल्लभः ॥ १० ॥ अथ देवाश्च मुनयो राजेंद्राः कटकैः सह ॥ संप्रापुर्लीलामात्रेण कुंडिनं नगरं मुदा ॥ ११ ॥ ददृशुर्नगरं सर्वे ह्यतीव सुमनोहरम् ॥

सप्तभिः परिखाभिश्च गभीराभिश्च वेष्टितम् ॥ १२ ॥ प्राकारैः सप्तभिर्युक्तं द्वाराणां शतकैस्तथा ॥ नानारत्नैश्च मणिभिर्निर्मितं विश्वकर्मणा ॥ १३ ॥ नगरस्य बहिर्द्वारं ददृशुर्वैरयात्रिणः ॥ रक्षितं रक्षकैः सार्द्धं चतुर्भिश्च महारथैः ॥ १४ ॥ रुक्मिश्च शिशुपालश्च दंतवक्रो महाबली ॥ शाल्वो मायाविनां श्रेष्ठो युद्धशास्त्रविशारदः ॥ १५ ॥ नानाशस्त्रैस्तथास्त्रैश्च रथस्थश्च रणोन्मुखः ॥ विलोक्य कृष्णसैन्यं च चुकोप नृपनंदनः ॥ १६ ॥ उवाच निष्ठुरं वाक्यं श्रुतितीक्ष्णं सुदुष्करम् ॥ उपहास्यं मुनींद्रांश्च देवांश्च मुनिपुंगवान् ॥ ॥ १७ ॥ ॥ रुक्मिरुवाच ॥ ॥ अहो कालकृतं कर्म दैवं च केन वार्यते ॥ किं वाहं कथयिष्यामि देवेंद्राणां च संसदि ॥ १८ ॥ ग्रहीतुं रुक्मिणीं कन्यां देवयोग्यां मनोहराम् ॥ आयाति देवैर्मुनिभिर्नंदस्य पशुरक्षकः ॥ १९ ॥ साक्षाज्जारश्च गोपीनां गोपोच्छिष्टान्नभोजनः ॥ जातेश्च निर्णयो नास्ति भक्ष्यमैथुनयोस्तथा ॥ २० ॥ किन्तु राजेंद्रपुत्रश्च किन्तु वा मुनिपुत्रकः ॥ वसुदेवः क्षत्रियश्च भक्षणं वैश्यमंदिरे ॥ २१ ॥ शिशुकाले च स्त्रीहत्या कृतानेन दुरात्मना ॥ कुब्जा मृता च संभोगाद्धासता रजको मृतः ॥ २२ ॥ राजेंद्रस्य वधो दुष्टो ब्रह्महत्यां लभेद्ध्रुवम् ॥ मथुरायां च धर्मिष्ठः सद्यः कंसो निपातितः ॥२३॥ ॥ शाल्व उवाच ॥ ॥ यदुक्तं रुक्मिणा देव किमसत्यं च तत्र वै ॥ को वायं रुक्मणीभर्ता नंदस्य पशुरक्षकः ॥२४॥ ॥ शिशुपाल उवाच ॥ ॥ अहो भुवि किमाश्चर्यं देवा ब्रह्मादयस्तथा ॥ मुनींद्रा ब्रह्मणः पुत्राश्चाययुर्मानवाज्ञया ॥२५॥ ॥ दंतवक्र उवाच ॥ ॥ संततं ब्राह्मणा लुब्धा देवाश्च भक्तवत्सलाः ॥ आययुर्ब्रह्मपुत्राश्च नंदपुत्राज्ञया कथम् ॥ २६ ॥ तेषां च वचनं श्रुत्वा चुकोप देवसंघकः ॥ मुनिराजेंद्रसंघश्च लांगलीत्यादिकं तथा ॥ ॥ २७ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे रुक्मिण्युद्वाहे षडधिकशततमोऽध्यायः ॥ ॥ १०६ ॥ ॥ नारायण उवाच ॥ ॥ अथ कोपपरीतश्च बलदेवो महाबलः ॥ हलेन रुक्मियानं च बभंज मुनिपुंगव ॥ १ ॥ घोटकान्सारथिं चैव निहत्य जगतीपतिः ॥ भूमिष्ठं चापि पापिष्ठं रुक्मिं हंतुं जगाम सः ॥ २ ॥ रुक्मी च शरजालेन वारयामास लीलया ॥ नागास्त्रं योजयामास बद्धुं हलिनमीश्वरम् ॥ ३ ॥ नागास्त्रं गारुडेनैव संजहार हली स्वयम् ॥ जग्राह कोपाद्रुक्मी च परं पाशुपतं मुने ॥ ४ ॥

अव्यर्थं वैरिमर्दं च शतसूर्यसमप्रभम् ॥ अभितो हलिना रुक्मी जृंभणास्त्रेण जृंभितः ॥ ५ ॥ भूमिष्ठः स्थाणुवद्रुक्मी निद्रास्त्रेणैव निद्रितः ॥ शाल्वस्तं निद्रितं दृष्ट्वा शतबाणान्मुमोच तम् ॥ ६ ॥ शैलवृष्टिं शिलावृष्टिं जलवृष्टिं चकार सः ॥ ज्वलदंगारवृष्टिं च शरवृष्टिं चकार ह ॥ ७ ॥ बलाद्बाणेण सर्वाणि वारयामास लांगली ॥ हलेन तद्रथं चूर्णं चकार रणमध्यतः ॥ ८ ॥ घोटकान्सारथिं चैव जघान चैव लीलया ॥ कोपाद्धलेन तं हंतुं वाग्बभूवाशरीरिणी ॥ ९ ॥ त्यज शाल्वं कृष्णवध्यं तव किं पौरुषं रणे ॥ यस्य मूर्ध्नि च ब्रह्मांडं शूर्पे च सर्षपं यथा ॥ १० ॥ तच्छ्रुत्वा बलदेवश्च हलेन तस्य मस्तकम् ॥ चकार चूर्णं व्यथितः पपात रणमूर्धनि ॥ ११ ॥ शाल्वस्य पतनं दृष्ट्वा शिशुपालो महाबली ॥ चकार शरवृष्टिं च जलवृष्टिं यथा भुवि ॥ १२ ॥ हली तस्य रथं चूर्णं चकार लांगलेन च ॥ अर्द्धचंद्रेण तद्बाणान्वारयामास लीलया ॥ १३ ॥ तं हंतुं शंकरः साक्षान्निषेधं च चकार तम् ॥ कृष्णवध्यं त्यज बल पार्षदप्रवरं हरेः ॥ १४ ॥ दंतवक्रस्य दंतं च बभंज स हलेन च ॥ सुप्रवृत्तस्य युद्धेन ते सर्वे जहसुश्च तम् ॥ १५ ॥ बलस्य विक्रमं दृष्ट्वा सर्वे वीराः पलायिताः ॥ चक्रुः प्रवेशनं सर्वे कुंडिनं वरयात्रिकाः ॥१६॥ एतस्मिन्नंतरे तत्र शतानंदो महामुनिः ॥ कोटिभिर्मुनिभिः सार्द्धमाजगाम हरेः पुरः ॥ १७ ॥ पुरं प्रवेशयामास शतद्वारं च दुर्गमम् ॥ अगम्यं चापि शत्रूणां मित्राणां च सुखप्रदम् ॥ १८ ॥ देवकन्या नागकन्या राजकन्यास्तथैव च ॥ मुनिकन्या वरं द्रष्टुं सस्मिताश्च समाययुः ॥ १९ ॥ ददृशुर्योषितः सर्वा निमेषरहितेन च ॥ प्रसन्नं कारयमास सस्मितश्चंद्रशेखरः ॥ २० ॥ रत्नेंद्रसारनिर्माणरथस्थं परमेश्वरम् ॥ सर्वेषां परमात्मानं भक्तानुग्रहविग्रहम् ॥ २१ ॥ नवीनजलदश्यामं शोभितं पीतवाससा ॥ चंदनोक्षितसर्वांगं वनमालाविभूषितम् ॥ २२ ॥ रत्नकेयूरवलयरत्नमालाकुलोज्ज्वलम् ॥ रत्नकुंडलयुग्मेन गंडस्थलविराजितम् ॥ २३ ॥ रत्नेंद्रसारनिर्माणक्वणन्मंजीररंजितम् ॥ सस्मितं मुरलीहस्तं पश्यंतं रत्नदर्पणम् ॥ २४ ॥ सप्तभिः पार्षदैर्गोपैः सेवितं श्वेतचामरैः ॥ नवयौवनसंपन्नं शरत्कमललोचनम् ॥ २५ ॥ शरत्पूर्णेंदुतुल्यास्यं भक्तानुग्रहकारकम् ॥ कोटिकंदर्पसौंदर्यं सत्यं नित्यं सनातनम् ॥ २६ ॥ तीर्थपूतं कीर्तिपूतं ब्रह्मेशशेषवंदितम् ॥ परमाह्लादकं रूपं कोटिचंद्रसमप्रभम् ॥ २७ ॥

ध्यानासाध्यं दुराराध्यं परमं प्रकृतेः परम् ॥ दूर्वया पट्टसूत्रं च रत्नेंद्रसारदर्पणम् ॥ २८ ॥ दधानं कर्तृकासाध्यं कदल्याः स्फुटमंजरीम् ॥ चूडां त्रिविक्रमाकारां मालतीमल्यभूषिताम् ॥२९॥ पुष्पं नारीप्रदत्तं च मुकुटं मस्तकोज्ज्वलम् ॥ दृष्ट्वा वरं युवत्यश्च मूर्च्छां संप्रापुरीश्वरम् ॥ ३० ॥ रुक्मिणीजीवनं धन्यं श्लाघ्यमित्यूचुरीप्सितम् ॥ जामातरं सा ददर्श राज्ञी भीष्मककामिनी ॥ ३१ ॥ निमेषरहिता तुष्टा प्रसन्नवदनेक्षणा ॥ राजा प्रसन्नवदनः सामात्यः सपुरोहितः ॥ ३२ ॥ समागत्य सुरान्विप्रान्भूतांश्च प्रणनाम सः ॥ ददौ योग्याश्रमं तेभ्यो भक्ष्यपूर्णं सुधोपमम् ॥ ३३ ॥ दिवानिशं चाप्युवाच दीयतां दीयतामिति ॥ सुखं निनाय रजनीं देवैश्च बांधवैः सह ॥ ३४ ॥ वसुदेवः प्रभाते च प्रातःकृत्यं चकार सः ॥ स्नात्वा संध्यादिकं कृत्वा धृत्वा धौते च वाससी ॥ ३५ ॥ चकार वेदमंत्रेण शुभाधिवासनं हरेः ॥ संपूज्य मातृकाः सर्वाः साक्षाच्च सर्वदेवताः ॥ ३६ ॥ प्रदाय वसुधारां च वृद्धिश्राद्धादिकं तथा ॥ ब्राह्मणान्भोजयामास देवांश्च बांधवांस्तथा ॥ ३७ ॥ वाद्यं च वादयामास कारयामास मंगलम् ॥ सुवेषं कारयामास वरस्याप्रतिमस्य च ॥ ३८ ॥ सज्जं च कारयामास नरयानं सुशोभनम् ॥ एवं राजा भीष्मकश्च विवाहार्हं च मंगलम् ॥ ३९ ॥ पुरोहितैर्वेदमंत्रैः सर्वकर्म चकार सः ॥ मणिरत्नं धनं वापि मुक्तामाणिक्यहीरकम् ॥ ४० ॥ भक्ष्यद्रव्यं च वस्त्रं चाप्युपहारमनुत्तमम् ॥ भट्टेभ्यो ब्राह्मणेभ्योपि भिक्षुकेभ्यो ददौ मुदा ॥ ४१ ॥ वाद्यं च वादयामास कारयामास मंगलम् ॥ सुवेषं कारयामास रुक्मिण्याश्च मनोहरम् ॥ ४२ ॥ राज्ञीभिर्मुनिपत्नीभिर्विधानं च यथोचितम् ॥ ततः शुभे क्षणे प्राप्ते माहेंद्रे परमोदये ॥ ४३ ॥ विवाहोचितलग्ने च लग्नाधिपतिसंयुते ॥ सद्ग्रहेक्षणशुद्धे चाप्यसतां दृष्टिवार्जिते ॥ ४४ ॥ शुभक्षणे शुभर्क्षे च विशुद्धे चंद्रतारयोः ॥ वेधदोषादिरहिते शलाकादिविवर्जिते ॥ ४५ ॥ दंपत्योः शर्मयोग्ये च परिणामसुखप्रदे ॥ एवंभूते च समये भीष्मकप्रांगणं हरिः ॥ ४६ ॥ आजगाम सुरैः सार्द्धं मुनिविप्रपुरोहितैः ॥ ज्ञातिभिर्बांधवैः सार्द्धं पित्रा मात्रा नृपैस्तथा ॥ ४७ ॥ गोपालकैः पार्षदैश्च वयस्यैश्च मनोहरैः ॥ भट्टैश्च गणकैश्चैव ज्योतिःशास्त्रविशारदैः ॥ ४८ ॥ वाद्यैर्नानाविधैश्चैव नर्त्तकैर्गायनैस्तथा ॥ नानाशिल्पकरैश्चैव मालाकारैस्तथापरैः ॥ ४९ ॥

विद्याधर्यप्सरोभिश्च किन्नरीभिश्च सत्वरम् ॥ स्थलं च ददृशुर्देवा मुनयश्च नृपेश्वराः ॥ ५० ॥ सर्वे समागता ये च विवाहदर्शनोत्सु
काः ॥ रंभास्तंभसहस्रैश्च पट्टसूत्रपरिष्कृतैः ॥ ५१ ॥ चंपकानां चंदनानां रसालानां च पल्लवैः ॥ माल्यैर्नानाविधैश्चैव पीतरक्तसिता
न्वितैः ॥ ५२ ॥ परितो मंगलघटैः फलपल्लवसंयुतैः ॥ कस्तूरीचंदनाक्तैश्च कुंकुमेन विराजितैः ॥ ५३ ॥ पर्णैर्लाजैः फलैः पुष्पैर्दूर्वाभि
रुपशोभितैः ॥ मुनिभिर्ब्राह्मणैश्चैव राजेंद्रैरपि वेष्टितम् ॥ ५४ ॥ रत्नेंद्रसारनिर्माणवेदीयुक्तं मनोहरम् ॥ चर्चितं चंदनस्निग्धैः कस्तूरी
कुंकुमान्वितैः ॥ ५५ ॥ सुगंधिशीतमंदैश्च पवनैः सुरभीकृतम् ॥ रत्नानां च सहस्रैश्च ज्वलितं ज्वलदीपकैः ॥ ५६ ॥ नानाप्रकारधू
पैश्च गंधद्रव्यैः सुवासितम् ॥ चित्रावचित्रैर्विविधैः शिल्पिनां पुण्यकारिणाम् ॥ ५७ ॥ परितः परितश्चैव शोभनार्हैः सुशोभनैः ॥
गंधर्वाणां च संगीतैर्मधुरैर्मधुरीकृतम् ॥ ५८ ॥ विद्याधरीणां नृत्यैश्च नर्तकीनां च शिल्पिनाम् ॥ तत्र निश्चेष्टचित्रैश्च जनराजिविराजितम्
॥ ५९ ॥ गुप्तद्वारैर्गवाक्षैश्च युवतीभिश्च वीक्षितम् ॥ मंगलेन घटेनैव विदुषा च पुरोधसा ॥ ६० ॥ कुशहस्तेन भूपेन दानेन दानव
स्तुना ॥ दृष्ट्वा च प्रांगणे राज्ञो देवा ब्रह्मादयस्तथा ॥ ६१ ॥ अवरुह्य रथात्तूर्णं तिष्ठंति प्रांगणे मुदा ॥ राजेंद्रा दानवेंद्राश्च मुनयः सनका
दयः ॥ ६२ ॥ श्रीकृष्णश्चापि भगवान्पार्षदप्रवरैः सह ॥ तान्दृष्ट्वा सहसोत्थाय जवेन भीष्मकस्तथा ॥ ६३ ॥ मूर्ध्ना ववंदे देवांश्च
मुनींद्रांश्च नृपांस्तथा ॥ रत्नसिंहासने चैव सुरम्येषु पृथक्पृथक् ॥ ६४ ॥ क्रमतो वासयामास संपूज्य सादरेण च ॥ राजा तुष्टाव
भक्त्या च तान्सर्वान्भक्तिपूर्वकम् ॥ वसुदेवं वासुदेवं साश्रुनेत्रः पुटांजलिः ॥ ६५ ॥ ॥ भीष्मक उवाच ॥ ॥ अद्य मे सफलं
जन्म जीवितं च सुजीवितम् ॥ ६६ ॥ बभूव जन्मकोटीनां कर्ममूलनिकृंतनम् ॥ स्वयं विधाता जगतां प्रदाता सर्वसंप
दाम् ॥ ६७ ॥ स्वप्ने यत्पादपद्मं च द्रष्टुं नैव क्षमः प्रभो ॥ तपसां फलदाता च संस्रष्टा प्रांगणे मम ॥ ६८ ॥ स्वात्मारामेषु पूर्णेषु
शुभप्रश्नमभीप्सितम् ॥ योगींद्रैरपि सिद्धेंद्रैः सुरेंद्रैश्च मुनींद्रकैः ॥ ६९ ॥ ध्यानादृष्टश्च यो देवः स शिवः प्रांगणे मम ॥ कालस्य
कालो भगवान्मृत्योर्मृत्युश्च यः प्रभुः ॥ ७० ॥ मृत्युंजयश्च सर्वेशो नराणां दृष्टिगोचरः ॥ यस्य मूर्ध्नां सहस्रेषु मूर्ध्नि विश्वं चराच

रम् ॥ ७१ ॥ नास्त्यंतः सर्ववेदेषु सोयं च मम प्रांगणे ॥ सर्वकामप्रणेयो हि सर्वाग्रे यस्य पूजनम् ॥ श्रेष्ठो देवगणानां च
स गणेशो ममांगणे ॥ ७२ ॥ मुनीनां वैष्णवानां च प्रवरो ज्ञानिनां गुरुः ॥ सनत्कुमारो भगवान्प्रत्यक्षः प्रांगणे मम ॥ ७३ ॥
ब्रह्मपुत्राश्च पौत्राश्च प्रपौत्राश्चापि वंशजाः ॥ ते सर्वे मद्गृहेष्वैव ज्वलंतो ब्रह्मतेजसा ॥ ७४ ॥ अहो कल्पांतपर्यंतं तीर्थीभूतो
ममाश्रयः ॥ येषां पादोदकैस्तीर्थं विशुद्धं तद्गृहं मम ॥ ७५ ॥ पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे ॥ सागरे या
नि तीर्थानि विप्रपादेषु तानि च ॥ ७६ ॥ विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ॥ तावत्पुष्करपत्रेषु पिबंति पितरो जलम् ॥
॥ ७७ ॥ विप्रपादोदकं भुक्त्वा दत्त्वा विप्राय दक्षिणाम् ॥ स्नातानां सर्वतीर्थानां फलमाप्नोति निश्चितम् ॥ ७८ ॥ निकृंतनं च वि
पदां व्याधिनिर्मूलकारणम् ॥ सुखदं शुभदं सारं विप्रपादोदकं नृणाम् ॥ ७९ ॥ न गंगासदृशं तीर्थं न देवो माधवात्परः ॥ सन
त्कुमाराद्भक्तो न न हि कल्पतरोस्तरुः ॥ ८० ॥ न पुष्पं पारिजाताच्च न व्रतं हरिवासरात् ॥ पूजने न हि पूज्यं च न पत्रं तुलसीप
रम् ॥ ८१ ॥ न देवी प्रकृतेश्चापि नाधारः पवनात्परः ॥ न हि स्थूलो महाविष्णोर्न सूक्ष्मं परमाणुतः ॥ ८२ ॥ न ब्राह्मणात्परः पूतो
नाश्रमश्च परः प्रभुः ॥ नं देवो न परः कोपि इत्याह कमलोद्भवः ॥ ८३ ॥ ब्रह्मविष्णुशिवादीनां प्रकृतेश्च परः प्रभुः ॥ ध्यानासाध्यो
दुराराध्यो योगिनामपि निश्चितम् ॥ ८४ ॥ निर्गुणश्च निराकारो भक्तानुग्रहविग्रहः ॥ स एव चक्षुषो नृणां साक्षादेवश्च मद्गृहे
॥ ८५ ॥ देवैर्ब्रह्मेशशेषैश्च ध्यातं यत्पादपंकजम् ॥ धनेशेन गणेशेन दिनेशेनापि दुर्लभम् ॥ ८६ ॥ इत्युक्त्वा भीष्मकः कृष्णं समा
नीय स्वयं पुरः ॥ तुष्टाव सामवेदोक्तस्तोत्रेण परमेश्वरम् ॥८७॥ ॥ भीष्मक उवाच ॥ ॥ सर्वांतरात्मा सर्वेषां साक्षी निर्लिप्त एव
च ॥ कर्मिणां कर्मणामेव कारणानां च कारणम् ॥ ८८ ॥ केचिद्वदंति त्वामेकं ज्योतीरूपं सनातनम् ॥ केचिच्च परमात्मानं जी
वो यत्प्रतिबिंबकः ॥ ८९ ॥ केचित्प्राकृतिकं जीवं सगुणं भ्रांतबुद्धयः ॥ केचिन्नित्यशरीरं च बुद्धाश्च सूक्ष्मबुद्धयः ॥ ९० ॥ ज्योतिर
भ्यंतरे नित्यं देहरूपं सनातनम् ॥ कस्मात्तेजः प्रभवति साकारमीश्वरं विना ॥ ९१ ॥ एवं स्तुत्वा स वाचांतः स्मरन्विष्णुं च नारद ॥

पाद्यं पद्मार्चिते पादपद्मे चार्घ्यं ददौ मुदा ॥ ९२ ॥ अर्घ्यं च प्रददौ तत्र दूर्वापुष्पजलान्वितम् ॥ मधुपर्कं च सुरभिं सर्वांगे. गंध चंदनम् ॥ ९३ ॥ यत्प्रदत्तं महेंद्रेण शुभकर्मणि यौतुकम् ॥ पारिजातस्य माल्यं च जामातुश्च गले ददौ ॥ ९४ ॥ कुबेरेण च यद्दत्तममूल्यरत्नभूषणम् ॥ चकार वरणं तस्य स राजा भक्तिपूर्वकम् ॥ ९५ ॥ वह्निशुद्धांशुकयुगं यद्दत्तं वह्निना पुरा ॥ ददौ तदेव कृष्णाय परिपूर्णतमाय च ॥ ९६ ॥ ज्वलितं रत्नमुकुटं यद्दत्तं विश्वकर्मणा ॥ ददौ तन्मस्तके राजा कृष्णस्य परमात्मनः ॥ ९७ ॥ धूपं रत्नप्रदीपं च नैवेद्यं सुमनोहरम् ॥ नानाप्रकारपुष्पं च रत्नसिंहासनं ददौ ॥ ९८ ॥ सप्ततीर्थोदकं चैव पुनराचमनीयकम् ॥ तांबूलं च वरं रम्यं कर्पूरादिसुवासितम् ॥ ९९ ॥ शय्यां रतिकरीं रम्यां पानार्थं वासितं जलम् ॥ कृत्वा च वरणं राजा परिहारं चकार तम् ॥ १०० ॥ कृतांजलिपुटो राजा तस्मै पुष्पांजलिं ददौ ॥ १०१ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे रुक्मिण्युद्वाहे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥ श्रीनारायण उवाच ॥ ॥ एतस्मिन्नंतरे देवी महालक्ष्मीश्च रुक्मिणी ॥ आजगाम सभामध्ये मुनिदेवादिभिर्युता ॥ १ ॥ रत्नसिंहासनस्था च रत्नालंकारभूषिता ॥ वह्निशुद्धांशुकाधाना कबरीभारभूषिता ॥ २ ॥ पश्यंती सस्मिता साध्वी ह्यमूल्यरत्नदर्पणम् ॥ कस्तूरीबिंदुभिर्युक्ता स्निग्धचंदनचर्चिता ॥ ३ ॥ सिंदूरबिंदुना शश्वद्भालमध्यस्थलोज्ज्वला ॥ तप्तकांचनवर्णाभा शतचंद्रसमप्रभा ॥ ४ ॥ चंदनोक्षितसर्वांगा मालतीमाल्यशोभिता ॥ सप्तभिर्नृपपुत्रैश्च समानीता च बालकैः ॥ ५ ॥ देवेंद्राश्च मुनींद्राश्च सिद्धेंद्रा नृपपुंगवाः ॥ ददृशू रुक्मिणीदेवीं महालक्ष्मीं पतिव्रताम् ॥ ६ ॥ सप्तप्रदक्षिणाः कृत्वा प्रणम्य स्वपतिं सती ॥ सिषेच शीततोयेन स्निग्धचंदनपल्लवैः ॥ ७ ॥ तां सिषेच जगत्कांतः कांतां शांतां च सस्मिताम् ॥ ददर्श कांतः कांतां च कांतं कांता शुभे क्षणे ॥ ८ ॥ अथ देवी पितुः क्रोडे समुवास शुभानना ॥ लज्जया नम्रवदना ज्वलंती च स्वतेजसा ॥ ९ ॥ राजा देवेश्वरीं तस्मै परिपूर्णतमाय च ॥ प्रददौ संप्रदानेन वेदमंत्रेण नारद ॥ १० ॥ वसुदेवाज्ञया कृष्णः स्वस्तीत्युक्त्वा स्थितो मुदा ॥ जग्राह देवीं देवश्च भवानीं च भवो यथा ॥ ११ ॥ सुवर्णानां पंचलक्षं कृष्णाय परमा

त्मने ॥ दक्षिणां तां ददौ राजा परिपूर्णतमाय च ॥ १२ ॥ शुभकर्मणि निष्पन्ने कृत्वा कन्यां च वक्षसि ॥ रुरोद राजा मोहेन मुनि
देवेंद्रसंसदि ॥ १३ ॥ परिहारेण वचसा कृत्वा तस्मै समर्पणम् ॥ सिषेच कन्यां धन्यां च नेत्रयुग्मजलेन च ॥ १४ ॥ इति श्रीब्र
ह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे रुक्मिण्युद्वाहेऽष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ॥ श्रीनारा
यण उवाच ॥ ॥ एतस्मिन्नंतरे राज्ञी रुक्मिणीजननी शुभा ॥ पतिपुत्रवतीभिश्च साध्वीभिः सहिता मुदा ॥ १ ॥ आगत्य
मंगलं कृत्वा तत्र निर्मंछनादिकम् ॥ दंपती वेशयामास रत्ननिर्माणमंदिरम् ॥ २ ॥ नानाविचित्रचित्राढ्यं हीरहारेण भूषि
तम् ॥ मुक्तामाणिक्यरत्नेन सुदीप्तं दर्पणेन च ॥ ३ ॥ ददर्श कृष्णस्तत्रैव दुर्गां दुर्गतिनाशिनीम् ॥ सरस्वतीं च सावित्रीं रतिं च
रोहिणीं सतीम् ॥ ४ ॥ देवपत्नीं राजपत्नीं मुनिपत्नीं पतिव्रताम् ॥ रत्नसिंहासनस्थां च रत्नभूषणभूषिताम् ॥ ५ ॥ उत्तस्थुसराद्दृष्ट्वा
च श्रीकृष्णं जगतीपतिम् ॥ रत्नसिंहासने रम्ये वासयामास तां मुदा ॥ ६ ॥ स्तुतिं चक्रुश्च देवाश्च मुनिपत्न्यश्च माधवम् ॥ पुटांज
लियुतास्तत्र क्रमेण च पृथक्पृथक् ॥ ७ ॥ भोजयामास राज्ञी च वरेण सह कन्यकाम् ॥ सकर्पूरं सताबूलं प्रददौ वासितं जलम् ॥
॥ ८ ॥ दुर्गा कृष्णाय प्रददौ तत्र मंगलपत्रिकाम् ॥ सर्वासामाज्ञया देवी पठेति तमुवाच सा ॥ ९ ॥ पपाठ पत्रिकां कृष्णो देवीसं
सदि सस्मितः ॥ लक्ष्मी सरस्वती दुर्गा सावित्री राधिका सती ॥ १० ॥ तुलसी पृथिवी गंगाऽरुंधती यमुनादितिः ॥ शतरूपा च
सीता च देवहूतिश्च मेनिका ॥ ११ ॥ देव्यश्चैताश्च दंपत्योः कुर्वंतु मंगलं परम् ॥ पपाठ चेति कृष्णश्च शुश्रुवुर्जहसुश्च ताः ॥ १२ ॥
॥ ॥ पार्वत्युवाच ॥ ॥ रुक्मिणीं रुक्मिणीकांत त्वां पश्यंतीं च सस्मिताम् ॥ पश्य प्रौढां रूपवतीं सुंदरीं नवयौवनाम् ॥ १३ ॥
॥ ॥ सरस्वत्युवाच ॥ ॥ तव योग्या च युवती रत्नभूषणभूषिता ॥ त्वां प्रार्थयंती सुचिरमवमन्यान्यमीश्वरम् ॥ १४ ॥
॥ ॥ सावित्र्युवाच ॥ ॥ यथा वरस्तथा कन्या विधिना योजिता पुरा ॥ विदग्धाया विदग्धेन सर्वत्र संगमः शुभः ॥ १५ ॥
॥ ॥ रत्युवाच ॥ ॥ ईश्वरेण परीहासं का वा कर्तुं क्षमा भुवि ॥ ध्यानासाध्यो दुराराध्यश्चावमन्यान्यमीश्वरम् ॥ १६ ॥

॥ गायत्र्युवाच ॥ ॥ यथा वरस्तथा कन्या चाक्षुर्ध्वे भैष्मके गृहे ॥ ॥ रोहिण्युवाच ॥ ॥ सत्यं ब्रूहि जगन्नाथ का
मिनीनां च संसदि ॥ कीदृशी राधिका रम्या रुक्मिणी चापि कीदृशी ॥ १७ ॥ ॥ सरस्वत्युवाच ॥ ॥ राधायां यादृशी प्रीती
रुक्मिण्यां नैव तादृशी ॥ सा संगिनी पूर्वकाले सर्वक्रीडासु वर्धिनी ॥ १८ ॥ प्राणाधिष्ठातृदेवी सा पंचप्राणाधिका सती ॥ रुक्मिणी
कमला साक्षात्संपदामधिदेवता ॥ १९ ॥ सर्वशक्तिस्वरूपा च कृष्णस्य परमात्मनः ॥ बुद्धेरप्यधिदेवी च दुर्गा नारायणी परा ॥
॥ २० ॥ देवाधिष्ठातृदेवी त्वं सावित्री वेदमातृका ॥ विद्याधिदेवताहं च ततोन्याश्च कलाकलाः ॥ २१ ॥ न ब्रह्मणि शिवे शेषे
गणेशे च दिनेश्वरे ॥ न भक्तेषु च पद्मायां न शिवायां च मय्यपि ॥ २२ ॥ प्रसादो यादृशस्तस्यामन्येषु च न तादृशः ॥ त्रैलोक्ये
पृथिवी धन्या सुपुण्यं भारतं यतः ॥ २३ ॥ तत्र वृंदावनं धन्यं राधापादाब्जचिह्नितम् ॥ सर्वासामपि देवीनां राधा पुण्यवती सती ॥
॥ २४ ॥ राधापादाब्जनखरे ददौ स्निग्धमलक्तकम् ॥ अयमेवमिति श्रुत्वा जहसुः सर्वयोषितः ॥ २५ ॥ ध्यायंते दूरतः सर्वा
राधा वक्षःस्थलस्थिता ॥ तस्माद्राधां नमस्कृत्य तुलनां मन्यते किल ॥ २६ ॥ सरस्वतीवचः श्रुत्वा सावित्री पार्वती सती ॥ अन्या
श्च योषितः सर्वाः साध्वित्यूचुश्च संसदि ॥ २७ ॥ लोपामुद्रानसूया चाप्यहल्यारुंधती तथा ॥ सर्वास्ता मुनिपत्न्यश्च रभसं चक्रुरी
श्वरम् ॥ २८ ॥ अथ देवांश्च भूपांश्च मुनींद्रांश्चापि भीष्मकः ॥ पूजयामास विधिना भोजयामास सादरम् ॥ २९ ॥ खाद्यतां खाद्य
तां लोका दीयतां दीयतामिति ॥ शब्दो बभूव नगरे वाद्यसंगीतमंगलैः ॥ ३० ॥ अथ प्रभाते ब्रह्मेशशेषाद्यास्त्रिदशास्तथा ॥ यानमारो
हणं भूपाश्चक्रिरे च त्वरान्विताः ॥३१॥ राजा महोग्रसेनश्च वसुदेवस्त्वरान्वितः ॥ कारयामास यात्रां च श्रीकृष्णं रुक्मिणीं सतीम् ॥
॥ ३२ ॥ सुभद्रा रुक्मिणीमाता कन्यां कृत्वा स्ववक्षसि ॥ रुरोदोच्चैस्ततसखीभिर्बांधवैरित्युवाच सा ॥ ३३ ॥ ॥ सुभद्रोवाच ॥ ॥
क यासि मां परित्यज्य वत्से मातरमीश्वरीम् ॥ कथं जीवामि त्वां त्यक्त्वा कथं त्वं वापि जीवसि ॥ ३४ ॥ महालक्ष्मीर्मम
गृहात्कन्यारूपा च मायया ॥ वसुदेवालयं यासि वासुदेवप्रिया सती ॥ ३५ ॥ इत्युक्त्वा कन्यकां शोकात्सिषेच नेत्रजैर्जलैः ॥

भीष्मकः साश्रुनेत्रश्च कन्यां कृष्णे समर्प्य च ॥ ३६ ॥ तं च कृत्वा परीहारं रुरोदोच्चैरतीव सः ॥ रुरोद रुक्मिणी देवी श्रीकृष्ण श्चापि मायया ॥ ३७ ॥ रथमारोपयामास वसुदेवः सुतं वधूम् ॥ एतस्मिन्नंतरे राजा जामात्रे यौतुकं ददौ ॥ ३८ ॥ गजेंद्राणां सहस्रं च षड्गुणं च तुरंगमम् ॥ दासीनां च सहस्रं च किंकराणां शतंशतम् ॥ ३९ ॥ रत्नानां च सहस्रं चैवामूल्यरत्नभूषणम् ॥ स्वर्णा नां परिशुद्धानां पंचलक्षं च सादरम् ॥ ४० ॥ तोयभोजनपात्राणि कृतानि विश्वकर्मणा ॥ सौवर्णानि च रम्याणि सुरभीः प्रददौ मुदा ॥ ४१ ॥ दुग्धवतीनां धेनूनां सवत्सानां सहस्रकम् ॥ अमूल्यानि च रम्याणि वह्निशुद्धांशुकानि च ॥ ४२ ॥ वसुदेवश्चोग्र सेनो देवैश्च मुनिभिः सह ॥ प्रहृष्टवदनः शीघ्रं द्वारकाभिमुखं ययौ ॥ ४३ ॥ प्रविश्य स्वपुरीं रम्यां कारयामास मंगलम् ॥ वाद्यं च वादयामास सुंदरं सुमनोहरम् ॥ ४४ ॥ देवकी रोहिणी रम्या यशोदा नंदगेहिनी ॥ अदितिश्च दितिश्चैव तथा च वरकामिनी ॥ ४५ ॥ श्रीकृष्णं रुक्मिणीं रम्यां विलोक्य च पुनःपुनः ॥ गृहं प्रवेशयामास कारयामास मंगलम् ॥ ४६ ॥ चतुर्विधं भोजयित्वा देवांश्च मुनिपुंगवान् ॥ नृपांश्च बांधवांश्चैव परिहारं चकार च ॥ ४७ ॥ भट्टेभ्यो ब्राह्मणेभ्योपि ददौ रत्नादिकं मुदा ॥ तांश्चापि भोजयामास परितुष्टांश्च सस्मितान् ॥ ४८ ॥ एवं भुक्त्वा धनं लब्ध्वा ययुः सर्वे गृहं मुदा ॥ मंगलं कारयामास वसुदेवस्य वल्लभा ॥ ४९ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे रुक्मिण्युद्वाहे नवाधिकशततमोऽध्यायः ॥ १०९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ आगतेषु गतेष्वेवं सांगे मंगलकर्मणि ॥ नंदो यशोदया सार्द्धं पुत्राभ्याशं समाययौ ॥ १ ॥ ॥ यशोदोवाच ॥ ॥ ज्ञानं च भवता दत्तं पित्रे नंदाय माधव ॥ मां चापि मातरं वत्स कृपां कुरु कृपानिधे ॥ २ ॥ मामुद्धर महाभाग घरोद्धारणकारण ॥ भवाब्धितरणे भीमे भीतां च पतितामपि ॥ ॥ ३ ॥ मायामयी सा प्रकृतिर्भवाब्धितरणे तरिः ॥ त्वमेव कर्णधारश्च भक्तोत्तीर्ण कृपामय ॥ ४ ॥ यशोदावचनं श्रुत्वा जहास पुरुषो त्तमः ॥ उवाच मातरं भक्त्या ज्ञानिनां च गुरोर्गुरुः ॥ ५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ सिद्धियोगात्मकं मातर्ज्ञानं च विषयात्म

कम् ॥ ज्ञानं भक्त्यात्मकं श्रेष्ठं मद्दास्यकारणं शुभम् ॥ ६ ॥ ज्ञानं पंचविधं प्रोक्तं सर्ववेदेषु संमतम् ॥ भक्त्यात्मकं सर्वपरं तेषां च
लक्षणं शृणु ॥ ७ ॥ क्षुत्पिपासादिकानां च खंडनं स्वांतशोधनम् ॥ नाडीनां शोधनं चैव चक्राणामपि भेदनम् ॥ ८ ॥ शक्ति
कुंडलिनीयुक्तमीश्वरं चिंतयेत्ततः ॥ इंद्रियाणां च दमनं लोभादीनां च वर्धनम् ॥ ९ ॥ मूलाधारं स्वधिष्ठानं मणिपूरमनाहतम् ॥ वि
शुद्धं च तथाज्ञाख्यं चक्रषट्कं प्रकीर्तितम् ॥ १० ॥ नारीणामपि दुर्बोधं मूर्खाणां च विशेषतः ॥ ज्ञानं योगात्मकं साध्वि सिद्धानां
साध्यमीप्सितम् ॥ ११ ॥ जंतूनामपि सर्वेषां ज्ञानं स्वविषये तथा ॥ संतः सर्वे विजानंति स्वेच्छया च मदीयया ॥ १२ ॥ सिद्ध्या
त्मकं च सिद्धानां नियुक्तं सर्वकर्मसु ॥ चतुस्त्रिंशत्सु सिद्धानां साधनं बोधनं तथा ॥ ज्ञानं मोक्षात्मकं सिद्धं परं निर्वाणकारणम् ॥
॥ १३ ॥ निवृत्तिमार्गमारूढं भक्तस्तन्नेव वांछति ॥ भक्त्यात्मकं च यज्ज्ञानं तुभ्यं राधा प्रदास्यति ॥ १४ ॥ तस्यां च मानवं भावं
त्यक्त्वाज्ञां च करिष्यति ॥ नंदाय दत्तं यज्ज्ञानं तच्च तुभ्यं प्रदास्यति ॥ १५ ॥ गच्छ नंदव्रजं मातर्नंदेन सह सादरम् ॥ इत्युक्त्वा
विनयं कृत्वा जगामाभ्यंतरं हरिः ॥१६॥ नंदो यशोदया सार्द्धं प्रययौ कदलीवनम् ॥ ददर्श राधां तत्रैव निद्रितां त्यक्तभूषणाम् ॥१७॥
दधानां शुक्लवस्त्रं च निराहारां कृशोदरीम् ॥ पंकस्थे पंकजदले सजले चंदनार्चिते ॥ १८ ॥ शयानां शुष्कितौष्ठीं च साश्रुनेत्रां च मू
र्च्छिताम् ॥ ध्यायमानां पदांभोजं कृष्णस्य परमात्मनः ॥ १९ ॥ बाह्यज्ञानपरित्यक्तां तन्निविष्टैकमानसाम् ॥ पश्यंतीं सस्मितं
कांतं पश्यंतीमुन्मुखांबुजम् ॥ २० ॥ हसंतीं च रुदंतीं च स्वप्ने कांतसमीपतः ॥ सखीभिः परितः शश्वत्सेवितां श्वेतचामरैः ॥२१॥
दिवानिशं रक्षितां च गोपीभिः शतकोटिभिः ॥ सावधानपराभिश्च वेत्रहस्ताभिरीश्वरीम् ॥ २२ ॥ सप्तद्वारेषु युक्ताभिः परितः प्रांग
णेषु च ॥ तां दृष्ट्वा विस्मयं प्राप्य सभार्यो नंद एव च ॥ २३ ॥ ननाम परया भक्त्या दंडवत्प्रणिपत्य च ॥ निद्रां त्यक्त्वा च सहसा
बुबुधे सेश्वरेच्छया ॥ २४ ॥ क्षणेन चेतनां प्राप विषयज्ञानवर्जिताम् ॥ पुरतो दंपती दृष्ट्वा पप्रच्छ सादरं सती ॥ उवाच मधुरं चैवं
तत्रैव सखिसंसदि ॥ २५ ॥ ॥ राधिकोवाच ॥ ॥ कस्त्वं चात्र समायातो ब्रूहि वा किं प्रयोजनम् ॥ न च मे विषयज्ञानं न

जानामि नरं पशुम् ॥ २६ ॥ किं जलं वा स्थलं किं वा किं वा नक्तं दिनं शृणु ॥ स्त्रियं पुमांसं क्लीबं वा नाहं जानामि भेदकम्
॥ २७ ॥ राधिकावचनं श्रुत्वा नंदश्च विस्मयं ययौ ॥ भीता यशोदा निकटं गोपी संभाषिता ययौ ॥ २८ ॥ उवास निकटे तस्याः
समुवाच प्रियं वचः ॥ उवास तत्र नंदश्च गोपीदत्तासनेन च ॥ २९ ॥ ॥ यशोदोवाच ॥ ॥ चेतनं कुरु राधे त्वमात्मानं रक्ष
यत्नतः ॥ द्रक्ष्यसि प्राणनाथं च संप्राप्ते मंगले दिने ॥ ३० ॥ त्वत्तो विश्वं पवित्रं च स्वकुलं च सुरेश्वरि ॥ गोप्यश्च पुण्यवत्यश्च
त्वत्पादांबुजसेवया ॥ ३१ ॥ लोका गास्यंति त्वत्कीर्तिं तीर्थपूतां सुमंगलाम् ॥ सतो वेदाश्च चत्वारः पुराणानि पुरातनम् ॥ ३२ ॥
अहं यशोदा नंदोयं बुद्धिरूपे निबोध माम् ॥ वृषभानुसुता त्वं च मां निशामय सुव्रते ॥ ३३ ॥ द्वारकानगराद्भद्रे श्रीकृष्णसन्निधा
नतः ॥ तवांतिकमागताहं प्रेरिता हरिणा सति ॥ ३४ ॥ शृणु मंगलवार्तां च मंगलं च गदाभृतः ॥ आराद्द्रक्ष्यसि कृष्णं तं हे देवि
चेतनं कुरु ॥ ३५ ॥ भक्त्यात्मकं परिज्ञानं देहि मह्यं च सांप्रतम् ॥ त्वद्भर्तुरुपदेशेन त्वत्समीपं समागतौ ॥ ३६ ॥ प्रश्चादायास्य
ति हरिस्त्वां मुहूर्तं वरानने ॥ भविष्यत्यचिरेणैव श्रीदाम्नः शापमोचनम् ॥ ३७ ॥ यशोदावचनं श्रुत्वा वार्तां प्राप्य गदाभृतः ॥ श्री
कृष्णनामस्मरणाद्दूरीभूतममंगलम् ॥ ३८ ॥ संप्राप चेतनं राधा संभाव्य कृष्णमंतरम् ॥ उवाच मधुरं शांता लौकिकीं भक्तिमुत्त
माम् ॥ ३९ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे राधायशोदासंवादे दशाधि
कशततमोऽध्यायः ॥ ११० ॥ ॥ राधिकोवाच ॥ ॥ ज्ञानात्मकश्च परमो ब्रह्मेशशेषपूजितः ॥ ज्ञानं च न ददौ तुभ्यं मन्मूलं प्रे
षिता सति ॥ १ ॥ तेनैव छद्मना नेतुं भावार्थं बोधयामि किम् ॥ वेदाः संतश्च भावार्थं नैव जानंति तस्य च ॥ २ ॥ स्त्रीजातिरबला
मूढा वस्तुतोज्ञानतत्परा ॥ ततस्तद्विरहेणैव संततं हतचेतना ॥ ३ ॥ किं वाहं कथयिष्यामि ज्ञानं पंचविधेषु च ॥ भक्त्यात्मकं सर्वपरं
निबोध कथयामि ते ॥ ४ ॥ श्रीकृष्णस्य वरेणापि त्वं साधो निर्भयो भव ॥ गोलोके चापि पतनं संभवेच्च कुयोगिनः ॥ ५ ॥ तस्मात्सर्वं परि
त्यज्य भजस्व परमेश्वरम् ॥ पुत्रबुद्धिं परित्यज्य ब्रह्मरूपं निशामय ॥ ६ ॥ सर्वं यशोदे भवती परित्यज्य च नश्वरम् ॥ गत्वा वृन्दा

वनं रम्यं पुण्यक्षेत्रं च भारतम् ॥ ७ ॥ कृत्वा त्रिकालस्नानं च निर्मले यमुनाजले ॥ कृत्वाष्टदलपद्मं च स्निग्धेन चंदनेन च ॥८॥
ध्यानेन गर्गदत्तेन शुद्धेन मनसा सति ॥ संपूज्य परमानंदं सानंदं व्रज तत्पदम् ॥ ९ ॥ कृत्वा निकृंतनं कर्म पितृभिः शतकैः सह ॥
वैष्णवेन सहालापं कुरुष्व सततं सति ॥ १० ॥ वरं हुतवहज्वालां भक्तो वांछति पंजरम् ॥ वरं च कंटके वासं वरं च विषभक्षणम् ॥
॥ ११ ॥ हरिभक्तिविहीनानां न संगं नाशकारणम् ॥ स्वयं नष्टो भक्तिहीनो बुद्धिभेदं करोति च ॥ १२ ॥ अंकुरो भक्तिवृक्षस्य
भक्तिसंगेन वर्द्धते ॥ परं हरिकथालापपीयूषासेचनेन च ॥ १३ ॥ अभक्तालापदीपाग्निज्वालायाः कलयापि च ॥ अंकुरः शुष्कतां
याति पुनः सेकेन वर्द्धते ॥ १४ ॥ तस्मादभक्तसंगं च सावधानः परित्यज ॥ यथा दृष्ट्वा कालसर्पं नरो भीत्वा पलायते ॥ १५ ॥
यशोदे च प्रयत्नेन स्वात्मनः पुत्रमीश्वरम् ॥ राम नारायणानंत मुकुंद मधुसूदन ॥ १६ ॥ कृष्ण केशव कंसारे हरे वैकुंठ वामन ॥
इत्येकादश नमामि पठेद्वा पाठयेदिति ॥ जन्मकोटिसहस्राणां पातकादेव मुच्यते ॥१७॥ राशब्दो विश्ववचनो मश्चापीश्वरवाचकः ॥
विश्वानामीश्वरो यो हि तेन रामः प्रकीर्तितः ॥ १८ ॥ रमते रमया सार्धं तेन रामं विदुर्बुधाः ॥ रमाया रमणस्थानं रामं रामविदो
विदुः ॥ १९ ॥ रा चेति लक्ष्मीवचनो मश्चापीश्वरवाचकः ॥ लक्ष्मीपतिं गतिं रामं प्रवदंति मनीषिणः ॥ २० ॥ नाम्नां सहस्रं दिव्या
नां स्मरणे यत्फलं लभेत् ॥ तत्फलं लभते नूनं रामोच्चारणमात्रतः ॥ २१ ॥ सारूप्यमुक्तिवचनो नारेति च विदुर्बुधाः ॥ यो देवोप्य
यनं तस्य स च नारायणः स्मृतः ॥२२॥ नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम् ॥ यतो हि गमनं तेषां सोयं नारायणः स्मृतः ॥
॥२३॥ सकृन्नारायणेत्युक्त्वा पुमान्कल्पशतत्रयम् ॥ गंगादिसर्वतीर्थेषु स्नातो भवति निश्चितम् ॥ २४ ॥ नारं च मोक्षणं पुण्यमयनं
ज्ञानमीप्सितम् ॥ तयोर्ज्ञानं भवेद्यस्मात्सोयं नारायणः प्रभुः ॥ २५ ॥ नास्त्यंतो यस्य वेदेषु पुराणेषु चतुर्षु च ॥ शास्त्रेष्वन्येषु
योगेषु तेनानंतं विदुर्बुधाः ॥ २६ ॥ मुकुमध्ययमानं च निर्माणं मोक्षवाचकम् ॥ तद्ददाति च यो देवो मुकुन्दस्तेन कीर्तितः ॥
॥ २७ ॥ मुकुं भक्तिरसप्रेमवचनं वेदसंमतम् ॥ यस्तं ददाति भक्तेभ्यो मुकुंदस्तेन कीर्तितः ॥ २८ ॥ सूदनं मधुदैत्यस्य यस्मात्स

मधुसूदनः ॥ इति संतो वदंतीशं वेदे भिन्नार्थमीप्सितम् ॥ २९ ॥ मधु क्लीबं च माध्वीके कृतकर्मशुभाशुभे ॥ भक्तानां कर्मणां चैव सदनं मधुसूदनः ॥ ३० ॥ परिणामाशुभं कर्म भ्रांतानां मधुरं मधु ॥ करोति सूदनं यो हि स एव मधुसूदनः ॥ ३१ ॥ कृषिरुत्कृष्टवचनो णश्च सद्भक्तिवाचकः ॥ अश्चापि दातृवचनः कृष्णं तेन विदुर्बुधाः ॥ ३२ ॥ कृषिश्च परमानंदे णश्च तद्दास्यकर्मणि ॥ तयोर्दाता च यो देवस्तेन कृष्णः प्रकीर्तितः ॥ ३३ ॥ कोटिजन्मार्जिते पापे कृषिः क्लेशे च वर्तते ॥ भक्तानां णश्च निर्वाणे तेन कृष्णः प्रकीर्तितः ॥ ३४ ॥ नाम्नां सहस्रं दिव्यानां त्रिरावृत्त्य च यत्फलम् ॥ एकावृत्त्या तु कृष्णस्य तत्फलं लभते नरः ॥ ३५ ॥ कृष्णनाम्नः परं नाम न भूतं न भविष्यति ॥ सर्वेभ्यश्च परं नाम कृष्णेति वैदिका विदुः ॥ ३६ ॥ कृष्णकृष्णेति हे गोपि यस्तं स्मरति नित्यशः ॥ जलं भित्त्वा यथा पद्मं नरकादुद्धरेच्च सः ॥ ३७ ॥ कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते ॥ भस्मीभवंति सद्यस्तु महापातककोटयः ॥ ३८ ॥ अश्वमेधसहस्रेभ्यः फलं कृष्णजपस्य च ॥ वरं तेभ्यः पुनर्जन्म नातो भक्तपुनर्भवः ॥ ३९ ॥ सर्वेषामपि यज्ञानां लक्षाणि व्रतानि च ॥ तीर्थस्नानानि सर्वाणि तपांस्यनशनानि च ॥ ४० ॥ वेदपाठसहस्राणि प्रादक्षिण्यं भुवः शतम् ॥ कृष्णनामजपस्यास्य कलां नार्हंति षोडशीम् ॥ ४१ ॥ तेषां लोभाद्भवेत्स्वर्गफलं च सुचिरं नृणाम् ॥ स्वर्गादवश्यं पुंसश्च जपकर्तुर्हरेः पदम् ॥ ४२ ॥ के जले सर्वदेहेपि शयनं यस्य चात्मनः ॥ वदंति वैदिकाः सर्वे तं देवं केशवं परम् ॥ ४३ ॥ कंसश्च पातके विघ्ने रोगे शोके च दानवे ॥ तेषामरिर्निहंता च स कंसारिः प्रकीर्तितः ॥ ४४ ॥ रुद्ररूपेण संहर्ता विश्वानामपि नित्यशः ॥ भक्तानां पातकानां च हरिस्तेन प्रकीर्तितः ॥ ४५ ॥ मा च ब्रह्मस्वरूपा या मूलप्रकृतिरीश्वरी ॥ नारायणीति विख्याता विष्णुमाया सनातनी ॥ ४६ ॥ महालक्ष्मीस्वरूपा च वेदमाता सरस्वती ॥ राधा वसुंधरा गंगा तासां स्वामी च माधवः ॥ ४७ ॥ ब्रह्मेशशेषादिभवैश्च वंद्यं ध्यानैर्न किंचित्सनकादिभिश्च ॥ वेदैः पुराणैर्न निरूपितं च भजस्व भक्त्या नवनीतचोरम् ॥ ४८ ॥ क्व चापि दुग्धं क्व दधि घृतं वा नवोद्धृतं वा क्व च तक्रमीप्सितम् ॥ तेषां क्व चोरो भवति क्व चापि क्व बंधनं ते भवमूलमध्ये ॥४९॥ न योगि

भिः सिद्धगणैर्मुनीन्द्रैर्न भक्तसंघैर्भवपद्मशेषैः ॥ योगैर्न बद्धो न हि रक्षितुं क्षमैः कथं स बद्धस्तव मूलमध्यतः ॥ ५० ॥ प्रेम्णा नु
भक्त्या स्तवनेन पूजया भजस्व पुत्रं तरसा च भारते ॥ हृत्पद्ममध्ये स्थितमीश्वरं परं ध्यानेन यत्नेन च संततं सति ॥
॥ ५१ ॥ वरं वृणुष्व भद्रं ते यत्ते मनसि वांछितम् ॥ सर्वं दास्यामि जगति देवानामपि दुर्लभम् ॥ ५२ ॥ ॥ यशोदो
वाच ॥ ॥ हरौ च निश्चला भक्तिस्त्वद्दास्यं वांछितं मम ॥ तव नाम्नश्च व्युत्पत्तिः का वा तद्वक्तुमर्हसि ॥ ५३ ॥
॥ ॥ श्रीराधिकोवाच ॥ ॥ भवेद्भक्तिर्निश्चला ते हरेर्दास्यं च दुर्लभम् ॥ लभस्व मद्वरेणापि कथयामि सुनिर्णयम् ॥
॥ ५४ ॥ पुरा नंदेन दृष्टाहं भांडीरे वटमूलके ॥ मया च कथितो नंदो निषिद्धश्च व्रजेश्वरः ॥ ५५ ॥ अहमेव स्वयं राधा छाया
रापाणकामिनी ॥ रापाणः श्रीहरेरंशः पार्षदप्रवरो महान् ॥ ५६ ॥ राशब्दश्च महाविष्णुर्विश्वानि यस्य लोमसु ॥ विश्वप्राणिषु विश्वेषु
धा धात्री मातृवाचकः ॥ ५७ ॥ धात्री माताहमेतेषां मूलप्रकृतिरीश्वरी ॥ तेन राधा समाख्याता हरिणा च पुरा बुधैः ॥ ५८ ॥
अहं सुदामशापेन वृषभानसुताधुना ॥ शतवर्षं च विच्छेदो हरिणा सह सांप्रतम् ॥ ५९ ॥ वृषभानश्च कृष्णस्य पार्षदप्रवरो महान् ॥
पितॄणां मानसी कन्या मम माता कलावती ॥ ६० ॥ अयोनिसंभवाहं च मम माता च भारते ॥ पुनः सार्धं च युष्माभिर्यास्यामि
श्रीहरेः पदम् ॥ ६१ ॥ इति ते कथितं सर्वं व्रजं व्रज व्रजेश्वरि ॥ व्रजेश्वरेण सहिता स्वामिना ज्ञानिना सति ॥ ६२ ॥ ममाधुना
च भवती ध्यानस्य व्यवधानिका ॥ ध्यानभंगे महादोषो नराणामपि सुंदरि ॥ ६३ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्म
खण्ड उत्तरार्द्धे नारायणनारदसंवादे राधायशोदासंवादे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ॥ श्रीनारायण उवाच ॥ ॥
वासुदेवो द्वारकायां वसुदेवाज्ञया मुने ॥ प्रययौ रत्नरुचिरं रुक्मिणीमंदिरं वरम् ॥ १ ॥ शुद्धस्फटिकसंकाशममूल्यरत्ननिर्मितम् ॥ पुरतः
परितो रम्यं नानाचित्रेण चित्रितम् ॥ २ ॥ अमूल्यरत्नकलशं श्वेतचामरदर्पणैः ॥ वह्निशुद्धांशुकैः शुद्धैः परितः परिशोभितम् ॥
॥ ३ ॥ ददर्श रुक्मिणीं देवीमतीव नवयौवनाम् ॥ रत्नपर्यंकमारुह्य शयानां सस्मितां मुदा ॥ ४ ॥ अप्रौढां च नवोढां च नवसंगम

लज्जिताम् ॥ अमूल्यरत्ननिर्माणभूषणेन विभूषिताम् ॥ ५ ॥ सुचारुकबरीभारां मालतीं माल्यभूषिताम् ॥ दृष्ट्वा कृष्णं भीष्मकन्या
सहसा प्रणनाम सा ॥ ६ ॥ तां संप्राप्य जगन्नाथो रत्नतल्पे उवास सः ॥ शुभक्षणे च शुभया स रेमे रमया सह ॥ ७ ॥ सुखसंभोग
मात्रेण मूर्च्छामाप मुदा सती ॥ तस्यां जज्ञे कामदेवो भस्मीभूतश्च शंभुना ॥ ८ ॥ स शंबरं निहत्यैव तत्र प्राप रतिं सतीम् ॥ रती
मायावती नाम्ना संकेतेन सुरस्य च ॥ छायां दत्त्वा च शयने गृहिणी शंबरालये ॥ ९ ॥ ॥ नारद उवाच ॥ ॥ जहार शंबरं
कामो दैत्यं केन प्रकारतः ॥ कथयस्व महाभाग विस्तरेण शुभां कथाम् ॥ १० ॥ ॥ नारायण उवाच ॥ ॥ समतीते च सप्ताहे
रुक्मिणी सूतिकागृहात् ॥ गृहीत्वा बालकं दैत्यो जगाम स्वालयं जवात् ॥ ११ ॥ अपुत्रकश्च दैत्येशः पुत्रं प्राप्य प्रहर्षितः ॥ माया
वत्यै ददौ हृष्टो हृष्टा मायावती सती ॥ १२ ॥ अतीव पालनेनैव वर्धयामास बालकम् ॥ सरस्वती तां रहसि कथयामास निर्जने ॥
॥ १३ ॥ ॥ सरस्वत्युवाच ॥ ॥ शिवकोपानले पूर्वं भस्मीभूतः पतिस्तव ॥ स चायं रुक्मिणीपुत्रो दैत्येनैव समाहृतः ॥१४॥
माययापि च मायेशो रुक्मिणीसूतिकागृहात् ॥ समानीय ददौ तुभ्यं पतिस्तेऽयं न चात्मजः ॥१५॥ कामं च कथयामास जगन्माता
च सा सती ॥ तव पत्नी रतिश्चेयं रमस्व रामया सह ॥ १६ ॥ त्वमेव रुक्मिणीपुत्रो नान्यदैत्यस्य मन्मथः ॥ कुररीव सती नित्यं
रोदिति स्म त्वया विना ॥ १७ ॥ इत्युक्त्वा च ययौ वाणी ब्रह्माणी ब्रह्मणः पदम् ॥ स रेमे निर्जने नित्यं रामया सह सुंदरः ॥
॥ १८ ॥ एकदा मन्मथं दैत्यो ददर्श रहसि स्थितम् ॥ शृंगारं रामया सार्धं कुर्वंतं कौतुकेन च ॥ १९ ॥ सस्मितं सस्मितायाश्च
मध्यवक्षःस्थलस्थितम् ॥ रतिं ददर्श कामेन मूर्च्छितां सुरतोत्सुकाम् ॥ २० ॥ दृष्ट्वा चुकोप दैत्यश्च जग्राह खड्गमुत्तमम् ॥ उवाच खड्ग
हस्तश्च कामदेवं रतिं सतीम् ॥ २१ ॥ ॥ शंबर उवाच ॥ ॥ धिक् त्वां महाकामुकं च मूर्खं पंडितमानिनम् ॥ महापातकिनां
श्रेष्ठं प्रमत्तं मातृगामिनम् ॥ २२ ॥ धिक् त्वां च पुंश्चलीं मत्तां कामुकीं हतचेतनाम् ॥ पुत्रं गृहीत्वा रहसि करोषि सुरतिं सति ॥
॥ २३ ॥ इत्येवमुक्त्वा खड्गं च तामेव हंतुमुद्यतः ॥ जिघांसंतं रतिं दैत्यं प्रेरयामास मन्मथः ॥ २४ ॥ पपात दूरतो ब्रह्मन्मूर्च्छितः

ब्र. क. स्वांगपीडितः ॥ पुनश्च चेतनां प्राप्य कोपेन प्रज्वलन्निव ॥ २५ ॥ शिवदत्तं च शूलं च जग्राह निर्भरेण च ॥ शतसूर्यप्रभं शूलं स० ४ उ.
४२॥ प्रलयाग्निसमं मुने ॥ २६ ॥ दृष्ट्वाजग्मुश्च देवाश्च ब्रह्मेशशेषसंज्ञकाः ॥ पवनः कथयामास कर्णे कामस्य यत्नतः ॥ २७ ॥ स्मरस्मर
महामायां दुर्गां दुर्गतिनाशिनीम् ॥ पवनस्य वचः श्रुत्वा दुर्गां सस्मार मन्मथः ॥ २८ ॥ शूलं बभूव तस्यांगे रम्यं माल्यं मनो अ० ११२
हरम् ॥ ब्रह्मास्त्रेण च तं दैत्यं जघान मन्मथो मुदा ॥ २९ ॥ रतिं गृहीत्वा यानेन जगाम द्वारकां पुरीम् ॥ प्रययुर्देवताः सर्वाः स्तु
त्वा च पार्वतीं स्वयम् ॥ ३० ॥ रुक्मिणी मंगलं कृत्वा प्रजग्राह रतिं सुतम् ॥ उत्सवं कारयामास परं स्वस्त्ययनं हरिः ॥ ३१ ॥
ब्राह्मणान्भोजयामास पूजयामास पार्वतीम् ॥ अथ कृष्णः क्रमेणैव वेदोक्ते मंगले दिने ॥ ३२ ॥ सप्तानां रमणीनां च पाणि
ग्राहं चकार ह ॥ कालिंदीं सत्यभामां च सत्यां नाग्निजितीं सतीम् ॥ ३३ ॥ जांबवतीं लक्ष्मणां च समुद्वाहं चकार सः ॥ ताभिः
सार्द्धं क्रमेणैव पुत्रोत्पत्तिं चकार ह ॥ ३४ ॥ एकस्यां दशपुत्राश्च कन्यकैका क्रमेण च ॥ निहत्य नरकं दैत्यं सपुत्रं च नृपेश्वरम् ॥ ३५ ॥ बल
वंतं मुरं दैत्यं जघान रणमूर्धनि ॥ ददर्श कन्यास्तत्रस्थाः सहस्राणां च षोडश ॥ ३६ ॥ शताधिका वयस्याश्च शश्वत्सुस्थिरयौव
नाः ॥ प्रफुल्लवदनाः सर्वा रत्नभूषणभूषिताः ॥ ३७ ॥ शुभक्षणे च तासां च पाणिं जग्राह माधवः ॥ ताभिः सार्धं स रेमे च क्रमेण च
शुभक्षणे ॥ ३८ ॥ एकस्यां दशपुत्राश्च कन्यकैका क्रमेण च ॥ हरेरेतान्यपत्यानि बभूवुश्च पृथक्पृथक् ॥ ३९ ॥ एकदा द्वारकां रम्यां
दुर्वासा मुनिपुंगवः ॥ शिष्यैस्त्रिकोटिभिः सार्धमाजगामावलीलया ॥ ४० ॥ राजा महोग्रसेनश्च सपुत्रः सपुरोहितः ॥ वसुदेवो वासु
देवोप्यक्रूरश्चोद्धवस्तथा ॥ ४१ ॥ नीत्वा षोडशोपचारं प्रणेमुर्मुनिपुंगवम् ॥ शुभाशिषं च प्रददौ तेभ्यो ब्रह्मन्पृथक्पृथक् ॥ ४२ ॥
एकानंशां च कन्यां तां ददौ तस्मै शुभक्षणे ॥ मुक्तामाणिक्यहीरांश्च रत्नं च यौतकं ददौ ॥ ४३ ॥ स रेमे रामया सार्धं माहेंद्रे रत्न
मंदिरे ॥ रत्नेंद्रसारनिर्माणं ददौ तस्मै शुभाश्रमम् ॥ ४४ ॥ एकदा स मुनिश्रेष्ठः समालोच्य स्वचेतसा ॥ शयानं कुत्रचिद्रम्यपर्यंके
रत्ननिर्मिते ॥ ४५ ॥ श्रुतवंतं पुराणं च श्रद्धया कुत्रचिद्विभुम् ॥ महोत्सवे नियुक्तं च कुत्रचित्प्रांगणे शुभे ॥ ४६ ॥ तांबूलं भुक्तवंतं ॥२४२॥

च भक्त्या दत्तं च सत्यया ॥ कुत्रचित्सेवितं तल्पे रुक्मिण्या श्वेतचामरैः ॥ ४७ ॥ कालिंदीसेवितपदं शयानं कुत्रचिन्मुदा ॥ सर्वत्र समसंभाषां चकार भगवान्मुनिः ॥ ४८ ॥ विस्मयं प्रययौ विप्रो दृष्ट्वा तत्परमद्भुतम् ॥ तुष्टाव जगतीनाथं रुक्मिणीमंदिरे पुनः ॥ वसंतं च सुधर्मायां सतां संसदि सुन्दरम् ॥ ४९ ॥ ॥ दुर्वासा उवाच ॥ ॥ जयजय जगतां नाथ जितसर्व जनार्दन सर्वात्मक सर्वेश सर्वबीज पुरातन निर्गुण निरीह निर्लिप्त निरंजन निराकार भक्तानुग्रहविग्रह सत्यस्वरूप सनातन निःस्वरूप नित्यनूतन ब्रह्मेशशेषधनेशवंदित पद्मया सेवितपादपद्म ब्रह्मज्योतिरनिर्वचनीय वेदाविदितगुणरूप महाकाशसम्माननीय परमात्मन्नमोस्तु ते ॥ ५० ॥ इत्येवमुक्त्वा मनसा हरेरनुमतेन च ॥ प्रणम्य तस्थौ विप्रेंद्रस्तत्रैव पुरतो हरेः ॥ ५१ ॥ तमुवाच जगन्नाथो हितं सत्यं पुरातनम् ॥ ज्ञानं च वेदविहितं सर्वेषां च सतां मतम् ॥ ५२ ॥ ॥ श्रीभगवानुवाच ॥ ॥ मा भैर्विप्र शिवांशस्त्वं किं न जानासि ज्ञानतः ॥ अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥ ५३ ॥ अहमात्मा च सर्वेषां शवाः सर्वे मया विना ॥ प्राणिदेहान्मयि गते यांत्येव सर्वशक्तयः ॥ ५४ ॥ जातावप्येक एवाहं व्यक्त एव पृथक्पृथक् ॥ यो भुंक्ते तस्य तृप्तिः स्यान्नान्येषां च कदाचन ॥ ५५ ॥ पृथग्जीवादिसर्वेषां प्रतिमानं च प्राणिनाम् ॥ परिपूर्णतमोहं च गोलोके रासमंडले ॥ ५६ ॥ श्रीदामशापाद्राधा सा मां द्रष्टुमक्षमाधुना ॥ सर्वे चैवांशरूपेण कलया च तदंशतः ॥ ५७ ॥ रुक्मिणीमंदिरे चांशोप्यन्यासां मंदिरे कलाः ॥ ममापि कुत्रचिच्चांशं कुत्रचिच्च कलाकलाः ॥ ५८ ॥ कलाकलांशांः कुत्रापि प्रतिमासु च देहिषु ॥ इत्युक्त्वा जगतां नाथो गृहस्याभ्यंतरं ययौ ॥ ५९ ॥ दुर्वासाश्च प्रियां त्यक्त्वा श्रीहरेस्तपसे गतः ॥ ६० ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे मुनिकृष्णसंवादे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ श्रीनारायण उवाच ॥ ॥ सशिष्यश्चापि दुर्वासास्त्यक्त्वा च द्वारकां पुरीम् ॥ कैलासं प्रययौ भक्त्या शंकरं द्रष्टुमीश्वरम् ॥१॥ गत्वा मुनिश्च कैलासं प्रणनाम शिवं शिवाम् ॥ तुष्टाव परया भक्त्या सशिष्यः प्रणतः शुचिः ॥ २ ॥ तत्सर्वं कथयामास वृत्तांतं श्रीहरेरपि ॥ आत्मनस्तपसस्तत्त्वं स्ववैराग्यं च चेतसः ॥३॥

मुनेश्च वचनं श्रुत्वा प्रहस्य पार्वती सती ॥ तमुवाच हितं सत्यं साक्षाच्छंकरसन्निधौ ॥ ४ ॥ ॥ पार्वत्युवाच ॥ ॥ धर्मत
त्वं न जानासि धर्मिष्ठं मन्यसे स्वकम् ॥ अनपत्यां परित्यज्य क्व यासि तपसे मुने ॥ ५ ॥ अनपत्यां च युवतीं कुलजां च पति
व्रताम् ॥ त्यक्त्वा भवेयुः संन्यासी ब्रह्मचारी यतीति वा ॥ ६ ॥ वाणिज्ये वा प्रवासे वा चिरं दूरं प्रयाति यः ॥ तीर्थे वा तपसे वापि
मोक्षार्थं जन्म खंडितुम् ॥ ७ ॥ न मोक्षस्तस्य भवति धर्मस्य स्खलनं ध्रुवम् ॥ अभिशापेन भार्याया नरकं च परत्र च ॥ इहैव च
यशोनाश इत्याह कमलोद्भवः ॥ ८ ॥ द्वारकां गच्छ हे विप्र स्वधर्मं रक्ष सांप्रतम् ॥ एकानंशां मदंशां च धर्मतः परिपालय ॥ ९ ॥
पाद्पद्मार्जितं पादपद्मं सर्वसुदुर्लभम् ॥ संततं शंभुना गीतं मुनींद्रैः सनकादिभिः ॥ १० ॥ परित्यज्य सुरतरोः कृष्णस्य परमात्म
नः ॥ क्व यासि तपसे वत्स सुधां त्यक्त्वा मनोहराम् ॥ ११ ॥ श्रीकृष्णपादपद्मं च स्वप्ने जपति यो मुने ॥ शतजन्मकृतात्पापान्मु
च्यते नात्र संशयः ॥ १२ ॥ यद्बाल्ये यच्च कौमारे वार्धके यच्च यौवने ॥ कामतोकामतो वापि भस्मीभूतं च पातकम् ॥ १३ ॥ साक्षा
द्यो भारते वर्षे श्रीकृष्णचरणांबुजम् ॥ दृष्ट्वा सद्यो भवेत्पूज्यो जीवन्मुक्तो भवेद्ध्रुवम् ॥१४॥ कोटिजन्मार्जितात्सद्यः कृतपापाद्विमुच्यते ॥
सर्वाण्येव हि तीर्थानि यतः पूतानि नित्यशः ॥ १५ ॥ तद्व्रतं तत्तपः सत्यं तत्पुण्यं तच्च पूजनम् ॥ सफलं कृष्णसंबंधि स्वजन्मखंडनं यतः
॥१६॥ कृष्णभक्तिविहीनश्च ब्राह्मणो वेदपारगः ॥ तत्संगाच्च तदालापाद्भक्तभक्तिः प्रणश्यति ॥१७॥ कृष्णस्योच्छिष्टभोजी यः कृष्णश्च ब्रा
ह्मणः स्वयम् ॥ आवह्निपवनात्पूतः पूतं कर्तुं जगत्क्षमः ॥ १८ ॥ श्रीकृष्णं च परित्यज्य क्व यासि तपसे द्विज ॥ तपसां फलमाप्नोति
श्रीकृष्णस्मरणेन च ॥ १९ ॥ यतो भक्तिर्न च भवेच्छ्रीकृष्णे परमात्मनि ॥ स गुरुः परमो वैरी करोति जन्म निष्फलम् ॥ २० ॥
पार्वतीवचनं श्रुत्वा शंकरः प्रेमविह्वलः ॥ पुलकांचितसर्वांगस्तुष्टाव परमेश्वरीम् ॥ २१ ॥ दुर्वासाः प्रणतिं कृत्वा शिवदुर्गापदांबुजे ॥
स्मारंस्मारं कृष्णपदं पुनश्च द्वारकां ययौ ॥ २२ ॥ तत्र गत्वा हरिं दृष्ट्वा तुष्टाव परमेश्वरम् ॥ एकानंशालयं गत्वा स च रेमे तया सह ॥
॥ २३ ॥ कृष्णो युधिष्ठिरध्यानात्प्रययौ हस्तिनापुरम् ॥ कुंतीं संभाष्य भूपं च भ्रातॄंश्च प्रमुदान्वितः ॥२४॥ उपायेन जरासंधं निहत्य

शाल्व मेव च ॥ कारयामास यज्ञं च विधिबोधितदक्षिणम् ॥२५॥ मुनींद्रैश्च नृपेंद्रैश्च राजसूयमभीप्सितम् ॥ शिशुपालं दंतवक्रं तत्र यज्ञे जघान सः ॥ २६ ॥ अतीव निंदां कुर्वंतं सभायां सुरभूपयोः ॥ पपात तच्छरीरं च जीवो गत्वा हरेः पदम् ॥ न दृष्ट्वा तत्र सर्वे शं तुष्टावागत्य माधवम् ॥२७॥ ॥ शिशुपाल उवाच ॥ ॥ वेदानां जनकोसि त्वं वेदांगानां च माधव ॥२८॥ सुराणामसुराणां च प्राकृतानां च देहिनाम् ॥ सूक्ष्मां विधाय सृष्टिं च कल्पभेदं करोषि च ॥ २९ ॥ मायया च स्वयं ब्रह्मा शंकरः शेष एव च ॥ मनवो मुनयश्चैव वेदाश्च सृष्टिपालकाः ॥ ३० ॥ कलांशेनापि कलया दिक्पालाश्च ग्रहादयः ॥ स्वयं पुमान्स्वयं स्त्री च स्वयमेव नपुंसकः ॥ ॥ ३१ ॥ कारणं च स्वयं कार्यं जन्यश्च जनकः स्वयम् ॥ यंत्रस्य च गुणो दोषो यंत्रिणश्च श्रुतौ श्रुतम् ॥ ३२ ॥ सर्वे यंत्रा भवा न्यंत्री त्वयि सर्वं प्रतिष्ठितम् ॥ मम क्षमस्वापराधं मूढस्य द्वारिणस्तव ॥ ३३ ॥ ब्रह्मशापात्कुबुद्धेश्च रक्ष रक्ष जगद्गुरो ॥ इत्येवमुक्त्वा क्रमतो जयो विजय एव च ॥ ३४ ॥ मुदा तौ ययतुः शीघ्रं वैकुंठद्वारमीप्सितम् ॥ शिशुपालस्य स्तोत्रेण सर्वे ते विस्मयं ययुः ॥ ॥ ३५ ॥ परिपूर्णतमं कृत्वा मेनिरे कृष्णमीश्वरम् ॥ कारयित्वा राजसूयं भोजयामास ब्राह्मणान् ॥ ३६ ॥ कुरुपांडवयुद्धं च कारया मास भेदतः ॥ भुवो भारावतरणं चकार स कृपानिधिः ॥ ३७ ॥ पुनर्ययौ द्वारकां च चिरं स्थित्वा नृपाज्ञया ॥ विप्राया मृतवत्साया जीवयामास पुत्रकान् ॥ ३८ ॥ मृतस्थानात्समानीय तन्मात्रे प्रददौ सुतान् ॥ तद्दृष्ट्वा देवकी तुष्टा ययाचे मृतपुत्रकान् ॥ ३९ ॥ मृतस्थानात्समानीय ददौ मात्रे सहोदरान् ॥ सद्यो जहार दारिद्र्यं सुदाम्नो ब्राह्मणस्य च ॥ ४० ॥ समागतस्य स्वगृहाद्द्वारकां शर णार्थिनः ॥ तस्मै ददौ राजलक्ष्मीं निश्चलां सप्तपौरुषीम् ॥ ४१ ॥ पृथुकानां कणं भुक्त्वा भक्तस्य भक्तवत्सलः ॥ बभूव तस्य राज्यं च यथेंद्रस्यामरावती ॥ ४२ ॥ यथा धनेश्वरो देवो धनाढ्यः स बभूव ह ॥ निश्चलां हरिभक्तिं च ददौ दास्यं सुदुर्लभम् ॥ ४३ ॥ अविनाशिनि गोलोके यथेष्टं पदमुत्तमम् ॥ जहार पारिजातं च शक्राहंकारमेव च ॥ ४४ ॥ सत्यां च कारयामास पुण्यकं व्रतमी प्सितम् ॥ वर्धयामास सर्वत्र नित्यं नैमित्तिकं मुने ॥ ४५ ॥ तत्र व्रते कुमाराय स्वात्मानं दक्षिणां ददौ ॥ ब्राह्मणान्भोजयामास तेभ्यो

रत्नं ददौ मुदा ॥ ४६ ॥ सत्यभामातिमानं च वर्धयामास सर्वतः ॥ रुक्मिण्या अतिसौभाग्यमन्यासां च नवंनवम् ॥ ४७ ॥ वैष्ण
वानां सुराणां च विप्राणामपि पूजनम् ॥ वर्धयामास सर्वत्र नित्यं नैमित्तिकं मुने ॥ ४८ ॥ परमाध्यात्मिकं ज्ञानमुद्धवाय ददौ
प्रभुः ॥ अर्जुनं कथयामास गीतां च रणमूर्धनि ॥ ४९ ॥ कृत्वा निष्कंटकं चैव कृपया च कृपानिधिः ॥ युधिष्ठिराय पृथिवीराज्य
लक्ष्मीं ददौ प्रभुः ॥ ५० ॥ दुर्गां च कारयामास वैष्णवीं ग्रामदेवताम् ॥ यज्ञं च कारयामास कोटिहोमान्वितं शुभम् ॥ ५१ ॥
नानाप्रकारनैवेद्यैर्धूपदीपैर्मनोहरैः ॥ ब्राह्मणान्भोजयामास पार्वतीप्रीतये तथा ॥ ५२ ॥ रैवते पर्वते रम्ये चामूल्यरत्नमंदिरे ॥ गणेशं
पूजयामास देवानामीश्वरं परम् ॥५३॥ लड्डुकानां तिलानां च सुस्वादु सुमनोहराम् ॥ परितुष्टिं पंचलक्षं नैवेद्यं च ददौ मुदा ॥ लड्
डुकं स्वस्तिकानां च सप्तलक्षं सुधोपमम् ॥ ५४ ॥ गणेश्वराय प्रददौ शर्कराशतराशिकम् ॥ पक्वरंभाफलानां च दशलक्षमपूपकम् ॥
॥ ५५ ॥ मिष्टान्नं पायसं रम्यं स्वादु स्वस्तिकपिष्टकम् ॥ घृतं च नवनीतं च दधि दुग्धं सुधोपमम् ॥ ५६ ॥ धूपं दीपं पारिजातपुष्प
माल्यमभीप्सितम् ॥ सुगंधि चंदनं गंधं वह्निशुद्धांशुकं ददौ ॥ ५७ ॥ यज्ञं च कारयामास कोटिहोमान्वितं शुभम् ॥ ब्राह्मणान्भोज
यामास तुष्टाव सगणेश्वरम् ॥ ५८ ॥ वाद्यं दशविधं चैव वादयामास तत्र वै ॥ सूर्यं च पूजयामास सांबः कुष्ठक्षयाय च ॥ ५९ ॥
हविष्यं कारयामास तं च सांबं समातरम् ॥ परिपूर्णं वत्सरं चाप्युपहारैरनुत्तमैः ॥६०॥ वरं ददौ च सांबाय स्तोत्रं च भास्करः स्वयम् ॥६१॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे गणेशपूजानाम त्रयोदशाधिकशततमोऽध्यायः ॥११३॥
॥ ॥ श्रीनारायण उवाच ॥ ॥ कृष्णपुत्रश्च प्रद्युम्नो महाबलपराक्रमः ॥ तत्पुत्रोप्यनिरुद्धश्च विधातुरंश एव च ॥ १ ॥
एकदासावनिरुद्धो नवयौवनसंयुतः ॥ सुप्तो रहसि पर्यंके पुष्पचंदनचर्चिते ॥ २ ॥ स्वप्ने ददर्श युवतीं पुष्पोद्याने सुपु ॥२४४॥
ष्पिते ॥ सुगंधिपुष्पे तत्प्रेमस्निग्धचंदनचर्चिते ॥ ३ ॥ शयानां सुस्मितां रम्यां नवयौवनसंयुताम् ॥ अमूल्यरत्ननिर्माण
भूषणेन विभूषिताम् ॥ ४ ॥ चारुकेयूरवलयशंखकंकणशोभिताम् ॥ मणिकुंडलयुग्मेन गण्डस्थलविराजिताम् ॥ ५ ॥

अतीव सूक्ष्मवसनां क्वणन्मंजीररंजिताम् ॥ पक्वबिंबाधरोष्ठीं च शरत्कमललोचनाम् ॥ ६ ॥ शरत्पद्मप्रभामुष्टकोटींदुर्नि
दितानननाम् ॥ मुक्तापंक्तिसमासाद्यदंतपंक्तिमनोहराम् ॥ ७ ॥ त्रिवक्रकबरीभारां मालतीमाल्यभूषिताम् ॥ कस्तूरीकुंकुमालक्तस्नि
ग्धचंदनकज्जलैः ॥ ८ ॥ पत्रावलीविरचितसुकपोलस्थलोज्ज्वलाम् ॥ दाडिमीकुसुमाकारसिंदूरबिंदुभूषिताम् ॥ ९ ॥ श्रीरामकदली
स्तंभनिंदितोरुस्थलोज्ज्वलाम् ॥ अत्युच्चैर्वर्तुलाकारस्तनयुग्मविभूषिताम् ॥ १० ॥ नितंबभारनम्रां च कामबाणप्रपीडिताम् ॥ कामु
कीं कमनीयां च पश्यंतीं वक्रचक्षुषा ॥ ११ ॥ कुंकुमालक्तरक्ताक्तपादपद्मविराजिताम् ॥ वायुप्रेरणवस्त्रेण व्यक्तगुप्तस्थलोज्ज्वलाम्
॥ १२ ॥ तां दृष्ट्वा कामपुत्रश्च कामोन्मथितमानसः ॥ उवाच मधुरं मत्तः काममत्तां सुकोमलाम् ॥ १३ ॥ चारुचंपकवर्णाभां कामे
न पुलकान्विताम् ॥ अतिप्रौढां नवोढां च शृंगारेच्छासुचंचलाम् ॥ १४ ॥ ॥ अनिरुद्ध उवाच ॥ ॥ किं देवी किं च गांध
र्वी का त्वं कामिनि कानने ॥ कस्य स्त्री कस्य कन्या वा कं वा वांछसि सुन्दरि ॥ १५ ॥ त्रैलोक्यातुलसौंदर्या मुनिमानसमोहिनी ॥
न बिभेषि कथं ब्रूहि स्वयंमेकाकिनी च माम् ॥ १६ ॥ अहं त्रैलोक्यनाथस्य पौत्रः कामात्मजोऽधुना ॥ कांतेऽहमनिरुद्धश्च नवीन
यौवनाहतः ॥ १७ ॥ कमनीयश्च कामी च कामशास्त्रविशारदः ॥ कामुकीकामनां पूर्णां कर्तुमेवेश्वरः स्वयम् ॥ १८ ॥ मां भजस्व
सुशीले त्वं सुवेषं च सुशीलकम् ॥ रतिशूरं रतिरसप्राज्ञं रतिरसप्रियम् ॥ १९ ॥ रतिपुत्रं रतिरसं प्रमत्तं रसिकं प्रिये ॥ युवानं व्याधि
हीनं च कामुकं कामुकीच्छति ॥ २० ॥ विदग्धासु विदग्धं च कांतमायाति कामतः ॥ विदग्धाया विदग्धेन संगमो गुणवान्भवेत्
॥ २१ ॥ प्रच्छाद्य लोचनास्यं च नवसंगमलज्जिता ॥ विलोकयंती वक्राक्षिकोणेन तमुवाच सा ॥ २२ ॥ ॥ कामिन्युवाच ॥ ॥
कामुकः कामपुत्रोसि कामेन व्याकुलोधुना ॥ भवांश्चेत्कामुकीयोग्यो न कामश्चिंतितः कथम् ॥ २३ ॥ पौत्रस्त्रैलोक्यनाथस्य स्वतः संभा
वितस्य च ॥ स्वयं योग्यो योग्यपुत्रो विवाहं न कथं कुरु ॥ २४ ॥ विवाहिता यज्ञपत्नी सा च पुण्यव्रता सती ॥ निश्चला सततं सा
ध्या वर्धिनी संगिनी सदा ॥ २५ ॥ भयप्रीतिदानसाध्या गुप्तपत्नी त्वनिश्चला ॥ नैमित्तिका न नित्या सा सा च वेदविवर्जिता ॥ २६ ॥

 

परं नरकसोपाना परत्रेहायशस्करा ॥ साधुस्तत्र न हि रतो वंशजो वैष्णवो यदि ॥ २७ ॥ यदि पूर्वं भवेद्भ्रांतो निवृत्तः साधुसंगतः ॥ प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ २८ ॥ प्रायश्चित्ती पुनर्लिप्तो निवृत्तः पातकी यदि ॥ उपहास्यो भुवि भवेत्सर्वं कुंजरशौचवत् ॥ २९ ॥ सुशीला सुन्दरी शांता धर्मपत्नी प्रशंसिता ॥ पतिव्रता सुसाध्व्यः सा शश्वत्सुप्रियवादिनी ॥ ३० ॥ कोमलांगी विदग्धा च श्यामा रतिसुखप्रदा ॥ एवंभूतां परित्यज्य वैष्णवस्तपसे व्रजेत् ॥ ३१ ॥ सा चेत्परिणता साध्वी शांता पुत्रवती यदा ॥ अन्यथा च वृथा सर्वं तपसस्खलनं भवेत् ॥ ३२ ॥ असाधुश्च कुवंशश्चेत्परनारीं प्रयाति चेत् ॥ स याति नरकं घोरं पितृभिः सप्तभिः सह ॥ ३३ ॥ अहमूषा बाणकन्या बाणः शंकरकिंकरः ॥ रणे त्रैलोक्यविजयी शंकरो जगतां पतिः ॥ ३४ ॥ न स्वतंत्रा पराधीना त्रिषु कालेषु कामिनी ॥ पुंश्चली या स्वतंत्रा साप्यसद्वंशप्रसूतिका ॥ ३५ ॥ पिता ददाति कन्यां तां सुयोग्याय वराय च ॥ कन्या वरं व्रजेद्या चेत् धर्म एष सनातनः ॥ ३६ ॥ त्वं च योग्योसि योग्याहं मामिच्छसि यदि प्रभो ॥ बाणं प्रार्थय शंभुं वाप्यथ वा पार्वतीं सतीम् ॥ ३७ ॥ इत्युक्त्वा सुन्दरी साध्वी सांतर्धाना बभूव ह ॥ निद्रां तत्याज सहसा कामी कामात्मजो मुने ॥३८॥ बुद्ध्वा स्वप्नं स विज्ञाय कामेन व्यथितान्तरः ॥ बभूव व्याकुलोऽशांतो न दृष्ट्वा प्राणवल्लभाम् ॥३९॥ त्यक्त्वाहारमनिद्रश्च प्रमत्तश्च कृशोदरः ॥ क्षणं तिष्ठति शेतेच क्षणं रहसि रोदिति ॥ ४० ॥ पुत्रं दृष्ट्वा तु क्रंदंतं देवकी रुक्मिणी रतिः ॥ अन्याश्च योषितः सर्वाः कथयामासुरीश्वरम् ॥ ४१ ॥ तासां च वचनं श्रुत्वा प्रहस्य मधुसूदनः ॥ उवाच सर्वतत्त्वज्ञः कृष्णश्च पूर्णमानसः ॥ ४२ ॥

॥ ॥ श्रीभगवानुवाच ॥ ॥ कामातुरा बाणकन्या रतिं दृष्ट्वा शिवेशयोः ॥ वरं संप्राप दुर्गाया व्याकुला मदनास्त्रतः ॥ ४३ ॥ स्वप्नं च दर्शयामास सा [illegible] च पार्वती ॥ मम पौत्रं प्रमत्तं च चकार कौतुकेन च ॥ ४४ ॥ तत्पुत्रीं च प्रमत्तां तां करोमि स्वप्नतोधुना ॥ स्वच्छंदं तिष्ठ न चिरं नास्ति चिंता मनोव्यथा ॥ ४५ ॥ इति कृष्णः समाश्वास्य सर्वात्मा सर्वसिद्धिवित् ॥ स्वप्नं च दर्शयामास बाणपुत्रीं च कामुकीम् ॥ ४६ ॥ सुप्ता सुतल्पे बाला सा पुष्पचंदनचर्चिते ॥ नवयौवनसंयुक्ता रत्नभूषणभूषिता ॥ ४७ ॥

शयाना रत्नपर्यंके ददर्श स्वप्नमीप्सितम् ॥ अतीव निर्जने देशे रत्ननिर्माणमंदिरे ॥ ४८ ॥ नवीननीरदश्याममतीव नवयौवनम् ॥ कोटिकंदर्पलीलाभं सस्मितं सुमनोहरम् ॥ ४९ ॥ रत्नकेयूरवलयरत्नमंजीररंजितम् ॥ रत्नकुंडलयुग्मेन गंडस्थलविराजितम् ॥ ५० ॥ चंदनोक्षितसर्वांगं भूषितं पीतवाससा ॥ सुचारुमालतीमाल्यवक्षःस्थलसमुज्ज्वलम् ॥ ५१ ॥ शयानं रत्नपर्यंके पुष्पचंदनचर्चिते ॥ तं दृष्ट्वा सहसा साध्वी तन्मूलं प्रययौ मुदा ॥ ५२ ॥ उवाच मधुरं साध्वी हृदयेन विदूयता ॥ कामात्मजप्रिया कांता कामबाणप्रपीडिता ॥ ५३ ॥ ॥ ऊषोवाच ॥ ॥ कस्त्वं कामुक भद्रं ते मां भजस्व स्मरातुराम् ॥ अतिप्रौढां नवोढां च नवसंगमलालसाम् ॥ ५४ ॥ तवानुरक्तां भक्तां च गांधर्वेण समुद्वह ॥ विवाहाष्टप्रकारेषु गांधर्वः सुलभो नृणाम् ॥ ५५ ॥ अनुरक्तां प्रियां प्राप्य त्यजेद्यः कपटी पुमान् ॥ तस्माद्याति महालक्ष्मीः शापं दत्त्वा सुदारुणम् ॥ ॥ ५६ ॥ ॥ पुमानुवाच ॥ ॥ अहं कृष्णस्य पौत्रश्च कामदेवात्मजः स्वयम् ॥ कथं गृह्णामि त्वां कांते तयोरनुमतिं विना ॥ ॥ ५७ ॥ इत्येवमुक्त्वा स पुमानंतर्धानं चकार सः ॥ कामेन व्याकुला कांता न दृष्ट्वा कांतमीप्सितम् ॥ ५८ ॥ निद्रां त्यक्त्वा समुत्थाय तल्पादेव मनोहरात् ॥ विषसाद सखीमध्ये प्रमत्ता रुदती भृशम् ॥ ५९ ॥ पप्रच्छ तां वरालीनां किंकिमित्येवं निश्चितम् ॥ उवाच बोधयामास चित्रलेखा सुयोगिनी ॥ ६० ॥ ॥ चित्रलेखोवाच ॥ ॥ चेतनं कुरु कल्याणि कस्मात्ते भीतिरुल्बणा ॥ स्वयं शंभुः शिवा साक्षाद्दुर्लंघ्ये नगरे सति ॥ ६१ ॥ शिवस्मरणमात्रेण सर्वारिष्टं पलायते ॥ शिवं भवति सर्वत्र शिव एव शिवालयः ॥ ६२ ॥ ध्यानाद्दुर्गतिनाशिन्याः सर्वदुर्गं विनश्यति ॥ ददाति मंगलं तस्मै सर्वमंगलमंगला ॥ ६३ ॥ चित्रलेखावचः श्रुत्वा किंचिन्नोवाच सुंदरी ॥ त्यक्त्वाहारं च निद्रां च पुरुषं चिन्तयेत्सदा ॥ ६४ ॥ चित्रलेखा सखी गत्वा बाणमाह च तत्प्रियाम् ॥ दुर्गां च शंकरं स्कंदं गणेशं योगिनां गुरुम् ॥ ६५ ॥ चित्रलेखावचः श्रुत्वा रुरोदोच्चैर्भृशं सती ॥ बाणश्च शंकराभ्याशे विषसाद प्रमूर्च्छितः ॥ जहास शंकरो दुर्गा कार्तिकेयो गणेश्वरः ॥ ६६ ॥ ॥ गणेश्वर उवाच ॥ ॥ यो ददाति ध्रुवं दुःखमन्य

स्मै दंभमोहितः ॥ सूक्ष्मधर्मविचारेण स विंदति चतुर्गुणम् ॥ ६७ ॥ शिवेशयोश्च क्रीडां च दृष्ट्वा या काममोहिता ॥ वरं तस्यै ददौ दुर्गा वरमेव सुदुर्लभम् ॥ ६८ ॥ स्वप्ने गत्वा स्वयं देवी मत्तं कृत्वा स्मरात्मजम् ॥ अधुना वामपार्श्वे च शंभोस्तिष्ठति मूकवत् ॥६९॥ सर्वं ज्ञात्वा च सर्वज्ञो भगवान्हरिरीश्वरः ॥स्वप्ने सुवेषं पुरुषं दर्शयामास कन्यकाम् ॥ ७० ॥ सुवेषं पुरुषं दृष्ट्वा युवानं युवती सती ॥ परमेच्छा भवेत्तस्या धर्मभीत्या निवर्तते ॥ ७१ ॥ सुवेषं पुरुषं दृष्ट्वा पुंश्चली पापवंशजा ॥ त्यजेन्निद्रां च स्वाहारं पतिं पुत्रं धनं गृहम् ॥ ७२ ॥ चेतनं गृहकार्यं च कुललज्जां कुलद्वयम् ॥ युवानं रतिशूरं चाप्यतिनीचं न हि त्यजेत् ॥ ७३ ॥ त्यजेज्जातिं च धर्मं च प्राणांश्च परिणामतः ॥ तस्मात्प्राज्ञः प्रयत्नेन प्राणेभ्यो युवतीं सदा ॥ ७४ ॥ परिरक्षेच्च सततं मायायुक्तां न विश्वसेत् ॥ हृदयं क्षुरधाराभं नारीणां मधुरं वचः ॥ ७५ ॥ तासां मनो न जानंति संतो वेदाश्च वैदिकाः ॥ प्रयातु द्वारकां सद्यश्चित्रलेखा सुयोगिनी ॥ ॥७६॥ अनिरुद्धं समाहर्तुं प्रमत्तमवलीलया ॥ इति श्रुत्वा महादेवो गणेशं तमुवाच ह ॥७७॥ न शृणोति यथा बाणः शुभकार्यं तथा कुरु ॥चित्रलेखा ययौ तूर्णं द्वारकाभवनं हरेः ॥ ७८ ॥ सर्वेषामपि दुर्लंघ्यं लीलया प्रविवेश सा ॥ निद्रितं चानिरुद्धं च समाहृत्य च योगतः ॥ ७९ ॥ रथमारोहयामास निद्रितं बालकं मुदा ॥ सा मनोयायिनी भद्रा गृहीत्वा बालकं मुने ॥ ८० ॥ मुहूर्ताच्छोणितपुरं कृत्वा शंखध्वनिं ययौ ॥ अथाश्रमाभ्यंतरे च रुरुदुः सर्वयोषितः ॥ ८१ ॥ अहो प्राणहरो वत्सः क्व गतः प्राणवल्लभः ॥ कृष्णस्ताश्च समाश्वास्य सर्वज्ञः सर्वतत्त्ववित् ॥ ८२ ॥ सांबकामबलैः सार्धं कृष्णः सात्यकिना तथा ॥ गृहीत्वा गरुडं वीरं रथमारुह्य सत्वरः ॥ ८३ ॥ सुदर्शनं पांचजन्यं पद्मं कौमोदकीं गदाम् ॥ पश्चाद्यास्यति देवेशो नगरं शोणितं तथा ॥ ८४ ॥ सगणैः शंकरेणैव पार्वत्यां परिरक्षितुम् ॥ अथ सा योगिनी धन्या पुण्या मान्या च योषिताम् ॥ ८५ ॥ शिष्या दुर्वाससः शांता सिद्धयोगेन सिद्धिदा ॥ बालकं बोधयामास रुदंतं मातरं स्मरन् ॥ ८६ ॥ स्नापयित्वा ददौ तस्मै माल्यचंदनभूषणम् ॥ कृत्वा सुवेषं बालस्य

१ अथ श्रुत्वा च गमनम्—इ०पा०।

कन्यांतःपुरमीप्सितम् ॥ ८७ ॥ चक्रे प्रवेशं योगेन रक्षकैश्चापि रक्षितम् ॥ तामूषां रक्षितां दृष्ट्वा निराहारां कृशोदरीम् ॥ ८८ ॥ शीघ्रं च बोधयामास सखीभिः परिवारिताम् ॥ ऊषां कृत्वा च सुस्नातां वस्त्रभूषणभूषिताम् ॥ ८९ ॥ वस्त्रमाल्यैश्चंदनैश्च सिंदूरपत्रकैः शुभैः ॥ द्वयोः संभाषणं तत्र महेंद्रे च शुभक्षणे ॥ ९० ॥ कारयामास गोष्ठ्या च सखीनां संगमेन च ॥ पतिव्रता पतिं दृष्ट्वा सा रेमे विगतज्वरा ॥ ९१ ॥ गांधर्वेण विवाहेन तामुवाह स्मरात्मजः ॥ रतिर्बभूव सुचिरमुभयोः सुखकारणम् ॥ ९२ ॥ दिवानिशं न बुबुधे स्मरपुत्रः स्मरातुरः ॥ ऊषा कामातुरा प्रौढा नवोढा नवसंगमात् ॥ ९३ ॥ मूर्च्छां संप्राप पुंसश्च स्पर्शमात्रेण कामुकी ॥ एवं नित्यं च रहसि संगमः सुमनोहरः ॥ बभूव सुचिरं विप्र राजा शुश्राव रक्षकात् ॥ ९४ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे बाणयुद्धे ऊषानिरुद्धयोः संवादे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

॥ ॥ नारायण उवाच ॥ ॥ अथ भीता रक्षकास्ते समूचुर्बाणमीश्वरम् ॥ स्कंदं गणेशं दुर्गां च दंडवत्प्रणिपत्य च ॥ ॥ १ ॥ ॥ रक्षका ऊचुः ॥ ॥ अहो दुष्टश्च कालोऽयमतीव दुरतिक्रमः ॥ स्वतंत्रा बालिका प्रौढा पतिमिच्छति सांप्रतम् ॥ ॥ २ ॥ असंगसंगमं नाथ साधूनां दुःखकारणम् ॥ संसर्गजा गुणा दोषा भवंति सततं नृणाम् ॥ ३ ॥ चित्रलेखा स्वयं दूती समानीय परं वरम् ॥ रणशूरं महावीरं नृपेंद्रं च महारथम् ॥ ४ ॥ युवानं व्याधिहीनं च कंदर्पादपि सुंदरम् ॥ संभोगं कारयामास बुबुधे न दिवानिशम् ॥ ५ ॥ सांप्रतं तव कन्या साप्यूषा गर्भवती सती ॥ कुलजा कुलयोश्चैव तप्तांगारस्वरूपिणी ॥ ६ ॥ दौहित्रो वापि दौहित्री बभूव सांप्रतं तव ॥ कन्यां पश्य महाप्रौढां नगरीं नागरान्विताम् ॥ ७ ॥ नखविक्षतसर्वांगीं वराधीनां च चंचलाम् ॥ पुंसश्च संगिनीं शश्वद्रहस्ये रतिसंगिनीम् ॥ ८ ॥ सस्मितां एकटाक्षं च चंचलेक्षणवीक्षिताम् ॥ एवं श्रुत्वा लज्जितश्च बाणस्तत्र चुकोप ह ॥ ९ ॥ युद्धाय च मतिं चक्रे वारितः शंभुना भृशम् ॥ वारितश्च गणेशेन स्कंदेन शिवया तथा ॥ १० ॥ भैरव्या भद्रकाल्या च योगिनीभिश्च संततम् ॥ अष्टभिर्भैरवैश्चैव रुद्रैरेकादशात्मकैः ॥ ११ ॥ भूतैः प्रेतैश्च कूष्मांडैर्वेतालैर्ब्रह्मराक्षसैः ॥ योगींद्रैरपि सिद्धैः

द्रे रुद्रैश्चंडादिभिस्तथा ॥ १२ ॥ कोट्टव्या ग्रामदेव्या च यथा मात्रा हिताय च ॥ उवाच शंकरो बाणं मूढं पंडितमानिनम् ॥ हितं सत्यं नीतिशास्त्रं परिणामसुखावहम् ॥१३॥ ॥ श्रीमहादेव उवाच ॥ ॥ शृणु बाण प्रवक्ष्यामि कथामेतां पुरातनीम् ॥ १४ ॥ भुवो भारावतरणे भारते स्वयमीश्वरः ॥ निहत्य सर्वान्राजेंद्रान्द्वारकायां विराजते ॥ १५ ॥ यस्य लोमसु विश्वानि तस्य वासः सदीश्वरः ॥ वासुदेव इति ख्यातः कथ्यते तेन कोविदैः ॥ १६ ॥ धातुर्विधाता भगवांश्चक्रपाणिः स्वयं भुवि ॥ ब्रह्मविष्णुशिवादीनामीश्वरः प्रकृतेः परः ॥ १७ ॥ निर्गुणश्च निरीहश्च भक्तानुग्रहविग्रहः ॥ परं ब्रह्म परं धाम परमात्मा च देहिनः ॥ १८ ॥ यस्मिन्गते शवो जीवो संग्रामस्तेन संभवेत् ॥ शस्त्रविद्धो महाकाशो यथा मूढ दिशस्तथा ॥१९॥ तथात्मा च निराकारो देही च ध्यानहेतुना ॥ तस्य पुत्रोऽनिरुद्धश्च महाबलपराक्रमः ॥ २० ॥ त्रैलोक्यमपि संहर्तुं क्षणेन च क्षमः स्वयम् ॥ सर्वे देवाश्च दैत्याश्च बलवंतो महारथाः ॥२१॥ ते सर्वे चानिरुद्धस्य कलां नार्हंति षोडशीम् ॥ ययोरेव समं वित्तं ययोरेव समं बलम् ॥ २२ ॥ तयोर्विवाहो मैत्री च न तु पुष्टविपुष्टयोः ॥ बलिः पिता ते दैत्यानां सारभूतो महारथः ॥ २३ ॥ क्षणेन येन नीतश्च सुतलं स हरेः कला ॥ सर्वे चांशकलाः पुंसः परिपूर्णतमस्य च ॥ वृंदावनेश्वरस्यापि कृष्णस्य परमात्मनः ॥ २४ ॥ ॥ पार्वत्युवाच ॥ ॥ ध्यायते ध्याननिष्ठश्च हृत्पद्मे च दिवानिशम् ॥ २५ ॥ ब्रह्मा महेशः शेषश्च भगवंतं सनातनम् ॥ दिनेशश्च गणेशश्च योगींद्राणां गुरोर्गुरुः ॥ ध्यायते परमात्मानं भगवंतं सनातनम् ॥ २६ ॥ सनत्कुमारः कपिलो नरो नारायणस्तथा ॥ ध्यायंते हृदयांभोजे भगवंतं सनातनम् ॥ २७ ॥ मनवश्च मुनींद्राश्च सिद्धेंद्रा योगिनां वराः ॥ ध्यानासाध्यं च ध्यायंते भगवंतं सनातनम् ॥ २८ ॥ सर्वादिं सर्वबीजं च सर्वेशं च परात्परम् ॥ ध्यायंते ज्ञानिनः सर्वे भगवंतं सनातनम् ॥ २९ ॥ ॥ गणेश उवाच ॥ ॥ अभाग्यं च बलेश्चापि वैष्णवस्य महात्मनः ॥ मूढोयमीदृशः पुत्रः प्रह्लादस्य च धीमतः ॥ ३० ॥ ॥ स्कंद उवाच ॥ ॥ अये भ्रातर्न श्रुता च हिरण्यकशिपोः कथा ॥ हिरण्याक्षस्य च मधोः कैटभस्य महात्मनः ॥ पूर्वजास्तेपि ते दैत्या महाबलपराक्रमाः ॥३१॥ क्रमेण विष्णुना नीता लीलया यमसादनम् ॥

भगवान्यस्य संहर्तास्वयं नारायणः प्रभुः ॥ ३२ ॥ तस्य को रक्षिता भ्रातर्निवर्तस्व शुभाय च ॥ तेषां च वचनं श्रुत्वा तानुवाचासुरे
श्वरः ॥ ३३ ॥ कोपरक्तास्यनयनो धनुष्पाणिर्यथांतकः ॥ शृणु मातः प्रवक्ष्यामि शृणु तात महेश्वर ॥ ३४ ॥ शृणु भ्रातर्गणपते शृणु
भ्रातश्च कार्तिक ॥ शुभाशुभं प्राक्तनेन प्राणिनां कर्मणां तथा ॥ ३५ ॥ कृतकर्मातिरिक्तं च कार्यं केषां च वर्तते ॥ नानात्कालै
म्रियते विद्धः शरशतैरपि ॥ ३६ ॥ तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ यस्माच्च यस्य निर्वाणं विधात्रा लिखितं पुरा ॥
॥ ३७ ॥ तदेव नित्यं सत्यं च निषेकः केन वार्यते ॥ संग्रामे कातरो यो हि निष्फलं तस्य जीवनम् ॥ ३८ ॥ जयी यशश्च लभते
मृतः स्वर्गं च गच्छंति ॥ प्रविश्य कन्यां गृह्णाति नगरं शिवरक्षितम् ॥ ३९ ॥ पार्वत्या च गणेशेन युद्धेन बलिना तथा ॥ को वा
गृह्णाति कन्यां च कस्य वा जीवितस्य च ॥ ४० ॥ सगर्भा तव कन्येति सभायां रक्षको वदेत् ॥ इति मे वज्रतुल्यं च श्रुतिकोटं परं
वचः ॥ ४१ ॥ अतोनिरुद्धं हत्वा च घातयिष्यामि कन्यकाम् ॥ अन्यथा ज्वलदग्नौ च त्यक्ष्याभि च कलेवरम् ॥ ४२ ॥ ॥ कोट
र्युवाच ॥ ॥ शृणु वत्स प्रवक्ष्यामि माताहं तेपि धर्मतः ॥ दुरंतेनापि पुत्रेण पित्रोर्दुःखं पदेपदे ॥ ४३ ॥ कन्या परगृहीता साप्यन्यस्मै
दातुमक्षमा ॥ श्रीकृष्णस्यापि पौत्राय प्रद्युम्नस्य सुताय च ॥ ४४ ॥ अनिरुद्धाय महते स्वेच्छया देहि कन्यकाम् ॥ पूतोसि भारते वर्षे सप्तभिः
पितृभिः सह ॥ ४५ ॥ यौतकं देहि सर्वस्वं यशसे महते भुवि ॥ अन्यथा रणमध्ये च त्वां हनिष्यति माधवः ॥ ४६ ॥ सुदर्शनेन चक्रेण को
वा त्वां रक्षितुं क्षमः ॥ कोटरीवचनं श्रुत्वा चुकोप दैत्यपुंगवः ॥ ४७ ॥ प्रययौ रथमारुह्य यत्र पौत्रो हरेर्मुने ॥ स्कंदः सेनापतिर्भू
त्वा प्रययौ शंकराज्ञया ॥ ४८ ॥ बाणः स्वस्त्ययनं चक्रे गणेशश्च शिवः स्वयम् ॥ बाणं शुभाशिषं चक्रे पार्वती कोटरी तथा ॥ ४९ ॥
अष्टौ च भैरवाश्चैव रुद्राश्चैकादशैव ते ॥ सर्वे युद्धाय हंतारो बभूवुः शस्त्रपाणयः ॥ ५० ॥ एतस्मिन्नंतरे दूतोप्यनिरुद्धमुवाच ह ॥
पार्वत्या प्रेरितश्चैव बाणपत्न्या च सत्वरम् ॥ ५१ ॥ ॥ दूत उवाच ॥ ॥ अनिरुद्धोत्तिष्ठ भद्रं पार्वतीवचनं शृणु ॥ भव सन्नाहि
को वत्स कुरु युद्धं बहिर्भव ॥ ५२ ॥ भीतोषा रुदती त्रस्ता सस्मार पार्वतीं सतीम् ॥ रक्षरक्ष महामाये मत्प्राणेश्वरमीप्सितम् ॥ ५३ ॥

अभयेप्यभयं देहि संग्रामे घोरदारुणे ॥ त्वमेव जगतां माता स्नेहस्ते सर्वतः समः ॥ ५४ ॥ तथानिरुद्धः सन्नाही शस्त्रपाणिर्बभूव ह ॥ उषादत्तं रथं प्राप्य चकारारोहणं मुदा ॥ ५५ ॥ बहिःसंभूय शिबिराद्ददर्श बाणमीश्वरः ॥ सान्नाहिकं शस्त्रपाणिं रक्तास्यलोचनं परम् ॥ ५६ ॥ दृष्ट्वानिरुद्धं बाणश्च तमुवाच रुषान्वितः ॥ घोरसंग्राममध्ये च विषोक्तिं प्रज्वलन्निव ॥ ५७ ॥ ॥ बाण उवाच ॥ ॥ अये वीर महादुष्ट नीतिशास्त्रविवर्जित ॥ चंद्रवंशकुलांगार पुण्यक्षेत्रेऽयशस्कर ॥ ५८ ॥ पिता ते शंबरं हत्वा जग्राह तस्य कामिनीम् ॥ ततो जातो भवानेव निरोधं स्वकुलक्षमम् ॥ ५९ ॥ पितामहो वासुदेवो मथुरायां च क्षत्रियः ॥ गोकुले वैश्यपुत्रश्च नाम्ना च नंदनंदनः ॥ ६० ॥ वृंदावने च गोपस्य नंदस्य पशुरक्षकः ॥ साक्षाज्जारश्च गोपीनां दुष्टः परमलंपटः ॥ ६१ ॥ जघान पूतनां सद्यो नारीघाती ह्यधार्मिकः ॥ आगत्य मथुरां कुब्जां जघान मैथुनेन च ॥ ६२ ॥ दुर्बलं नरकं हत्वा स्त्रीसमूहं मनोहरम् ॥ जग्राह योनिलुब्धश्च स्वपुत्रमतिनि ःरः ॥ ६३ ॥ भीष्मकं मानवं जित्वा तत्पुत्रं चापि दुर्बलम् ॥ जग्राह कन्यकां तस्य देवयोग्यां च रुक्मिणीम् ॥ ६४ ॥ सत्राजितः सूर्यभृत्यो देवात्प्राप्य मणीश्वरम् ॥ घातयित्वा ह्युपायेन जग्राह मणिकन्यकाम् ॥ ६५ ॥ कुरुपांडवयुद्धं च कारयित्वा च दारुणम् ॥ युधिष्ठिरस्य यज्ञे च शिशुपालं जघान सः ॥ ६६ ॥ दंतवक्रं च शाल्वं च जरासंधं च दारुणः ॥ संजहार भुवो भूपसंमूहमतिदारुणम् ॥ ६७ ॥ उपायान्नरकं हत्वा सर्वस्वं तज्जहार सः ॥ दुर्बलो राजभीतश्च समुद्रं शरणं गतः ॥ ६८ ॥ जित्वा च भ्रातरं शक्रं भार्याया वचनेन च ॥ जग्राह पारिजातं च पुष्पं च स्वर्गदुर्लभम् ॥ ६९ ॥ कंसं निहत्याधर्मिष्ठो भ्रातरं मातुरेव च ॥ जग्राह तस्य सर्वस्वं परं किं कथयामि ते ॥ ७० ॥ जित्वा च भल्लुक युद्ध जग्राह तस्य कन्यकाम् ॥ तत्पितुर्भगिनी कुंती चतुर्णां कामिनी भुवि ॥ ७१ ॥ द्रौपदी भ्रातृपत्नी च पंचानां कामिनी तथा ॥ गोष्ठीनो योनिलुब्धश्च शश्वत्परमलंपटः ॥ ७२ ॥ तज्ज्येष्ठो बलदेवश्च शश्वत्पिबति वारुणीम् ॥ यमुनां भ्रातृपत्नीं च करोत्याह्वानमीप्सितम् ॥ ७३ ॥ जहार भगिनीं तस्य कौंतेयः शक्रनंदनः ॥ सुभद्रां मातुलसुतां सन्निबोध कुलक्रमम् ॥ ७४ ॥ बाणस्य वचनं श्रुत्वा चुकोप कामनंदनः ॥ उवाच परमार्थं च

योग्यं प्रत्युत्तरं मुने ॥ ७५ ॥ ॥ अनिरुद्ध उवाच ॥ ॥ पिता मे कामदेवश्च ब्रह्मपुत्रः पुरा शुचिः ॥ यस्यास्त्रेण वशीभूतं त्रैलोक्यं सततं शृणु ॥ ७६ ॥ शिवकोपानलेनैव भस्मीभूतः स्वकर्मतः ॥ कृष्णस्य पुत्रोप्यधुना सर्वेषां परमात्मनः ॥ ७७ ॥ पतिव्रता रतिर्माता पतिशोकेन सांप्रतम् ॥ शंबरस्य गृहे तस्थौ हृता तेन बलेन च ॥ ७८ ॥ छायां मायावतीं दत्त्वा मायया शयनेन च ॥ रतिं स्वधर्मं संरक्ष्य धर्मसाक्षी च तद्गृहे ॥ ७९ ॥ निहत्य शंबरं शत्रुं गृहीत्वा स्वप्रियां सतीम् ॥ आजगाम द्वारकां च चंद्रसूर्यौ च साक्षिणौ ॥ ८० ॥ पितामहं वासुदेवं त्वं किं जानासि मूढवत् ॥ यं च संतो न जानंति वेदाश्चत्वार एव च ॥ ८१ ॥ वासुः सर्वनिवासस्य विश्वानि यस्य लोमसु ॥ तस्य देवः परं ब्रह्म वासुदेव इति स्मृतः ॥ ८२ ॥ शंकरं पृच्छ साक्षाच्च यस्य भृत्योऽधुना भवान् ॥ कृष्णभृत्यस्य च बलेः पुत्रोसि किंकरात्मजः ॥ ८३ ॥ गोकुले वैश्यपुत्रत्वं ब्रूहि त्वं ज्ञानदुर्बल ॥ भोजनं वेदविहितं शश्वत्क्षत्रियवैश्ययोः ॥ ८४ ॥ द्रोणः प्रजापतिः श्रेष्ठो धरा तस्य प्रिया सती ॥ पुत्रं च तपसा लेभे परमात्मानमीश्वरम् ॥ ८५ ॥ द्रोणो नंदो वैश्यराजो यशोदा सा धरा सती ॥ वृषभानसुता राधा सुदाम्नः शापकारणात् ॥ ८६ ॥ त्रिंशत्कोटिं च गोपीनां गृहीत्वा भर्तुराज्ञया ॥ पुण्यं च भारतं क्षेत्रं गोलोकादाजगाम सा ॥ ८७ ॥ ताभिः सार्धं स रेमे च स्वपत्नीभिर्मुदान्वितः ॥ पाणिं जग्राह राधायाः स्वयं ब्रह्मा पुरोहितः ॥ ८८ ॥ गोपकोटिश्च गोलोकादाजगाम मुदान्विता ॥ तेजसा हरितुल्यास्ते पार्षदप्रवरा हरेः ॥ ॥ ८९ ॥ गोरक्षणं हरेरेव गोपवेषस्य चात्मनः ॥ गोपानां शिशुरक्षार्थं मायेशस्यापि मायया ॥ ९० ॥ पूतना बलिकन्या च भगिनी च तवासुर ॥ दृष्ट्वा च वामनं विंध्या चकार पुत्रमानसम् ॥ ९१ ॥ एवं भूतो यदि मम पुत्रो भवति सांप्रतम् ॥ स्तनं ददामि तनयं कृत्वा वक्षसि सुंदरम् ॥ ९२ ॥ तस्याः पूर्णं मानसं च चकार भगवान्प्रभुः ॥ स्तनं दत्त्वा च गोलोकं ययौ सा रत्नयानतः ॥ ९३ ॥ कुब्जा सा भगिनी पूर्वं रावणस्य दुरात्मनः ॥ श्रीरामं चकमे कामान्नाम्ना शूर्पणखा सती ॥ ९४ ॥ नासां चिच्छेद तस्याश्च लक्ष्मणो धार्मिकेश्वरः ॥ तपसा च वरं लेभे ब्रह्मणः प्रियमीश्वरम् ॥ ९५ ॥ तेन पुण्येन तं लब्ध्वा गोलोकं सा

जगाम ह ॥ गोपी बभूव गोलोके कृष्णस्यालिंगनेन च ॥ ९६ ॥ नरको हरिवध्यश्च स्वपूर्वप्राक्तनेन च ॥ पाणिं जग्राह
कन्यानां साक्षिणौ शशिभास्करौ ॥ ९७ ॥ भीष्मकन्या महालक्ष्मीः श्रीकृष्णस्य प्रिया सती ॥ वैकुंठादागता साध्वी ब्रह्मणो
नुमतेन च ॥ ९८ ॥ सत्राजितस्य कन्या सा सत्यभामा वसुन्धरा ॥ ददौ कृष्णाय राजा स तं मणिं यौतुकेन च ॥ ९९ ॥
भुवो भारावतरणहेतुना गमनं हरेः ॥ संजहार भुवो भारं कुरुपांडवयुद्धतः ॥ १०० ॥ शिशुपालो दंतवक्रो जयो विजय एव
च ॥ द्वारिणो द्वारषट्के च वैकुंठे श्रीहरेरपि ॥ १ ॥ कुमारशापात्पतितौ प्राप्य जन्मत्रयं ध्रुवम् ॥ हिरण्यकशिपुश्चैव तवैव पूर्व
पूरुषः ॥ २ ॥ तस्य भ्राता हिरण्याक्षस्तेनैव वरुणो जितः ॥ हरिर्नृसिंहरूपेण तं जघानावलीलया ॥ ३ ॥ सूकरेण हतोन्यश्च
पूर्वजन्मकथां शृणु ॥ द्वितीये जन्मनि पुरा रावणः कुंभकर्णकः ॥ ४ ॥ श्रीरामेण हतौ तौ द्वौ शेषजन्म कलौ तयोः ॥ श्रीकृष्णे
न हतौ तौ द्वौ धर्मपुत्रावुभौ तथा ॥ ५ ॥ जरासंधश्च शाल्वश्च दुरात्मा कंस एव च ॥ प्राक्तनात्तस्य वध्यास्ते भुवो भारजिहीर्षया
॥ ६ ॥ मांधातुः सुतमध्ये च यवनश्चापि प्राक्तनात् ॥ लक्ष्मीश्वरस्य कृष्णस्य धनेन किं प्रयोजनम् ॥ ७ ॥ प्रतिज्ञया च सत्यायाः
पुण्यकव्रतकारणात् ॥ पारिजातं समानीय चकार स्वात्मनो व्रतम् ॥ ८ ॥ स्वयं जांबवती देवी दुर्गांशा भल्लुकात्मजा ॥ पाणिं ज
ग्राह तस्याश्च तपसा भारते हरिः ॥ ९ ॥ कुंत्याश्च क्षेत्रजाः पुत्राः केवलं भर्तुराज्ञया ॥ कलौ निषिद्धं त्रियुगे प्रसिद्धं पलपैतृकम्
॥ ११० ॥ युधिष्ठिरो धर्मपुत्रो भीष्मश्च पवनात्मजः ॥ महेंद्रपुत्रो धर्मिष्ठः फाल्गुनो विजयी भुवि ॥ ११ ॥ यस्मै पाशुपतं शंभुः प्र
ददौ च स्वयं पुरा ॥ अश्वमेधं गवालंभं संन्यासं पलपैतृकम् ॥ १२ ॥ देवरेण सुतोत्पत्तिं कलौ पंच विवर्जयेत् ॥ द्रौपद्याः पंच भ
र्तारः शांकरेण वरेण च ॥ १३ ॥ बलदेवः पुष्पमधु पूतं पिबति नित्यशः ॥ चकार यमुनास्नानं स्नानार्थं धार्मिकः शुचिः ॥१४॥
सुभद्रां च ददौ कृष्णः फाल्गुनाय महात्मने ॥ कन्यकां मातुलानां च दाक्षिणात्यः परिग्रहः ॥ १५ ॥ देशेष्वन्येषु दोषोयमित्याद क
मलोद्भवः ॥ ११६ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्द्धे नारायणनारदसंवादे बाणानिरुद्धसंवादे पं

पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ बाण उवाच ॥ ॥ अनिरुद्ध बुधोसि त्वं त्वयोक्तं सत्यमेव च ॥ शंभुना चैवमुक्तं च
सर्वं बुद्धं स्वचेतसा ॥ १ ॥ त्वयोक्तं शंकरवरात्पंचानां स्वामिनां प्रिया ॥ द्रौपदी च महाभागा तन्मे व्याख्यातुमर्हसि ॥ २ ॥ शंबरे
ण हृता पूर्वं तव माता कथं रतिः ॥ देवैरपि कथं दत्ता देवास्तेन जिता कथम् ॥ ३ ॥ ॥ अनिरुद्ध उवाच ॥ ॥ एकदा रघुनाथ
श्च सीतया लक्ष्मणेन च ॥ स्नातः सरसि तत्रस्थो रम्ये पंचवटीतटे ॥ ४ ॥ उवास सीता हेमंते जलं सुस्वादु निर्मलम् ॥ तथान्नं व्यं
जनं रम्यं सर्वं वस्तु सुशीतलम् ॥ ५ ॥ फलावचयनं चक्रे सीतायै प्रददौ मुदा ॥ ततो ददौ लक्ष्मणाय पश्चाद्भुंक्ते स्वयं प्रभुः ॥ ६ ॥
लक्ष्मणस्तद्गृहीत्वा च नैव भुंक्ते फलं जलम् ॥ मेघनादवधार्थं च सीतोद्धारणकारणात् ॥७॥ निद्रां न याति नो भुंक्ते वर्षाणां च च
तुर्दश ॥ य एवं पुरुषो योगी तद्वध्यो रावणात्मजः ॥ ८ ॥ एतस्मिन्नंतरे रामं द्रष्टुं कमललोचनम् ॥ वह्निस्तत्र समायातो द्विजरू
पी कृपानिधिः ॥ भविष्यत्कथयामास श्रुतिकौटपरं वचः ॥ ९ ॥ ॥ वह्निरुवाच ॥ ॥ शृणु राम महाभाग सीतासंगोपनं कु
रु ॥ १० ॥ सप्ताहाभ्यंतरे चैव रावणो दुष्टराक्षसः ॥ दुर्निवार्यः प्राक्तनेन जानकीं च हरिष्यति ॥ ११ ॥ विधात्रा लिखितं कर्म
प्राक्तनं केन वार्यते ॥ देवैश्चतुर्भिः कथितं न च दैवात्परं वरम् ॥ १२ ॥ ॥ श्रीराम उवाच ॥ ॥ सीतां गृहीत्वा त्वं गच्छ छाया
त्रैव तु तिष्ठतु ॥ कलत्रवर्जनं कर्म सर्वेषां च जुगुप्सितम् ॥ १३ ॥ सीतां गृहीत्वा प्रययौ रुदंतीं च हुताशनः ॥ सीतया सदृशी
छायां या तस्थौ रामसन्निधौ ॥ १४ ॥ सा च च्छाया हृता पूर्वं रावणेनावलीलया ॥ समुद्धार तां रामो निहत्य तं सबांधवम्
॥ १५ ॥ वह्नौ परीक्षाकाले च छाया वह्नौ विवेश या ॥ अग्निश्छायां च संरक्ष्य ददौ रामाय जानकीम् ॥ १६ ॥ रामस्तां च गृहीत्वा
च प्रययौ स्वाश्रमं मुदा ॥ छाया तस्थौ वह्निपार्श्वे हृदयेन विदूयता ॥ १७ ॥ सा च छाया तपश्चक्रे नारायणसरोवरे ॥ तपश्चकार
दिव्यं च शतवर्षं च शूलिनः ॥ १८ ॥ वरं वृणुष्व भद्रे त्वमुवाच शंकरश्च ताम् ॥ उवाच सा शिवं व्यग्रा भर्तुर्दुःखेन दुःखिता
॥ १९ ॥ पतिं देहि पंचधा सा वरं चक्रे त्रिलोचनम् ॥ सर्वसंपत्प्रदस्तुष्टस्तस्यै शर्वो वरं ददौ ॥ २० ॥ ॥ श्रीमहादेव उवाच ॥ ॥

साध्वि त्वं पंचधा ब्रूहि पतिं देहीति व्याकुला ॥ पंचेंद्राश्च हरेरंशा भविष्यंति प्रियास्तव ॥ २१ ॥ ते च सर्वे च पंचेंद्राश्चाधुना पंच पांडवाः ॥ सा च छाया द्रौपदी च यज्ञकुंडसमुद्भवा ॥ २२ ॥ कृते युगे वेदवती त्रेतायां जनकात्मजा ॥ द्वापरे द्रौपदी छाया तेन कृष्णा त्रिहायणी ॥ २३ ॥ वैष्णवी कृष्णभक्ता च तेन कृष्णा प्रकीर्तिता ॥ स्वर्गलक्ष्मीर्महेंद्राणां सा च पश्चाद्भविष्यंति ॥ २४ ॥ राजा ददौ फाल्गुनाय कन्यायाश्च स्वयं वरे ॥ पप्रच्छ मातरं वीरो वस्तु प्राप्तं मयाधुना ॥ २५ ॥ तमुवाच स्वयं माता गृहाण भ्रातृभिः सह ॥ शंभोर्वरेण पूर्वं च परत्र मातुराज्ञया ॥ २६ ॥ द्रौपद्याः स्वामिनस्तेन हेतुना पंच पांडवाः ॥ चतुर्दशानामिंद्राणां पंचेंद्राः पंच पांडवाः ॥ २७ ॥ शंकरेणाभिसंशप्ता सा मात्रा भर्त्सितेन च ॥ भर्ता ते भस्मसाद्भूतो हरकोपानलेन च ॥ २८ ॥ हरेति त्वं मया शप्ता दैत्यग्रस्ता भवाधुना ॥ विजित्य देवान्सेंद्रांश्च शंबरस्त्वां हरिष्यति ॥ २९ ॥ पुनरुक्तं वरं प्रादात्सतीत्वं तेन यास्यति ॥ छायां दत्वा तिष्ठ गेहे यावज्जीवति ते पतिः ॥ ३० ॥ इति ते कथितं सर्वमितिहासं पुरातनम् ॥ देवानां गुप्तचरितं शृणु दैत्येंद्र सांप्रतम् ॥३१॥ एतस्मिन्नंतरे तत्र सुभद्रश्च महाबलः ॥ कुभांडभ्राता बलवान्बाणसेनापतीश्वरः ॥ ३२ ॥ निर्भर्त्स्य बाणं समरे शस्त्रपाणिर्महारथः ॥ श्रीकृष्णपौत्रं शूलं च चिक्षेप प्रलयाग्निवत् ॥ ३३ ॥ अर्धचंद्रेण तच्छूलं चिच्छेद कामपुत्रकः ॥ शक्तिं चिक्षेप भद्रश्च शतसूर्यसमप्रभाम् ॥ ३४ ॥ वैष्णवास्त्रेण चिच्छेद तां शक्तिं कामपुत्रकः ॥ नारायणास्त्रं चिक्षेप सुभद्रो रणमूर्धनि ॥ ३५ ॥ प्रणम्य शेते निर्भीतो मदनस्य सुतो बली ॥ ऊर्ध्वमस्त्रं च बभ्राम शतसूर्यसमप्रभम् ॥ ३६ ॥ प्रलीनमस्त्रमाकाशे विश्वसंहारकारणम् ॥ अस्त्रे गते सोनिरुद्धो गृहीत्वा च महानसिम् ॥ ३७ ॥ प्रबभंज भद्ररथं जघानाश्वांश्च सारथिम् ॥ जघान तं सुभद्रं च लीलया रणमूर्धनि ॥ ३८ ॥ हते सुभद्रे बाणश्च महाबलपराक्रमः ॥ बाणानां शतकं चापि चिक्षेप रणमूर्धनि ॥ ॥ ३९ ॥ कामात्मजोग्निबाणेन बाणौघं प्रददाह सः ॥ बाणश्चिक्षेप ब्रह्मास्त्रं सृष्टिसंहारकारणम् ॥ ४० ॥ दृष्ट्वा कामात्मजः शीघ्रं सबीजं मंत्रपूर्वकम् ॥ ब्रह्मास्त्रेणैव सहसा संजहारावलीलया ॥ ४१ ॥ बाणः पाशुपतं क्षेप्तुं समारेभे च कोपतः ॥ निषिद्धश्च गणेशेन

स्कंदेन शंभुना तथा ॥ ४२ ॥ तद्दृष्ट्वा सोनिरुद्धस्तं धनुर्बाणौघसंयुतम् ॥ मुमोच जृंभणं युद्धे शीघ्रं तं च महारथम् ॥ ४३ ॥ जडो
बभूव बाणश्च निश्चेष्टो रणमूर्धनि ॥ पुनश्चिक्षेप निद्रास्त्रं निद्रितं तं चकार सः ॥ ४४ ॥ बाणं तं निद्रितं दृष्ट्वा गृहीत्वा खड्गमुत्तमम् ॥
बाणं हंतुं समुद्यतं वारयामास कार्तिकः ॥ ४५ ॥ स्कंदश्च शतबाणैश्च वारयामास लीलया ॥ अनिरुद्धं महाभागं बलवंतं धनुर्धरम् ॥
॥ ४६ ॥ अनिरुद्धश्च सहसा तया शक्त्या दुरत्यया ॥ बभंज कार्तिकरथं रत्नेंद्रसारनिर्मितम् ॥ ४७ ॥ गदया कार्तिकः क्रुद्धोऽप्यनि
रुद्धरथं मुदा ॥ बभंज लीलया तत्र क्षणेन रणमूर्धनि ॥ ४८ ॥ अनिरुद्धोऽर्धचंद्रेण क्षुरधारेण लीलया ॥ चिच्छेद कार्तिकधनुर्भल्लास्त्रे
ण नियोजितम् ॥ ४९ ॥ जघान कार्तिकस्तं च गदया च दुरंतया ॥ गदां जग्राह तद्धस्ताज्जवेन मदनात्मजः ॥ ५० ॥ शूलं गृहीत्वा
स्कंदं च तमेव हंतुमुद्यतम् ॥ अनिरुद्धश्च कोपेन प्रेरयामास दूरतः ॥ ५१ ॥ कार्तिकः पुनरागत्य गृहीत्वा कामपुत्रकम् ॥ गृहीत्वा
च करेणैव पातयामास भूतले ॥ ५२ ॥ अनिरुद्धो गृहीत्वाऽसिं समुत्तस्थौ महाबलः ॥ तयोर्विरोधं दूरं च प्रचकार गणेश्वरः ॥ ५३ ॥
कार्तिकः प्रययौ गेहमुषागेहं स्मरात्मजः ॥ सर्वं निवेदितुं शंभुं प्रययौ स गणेश्वरः ॥ ५४ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्ण
जन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे बाणयुद्धे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ श्रीनारायण उवाच ॥ ॥ गणे
शस्तु शिवस्थानं गत्वा नत्वा महेश्वरम् ॥ सर्वं विज्ञापयामास क्रमेण च पृथक्पृथक् ॥ १ ॥ बाणानिरुद्धयोर्युद्धं सुभद्रनिधनं तथा ॥
स्कंदानिरुद्धयोर्युद्धमनिरुद्धस्य विक्रमम् ॥ २ ॥ गणेशवचनं श्रुत्वा प्रहस्य भगवान्भवः ॥ उवाच श्लक्ष्णया वाचा सुयुतं वेदसंमतम् ॥
॥ ३ ॥ ॥ श्रीमहादेव उवाच ॥ ॥ गणेश्वर महाभाग श्रूयतां वचनं मम ॥ हितं तथ्यं नीतिसारं परिणामसुखावहम् ॥ ४ ॥
असंख्यविश्वसंघं च सर्व कृष्णात्मजं सुतम् ॥ कृष्णं जानीहि यत्कार्यं कारणानां च कारणम् ॥ ५ ॥ ब्रह्मादितृणपर्यंतं जगत्सर्वं
गणेश्वर ॥ निबोध सत्यं कृष्णं च भगवंतं सनातनम् ॥ ६ ॥ गोलोके द्विभुजं शांतं राधाकांतं मनोहरम् ॥ शिशुरूपं गोपवेषं परि
पूर्णतमं प्रभुम् ॥ ७ ॥ गोपीभिर्गोपनिकरैः सहितं कामधेनुभिः ॥ पुण्ये वृन्दावने रम्ये सुंदरे रासमंडले ॥ ८ ॥ चरंतं मुरलीहस्तं ब्रह्मे

शशेषवंदितम् ॥ शतशृंगे च शैलेशे वटमूले निराकुले ॥ ९ ॥ गोष्ठे भांडीरनिकटे निर्मले विरजातटे ॥ नवीननीरदश्यामं शोभितं पीतवाससा ॥ १० ॥ यथा नवं घनौघं च सौदामिन्या विराजितम् ॥ आविर्भावश्च तेषां वै गोलोके रासमंडले ॥ ११ ॥ तावंतो गोकुले रम्ये पुण्ये वृंदावने वने ॥ सर्वे चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ॥ १२ ॥ परिपूर्णतमः कामो ब्रह्मशापात्स्वविस्मृतः॥ तस्य पुत्रोऽनिरुद्धश्च महाबलपराक्रमः ॥ १३ ॥ मया प्रस्थापितः स्कंदो महायुद्धे सुदारुणे ॥ मृतो बाणश्च संग्रामे तेन स्कंदेन रक्षितः ॥ १४ ॥ स्कंदानिरुद्धयोर्युद्धे समत्वं तु गणेश्वर ॥ अष्टौ च भैरवाः सर्वे रुद्राश्चैकादशैव ते ॥ १५ ॥ अष्टौ च वसवश्चैते देवाः शक्रादयस्तथा ॥ तथैव द्वादशादित्याः सर्वे दैत्येश्वरास्तथा ॥ १६ ॥ देवानामग्रणीः स्कंदो बाणश्च सगणस्तथा ॥ सर्वे ते चानिरुद्धं च संग्रामे जेतुमक्षमाः ॥ १७ ॥ अनिरुद्धः स्वयं ब्रह्मा प्रद्युम्नः काम एव च ॥ बलदेवः स्वयं शेषः कृष्णश्च प्रकृतेः परः ॥ १८ ॥ एतत्ते कथितं सर्वं बाणं रक्ष गणेश्वर ॥ भवाञ्शुभस्वरूपश्च विघ्नखंडनकारकः ॥ १९ ॥ आरादायास्यति हरिर्गृहीत्वा च सुदर्शनम् ॥ अव्यर्थमस्त्रप्रवरं सूर्यकोटिसमप्रभम् ॥ २० ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे बाणयुद्धे शिवलंबोदरसंवादे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ नारायण उवाच ॥ ॥ गणेशं बोधयित्वा तु शंभुरभ्यंतरं ययौ ॥ तत्र सिंहासने रम्ये दुर्गा दुर्गतिनाशिनी ॥ १ ॥ भैरवी भद्रकाली च उग्रचंडा च कोटरी ॥ ताः समुत्थाय सहसा प्रणेमुर्जगदीश्वरम् ॥ २ ॥ तत्राययौ गणेशश्च कार्तिकेयश्च वीर्यवान् ॥ बाणश्च वीरभद्रश्च स्वयं नंदी सुनंदकः ॥ ३ ॥ महाकालो महामंत्री यथाष्टौ भैरवास्तथा ॥ सिद्धेंद्राश्चापि योगींद्रा रुद्राश्चैकादशैव ते ॥ ४ ॥ एतस्मिन्नंतरे तत्र मणिभद्रः समाययौ ॥ सिंहद्वारे स्वयं द्वारी तमीश्वरमुवाच सः ॥ ५ ॥ ॥ मणिभद्र उवाच ॥ ॥ असंख्यानि च सैन्यानि यादवानां महेश्वर ॥ बलदेवश्च प्रद्युम्नः सांबश्च सात्यकिस्तथा ॥ ६ ॥ राजा महोग्रसेनश्च भीमश्च स्वयमर्जुनः ॥ अक्रूरश्चोद्धवश्चैव जयंतः शक्रनंदनः ॥ ७ ॥ रत्नेंद्रसारनिर्माणरथेंद्रे सुमनोहरे ॥ विधेर्विधाता भगवाञ्श्रीकृष्णः परमेश्वरः ॥ ८ ॥ सप्तभिः पार्षदैर्गोपैः सेवितः श्वेत

चामरैः ॥ कंदर्पकोटिलीलाभो वनमालाविभूषितः ॥ ९ ॥ दधार चक्रमतुलं कोटिसूर्यसमप्रभम् ॥ गदां कौमोदकीं शूलमन्यर्थं
सन्निधाय च ॥ १० ॥ रथमध्ये महाशंखं विश्वसंहारकारणम् ॥ महारथानां लक्षैश्च रथानां च त्रिकोटिभिः ॥ ११ ॥ त्रिकोटिभिर्गजें
द्राणां मल्लानां च त्रिकोटिभिः ॥ शतकोटिभिरश्वानां चर्मिणां तच्चतुर्गुणैः ॥ १२ ॥ खड्गिनां तत्सप्तगुणैर्द्विगुणैस्तद्धनुष्मताम् ॥
एभिः सार्धं च त्वरितमाययौ शोणितं पुरम् ॥ १३ ॥ परितो वेष्टयामास लंकां दाशरथिर्यथा ॥ सहस्रतालमानां च ज्वलदग्नि
शिखोज्ज्वलाम् ॥ १४ ॥ ऊर्ध्वे च परिखायुक्तां दुर्लंघ्यामसुरैः सुरैः ॥ स्वर्गगंगांबुराशीनां समूहैर्वृष्टिभिस्तथा ॥ १५ ॥ पक्षींद्रो गरुडः
साक्षान्निर्वाणं च चकार सः ॥ मणींद्रसारनिर्माणं प्राकाराञ्चलिहं पुरम् ॥ १६ ॥ बभंज लक्षं मल्लानां बलदेवश्च लांगलैः ॥ उद्या
नानां त्रिलक्षं च प्राकारोत्पाटनं प्रभोः ॥ १७ ॥ प्रविवेश महाद्वारं द्वारपालान्निहत्य च ॥ एवं श्रुत्वा महादेवश्चोवाच सुरसंसदि ॥
॥ १८ ॥ पार्वतीं भद्रकालीं च स्कंदं गणपतिं तथा ॥ अष्टौ च भैरवांश्चैव रुद्रांश्च वीरभद्रकम् ॥ महाकालं नंदिनं च सर्वान्सेनाप
तीन्नव ॥ १९ ॥ ॥ श्रीमहादेव उवाच ॥ ॥ गोलोकनाथो भगवांश्चक्रपाणिः समागतः ॥ २० ॥ विश्वौघं भंक्तुमीशो यः क्षणेन
नगरं च किम् ॥ सर्वोपायैश्च सर्वे ते बाणं रक्षंतु यत्नतः ॥ २१ ॥ बाणो गच्छतु संग्रामं स्मृत्वा लंबोदरं परम् ॥ बाणस्य दक्षिणे
स्कंदः पुरतश्च गणेश्वरः ॥ २२ ॥ वामे च भैरवा रुद्राः स्वयं नंदी महारथः ॥ महाकालो वीरभद्रो ये चान्ये सैनिकास्तथा ॥ २३ ॥
ऊर्ध्वे दुर्गा भद्रकाली ह्युग्रचंडा च कोटरी ॥ बाणं रक्ष महाभागे दुर्गे दुर्गतिनाशिनि ॥ २४ ॥ कृष्णस्य भवती शक्तिस्तेन नारायणी
स्मृता ॥ विष्णुमाये जगन्मातः सर्वमंगलमंगले ॥ २५ ॥ अभ्यर्थाच्चक्रसाराच्च रक्ष बाणं सुदर्शनात् ॥ बाणः प्रियो मे सर्वेभ्यो
गणेशात्कार्तिकादपि ॥ २६ ॥ बाणमूर्ध्नि करं धेहि पादाब्जरजसा सह ॥ शिवस्य वचनं श्रुत्वा दुर्गा दुर्गतिनाशिनी ॥ प्रहस्योवाच
मधुरं याथार्थ्यं समयोचितम् ॥ २७ ॥ ॥ पार्वत्युवाच ॥ ॥ मणिरत्नादिकं यद्यन्मुक्तामाणिक्यहीरकम् ॥ २८ ॥ सर्वस्वं
कन्यकामूषां रत्नभूषणभूषिताम् ॥ रत्नभूषणभूषाढ्यमनिरुद्धं परं वरम् ॥ २९ ॥ पुरस्कृत्य देहि बाण कृष्णाय परमात्मने ॥ राज्यं

कुरुष्व निर्विघ्नं किं युद्धमात्मना सह ॥३०॥ यस्मिन्गते गताः प्राणाः स जीवश्चेन्द्रियैः सह ॥ शक्तिश्चाहं मनो ब्रह्मा स्वयं ज्ञानात्मकं
शिवः ॥ ३१ ॥ सद्यः पतति देहश्च शिवं त्यक्त्वा शिवो भवेत् ॥ को वा तिष्ठति संग्रामे चक्रस्य तेजसा शिव ॥ ३२ ॥ नात्माका
शो बाणयुद्धे युद्धं किं स्वात्मना सह ॥ परमात्मा च सर्वेषां भक्तानुग्रहविग्रहः ॥ ३३ ॥ नित्यः सत्यो हि कृष्णश्च परिपूर्णतमः प्रभुः॥
गणेशः कार्तिकेयश्च भवानपि तयोः परः ॥ ३४॥ किंकरेषु प्रियो बाणो न हि कृष्णात्परः प्रियः ॥ वैकुंठेहं महालक्ष्मीर्गोलोके
राधिका स्वयम् ॥ ३५ ॥ शिवाहं शिवलोकेपि ब्रह्मलोके सरस्वती ॥ अहं निहत्य दैत्यांश्च दक्षकन्या सती पुरा ॥ ३६ ॥ त्वन्नि
न्दया त्यक्तदेहा सा चाहं शैलकन्यका ॥ रक्तबीजस्य युद्धे च काली च मूर्तिभेदतः ॥ ३७ ॥ सावित्री वेदमाताहं सीता जनक
कन्यका ॥ रुक्मिणी द्वारवत्यां च भारते भीष्मकन्यका ॥ ३८ ॥ सुदाम्नः शापतो देवाद्वृषभानुसुताऽधुना ॥ धर्मपत्नी च कृष्णस्य
पुण्ये वृंदावने वने ॥ ३९ ॥ भगवंतं च सर्वज्ञं त्वां शिवं च सनातम् ॥ किं वाहं कथयामीति कर्तव्यं समयोचितम् ॥ ४० ॥ इति
श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे बाणयुद्धेऽष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ ॥ नारायण उवाच ॥ ॥ पार्वतीवचनं श्रुत्वा गणेशश्च शिवः स्वयम् ॥ कार्तिकेयश्च काली च तां प्रशंसां चकार ह ॥ १ ॥
उवाच भगवाञ्शंभुर्जगतां मातरं पराम् ॥ ज्योतिःस्वरूपां परमां मूलप्रकृतिमीश्वरीम् ॥ २ ॥ ॥ श्रीमहादेव उवाच ॥ ॥ त्वया
यदुक्तं देवेशि सर्वं वेदोक्तमीप्सितम् ॥ अयुक्तमुपहास्यं च समरं परमात्मना ॥ ३ ॥ बाणो ददातु कन्यां तां स्वर्णभूषणभूषिताम् ॥
सामंजस्यं यशस्यं च शुभदं सर्वकर्मसु ॥ ४ ॥ न ददाति यदा बाणो हिरण्यकशिपोः प्रजा ॥ युद्धे पराङ्मुखो भीतो भगवत्य
परस्करः ॥ ५ ॥ बाणो गच्छतु सन्नाही रणशास्त्रविशारदः ॥ पश्चाच्चागमनं कुर्मो वयं सान्नाहिकाः शिवे ॥ ६ ॥ उवाच
बाणं तां दातुं स च न स्वीचकार ह ॥ दुर्गा तं बोधयामास न बुबोध च सद्वचः ॥ ७ ॥ एतस्मिन्नंतरे तां च सभामेव
मनोरमाम् ॥ आजगाम महाधर्मो बलिश्च वैष्णवाग्रणीः ॥ ८ ॥ रथं रत्नेंद्रनिर्माणं समारुह्य महाबलः ॥ प्रततैः सप्तभिर्दैत्यैः सेवितः

श्वेतचामरैः ॥ ९ ॥ दैत्येंद्राणां सप्तलक्षैरावृतः परमास्त्रवित् ॥ अवरुह्य रथात्तूर्णं गणेशं च शिवां शिवम् ॥ १० ॥ प्रणम्य का
र्तिकेयं च स उवास च संसदि ॥ उत्तस्थुराराक्तं दृष्ट्वा ते सर्वे शंकरं विना ॥ तमुवाच महादेवः संभाष्य प्रियभाषणम् ॥ ११ ॥
॥ ॥ श्रीमहादेव उवाच ॥ ॥ भगवंश्चतुरस्त्वं च प्रदाता सर्वसंपदाम् ॥ १२ ॥ अयं हि परमो लाभो वैष्णवानां समागमः ॥
तीर्थान्यपि च पूतानि वैष्णवस्पर्शमात्रतः ॥ १३ ॥ सर्वेषामाश्रमाणां च पूजितो ब्राह्मणः शुचिः ॥ ततोऽधिकः पूजितोपि ब्रा
ह्मणो यदि वैष्णवः ॥ १४ ॥ न हि पूतं च पश्यामि वैष्णवब्राह्मणात्परम् ॥ स पूतः पवनादेव स पूतश्च हुताशनात् ॥ १५ ॥ तीर्थे
भ्योपि च सर्वेभ्यो बिभेति च ततोऽसुर ॥ न हि पापानि तद्देहे वह्नौ शुष्कतृणादिवत् ॥ १६ ॥ ॥ बलिरुवाच ॥ ॥ कथं स्तौ
षि जगन्नाथ भृत्यस्तव महेश्वर ॥ प्रदत्तं परमैश्वर्यं त्वया नाथ सुदुर्लभम् ॥ १७ ॥ अधुना स्थापितो दैवात्सर्वाधः सुतलेपि च ॥ इंद्राय
दत्तमैश्वर्यं मत्तो भक्तात्सुरेश्वरं ॥ १८ ॥ त्वया वामनरूपेण सर्वरूपोसि सर्वतः ॥ बाणं बोधय भद्रं च मम प्राणात्मजं परम्
॥ १९ ॥ आत्मना सह युद्धं च देवेष्वपि विगर्हितम् ॥ इत्युक्त्वा च शिवं नत्वा शिरसा प्रणनाम तम् ॥ २० ॥ सामवेदोक्तस्तो
त्रेण तुष्टाव परमेश्वरम् ॥ पुलकांचितसर्वांगः साश्रुनेत्रोतिविह्वलः ॥ २१ ॥ ध्यायमानश्च नित्यं यो हृत्पद्मे सुमनोहरः ॥ शुक्रेण
दत्तं मंत्रं च जप्त्वा चैकादशाक्षरम् ॥ २२ ॥ ॥ बलिरुवाच ॥ ॥ अदित्याः प्रार्थनेनैव मातुर्देव्या व्रतेन च ॥ पुरा वामनरूपे
ण त्वयाहं वंचितः प्रभो ॥ २३ ॥ संपद्रूपा महालक्ष्मीर्दत्ता भक्ताय भक्तितः ॥ शक्राय मत्तो भक्ताय भ्रात्रे पुण्यवते ध्रुवम् ॥ २४ ॥
अधुना मम पुत्रोयं बाणः शंकरकिंकरः ॥ आराच्च रक्षितः सोपि तेनैव भक्तबंधुना ॥ २५ ॥ परिपुष्टश्च पार्वत्या यथा माता सुत
स्तथा ॥ गृहीतवांश्च तत्कन्यां बलेन युवतीं सतीम् ॥ २६ ॥ समुद्यतश्च तं हंतुं कार्तिकेनापि वारितः ॥ आगतोसि पुनर्हंतुं पौत्रस्य
दमने क्षमः ॥ २७ ॥ सर्वात्मनश्च सर्वत्र समभावः श्रुतौ श्रुतः ॥ करोषि जगतां नाथ कथमेवं व्यतिक्रमः ॥ २८ ॥ त्वया च निह
तो यो हि तस्य को रक्षिता भुवि ॥ सुदर्शनस्य तेजो हि सूर्यकोटिनिभं परम् ॥ २९ ॥ केषां सुराणामस्त्रेण तदेवमनिवारितम् ॥

यथा सुदर्शनं चैवमस्त्राणां प्रवरं वरम् ॥ ३० ॥ तथा भवांश्च देवानां सर्वेषामीश्वरः परः ॥ यथा भवांस्तथा कृष्णो विधाता वेधसा
मपि ॥ ३१ ॥ विष्णुः सत्त्वगुणाधारः शिवः सत्त्वाश्रयस्तथा ॥ स्वयं विधाता रजसः सृष्टिकर्ता पितामहः ॥ ३२ ॥ कलाग्निरुद्रो
भगवान्विश्वसंहारकारकः ॥ तमसश्चाश्रयः सोपि रुद्राणां प्रवरो महान् ॥ ३३ ॥ स एव शंकरांशश्चाप्यन्ये रुद्राश्च तत्कलाः ॥ भवां
श्च निर्गुणस्तेषां प्रकृतेश्च परस्तथा ॥ ३४ ॥ सर्वेषां परमात्मा वै प्राणा विष्णुस्वरूपिणः ॥ मानसं च स्वयं ब्रह्मा स्वयं ज्ञानात्मकः
शिवः ॥ ३५ ॥ प्रवरा सर्वशक्तीनां बुद्धिः प्रकृतिरीश्वरी ॥ स्वात्मनः प्रतिबिंबस्ते जीवः सर्वेषु देहिषु ॥ ३६ ॥ जीवः स्वकर्मणां
भोगी स्वयं साक्षी भवांस्तथा ॥ सर्वे यांति त्वयि गते नरदेवे यथानुगः ॥ ३७ ॥ सद्यः पतति देहश्च शवोऽस्पृश्यस्त्वया विना ॥ बुद्धाः
संतो न जानंति वंचितास्तव मायया ॥३८॥ त्वां भजंत्येव ये संतो मायामेतां तरंति ते ॥ त्रिगुणा प्रकृतिर्दुर्गा वैष्णवी च सनातनी
॥ ३९ ॥ परा नारायणीशानी तव माया दुरत्यया ॥ त्वदंशाः प्रतिविश्वेषु ब्रह्मविष्णुशिवात्मकाः ॥ ४० ॥ सर्वेषामपि विश्वेषामा
श्रयो यो महान्विराट् ॥ स शेते च जले योगाद्विश्वेशो गोकुले यथा ॥ ४१ ॥ स एव वासुर्भगवांस्तस्य देवो भवान्परः ॥ वासुदेव
इति ख्यातः पुराविद्भिः प्रकीर्तितः ॥ ४२ ॥ त्वमेव कलया सूर्यस्त्वमेव कलया शशी ॥ कलया च हुताशश्च कलया पवनः स्वयम्
॥ ४३ ॥ कलया वरुणश्चैव कुबेरश्च यमस्तथा ॥ कलया त्वं महेंद्रश्च कलया धर्म एव च ॥ ४४ ॥ त्वमेव कलया शेष ईशानो नैर्ऋ
तिस्तथा ॥ मुनयो मनवश्चैव ग्रहाश्च फलदायकाः ॥ ४५ ॥ कला कलायाश्चांशेन सर्वे जीवाश्चराचराः ॥ त्वं ब्रह्म परमं ज्योतिर्ध्यायं
ते योगिनः सदा ॥ ४६ ॥ तं त्वाद्रियंते भक्तास्ते ध्यायंते च तदंतरे ॥ नवीननीरदश्यामं पीतकौशेयवाससम् ॥ ४७ ॥ ईषद्धास्यप्र
सन्नास्यं भक्तेशं भक्तवत्सलम् ॥ चंदनोक्षितसर्वांगं द्विभुजं मुरलीधरम् ॥ ४८ ॥ मयूरपिच्छचूडं च मालतीमाल्यभूषितम् ॥ अमूल्य
रत्ननिर्माणकेयूरवलयान्वितम् ॥ ४९ ॥ मणिकुंडलयुग्मेन गंडस्थलविराजितम् ॥ रत्नसारांगुलीयं च क्वणन्मंजीररंजितम् ॥ ५० ॥ ॥२५३॥
कोटिकंदर्पलीलाभं शरत्कमललोचनम् ॥ शरत्पूर्णेंदुनिंदास्यं चंद्रकोटिसमप्रभम् ॥ ५१ ॥ वीक्षितं सस्मिताभिश्च गोपीनां कोटि

कोटिभिः ॥ वयस्यैः पार्षदैर्गोपैः सेवितं श्वेतचामरैः ॥ ५२ ॥ गोपबालकवेषं च राधावक्षःस्थलस्थितम् ॥ ध्यानासाध्यं
दुराराध्यं ब्रह्मेशशेषवंदितम् ॥ ५३ ॥ सिद्धेंद्रैश्च मुनींद्रैश्च योगींद्रैः प्रणतं स्तुतम् ॥ वेदानिर्वचनीयं च परं स्वेच्छामयं विभुम् ॥५४॥
स्थूलस्थूलतमं रूपं सूक्ष्मात्सूक्ष्मतरं परम् ॥ सत्यं नित्यं प्रशस्तं च प्रकृतेः परमीश्वरम् ॥ ५५ ॥ निर्लिप्तं च निरीहं च भग
वंतं सनातम् ॥ एवं ध्यात्वा च ते पूताः स्निग्धदूर्वाक्षता जलम् ॥५६॥ पद्मापद्मार्चिते पादपद्मे च दातुमुत्सुकाः ॥ वेदाः स्तोतुमशक्ता
स्त्वामशक्ता सा सरस्वती ॥ ५७ ॥ शेषः स्तोतुमशक्तश्च स्वयंभूः शंभुरीश्वरम् ॥ गणेशश्च दिनेशश्च महेंद्रश्चंद्र एव च ॥ ५८ ॥ स्तोतुं
नालं धनेशश्च किमन्ये जडबुद्धयः ॥ गुणातीतमनीहं च किं स्तौमि निर्गुणं परम् ॥ ५९ ॥ [1]पंडितोयमसुरो न सुरः क्षंतुमर्हति ॥
बलेस्तु वचनं श्रुत्वा तमुवाच जगत्पतिः ॥ परिपूर्णतमः श्रीमान्भक्तं च भक्तवत्सलः ॥ ६० ॥ ॥ श्रीभगवानुवाच ॥ ॥ माभैर्व
त्स गृहं गच्छ सुतलं रक्षितं मया ॥ ६१ ॥ मद्वरेण प्रसादेन त्वत्पुत्रोप्यजरामरः ॥ दर्पहानिं करिष्यामि तस्य मूर्खस्य दर्पिणः ॥
॥ ६२ ॥ प्रह्लादाय वरो दत्तो भक्ताय च तपस्विने ॥ ममावध्यश्च त्वद्वंशश्चेति प्रीतेन चेतसा ॥ ६३ ॥ तव पुत्राय दास्यामि ज्ञानं
मृत्युंजयं परम् ॥ त्वया कृतमिदं स्तोत्रं सामवेदोक्तमीप्सितम् ॥ ६४ ॥ पुरा सनत्कुमाराय प्रदत्तं ब्रह्मणा तथा ॥ सिद्धाश्रमे पुण्य
तमे प्रशस्ते सूर्यपर्वणि ॥ ६५ ॥ गौतमाय प्रदत्तं च गौर्या मंदाकिनीतटे ॥ शंकरेण च शिष्याय भक्ताय च दयालुना ॥ ६६ ॥
ब्रह्मणे च मया दत्तं शिवाय विरजातटे ॥ भृगवे च पुरा दत्तं कुमारेण च धीमता ॥६७॥ त्वं च दास्यसि बाणाय बाणः स्तोष्यत्य
नेन माम् ॥ इदं स्तोत्रं महापुण्यमुपदिश्य गुरोर्मुखात् ॥ ६८ ॥ वृतस्य पूजितस्यापि वस्त्रभूषणचंदनैः ॥ सुस्नातो यः पठेन्नित्यं पूजा
काले च भक्तितः ॥ ६९ ॥ कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥ विपदां खंडनं स्तोत्रं कारणं सर्वसंपदाम् ॥ ७० ॥ वारणं
दुःखशोकानां भवाब्धिघोरतारणम् ॥ खंडनं गर्भवासानां जरामृत्युहरं परम् ॥ ७१ ॥ बंधमानां च रोगाणां खंडनं भक्तमंडनम् ॥

१ न पंडितोऽहमसुरो न सुरः क्षंतुमर्हसि—इ०पा० ।

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ ७२ ॥ व्रताव्रतेषु सर्वेषु तपस्वी च तपःसु च ॥ स सत्यं सर्वदानानां फलं च लभते ध्रुवम्
॥ ७३ ॥ लक्षधा स्तोत्रपाठेन स्तोत्रसिद्धिर्भवेन्नृणाम् ॥ सर्वसिद्धिं च लभते सिद्धस्तोत्रो भवेद्यदि ॥ ७४ ॥ इह लोके देवतुल्योप्यंते
याति हरेः पदम् ॥७५॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे बाणयुद्धे बलिकृतश्रीकृष्ण
स्तोत्रं नामैकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥ ॥ श्रीनारायण उवाच ॥ ॥ अथ कृष्णश्च भगवानुद्धवेन बलेन च ॥ दूतं
प्रस्थापयामास विधाय मंत्रिणं शुभम् ॥ १ ॥ शिवो गणपतिर्यत्र दुर्गा दुर्गतिनाशिनी ॥ कार्तिकेयो भद्रकाली चोग्रचंडा च कोटरी
॥ २ ॥ आगत्य नत्वा दूतश्च गणेशं च शिवं शिवाम् ॥ मानवांश्चापि पूज्यांश्च समुवाच यथोचितम् ॥ ३ ॥ ॥ दूत उवाच ॥ ॥
बाणमाह्वयते कृष्णः संग्रामार्थं महेश्वर ॥ किं वानिरुद्धमूषां च गृहीत्वा शरणं व्रज ॥ ४ ॥ रणे निमंत्रितो यो हि न याति भयका
तरः ॥ परत्र नरकं याति सप्तभिः पितृभिः सह ॥ ५ ॥ दूतस्य वचनं श्रुत्वा सभामध्ये यथोचितम् ॥ उवाच पार्वती देवी स्वयं शंक
रसन्निधौ ॥ ६ ॥ ॥ पार्वत्युवाच ॥ ॥ गच्छ बाण महाभाग गृहीत्वा वद कन्यकाम् ॥ सर्वस्वं यौतकं दत्त्वा श्रीकृष्णं शरणं
व्रज ॥ ७ ॥ सर्वेषामीश्वरं बीजं दातारं सर्वसंपदाम् ॥ वरं वरेण्यं शरणं कृपालुं भक्तवत्सलम् ॥ ८ ॥ पार्वतीवचनं श्रुत्वा तमूचुस्ते
सुरेश्वराः ॥ प्रशशंसुः सभामध्ये धन्यधन्येति सर्वदा ॥ ९ ॥ कोपाविष्टश्च बाणोयमुत्तस्थौ प्रहसासुरः ॥ सान्नाहिको धनुष्पाणिः
प्रणम्य शंकरं ययौ ॥ १० ॥ सर्वैर्निषिध्यमानश्च कंपितो रक्तलोचनः ॥ सान्नाहिकश्च दैत्यानां त्रिकोट्या च महाबलः ॥ ११ ॥
कुमांडः कूपकर्णश्च निकुंभः कुंभ एव च ॥ सेनापतीश्वरश्चैते ययुः सान्नाहिकास्तथा ॥ १२ ॥ उन्मत्तभैरवश्चैव संहारभैरवस्तथा ॥
असितांगो भैरवश्च रुरुभैरव एव च ॥ १३ ॥ महाभैरवसंज्ञश्च कालभैरव एव च ॥ प्रचंडभैरवश्चैव क्रोधभैरव एव च ॥ १४ ॥ प्रययुः
शक्तिभिः सार्द्धं सर्वे सान्नाहिकाश्च ते ॥ कालाग्निरुद्रो भगवान्रुद्रैः सान्नाहिको ययौ ॥ १५ ॥ उग्रचंडा प्रचंडा च चंडिका चंडि
नायिका ॥ चंडेश्वरी च चामुंडा चंडी चंडकपालिका ॥ १६ ॥ अष्टौ च नायिकाः सर्वाः प्रययुः खर्परान्विताः ॥ कोटरी रत्नया

कौमारी नारसिंही च वाराही विकटाकृतिः ॥ माहेश्वरी महामाया भैरवी भीमरूपिणी ॥ १९ ॥ अष्टौ च शक्तयः सर्वा रथस्थाः प्रययुर्मुदा ॥ रत्नेंद्रसारयानस्था प्रययौ भद्रकालिका ॥ २० ॥ रक्तवर्णा त्रिनयना जिह्वाललनभीषणा ॥ शूलशक्तिगदाहस्ता खड्ग खर्परधारिणी ॥ २१ ॥ प्रययौ शूलहस्तश्च वृषभस्थो महेश्वरः ॥ स्कंदश्च शिखियानस्थः शस्त्रपाणिर्धनुर्धरः ॥ २२ ॥ एवं च प्रययुः सर्वे गणेशं पार्वतीं विना । ॥ एभिर्युक्तं महादेवं दृष्ट्वा च भद्रकालिकाम् ॥ २३ ॥ प्रचक्रे चक्रपाणिश्च संभाषां च यथोचिताम् ॥ बाणः शंखध्वनिं कृत्वा प्रणम्य पार्वतीश्वरम् ॥ २४ ॥ धनुर्दधार सगुणं दिव्यास्त्रेण नियोजितम् ॥ बाणं समुद्यतं दृष्ट्वा सात्यकिः परवीरहा ॥ २५ ॥ निषिध्यमानस्तैः सर्वैः सन्नाही प्रययौ मुदा ॥ बाणश्चिक्षेप दिव्यास्त्रमंजनं नाम नारद ॥ २६ ॥ अव्यर्थं ग्रीष्ममध्याह्नमार्तंडाभं सुतीक्ष्णकम् ॥ दृष्ट्वास्त्रं सात्यकिः साक्षात्किंचिन्नम्रो बभूव सः ॥ ॥ २७ ॥ किं वा न दग्धः प्रययौ नभोमध्यं सुदारुणम् ॥ वह्निं चिक्षेप बाणश्च सात्यकिर्वारुणेन च ॥२८॥ प्रज्वलंतं तालमानं निर्वाणं च चकार सः ॥ चिक्षेप पावनं बाणः प्रचंडं घोरमुल्बणम् ॥ २९ ॥ चिच्छेद सात्यकिश्चैव पर्वतास्त्रेण लीलया ॥ नारायणास्त्रं चिक्षेप बाणश्च रणमूर्धनि ॥ ३० ॥ सात्यकिर्दंडवद्भूमौ पपातार्जुनशिक्षया ॥ माहेश्वरं प्रचिक्षेप बाणः शस्त्रविदां वरः ॥ ३१ ॥ सात्यकिर्वैष्णवास्त्रेण प्रचिच्छेदावलीलया ॥ ब्रह्मास्त्रं चापि चिक्षेप बाणश्च रणमूर्धनि ॥ ३२ ॥ क्षणं चकार निर्वाणं ब्रह्मास्त्रेण च सात्यकिः ॥ नागास्त्रं चापि चिक्षेप बाणो रणविशारदः ॥ ३३ ॥ सात्यकिर्गरुडेनैव संजहार क्षणेन च ॥ जग्राह शूलमव्यर्थं शंकरस्य सुदारुणम् ॥ ॥ ३४ ॥ तुष्टाव सात्यकिर्दुर्गां गले माल्यं बभूव ह ॥ जग्राह धनुषा बाणो बाणं पाशुपतं तथा ॥ ३५ ॥ बाणं सबाणं जृंभं च सात्यकिश्च चकार ह ॥ बाणं तं जृंभितं दृष्ट्वा कार्तिकेयो महाबलः ॥ ३६ ॥ अर्धचंद्रं च चिक्षेप कामश्चिच्छेद लीलया ॥ गदां चिक्षेप च

१ केचन् दग्ध्वां च--इ० पा० ।

राणि सुनिश्चितम् ॥ गोलोकं च ययौ राधा सार्धं गोकुलवासिभिः ॥ ४४ ॥ ददर्श विरजातीरं नानारत्नविभूषितम् ॥ तदुत्तीर्य
ययौ विप्र शतशृंगं च पर्वतम् ॥ ४५ ॥ नानामणिगणाकीर्णं रासमंडलमंडितम् ॥ ततो ययौ कियद्दूरं पुण्यं वृन्दावनं वनम् ॥
॥ ४६ ॥ सा ददर्शाक्षयवटमूर्ध्वे त्रिशतयोजनम् ॥ शतयोजनविस्तीर्णं शाखाकोटिसमावृतम् ॥ ४७ ॥ रक्तवर्णैः फलौघैश्च स्थूले
रपि विभूषितम् ॥ गोपीकोटिसहस्रैश्च सार्द्धं वृंदा मनोहरा ॥ ४८ ॥ अनुव्रजं सादरं च सस्मिता सा समाययौ ॥ अवरुह्य रथात्तूर्णं
राधां सा प्रणनाम च ॥ ४९ ॥ रासेश्वरीं तां संभाष्य प्रविवेश स्वमालयम् ॥ रत्नसिंहासने रम्ये हीरहारसमन्विताम् ॥ ५० ॥ वृन्दा
तां वासयामास पादसेवनतत्परा ॥ सप्तभिश्च सखीभिश्च सेवितां श्वेतचामरैः ॥ ५१ ॥ आययुर्गोपिकाः सर्वा द्रष्टुं तां परमेश्वरीम् ॥
नंदादिकं प्रकल्प्यैतद्राधा वासं पृथक्पृथक् ॥ ५२ ॥ परमानंदरूपा सा परमानंदपूर्वकम् ॥ स्ववेश्मनि महारम्ये प्रतस्थे गोपिका
सह ॥ ५३ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे अष्टाविंशत्यधिकशततमोऽध्यायः
॥ १२८ ॥ ॥ श्रीनारायण उवाच ॥ ॥ श्रीकृष्णो भगवांस्तत्र परिपूर्णतमः प्रभुः ॥ दृष्ट्वा सालोक्यमोक्षं च सद्यो गोकुलवासि
नाम् ॥ १ ॥ उवास पंचभिर्गोपैर्भांडीरे वटमूलके ॥ ददर्श गोकुलं सर्वं गोकुलं व्याकुलं तथा ॥ २ ॥ अरक्षकं च व्यस्तं च
शून्यं वृन्दावनं वनम् ॥ योगेनामृतवृष्ट्या च कृपया च कृपानिधिः ॥ ३ ॥ गोपीभिश्च तथा गोपैः परिपूर्णं चकार सः ॥ तथा वृन्दा
वनं चैव सुरम्यं च मनोहरम् ॥ ४ ॥ गोकुलस्थांश्च गोपांश्च समाश्वासं चकार सः ॥ उवाच मधुरं वाक्यं हितं नीतं च दुर्लभम् ॥५॥
॥ ॥ श्रीभगवानुवाच ॥ ॥ हे गोपगण हे बंधो सुखं तिष्ठन्स्थिरो भव ॥ रमणं प्रियया सार्धं सुरम्यं रासमंडलम् ॥ ६ ॥ तावत्प्रभृति
कृष्णस्य पुण्ये वृंदावने वने ॥ अधिष्ठानं च सततं यावच्चंद्रदिवाकरौ ॥७॥ तथा जगाम भाण्डीरं विधाता जगतामपि ॥ स्वयं शेषश्च
धर्मश्च भवान्या च भवः स्वयम् ॥ ८ ॥ सूर्यश्चापि महेंद्रश्च चंद्रश्चापि हुताशनः ॥ कुबेरो वरुणश्चैव पवनश्च यमस्तथा ॥ ९ ॥
ईशानश्चापि देवाश्च वसवोऽष्टौ तथैव च ॥ सर्वे ग्रहाश्च रुद्राश्च मुनयो मनवस्तथा ॥ १० ॥ त्वरिताश्चाययुः सर्वे यत्रास्ते भगवा
न्प्रभुः ॥ प्रणम्य दंडवद्भूमौ तमुवाच विधिः स्वयम् ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ ॥ परिपूर्णतम ब्रह्मस्वरूप नित्यविग्रह ॥ ज्योतिः

स्वरूप परम नमोस्तु प्रकृतेः पर ॥ १२ ॥ मुनिर्लिप्त निराकार साकार ध्यानहेतुना ॥ स्वेच्छामय परं धाम परमात्मन्नमोस्तु ते ॥
॥ १३ ॥ सर्वकार्यस्वरूपेश कारणानां च कारण ॥ ब्रह्मेश शेष देवेश सर्वेश ते नमोनमः ॥ १४ ॥ सरस्वतीश पद्मेश पार्वतीश
परात्पर ॥ हे सावित्रीश राधेश रासेश्वर नमोस्तु ते ॥ १५ ॥ सर्वेषामादिभूतस्त्वं सर्वः सर्वेश्वरस्तथा ॥ सर्वपाता च संहर्ता सृष्टिरूप
नमोस्तु ते ॥ १६ ॥ त्वत्पादपद्मरजसा धन्या पूता वसुंधरा ॥ शून्यरूपा त्वयि गते हे नाथ परमं पदम् ॥ १७ ॥ यत्पंचविंशत्य
धिकं वर्षाणां शतकं गतम् ॥ त्यक्त्वेमां स्वपदं यासि रुदंतीं विरहातुराम् ॥ १८ ॥ ॥ श्रीमहादेव उवाच ॥ ॥ ब्रह्मणा प्रार्थित
स्त्वं च समागत्य वसुंधराम् ॥ भूभारहरणं कृत्वा प्रयासि स्वपदं विभो ॥ १९ ॥ त्रैलोक्ये पृथिवी धन्या सद्यः पूता पदांकिता ॥
वयं च मुनयो धन्याः साक्षाद्दृष्ट्वा पदांबुजम् ॥ २० ॥ ध्यानासाध्यो दुराराध्यो मुनीमामूर्ध्वरेतसाम् ॥ अस्माकमनघश्चेशः सोधुना
चाक्षुषो भुवि ॥ २१ ॥ वायुः सर्वनिवासश्च विश्वानि यस्य लोमसु ॥ देवस्तस्य महाविष्णुर्वासुदेवो महीतले ॥ २२ ॥ सुचिरं तपसा
लब्धं सिद्धेंद्राणां सुदुर्लभम् ॥ यत्पादपद्ममतुलं चाक्षुषं सर्वजीविनाम् ॥ २३ ॥ ॥ अनंत उवाच ॥ ॥ त्वमनंतो हि भगवन्नाह
मेव कलांशकः ॥ विश्वैकस्थे क्षुद्रकूर्मे मशकोहं गजे यथा ॥ २४ ॥ असंख्यशेषाः कूर्माश्च ब्रह्मविष्णुशिवात्मकाः ॥ असंख्यानि च
विश्वानि तेषामीशः स्वयं भवान् ॥ २५ ॥ अस्माकमीदृशं नाथ सुदिनं क्व भविष्यति ॥ स्वप्नादृष्टश्च यश्चेशः स दृष्टः सर्वजीविनाम् ॥
॥ २६ ॥ नाथ प्रयासि गोलोकं पूतां कृत्वा वसुंधराम् ॥ तामनाथां रुदंतीं च निमग्नां शोकसागरे ॥ २७ ॥ देवा ऊचुः ॥ ॥
वेदास्तोतुं न शक्ता यं ब्रह्मेशानादयस्तथा ॥ तमेव स्तवनं किं वा वयं कुर्मो नमोस्तु ते ॥ २८ ॥ इत्येवमुक्त्वा देवास्ते प्रययुर्द्वारकां
पुरीम् ॥ तत्रस्थं भगवंतं च द्रष्टुं शीघ्रं मुदान्विताः ॥ २९ ॥ अथ तेषां च गोपाला ययुर्गोलोकमुत्तमम् ॥ पृथिवी कंपिता भीता
चलंतः सप्तसागराः ॥ ३० ॥ हतश्रियं द्वारकां च त्यक्त्वा च ब्रह्मशापतः ॥ मूर्तिं कदंबमूलस्थां विवेश राधिकेश्वरः ॥ ३१ ॥ ते
सर्वे चैरकायुद्धे निपेतुर्यादवास्तथा ॥ चितामारुह्य देव्यश्च प्रययौ स्वामिभिः सह ॥ ३२ ॥ अर्जुनः स्वपुरं गत्वा तमुवाच युधिष्ठि
रम् ॥ स राजा भ्रातृभिः सार्धं ययौ स्वर्गं च भार्यया ॥ ३३ ॥ दृष्ट्वा कदंबमूलस्य तिष्ठंतं परमेश्वरम् ॥ देवा ब्रह्मादयस्ते च प्रणेमुर्भ

क्तिपूर्वकम् ॥ ३४ ॥ तुष्टुवुः परमात्मानं देवं नारायणं प्रभुम् ॥ श्यामं किशोरवयसं भूषितं रत्नभूषणैः ॥ ३५ ॥ वह्निशुद्धांशुकाधानं
शोभितं वनमालया ॥ अतीव सुन्दरं शांतं लक्ष्मीकांतं मनोहरम् ॥ ३६ ॥ व्याधाग्रसंयुतं पादपद्मं पद्मादिवंदितम् ॥ दृष्ट्वा ब्रह्मा
दिदेवांस्तानभयं सस्मितं ददौ ॥ ३७ ॥ पृथिवीं तां समाश्वास्य रुदंतीं प्रेमविह्वलाम् ॥ व्याधं प्रस्थापयामास परं स्वपदमुत्तमम् ॥
॥ ३८ ॥ बलस्य तेजः शेषे च विवेश परमाद्भुतम् ॥ प्रद्युम्नस्य च कामैके चानिरुद्धस्य ब्रह्मणि ॥ ३९ ॥ अयोनिसंभवा देवि
महालक्ष्मीश्च रुक्मिणी ॥ वैकुण्ठं प्रययौ साक्षात्स्वशरीरेण नारद ॥ ४० ॥ सत्यभामा पृथिव्यां च विवेश कमलालया ॥ स्वयं
जांबवती देवी पार्वत्यां विश्वमातरि ॥ ४१ ॥ या या देव्यश्च यासां चाप्यंशरूपाश्च भूतले ॥ तस्यां तस्यां प्रविविशुस्ता एव च
पृथक्पृथक् ॥ ४२ ॥ सांबस्य तेजः स्कंदे च विवेश परमाद्भुतम् ॥ कश्यपेव सुदेवश्चाप्यदित्यां देवकी तथा ॥ ४३ ॥ रुक्मिणी मंदिरं
त्यक्त्वा समस्तां द्वारकां पुरीम् ॥ स जग्राह समुद्रश्च प्रफुल्लवदनेक्षणः ॥ ४४ ॥ लवणोदः समागत्य तुष्टाव पुरुषोत्तमम् ॥ रुरोद तद्वि
योगेन साश्रुनेत्रश्च विह्वलः ॥ ४५ ॥ गंगा सरस्वती पद्मावती च यमुना तथा ॥ गोदावरी स्वर्णरेखा कावेरी नर्मदा मुने ॥ ४६ ॥
शरावती बाहुदा च कृतमाला च पुण्यदा ॥ समाययुश्च ताः सर्वाः प्रणेमुः परमेश्वरम् ॥४७॥ उवाच जाह्नवी देवी रुदंती परमेश्वरम्॥
साश्रुनेत्रातिदीना सा विरहज्वरकातरा ॥ ४८ ॥ ॥ भागीरथ्युवाच ॥ ॥ हे नाथ रमणश्रेष्ठ यासि गोलोकमुत्तमम् ॥ अस्माकं
का गतिश्चात्र भविष्यति कलौ युगे ॥ ४९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कलेः पंचसहस्राणि वर्षाणि तिष्ठ भूतले ॥ पापानि पापिनो
यानि तुभ्यं दास्यंति स्नानतः ॥ ५० ॥ मन्मंत्रोपासकस्पर्शाद्भस्मीभूतानि तत्क्षणात् ॥ भविष्यंति दर्शनाच्च स्नानादेव हि जाह्नवि
॥ ५१ ॥ हरेर्नामानि यत्रैव पुराणानि भवंति हि ॥ तत्र गत्वा सावधानमाभिः सार्द्धं च श्रोष्यसि ॥ ५२ ॥ पुराणश्रवणाच्चैव हरेर्ना
मानुकीर्तनात् ॥ भस्मीभूतानि पापानि ब्रह्महत्यादिकानि च ॥५३॥ भस्मीभूतानि तान्येव वैष्णवालिंगनेन च ॥ तृणानि शुष्ककाष्ठा
नि दहंति पावको यथा ॥ ५४ ॥ तथापि वैष्णवा लोके पापानि पापिनामपि ॥ पृथिव्यां यानि तीर्थानि पुण्यान्यपि च
जाह्नवि ॥ ५५ ॥ मद्भक्तानां शरीरेषु सन्ति पूतेषु संततम् ॥ मद्भक्तपादरजसा सद्यः पूता वसुन्धरा ॥ ५६ ॥ सद्यः पूतानि तीर्थानि

सद्यः पूतं जगत्तथा ॥ मन्मंत्रोपासका विप्रा ये मदुच्छिष्टभोजिनः ॥ ५७ ॥ मामेव नित्यं ध्यायंते ते मत्प्राणाधिकाः प्रियाः ॥
तदुपस्पर्शमात्रेण पूतो वायुश्च पावकः ॥ ५८ ॥ कलेर्दशसहस्राणि मद्भक्ताः संति भूतले ॥ एकवर्णा भविष्यंति मद्भक्तेषु गतेषु च
॥ ५९ ॥ मद्भक्तशून्या पृथिवी कलिग्रस्ता भविष्यति ॥ एतस्मिन्नंतरे तत्र कृष्णदेहाद्विनिर्गतः ॥ ६० ॥ चतुर्भुजश्च पुरुषः शतचं
द्रसमप्रभः ॥ शंखचक्रगदापद्मधरः श्रीवत्सलाञ्छनः ॥ ६१ ॥ सुन्दरं रथमारुह्य क्षीरोदं स जगाम ह ॥ सिंधुकन्या च प्रययौ स्व
यं मूर्तिमती सती ॥ ६२ ॥ श्रीकृष्णमनसा जाता मर्त्यलक्ष्मीर्मनोहरा ॥ श्वेतद्वीपं गते विष्णौ जगत्पालनकर्तरि ॥ ६३ ॥ शुद्ध
सत्त्वस्वरूपे च द्विधा रूपो बभूव ह ॥ दक्षिणांशश्च द्विभुजो गोपबालकरूपकः ॥ ६४ ॥ नवीनजलदश्यामः शोभितः पीतवाससा ॥
श्रीवंशवदनः श्रीमान्सस्मितः पद्मलोचनः ॥ ६५ ॥ शतकोटींदुसौंदर्यं शतकोटिस्मरप्रभम् ॥ दधानः परमानंदः परिपूर्णतमः प्रभुः
॥ ६६ ॥ परं धाम परब्रह्म स्वरूपो निर्गुणः स्वयम् ॥ परमात्मा च सर्वेषां भक्तानुग्रहविग्रहः ॥ ६७ ॥ नित्यदेहश्च भगवानीश्वरः
प्रकृतेः परः ॥ योगिनो यं वदंत्येवं ज्योतीरूपं सनातनम् ॥६८॥ ज्योतिरभ्यंतरे नित्यरूपं भक्ता विदंति यम् ॥ वेदा वदंति सत्यं यं
नित्यमाद्यं विचक्षणाः ॥६९॥ यं वदंति सुराः सर्वे परं स्वेच्छामयं प्रभुम् ॥ सिद्धेंद्रा मुनयः सर्वे सर्वरूपं वदंति यम् ॥ ७० ॥ यमनि
र्वचनीयं च योगींद्रः शंकरो वदेत् ॥ स्वयं विधाता प्रवदेत्कारणानां च कारणम् ॥ ७१ ॥ शेषो वदेदनंतं यं नवधा रूपमीश्वरम् ॥
तर्काणामेव षण्णां च षड्विधं रूपमीप्सितम् ॥ ७२ ॥ वैष्णवानामेकरूपं वेदानामेकमेव च ॥ पुराणानामेकरूपं तस्मात्त्रिविधं स्मृतम्
॥ ७३ ॥ न्यायो निर्वचनीयं च यं मतं शंकरो वदेत् ॥ नित्यं वैशेषिकाश्च यं तं वदंति विचक्षणाः ॥ ७४ ॥ सांख्यो वदति तं देवं
ज्योतीरूपं सनातनम् ॥ मीमांसा सर्वरूपं च वेदांतः सर्वकारणम् ॥ ७५ ॥ पातंजलोप्यनंतं च वेदाः सत्यस्वरूपकम् ॥ स्वेच्छा
मयं पुराणं च भक्ताश्च नित्यविग्रहम् ॥ ७६ ॥ सोयं गोलोकनाथश्च राधेशो नंदनंदनः ॥ गोकुले गोपवेषश्च पुण्ये वृंदावने वने
॥ ७७ ॥ चतुर्भुजश्च वैकुंठे महालक्ष्मीपतिः स्वयम् ॥ नारायणश्च भगवान्यन्नाम मुक्तिकारणम् ॥ ७८ ॥ सकृन्नारायणेत्युक्त्वा पुमा
न्कल्पशतत्रयम् ॥ गंगादिसर्वतीर्थेषु स्नातो भवति नारद ॥ ७९ ॥ सुनंदनंदकुमुदैः पार्षदैः परिवारितः ॥ शंखचक्रगदापद्मधरः श्री

वत्सलाञ्छनः ॥ ८० ॥ कौस्तुभेन मणीन्द्रेण भूषितो वनमालया ॥ वेदैः स्तुतश्च यानेन वैकुंठं स्वपदं ययौ ॥ ८१ ॥ गते वैकुंठना
थे च राधेशश्च स्वयं प्रभुः ॥ चकार वंशीशब्दं च त्रैलोक्यमोहनं परम् ॥ ८२ ॥ मूर्च्छां प्रापुर्देवगणा मुनयश्चापि नारद ॥ अचेतना
बभूवुश्च मायया पार्वतीं विना ॥ ८३ ॥ उवाच पार्वती देवी भगवंतं सनातनम् ॥ विष्णुमाया भगवती सर्वरूपा सनातनी ॥ ८४ ॥
परब्रह्मस्वरूपा या परमात्मस्वरूपिणी ॥ सगुणा निर्गुणा सा च परा स्वेच्छामयी सती ॥ ८५ ॥ ॥ पार्वत्युवाच ॥ ॥ एकाहं
राधिकारूपा गोलोके रासमंडले ॥ रासशून्यं च गोलोकं परिपूर्णं कुरु प्रभो ॥ ८६ ॥ गच्छ त्वं रथमारुह्य मुक्तामाणिक्यभूषितम् ॥
परिपूर्णतमाहं च तव वक्षःस्थलस्थिता ॥८७॥ तवाज्ञया महालक्ष्मीरहं वैकुंठगामिनी ॥ सरस्वती च तत्रैव वामे पार्श्वे हरेरपि ॥८८॥
तवाहं मानसा जाता सिंधुकन्या तवाज्ञया ॥ सावित्री वेदमाताहं कलया विधिसन्निधौ ॥ ८९ ॥ तेजःसु सर्वदेवानां पुरा सत्ये
तवाज्ञया ॥ अधिष्ठानं कृतं तत्र धृतं देव्या शरीरकम् ॥ ९० ॥ शुंभादयश्च दैत्याश्च निहताश्चावलीलया ॥ दुर्गं निहत्य दुर्गाहं त्रिपु
रा त्रिपुरे वधे ॥ ९१ ॥ निहत्य रक्तबीजं च रक्तबीजविनाशिनी ॥ तवाज्ञया दक्षकन्या सती सत्यस्वरूपिणी ॥ ९२ ॥ योगेन त्य
क्त्वा देहं च शैलजाहं तवाज्ञया ॥ त्वया दत्त्वा शंकराय गोलोके रासमंडले ॥ ९३ ॥ विष्णुभक्तिरहं तेन विष्णुमाया च वैष्णवी ॥
नारायणस्य मायाहं तेन नारायणी स्मृता ॥९४॥ कृष्णप्राणाधिकाहं च प्राणाधिष्ठातृदेवता ॥ महाविष्णोश्च वासोश्च जननी राधिका
स्वयम् ॥९५॥ तवाज्ञया पंचधाहं पंचप्रकृतिरूपिणी ॥ कलाकलांशयाहं च देवपत्न्यो गृहेगृहे ॥ ९६ ॥ शीघ्रं गच्छ महाभाग तत्राहं
विरहातुरा ॥ गोपीभिः सहिता रासं भ्रमंती परितः सदा ॥ ९७ ॥ पार्वतीवचनं श्रुत्वा प्रहस्य रसिकेश्वरः ॥ रत्नयानं समारुह्य ययौ
गोलोकमुत्तमम् ॥ ९८ ॥ पार्वती बोधयामास स्वयं देवगणं तथा ॥ मायावंशीरवाच्छिन्नं विष्णुमाया सनातनी ॥ ९९ ॥ कृत्वा ते हरि
शब्दं च स्वगृहं विस्मयं ययुः ॥ शिवेन सार्द्धं दुर्गा सा प्रहृष्टा स्वपुरं ययौ ॥१००॥ अथ कृष्णं समायांतं राधा गोपीगणैः सह ॥ अनुव्र
जं ययौ हृष्टा सर्वज्ञा प्राणवल्लभम् ॥१॥ दृष्ट्वा समीपमायांतमवरुह्य रथात्सती ॥ प्रणनाम जगन्नाथं शिरसा सखिभिः सह ॥२॥ गोपा
गोप्यश्च मुदिताः प्रफुल्लवदनेक्षणाः ॥ दुंदुभिं वादयामासुरीश्वरागमनोत्सुकाः ॥ ३ ॥ विरजां च समुत्तीर्य दृष्ट्वा राधां जगत्पतिः ॥

अवरुह्य रथात्तूर्णं गृहीत्वा राधिकाकरम् ॥ ४ ॥ शतशृंगे च बभ्राम सुरम्यं रासमंडलम् ॥ दृष्ट्वाक्षयवटं पुण्यं पुण्यं वृंदावनं वनम् ॥५॥
तुलसीकाननं दृष्ट्वा प्रययौ मालतीवनम् ॥ वामे कृत्वा कुंदवनं माधवीकाननं तथा ॥६॥ चकार दक्षिणे कृष्णश्चंपकारण्यमीप्सितम् ॥
चकार पश्चात्तूर्णं च चारुचंदनकाननम् ॥७॥ ददर्श पुरतो रम्यं राधिकाभवनं परम् ॥ उवास राधया सार्धं रत्नसिंहासने वरे ॥८॥
सकर्पूरं च तांबूलं बुभुजे वासितं जलम् ॥ सुष्वाप पुष्पतल्पे च सुगंधिचंदनार्चिते ॥९॥ स रेमे रामया सार्धं निमग्नो रससागरे ॥
इत्येवं कथितं सर्वं धर्मवक्त्राच्च यच्छ्रुतम् ॥ ११० ॥ गोलोकारोहणं रम्यं किं भूयः श्रोतुमिच्छसि ॥ १११ ॥ इति श्रीब्रह्मवैवर्ते महा
पुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे गोलोकारोहणं नामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ नारद
उवाच ॥ ॥ सर्वं श्रुतं महाभाग नावशेषमभीप्सितम् ॥ किमपूर्वं पुराणं च ब्रह्मवैवर्तमिष्टदम् ॥ १ ॥ अधुना किं करिष्यामि तन्मां
ब्रूहि जगद्गुरो ॥ आज्ञां कुरु तमस्यां च कर्तुं यामि हिमालयम् ॥ २ ॥ ॥ श्रीनारायण उवाच ॥ ॥ ॥ उपबर्हणगंधर्वः पंचा
शत्कामिनीपतिः ॥ जन्मांतरे भवानासीदधुना ब्रह्मपुत्रकः ॥ ३ ॥ तास्वेका च सती रम्या तपसा शंकरं परम् ॥ आराध्य च वरं लेभे
वाञ्छितं नारदं पतिम् ॥४॥ सा च सृंजयकन्या च स्वर्णष्ठीवीसहोदरा ॥ तां विवाहं कुरुष्वेति शंकराज्ञा कथं वृथा ॥ ५ ॥ सुंदरीं सुंदरी
ष्वेव कोमलां कमला[illegible]म् ॥ पतिव्रतां महाभागां रम्यां सुप्रियवादिनीम् ॥ ६ ॥ कामुकीं कमनीयां च शश्वत्सुस्थिरयौवनाम् ॥
विधात्रा लिखितं कर्म प्राक्तनं केन वार्यते ॥ ७ ॥ नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ अवश्यमेव भोक्तव्यं कृतं कर्म शुभा
शुभम् ॥ ८ ॥ ॥ सूत उवाच ॥ ॥ नारायणवचः श्रुत्वा हृदयेन विदूयता ॥ प्रणम्य प्रययौ शीघ्रं नारदः सृंजयालयम् ॥ ९ ॥
॥ ॥ शौनक उवाच ॥ ॥ अहो सूत महाभाग श्रुतं किं परमाद्भुतम् ॥ किमपूर्वं रहस्यं च सरसं च पुरातनम् ॥१०॥ अधुना श्रोतुमि
च्छामि विवाहं नारदस्य च ॥ अतींद्रियस्य च मुनेर्ब्रह्मपुत्रस्य सांप्रतम् ॥ ११ ॥ सूत उवाच ॥ नारदो मूढरूपश्च दृष्ट्वा सृंजयक
न्यकाम् ॥ तपस्विनीं महाभागां विष्णुव्रतपरायणाम् ॥ १२ ॥ ययौ ब्रह्मसभां रम्यां सर्वदेवैः समावृताम् ॥ प्रणम्य पितरं शांतः सर्वं
तत्त्वमुवाच तम् ॥ १३ ॥ ब्रह्मा प्रहृष्टवदनः श्रुत्वा वार्तां शुभावहाम् ॥ तपस्विनं च पुत्रं च संभाष्य जगतां पतिः ॥ १४ ॥ रत्ननिर्मा

णयानेन सार्धं देवैः शुभे क्षणे ॥ पुत्रं कृत्वा च पुरतो ययौ सृंजयमंदिरम् ॥ १५ ॥ तच्छ्रुत्वा सृंजयो राजा रत्नभूषणभूषिताम् ॥ गृही
त्वा कन्यकां रम्यां नारदाय ददौ मुदा ॥ १६ ॥ सर्वस्वं दक्षिणां दत्त्वा मणिमुक्तादिकं तथा ॥ पुटांजलियुतो भूत्वा परिहारं चकार
सः ॥ १७ ॥ कन्यां समर्प्य ब्रह्माणं राजा च योगिनां वरः ॥ रुरोद भृशमुच्चैश्च वत्से वत्स इतीरितम् ॥ १८ ॥ क्व यासि त्यक्त्वा मद्गेहं
शून्यं कमललोचने ॥ अहं यामि वनं घोरं त्वां त्यक्त्वा जीवितो मृतः ॥ १९ ॥ प्रणम्य पितरं कन्या रुदंतं मातरं तथा ॥ रुदंतीं तां
रुदंती साप्यारुरोह रथं विधेः ॥ २० ॥ गृहीत्वा च सभार्यं च पुत्रं धाता मुदान्वितः ॥ प्रययौ ब्रह्मलोकं च देवेंद्रैर्मुनिभिः सह ॥२१॥
ब्राह्मणान्भोजयामास सांगे मंगलकर्मणि ॥ देवानपि च सिद्धांश्च वादयामास दुंदुभिम् ॥ २२ ॥ नारदस्तु मुनिश्रेष्ठो बाधितः पूर्व
कर्मणा ॥ यस्य यत्प्राक्तनं विप्र दुर्लंघ्यं केन वार्यते ॥ २३ ॥ सुरम्ये पुष्पतल्पे च सुगंधिचंदनार्चिते ॥ स रेमे रामया सार्धं बुबुधे
न दिवानिशम् ॥ २४ ॥ एवं कृत्वा विवाहं च विरतो मुनिसत्तमः ॥ उवास ब्रह्मलोकेषु वटमूले मनोहरे ॥ २५ ॥ तत्राजगाम नग्नश्च
प्रज्वलन्ब्रह्मतेजसा ॥ सनत्कुमारो भगवान्साक्षाच्च बालको यथा ॥ २६ ॥ सृष्टेः पूर्वश्च वयसा यथैव पंचहायनः ॥ अचूडोऽनुपनी
तश्च वेदसंध्याविहीनकः ॥ २७ ॥ कृष्णेति मंत्रं जपति यस्य नारायणो गुरुः ॥ अनंतकालकल्पं च भ्रातृभिश्च त्रिभिः सह ॥ २८ ॥
वैष्णवानामग्रणीशो ज्ञानिनां च गुरोर्गुरुः ॥ आराद्दृष्ट्वा नारदस्तं भ्रातरं च सतां वरम् ॥ २९ ॥ सहसा शिरसा भूमौ दंडवत्प्रणनाम
तम् ॥ उवाच नारदं बालः प्रहस्य परमार्थकम् ॥ ३० ॥ सनत्कुमार उवाच ॥ अये भ्रातः किं करोषि कुशलं युवतीपते ॥ स्त्रीपुंसोर्व
र्द्धते प्रेम नित्यं तन्नित्यनूतनम् ॥ ३१ ॥ अर्गलं ज्ञानमार्गस्य भक्तिद्वारकपाटकम् ॥ मोक्षमार्गव्यवहितं चिरं बंधनकारणम् ॥ ३२ ॥
पीयूषबुद्ध्या गरलं भुंक्ते पापी नराधमः ॥ परं नारायणं त्यक्त्वा यस्यास्ते विषये मनः ॥ ३३ ॥ स वंचितो मायया चामृतं त्यक्त्वा
विषं भजेत् ॥ सर्वेषां कामभोगोस्ति कर्मिणामीश्वरं विना ॥ ३४ ॥ वयं विधातुः पुत्राश्च सा बुद्धिरिति देहिनाम् ॥ यदि ते नास्ति
भोगश्च कथं गंधर्वजन्म च ॥ ३५ ॥ कथं दासीसुतस्त्वं च मुक्तश्च भक्तसंगतः ॥ निर्गच्छ तपसे भ्रातस्त्यज मायामयीं प्रियाम् ॥
॥ ३६ ॥ सुपुण्ये भारते वर्षे तपसा भज माधवम् ॥ स्थिते नारायणे स्वेशे परे स्वपददातरि ॥ ३७ ॥ विषयी विषयांधश्च वंचितो

मायया ध्रुवम् ॥ गृहाण मम मंत्रं च कृष्ण इत्यक्षरद्वयम् ॥ ३८ ॥ सर्वेषामेव मंत्राणां सारात्सारं परात्परम् ॥ सर्वेषु च पुराणेषु वेदेषु
च चतुर्षु च ॥ ३९ ॥ धर्मशास्त्रेषु तंत्रेषु नास्त्येवास्मात्परो मनुः ॥ नारायणेन दत्तो मे पुष्करे सूर्यपर्वणि ॥ ४० ॥ असंख्यकल्पं जप्त्वाहं
भ्रमामि सर्वपूजितः ॥ इत्युक्त्वा स्नापयित्वा तं ददौ तस्मै परं मनुम् ॥ ४१ ॥ दिवानिशं स जपति पूतया मणिमालया ॥ तस्मै
शुभाशिषं-दत्त्वा मंत्रं च वैष्णवाग्रणीः ॥ ४२ ॥ गोलोकं प्रययौ द्रष्टुं भगवंतं सनातनम् ॥ नारदस्तु मनुं प्राप्य सर्वसिद्धिप्रदं वरम् ॥
॥ ४३ ॥ श्रीकृष्णे निश्चला भक्तिः पूर्वकर्मनिकृंतनी ॥ त्यक्त्वा मायामयीं भार्यां भारतं तपसे ययौ ॥ ४४ ॥ कृतमालानदीतीरे
ददर्श शंकरं परम् ॥ दृष्ट्वा च सहसा मूर्ध्ना प्रणनाम शिवं मुनिः ॥ तमुवाच जगन्नाथो भक्तं च भक्तवत्सलः ॥ ४५ ॥ ॥ श्रीमहादेव
उवाच ॥ ॥ अहो नारद दृष्ट्वा त्वां प्रसन्नोऽहं स्वतेजसा ॥ ४६ ॥ भक्तानां दर्शनं यत्र सुदिनं तच्छरीरिणाम् ॥ अयं हि परमो लाभो
देहिनां भक्तसंगमः ॥ ४७ ॥ सं स्नातः सर्वतीर्थेषु यो ददर्श च वैष्णवम् ॥ अपि प्राप्तो महामंत्रः सर्वतंत्रसुदुर्लभः ॥ ४८ ॥ मया दत्तो
गणेशाय स्कंदाय स्वात्मजाय च ॥ मह्यं दत्तश्च कृष्णेन गोलोके रासमंडले ॥ ४९ ॥ ब्रह्मणे चापि धर्माय धर्मो नारायणाय च ॥
ब्रह्मा सनत्कुमाराय तुभ्यं दत्तश्च तेन वै ॥ ५० ॥ मंत्रग्रहणमात्रेण जनो नारायणो भवेत् ॥ विचारणं च नास्त्यत्र कालाकालं शुभा
शुभम् ॥ ५१ ॥ पंचलक्षजपेनैव पुरश्चरणमस्य च ॥ ध्यानं च सामवेदोक्तं तेन ध्यायेच्च वैष्णवः ॥ ५२ ॥ ध्यानं च पापदहनं कर्ममूल
निकृंतनम् ॥ कृष्णं नवघनश्यामं किशोरं पीतवाससम् ॥ ५३ ॥ शतकोटींदुसौंदर्यं दधानमतुलं परम् ॥ भूषितं भूषणौघैस्तैरमूल्यर
त्ननिर्मितैः ५४ ॥ चंदनोक्षितसर्वांगं कौस्तुभेन विराजितम् ॥ मयूरपिच्छचूडं च मालतीमाल्यमंडितम् ॥ ५५ ॥ ईषद्धास्यप्रसन्नास्यं
नित्योपास्यं शिवादिभिः ॥ ध्यानासाध्यं दुराराध्यं निर्गुणं प्रकृतेः परम् ॥५६॥ सर्वेषां परमात्मानं भक्तानुग्रहविग्रहम् ॥ वेदानिर्वच
नीयं तं वरं सर्वेश्वरं भजे ॥५७॥ ध्यानेनानेन तं ध्यात्वा भगवंतं सनातनम् ॥ भज तं परमानंदं सत्यं नित्यं परात्परम् ॥५८॥ इत्युक्त्वा
स्वपदं शंभुर्जगाम परमेश्वरः ॥ तं प्रणम्य जगन्नाथं नारदस्तपसे ययौ ॥५९॥ नारदः श्रीहरिं स्मृत्वा योगात्त्यक्त्वा कलेवरम् ॥ निलीनः
पादपद्मे च पादपद्मार्चिते हरेः ॥६०॥इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे नारदविवाहादिप्रक

रणं नाम त्रिंशदधिकशततमोऽध्यायः ॥१३०॥ ॥ शौनक उवाच ॥ ॥ अत्यपूर्वमुपाख्यानं श्रुतं परममद्भुतम् ॥ सुगोप्यं च सुगोप्यं च
रम्यंरम्यं नवंनवम् ॥ १ ॥ किमनिर्वचनीयं च कमनीयं मनोहरम् ॥ सुदुर्लभा कथा प्रोक्ता पुराणेषु पुरातनी ॥ २ ॥ एवंभूतं च सुदिनं
कदास्माकं भविष्यति ॥ तज्जन्म सफलं धन्यं यत्र वैष्णवसंगमः ॥ ३ ॥ गर्भवासोच्छेदनं च कर्ममूलनिकृंतनम् ॥ हरिदास्यप्रदं शुद्धं
भक्तानां भक्तिवर्धनम् ॥ ४ ॥ असाधुसंगदुर्बुद्धिपापोन्मूलनकारणम् ॥ गणेशजन्मोपाख्यानं पुराणेषु सुदुर्लभम् ॥५॥ तुलसीराधिका
ख्यानं किमपूर्वं श्रुतं परम् ॥ नवं यद्यद्गोपनीयं व्यक्तमव्यक्तमीप्सितम् ॥ सर्वं श्रुतं महाभाग परिपूर्णं मनोहरम् ॥ ६ ॥ अधुना श्रोतु
मिच्छामि वह्नेरुत्पत्तिमीप्सिताम् ॥ स्वर्णस्य च महाभाग तन्मे व्याख्यातुमर्हसि ॥ ७ ॥ ॥ सूत वाच ॥ ॥ सामग्रीकरणं सृष्टेर्जल
मेव हुताशनः ॥ तथैव प्रकृतिर्नित्या महानेव तथैव च ॥ ८ ॥ यथा दिशो महाकाशो यथैव सृष्टिगोलकम् ॥ प्रकृतेर्महतश्च स्यादहं
कारस्तथैव च ॥ ९ ॥ यथैव शब्दस्तन्मात्रं तथैव च हुताशनः ॥ तथापि तत्समुत्पत्तिं कथयामि निशामय ॥ १० ॥ एकदा सृष्टिकाले
च ब्रह्मानंतमहेश्वराः ॥ श्वेतद्वीपं ययुः सर्वे द्रष्टुं विष्णुं जगत्पतिम् ॥११॥ परस्परं च संभाषां कृत्वा सिंहासनेषु च ॥ ऊचुः सर्वे सभा
मध्ये सुरम्ये पुरतो विभोः ॥१२॥ विष्णुगात्रोद्भवास्तत्र कामिन्यः कमलाकलाः ॥ तत्र नृत्यंति गायंति विष्णुगाथाश्च सुस्वरम् ॥१३॥
तासां च कठिनां श्रोणिं कठिनं स्तनमंडलम् ॥ सस्मितं मुखपद्मं च दृष्ट्वा ब्रह्मा सुकामुकः ॥ १४ ॥ मनोनिवारणं कर्तुं न शशाक
पितामहः ॥ वीर्यं पपात चच्छाद लज्जया वाससा विभुः ॥१५॥ तद्वीर्यं वस्त्रसहितं प्रतप्तं कामतापतः ॥ क्षीरोदे प्रेरयामास संगीते वि
रते द्विज ॥ १६ ॥ जलादुत्थाय पुरुषः प्रज्वलन्ब्रह्मतेजसा ॥ उवास ब्रह्मणः क्रोडे लज्जितस्य च संसदि ॥ १७ ॥ एतस्मिन्नंतरे रुष्टो
जलादुत्थाय सत्वरः ॥ प्रणम्य वरुणो देवो बालं नेतुं समुद्यतः ॥ १८ ॥ बालो दधार ब्रह्माणं बाहुभ्यां च भयाद्रुदन् ॥ किंचिन्नोवाच
जगतां विधाता लज्जया द्विज ॥ १९ ॥ बालकस्य करे धृत्वा चकाराकर्षणं रुषा ॥ वरुणश्च सभामध्ये तं चिक्षेप प्रजापतिः ॥२०॥ 
पपात दूरतो देवो वरुणो दुर्बलस्ततः ॥ मूर्च्छां संप्राप मृतवत्कोपदृष्ट्या विधेरहो ॥२१॥ चेतनं कारयामासामृतदृष्ट्या च शंकरः ॥
संप्राप्य चेतनं तत्र तमुवाच जलेश्वरः ॥२२॥ ॥ वरुण उवाच ॥ ॥ बालो जले समुद्भूतो मम पुत्रोयमीप्सितः ॥ अहं गृहीत्वा या

स्यामि ब्रह्मा मां ताडयेत्कथम् ॥ २३ ॥ ॥ ब्रह्मोवाच ॥ ॥ बालकः शरणापन्नो मयि विष्णो महेश्वर ॥ कथं दास्यामि भीतं च रुदंतं
शरणागतम् ॥२४॥ शरणागतदीनार्तं यो न रक्षेदपंडितः ॥ पच्यते निरये तावद्यावच्चन्द्रदिवाकरौ ॥२५॥ उभयोर्वचनं श्रुत्वा प्रहस्य
मधुसूदनः ॥ उवाच तत्र सर्वज्ञः सर्वेशश्च यथोचितम् ॥२६॥ ॥ श्रीभगवानुवाच ॥ ॥ दृष्ट्वा तु कामिनीश्रोणिं वीर्यं धातुः पपात तत्॥
लज्जया प्रेरयामास क्षीरोदे निर्मले जले ॥ २७ ॥ ततो बभूव बालश्च धर्मतो विधिपुत्रकः ॥ क्षेत्रजश्च सुतः शास्त्रे वरुणस्यापि
गौणतः ॥ २८ ॥ ॥ श्रीमहादेव उवाच ॥ ॥ यो विद्यायोनिसंबंधो वेदेषु च निरूपितः ॥ शिष्ये पुत्रे च समतां चेति वेदविदो
विदुः ॥ २९ ॥ मंत्रं ददातु वरुणो विद्यां च बालकाय च ॥ पुत्रो विधातुर्वह्निश्च शिष्यश्च वरुणस्य च ॥ ३० ॥ विष्णुर्ददातु बालाय
दाहिकां शक्तिमुज्ज्वलाम् ॥ सर्वदग्धो हुताशश्च निर्वाणो वरुणेन च ॥ ३१ ॥ विष्णुश्च दाहिकां शक्तिं ददौ तस्मै शिवाज्ञया ॥ मंत्रं
विद्यां च वरुणो रत्नमालां मनोहराम् ॥ ३२ ॥ क्रोडे कृत्वा च तं बालं चुचुंब मायया सुरः ॥ ब्रह्मणे च ददौ साक्षाद्विष्णुशंकरयो
रपि ॥३३॥ प्रणम्य विष्णुं ब्रह्मा च ययौ शंभुः स्वमंदिरम् ॥ अग्न्युत्पत्तिश्च कथिता स्वर्णोत्पत्तिं निशामय ॥ ३४ ॥ एकदा सर्वदेवाश्च
समूपुः स्वर्गसंसदि ॥ तत्र कृत्वा च नृत्यं च गायंत्यप्सरसां गणाः ॥३५॥ विलोक्य रंभां सुश्रोणिं सकामो वह्निरेव च ॥ पपात वीर्यं
चच्छाद लज्जया वाससा तथा ॥ ३६ ॥ उत्तस्थौ स्वर्णपुंजश्च वह्निं क्षिप्त्वा ज्वलत्प्रभम् ॥ क्षणेन वर्धयामास स सुमेरुर्बभूव ह ॥३७॥
हिरण्यरेतसं वह्निं प्रवदंति मनीषिणः ॥ इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ ३८ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृ
ष्णजन्मखंड उत्तरार्धे नारायणनारदसंवादे वह्निसुवर्णोत्पत्तिर्नामैकात्रिंशदधिकशततमोऽध्यायः ॥१३१॥ ॥ शौनक उवाच ॥ ॥ श्रुतं
सर्वं नावशेषं धर्मेश ब्राह्मणं च मम ॥ कथयस्व महाभाग पुराणं पुनरेव हि ॥ १ ॥ एवंविधं पुराणं च जन्मनैव न हि श्रुतम् ॥ न
दृष्टं न श्रुतं तात तादृशं वाचकं तथा ॥ २ ॥ ॥ सूत उवाच ॥ ॥ श्रूयतां भो महाभाग सावधानं च संयतम् ॥ अध्यायश्रवणे
नैव पुराणफलमालभेत् ॥ ३ ॥ ब्रह्मखंडे च कथितं परं ब्रह्मनिरूपणम् ॥ तदनिर्वचनीयं च येषामपि यथागमम् ॥ ४ ॥ साकारं च
निराकारं सगुणं निर्गुणं पृथक् ॥ येषामपि यथाशक्तिस्तथैव ध्यानमेव च ॥ ५ ॥ गोलोकादेर्वर्णनं च क्रमेण च पृथक्पृथक् ॥ तत्रोप

युक्तोपाख्यानं यद्यत्प्रासंगिकं विभो ॥ ६ ॥ जातीनां निर्णयश्चैव संकराणां तथैव च ॥ यद्यद्विशिष्टोपाख्यानं तत्तत्प्रश्नानुरोधतः ॥ ७ ॥ राधामाधवयोः क्रीडा महाविष्णोः समुद्भवः ॥ निरूपणं च विश्वेषां समासेन द्विजोत्तम ॥ ८ ॥ ब्रह्मनारदयोश्चैव संवादः प्रमार्थतः ॥ विवेको नारदस्यैव मुनींद्रस्य तथैव च ॥ ९ ॥ आज्ञया ब्राह्मणश्चैव नरनारायणाश्रमम् ॥ गमनं नारदस्यैव तेन सार्धं च दर्शनम् ॥ १० ॥ तयोः संभाषणं चैव नारदाद्यनिवेदनम् ॥ तत्र देवब्रह्मखंडक्रमेणोक्तं द्विजोत्तम ॥ ११ ॥ श्रूयतां प्रकृतेः खंडं सुधाखंडसमं मुने ॥ प्रकृतेर्लक्षणं प्रोक्तं प्रकृतीनां च वर्णनम् ॥ १२ ॥ उपाख्यानं च तासां च वर्णनं पूजनादिकम् ॥ लक्ष्मीः सरस्वती दुर्गा सावित्री राधिका तथा ॥ १३ ॥ एतासां चरितं चैवमन्यासां च पृथक्पृथक् ॥ उपाख्यानं महालक्ष्म्याः सरस्वत्यास्तथैव च ॥ १४ ॥ अपूर्वं राधिकाख्यानं सावित्र्याश्च तथैव च ॥ संवादो यमसावित्र्योः सत्यवज्जीवदानकम् ॥ १५ ॥ कुंडानां वर्णनं प्रोक्तं तेषां च लक्षणं तथा ॥ जीविकर्मविपाकश्च भोगनिर्णय एव च ॥ १६ ॥ अपूर्वं राधिकाख्यानं पुराणेषु सुगोप्यकम् ॥ सुयज्ञस्य नृपेंद्रस्य चरितं परमाद्भुतम् ॥ १७ ॥ प्रोक्तं तुलस्युपाख्यानं परमाद्भुतमेव च ॥ महायुद्धं च संवादे महेशशंखचूडयोः ॥ १८ ॥ तुलसीकृष्णसंवादस्तयोः संभोग एव च ॥ निधनं शंखचूडस्य श्रीदाम्नः शापमोक्षणम् ॥ १९ ॥ पदप्राप्तिः सुराणां च विपदां खंडनं तथा ॥ जीविनां मोक्षबीजं च गंगोपाख्यानमीप्सितम् ॥ २० ॥ तथैव मनसाख्यानं परं हर्षविवर्धनम् ॥ स्वाहास्वधाख्यानमेवमन्यासां च निरूपणम् ॥ २१ ॥ यद्यत्प्रासंगिकाख्यानं वक्तुः प्रश्नानुरोधतः ॥ प्रोक्तं तत्प्रकृतेः खंडं खंडं गणपतेः शृणु ॥ २२ ॥ अतीव मधुरं रम्यं स्वादुस्वादु पदेपदे ॥ सुगोप्यं तत्पुराणेषु रम्यंरम्यं नवंनवम् ॥ २३ ॥ सुदुर्लभमुपाख्यानं श्रोतृप्रीतिकरं परम् ॥ प्रोक्ता क्रीडा च परमा पार्वतीपरमेशयोः ॥ २४ ॥ स्कंदोत्पत्तिः प्रथमतः क्रीडाभंगस्तयोस्तथा ॥ पार्वतीतोषणं चैवमभिमानविमोक्षणम् ॥ २५ ॥ पुण्यकं च व्रतं विष्णोर्देव्याश्चरितमुत्तमम् ॥ वरदानं हरेरेव सुव्रतां पार्वतीं प्रति ॥ २६ ॥ हरेश्च दर्शनं चैव ब्राह्मणातिथिरूपिणः ॥ आविर्भावो गणेशस्य कृपया शिवमंदिरे ॥ २७ ॥ दर्शनं पुत्रवक्त्रस्य पार्वतीपरमेशयोः ॥ परमानंदरूपं च शिवगेहे महोत्सवम् ॥ २८ ॥ देवाद्या ददृशुः सर्वे बालं नित्यमजं विभुम् ॥ सत्यस्वरूपं परमं परब्रह्मस्वरूपिणम् ॥ २९ ॥ सर्वविघ्नहरं शांतं

दातारं सर्वसंपदाम् ॥ तपसां जपयज्ञानां व्रतानां फलदं विभुम् ॥ ३० ॥ अतीव कमनीयं च रमणीयं च योषिताम् ॥ प्राणाधिकं
प्रियतमं पार्वतीपरमेशयोः ॥३१॥ परमात्मस्वरूपं च भगवंतं सनातनम् ॥ सर्वेशं सर्वबीजं च साक्षान्नारायणात्मकम् ॥३२॥ यद्दर्शनाच्च
स्तवनात्प्रणामात्पूजनात्तथा ॥ ध्यानासाध्यं दुराराध्यं जन्मकोटयघनाशनम् ॥ ३३ ॥ कार्तिकोद्धरणं प्रोक्तं तस्याभिषेक एव च ॥
गणेशपूजनं चैव सर्वविघ्नविनाशनम् ॥ ३४ ॥ जमदग्नेश्च युद्धं च कार्तवीर्यार्जुनेन च ॥ सुरभीहरणं चैव निधनं च मुनेस्तथा ॥ ३५ ॥
पतिव्रतारेणुकायाश्चितारोहणमेव च ॥ प्रतिज्ञातं भृगोश्चैव दारुणं च सुदारुणम् ॥ ३६ ॥ निःक्षत्रीकरणं चैवमेकविंशतिकं द्विज ॥
संवादो ज्ञानलाभश्च गणेशपर्शुरामयोः ॥ ३७ ॥ तयोर्युद्धं दारुणं च हेरंबदंतभंजनम् ॥ दुर्गायाश्च विलापश्चाभिशापो भार्गवं प्रति
॥ ३८ ॥ स्मरणे पर्शुरामस्याप्याविर्भावो हरेरपि ॥ पार्वतीं बोधयामास स्वयं नारायणः प्रभुः ॥ ३९ ॥ वर्णनं शिवलोकस्य पर
माश्चर्यमीप्सितम् ॥ प्रदत्तं पर्शुरामाय महास्त्रं शंकरेण च ॥ ४० ॥ मंत्रं च कवचं चैव कृष्णस्य परमात्मनः ॥ वरदानं चाभयं च
प्रदानं सर्वसंपदाम् ॥ ४१ ॥ त्रिःसप्तकृत्वो भूपानां निधनं च चकार सः ॥ बभूव भृगुणा विप्र भुवश्च भारहारणम् ॥ ४२ ॥ प्रश्नानुरो
धक्रमतः पूर्वोपाख्यानमेव च ॥ प्रोक्तं गणपतेः खंडं समासेन द्विजोत्तम ॥ ४३ ॥ श्रीकृष्णजन्मखंडं च श्रूयतां सावधानतः ॥ जन्म
मृत्युजराव्याधिहरं मोक्षकरं परम् ॥ ४४ ॥ हरिदास्यप्रदं शुद्धं सुश्राव्यं च सुधोपमम् ॥ अत्यपूर्वमुपाख्यानं रम्यंरम्यं नवंनवम् ॥
॥ ४५ ॥ न श्रुतं जन्मना यद्यत्स्वादुस्वादु पदेपदे ॥ प्रदीपं सर्वसत्त्वानां भवाब्धितारणं परम् ॥ ४६ ॥ कर्मोपभोगरोगाणां मर्दनं
च रसायनम् ॥ श्रीकृष्णचरणांभोजप्राप्तिसोपानकारणम् ॥ ४७ ॥ श्रीदामराधाकलहवर्णनं दारुणं द्विज ॥ तयोः शापप्रकथनं तत
स्तेषां विसर्जनम् ॥ ४८ ॥ ब्रह्मणा प्रार्थितस्यैव हरेर्जन्म महीतले ॥ प्रोक्तं च जन्मखंडं च परमाद्भुतमेव च ॥ ४९ ॥ आविर्भावो
हरेरेव वसुदेवस्य मंदिरे ॥ कंसासुरभयेनैव गोकुले गमनं हरेः ॥ ५० ॥ वृषभानुसुता राधा श्रीदाम्नः शापहेतुना ॥ बालक्रीडावर्णनं
च गोकुले परमात्मनः ॥ ५१ ॥ दैत्यादिनिधनं चैव कीर्तितं हरिणा तथा ॥ गर्गस्यागमनं प्रोक्तं शुभान्नप्राशनं हरेः ॥ ५२ ॥ निधनं
पूतनायाश्च सद्यः शकटभंजनम् ॥ श्रीकृष्णबंधमोक्षं च यमलार्जुनभंजनम् ॥ ५३ ॥ त्रैलोक्यदर्शनं वक्त्रे गोवत्साहरणं तथा ॥ कृत्वा

गोवत्सनिर्माणं ब्रह्मणः स्तवनं हरेः ॥५४॥ सहसा गोकुलं त्यक्त्वा पुण्यं वृंदावनं वनम् ॥ भयाज्जगाम नंदश्च सार्धं च नंदनेन च ॥ ॥ ५५ ॥ वृंदावनस्य निर्माणं प्रोक्तं च परमाद्भुतम् ॥ सार्धं च बालकैः सार्धं तत्र संक्रीडनं हरेः ॥ ५६ ॥ सदन्नं ब्राह्मणीनां च भोजनं कथितं हरेः ॥ वरदानं च तासां च प्राक्तनेन निरूपणम् ॥ ५७ ॥ क्रतूनां वर्णनं चैव वस्त्रापहरणं तथा ॥ वरदानं च गोपीनां कृष्णेनैव कृतं द्विज ॥ ५८ ॥ कात्यायनीव्रतं प्रोक्तं श्रीदुर्गापूजनं तथा ॥ पार्वत्या च वरो दत्तो गोपीभ्यो यमुनातटे ॥ ५९ ॥ तालानां भक्षणं प्रोक्तं शक्रयागविमर्दनम् ॥ राधया सह कृष्णस्य विरहो मेलनं तथा ॥६०॥ गोपीक्रीडा च संप्रोक्ता कृष्णक्रोडे च राधिका ॥ छायां रापाणगेहे च संप्रोक्ता मायया हरेः ॥ ६१ ॥ शृंगारं षोडशविधं कृत्वा तं रासमंडले ॥ अंतर्धानं हरेरेव राधया सह कानने ॥ ॥ ६२ ॥ मलयागमनं चैव तया सार्धं द्विजोत्तम ॥ राधामाधवयोश्चैव संवादस्तत्र निर्जने ॥ ६३ ॥ कैवल्यमपि गोपीनां प्रोक्तं नानाविधं मुने ॥ पुनरागमनं चैव पुण्यं वृंदावनं वनम् ॥ ६४ ॥ श्रीकृष्णदर्शनं चैव गोपीनां हर्षवर्धनम् ॥ नानाप्रकारक्रीडा च प्रोक्ता तस्य जले स्थले ॥ ६५ ॥ गोपीनामपि सौभाग्यं राधायाश्च विशेषतः ॥ प्रोक्तं व्यासेन सौंदर्यं रम्यंरम्यं नवंनवम् ॥ ६६ ॥ नभःस्थितानां देवानां दर्शनं प्रोक्तमेव च ॥ मनसः स्खलनं चैव देवीनां रासमंडले ॥ ६७ ॥ अंशेन लेभिरे जन्म देव्यश्चोक्तमिदं द्विज ॥ अक्रूरागमनं चैव गोपीनां च विलापनम् ॥ ६८ ॥ प्रोक्तं सर्वक्रमेणैव चाक्रूरभर्त्सनं तथा ॥ मथुरागमनं विष्णोः शोकं गोकुलवासिनाम् ॥ ६९ ॥ राधिकाविरहज्वालाजालं प्रोक्तं यथोचितम् ॥ स्वमूर्तिदर्शनं चैवमक्रूरं यमुनातटे ॥ ७० ॥ मथुरावेशनं प्रोक्तं निधनं रजकस्य च ॥ कुब्जया सह संभोगस्तस्या मोक्षणमेव च ॥ ७१ ॥ प्रसादनं कुविंदस्य मालाकारस्य मोक्षणम् ॥ धनुषो भंजनं शंभोर्हस्तिनो निधनं तथा ॥ ७२ ॥ सभाप्रवेशनं प्रोक्तं नानारूपप्रदर्शनम् ॥ कंसस्य निधनं प्रोक्तं तद्बंधूनां विलापनम् ॥ ७३ ॥ सत्कारं तस्य विधिवद्राजत्वं तत्पितुस्तथा ॥ विलापनं च नंदस्य स्तवनं परमाद्भुतम् ॥ ७४ ॥ प्रोक्तस्तयोश्च संवादो निर्जने तातपुत्रयोः ॥ परमाध्यात्मिकं ज्ञानं नंदाय च ददौ विभुः ॥७५॥ मुनीनां गमने चैव धन्योपाख्यानमेव च ॥ कथितं च कुमारेण प्रोक्तमेव सुदुर्लभम् ॥ ७६ ॥ उद्धवागमनं प्रोक्तं राधास्थानं च निर्जनम् ॥ ज्ञानं तयोश्च संवादे प्रोक्तमेव शुभावहम् ॥ ७७ ॥ यज्ञोपवीतं

कृष्णस्य विद्यादानं गुरोर्गृहे ॥ मृतपुत्रप्रदानं च प्रोक्तं तद्गुरवे पुरा ॥ ७८ ॥ जरासंधस्य दमनं निधनं यवनस्य च ॥ द्वारकायाश्च
निर्माणं विश्वकारोद्यमं तथा ॥ ७९ ॥ द्वारकावेशनं प्रोक्तमुग्रसेनविलापनम् ॥ रुक्मिणीहरणं चैव नृपाणां दमनं तथा ॥ ८० ॥
सर्वासां कामिनीनां च प्रोक्तमुद्वाहनं तथा ॥ मायावतीमोक्षणं च निधनं शंबरस्य च ॥८१॥ धर्मपुत्रराजसूये शिशुपालस्य मोक्षणम् ॥
दंतवक्रस्य च मुने शाल्वस्य निधनं तथा ॥ ८२ ॥ मणेश्च हरणं चैव पारिजातस्य स्वर्गतः ॥ कुरुपांडवयुद्धे च भुवश्च भारमोक्षणम् ॥
॥ ८३ ॥ उषाया हरणं प्रोक्तं बाणस्य भुजकृंतनम् ॥ बलेश्च स्तवनं प्रोक्तमनिरुद्धस्य विक्रमः ॥८४॥ राधायशोदासंवादः प्रोक्तः परम
दुर्लभः ॥ मोक्षणं च शृगालस्य प्रोक्तं च परमाद्भुतम् ॥८५॥ तीर्थयात्राप्रसंगेन गणेशपूजनं तथा ॥ दर्शनं राधिकासार्धं कृष्णस्य परमा
त्मनः ॥८६॥ राधाया दर्शनं देव्या राधातेजःप्रकाशनम् ॥ राधया रमणं तीर्थे भ्रमणं रहसि स्मृतम् ॥ ८७ ॥ निधनं यदुवंशानां ब्रह्म
शापेन शौनक ॥ मोक्षणं पांडवानां च स्वपदे गमनं हरेः ॥८८॥ विवाहो नारदस्यैवोत्पत्तिर्वह्निसुवर्णयोः ॥ प्रोक्तं सर्वं महाभाग पुन
रेव समासतः ॥ ८९ ॥ चतुःखंडैः पुराणं च ब्रह्मवैवर्तमेव च ॥ अतः परं मुनिश्रेष्ठ किं भूयः श्रोतुमिच्छसि ॥९०॥ ॥ इति श्रीब्रह्मवैवर्ते
महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारायणनारदसंवादे चानुक्रमणिकं नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥१३२॥ ॥ शौनक
उवाच ॥ ॥ अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ यत्फलं ब्रह्मवैवर्ते निर्विघ्नं मोक्षकारणम् ॥ १ ॥ अभयं देहि हे वत्स हे
वार्तां मह्यमेव च ॥ तदा निवेदनं किंचिदस्तीति च करोम्यहम् ॥२॥ ॥ सूत उवाच ॥ ॥ त्यज भीतिं महाभाग प्रश्नं कुरु यदिच्छ
सि ॥ सर्वं ते कथयिष्यामि यद्यद्गोप्यं मनोहरम् ॥३॥ ॥ शौनक उवाच ॥ ॥ अधुना श्रोतुमिच्छामि पुराणानां च लक्षणम् ॥
संख्यानमपि तेषां च फलमस्यैव पुत्रक ॥ ४ ॥ ॥ सूत उवाच ॥ ॥ विस्तराणि पुराणानि चेतिहासश्च शौनक ॥ संहितां पंचरा
त्राणि कथयामि यथागतम् ॥ ५ ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च ॥ वंशानुचरितं विप्र पुराणं पंचलक्षणम् ॥ ६ ॥ एतदुपपु
राणानां लक्षणं च विदुर्बुधाः ॥ महतां च पुराणानां लक्षणं कथयामि ते ॥ ७ ॥ सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम् ॥
कर्मणां वासना वार्ता मनूनां चाक्रमेण च ॥ ८ ॥ वर्णनं प्रलयानां च मोक्षस्य च निरूपणम् ॥ तत्कीर्तनं हरेरेव देवानां च पृथक्

पृथक् ॥ ९ ॥ दशाधिकं लक्षणं च महतां परिकीर्तितम् ॥ संख्यानं च पुराणानां निबोध कथयामि ते ॥ १० ॥ परं ब्रह्मपुराणं च
सहस्राणां दशैव तु ॥ पंचोनषष्टिसाहस्रं पाद्ममेव प्रकीर्तितम् ॥ ११ ॥ त्रयोविंशतिसाहस्रं वैष्णवं च विदुर्बुधाः ॥ चतुर्विंशतिसाहस्रं शैवं
चैव निरूपितम् ॥ १२ ॥ ग्रंथोष्टादशसाहस्रं श्रीमद्भागवतं विदुः ॥ पंचविंशतिसाहस्रं नारदीयं प्रकीर्तितम् ॥ १३ ॥ मार्कण्डं नवसा
हस्रं पुराणं पंडिता विदुः ॥ चतुःशताधिकं पंचदशसाहस्रमेव च ॥ १४ ॥ परमग्निपुराणं च रुचिरं परिकीर्तितम् ॥ चतुर्दशसहस्राणि
परं पंचशताधिकम् ॥ १५ ॥ पुराणप्रवरं चैव भविष्यं परिकीर्तितम् ॥ अष्टादशसहस्रं च ब्रह्मवैवर्तमीप्सितम् ॥ १६ ॥ सर्वेषां च पुरा
णानां सारमेवं विदुर्बुधाः ॥ एकादशसहस्रं तु परं लिंगपुराणकम् ॥ १७ ॥ चतुर्विंशतिसाहस्रं वाराहं परिकीर्तितम् ॥ एकाशीतिसह
स्रं च परमेव शताधिकम् ॥ १८ ॥ वरं स्कंदपुराणं च सद्भिरेव निरूपितम् ॥ वामनं दशसाहस्रं कौर्मं सप्तदशैव तु ॥ १९ ॥ मात्स्यं
चतुर्दश प्रोक्तं पुराणं पंडितैस्तथा ॥ ऊनविंशतिसाहस्रं गारुडं परिकीर्तितम् ॥ २० ॥ परं द्वादशसाहस्रं ब्रह्मांडं परिकीर्तितम् ॥ एवं
पुराणसंख्यानं चतुर्लक्षमुदाहृतम् ॥ २१ ॥ अष्टादशपुराणानामेवमेव विदुर्बुधाः ॥ एवं चोपपुराणानामष्टादश प्रकीर्तिता ॥ २२ ॥
इतिहासो भारतं च वाल्मीकं काव्यमेव च ॥ पंचकं पंचरात्राणां कृष्णमाहात्म्यपूर्वकम् ॥ २३ ॥ वासिष्ठं नारदीयं च कापिलं गौत
मीयकम् ॥ परं सनत्कुमारीयं पंचरात्रं च पंचकम् ॥ २४ ॥ पंचकं संहितानां च कृष्णभक्तिसमन्वितम् ॥ ब्रह्मणश्च शिवस्यापि प्रह्ला
दस्य तथैव च ॥ २५ ॥ गौतमस्य कुमारस्य संहिताः परिकीर्तिताः ॥ इति ते कथितं सर्वं क्रमेण च पृथक्पृथक् ॥ २६ ॥ अस्त्येवं
विपुलं शास्त्रं ममापि च यथागमम् ॥ उवाचेदं पुराणं च गोलोके रासमंडले ॥ २७ ॥ श्रीविष्णुर्भगवान्साक्षाद्ब्रह्माणं च स्वभक्तकम् ॥
ब्रह्मा धर्मं च धर्मिष्ठं धर्मो नारायणं मुनिम् ॥ २८ ॥ नारायणो नारदं च नारदो मां च भक्तकम् ॥ अहं त्वां च मुनिश्रेष्ठं वरिष्ठं
कथयामि तत् ॥ २९ ॥ सुदुर्लभं पुराणं च ब्रह्मवैवर्तमीप्सितम् ॥ यद्वृणोत्येव विश्वौघं जीविनां परमात्मकम् ॥ ३० ॥ तद्ब्रह्म साक्षि
रूपं च कर्मणामेव कर्मिणाम् ॥ तद्ब्रह्म विवृतं यत्र तद्विभूतिमनुत्तमाम् ॥ ३१ ॥ तेनेदं ब्रह्मवैवर्तमित्येवं च विदुर्बुधाः ॥ पुण्यप्रदं पुराणं
च मंगलं मंगलप्रदम् ॥ ३२ ॥ सुगोप्यं च रहस्यं च यत्र रम्यं नवंनवम् ॥ हरिभक्तिप्रदं चैव दुर्लभं हरिदास्यदम् ॥ ३३ ॥ सुखदं

ब्रह्मदं सारं शोकसंतापनाशनम् ॥ सरितां च यथा गंगा सद्यो मुक्तिप्रदा शुभा ॥३४॥ तीर्थानां पुष्करं शुद्धं यथा काशी पुरीषु च ॥
सर्वेषु भारतं वर्षं सद्यो मुक्तिप्रदं शुभम् ॥ ३५ ॥ यथा सुमेरुः शैलेषु पारिजातं च पुष्पतः ॥ पत्रेषु तुलसीपत्रं व्रतेष्वेकादशीव्रतम् ॥
॥ ३६ ॥ वृक्षेषु कल्पवृक्षश्च श्रीकृष्णश्च सुरेषु च ॥ ज्ञानींद्रेषु महादेवो योगींद्रेषु गणेश्वरः ॥३७॥ सिद्धेंद्रेष्वेव कपिलः सूर्यस्तेजस्विनां
यथा ॥ सनत्कुमारो भगवान्वैष्णवेषु यथाग्रणीः ॥ ३८ ॥ भूपेषु च यथा रामो लक्ष्मणश्च धनुष्मताम् ॥ देवीषु च यथा दुर्गा महा
पुण्यवती सती ॥ ३९ ॥ प्राणाधिका यथा राधा कृष्णस्य प्रेयसीषु च ॥ ईश्वरीषु यथा लक्ष्मीः पंडितेषु सरस्वती ॥ ४० ॥ तथा
सर्वपुराणेषु ब्रह्मवैवर्तमेव च ॥ नातो विशिष्टं सुखदं मधुरं च सुपुण्यदम् ॥ ४१ ॥ संदेहभंजनं चैव पुराणं परिकीर्तितम् ॥ इह लोके
च सुखदं सुप्रदं सर्वसंपदाम् ॥ ४२ ॥ शुभदं पुण्यदं चैव विघ्ननिघ्नकरं परम् ॥ हरिदास्यप्रदं चैव परलोके प्रहर्षदम् ॥ ४३ ॥
यज्ञानामपि तीर्थानां व्रतानां तपसां तथा ॥ भुवः प्रदक्षिणस्यापि फलं नास्य समानकम् ॥ ४४ ॥ चतुर्णामपि वेदानां पाठादपि
वरं फलम् ॥ शृणोतीदं पुराणं त्र संयतश्चेह पुत्रक ॥ ४५ ॥ गुणवंतं च विद्वांसं वैष्णवं पुत्रमालभेत् ॥ शृणोति दुर्भगा चेत्तु सौभा
ग्यं स्वामिनो लभेत् ॥ ४६ ॥ मृतवत्सा काकवंध्या महावंध्या च पापिनी ॥ पुराणश्रवणाल्लेभे पुत्रं च चिरजीविनम् ॥ ४७ ॥
अपुत्रो लभते पुत्रमभार्यो लभते प्रियाम् ॥ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पंडितः ॥ ४८ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्ये
त बंधनात् ॥ भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ४९ ॥ अरण्ये प्रांतरे भीतो दावाग्नौ मुच्यते ध्रुवम् ॥ अघं कुष्ठं च दारिद्र्यं
रोगं शोकं च दारुणम् ॥ ५० ॥ पुराणश्रवणादेवं नैव जानात्यपुण्यवान् ॥ श्लोकार्धं श्लोकपादं वा यः शृणोति सुसंयतः ॥ ५१ ॥
गोलक्षदानपुण्यं च लभते नात्र संशयः ॥ चतुःखंडं पुराणं च शुद्धकाले जितेंद्रियः ॥ ५२ ॥ संकल्पतो यः शृणोति भक्त्या दत्त्वा
च दक्षिणाम् ॥ यद्बाल्ये यच्च कौमारे वार्धके यच्च यौवने ॥ ५३ ॥ कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥ रत्ननिर्माणयानेन
धृत्वा श्रीकृष्णरूपकम् ॥५४॥ नित्यं गत्वा च गोलोकं कृष्णदास्ये लभेद्ध्रुवम् ॥ असंख्यं ब्रह्मणां पाते न भवेत्तस्य पातनम् ॥ ५५ ॥
समीपे पार्षदो भूत्वा सेवां च कुरुते चिरम् ॥ श्रुत्वा च ब्रह्मखंडं च सुस्नातः संयतः शुचिः ॥५६॥ पायसं पिष्टकं चैव फलं तांबूलमेव च ॥ भोज

यित्वा वाचकं च तस्मै दद्यात्सुवर्णकम् ॥५७॥ चंदनं शुक्लमाल्यं च सूक्ष्मवस्त्रं मनोहरम् ॥ निवेद्य वासुदेवं च वाचकाय प्रदीयते ॥५८॥ श्रुत्वा च प्रकृतेः खंडं सुश्राव्यं च सुधोपमम् ॥ भोजयित्वा च दध्यन्नं तस्मै दद्याच्च कांचनम् ॥५९॥ सवत्सां सुरभिं रम्यां दद्याद्द्विजे भक्तिपूर्वकम् ॥ श्रुत्वा गणपतेः खंडं विघ्ननाशाय संयतः ॥६०॥ स्वर्णयज्ञोपवीतं च श्वेताश्वच्छत्रमाल्यकम् ॥ प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकम् ॥ ६१ ॥ परिपक्वफलान्येव कालदेशोद्भवानि च ॥ श्रीकृष्णजन्मखंडं च श्रुत्वा भक्तश्च भक्तितः ॥ ६२ ॥ वाचकाय प्रदद्याच्च परं रत्नांगुलीयकम् ॥ सूक्ष्मवस्त्रं च माल्यं च स्वर्णकुंडलमुत्तमम् ॥ ६३ ॥ माल्यं च वरदोलां च सुपक्वं क्षीरमेव च ॥ सर्वस्वं दक्षिणां दद्यात्स्तवनं कुरुते ध्रुवम् ॥ ६४ ॥ शतकं ब्राह्मणानां च भोजयेत्परमादरात् ॥ ब्राह्मणं वैष्णवं शास्त्रनिष्णातं पंडितं वरम् ॥ ६५ ॥ कुरुते वाचकं शुद्धमन्यथा निष्फलं भवेत् ॥ श्रीकृष्णविमुखाद्दुष्टान्नोपदेष्टाच्च ब्राह्मणात् ॥ ६६ ॥ श्रीकृष्णभक्तियुक्तं च पुराणं न शृणोति यः ॥ भक्तिं पुण्यं न लभते हन्ति पुण्यं पुराकृतम् ॥ ६७ ॥ श्रीकृष्णभक्तियुक्ताच्च पुराणं यः शृणोति च ॥ भक्तिं पुण्यं च लभते यात्यंते श्रीहरेः पदम् ॥ ६८ ॥ एतत्ते कथितं सर्वं यच्छ्रुतं गुरुवक्त्रतः ॥ विदायं देहि विप्रेंद्र यामि नारायणाश्रमम् ॥६९॥ दृष्ट्वा विप्रसमूहं च नमस्कर्तुं समागतः ॥ कथितं ब्रह्मवैवर्तं भवतामाज्ञया परम् ॥ ७० ॥ नमोस्तु ब्राह्मणेभ्यश्च कृष्णाय परमात्मने ॥ शिवाय ब्रह्मणे नित्यं गणेशाय नमोनमः ॥ ७१ ॥ कायेन मनसा वाचा परं भक्त्या दिवानिशम् ॥ भज सत्यं परं ब्रह्म राधेशं त्रिगुणात्परम् ॥ ७२ ॥ नमो देव्यै सरस्वत्यै पुराणगुरवे नमः ॥ सर्वविघ्नविनाशिन्यै दुर्गादेव्यै नमोनमः ॥ ७३ ॥ युष्माकं पादपद्मानि दृष्ट्वा पुण्यानि शौनक ॥ अद्य सिद्धाश्रमं यामि यत्र देवो गणेश्वरः ॥ ७४ ॥ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्द्धे नारायणनारदसंवादे सूतशौनकसंवादे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ ७ ॥ ॥ ७ ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजेन खेमराजेन स्वकीये "श्रीवेङ्कटेश्वर" स्टीम् यन्त्रालयेऽङ्कित्वा प्रकाशितम् । संवत् १९६६ शके १८३१.

॥ इति ब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडं समाप्तम् ॥